THE

# CHOWKHAMBÂ SANSKṚIT SERIEṢ;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 205.

# बृहदारण्यकवार्तिकसारः

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS I–१.

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२०५


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते। एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्–मुद्राः७आनकाः८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ८

६ प्रापणव्ययः पृथग् नास्ति। ... ... ... ... ... ... ...


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—


(१) संस्काररत्नमाला। गोपीनाथभट्टकृता खण्डे ... ... ... ... ... २

(२) शब्दकौस्तुभः। भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम्। भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया–व्याख्यया सहितम्। सम्पूर्णम्। १०

(४) भाष्योपबृंहितं तत्त्वत्रयम्। विशिष्टाद्वैतदर्शनप्रकरणम्। श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं संपूर्णम् (वेदान्तः) २

(५) करणप्रकाशः। श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः। महामहोपाध्यायश्रीगागाभट्टविरचिता। तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम्। सम्पूर्णम्। (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम्। सम्पूर्णम् वेदान्तः १

(११) न्यायमकरन्दः। श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः। आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः। सम्पूर्णः (न्यायः) ... ... ... ... ५

(१३) विधिरसायनम्। श्रीअप्पयदीक्षितकृतम्। सम्पूर्णम् (मीमांसा) ... २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता। (मीमांसा) १६

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

Nos. 205, 206, 207, 208, 243, 244, 257, 258, 271, & 272,

# बृहदारण्यकवार्तिकसारः ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया टीकाया समलङ्कृतः ।

श्रीमच्छुद्धानन्दमुनिवरशिष्य श्रीउत्तमश्लोकयतिविरचित

वेदान्तसूत्र लघुवार्तिकसहित,

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या वझे इत्युपनामकेन

भाऊशास्त्रिणा संशोधितः ।

---

# BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

and Vedanta Sutra Laghu Vartika

by Sri Uttama Sloka Yati,

A pupil of Sri Mat Suddhanand Muni.

EDITED BY

BHAU SHASTRI VAJHE.

FASCICULUS 1 to X

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

AGENTS: PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

OTTO HARRASSOWITZ, LEIPZIG:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1919

*Price Rupees Ten.*

# भूमिका ।

श्रीगुरुः शरणम् ।

## विदितमस्तु भगवत्पादश्रीशङ्कराचार्यमतानुयायिनाम् ।

महर्षिश्रीमद्भगवद्बादरायणप्रणीतानां ब्रह्मसूत्राणां व्याख्यानानि बहूनि विद्यन्ते, परन्तु संक्षेपेणासन्दिग्धं सूत्रार्थप्रदर्शकं व्याख्यानं न किमप्यद्ययावदुपलब्धम् । अद्य खलु विपश्चितां पुरतः प्रतिपादयितुं महान् प्रमोदो जायते यदद्वैतमतानुसारेण सूत्राणां संक्षिप्तस्पष्टबह्वर्थं लघुवार्तिकं नाम व्याख्यानं संमुद्य प्राकाश्यमुपगतमिति । न हि तदविदितचरं महात्मनां यत्सूत्राणि दुर्बोधानि न याथातथ्येन मन्दमतीनां तत्त्वार्थप्रकाशकानीति तेषां भाष्यादिग्रन्थानां चिरं परिशीलनेन यथाकथंचित् अर्थबोधः सम्भाव्यते । इतः परं आनायासेनैव एतद्ग्रन्थसहाय्येन सूत्रार्थं बोद्धुं सौकर्यं सर्वेषां सम्पन्नमिति महदिदं हर्षस्थानमिति मन्यामहे । इदं हि लघुवार्तिकमानुष्टुभेन च्छन्दसा विरचितं कुत्रचिदेकेन पादेनैकैकस्याधिकरणस्य सङ्ग्राहकं प्रायः सर्वेषां हृदयङ्गमं वर्तत इत्यत्र नास्ति सन्देहलेशोऽपि । अस्य च प्रणेता श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्सिद्धानन्दपूज्यपादशिष्यः श्रीमदुत्तमश्लोकयतिः । सोऽयं महात्मा कं देशमलमकरोदिति चिन्तायां विशेषतः साधकं प्रमाणं यद्यपि नोपलभ्यते, तथाप्यसौ दाक्षिणात्यो द्रविडदेशोद्भवः स्यादिति तर्क्यते । तत्र च प्रमाणमन्तिमश्लोकयोः—

'इत्थमुद्धृत्य वेदान्तमीमांसादुग्धसागरात् ।
शतश्लोकीसुधासारश्चन्द्रमौलौ समर्पितः ॥'
'श्रीमद्विश्वपतेर्विशालनयनानाथस्य तुष्ट्यै सदा—'

इत्याद्युल्लेख एव दाक्षिणात्यानामेवेयं रीतिः यद्भगवति विशालाक्षीनाथे विश्वपतौ चन्द्रमौलौ स्वग्रन्थसमर्पणम् । उत्तरभारते चन्द्रमौलिशब्देन शिवस्य विश्वनाथपत्नीत्वेन विशालाक्ष्याश्च व्यवहारो विरलतम एव। तेनेदं सम्भाव्यते ग्रन्थकारस्तद्देशीय एव भवेदिति। आस्तामियं कथा। पुरातत्त्वविद एव एतन्निर्णये प्रमाणमिति नास्माभिस्तदालोचनीयम् ।

अस्य च ग्रन्थरत्नस्य आदर्शभूतं पुस्तकं श्रीमतां महामहिमशालिनामनेकाविरुदावलीविराजमानानां काशिमहाराजानां पुस्तकालयतः समुपलब्धम्, यत्स्वयं महाराजैर्महताऽऽदरेण प्रयत्नेन च संगृह्य संस्थापितम्, तत्तेषामेव कृपया प्रेरणया चास्माभिः समधिगतमिति तेषां धन्यवादप्रदानपूर्वककृतज्ञतां वहामः। अस्य ग्रन्थरत्नस्य मुद्रणेन प्रकाशने कृते लोकानां महानुपकारो भविष्यतीत्यालोच्य श्रीमतो जयकृष्णदासगुप्तस्य सन्निकटे मुद्रणार्थं पुस्तकं समर्पितम् । नानाविधप्राचीनदुर्लभग्रन्थप्रकाशनाय बद्धदीक्षेण च तेन तत् सम्मुद्य प्रकाशितमिति तस्मा अनेकान् धन्यवादान् वितरामः, प्रार्थयामश्च भगवन्तमुमारमणं यदसावेवमेव दुर्लभान् ग्रन्थान् प्रकाशनद्वारा लोके प्रचारयन् चिरञ्जीव्यादिति शम् ।

निवेदकः

विदुषमनुचरः

वझेइत्युपनामकः भाऊशास्त्री.

V॥

श्रीगणेशाय नमः ॥

# बृहदारण्यकवार्तिकसारप्रारम्भः ।

## प्रथमोऽध्यायः

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यन्नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥१॥

श्रीमत्सुरेश्वराचार्यपादाब्जभ्रमरा इमे ॥
वार्त्तिकेक्षुरसं पीत्वा तृप्यन्त्वात्मानुभूतितः ॥१॥

* श्रीगणेशाय नमः *

निजपदभक्तजनानामजलिखितशिरोलिपिं प्रमार्ष्टुं ॥
हंसपदं दत्त्वा यः शंसतु तं राममादराद्वाणी ॥ १ ॥
यतो जगत्समुद्भूतिसम्भूतिपरिभूतयः ॥
तं वन्दे राममात्मानं चिदानन्दघनं गुरुम् ॥ २ ॥
येनोद्धृतो वार्तिकाब्धेः सारो विबुधतुष्टिदः ॥
अविद्यातज्जतापघ्नं विद्यारण्यगुरुं भजे ॥ ३ ॥
पूर्वाचार्याँल्लोकवन्द्यान्नत्वाऽऽनन्दगिरीयतः ॥
व्याख्या वार्तिकसारस्य लघु संगृह्य लिख्यते ॥ ४ ॥
मणयो मणितत्त्वज्ञैः सञ्चितास्तत्र केचन ॥
बालिशेन समानीताः किं न ग्राह्यास्तदर्थिना ॥ ५ ॥

इह खलु लोकानुग्रहैकरसतया सम्यग्ज्ञानप्रवर्तनप्रयोजनकृतशरीरपरिग्रहाः विद्यारण्यश्रीचरणाः श्रीसुरेश्वरवार्तिकसारं जिघृक्षवस्तत्राधिकारिविषयप्रयोजनानि निर्दिशन्ति । *श्रीम-

संसारकारणाविद्याध्वंसकृज्ज्ञानलब्धये ॥
प्रारब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ॥ २ ॥
अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचरः ॥
तच्छब्दावयवार्थस्य विद्यायामेव सम्भवात् ॥ ३ ॥

---

दिति । इमे इत्यनेन बुद्धिस्थाः साधनचतुष्टयसम्पन्ना गृह्यन्ते । आचार्येषु दृढभक्ताः विवेकादिसम्पन्नाः प्रागनायासेन प्रत्यग्जिज्ञासवो ऽत्राधिकारिणः । एतद्ग्रन्थाभ्यासजन्यब्रह्मात्मैकज्ञानाभिव्यक्तं तृप्तिशब्दितं निरतिशयं स्वस्वरूपभूतं ब्रह्मसुखं फलम् । तदेवाज्ञातं सत् विषय इत्युक्तं भवति । अनेन प्रत्यक्तत्त्वानुसन्धानलक्षणं मङ्गलमपि कृतमिति ज्ञेयम् ॥ १ ॥ सुखाभिव्यञ्जकज्ञानस्योपनिषद्वाक्यमात्रेण सम्भवात्किं नूतनकृतिकरणक्लेशेनेत्याशङ्क्य, उपक्रमादिलिङ्गैरुपनिषत्तात्पर्यनिर्णयेन जातमपि ज्ञानं नाविद्यानिवर्तनक्षममिति तदर्थमियं कृतिरर्थवतीत्याह । *संसारेति । *वेदान्तोपनिषत्परेति । उपनिषत्तात्पर्यनिर्णयपरेत्यर्थः । यद्यपि इयं कृतिः काण्वोपनिषन्मात्रतात्पर्यनिरूपणपरा तथापि प्रसङ्गात्सर्वोपनिषदर्थस्य चतुर्थे वक्ष्यमाणत्वात्सामान्येन वेदान्तोपनिषत्परेत्युक्तम् । अस्याः कृतेर्वार्तिकापेक्षया विशेषं दर्शयितुं प्रयत्नेनेत्युक्तं, तथा च ललितपदसन्दर्भैः कतिपयैरेव श्लोकैरत्र वार्तिकार्थः सर्वोऽपि संगृह्य वर्ण्यत इति भावः । आरभ्यत इति वक्तव्ये प्रथमं बुद्ध्या संगृहीतत्वादारब्धेत्युक्तम् ॥२॥ ननूपनिषच्छब्दस्य ग्रन्थपरत्वमुक्तमयुक्तम् "उपनिषदं भो ब्रूहि" इत्यादौ ब्रह्मविद्यायामेव तत्प्रयोगदृष्टेर्न्यायश्चानेकार्थत्वमित्याशङ्क्य, उत्तरमाह । *अत्र चेति । चशब्दाद् ग्रन्थान्तरे चाध्यात्मिके प्रवृत्तमुपनिषत्पदं ब्रह्मविद्यामात्रमाहेति दर्शयति । तत्र हेतुः *तदिति ॥३॥ अवयवार्थं दर्शयि-

बृहदारण्यकवार्तिकसारस्य

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| गिरीयतः | गिरीन् यतः | १ | १२ |
| जिघृक्षवः | संजिघृक्षवः | १ | १८ |
| कार्मानभिव्यक्तेः | कार्यानभिव्यक्तेः | ९ | १६ |
| स्यादिह कर्तृ | स्याद्देहकर्तृ | १२ | ६ |
| पराचः | पराञ्चः | १७ | १८ |
| कर्मानुच्छित्य | कर्मानुष्ठित्य | १८ | ४ |
| तस्याप्रामाण्यं | तस्य प्रामाण्यं | १८ | १८ |
| प्रत्यङ्मात्रकालीनत्वं, | प्रत्यङ्मात्रतया लीनत्वं | २३ | १३ |
| मवच्छिन्नं | मनवच्छिन्नं | ३१ | १३ |
| भोग्यं तद्राग | भोग्यतद्राग | ४३ | ११ |
| तद्दृष्टिः | तद्दोषदृष्टिः | ४३ | १९ |
| षाऽत्रहि | षा नहि | ५५ | ३ |
| कर्मानुष्ठित | कर्मानुतिष्ठत | ५७ | १७ |
| स्याविशेषो | स्य विशेषो | ५८ | ५ |
| पयेव | पतेव | ६२ | १ |
| द्वोध्योः | द्वोध्ययोः | ६८ | १५ |
| प्रतिबद्धत्वात् | प्रतिबुद्धत्वाव | ६९ | १ |
| प्रमाणमूल | प्रमाणफल | ८६ | ३ |
| बाध्यता | बद्धता | १०२ | ६ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| स्याच्च | स्याच्चेत | १०६ | |
| वृत्तियुक्ता | वृत्तियुक्ति | १०७ | [illegible] |
| नापेक्ष्येत | अपेक्ष्येत | १०८ | [illegible] |
| रनुभूयते | रनुभूतये | ११२ | [illegible] |
| न चेतनः | न चेन्मनः | १४१ | [illegible] |
| तस्य | तस्या | १५८ | [illegible] |
| भासिते | भासते | १६० | ३ |
| ऽपराधो | ऽपरोक्षो | १६६ | ३ |
| परं सहस्रा | परः सहस्रा | १७६ | ३ |
| दधिकं | दपरं | १८१ | ३ |
| व्यस्थेयं | व्यवस्थेयं | ५६० | ११ |
| भूताता | भूतानां | ६२० | २ |
| भूताभिदं | भूतमिदं | ६२१ | ६ |
| आप्तशक्तो | आप्तः शक्तो | ६६४ | १७ |
| वीर्यवत्तिमा | वीर्यवत्तमा | ६६४ | २१ |
| मिणोर्भेदं | मिणो भेदं | ७२८ | २४ |
| वायुभेय | वायुमय | ८९३ | २ |

उपोपसर्गः सामीप्ये तत्प्रतीचि समाप्यते ॥
सामीप्यतारतम्यस्य विश्रान्तेः स्वात्मनीक्षणात् ॥ ४ ॥
त्रिविधस्य सदर्थस्य निशब्दोऽपि विशेषणम् ॥
उपनीयेममात्मानं ब्रह्मापास्तद्वयं यतः ॥ ५ ॥
निहन्त्यविद्यां तज्जं च तस्मादुपनिषद्भवेत् ॥
निहत्यानर्थमूलं साऽविद्यां प्रत्यक्तया परम् ॥ ६ ॥
गमयत्यस्तसम्भेदमतो वोपनिषद्भवेत् ॥

---

तुम् उपेत्युपसर्गस्य वाच्यार्थमाह *उपेति। तस्यैव लक्ष्यार्थमाह। *तत्प्रतीचीति। तत्रहेतुः *सामीप्येति। सामीप्यमव्यवहितत्वम्। अन्तर्बहिर्विभागशून्ये प्रतीचि पर्यवस्यति "अनन्तरोऽबाह्यः" इति श्रुतेः। अतः सर्वतो व्यवधानाभावोपलक्षितं चैतन्यम् उपोपसर्गलक्षितमित्यर्थः ॥ ४ ॥ उपसर्गान्तरस्य धातोश्चार्थमाह। *त्रिविधस्येति। *सदर्थस्येति। क्विबन्तस्य सदेर्विशरणादिकर्तृत्वाख्यस्त्रिविधोऽर्थः। "षद्लृ विशरणगत्यवसादनेषु" इति स्मृतेः। तस्योपशब्दवन्निशब्दोऽपि वक्ष्यमाणरीत्या त्रिविधस्यापि समर्पणद्वारा विशेषणमित्यर्थः। इत्थमवयवार्थत्वेऽपि कथं विद्यायामेवोपनिषत्पदमित्याशङ्क्य, उपसर्गयोर्धातोश्चार्थावनुवदन् विशेषणविशेष्ययोर्विद्यागमकत्वात्सैवोपनिषदित्याह *उपनीयेति। त्वमर्थं शुद्धमुपोपलक्षितं प्रत्यञ्चं ब्रह्म ग्राहयित्वा विद्या सकार्यामविद्यां पूर्वावस्थातः शिथिलयति अतो ऽवयवार्थस्य पौष्कल्यात् सैवोपनिषदित्यर्थः ॥ ५ ॥ ६ ॥ सम्प्रत्युपसर्गार्थं धात्वर्थं चावसादनत्वमनुवदन्विद्यायामेव तत्प्रवृत्तौ प्रकारान्तरमाह। *प्रवृत्तीति। प्रवृत्तिहेतवो रागादयस्तानशेषेण तद्धेतवज्ञानस्य प्रत्यङ्मात्रतया निरासद्वारा विद्या नाशयति अतः सैवोपनिषदित्यर्थः ॥ ७ ॥ विद्यैव चेदुपनिषदिष्टा तर्हि कथं ग्रन्थे तच्छब्दः प्रयु-

प्रवृत्तिहेतून्निःशेषांस्तन्मूलोच्छेदकत्वतः ॥ ७ ॥
यतोऽवसादयेद्विद्या तस्मादुपनिषद्भवेत् ॥
यथोक्तविद्याहेतुत्वाद्ग्रन्थोऽपि तद्भेदतः ॥ ८ ॥
भवेदुपनिषन्नामा लाङ्गलं जीवनं यथा ॥
ऐकात्म्यविषयान्नान्यो वेदान्तवचसां यतः ॥ ९ ॥
लभ्यते विषयः कश्चित्तस्मात्तद्धीस्तमोपनुत् ॥
सा चात्मोत्पत्तितो नान्यद् ध्वान्तध्वस्तावपेक्षते१०॥
प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः ॥
ब्रह्मावाप्त्यै तु तत्त्यागस्त्यागेनैक इतिश्रुतेः ॥ ११ ॥

---

क्तः ? इत्याशङ्क्य, साध्यसाधनयोरभेदोपचारादिति सदृष्टान्तमाह । * यथोक्तेति ॥ ८ ॥ ननु वेदान्तानामैक्यं विषयः तत्र चाध्यक्षादिविरोधात्तेषां सम्पदादिपरत्वं, तथा चैक्यधीरप्रमेति तदर्थं ग्रन्थारम्भो व्यर्थस्तत्राह* ऐकात्म्येति। उपक्रमादितात्पर्यलिङ्गैरैक्यपरत्वे वेदान्तानां सम्पदादिपरत्वायोगादध्यक्षादिविरोधस्य परिहरिष्यमाणत्वादैक्यज्ञानस्य प्रमात्वेन फलत्वमित्यर्थः ॥ ९ ॥ ऐक्यधियः प्रमात्वे ऽप्यन्यानपेक्षायास्तस्याः मोहानिवर्तकत्वान्न फलवत्त्वमित्याशङ्क्य, अन्यत् किं कर्म ज्ञानाभ्यासो वा तया ऽपेक्ष्यते ? नोभयमपीत्याह । *सा चेति । प्रत्यग्धीः नान्यापेक्षा तत्त्वधीत्वात् शुक्तितत्त्वधीवत् । न हि मानस्य स्वफले तदितरापेक्षेति भावः ॥ १० ॥ तथापि "धर्मात्सुखं च ज्ञानं च" इतिस्मृत्या धर्मशब्दितावश्यानुष्ठेयकर्मभ्य एव ज्ञानोत्पत्तिसम्भवात्किमनेन ग्रन्थारम्भेणेत्यत आह । *प्रत्यगिति । वेदानुवचनादिधर्माः सत्त्वशुद्धिविविदिषाहेतवः । "विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः । स्मृतिस्तु परम्परया तेषां ज्ञानहेतुत्वादर्थवतीति भावः । किंच सर्वकर्मत्यागस्य ज्ञानाङ्गत्वेन श्रुतत्वादपि न कर्मणां

न कर्मणा न प्रजया न धनेनामृता जनाः ॥
त्यागेनैके ऽमृतत्वं त आनशुः शुद्धबुद्धयः ॥ १२ ॥
नन्वभ्युदयवत्साध्या मुक्तिरप्राप्तरूपतः ॥
सिषाधयिषया चातोऽधिकारी न बुभुत्सया ॥१३॥
मैवं साध्याऽप्यसौ मुक्तिः स्वर्गवन्नैव जन्यते ॥
किन्त्वभिव्यज्यते बोधात्प्रदीपेन घटो यथा ॥१४॥
तमोमात्रान्तरायत्वात्तमसो विद्यया हतेः ॥
व्यज्यमानैव सा साध्येत्युपचारात्प्रयुज्यते ॥१५॥
चिकित्सयेव सम्प्राप्यं स्वास्थ्यं रोगार्दितस्य तु ॥
आत्माविद्याहतेर्बोधात्तत्कैवल्यमवाप्यते ॥ १६ ॥
ब्रह्म वा इदमग्रेऽभूत्तदात्मानमवेत्पुनः ॥

---

साक्षाद् ज्ञानहेतुत्वमित्याह । * ब्रह्मेति । तुशब्दोऽवधारणार्थः त्याग इत्यनेन सम्बध्यते । उक्तश्रुतिमेव व्यनक्ति । *नेति । तथा च विवेकादिसम्पन्नस्य सर्वकर्मत्यजः प्रत्यक्तत्त्वजिज्ञासोरयमारम्भः ॥ १२ ॥ जिज्ञासोराधिकारमुक्तमाक्षिपति । *नन्विति ॥ १३ ॥ अप्राप्तरूपत्वादितिहेतुरप्रसिद्ध इति परिहरति । * मैवमिति । तर्हि पुंव्यापरवैयर्थ्यमत आह । * साध्याऽपीति । तथाचाभिव्यक्त्यर्थः पुरुषयत्न इति भावः ॥ १४ ॥ ॥ १५ ॥ मुक्तिर्वस्तुतः साध्या प्रेप्सितत्वात् स्वर्गादिवदित्याशङ्क्य, व्यभिचारमाह । * चिकित्सयेति । स्वरूपेऽवस्थानं हि स्वास्थ्यं, तत्सदातनमेव रोगाभिभूतमौषधादिना तद्विगमने प्राप्यते तद्वत् बोद्धुरात्मत्वेन स्थिताऽपि मुक्तिरविद्यापिहिता तद्बोधात् तद्ध्वस्तेराप्येत्युपचर्यते । अत उक्तहेतो रोगिप्रेप्सितस्वास्थ्ये व्यभिचार इत्यर्थः ॥१६॥ मुक्तेरात्मत्वेन नित्याप्तत्वे मानमाह । *ब्रह्मेति ॥ १७ ॥ मुक्तेर्नित्याप्तत्वे फलितमाह । * सुषुप्तेति ।

अहं ब्रह्मेति तस्मात्तत्सर्वमासीदिति श्रुतिः ॥१७॥
यो ब्रह्म वेद ब्रह्मैव भवत्येष इति श्रुतिः ॥
सुषुप्तनरवच्छ्रुत्या बोध्यते प्रेर्यते न तु ॥ १८ ॥
प्रेर्यतेऽभ्युदये कर्त्ता नृतन्त्रे विधिवाक्यतः ॥
किमत्र विधिना कार्यमनृतन्त्रे चिदात्मनि ॥१९॥
जिज्ञासोरधिकारोऽतो न सिषाधयिषोरिति ॥
सुस्थमेतदथैतस्य दार्ढ्यायैव मतान्तरम् ॥ २० ॥
पर आहात्मनः स्वास्थ्यं श्रेयो यद्यभिवाञ्छसि ॥
कर्मभ्य एव तत्सिद्ध्येच्छ्रुतत्वात्कर्मणः श्रुतौ ॥२१॥
न च कर्मातिरेकेण मुक्त्यभ्युदयसाधनम् ॥

---

यथा पार्श्वस्थेन सुप्तः पाणिपेषणादिना बोध्यते नानुष्ठाप्यते तथा मुमुक्षुरपि तत्त्वमादिश्रुत्या "नासि त्वं संसारी ब्रह्मैव" इति व्युत्पाद्यते न किञ्चित् कार्यते इत्यर्थः ॥ १८ ॥ "ननु स्वर्गकामो यजेत" इत्यादिवत् "प्रज्ञां कुर्वीत" इत्यादिना ज्ञानं विधीयते ऽतो विधेयधात्वर्थसाध्या मुक्तिः स्वर्गादिवदित्याशङ्क्य, युक्तः कर्मणि विधिः पुरुषतन्त्रत्वात्तस्य, ज्ञानस्य तु पुंसाऽननुष्ठेयत्वादत्र श्रुतोऽपि विधिस्तद्धेतुपदार्थविवेकपर इत्यर्थमभिप्रेत्याह * प्रेर्यत इति ॥१९॥ विध्यभावे फलितं दर्शयन्नुत्तरग्रन्थस्य पौनरुक्त्यं परिहरति । * जिज्ञासोरिति ॥२०॥ स्वतःसिद्धाऽपि मुक्तिः कर्मणैव सिध्यति तस्यैव पुमर्थहेतुत्वेन श्रुतत्वादिति शङ्कते । * पर इति । स्वास्थ्यं स्वरूपावस्थानलक्षणम् । श्रेयः कैवल्यमित्यर्थः ॥ २१ ॥ कर्मेतरपुमर्थसाधनाभावे हेतुमाह * निषेधेति । सर्वस्यापि वेदार्थस्य विधिनिषेधतच्छेषत्वेन समाप्तेः कर्मैव पुरुषार्थहेतुरतो मुक्तिरपि स्वर्गवत् साध्येत्यर्थः ॥ २२ ॥ सिद्धबोधिवाक्यानां विधिशेषत्वेन

निषेधविधिमात्रत्वाद्वेदार्थस्येह सर्वतः ॥ २२ ॥
वचसामाक्रियार्थानां विधिनैवैकवाक्यताम् ॥
जैमिनिर्न्यायदृक्चाह नातः स्वार्थे प्रमाणता॥२३॥
कर्मापेक्षाऽपि नानित्या मुक्तिर्जन्यत्ववर्जनात् ॥
शिष्यते केवलं स्वास्थ्यमस्वास्थ्यस्य चिकित्सने ॥२४॥
निषिद्धकाम्ययोस्त्यागात्कर्मणोर्नित्यकर्मगः ॥
करणात्प्रत्यवायस्य हतेश्चास्य चिकित्सनम् ॥२५॥
काम्यकर्मपरित्यागाद्देवादित्वं न ढौकते ॥
निषिद्धस्य निरस्तत्वान्नारकीं नैत्यधोगतिम् ॥ २६ ॥
नित्यानुष्ठानतश्चेमं प्रत्यवायो न संस्पृशेत् ॥
आगामिजन्मनोऽसत्त्वे निर्विघ्नं स्वास्थ्यमिष्यताम् २७॥
शरीरारम्भकं कर्म भोगेन क्षीयते ततः ॥
विनाऽप्येकात्मसम्बोधान्मुक्तिः सिद्धाऽन्तरात्मनः २८॥
स्वात्मनः कर्मशेषत्वे तद्धियः कर्मशेषता ॥
अर्थवादो भवेत्सर्वमात्मज्ञानफलं श्रुतम् ॥ २९ ॥
स्वरूपेऽवस्थितिर्मुक्तिरात्मनः सा च साधनात् ॥
सिध्यतीति वदन्पूर्ववादी कस्मान्न लज्जते ॥ ३० ॥

---

प्रामाण्यं जैमिनेरपि सम्मतमित्याह । * वचसामिति ॥२३॥२४॥ क्रियाफलस्यापि मुक्तेर्नित्यत्वं साधयति । *निषिद्धेति ॥२५॥ उक्तमेवार्थं विवृणोति । *काम्येति ॥२६॥ न ढौकते न प्राप्नोति ॥२७॥२८॥ "ब्रह्म वेद ब्रह्मैव भवति" इत्यादौ ज्ञानस्यापि फलं श्रूयते इत्याशङ्क्य, आत्मनः कर्मशेषत्वात्तत्संस्कारकज्ञाने श्रूयमाण-फलस्यापापश्लोकश्रवणवदर्थवादतेत्याह । *स्वात्मन इति॥२९॥ ऐकभविकन्यायेन परोक्तां मुक्तिं तदुक्तविरोधप्रकटनेन दूषयति । स्वरूप इति ॥३०॥ उक्तहेत्वनुष्ठानात्प्रागात्मा तत्र स्वरूपेऽवस्थितो

तत्रात्मा किं स्वरूपे प्राङ् न तस्थावुत तस्थिवान् ॥
आद्ये तन्न स्वरूपं स्यादात्मनः सर्वदा ऽसतः ॥३१॥
अथावस्थित एवायं किमर्थं हेतुमार्गणम् ॥
स्थितत्वहेत्वपेक्षायामनिर्मोक्षः प्रसज्यते ॥ ३२ ॥
विषयाभ्यासजास्वास्थ्यनुत्त्यर्थं हेतुमार्गणम् ॥
इति चेद्विषयाभ्यासो निर्हेतुर्वाऽथ हेतुमान् ॥ ३३ ॥
न मुक्तिराद्ये हेतुश्च धर्मादिरथवेतरः ॥
नेतरो दुर्निरूपत्वाद्धर्माधर्मौ च चिन्तय ॥ ३४ ॥
किमसङ्गस्वभावस्य विषयैः सङ्गतिं बलात् ॥
कुरुतः कर्तृरूपस्य सङ्गयोग्यस्य वा वद ॥ ३५ ॥
भल्लातकाङ्कवद्वस्त्रे बलात्कर्तुं न शक्यते ॥
न हि व्योम घटीकर्तुं कुशलो ऽपीह शक्नुयात् ॥३६॥
आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ॥

---

न वेति विकल्प्य दूषयति *तत्रेत्यादिना। असतः असत्त्वात्। यत्र स्वत एव सदाऽनवास्थितस्तन्नात्मस्वरूपम् आगन्तुकत्वात् धर्मव-दित्यर्थः ॥३१॥३२॥ न स्वरूपावस्थानार्थमुक्तमुपायमुपगच्छामः किन्तु संसृष्टेषु विषयेष्वसकृदनुभवजनितपापशमनायेति शङ्कते *विषयेति॥३३॥ स्वभावादेवात्मनि चैतन्यवद्विषयसम्पर्क इत्या-द्यपक्षमनिर्मोक्षप्रसङ्गेन दूषयति * न मुक्तिरिति। विषयसंसर्गः सहेतुरिति पक्षं विकल्प्य दूषयति *हेतुश्चेत्यादिना ॥३४॥३५॥ *भल्लातकेति। यथा वस्त्रे वस्तुतोऽकलङ्के भल्लातकफलं संसृज्य-मानं तत्र कलङ्कयति नैवमसङ्गात्मनि धर्माधर्मावनर्थयोगविधा-यकावित्यर्थः। तयोरात्मन्यनर्थसम्बन्धाधानासामर्थ्यं साधर्म्य-दृष्टान्तेनाप्याह *न हीति। यथा कुशलः कुलालो मृदं घटीकरोति तद्वन्न नभो घटीकर्तुमलमित्यर्थः ॥ ३६ ॥ द्वितीयमनूद्य दूष-

न हि स्वभावो भावानां व्यावर्ततेऔष्ण्यवद्रवेः ॥३७॥
ननु कर्तृत्वभोक्तृत्वकार्यमेवात्मसंसृतिः ॥
ननु तच्छक्तिरित्यात्मा मुक्तः स्याच्छक्त्यवस्थितौ ॥३८॥
नैवं शक्तेरवस्थाने तत्कार्यस्यानिवारणात् ॥
शक्तिस्वरूपहाने तु शक्तिमद्वस्तुनिन्हुतिः ॥ ३९ ॥
अथ कार्यानभिव्यक्तिर्निमित्तासम्भवान्न तत् ॥
धर्मादेः शक्तिरूपेण सम्भवः केन वार्यते ॥ ४० ॥
तस्मात्कर्तृस्वभावस्य दुर्लभा मुक्तिरात्मनः ॥
साधनं च निषिद्धादिवर्जनं दुःशकं तथा । ४१ ॥
सूक्ष्मापराधसंदृष्टेरतियत्नवतामपि ॥

---

यति *आत्मेति ॥३७॥ नात्मा कर्तृत्वादिकार्यस्वरूपः किन्तु तच्छक्तिस्वभावः, तथा च कर्तृत्वादिकार्यनिवृत्तावप्युपपन्नाऽऽत्मनो मुक्तिरिति शङ्कते *नन्विति ॥३८॥ कर्तृत्वादिकार्यवन्मुक्तौ तच्छक्तिरपि कदाचिन्नश्यति न वेति विकल्प्य उभयत्र दोषमाह *नैवमिति ॥३९॥ न शक्तेः स्वरूपनाशो मुक्तिः किन्तु शक्तेर्यत्कार्यं तदनभिव्यक्तिरिति शङ्कते *अथेति । कार्यानभिव्यक्तेः स्वापादौ सत्त्वादतिप्रसङ्गोऽत आह *निमित्तेति । स्वापादौ पुनरभिव्यक्तिनिमित्तादृष्टादीनि सन्ति, मुक्तौ तु तदभावान्नातिप्रसङ्ग इत्यर्थः । मुक्तौ धर्मादेरपि कर्तृत्वादिवच्छक्तिरूपेण स्थितिसम्भवात्कदाचित्कार्यव्यक्तिः स्यात्तथा चानिर्मोक्ष इति दूषयति *न तदित्यादिना ॥४०॥ विषयाभ्यासजास्वास्थ्यनुत्तये कार्यानभिव्यक्तये वा परकीयोपायो नोपयोगीत्युक्तम्, इदानीं तदुपाय एव दुष्करोऽप्रामाणिकश्चेत्याह *साधनं चेति॥४१॥ *निपुणोऽपीति । पुण्यदेशवासात्पुण्यस्य पापदेशवासात्पापस्य चोत्पत्ति-

२

निषिद्धकाम्ये निःशेषे वर्जयेन्निपुणोऽपि कः ॥ ४२ ॥
मुमुक्षुः काम्यपापे द्वे वर्जयेदिति चोदना ॥
नास्ति वेदे क्वचिद्येन वचनात्तत्प्रकल्प्यते ॥ ४३ ॥
काम्यादिवर्जनं चैतत्स्वकपोलप्रकल्पितम् ॥
अतः प्रामादिकात्काम्यान्निषिद्धाच्च पुनर्जनिः ॥ ४४ ॥
अथापराधो यस्यास्ति जायतामेष यस्य तु ॥
नापराधो मुच्यते ऽसाविति चेद्वर्धतां भवान् ॥ ४५ ॥
सापराधत्वतो मुक्तिः संदिग्धैव प्रसज्यते ॥
द्विजातीनां खरादेस्तु त्वदुक्त्या स्यादसंशयम् ॥ ४६ ॥
नित्यस्य फलमिष्टं चेदुपात्तदुरितक्षयः ॥
तथापि काम्यपुण्यानां क्षयो नादुरितत्वतः ॥ ४७ ॥
उपपातकमल्पं चेत्क्षपितं नित्यकर्मणा ॥

---

दुष्परिहरेति भावः ॥ ४२ ॥ ४३ ॥ यतो निषिद्धकाम्यवर्जनमशक्यम् अतस्तत्पक्षे पुनर्जननमावश्यकमित्याह *अत इति॥४४॥ यस्य निषिद्धादिवर्जनमशक्यं तस्य जन्मास्तु, यस्य तु क्षपिताशेषकल्मषस्य सूक्ष्मापराधो ऽपि नास्ति तस्योक्तविधया मुक्तिरस्तीति शङ्कते *अथेति। मनुष्यमात्रे ऽपराधस्य सन्दिग्धत्वान्मुक्तौ निःसन्दिग्धाधिकारस्त्वन्मते गर्दभादेरेव स्यादिति सोपहासमुत्तरमाह *वर्द्धतामिति ॥४५॥४६॥ अपि च "धर्मेण पापमपनुदति" इति श्रुतेर्दुरितानां नित्यादिना क्षयेऽपि सुकृतानां तदविरोधादनारब्धपुण्यकृतदेहान्तरं दुर्वारमित्याभिप्रेत्याह *नित्यस्येति ॥४७॥ *अनन्तेति। "श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम्। चाण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति" इति स्मृतेरित्यर्थः। एतेनोपात्तान्यपि सर्वाणि कर्माणि सम्भूय एकमेव

अनन्तदेहहेतूनां हत्यादीनां कुतः क्षयः ॥ ४८ ॥
पापं पुण्यकृतां नेदृङ् नास्ति स्वर्गावरोहिणाम् ॥
श्वशूकरादिजन्मोक्तेर्विप्रक्षत्रादिजन्मवत् ॥ ४९ ॥
रमणीयतराचारा विप्रक्षत्रादियोनयः ॥
कपूयचरणाः श्वादियोनयः स्युरिति श्रुतिः ॥ ५० ॥
नित्यकर्मभिरप्यस्ति स्वर्गः काम्याग्निहोत्रवत ॥
आपस्तम्बेन तत्प्रोक्तमाम्रवृक्षानिदर्शनात् ॥ ५१ ॥
फलार्थे निर्मिते त्वाम्रे छायागन्धाववारितौ ॥
तथा वर्णाश्रमाचारादनुगच्छेत् त्रिविष्टपम् ॥ ५२ ॥
निषिद्धकाम्यानित्यानि पूर्वजन्मसु चात्र च ॥
कृतानि सन्त्यनन्तानि स्वास्थ्यं तत्रात्मनः कुतः॥५३॥
ऐकात्म्यज्ञानतः कर्मक्षयं चेदात्थ तर्हि ते ॥

---

देहमारभन्त इति तदभिमतैकभविकत्वमपि निरस्तमिति ध्येयम् ॥४८॥ धर्माभिरतानामनेकजन्मारम्भकं पापं नास्ति अन्यथा न धर्मे प्रवृत्तिः स्यादित्याशङ्क्य, स्वर्गच्युतानामपि सूकरादिजन्मश्रवणान्नैवमित्याह *पापमित्यादिना । तथा चानन्तपुण्यकरणेऽपि ज्ञानं विना न मुक्तिरिति भावः ॥४९॥५०॥ किञ्च नित्यकर्मणां दुरितक्षयातिरिक्तफलश्रवणादपि न त्वन्मते मुक्तिः सम्भवतीत्याह *नित्येति । तत्र तद्यथा "आम्रे फलार्थे निमित्ते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते" इत्यापस्तम्बस्मृतिमर्थतः पठति *फलार्थमिति । निमित्ते निर्मिते आरोपिते वा ॥५१॥५२॥५३॥ इदानीं निरुद्धगतिकः सिद्धान्तमालम्बते *ऐकात्म्येति । मन्मतप्रवेशे मम यथा निश्चिता मुक्तिस्तद्वत्तवापीत्याह *तर्हीति ॥५४॥ तस्मान्मुमुक्षुणा सर्वकर्म-

निर्विघ्ना मुक्तिरस्त्वद्य ममैव हि न संशयः ॥ ५४ ॥
तेन निःसारतां बुध्वा कर्मणां वेदतत्त्ववित् ॥
ऐकात्म्यज्ञानमन्वेति कर्मत्यागपुरःसरम् ॥ ५५ ॥
यत्तूक्तं कर्मशेषत्वमात्मतज्ज्ञानयोर्न तत् ॥
न तावदात्मा तच्छेषोऽनुवृत्तेर्लोकमोक्षयोः ॥ ५६ ॥
ज्ञानं कस्यात्मनोऽत्र स्यादिह कर्तृपरात्मसु ॥
देहात्मधीर्भोगहेतुर्वैदिकं कर्म न स्पृशेत् ॥ ५७ ॥
देहान्तराभिसम्बन्धी न चात्मास्तीति जानतः ॥
विवेकिनो न युक्तेयं प्रवृत्तिः पारलौकिकी ॥ ५८ ॥
बाढं कर्त्रात्मधीः कर्महेतुश्चेदस्तु तावता ॥
किमायातं कर्मघातिपरब्रह्मात्मवेदने ॥ ५९ ॥

---

संन्यासपूर्वकं श्रवणाद्येव कर्त्तव्यमित्युपसंहरति *तेनेति ॥ ५५ ॥ यागादिकर्तृत्वादात्मनस्तद्द्वारा तज्ज्ञानस्यापि कर्माङ्गतेति पूर्वपक्षोक्तमनुवदति *यत्त्विति । आत्मनस्तावन्न कर्माङ्गता तस्य कृष्यादावपि कर्तृत्वेन यागादिनाऽव्यभिचरितसम्बन्धाभावादित्याह *नेति ॥ ५६ ॥ आत्मज्ञानमङ्गमित्यत्राप्यात्मपदार्थो देहो वा अन्तःकरणविशिष्टो वा ऽशनायाद्यतीतो वेति विकल्पयति *ज्ञानमिति ॥ आद्यं दूषयति *नेहात्मेति ॥ ५७ ॥ कर्त्रात्मनो लौकिकसाधारणत्वेऽपि तस्य देहातिरिक्तत्वधियः क्रतोरन्यत्रानुपयोगात्तज्ज्ञानं कर्माङ्गमिति मत्वा द्वितीयं शङ्कते *देहान्तरेति ॥ ५८ ॥ कर्तृत्वादिविशिष्टात्मज्ञानस्याङ्गत्वेऽप्यस्मदभिमतवेदान्तवेद्यात्मतज्ज्ञानयोर्न कर्माङ्गता, प्रत्युत कर्मनिर्मूलहेतुत्वमित्याह *बाढमिति ॥५९॥ उक्तमेवार्थं स्पष्टयति *व-

वर्णाश्रमवयोवस्थाध्यासं कर्मोपजीवति ॥
वर्णाश्रमादि हन्त्येतत्परब्रह्मात्मवेदनम् ॥ ६० ॥
कर्तृभोक्त्रादिरूपत्वं प्रत्यगज्ञानहेतुजम् ॥
ज्ञाते प्रतीचि तद्रूपमपैति स्वाप्नरूपवत् ॥ ६१ ॥
दारपुत्रधनादीनि कर्मसाधनतां ययुः ॥
यानि तान्यपयान्तीति किमु वक्तव्यमात्मनः ॥६२॥
देहतद्बाह्यरूपं यद्विशेषणमुदीर्यते ॥
प्रतीचो निर्विशेषस्य तदज्ञानं विना न हि ॥ ६३ ॥
चोरोऽसौ मामभिप्रैतीत्येवं चोरविशेषणम् ॥
स्थाणौ सम्भावयत्यज्ञो न त्वभिज्ञस्तमो विना॥६४॥
करोम्यन्धो द्विजो बालो दग्धश्छिन्नोऽहमित्यपि ॥

---

र्णीति। अहं ब्राह्मणः गृही युवा ऽरोगीत्यध्यासं विना कर्मणि प्रवृत्त्ययोगात् विशिष्टात्मधियस्तदङ्गत्वेऽपि न शुद्धात्मधियस्तदङ्गता तस्यास्तन्निवर्त्तकत्वादिति भावः ॥ ६० ॥ सत्यस्य कर्तृत्वादेः कथं ज्ञाननिवर्त्यत्वमित्याशङ्क्य, कर्तृत्वादिरात्मनि कल्पितः दृश्यत्वात्स्वप्नगजादिवदित्यभिप्रेत्याह *कर्त्रिति ॥ ६१ ॥ प्रत्यक्तत्त्वसाक्षात्कारेणात्मधर्मत्वेन प्रतीतकर्तृत्वादिनिवृत्तौ कर्मसाधनीभूतबाह्यदारादिनिवृत्तिः कैमुतिकन्यायसिद्धेत्याह *दारेति । *कर्मसाधनतां ययुरिति। सभार्यस्य जातपुत्रस्य धनवत आधानादिविधानादिति भावः ॥६२॥ किञ्च देहादेरात्मनश्चाहं मनुष्य इत्यादिविशेषणविशेष्यत्वेन प्रतीतिर्देहादेः कल्पितत्वमन्तरा न घटत इत्याह *देहेति ॥ ६३ ॥ मोहादेवान्यदन्यस्य विशेषणमित्युक्तं दृष्टान्तेन स्पष्टयति *चोर इति । यो हि पुरः स्थितं स्थाणुं स्थाणुत्वेन न वेद स त्वसौ चोर इत्यभिप्रेत्यागच्छतीति चोरेण तं विशिनष्टि, यस्तु पुरोवर्तिनं स्थाणुं स्थाणु-

नाविद्यामन्तरेणैतैः प्रत्यगात्मा विशिष्यते ॥ ६५ ॥
इयमेवात्मनोऽविद्या कर्माधिकृतिकारणम् ॥
अधिक्रियन्ते यैनैते बृहस्पतिसवादिषु ॥ ६६ ॥
सर्वकर्मसमुच्छेदि ज्ञानं वेदान्तमानजम् ॥
तन्मूलाज्ञानघातित्वान्नास्य कर्माङ्गता ततः ॥६७॥
यच्चोक्तमर्थवादत्वं ब्रह्मज्ञानफलस्य तत् ॥

---

त्वेन वेद स तं तेन न विशिनष्टि, अतोऽन्वयव्यतिरेकाभ्यां स्थाणोर्मोहादेव पुंविशेषणत्वं तथाऽन्यत्रापीत्यर्थः ॥ ६४ ॥ मोहादृतेऽपि दण्ड्ययमित्यादौ विशेषणविशेष्यभावो दृष्ट इत्याशङ्क्य अगृहीतभेदयोर्विशेषणविशेष्यत्वेन प्रतीतौ मोहो हेतुरुक्तः । दण्डीत्यादौ तयोर्भेदग्रहाद्वैषम्यमित्यभिप्रेत्य निर्विशेषात्मना सहागृहीतभेदविशेषणान्युदाहरति * करोमीति ॥ ६५ ॥ कर्त्रादीनामज्ञातभेदानां पुंस्थाणुविशेषणत्ववदात्मविशेषणत्वस्याविद्याकृतत्वेऽपि प्रकृतधर्माधिकारे किमायातं ? तत्राह * इयमेवेति । इयमविद्याऽविद्याधीनविशेषणविशेष्यताऽऽत्मनः कर्मसम्बधब्राह्मण्याद्यभिमानहेतुर्येन ब्राह्मणादयो बृहस्पतिसवादिषु स्वामित्वेन सम्बध्यन्ते तादृशाभिमाने हेतुर्विशेषणविशेष्यभावापन्नाऽविद्यैवेति पूर्वेणान्वयः । तथा च कर्मसम्बन्धनिमित्तब्राह्मणाद्यभिमानस्याविद्यकत्वादविद्वान्कर्माधिकारीति भावः ॥ ६६ ॥ अविदुषः कर्माधिकारित्वे फलितमाह *सर्वेति । प्रमाणजन्यं ज्ञानं कर्ममूलाज्ञाननिवर्तकत्वेन कर्मोच्छेदकं यस्मात्ततोऽस्य न कर्माङ्गतेति योजना ॥६७॥ शुद्धात्मज्ञानस्य कर्मानङ्गत्वे तत्फलश्रुतेः ब्रह्मात्मैक्यपरत्वेन स्वार्थपरत्वाभावादर्थवादत्वेऽपि न गुणवादता किन्तु "यन्न दुःखेन

अभ्युपैम्यर्थवादत्वं वचसोऽन्यपरत्वतः ॥ ६८ ॥
विरोधानुपलम्भेनापापश्लोकश्रुतेरिव ॥
नैवाभूतार्थवादत्वं किन्तु भूतार्थवादता ॥ ६९ ॥
कुतो विरोधः शङ्क्येत प्रत्यक्षे ब्रह्मधीफले ॥
ब्रह्मत्वमात्मनो दृष्ट्वा नोत्तरेत्संसृतिं कथम् ॥ ७० ॥
उत्तीर्य संसृतिं भूयः कर्तृत्वादीन्न वीक्षते ॥
रोगादिवदनर्थत्वात्कर्तृत्वादिजिहासतः ॥ ७१ ॥
कर्तृत्वादिस्वभावस्य दृश्यत्वात्तु दृगात्मनि ॥
अविद्याकल्पितत्वं स्याद् दृगात्मा तु न दृश्यते ॥७२॥
प्रमाता साक्षिणा दृश्यो मातुर्मानं प्रजायते ॥

---

सम्भिन्नमित्यादिवत् भूतार्थवादतेत्याह *यच्चेत्यादि ॥६८॥६९॥ विदितब्रह्मणोऽपि कर्तृत्वाद्यनिवृत्तेः "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिफलश्रुतेरपि गुणार्थवादत्वमित्याशङ्क्य असम्यग्ज्ञानिनां तथात्वे ऽप्यप्रतिबद्धसाक्षात्कारवतामसङ्गाद्वितीयपरमानन्दस्यानुभविकत्वान्न विरोधशङ्केत्याह *कुतो विरोध इति ॥७०॥ *न वीक्षत इति। पूर्ववदात्मनिष्ठतया न पश्यतीत्यर्थः। कर्तृत्वादेर्जिहासितत्वे हेतुः *रोगेति। आदिशब्देन अहिकण्टकादिग्रहः ॥७१॥ कर्तृत्वादेः सत्यत्वात्तत्त्यागः कथं घटेतेत्याशङ्क्य, तन्मिथ्यात्वसाधकं पूर्वोक्तानुमानं स्मारयति *कर्तृत्वेति। दृश्यत्वं चैतन्यविषयत्वमतो नात्मनि व्यभिचार इत्याह *दृगात्मेति ॥ ७२ ॥ कर्तृत्वादेरात्मधर्मत्वाभावानुमानं तद्धर्मत्वग्राहकाहंप्रत्ययबाधितमित्याशङ्क्य, स किं प्रत्ययः प्रमातृविषयः साक्षिविषयो वा? तत्राद्यमङ्गीकृत्य द्वितीयं दूषयति *प्रमातेत्यादिना। यस्मान्मात्रादित्रयं दृश्यं तस्मान्मात्रादित्रयसाक्षी न स्वविषयप्रमातृकर्तृकमेयगोचरक्रियाव्याप्यो भवति। यथा न वन्हिः स्वदाह्यो-

मानेन मीयते मेयं साक्षिदृश्यं त्रयं ततः ॥ ७३ ॥
मातृस्थं मेयगं मानं प्रतीचि त्रयसाक्षिणि ॥
न व्यापारयितुं शक्यं वन्हिं दग्धुमिवोल्मुकम् ॥७४॥
परार्थसंहतानात्मभोग्यकर्त्रादिबोधिना ॥
मानेन तद्विरुद्धोऽर्थः साक्ष्ययं मीयते कथम् ॥ ७५ ॥
साक्षिसाक्ष्याभिसम्बन्धः साक्षिवस्तुनि कल्पितः ॥
साक्ष्यापेक्ष्यं न साक्षित्वं केवलानुभवात्मनि ॥७६॥
इच्छाद्वेषादयोऽप्येते न चिदात्मनि सम्मताः ॥
कामः सङ्कल्प इत्येवं मनोधर्मत्वसंश्रवात् ॥ ७७ ॥

---

ल्मुकक्रियाव्याप्यस्तद्वदित्यर्थः ॥ ७३ ॥ ७४ ॥ नन्वात्मा मात्रादिग्राहकग्राह्यः प्रमात्रादेरविलक्षणत्वात् प्रमात्रादिवदित्याशङ्क्यासिद्धो हेतुरित्यभिप्रेत्याह *परार्थेति ॥ साक्षी प्रमात्रादिविलक्षणः अपरार्थत्वात् व्यतिरेके मात्रादिवादित्याभिप्रेत्य दृष्टान्ते परार्थत्वं साधयति । *संहतेति । विमतं परार्थं संहतत्वात् गृहवदित्यर्थः । प्रमात्राद्यनात्मबोधिप्रत्ययेन तद्विलक्षणः साक्षी न विषयीकर्त्तुं शक्यः पराञ्ज्ञानस्य प्रतीचि प्रवृत्तिविरोधादिति भावः ॥ ७५ ॥ नन्वात्मनः साक्षित्वे साक्ष्येण सह सम्बन्धो वाच्यः, अन्यथा तत्साक्षित्वानुपपत्तिः, तथा चासङ्गत्वहानेरत आह *साक्षीति। यथा "सविता प्रकाशते"इत्यत्र प्रकाश्यमनपेक्ष्यापि सवितुः प्रकाशकत्वनिर्देशः,एवमात्मनः साक्ष्यमनपेक्ष्यापि साक्षित्वव्यपदेशो घटते, तदपेक्षत्वेऽपि तत्सम्बन्धस्य कल्पितत्वान्नासङ्गत्वहानिरित्यर्थः ॥७६॥ इच्छादीनामात्मधर्मत्वात्तदधीनकर्तृत्वादिरपि तद्धर्म इति नैयायिकास्तान्प्रत्याह *इच्छेति । इच्छादयः क्वचिदाश्रिताः गुणत्वाद्रूपवदित्यनुमानात्पारिशेष्यात्तेषामात्मगुणतेत्याशङ्क्य, श्रुतिविरोधान्नैवमित्याह *काम इति ॥ ७७ ॥

आत्मनश्चेदमी सर्वे ऽनर्थं कुर्यात्स्वयं कथम् ॥
आत्मा जानन्यथा शत्रोस्तथा तस्मादनात्मवान्॥७८॥
अविद्ययाऽऽत्मधर्मत्वे दोषः कश्चिन्न विद्यते ॥
तद्वर्जनस्य संसिद्धेर्वेदान्तैरात्मबोधनात् ॥ ७९ ॥
परागर्थप्रमेयेषु या फलत्वेन सम्मता ॥
संवित्सैवेह मेयोऽर्थो वेदान्तोक्तिप्रमाणतः ॥ ८० ॥

---

किं चामी चेदात्मधर्मा एषामनर्थहेतुत्वमात्मा वेत्ति न वा ? तत्राद्यं दूषयति *अनर्थमिति । स्वयं स्वस्येति यावत् । कुर्यात् इच्छादिसामग्रीं कथं सम्पादयेत् बुद्धिपूर्वकारी नात्मनोऽनर्थं करोतीत्यत्र वैधर्म्यदृष्टान्तमाह *यथा शत्रोरिति । तस्मात् द्वितीयः परिशिष्टः ततश्च प्राप्तं तेषामज्ञानकार्यत्वमित्यभिप्रेत्याह *तस्मादिति । अनात्मवानबुद्धिमानज्ञानीत्यर्थः ॥ ७८ ॥ अज्ञानकार्यत्वेऽपि तेषामनर्थहेतुत्वं तुल्यम् अनाद्यज्ञानस्यात्मवन्निवृत्त्ययोगादित्याशङ्क्य, विरोधिसन्निपातेऽनादिप्रागभावनिवृत्तिवद्वेदान्तजन्यज्ञानाभिव्यक्तचैतन्येन तस्यापि निवृत्तिसम्भवान्मैवमित्याह *अविद्ययेति ॥ ७९ ॥ नन्वविद्यानिवृत्तेरात्ममात्रत्वान्न तत्र तस्योपायत्वम् उपायोपेयत्वस्य भेदापेक्षत्वात्तत्राह *परागिति । अस्यार्थः । पराचः शब्दादयोऽर्थाः येषां प्रमेयास्तानि प्रत्यक्षादिप्रमाणानि परागर्थप्रमेयाणि तेषु फलत्वेन सम्मता या संवित् वस्तुतस्तु न फलं जन्माभावात् सैव परमात्मस्वरूपा वेदान्तोक्तिलक्षणप्रमाणस्य प्रमेयस्तात्पर्यगम्योऽर्थः । तथाचाविद्याविरोध्याकारेणोपायत्वं तन्निवृत्त्याऽऽत्मना च फलत्वादुपेयतेत्येकत्रैवात्मन्याकारभेदादुभयथात्वमिति ॥८०॥ अपि चाद्वितीयात्मबोधिवेदा-

अबोधकत्वान्नो मात्वं स्यादितोऽन्यार्थकल्पने ॥
वेदान्तानामतो ध्यानविध्याद्यर्थो न कल्प्यताम्॥८१॥
नन्वेवमपि मानत्वव्याघातः स्यात्क्रियाविधेः ॥
अद्वयात्मनि सम्बुद्धे कर्मानुच्छित्त्यसम्भवात् ॥ ८२ ॥
नैतदेवं यतो शेषमानानामपि मानता ॥
आपरात्मावबोधात्स्याद्बोधात्पूर्वमबाधनात् ॥ ८३ ॥
ऊर्ध्वं त्विष्टममानत्वमैकात्म्यमतिबाधनात् ॥
मानान्यपि च बाध्यन्ते मानेन प्रबलेन हि ॥ ८४ ॥
श्येनादिविधिबाधः स्यादहिंसाविधिना यथा ॥
तथैवैकात्म्यमानेन द्वैतमानं प्रबाध्यताम् ॥ ८५ ॥
श्येनाहिंसाविधी एतौ दृष्टादृष्टार्थभेदतः ॥
व्यवस्थितौ तयोरेकमबाध्यममतं यदि ॥ ८६ ॥

---

न्तानामन्यार्थत्वकल्पनेऽबोधकतालक्षणमप्रामाण्यं स्यादतः कार्यार्थत्वं न कल्प्यमित्याह *अबोधकत्वादिति ॥ ८१ ॥ अद्वयानुभवविषयत्वं वेदान्तानाममृष्यन्नाशङ्कते *नन्विति। अद्वितीयात्मनि वेदान्तप्रामाण्येऽपि तज्ज्ञानेन कारकादिभेदस्यापहृतत्वात्कर्मकाण्डप्रामाण्यं व्याहन्येत तथा च तदेकदेशवेदान्तेष्वप्यनाश्वासः प्रसज्येतेति भावः ॥८२॥ किं तस्याप्रामाण्यं ज्ञानात्पूर्वं व्याहन्येत पश्चाद्वा ?। नाद्य इत्याह *नैतदिति। आत्मज्ञानपर्यन्तं मानत्वे हेतुमाह *बोधादिति ॥ ८३ ॥ द्वितीयमिष्टापत्त्या दूषयति *ऊर्ध्वमिति। ननु मानानां परस्परबाध्यबाधकभावो न दृष्टचरोऽत आह *मानानीति ॥८४॥८५॥ क्रोधारातिवशीकृतचित्तस्य दृष्टहिंसार्थतया श्येनादिविधिः जितक्रोधस्यादृष्टार्थतया न हिंस्यादिति विधिरिति व्यवस्थिताधिकारकत्वान्न तयोर्बाध्यबाधकतेति शङ्कते *श्येनेति । *अबाध्यममतमिति । अबा-

तर्ह्यद्वैतद्वैतमाने तत्त्वातत्त्वार्थगोचरे ॥
उभयोर्व्यवतिष्ठेतां नरयोर्मुक्तबद्धयोः ॥ ८७ ॥
कर्माण्यतो विधीयन्तामविवेकिनरं प्रति ॥
न तु विध्वस्तसकलकर्महेतुं बुधं प्रति ॥ ८८ ॥
सम्यग्विमृदिताशेषध्वान्तस्य च न पूर्ववत् ॥
अज्ञानादि पुनः कर्तुं शक्यते हेत्वसम्भवात् ॥ ८९ ॥
सर्वकर्मनिरासे ऽतो ऽधिकारः स्याद्विवेकिनः ॥
बुभुत्सोरपि संसिद्धो बुद्धत्वपदवाञ्छनात् ॥ ९० ॥
कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ॥

ध्यमिति कृत्वोदाहरणमसम्मतमित्यर्थः ॥ ८६ ॥ प्रकृतेऽपि विद्वदविद्वद्विषयतया काण्डद्वयव्यवस्थोपपत्तेर्न बाध्यबाधकतेत्याह * तर्हीति ॥ ८७ ॥ ८८ ॥ अथ विद्वानपि यथापूर्वं मानतो व्यवहरति तत्कथं ज्ञानादूर्ध्वं विध्याद्यप्रामाण्यं? तत्राह *सम्यगिति । अत्राज्ञानशब्दस्तज्जन्यकर्मपरः । न च विदुषो मानप्रवृत्तिहेत्वज्ञानविलये व्यवहारानुपपत्तिरिति वाच्यम् । बाधितानुवृत्त्याऽपि तत्सम्भवादित्यर्थः ॥८९॥ फलितमाह *सर्वेति । विवेकिनः साक्षात्कारवतः । अथ यद्यविद्याविषयः कर्माधिकारस्तर्हि विविदिषासंन्यासो न स्यादित्याशङ्क्याह *बुभुत्सोरिति । विविदिषोद्देशेन कर्मविधानात्तत्सिद्धौ तेन प्रयोजनाभावाद्विविदिषोरपि कर्मत्यागो घटते इति भावः ॥९०॥ विविदिषोः कर्मत्यागे युक्त्यन्तरमाह *कारकेति । कर्त्रादिकारकाणां व्यवहारो नाम कर्म तस्मिन् सति जिज्ञास्यमानं शुद्धं वस्तु वीक्षितुं न क्षमः कर्मापहृतधीत्वादतो न जिज्ञासोः कर्माधिकारः । आरुरुक्षोर्मुनेर्योगमित्यादिस्मृतेरिति भावः ॥ किञ्च निष्प्रपञ्चतत्त्वे विवेकविषयीकृते कर्मनिमित्ताभिमानशैथिल्यान्न तस्मिन्नधिकार इत्या-

शुद्धे वस्तुनि सिद्धे तु कारकव्यापृतिर्न हि ॥ ९१ ॥
कारकाकारकधियोर्नैकदैकत्र वस्तुनि ॥
विरोधात्सम्भवोऽस्तीह प्रकाशतमसोरिव ॥ ९२ ॥
अविरोधः क्रमेण स्यात् स्थितिगत्योरिवेति चेत् ॥
नात्मज्ञानस्य कूटस्थवस्तुनन्यत्वहेतुतः ॥ ९३ ॥
नौष्ण्यात्मको मितो वह्निः क्रमशोऽक्रमशोऽथवा ॥
वस्तुतः शीततामेति कर्तृतन्त्रं तथा भवेत् ॥ ९४ ॥
भेदाभेदावुपाश्रित्य यो ऽप्याह ज्ञानकर्मणोः ॥
एकाधिकारं, सोऽप्यत्र विरुद्धत्वं कथं नुदेत् ॥ ९५ ॥
अतश्चाज्ञानकर्मादिधर्मशून्यमविक्रियम् ॥
अक्रियाकारकं वाञ्छत्तानन्दं श्रुतिमानतः ॥ ९६ ॥

ह *शुद्धे वस्तुनीति ॥ ९१ ॥ अपि च विवेकिनस्तावदकारका- त्मधीरस्ति तस्य कर्माधिकारे कारकधीर्वाच्या, तयोश्च यौगप- द्यं क्रमो वा ? नाद्य इत्याह *कारकेति ॥९२॥ द्वितीयमुत्था- पयति *अविरोध इति । दूषयति *नेति । अकारकधियोऽविका- रिब्रह्मविषयत्वात्तस्यां कर्मप्रवृत्तिनिमित्तकारकधीर्नोत्पद्यते तन्नि- मित्तजात्याद्यभिमानभङ्गादित्यर्थः ॥ ९३ ॥ अकारकब्रह्मणि मिते कारकधीर्नोदेतीत्यत्र दृष्टान्तमाह *नौष्ण्यात्मक इति । ननु षो- डशिग्रहणाग्रहणवदात्मनि कारकाकारकत्वे स्यातामिति नेत्याह *कर्तृतन्त्रमिति । पुरुषकृतिसाध्ये कर्मणि तत्सम्भवेऽपि व्यवस्थि- तरूपे आत्मनि विकल्पायोग इत्यर्थः ॥ ९४ ॥ भास्करमतमा- शङ्क्य निरस्यति *भेदेति । वास्तवयोरेकत्रासम्भवादिति भावः ॥९५॥ श्रुतिस्मृत्युपपत्तिभिः साधितं जिज्ञासोरपि कर्मानाधिका- रमुपसंहरति *अत इति । *तज्ज्ञानन्निति । अज्ञानादिसकलान- र्थशून्यनिरतिशयपरमानन्दस्य मुमुक्षुणा ज्ञानमात्रेण प्राप्यतां तु-

तद्विरुद्धफले बाह्यसाधने ऽनेककारके ॥
कथं कर्मणि तज्ज्ञानन्मनो दध्याद्धसन्नपि ॥ ९७ ॥
वारिपथ्याशनोपेतं सर्वानर्थविवर्जितम् ॥
मार्गं त्यक्त्वा सुधीः को वा यियासत्यतथाविधे॥९८॥
विरक्तस्य तु जिज्ञासोर्ज्ञानान्नान्यद्व्यपेक्षणम् ॥
कर्मापेक्षा हि साध्येऽर्थे सिद्धेऽर्थे न तदर्थकम् ॥९९॥
ऐकात्म्यमेव तन्मेयं तस्यैवाप्रतिबोधतः ॥
बुद्धो भेदो न तन्मेयो भेदाभेदौ तु दुःशकौ ॥१००॥
नन्वविद्यावदिष्टं चेद्ब्रह्म दोषो महानयम् ॥
निरविद्ये च विद्याया आनर्थक्यं प्रसज्यते ॥ १ ॥

---

च्छकर्मफलस्य बाह्यबहुसाधनसाध्यतां जानन्हसन्नपि लीलया कर्म न करोतीत्यर्थः ॥९६॥९७॥ समीचीनोपायलाभे बुद्धिपूर्वकारी तद्विरुद्धे न प्रवर्तत इत्यत्र लौकिकदृष्टान्तमाह *वारीति ॥८९॥ अथ कर्मणैव हि संसिद्धिमित्यादिस्मृत्या कर्मणो मुक्तिहेतुत्वप्रतीतेः कथं तस्यातथाविधत्वम् ? अत आह * विरक्तस्येति । स्मृतौ सिद्धिपदं शुद्धिपरमिति भावः ॥ ९९ ॥ ज्ञानस्य मुक्तिहेतुत्वेऽपि नाद्वैतविषयस्य तद्धेतुता येन तस्मिन्सति कर्माधिकारो न स्यात्किन्तु तटस्थेश्वरविषयस्येत्याशङ्क्य, श्रुतेरज्ञातार्थपरत्वान्मैवमित्याह *ऐकात्म्येति । बुद्ध इति, अनुमानादिनेति शेषः । भेदशब्देन भिद्यत इति व्युत्पत्त्याऽद्वैतव्यतिरिक्तः सर्वोऽपि विवक्षितः ॥ १०० ॥ ब्रह्मणोऽप्यज्ञातत्वमाक्षिपति *नन्विति । ज्ञानरूपं ब्रह्म नाज्ञानमास्कन्दति व्याघातादित्यर्थः । मास्तु तर्हि ब्रह्मण्यविद्येत्याशङ्क्य, तर्हि तदभिन्नजीवेऽपि तदयोगात् ज्ञानवैयर्थ्यमित्याह *निरविद्येति ॥ १ ॥ ब्रह्मणो वास्तवं नि-

मैवं नभःस्थसूर्यस्य समेघामेघते इव ॥
सविद्यनिरविद्यत्वे किं न स्तो दृष्टिभेदतः ॥ २ ॥
अविचारात् घनच्छन्नो निर्घनस्तु विचारतः ॥
अतत्त्वतत्त्वदृष्टिभ्यां ब्रह्मापि द्विविधं तथा ॥ ३ ॥
अस्याविद्येत्यविद्यायामेवासित्वा प्रकल्प्यते ॥
ब्रह्मद्वारा त्वाविद्येयं न कथञ्चन युज्यते ॥ ४ ॥
न जानाम्यहमित्येषाऽनुभूतिः सर्वसम्मता ॥
तत्राविद्याचिदात्मानौ तत्सम्बन्धश्च भान्त्यमी ॥ ५॥
अविचाराद्भासमाना विचाराद्विनिवर्तते ॥
अविद्येयं चिदात्मा तु भात्येवासौ निरन्तरम् ॥ ६ ॥
अविद्या त्वविचारेण भासते, तन्निरूपणे ॥
अविद्वान्वाऽथ विद्वान्वा नोभावप्यत्र शक्नुतः ॥७॥

---

रविद्यत्वं, साविद्यत्वं तु काल्पनिकमतो नोक्तदोष इति सदृष्टान्तमाह *मैवमिति ॥ २ ॥ ३ ॥ उक्तमेवार्थं सङ्क्षेपविस्तराभ्यामाह *अस्येति । अविद्यायामासित्वा स्थित्वा विचारमकृत्वेति यावत् । ब्रह्मद्वारा ब्रह्मीभूतदृष्ट्या ॥ ४ ॥ विचारशून्यैः प्रत्यक्तत्त्वे कल्पिताऽविद्यास्तीति पूर्वार्द्धेनोक्तम् अर्थं विस्तरेणाह *नेति ॥ ५ ॥ साक्षिनिष्ठतयाऽविद्याऽनुभूयते चेत्तर्हि सत्यैवास्त्वित्यत्राह *विचारादिति । यदि सा सत्या स्याद्विचारजन्यसाक्षात्कारानन्तरमपि चैतन्यवदेव प्रतीयेतेत्यभिप्रेत्याह *चिदात्मा त्विति ॥६ ॥ तर्हि तस्याः कल्पितत्वे तन्निरासयत्नवैयर्थ्यमित्याशङ्क्य, तस्याः कल्पितत्वं केनापि ज्ञातुं न शक्यत इत्याह *अविद्येति । भासते इत्यनन्तरं यद्यपि तथापीति द्वयमध्याहर्तव्यम् ॥७॥ उभयोरशक्तिं क्रमेणाह *अविद्यावानि-

अविद्यावानविद्यात्वं न निरूपयितुं क्षमः ॥
ब्रह्मबोधात्पुरा तस्या वस्तुत्वेनैव भासनात् ॥ ८ ॥
न निरूपयते विद्वान्विद्यादृष्ट्यैव बाधनात् ॥
वेद्यं ब्रह्मैव विद्यायां भासते बाध्यते तु सा ॥ ९ ॥
निद्राया न हि निद्रात्वं निद्राणेन निरूप्यते ॥
अनिद्राणोऽप्यपश्यंस्तां न निरूपयितुं क्षमः ॥ १० ॥
अथ बुध्वा ऽनुभूतां तामनिद्राणःपरामृशेत् ॥
परामृशत्वविद्यां च बोधादूर्ध्वं बुधस्तथा ॥ ११ ॥
अविद्याब्रह्मसम्बन्धमविद्यादृष्टिकल्पितम् ॥
परामृशत्यतः सिद्धमस्याविद्येत्युदीरितम् ॥ १२ ॥
अविद्यावृत्तवीक्षायां ब्रह्मसम्बन्धतेत्यपि ॥

---

ति । अविद्यात्वं कल्पितत्वम् । निरूपयितुं साक्षात्कर्तुम् ॥ ८ ॥ विद्यादृष्टयेत्युक्तं विवृणोति *वेद्यमिति । तस्याः प्रत्यङ्मात्र-कालीनत्वं बाध्यत्वमित्यर्थः ॥ ९ ॥

उक्तमर्थं दृष्टान्तेन स्पष्टयति *निद्राया इति। निद्राशब्देनात्र तज्जन्यो स्वप्नो लक्ष्यते, तस्य निद्रात्वं कल्पितत्वमिति ॥ १० ॥ निद्राणस्य तत्काले कल्पितत्वज्ञानाभावेऽपि बोधानन्तरं तस्य बाध्यत्वलिङ्गेन तदस्तीति शङ्कते * अथेति । तर्हि तद्विद्वान-पि विचारशून्येन मया प्रत्यगभिन्ने ब्रह्मणि कल्पिताऽविद्ये-ति जानातु अथापि तन्निवृत्तये पूर्वं प्रवृत्तिर्नानुपपन्नेत्यभिप्रेत्याह *परामृशत्विति ॥ ११ ॥ यतो ऽविचारदशाकल्पितं परामृश-त्यतोऽस्याविद्येति श्लोकपूर्वार्धार्थ उपपद्यत इत्याह *अवि-द्येति ॥ १२ ॥ वृत्तानुवादपूर्वकं ब्रह्मद्वारेत्युत्तरार्द्धं व्याचष्टे *अविद्यावृत्तेति । अविचारदशायामित्यर्थः । ब्रह्मवृत्तेति । पर-

ब्रह्मवृत्तपरीक्षायां नासौ ब्रह्मस्पृगिष्यते ॥ १३ ॥
तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः ॥
अविद्या सह कार्येण नासीदस्ति भविष्यति ॥ १४ ॥
अतः प्रमाणतोऽशक्या ऽविद्याऽस्येति परीक्षितुम् ॥
कीदृशी वा कुतो वेति ब्रह्मदृष्ट्या कथञ्चन ॥ १५ ॥
वस्तुनोऽन्यत्र मानानां व्यापृतिर्न हि युज्यते ॥
अविद्या च न वस्त्विष्टं मानयोगासहिष्णुतः ॥१६ ॥
अविद्याया अविद्यात्वमिदमेवात्र लक्षणम् ॥
मानयोगासहिष्णुत्वमसाधारणमिष्यते ॥ १७ ॥
मानेन ब्रह्मवीक्षायामविद्यागन्धवर्जनात् ॥
ब्रह्मद्वारेति सुष्ठूक्तं नोक्तदोषद्वयं ततः ॥ १८ ॥
एवं चाज्ञातमैकात्म्यं सुस्थाऽतो ऽस्यैव मेयता ॥

---

मार्थतो विचार्यमाण इत्यर्थः ॥ १३ ॥ उक्तमर्थं विवृणोति *तत्त्वमिति ॥ १४ ॥ यतो वाक्योत्थविद्या सकार्याविद्यायास्त्रिकालवर्त्तिनीमपि सत्तां न मृष्यते ऽतो मुक्तस्य सकार्याविद्याऽस्तीति न मानतः शक्यं निश्चेतुमित्याह *अत इति॥१५॥ अज्ञानस्याप्रामाणिकत्वमनुमानेनापि साधयितुं व्याप्तिमाह *वस्तुन इति । यन्मानायोग्यं तदवस्तु यथा शशशृङ्गमिति व्याप्तिमुक्त्वाऽनुमानमाह *अविद्येति॥ विमतं मानयोग्यं शास्त्रार्थत्वाद्ब्रह्मवदित्यनुमानमाशङ्क्य, हेत्वसिद्धिमभिसन्धायाह *अविद्याया इति ॥ १७ ॥ अत एवोक्तं साक्षिवेद्यस्याज्ञानस्य प्रमाणैरभावव्यावृत्तिः प्रकाश्यत इति । सङ्ग्रहश्लोकशेषस्य निरवद्यतामाह *मानेनेति ॥ १८ ॥ एवं साविद्यत्वनिरविद्यत्वं दृष्टिभेदेन ब्रह्मण्युपपादितम् अतोऽस्याज्ञातत्वेन वेदान्तप्रमेयत्वं सुस्थमित्याह *एवं चेति । नन्वेवमपि प्रत्यक्षविरुद्धत्वादद्वैतस्य तद्बोधकशा-

प्रत्यक्षं द्वैतबोधयन्न दौर्बल्यान्न विरुध्यते । १९ ॥
आसन्नत्वादाश्रयत्वाद्वैशद्याच्चात्मवस्तुनः ॥
तद्बोधिशास्त्रं प्रत्यक्षात्प्रबलं द्वैतबोधिनः ॥ २० ॥
प्रत्यक्षं तद्यथा ऽऽसन्नं परोक्षार्थावबोधिनः ॥
सर्वप्रत्यक्तमे तद्बोधो वाक्योत्थ आत्मनि ॥ २१ ॥
आत्मानं सत्यमाश्रित्य मिथ्याद्वैतं प्रसिध्यति ॥
आत्मानुभववैशद्याज्जडार्थो विशदीभवेत् ॥ २२ ॥
अतः प्रबलमानेन ब्रह्मतत्त्वेऽवबोधिते ॥
विद्याफलस्य प्रत्यक्षान्नास्याभूतार्थवादता ॥ २३ ॥
ननु निर्धूतशोकादि फलं यत् श्रूयते श्रुतौ ॥
आत्मविद्यास्तुतिर्ह्येषा विद्यायां पुंप्रवृत्तये ॥ २४ ॥

---

नस्य ग्रावप्लवनादिवाक्यवदप्रामाण्यमित्याशङ्क्य, तस्य प्रत्यक्षापेक्षया प्रबलत्वान्न तद्बाध्यतेत्याह *प्रत्यक्षमिति ॥१९॥ तस्य प्राबल्ये हेतुत्रयमाह *आसन्नत्वादिति ॥२०॥ आद्यं हेतुं विवृणोति *प्रत्यक्षमिति। परोक्षादनुमेयाद्वस्तुनः सकाशात्प्रत्यक्षविषयभूतं वस्तु यथा सन्निहितमिष्टं तथा ब्रह्मात्मनि वेदान्तवाक्यजो बोधः सर्वतः सन्निहितं विषयीकरोति तद्विषयात्मनः प्रत्यक्तमत्वादित्यर्थः॥२१॥ द्वितीयतृतीयौ विशदयति* आत्मानमिति । कल्पितस्य सत्याधिष्ठानमन्तरा स्थित्यनुपपत्तेरित्यर्थः । *आत्मेति । घटाद्यवच्छिन्नचैतन्यस्फूर्त्या तत्स्फूर्तिरिति भावः ॥२२॥ तस्माद् ब्रह्मज्ञानफलवाक्यस्य गुणार्थवादत्वं नेति प्रकृतमुपसंहरति* अत इति । तत्र विद्वत्प्रत्यक्षमपि हेतुं करोति *विद्येति॥२३॥ विद्याफलविषयमागमं "तरति शोकमात्मवित्" इत्यादिकमनुभवविरोधादपाकुर्वन्नाशङ्कते *नन्विति । फलं, ज्ञानस्येति शेषः ॥ २४ ॥ यत्तु तत्र विद्वत्प्रत्यक्षमुक्तं तत्प्रत्याह *मनोराज्येति ।

मनोराज्यसमं मन्ये सर्वमेतत्कृतं फलम् ।
न प्रत्येमि यतः साक्षात्प्रत्यक्षं ज्ञानतः फलम् ॥२५॥
अत्रोच्यते फलं त्विष्टं गम्यमानं प्रमाणतः ॥
त्यक्त्वा कल्पयसे कस्मादनिष्टामश्रुतां स्तुतिम् ॥२६॥
स्वप्नस्थानादिसञ्चारिविज्ञानमयनामकः ॥
धीस्थचैतन्यबिम्बोऽयं सदा शोचतु मुह्यतु ॥ २७ ॥
बहुशोऽसङ्गवचसा निःसङ्गत्वं ब्रुवाणया ॥
श्रुत्यैव शोकमोहादि बिम्बात्मनि निवारितम् ॥२८॥
अहं दुःखीतिधीमूढं शोचन्तं प्रतिबिम्बितम् ॥
चिदाभासं प्रगृह्णातु किमायातं चिदात्मनि ॥ २९ ॥
आभासगतशोकादि स्वात्मन्यारोप्यते यदि ॥

---

विद्याया दृष्टफलत्वे विदुषि मय्यप्युपलभ्येत नोपलभ्यते ततस्त्वदनुभवो ऽसम्मत इत्यर्थः ॥ २५ ॥ श्रुतेः शोकनाशपरतात्यागे तस्यानिष्टत्वं वा हेतुः वाक्यादनवगम्यमानत्वं वेति विकल्पमभिसन्धाय क्रमेण निरस्यति *फलमिति ॥ २६ ॥ नन्वनुक्तोपालम्भोऽयं अहं दुःखीत्यादिप्रत्यक्षविरोधादात्मनः शोकादिनाशपरत्वं फलश्रुतेर्नास्तीत्युक्तत्वादित्याशङ्क्य, प्रत्यक्षश्रुत्योर्भिन्नविषयत्वादविरोध इत्याह *स्वप्नेत्यादि । स्थानत्रयसञ्चारोक्त्याऽऽगमापायिभ्यः स्थानतदभिमानिभ्योऽन्यं तत्साक्षिणं सदानुभूतिस्वभावं प्रत्यञ्चमुक्त्वा तस्यावस्थात्रयासम्बन्धात्तत्सम्बन्धाधीनदुखाभावमाह वेदः, अतः प्रत्यक्षश्रुत्योर्भिन्नविषयतया विरोधसमाधेः श्रुत्यैवोक्तत्वान्न तत्र विरोधशङ्केत्यर्थः ॥ २७ ॥ ॥२८॥२९॥ चिदात्मनो निर्दुःखत्वेऽसङ्गश्रुत्या तद्गतशोकनिवारणमनुपपन्नम् अप्रसक्तत्वादित्याशङ्क्य, वस्तुतस्तदभावेऽप्यारो-

आरोपोऽपोद्यते श्रुत्या निःसङ्गत्वादिबोधनात् ॥३०॥
चित्स्वरूपचिदाभासौ वाक्याहम्बुद्धिगोचरौ ॥
अदुःखिदुःखिनौ भूत्वा ऽनुभूयेते यथायथम् ॥ ३१ ॥
बोधात्प्राग्द्विविधं दुःखमेकं बुद्धिस्वभावजम् ॥
रोगावमानदारिद्र्यपुत्रहान्यादिरूपकम् ॥ ३२ ॥
अपरं त्वीदृशे दुःखे मग्नोऽहं बहुजन्मसु ॥
इत उद्धर्तुमात्मानं न शक्नोमीति मोहजम् ॥ ३३ ॥
तत्राद्यं कर्मजत्वेन नश्येद्भोगादृते न हि ॥
द्वितीयं भ्रमजं तत्त्वबोधादेव निवर्तते ॥ ३४ ॥
हर्षशोकौ विभ्रमोत्थौ कर्मोत्थसुखदुःखयोः ॥
बोधहेयौ हर्षशोकौ भोक्तव्ये तु सुखेतरे ॥ ३५ ॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥
मत्वा धीरो हर्षशोकौ जहातीतिवचः प्रमा ॥ ३६ ॥

---

पितं तन्निषिध्यते इत्याह *आभासेति । यदि यस्मात् ॥ ३० ॥ प्रत्यक्षश्रुत्योर्भिन्नविषयत्वमुक्तमुपसंहरति *चिदिति । यथायथं विभज्यानुभूयेते, विद्वद्भिरिति शेषः ॥ ३१ ॥ किञ्च चिदाभासेऽपि पूर्ववन्न सर्वदुःखानुवृत्तिः किन्तु कतिपयदुःखस्यैव निष्फलस्येति वक्तुं बोधात्पूर्वं दुःखद्वैविध्यं दर्शयति *बोधात्प्रागिति । स्वाभाविकं विवृणोति *रोगेति ॥३२॥ मोहजमाह *अपरमिति ॥ ३३ ॥ ३४ ॥ बोधानन्तरमपि प्रारब्धप्रापितसुखदुःखयोर्भोक्तव्यत्वेऽपि तज्जन्यहर्षशोकयोर्नानुवृत्तिः तयोर्भ्रान्तिमात्रजन्यत्वादित्याह *हर्षेति । सुखदुःखयोः, फलभूताविति शेषः । मदविशेषः सुखफलं हर्षः, रोदनताडनादि दुःखफलं शोकः ॥३५॥ उक्तेऽर्थे प्रमाणमाह *दुःखेष्विति । प्रमा प्रमाणम् ॥३६॥ मत्वा

धीरत्वं बुद्धतत्त्वस्य तत्त्वानुस्मृतिसन्ततेः ॥
पुनरप्युदियाद्भ्रान्तेर्वासनाविस्मृतिक्षणे ॥ ३७ ॥
पुनः संस्मृतिहेया ऽसावित्थं धीरैर्बुधैः सदा ॥
फलेऽनुभूयमाने त्वं कथमेतन्निरस्यसि ॥ ३८ ॥
श्रुतादपि न चेद्वाक्याज्जायेत फलवन्मतिः ॥
शङ्क्येतैवं जायते तु धीः शास्त्रादधिकारिणः ॥ ३९ ॥
नित्यमुक्तत्वविज्ञानं वाक्याद्भवति नान्यतः ॥

---

धीर इति धैर्यं हर्षशोकप्रहाणे हेतुरित्युक्तम् । धैर्येऽपि निरन्तरं तत्त्वानुसन्धानं हेतुरित्याह *धीरत्वमिति । भवतीति शेषः । तर्हि तत्त्वविस्मृतिकाले धैर्यापगमेन भ्रान्त्या हर्षादिवासना पुनरुदेष्यतीति शङ्कते *पुनरिति ॥३७॥ उदिताऽपि सा क्षणेन तत्त्वस्मृत्या निरस्यते इत्याह *पुनरिति । विद्वदनुभवमुपपाद्य एवमनुभूयमानं ज्ञानफलं दुरपह्नवमित्याह *इत्थमिति ॥३८॥ प्रत्यक्षं विद्याफलमित्येतन्मनोराज्यसममिति यदुक्तं तत्परिहरति *श्रुतादिति । श्रुतात्तत्त्वमस्यादिवाक्यादधिकारिणोऽपि फलवज्ज्ञानं यदि नोत्पद्येत तदा त्वदुक्तमाशङ्क्येत, न चैतदस्ति, "अधिकारिणः प्रमितिजनको वेदः" इति न्यायतस्तस्य वाक्यार्थधीसम्भवात्तत्फलोपलब्धेश्च । न ह्यनधिकारिणस्तदनुपलम्भः फलाध्यक्षं क्षेप्तुं क्षमते अयोग्यानुपलम्भत्वादिति भावः ॥ ३९ ॥ अधिकारिणो ऽपि मानान्तरान्न यथोक्तधीर्वस्तुनो मानान्तरायोग्यत्वादिति प्रसङ्गादाह *नित्येति । ननु वाक्यमपि यथोक्तार्थज्ञानजनकं न भवति श्रुतवाक्यानामपि सर्वेषां तदनुपलम्भादित्याशङ्क्य, अनधिकारिणां वाक्यार्थानुपलम्भस्तु पदार्थज्ञानाभावात् तदभावश्चाविवेकात्,तथाच जाग्रदाद्यवस्थातदभि-

वाक्यार्थस्यापि च ज्ञानं पदार्थस्मृतिपूर्वकम् ॥ ४० ॥
अन्वयव्यतिरेकाभ्यां पदार्थः स्मार्यते ध्रुवम् ॥
सम्यक्स्मृतपदार्थस्तु वाक्येऽधिक्रियते पुमान् ॥ ४१॥
युष्मदस्मद्विभागज्ञे स्यादर्थवदिदं वचः ॥
अनभिज्ञेऽनर्थकं स्याद्बधिरेष्विव गायनम् ॥ ४२ ॥
शोधितत्वंपदार्थज्ञः साक्षादेव प्रपद्यते ॥
वाक्यादद्वैतमात्मानं दशमस्त्वमसीतिवत् ॥ ४३ ॥
नवसङ्ख्याहृतज्ञानो दशमो विभ्रमाद्यथा ॥
न वेत्ति दशमोऽस्मीति वीक्षमाणोऽपि तान्नव॥४३॥
अपविद्धद्वयोऽप्येवं तत्त्वमस्यादिना विना ।
वेत्ति नैकलमात्मानं प्रत्यङ्मोहाप्रबाधतः ॥ ४५ ॥
दशमस्त्वमसीत्यस्माद्दशमत्वं निजात्मनि ॥

---

मानिभ्यः परस्परं व्यावृत्तेभ्यस्तदनुस्यूतं साक्षिणमिदमंशाद्वि-विच्य तद्विलक्षणत्वेन यस्तु जानाति तस्याधिकारिणो वाक्य-मर्थवत्, इतरस्य बधिरेषु गानवत् श्रुतमपि वाक्यमकिञ्चित्करमि-त्याह *वाक्यार्थस्येत्यादि॥४०॥४१॥४२॥शुद्धं त्वंपदार्थं जाना-सि चेत्तस्यैवापरोक्षसंविदात्मकत्वात् किं वाक्येनेत्यत आह *शो-धितेति।वाक्यादेवेत्यन्वयः। तत्र दृष्टान्तमाह *दशम इति ॥४३॥ दृष्टान्तं विवृण्वन् दार्ष्टान्तिकमाह *नवेति द्वाभ्याम्। यथा वस्तुतो दशमः कश्चित्स्वात्मानं मैत्रोऽस्मीति अपरोक्षं तांश्च पश्यन्नपि नवपुरुषगणनमुषितबुद्धिर्दशमस्त्वमसीति वाक्यादृते दशमो-ऽस्मीति न वेत्ति एवमपरोक्षस्याप्यात्मनो ऽद्वितीयत्वेनाज्ञात-त्वाद्वाक्यप्रमाणकतेत्यर्थः ॥ ४४ ॥ ४५ ॥ वाक्यं न साक्षा-त्कारजनकं वाक्यत्वात्सम्मतवदित्याशङ्क्य तत्रैव व्यभिचार-

साक्षात्करोति ब्रह्मत्वमेवं वाक्याच्चिदात्मनि ॥४६॥
बुभुत्सोच्छेदिनैवास्य सदसीत्यादिना दृढा ॥
प्रतीचि प्रतिपत्तिः स्यात्प्रत्यगज्ञानबाधतः ॥ ४७ ॥
अमात्वशङ्काऽसद्भावान्मान्तरैश्चाविरोधतः ॥
सदसीत्यादिवाक्येभ्यः प्रमा स्फुटतरा भवेत् ॥४८॥
वाक्याधिकारहेतौ च पदार्थप्रतिशोधने ॥
सन्न्यास उपकारीति प्राहतुर्हि श्रुतिस्मृती ॥ ४९ ॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ॥
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥५०॥
मुक्तेश्च बिभ्यतो देवा मोहेनापिदधुर्नरान् ॥
ततस्ते कर्मसूद्युक्ताः प्रवर्त्तन्ते विचक्षणाः ॥ ५१ ॥
अतः संन्यस्य सर्वाणि कर्माण्यात्मावबोधतः ॥

---

माह *दशम इति ॥ ४६ ॥ बुभुत्सितस्य शब्दबोध्यत्वादात्मनश्चापरोक्षत्वेनातथात्वादशाब्दत्वमित्याशङ्क्य सामान्यतः तस्य दृष्टत्वेऽप्यद्वितीयानन्दत्वेनादृष्टत्वाद् बुभुत्साऽप्यस्ति अतस्तन्निवर्तकवाक्येनाबाधितासन्दिग्धावबोधः स्यादेवेत्याह *बुभुत्सेति ॥ ४७ ॥ वाक्यादेव ज्ञानमुत्पद्यते इत्युपपादितमुपसंहरति *अमात्वेति । असदिच्छेदः ॥ ४८ ॥ एवं च शोधितपदार्थस्य पुंसो वाक्यार्थे ऽधिकार इत्युक्तम् एवं पदार्थशोधने च त्यक्तसर्वकर्मण एवाधिकार इत्याह *वाक्येति ॥ ४९ ॥ श्रुतिमुदाहरति *त्याग इति । मोक्षशब्देन तद्धेतुज्ञानं लक्ष्यते ॥ ५० ॥ तर्हि मुक्तिकारणं ज्ञानमुद्दिश्य सर्वे किमिति न प्रव्रजेयुरित्याशङ्क्याह *मुक्तेरिति ॥ ५१ ॥ यतो देवमायानिमित्ता नराणां कर्मसु प्रवृत्तिरतस्तदुपसादितमोक्षाभिलाषो विवेकी स-

हत्वा ऽविद्यां धियैवेयात्तद्विष्णोः परमं पदम् ॥५२॥
इति भाल्लविशाखायां श्रुतिवाक्यमधीयते ॥
सर्वकर्मनिरासेन तस्मादात्मधियो जनिः ॥ ५३ ॥
प्रवृत्तिलक्षणो योगो ज्ञानं सन्न्यासलक्षणम् ॥
तस्माज्ज्ञानं पुरस्कृत्य सन्न्यसेदिह बुद्धिमान् ॥५४॥
इत्येवमादिवाक्यानि नानास्मृतिषु कोटिशः ॥
ज्ञानाय विदधत्युच्चैः सन्न्यासं सर्वकर्मणाम् ॥५५ ॥
यदुक्तं पूर्वपक्षादौ श्रुतत्वात्कर्मणः श्रुतौ ॥
विमुक्तिहेतुः कर्मेति तत्रेदमभिधीयते ॥ ५६ ॥
केन चोक्तं क्रिया मुक्तौ साधनत्वं न गच्छति ॥
तमेतमिति नाश्रौषीः संस्कारा इति च स्मृतिम् ॥५७॥

---

र्वकर्माण्यविवेकपूर्वकाणि त्यक्त्वा श्रवणादिपरिपाकलब्धज्ञाना-ग्निनाऽविद्यां दग्ध्वा ज्ञानानन्दसदेकतानमवच्छिन्नं पदं प्राप्नु-यादित्याह *अत इति ॥ ५२ ॥ एषां वाक्यानां स्वकपोलक-ल्पितत्वं वारयति *इतीति ॥५३॥ स्मृतिमुदाहरति *प्रवृत्तीति । युज्यतेऽनेनेति योगः कर्म तेन हि पुमान्फलेन सम्बध्यते स-प्रवृत्तिलक्षणः रागादिपूर्वकव्यापारहेतुक इत्यर्थः । पुरस्कृत्य उद्दिश्य ॥ ५४ ॥ ५५ ॥ एवं स्वमतं प्रसाध्य परोक्तदूषणले-शाननुभाष्य दूषयति *यदुक्तमित्यादिना ॥५६॥ तत्र किं कर्म साक्षान्मोक्षहेतुरुत परम्परया ? । नाद्यः । प्रापकाभावादि-त्यभिप्रेत्य कल्पान्तरमङ्गीकरोति *केनेति । विविदिषाद्वारा संस्कारद्वारा वा कर्म मुक्तिहेतुरित्युपगमादिति भावः । तत्राद्ये विविदिषावाक्यं प्रमाणयति *तमेतमिति । द्वितीये "यस्यैते चत्वारिंशत्संस्काराः" इत्यादिस्मृतिं दर्शयति *संस्कारा इति ॥ ५७॥ एवं च कर्माणि शुद्ध्यादिद्वारलाभे तैः प्रयोजनाभावात् ज्ञा-

चित्ते विविदिषोत्पत्तौ रागादेर्वा विनाशने ॥
कर्मोपक्षीयते न्यासे ज्ञानकाले न गच्छति ॥५८॥
यच्चोक्तं कर्मणो नान्यन्मुक्त्यभ्युदयसाधनम् ॥
अस्तीति, तदसद्यस्मात्त्यागज्ञाने स्फुटं श्रुते ॥ ५९ ॥
निषेधविधिमात्रत्वं कर्मकाण्डस्य युज्यते ॥
न युक्तं ब्रह्मकाण्डस्य तत्र ब्रह्मावबोधनात् ॥६०॥
वचसामक्रियार्थानां जैमिनिर्विधिशेषताम् ॥
यत्प्राह तत्कर्मकाण्डे ज्ञेयं तद्विषयत्वतः ॥ ६१ ॥
अथातो ब्रह्मजिज्ञासेत्येवं व्यासेन कीर्त्तनात् ॥
धर्ममात्रस्य जिज्ञासाविषयो जैमिनेर्मतः ॥ ६२ ॥
विधिभक्तेन वेदान्ते किमर्थो विधिरुच्यताम् ॥

---

नाङ्गत्वेन तेषां त्याग एवेत्याह * चित्त इति ॥ ५८ ॥ उक्तरीत्या संन्यासज्ञानयोः पुमर्थहेतुत्वसिद्धेश्चोद्यान्तरमपि निरस्तमित्याह *यच्चेति ॥ ५९ ॥ * निषेधेति। कर्मकाण्डगतानामक्रियार्थानां वाक्यानां पुमर्थत्वाय विधिनिषेधशेषत्वेऽपि पुमर्थभूतब्रह्मबोधिवाक्यानां न तच्छेषतेत्यर्थः ॥ ६० ॥ अत एवानर्थक्यमतदर्थानामिति जैमिनीयवाक्यमपि कर्मकाण्डपरमित्याह । *वचसामिति ॥ ६१ ॥ किञ्च यदि सर्वेषां वस्तुबोधिवाक्यानां विधिशेषता स्यात् तदा सर्वज्ञबादरायणो ब्रह्ममीमांसां नारभेत, तेनारब्धत्वादपि जैमिनिवाक्यं कर्मकाण्डपरमित्याह *अथात इति ॥ ६२ ॥ किञ्च आत्मज्ञानविधेः प्रयोजनमपि नास्तीत्याह *विधिभक्तेनेति । वेदान्तप्रमेयस्य पुमर्थत्वसिद्धये वा विधिः, उत्पन्नज्ञानस्य विरोधिवृत्तिभिरन्यथात्वनिरसनाय वा, अविद्यानिरासार्थं वा, विद्याफलसिद्धये वेति

पुमर्थत्वं तु मेयस्य स्वाभाव्यान्न विधेर्बलात् ॥६३॥
विज्ञानमानन्दमिति ह्यात्मैवेति श्रुतिस्तथा ॥
पुमर्थस्यैव वेदान्तमेयत्वं प्रत्यपादयत ॥ ६४ ॥
अथोत्पन्नस्य बोधस्य संसारक्लेशबुद्धिभिः ॥
यदन्यथात्वं तद्बुध्यं विधानेन तदप्यसत् ॥ ६५ ॥
तज्ज्ञानं यस्य सञ्जातं जातमेवास्य नान्यथा ॥
गर्भस्थस्यापि हि सतो वामदेवस्य तद्यथा ॥ ६६ ॥
अविद्याया निरासार्थं विधिरित्यप्यसङ्गतम् ॥
उत्पन्ना चेत्तत्त्वविद्या नाविद्यां न निरस्यति ॥ ६७ ॥
दृष्टो ह्यविद्याविध्वंसो व्याधभावतयाऽन्विते ॥
राजसूनौ स्मृतिप्राप्ते व्याधभावनिवर्त्तनात् ॥ ६८ ॥
एवमेवात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥
लब्धैकात्म्यस्मृतेर्यांति सर्वाऽविद्या सकार्यका ॥६९॥

---

किंशब्दार्थः। आद्यं प्रत्याह *पुमर्थत्वमिति *आत्मैवेति। "आत्मैवानन्दः" इत्यादिश्रुतिरित्यर्थः ॥ ६३ ॥ ६४ ॥ द्वितीयमनुभाष्य दूषयति * अथेति। यथा वामदेवस्य मुनेर्मूत्रपुरीषाद्यनेकदोषदूषिते गर्भाशये शयानस्यापि पूर्वजन्मानुष्ठितश्रवणादिसंस्कृतस्य सम्यक् ज्ञानं जातं "तद्धैतत्पश्यन्" इति श्रुतेः। न च तत्कुतश्चिद् बाध्यते, एवमन्यस्यापि शुद्धबुद्धेः श्रवणादिजन्यज्ञानस्य नान्यथात्वं, न हि विपर्यासेन सम्यग्धीर्बाध्यत इति भावः ॥६५॥६६॥ तृतीयं निराकरोति * अविद्याया इत्यादिना। यथा कुतश्चिन्निमित्ताद्व्याधकुलसंवर्धितस्य राजसूनोः "नासि त्वं व्याधसूनू राजपुत्रस्त्वम्" इत्याप्तवाक्येन "राजपुत्रोऽहम्" इति स्मृतिप्राप्तौ चिरगृहीतोऽपि व्याधभावो निवर्त्तते एवं गुरूपदि-

न विद्याफलसिध्यर्थं विधिरित्यपि युज्यते ॥
विलक्षणं विधिफलाद्विद्याफलमिहोच्यते ॥ ७० ॥
उत्पत्तिराप्तिः संस्कारो विकारश्च विधेः फलम् ॥
मुक्तिर्विलक्षणैतेभ्यस्तेनेहानर्थको विधिः ॥ ७१ ॥
अनन्यायत्तसंसिद्धेर्निरविद्यात्मवस्तुनः ॥
न क्रियात्वं फलत्वं वा नापि कारकरूपता ॥ ७२ ॥
अतोऽत्र विध्यभावोऽयं न कथं चन दूषणम् ॥

---

ष्ठवाक्यार्थज्ञानादेवात्मज्ञस्य सकार्याऽविद्या व्येति नश्यतीत्यर्थः ॥६७॥६८॥६९॥ चतुर्थं निरस्यति* न विद्येति ॥ ७० ॥ वैलक्षण्यमेव व्यनक्ति* उत्पत्तिरिति ॥ न तावन्मुक्तिरुत्पत्तिरुत्पाद्या वा । अक्रियात्वादनादित्वाच्च । नाप्याप्तिराप्या वा । असम्बद्धत्वात्प्राप्तरूपत्वात् । नापि संस्कारः संस्कार्या वा । अगुणत्वादनाधेयातिशयत्वाच्च । नापि विकारो विकार्या वा । अकार्यत्वादपरिणामित्वाच्च । तस्मान्न विधिफलं मुक्तिरित्यर्थः । फलितमाह * तेनेति ॥७१॥ ज्ञाने विध्यसम्भवाद् ब्रह्मणस्तदशेषत्वेऽप्युपास्तिविधिसम्भवात्तच्छेषताऽस्त्वत आह* अनन्येति। न हि ब्रह्म उपास्तिविधिशेषः, तच्छेषत्वप्रयोजकीभूतक्रियादेस्तस्मिन्दुःसाधनत्वात् । न तावत्कारकाधीनात्मलाभत्वं ब्रह्मणोऽस्ति, अनन्याधीनसिद्धिकत्वात् । नाप्यविद्यावत्कारकत्वं, निरविद्यत्वात् । नापि फलत्वं, क्रियाजन्यत्वाभावात् । तस्माद्ब्रह्मणो नोपासनाविधिशेषत्वमपीत्यर्थः ॥ ७२ ॥ विधिशेषत्वाभावे वेदान्ताप्रामाण्यं मन्वाना वेदोपरा वेदान्ता इति केचित् तान् प्रत्याह * अत इति ॥ सति विधौ शुद्धे ब्रह्मणि वेदान्तप्रामाण्यायोगात्तदभावे पुमर्थब्रह्मबोधित्वाद्युक्ता प्रशंसेति भावः

अलङ्कृतिरियं साध्वी वेदान्तेषु प्रशस्यते ॥ ७३ ॥
चोदनाभिर्नियुक्तोऽहं तथा ब्रह्माहमित्यपि ॥
परस्परविरुद्धत्वादेकदैकत्र न द्वयम् ॥ ७४ ॥
स्वामी सन्न हि भृत्येन स्वामिनेव नियुज्यते ॥
सम्बोधनीय एवासौ सुप्तो राजेव बन्दिभिः ॥७५॥
यत्रैतस्यात्मभावेन श्रुत्या ब्रह्मावबोध्यते ॥
न तत्र करणापेक्षा नेतिकर्त्तव्यता तथा ॥ ७६ ॥
यत्र त्वेष विधिस्थाने प्रहितः स्यात्फलेच्छया ॥
इतिकर्त्तव्यता तत्र करणादानमेव च ॥ ७७ ॥

---

॥७३॥ किंच ज्ञानविधिषु विद्वान्नियोज्यो विविदिषुर्वा ? नाद्यः इत्याह *चोदनाभिरिति ॥७४॥ न द्वितीय इत्याह * स्वामीति। विविदिषुः संसारमार्गादुत्तीर्णत्वाद्वेदस्य स्वामी ततस्तेन नासौ प्रेर्यते किंतु "देहादिसाक्षी त्वं ब्रह्मैवासि" इति वेदैरसौ बोधनीयस्तस्मान्नियोज्याभावान्न नियोग इति वेदान्तेषु न विधिरिति भावः ॥ ७५ ॥ वेदान्तेषु नियोगाख्यविधिनिरासेन ब्रह्मणस्तच्छेषत्वाभावेऽपि भावनाख्यविधिसम्भवात्तच्छेषत्वं तदवस्थमित्याशङ्क्याह * यत्रेति ॥ यत्राम्नाये तत्पदलक्ष्यं ब्रह्म त्वंपदलक्ष्यप्रत्यक्त्वेन तत्त्वमादिश्रुत्या बोध्यते, तत्र ज्ञातब्रह्मतत्त्वस्यापेक्ष्यमाणफलांशाभावान्न करणेतिकर्त्तव्यतापेक्षा युक्ताऽतो न वेदान्तेष्वंशत्रयवती भावनेत्यर्थः ॥ ७६ ॥ ननु तेषु नास्ति चेदंशत्रयवती भावना कुतस्तर्हि तस्याः सम्भावनेति तत्राह * यत्रेति ॥ ज्ञातविध्यर्थः पुमान्यत्र वाक्ये स्वर्गादीच्छया प्रेरितः स्याद्यत्र करणेतिकर्त्तव्यतयोरुपादानं भाति तत्रांशत्रयसम्भवात्तद्वान्भावनाख्यो विधिरपि विधिस्थाने युक्त इति भावः ॥७७॥ तत्त्वमस्यादिवाक्यार्थधियोऽपि कर्मवाक्यार्थधीवत्पु-

आप्ताशेषपुमर्थस्य त्यक्तानर्थस्य च स्वतः ॥
अनात्मनीच्छेयं कथं चित्स्यादिहात्मनि ॥ ७८ ॥
तन्निवृत्तौ निवर्त्तेत इतिकर्त्तव्यसाधने ॥
निरन्तरायता ऽशेषपुमर्थस्यात्मरूपतः ॥ ७९ ॥
ननु मोहान्तरायायां मुक्तावस्तु यथोदितम् ॥
एकदेशो विकारो वा संसारीति मते कथम् ॥ ८० ॥
विकारावयवावेतौ वास्तवौ यदि सम्मतौ ॥
तदा न कर्मणा मुक्तिर्नापि ज्ञानेन कर्हिचित् ॥ ८१ ॥
यदा त्वविद्ययाऽध्यस्तं संसारित्वं न वास्तवम् ॥
तदा त्वविद्याविध्वस्तावधिकारो न कर्मणि ॥ ८२ ॥

---

मर्थहेतुत्वात्तदिच्छया प्रवृत्तेरितिकर्त्तव्यताद्यादानद्वारा वेदान्ते-ष्वंशत्रयवती भावना स्यादित्याशङ्कयाह ✻ आप्तेति । वाक्यात् ज्ञाततत्त्वस्याप्तानन्दत्वात्त्यक्तानर्थत्वाच्चानात्मनि स्वर्गादाविवापवर्गे नेच्छा सङ्गच्छते तस्यात्मत्वेनाप्तत्वादित्यर्थः ॥७८॥ एवं फलेच्छानिवृत्तौ तदविनाभूतकरणाद्याकाङ्क्षानिवृत्तिमाह ✻ तन्निवृत्ताविति ॥ मुमुक्षोः कथमाकाङ्क्षाऽभावः मुमुक्षुत्वव्याघातात्तत्राह ॥ ✻निरन्तरायत इति ॥ तत्तदाकाङ्क्षायामपि ज्ञाततत्त्वो न किंचित्कामयते। ज्ञानविधिः खल्वत्र निराचिकीर्षित इति भावः॥७९॥ उक्ताया मुक्तेः कर्मानपेक्षत्वेऽपि ब्रह्मविकारस्तदंशो वा जीव इति पक्षे ज्ञानस्याकारकत्वाज्जीवस्य परैक्यं कैवल्यं क्रियासाध्यमिति अभिसन्धाय शङ्कते ✻ नन्विति ॥ ८० ॥ अस्मिन्पक्षे तयोः संसारित्वं वास्तवमध्यस्तं वा ? नाद्यः, अग्न्यौष्ण्यवत्स्वाभाविकधर्मस्य केनाप्यनिवृत्तेरित्याह ✻ विकारेति ॥ ८१ ॥ द्वितीये ज्ञाततत्त्वस्य कर्मणि नाधिकार इत्याह ✻ यदेति ॥८२॥

तदा तु कल्पनाः सर्वा विकारावयवादिकाः ॥
वृथैवैताः श्रुतिश्चैव सर्वाः सम्पादयिष्यति ॥ ८३ ॥
स्वतो निःश्रेयसं पूर्णं तदपूर्णमविद्यया ॥
आभासते वृथैवास्याः प्रध्वंसो विद्यया भवेत् ॥८४॥
प्रध्वस्तायामविद्यायां पूर्णमेवावशिष्यते ॥
अनर्थको विधिस्तस्मात्सर्वो निःश्रेयसं प्रति ॥ ८५ ॥
निःशेषवाङ्मनःकायप्रवृत्त्युपरमात्मिका ॥
ब्रह्मनिष्ठेह वेदान्तैः पुंसः सम्पद्यते भृशम् ॥ ८६ ॥
ब्रह्मात्मतत्त्वव्युत्पत्तिमात्रेणात्राधिकारिता ॥
भवत्येव हि जिज्ञासोर्विरक्तस्य मुमुक्षतः ॥ ८७ ॥
ननूपक्रमसंहारपर्यालोचनया बुधैः ॥

---

किंचास्मिन्पक्षे ऽखण्डस्यैवाविद्यया संसारित्वोपपत्तौ विकारादिकल्पना मुधेत्याह * तदा त्विति ॥८३॥ एवं पूर्णब्रह्मणोऽविद्यया विद्यमानसंसारित्वप्रतीतौ तस्याः विद्यामात्रनिरस्यत्वाद्विधिवैयर्थ्यमित्याह * स्वत इत्यादिना ॥८४॥ ८५ ॥ यथोक्तं ज्ञानमुपनिषद्भ्यो न सिध्यति अधीतोपनिषदामपि केषांचिदनुपलम्भात्तस्मादुक्तफलमसम्भावितमिति तत्राह * निःशेषेति । इह मुमुक्षूणां मध्ये यस्य पुंसः स्वाभाविकाशेषव्यापारोपरमरूपा भृशं ब्रह्मनिष्ठा तन्मात्रपरताऽस्ति तस्य वेदान्तैः सम्पद्यते विद्येत्यनुषङ्गः ॥ ८६ ॥ ननु तत्त्वविदज्ञो वा ज्ञानहेतुष्वधिक्रियते? नाद्यः तस्य जिज्ञासोपरमात् । न द्वितीयः। अज्ञाते जिज्ञासाऽयोगादित्याशङ्क्य अधीतसाङ्गस्वाध्यायजन्यव्युत्पत्तिशङ्कितापातज्ञानवतोऽत्राधिकार इत्याह * ब्रह्मेति ॥ ८७॥ विधान्तरेण काण्डयोरधिकारभेदमाक्षिपति* नन्विति ॥ इषेत्वे-

वेदस्यैकार्थतात्पर्यमेकवाक्यतयोदितम् ॥ ८८ ॥
तेन निःशेषवेदोक्तकर्मानुष्ठानशालिनः ॥
विद्याधिकारो न ब्रह्मव्युत्पत्त्यादेर्हि केवलात् ॥८९॥
नैवं निःशेषवेदार्थमनुष्ठातुं नरः कथम् ॥
पुमायुषाऽपि शक्तः स्याद्येन ज्ञानेऽधिकारिता ॥९०॥
ततोऽधिकार्यभावेन वेदान्तानाममानता ॥
प्रसज्येत ततः शुद्धचित्तो विद्याधिकारभाक् ॥९१ ॥
संस्कारमात्रकारित्वं सर्वेषामपि कर्मणाम् ।
संस्कारः पच्यते पुंसः पूर्वजन्मकृतैरपि ॥ ९२ ॥
एवमत्रैकवाक्यत्वं नानुष्ठेयसमाप्तितः ॥

---

त्याद्युपक्रमस्य "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादेरुपसंहारस्य चालोकनया वेदस्यैकवाक्यतयैकार्थपरत्वं निश्चितमित्यर्थः॥८८॥ ततः किमित्यत आह *तेनेति । तेन एकवाक्यत्वहेतुना। दर्वीहोममारभ्य यावत्सत्रं कर्मानुष्ठितवतो ज्ञानाधिकारिता ततो निःशेषकर्मानुष्ठानानन्तरं ज्ञाननियोगमनुतिष्ठतो मुक्तिर्न जिज्ञासोरित्यर्थः ॥ ८७ ॥ वेदोक्तसकलकर्मकारिणो ज्ञानाधिकारित्वे तत्करणस्याशक्यत्वाज्ज्ञानाधिकार्यसिद्धेस्तन्नियोगो निरधिकारः स्यादिति दूषयति * नैवमिति ॥ ९० ॥ इहैव सर्वकर्मकारिणो ज्ञानानधिकारित्वे फलितमाह * तत इति ॥ ९१ ॥ सर्ववेदस्यैकवाक्यत्वमुक्तमन्यथयति * संस्कारेत्यादिना ॥ ब्रह्मज्ञानोपकारकचित्तसंस्कारहेतुत्वात्कर्मणामर्थद्वारोपकार्योपकारकत्वमात्रेण काण्डयोरेकवाक्यत्वं, तथाचातीतजन्मकृतसुकृतैरपि विषयनैराश्यात्मकसंस्कारोत्पत्तिसम्भवेन जिज्ञासयैव मोक्षेऽधिक्रियते इत्यर्थः ॥ ९२ ॥ अपि चास्मन्मते ऽधिकारिचिन्तैव न कार्येत्यभिसन्धाय विकल्पयति * किंचेति । विकल्पस्य प्रकृता-

वैराग्यादिमतः पुंसस्तेन विद्याधिकारिता ॥ ९३ ॥
किञ्च ज्ञानमदृष्टार्थमुत दृष्टार्थमुच्यताम् ॥
कस्मिन्त्सत्यत्र किं ते स्यादिति चेद् भाष्यते शृणु॥९४॥
ब्रह्मज्ञानमदृष्टार्थमग्निहोत्रादिवद्यदि ॥
ततोऽधिकाराचिन्ता स्यात्कृतेऽप्यफलशङ्कया ॥९५॥
कामिनाऽप्यग्निहोत्रादि शूद्रेणानधिकारिणा ॥
कृतमप्यफलं तेन यत्नात्तत्र निरूप्यताम् ॥ ९६ ॥
दृष्टार्थत्वेऽपि तद्दृष्टम् अविद्यानाशमात्रकम् ॥
ततोऽपि चाधिकं किञ्चिद्यल्लभ्यमधिकारतः ॥ ९७ ॥
अविद्यानाशमात्रं तु विद्योत्पत्त्यैव लभ्यते ॥
पुमर्थस्य समाप्तत्वादधिकं नार्थ्यतेऽण्वपि ॥ ९८ ॥
अविद्याघस्मरज्ञानजन्ममात्रावलम्बिनः ॥
पुमर्थादधिकं धीमान्किं वा कामयते परम् ॥ ९९ ॥
भिद्यते हृदयग्रन्थिरित्याद्यपि च यत्फलम् ॥

---

नुपयोगमाशङ्क्याह * कस्मिन्निति ॥ ९४ ॥ ज्ञानस्यादृष्टार्थत्वपक्षेऽधिकारिनिश्चयं विना कामनामात्रेण प्रेक्षावत्प्रवृत्त्यनुपपत्तेस्तत्राधिकारचिन्ता सफलेत्याह * ब्रह्मेति ॥ ९५ ॥ ९६ ॥ दृष्टार्थत्वं विकल्पयति* दृष्टार्थत्वेऽपीति ॥ तद् दृष्टम् तस्य ज्ञानस्य फलं दृष्टमित्यर्थः ॥९७॥ आद्ये आह * अविद्येति। अयं भावः अस्मिन्कल्पे ऽन्वयव्यतिरेकसिद्धफलत्वाच्छुक्त्यादिज्ञानवदात्मज्ञानस्य फलवत्त्वं निश्चित्य तत्कामस्याधिकारसिद्धेस्तद्विचारो मृषैवेति ॥ ९८ ॥ उक्तमेवार्थं स्पष्टयति * अविद्याघस्मरेति । शास्त्रादविद्याध्वंसिज्ञानलाभमात्राधीनपुरुषार्थस्य सम्भवेऽधिकमदृष्टफलं नार्थ्यते इत्यर्थः ॥ ९९ ॥ अविद्यानाशव्यतिरेकेण हृदयग्रन्थ्यादिनाशोऽपि ज्ञानफलमिति द्वितीयफलमाशङ्क्य तस्या-

अविद्यानाश एवैतदन्तर्भवति नो पृथक् ॥ १०० ॥
नासङ्गात्मविदा किञ्चिद्ग्रन्थिरात्मनि वीक्ष्यते ॥
अन्योन्याध्यासरूपस्य ग्रन्थेर्बोधे निवर्त्तनात् ॥१॥
नन्वविद्यानाशमात्रं दृष्टं विद्याफलं यदि ॥
अधीतवेदवेदार्था मुच्येरन्नखिलास्तदा ॥ २ ॥
नैवं विद्योदयो नास्ति प्रतिबन्धक्षयं विना ॥
अधीतवेदवेदार्थोऽप्यत एव न मुच्यते ॥ ३ ॥
प्रतिबन्धोऽप्रस्तुतश्चेद्बोधस्योदय ऐहिकः ॥
आमुष्मिकोऽन्यथेत्याह व्यासः सूत्रेण निर्णयम् ॥४॥
प्रतिबन्धक्षयो भूतो भवन्भावी त्रिधा मतः ॥
वामदेवशुकादीनां भूतो गर्भेऽवबोधनात् ॥ ५ ॥
वर्त्तमानोऽस्मदादीनां शृण्वन्तोऽपीह जन्मनि ॥
ये तत्त्वं नैव बुध्यन्ते तेषां भावीति निश्चयः ॥ ६ ॥

---

विद्यानिवृत्तिनान्तरियकतया न पृथक्फलत्वं, अतस्तत्रापि नाधिकारिचिन्तेत्याह * भिद्यत इति ॥ १०० ॥ आत्मनि कर्तृत्वाध्यासस्याविद्यानिवृत्त्या निवृत्तिं विद्वदनुभवेन द्रढयति * नासङ्गेति ॥ १ ॥ ज्ञानस्य दृष्टफलत्वेऽतिप्रसङ्गमाशङ्क्य परिहरति * नन्वित्यादिना ॥ २ ॥ ३ ॥ अवगतशास्त्रार्थस्यापि प्रतिबन्धात् साक्षात्कारो नोदेति इत्यत्र "ऐहिकमप्रतिबन्धे तद्दर्शनात्" इति व्याससूत्रं संवादयति * प्रतिबन्ध इति ॥४॥ * प्रसङ्गात् प्रतिबन्धक्षये कालनियममाह *प्रतिबन्धेति ॥ ५ ॥ *अस्मदादीनामिति ॥ श्रवणानन्तरं येषां ज्ञानोदयः तेषां प्रतिबन्धनाशोऽनुवर्तमानः, येषां तु जन्मान्तरश्रुतवाक्यस्मरणाद्बोधस्तेषां भूत इत्यर्थः ॥ ६ ॥ इदानीन्तनानामप्रतिबद्धज्ञाना-

न चास्मदादिबोधस्य बोधाभासत्वशङ्कया ॥
प्रतिबन्धः कल्पनीयो ऽनुभूतिः शङ्क्यते कथम् ॥ ७ ॥
असंदिग्धाविपर्यस्तबोधः शास्त्रान्निजात्मनि ॥
उदितश्चेत्ततो ऽन्या काऽनुभूतिः प्रार्थ्यते वद ॥ ८ ॥
बोधेऽप्यनुभवो यस्य न कथंचन जायते ॥
तं कथं बोधयेच्छास्त्रं लोष्टं नरसमाकृतिम् ॥ ९ ॥
यस्य त्वनुभवे शङ्का प्रतिबन्धोऽस्तु तस्य सः ॥
किं नश्छिन्नमशङ्कस्य बोधस्तेन न वार्यते ॥ १० ॥
रागो लिङ्गमबोधस्येत्युक्तं यत्तत्तथैव हि ॥
आत्मधर्मतया रागं मन्वानो न हि तत्त्ववित् ॥ ११ ॥
रागो जडस्य धर्मश्चेत्किमायातं चिदात्मनि ॥

---

भावमाशङ्क्य किमसंदिग्धाविपर्यस्तज्ञानमेव नास्ति आधुनिकानामिति प्रतिबन्धः कल्प्यते, उत ज्ञाने सत्यप्यनुभवाभावाद्यथा परकीयं दुःखं तद्वाक्याज्जानतोऽपि न तदनुभवस्तद्वदिति, आहो स्विदग्रे संशयदर्शनात्, रागाद्यनिवृत्तेर्वा ? नाद्यः, तादृशज्ञानस्य स्वानुभवसिद्धस्य दुरपन्हवत्वादित्याह * अनुभूतिरिति ॥ ७ ॥ द्वितीयं प्रत्याह * असंदिग्धेति । निजात्मनि इत्यस्यायमर्थः- परकीयदुःखस्य परोक्षतया तज्ज्ञाने सत्यपि साक्षात्कारपर्यन्तानुभवाभावस्तत्र सम्भवति, प्रकृते त्वात्मनो नित्यापरोक्षत्वेन तन्निश्चयव्यतिरेकेण नानुभव इति ॥ ८ ॥ अपरोक्षवस्तुज्ञानव्यतिरेकेणानुभवो नेति मन्यमाना अतिमन्दा इत्याह *बोध इति ॥९॥ तृतीयकल्पम् अङ्गीकरोति *यस्य त्विति ॥ १० ॥ चतुर्थमनुवदति *राग इति । उक्तम्, अभियुक्तैरिति शेषः ॥ अ-

रागादिहीन आत्मैव बोध्योऽस्माभिर्न चेतरः ॥१२॥
बोधात्पुराऽपि नीराग आत्मेति यदि मन्यसे ॥
स्वस्ति तेऽस्तु नमस्यामो यथाशास्त्रार्थवादिनम् ॥१३॥
पुरेत्थं चेन्न जानासि जानीह्यथ श्रुतेर्मुखात् ॥
यदावरकमज्ञानं तद्बोधेन विनश्यति ॥ १४ ॥
आत्मन्यतिशयः कश्चेन्न कोऽपीत्येतदुत्तरम् ॥
चित्ते वाऽतिशयः कश्चेद्बोध एवेति विद्धि भोः ॥१५॥
न रागो नष्ट इति चेदत्यल्पमिदमुच्यते ॥
जाड्यं यच्चित्तगं नैतन्नष्टमित्यपि चोदय ॥ १६ ॥
स्वभावश्चेद्धियो जाड्यं रागः किं परतो भवेत् ॥
रागाख्यवृत्तिः परत इति चेत्परमीरय ॥ १७ ॥
भोग्यसौन्दर्यविज्ञानं तत्परं रागकारणम् ॥
यदि तर्हि विजानीहि भोग्यदोषं प्रमाणतः ॥ १८ ॥
गुणदोषदृशौ भोग्यरागवैराग्यकारणे ॥

---

भियुक्तवचनस्य तात्पर्यमाह *आत्मेति॥११॥१२॥अथान्तःकरणनिष्ठतया रागानुवृत्त्यङ्गीकारे आत्मनोऽपि सदा नीरागत्वाद्बोधवैयर्थ्यमिति शङ्कते *बोधादिति। आत्मनो वस्तुतो नीरागत्वमङ्गीकरोति * स्वस्तीति ॥ १३ ॥ तर्हि बोधवैयर्थ्यमित्याशङ्क्य अन्यधर्मस्य रागादेरात्मन्यारोपनिमित्ताज्ञाननिवर्तकज्ञानाभावे आत्मनि नीरागताया दुर्ज्ञानत्वान्नैवमित्याह *पुरेति ॥ चेच्छब्दोऽवधारणार्थः ॥ १४ ॥ * न कोऽपीति ॥ अविद्यानिवृत्तेः स्वरूपमात्रत्वादिति भावः ॥ १५ ॥ १६ ॥ १७ ॥ रागस्य कादाचित्कधर्मतया जाड्यवैलक्षण्येऽपि तन्निवृत्तिप्रयोजकविषयदोषदर्शनमेव कार्यं न तु तदनुवृत्तिमात्रेणोत्पन्नब्रह्मबोधे

ब्रह्मबोधात्पुरा सिद्धे बोधादूर्ध्वं च तत्तथा ॥ १९ ॥
परमानन्दबोधे तु तदन्यस्यास्ति दुष्टता ॥
अर्थासिद्धेति चेन्मैवमल्पानन्दाविचारणात् ॥ २० ॥
न हि लब्धगजेनापि राज्ञाऽश्वस्त्यज्यते क्वचित् ॥
रुग्णोऽश्व इति जानंस्तु त्यजेदेव न संशयः ॥ २१ ॥
ब्रह्मबोधो ब्रह्मतत्त्वं बोधयेन्नान्यवस्तुषु ॥
दोषं बोधयते तस्य तद्बोधाविषयत्वतः ॥ २२ ॥
मिथ्यात्वदोषो बुद्धश्चेद्रागोऽप्येष विबुध्यते ॥
रागः सत्यो भोग्यजातं मिथ्येति न हि शास्त्रधीः॥२३॥
मिथ्यैवागामिजन्मापि प्रसज्येतेति चेन्न ते ॥
भोग्यं तद्रागजन्मानि मिथ्येत्येवं विजानतः ॥ २४ ॥
सन्त्वनेकानि जन्मानि शास्त्रात्तत्त्वमजानतः ॥
ज्ञानाज्ञानकृते मोक्षजन्मनी इति हि स्थितिः ॥२५॥

---

ऽसम्भावना कार्येत्यभिप्रायेणाह * यदीति ॥ १८ ॥ १९ ॥ ननु निरतिशयानन्दं दृष्टवतः क्षुद्रसुखाभिलाषायोगान्न भोग्यदोषदृष्टिः कार्येति शङ्कते *परमेति ॥ अधिकानन्दवतोऽपि दोषदृष्टिं विना स्वल्पानन्दरागो न निवर्त्तते इत्यन्वयव्यतिरेकाभ्यां दर्शयति *मैवमित्यादिना ॥ २० ॥ २१ ॥ किञ्च किं ब्रह्मज्ञानेन विषयदोषस्यापि विषयीकरणात्तद्दृष्टिर्न पृथक्कार्येत्युच्यते, किं वा तेन विषयमिथ्यात्वनिश्चयात् । नाद्यः, तस्य ब्रह्ममात्रविषयत्वादित्याह * ब्रह्मेति ॥ २२ ॥ द्वितीये रागमिथ्यात्वस्यापि निश्चितत्वात्तदनुवृत्तौ न किञ्चिद्बाधकमित्याह । *मिथ्यात्वेति ॥ २३ ॥ मिथ्याभूतस्यापि रागस्यानुवृत्तौ बाधकमाशङ्क्य ज्ञानेनाज्ञाननिवृत्तौ तस्याकिञ्चित्करतेत्याह *मि-

इयताऽपि प्रयासेन रागः सम्पाद्य एव किम् ॥
इति चेन्न वयं रागं सम्पादयितुमुद्यताः ॥ २६ ॥
रागं छिषन्भवान्ब्रह्मनिष्ठां त्यक्तुमिहोद्यतः ॥
तस्य ते ब्रह्मनिष्ठायास्तं त्यागं वारयाम्यहम् ॥ २७ ॥
वृश्चिकादपसर्पन्यः सद्यः सर्पेण मार्यते ॥
सोढाऽपि वृश्चिकोत्पन्नं दुःखं जीवत्वसौ नरः ॥२८॥
ब्रह्मनिष्ठामवाप्तस्य रागाद्यवसरः कुतः ॥
इति चेत्स्वस्ति ते ब्रह्मनिष्ठायास्तु विरागिणे ॥२९ ॥
बोधात्प्रागेव संसारदोषदृक्चेद्विरज्यते ॥
विरज्यत्वथ पापेन रागश्चेत्स चिकित्स्यताम् ॥ ३० ॥
दोषदृष्टिब्रह्मनिष्ठाद्वयमत्र महौषधम् ॥
कर्मजस्याचिकित्स्यस्य भोगादेव निराक्रिया ॥ ३१॥
कादाचित्कं रागलेशं चिकित्सितुमशक्नुवन् ॥

---

थ्यैवेत्यादिना ॥ २४ ॥ २५ ॥ २६ ॥ *तस्य त इति । अयमर्थः । यस्तु ब्रह्मज्ञाने जातेऽपीषद्रागानुवृत्तिमात्रेण ज्ञाने सन्दिहानस्तदनादृत्य व्यापारान्तरे प्रवर्तते तस्य पुरुषार्थभ्रंशो मा भूदिति रागाद्यनुवृत्तिमात्रेण ब्रह्मज्ञानेऽनादरो न कार्यः किंतूत्पद्यमानरागादिप्रतीकारपूर्वकं ब्रह्मनिष्ठाऽभिधेयताचिन्तनादिना तदेकपरतैव कार्येत्युपदिश्यत इति ॥ २७ ॥ २८ ॥ ननूक्तब्रह्मनिष्ठयैव रागनिवृत्तिसम्भवात्किं प्रतीकारान्तरेणेति चेदोमित्याह * ब्रह्मेति ॥ २९ ॥ बोधात्पूर्वमेव त्यक्तरागादेस्तदनन्तरं कथमनुवृत्तिरित्याशङ्क्य कर्मणां वैचित्र्यात्त्यक्तस्याप्यनुवृत्तिर्घटते इत्याह * बोधादिति ॥ ३० ॥ ३१ ॥ उक्तमे-

यो ब्रह्मबोधे सन्देग्धि कदा स्यात्तस्य निश्चयः॥३२॥
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥
इत्युक्ताः प्रतिबन्धस्य सूचकाः संशयादयः ॥ ३३ ॥
यो जानाति श्रद्दधाति निश्चिनोति च शास्त्रतः ॥
प्रतिबन्धो न तस्यास्ति मादृशस्य कदाचन ॥ ३४ ॥
प्रतिबन्धविहीनस्य ज्ञानेनाज्ञाननाशनम् ॥
दृष्टं फलं विजानीयात्तृप्तिर्भोजनतो यथा ॥ ३५ ॥
लभ्यमाने दृष्टफले कृत्स्नकर्माननुष्ठितेः ॥
नाधिकारो निवार्योऽत्र जिज्ञासोर्मुक्तिकामिनः॥३६॥
ननु मानादविज्ञाता विमुक्तिः काम्यते न हि ॥
ज्ञातायां स्वात्मरूपत्वात्सुतरां नास्ति कामना ॥३७॥
न युक्तं कामना मुक्तौ पुंसां नास्तीति भाषितुम् ॥

---

वार्थं पुनः सङ्ग्रहेण दर्शयति *कादाचित्कमित्यादिना ॥ ३२ ॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ज्ञानस्य दृष्टफलत्वे फलितमाह * लभ्यमानमिति ॥ ३६ ॥ ननु ज्ञानाधिकारिणो मोक्षकामना विशेषणं, सा चाज्ञाते वा मोक्षे स्याज्ज्ञाते वेति शङ्कते *नन्विति ॥ आद्यं प्रत्याह * मानादिति ॥ अनुभूते कामनेति स्थितेरित्यर्थः ॥ द्वितीयं निराह *ज्ञातायामिति ॥ आत्मरूपत्वेन ज्ञाता मुक्तिरात्मत्वान्न कामनामर्हति । अप्राप्ते स्मर्यमाणे कामनासम्भवादिति भावः ॥ ३७ ॥ न खल्वात्मनो ब्रह्मत्वलक्षणा मुक्तिरज्ञाता स्वप्रकाशत्वात् । नापि ज्ञानोदयात् प्राक् मानतो ज्ञाता मानान्तराविषयत्वात्, अतश्च सामान्यरूपेण ज्ञाते मानतश्चाज्ञाते मोक्षे कामना सम्भवतीति परिहरति *न युक्तमिति ॥

देशकालानवच्छिन्नसुखाद्यर्थित्वदर्शनात ॥ ३८ ॥
प्रीत्युत्कर्षो नरैर्लोके काम्यमानोऽभिवीक्ष्यते ॥
दृष्टादृष्टार्थसम्बन्धिविषयेष्वविशेषतः ॥ ३९ ॥
नान्यत्र परमानन्दादुत्कर्षः पर्यवस्यति ॥
परमानन्दरूपा हि विमुक्तिः श्रुतिसम्मता ॥ ४० ॥
आत्यन्तिकसुखप्राप्तिदुःखविच्छेदकाङ्क्षिणः ॥
अर्थतो मुक्तिमेवामी कामयन्ते ऽखिला जनाः ॥४१॥
स्वर्गादिकाम्यपि जनो मुक्तिं कामयते खलु ॥
मुक्तिं कामयमानोऽन्यत्कटाक्षेणापि नेक्षते ॥ ४२ ॥
तत्र साधनसाध्यत्वान्नाशि स्वर्गादिकं सुखम् ॥
अभिव्यञ्जकतन्त्रस्तु मोक्षस्तेनाक्षयो मतः ॥ ४३ ॥
ननु नाशिसुखप्राप्तिः पुमर्थो नेष्यते यतः ॥

---

किंच "निरवधिकसुखं मे स्यात्कदापि दुःखं मा भूत्"इति सर्वप्राणभृतां प्रार्थना प्रतीयते । सा चानवच्छिन्नानन्दाशेषानर्थोच्छेदात्मनि मोक्षेऽर्थात्पर्यवस्यतीत्याह *देशेत्यादिना ॥ ३८ ॥ ॥ ३९ ॥ ४० ॥ ननु स्वर्गकामस्यापि मुमुक्षुत्वे कर्मज्ञानयोरधिकारभेदो न स्यादित्याशङ्क्य तत्कामनाया अर्थान्मोक्षविषयत्वेऽपि मुमुक्षुः स्वर्गादिकं न वाञ्छतीति भेदमाह * मुक्तिमिति ॥ ४१ ॥ ४२ ॥ स्वर्गकामनाया एव मोक्षकामनात्वे स्वर्गस्यापि नित्यत्वं स्यादित्याशङ्क्य अखण्डब्रह्मसुखस्यापि विषयसम्पर्कजन्यवृत्तिविशिष्टत्वेन जातस्यैव स्वर्गशब्दार्थत्वान्मैवमित्याह * तत्रेति । मुक्तेस्तद्वैलक्षण्यमाह * अभिव्यञ्जकेति ॥ ४३ ॥ स्वर्गशब्दस्य वृत्तिविशिष्टसुखलेशवाचित्वमसृष्यमाणः शङ्कते * नन्विति । प्रेक्षावत्कामनाया मोक्षेतरतु-

तृष्णया साधयन्प्रीतिं न प्रीतिलवमिच्छति ॥ ४४ ॥
न हि प्रीतेरियत्तायाः स्वर्गशब्दोऽस्ति वाचकः ॥
परमानन्दरूपेण स्वर्गशब्दार्थलक्षणात् ॥ ४५ ॥
यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ॥
अभिलाषोपनीतञ्च सुखं स्वर्गपदास्पदम् ॥ ४६ ॥
तस्मात्स्वर्गस्य मोक्षत्वादग्निहोत्रादिकर्मणाम् ॥
मोक्षसाधनतैवेति मतं चेत्तन्न युज्यते ॥ ४७ ॥
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥
इत्यादिशास्त्रतः कर्मफलेयत्ताऽवधार्यते ॥ ४८ ॥
यत्रापि स्वर्गशब्देन न विशेषोऽवधारितः ॥

---

च्छसुखाविषयत्वे हेतुमाह * यत इति ॥ तृष्णया प्रेरितः प्रीतिं सम्पादयन्नल्पामापादयितुं यतो नेच्छति ततः स्वल्पप्रीतेर्नेष्यमाणतेत्यर्थः ॥ ४४ ॥ ननु स्वर्गकामवाक्ये स्वर्गशब्दस्याल्पतरसुखविशेषवाचित्वात्कथं तस्य मोक्षवाचित्वमित्याशङ्क्याह *न हीति । प्रीतेरियत्ता परिमाणं तस्य स्वर्गशब्दो न वाचकः इयत्तापरिच्छिन्नप्रीतिविशेषाणामानन्त्यात्, तत्र शक्तेरयोगात्सामान्यगृहीतशक्तेरविशेषितसुखमात्रवाचित्वादपवर्गस्य च तावन्मात्रत्वाद्युक्तं स्वर्गशब्दस्यापवर्गैकवाचकत्वमित्यर्थः । अर्थवादोक्तस्वर्गशब्दार्थस्वरूपपर्यालोचनयाऽपि तस्य मोक्षवाचित्वमित्याह * परमेति । स्वर्गपदस्य मोक्षवाचित्वे फलितमाह * तस्मादिति ॥ ४७ ॥ स्वर्गपदस्यैव वा इयत्तानवच्छिन्नप्रीतिवाचित्वं कर्मफलवाचिपदमात्रस्य वा । नान्त्यः, कर्मफलविशेषे इयत्ताश्रवणादित्याह *सप्तेति ॥ ४८ ॥ आद्यं प्रत्याह *यत्रापीति *शास्त्रान्तरेणेति । क्रतुफलस्यापीन्द्राद्यान-

शास्त्रान्तरेण तत्रापि सविशेषोऽवधार्यताम् ॥ ४९ ॥
तृष्णया साधकः प्रीतिलवमन्यत्र वाञ्छति ॥
पशुवृष्ट्यादिकामानां भूयसामिह दर्शनात् ॥ ५० ॥
अनर्थकोऽन्यथा चित्राकारीर्यादिविधिर्भवेत् ॥
स्वर्गलक्षणमप्यस्ति सोमलोकादिभूमिषु ॥ ५१ ॥
कृष्यादिवत्कर्मजन्यस्वर्गस्य क्षयसंश्रवात् ॥
न मोक्षरूपता तस्मात्कर्म त्याज्यं मुमुक्षुणा ॥ ५२ ॥
प्रत्यक्षश्रुतिविध्यन्तविहितानामकारणात् ॥
त्यागेऽतिसाहसं मन्ये ननु यागादिकर्मणाम् ॥ ५३ ॥
प्रत्यक्षोपनिषद्वाक्यविहितायास्ततोऽपि च ॥

---

न्दस्य शतगुणतारतम्यादिवाचिनेत्यर्थः ॥ ४९ ॥ यदुक्तं तृष्णया साधयन्नित्यादि तद् दूषयति * तृष्णयेति । अन्यत्र, मोक्षादिति शेषः ॥ ५० ॥ यदुक्तं यन्न दुःखेनेत्यादिना स्वर्गशब्दस्य मुक्तिवाचित्वमिति तत्प्रत्याह * स्वर्गेति । सोमलोकादिषु, जायमानसुखस्येति शेषः । न च सोमलोकादेरनित्यत्वान्न च ग्रस्तमनन्तरमिति कथमिति शङ्क्यम् । मानुष्यसुखवत्क्षणिकं न भवतीत्येवंपरत्वात्तस्येति ॥ ५१ ॥ "यत्कृतकं तदनित्यम्" इति व्याप्त्या कर्मजन्यत्वे मोक्षस्यानित्यत्वं दुर्वारमित्याह *कृष्यादिवदिति । स्वर्गमोक्षयोर्भेदे फलितमाह *तस्मादिति ॥ ५२ ॥ अर्थवादवाक्येभ्यो विधिवाक्यस्य बलीयस्त्वात्कर्मणोऽपि मुक्तिहेतुत्वमिति शङ्कते *प्रत्यक्षेति ॥ विधिरेव विध्यन्तः "यावज्जीवमग्निहोत्रं जुहुयात्" इत्यादिः । स च प्रत्यक्षश्रुतिषु दृष्टस्तेन विहितानामग्निहोत्रादीनां विना हेतुं त्यागस्य साहसमात्रत्वात्कर्मसमुच्चितज्ञानाधीनो मोक्ष इत्यर्थः ॥५३॥

ऐकात्म्यज्ञाननिष्ठायास्त्यागोऽतीव हि साहसम्॥५४॥
विचार्यमाणे यत्नेन कर्मत्यागस्य सम्भवात् ॥
न किं चित्साहसं त्वस्ति प्रत्यक्श्रुतिवाक्यतः ॥५५॥
तस्मात्सिद्धोऽधिकारोऽत्र ब्रह्मरूपं विविक्षतः ॥
जिज्ञासोरेव कर्तुस्तु न सिषाधयिषोरिति ॥ २५६ ॥

इति वार्तिकसारे ऽधिकारिपरीक्षाप्रथमप्रकरणं
समाप्तम् ॥

शमादिवाक्ये विरक्तस्य संन्यासो विहितः । तस्यैव श्रोतव्यादिवाक्ये श्रवणाद्यावृत्त्या ब्रह्मनिष्ठोक्ता, तस्यास्त्यागः समुच्चयपक्षे स्यात् । न चानेकोपनिषत्प्रसिद्धस्य त्यागो युक्तः, कर्मत्यागादपि तत्त्यागस्यातिसाहसत्वात् । तस्मादैकात्म्यज्ञानमात्रं मोक्षहेतुरिति सिद्धान्तयति * प्रत्यक्षोपनिषदिति ॥ ५४ ॥ वस्तुतस्तु "त्यागेनैके अमृतत्वमानशुः" "ब्राह्मणो निर्वेदमायात्" "यदि वेतरथा" "ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिश्रुतिशतेभ्यः संन्यासविधानात्कर्मतत्त्यागयोर्विरक्ताविरक्तविषयत्वेन व्यवस्थासम्भवाच्च साहसशङ्कैव नास्तीत्याह * विचार्येति ॥ ५५ ॥ परमप्रकृतमुपसंहरति * तस्मादिति * विविक्षत इति । प्रवेष्टुमिच्छत इत्यर्थः ॥ २५६ ॥

इति वार्तिकसारव्याख्यायाम् अधिकारिपरीक्षा-
प्रथमप्रकरणं समाप्तम् ॥

---

सिद्धेऽधिकारे वेदान्तसम्बन्धोऽथाभिधीयते ।
असम्बन्धे तु शास्त्रेऽस्मिन्नधिकार्यप्रवृत्तितः ॥ १ ॥
तस्यास्य कर्मकाण्डेन सम्बन्धं श्रुतिरब्रवीत् ॥
तमेतामिति वाक्येन साध्यसाधनलक्षणम् ॥ २ ॥
वेदानुवचनं यज्ञस्तपो दानमनाशकम् ॥
आत्मतत्त्वे विविदिषां जनयन्तीति हि श्रुतम् ॥३॥
वेदानुवचनादीनामैकात्म्यज्ञानवाञ्छने ॥
नित्यानां विधिरित्येवमेकं तावदिदं मतम् ॥ ४ ॥
यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ॥
वेदः स्यात्सर्व एवात ऐकात्म्यज्ञानसिद्धये ॥ ५ ॥
प्लवा ह्येते यज्ञरूपा अदृढा इति निन्दनात् ॥
काम्यैर्विविदिषोत्पत्तिर्नेति चेन्न विधानतः ॥ ६ ॥

---

पूर्वोत्तरग्रन्थयोः सङ्गतिमाह * सिद्ध इति । अधिकारविचारानन्तरं सम्बन्धविचारे हेतुमाह * असम्बन्ध इति । कर्मानुष्ठानानन्तरमेव ज्ञाने प्रवृत्तिनियमस्तयोः सम्बन्धं विना न घटत इति तद्द्वारा काण्डयोरपि सम्बन्धो वक्तव्य इत्यर्थः ॥ १ ॥ * तस्यास्येति । वक्तव्यसम्बन्धस्य ज्ञानकाण्डस्येत्यर्थः ॥ २ ॥ तमेतमितिवाक्यमर्थतः पठन्नुक्तसम्बन्धं व्यनक्ति * वेदेति ॥३॥ ॥ ४ ॥ नित्यनैमित्तिकानामेव विविदिषाहेतुत्वं यज्ञेनेत्यादिवाक्येनोच्यते इति मतमुक्त्वा यज्ञेनेत्यविशेषश्रुतेः काम्यानामपि कर्मणां विविदिषाद्वारा विद्याहेतुत्वमिति मतान्तरमाह * यद्वेति ॥ ५ ॥ निन्दाश्रुतेः काम्यानां कार्यतैव नास्ति कुतस्तु धीहेतुत्वमिति शङ्कते * प्लवा इति । काम्यानामकार्यत्वं न युक्तं विहितत्वादिति परिहरति * न विधानत इति ॥ ६ ॥ नि-

काम्यान्यपि विधीयन्ते विधिभिर्नित्यकर्मवत् ॥
काम्यैश्चातोऽस्ति धीशुद्धिः फलासक्तिस्तु निन्द्यते॥७॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ॥
इत्यादि कृष्णगीतायामुक्तमासक्तिवर्जनम् ॥ ८ ॥
आसक्त्या दुष्टचित्तस्य कर्मजा शुद्धिरप्यसौ ॥
भोगायैवोपयुक्ता स्यान्न विवेकाय कर्हिचित् ॥ ९ ॥
विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते पदम् ॥
अतो भोगोऽपि तां शुद्धिं स्वसिद्ध्यर्थमपेक्षते ॥१०॥
अनासक्तौ तु भोगोऽयं प्राप्नोति न विरुध्यते ॥
नित्यकर्मस्विवैतेषु शुद्धिप्राधान्यसम्भवात् ॥ ११ ॥
नित्येषु शुद्धेः प्राधान्याद्भोगोऽप्यप्रतिबन्धकः ॥
भोगं भङ्गुरमीक्षन्ते बुद्धिशुद्ध्यनुरोधतः ॥ १२ ॥
कर्मणा पितृलोकः स्यादित्येवं नित्यकर्मणाम् ॥
फलं श्रुतं तथाप्येतैर्वेदनेच्छाऽपि जायते ॥ १३ ॥
यस्याकृतौ प्रत्यवायस्तन्नित्यं काम्यमन्यथा ॥

---

न्दावचनस्य तर्हि का गतिः ? तत्राह *फलेति। ब्रह्मार्पणबुद्ध्याऽनुष्ठितानां काम्यानामपि कर्मणां विविदिषाहेतुत्वमित्यर्थः ॥ ७ ॥ ८ ॥ अथासक्तिपूर्वकृतानामपि कर्मणां विहितत्वाच्छुद्धिजनकत्वमप्यस्तीत्याशङ्क्य तथापि तज्जन्या शुद्धिरासक्त्या प्रतिबद्धत्वाद्विवेकाय नालमित्याह * आसक्त्येति ॥ ९ ॥ विवेकाजनकत्वे सा शुद्धिर्वृथेति नेत्याह * विड्वराहेति ॥ १० ॥ अनासक्त्या तु कृतानां काम्यानां नान्तरीयकभोगहेतुत्वेऽपि शुद्धिहेतुत्वमाह * अनासक्ताविति ॥११॥ नित्यकर्मस्विवेत्युक्तं दृष्टान्तं प्रकटयति * नित्येष्विति ॥ १२ ॥ १३ ॥ सर्वकर्मणा-

इत्थं सकाम्यनित्यानां ज्ञानेच्छाहेतुता स्थिता॥१४॥
अभिचारादिकाम्यं तु विहितत्वेऽपि निन्दितम् ॥
फलदोषेण दुष्टत्वाज्ज्ञानार्थत्वं न तस्य हि ॥ १५ ॥
काम्यं ससङ्गं ज्ञानाय यदि नालं तथापि च ॥
पुंसां वैराग्यहेतुत्वादुपकार्येव तन्मतम् ॥ १६ ॥
असह्यदुःखफलतः स्वकार्यविनिवृत्तिकृत् ॥
विरक्तिहेतुः कर्म स्यात्प्रतिषिद्धं यथा तथा ॥ १७ ॥
अपि काम्यं कृतं सर्वं दुःखात्मकफलत्वतः ॥
आविरिञ्च्यात्स्वकार्येभ्यः स्यादेव विनिवृत्तये ॥१८॥
उपासनं तु यत्किञ्चिद्विद्याप्रकरणे श्रुतम् ॥

---

मासक्तिशून्यानां ज्ञानहेतुत्वेऽहि नित्यकाम्यविभागः कथम् ? इत्याशङ्क्याह * यस्येति। अकृतौ अकरणे ॥१४॥ * फलदोषेणेति। श्येनादीनां हिंसाफलकत्वाद्धिंसायाश्च निषिद्धत्वान्निषिद्धफलकानां तादृशानां न ज्ञानहेतुत्वमित्यर्थः ॥ १५ ॥ तेषां ज्ञानहेतुत्वे कर्मकाण्डैकदेशस्य ज्ञानकाण्डसम्बन्धेऽपि न कृत्स्नस्य तेन सङ्गतिरित्याशङ्क्य, तेषामपि परम्परयोपकारित्वमाह *काम्यमिति। ससङ्गं दुष्टफलकम् ॥ १६ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति *असह्येति। यथा निषिद्धं हननादिकर्म श्वशूकराद्याप्तिरूपदुःसहफलत्वान्निषेधशास्त्रार्थज्ञानवतस्ततो वैराग्यहेतुतया स्वयमननुष्ठीयमानं स्वफलात्पुंसो निवर्त्तकं, तथा श्येनाद्यपि परम्परया दुःखहेतुत्वाद्वैराग्यहेतुरित्यर्थः ॥१७॥ नित्यनैमित्तिकानामेव धीहेतुत्वपक्षे सर्वेषामपि काम्यकर्मणामेवमेवोपकारित्वमित्याह * अपीति। काम्यकर्मफलादेवत्वादेरपि विवेकिनो विरक्तिर्घटते तस्यानित्यत्वादिबहुदोषदुष्टत्वादिति भावः ॥१८॥ * एवं

तदप्यैकात्म्यविज्ञानयोग्यत्वायैव कल्प्यते ॥ १९ ॥
चित्तस्यैकाग्र्यजननाद् ब्रह्मलोकाप्तितोऽथवा ॥
ज्ञानएवोपासनानि पर्यवस्यन्ति सर्वथा ॥ २० ॥
एवं चाखिलवेदस्य वेदनार्थत्वकारणात् ॥
श्रुतं विविदिषार्थत्वं यज्ञदानादिकर्मणाम् ॥ २१ ॥
यद्वा कर्माणि पुरुषं संस्कुर्वन्ति स्मृतेर्बलात् ॥
अष्टाचत्वारिंशदिति स्मृतिः संस्कारवादिनी ॥२२॥
यस्यैतदुक्तसंस्काराः सम्पद्यन्ते यथाविधि ॥
स ब्रह्मणः सलोकत्वं सायुज्यं वा समाप्नुयात् ॥२३॥
विशेषः को विविदिषौ संस्कृते वेति चेच्छृणु ॥
अवश्यं भाविनी सिद्धिराद्येऽन्यत्र तु पाक्षिकी॥२४॥

---

चेति । एवमुक्तप्रकारेण वेदोदितसकलकर्मणां ज्ञाने विनियोगसम्भवाद्यज्ञादिकर्मणां विविदिषाद्वारा ज्ञाने हेतुत्वं विविदिषावाक्ये श्रुतम्, उपपद्यत इति शेषः ॥१९॥२०॥२१॥ एवं विविदिषाद्वारा कर्मणां ज्ञानहेतुत्वमुक्त्वा तेषां संस्कारद्वारा तद्धेतुत्वमिति पक्षान्तरमाह *यद्वेति । "गर्भाधानादयः सहधर्मचारिणीसंयोगान्ताश्चतुर्दश, पञ्चमहायज्ञाः, सप्तहोमसंस्थाः, सप्तहविःसंस्थाः, सप्तपाकसंस्थाः, एते मिलित्वा चत्वारिंशत्, अनश्नन्संहिताध्ययनं, प्रायणं, कर्मजपः, उत्क्रामणं, दैहिकं, भस्मसमूहनं, अस्थिसञ्चयनं, श्राद्धानि, एतेऽष्टौ । यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाः स ब्रह्मणः सायुज्यं सलोकतामाप्नोति" इति स्मृतिं तत्र प्रमाणयति * अष्टेति ॥ २२ ॥ २३ ॥ पक्षद्वयेऽपि कर्मणां ज्ञानार्थत्वेऽपि द्वारभेदादवान्तरफलभेदमाकाङ्क्षापूर्वकं दर्शयति *विशेष इत्यादिना ॥ २४ ॥ अखिलसाधनं श्रवणतत्साधन-

जाता विविदिषाऽवश्यं सम्पाद्याखिलसाधनम् ॥
स्वफलं जनयेदाशु बुभुक्षादिर्यथा तथा ॥ २५ ॥
प्रतिबन्धकपाप्मानं नाशयेच्चित्तसंस्कृतिः ॥
साधनानि तु बोधस्य सम्पाद्यानि प्रयत्नतः ॥ २६ ॥
वर्णाश्रमादिशास्त्रेण प्रेरितोऽकरणे भयम् ॥
पश्यन्करोति यत्कर्म तत्संस्कारकमुच्यते ॥ २७ ॥
तमेतमिति वाक्येन प्रेरितो बोधवाञ्छया ॥
अन्तर्यामिण्यर्पयेद्यत्तत्स्याद्विविदिषाकरम् ॥ २८ ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २९ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः
इत्थं विविदिषाकारि कर्म कृष्णेन वर्णितम् ॥ ३० ॥
आश्रमार्थप्रयुक्तानां कर्मणामीश्वरार्पणम् ॥
कार्यं पृथक्प्रयोगस्तु नेति सूत्रकृदब्रवीत् ॥ ३१ ॥
वाक्याद्वेदनसौन्दर्यबोधाद्विविदिषाजनिः ॥

---

गुर्वादिकम् ॥ २५ ॥ २६ ॥ यावज्जीवादिविधिप्रयुक्त्या ऽकरणे प्रत्यवायभिया ऽनुष्ठितकर्मणां संस्कारहेतुत्वं, विविदिषावाक्यप्रयुक्त्या ब्रह्मार्पणबुद्ध्याऽनुष्ठितकर्मणां विविदिषाहेतुत्वमिति प्रयुक्तिभेदमप्याह * वर्णेत्यादिना ॥२७॥२८॥२९॥३०॥

यावज्जीवादिवाक्यविहिताग्निहोत्रादीनामाश्रमार्थत्वेन कृतानामेवेश्वरार्पणं कार्यं न ज्ञानार्थत्वेनापि पृथक्कार्यमित्यत्र व्याससम्मतिमाह *आश्रमेति ॥ "विहितत्वाच्चाश्रमकर्मापि" इति सूत्रेणामुमुक्षूणामपि तत्तदाश्रमकर्माण्यनुष्ठेयानीत्युक्त्वा "सहकारित्वेन च" इत्युत्तरसूत्रेण तेषामेव विद्याहेतुत्वमुक्तवानित्यर्थः॥३१॥

विषयसौन्दर्यमात्रलभ्यत्वादिच्छायाः कथं कर्मसाध्यत्वमित्याश-

यद्यप्यथाप्यात्मबोधे सम्पाद्या कर्मणा रुचिः ॥ ३२ ॥
दुग्धे पित्तवतोऽस्तीच्छा रुचिर्नास्ति ततोऽनयोः ॥
रुचीच्छयोर्महान्भेदो रुचिर्विविदिषाऽत्र हि ॥ ३३ ॥
महापापवतां नृणां ज्ञानयज्ञो न रोचते ॥
इति पौराणिकाः प्राहुः पुण्यसाध्या ततो रुचिः ॥ ३४॥
रुचिद्वारोपकुर्वन्ति कर्माण्यात्मविमुक्तये ॥
अज्ञानस्याविरोधित्वान्न साक्षादात्मबोधवत् ॥ ३५॥
अविद्याया न चोच्छित्तौ ज्ञानादन्यदपेक्ष्यते ॥
ज्ञानोत्पत्तौ न चैवान्यच्छमादिभ्यो ह्यपेक्ष्यते ॥ ३६॥
शमाद्युत्पत्तये नान्यद् बुद्धिशुद्धेरपेक्ष्यते ॥
बुद्धिशुद्धौ च नित्यादिकर्मभ्यो नान्यदिष्यते ॥ ३७ ॥
पारम्पर्येण कर्मैव वेदनायोपयुज्यते ॥
साधनं कर्म तेनैतत्साध्यं ब्रह्मात्मवेदनम् ॥ ३८ ॥
इत्येवमभिसम्बन्धः कर्मविज्ञानकाण्डयोः ॥
इतोऽन्यथाऽभिसम्बन्धे न किंश्चिन्मानमीक्ष्यते ॥३९॥

---

ष्य तस्यास्तदसाध्यत्वेऽपि ज्ञाने रुचिः कर्मभिः साध्यत इति तयोर्भेदमाह *वाक्यादित्यादिना । "तरति शोकमात्मवित्" इत्यादिवेदनसौन्दर्यबोधकवाक्यादित्यर्थः ॥ ३२ ॥ कर्मणां परम्परया मुक्तिहेतुत्वमुपपाद्य तेषां साक्षान्मुक्तिहेतुत्वपक्षं दूषयति * अज्ञानस्येति । आत्मबोधवन्नोपकुर्वन्तीत्यनुषङ्गः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ये तु कामप्रविलयनेन वा प्रपञ्चविलयनेन वा सोपानमार्गगत्या वा ज्ञानकर्मसमुच्चयेन वा काण्डद्वयस्य सम्बन्धं वदन्ति तेषां मतमप्रामाणिकत्वादनादेयमित्याह * इतोऽन्यथेति ॥ ३९ ॥

अन्ये त्वाहुर्न शक्नोति कामसन्दूषिताशयः ॥
द्रष्टुं परममद्वैतं सर्वकामासमाप्तितः ॥ ४० ॥
कर्मभिर्विविधैर्धीमान् सविराडाद्युपासनैः ॥
वैराजान्तं फलं भुक्त्वा तदैकात्म्यं प्रपद्यते ॥ ४१ ॥
सर्वभोगोपभोगेन कृत्स्नकामलयाध्वना ॥
यान्ति मुक्तेरानुगुण्यं कर्माणि निखिलान्यपि ॥ ४२ ॥
ब्रह्मानन्दः श्रुतोऽप्यत्र साक्षादविषयीकृतः ॥
दृष्टानन्दाभिलाषं स न मन्दीकर्तुमप्यलम् ॥ ४३ ॥

---

तदप्रामाणिकत्वं स्पष्टयितुं तत्राद्यपक्षमुत्थापयति * अन्ये त्विति । कामध्वस्तेर्ज्ञानाधिकारहेतुत्वं साधयति * नेत्यादिना । अन्वयव्यतिरेकाभ्यां कामध्वस्तेरात्मधीहेतुत्वासिद्धिरित्यर्थः ॥ ४० ॥ ४१ ॥ अस्तु तर्हि प्रथममेव कामध्वस्त्या ज्ञानाधिकार इत्याशङ्क्याह * सर्वभोगेति । सर्वे कामाः स्वर्गादयस्तद्भोगसमाप्तौ तेभ्यो रागपरावृत्तिः नत्वादावेव तदप्राप्तेस्तद्भोगस्य तेभ्यो रागध्वस्तिहेतोरसत्त्वादित्यर्थः। तर्हि स्वर्गादीनामादावेवाप्तिद्वारा कामध्वंसोऽपि स्यादत आह *कर्माणीति । दर्वीहोममारभ्य सत्रान्तानि कर्माणि विराट्सूत्रोपासनासहितैर्मनुष्यत्वमारभ्य सूत्रान्तं फलं क्रमेण प्राप्य सौत्रान् भोगान् भुक्त्वा तद्देहमानी सन् तदन्यानुपभुक्तकामयितव्यकर्मफलाभावात्सर्वतो निवृत्तकाम आत्मरूपमनुभवति एवं कर्मणां कामलयमुखेन धीहेतुत्वे द्वारं प्राजापत्यपदमित्यर्थः ॥ ४२ ॥ ननु श्रुतो ब्रह्मानन्द एव रागं निरुन्ध्यात् किं तत्प्रविलयनेन? अत आह * ब्रह्मेति । स श्रुतोऽप्यननुभूतः नानुभूतसजातीयफलरागप्रसरं मन्दीकर्तुमपि पारयति ॥ ४३ ॥ भोगस्य राग-

कामप्रविलयायातो विधयः कर्मकाण्डगाः ॥
प्रलीनकामो विज्ञानकाण्डे ऽधिक्रियते पुमान् ॥ ४४ ॥
नैवं न कामसम्प्राप्त्या तन्नाशोऽब्दशतैरपि ॥
तत्सेवातो विवृद्धिः स्यान्निवृत्तिर्दोषदर्शनात् ॥ ४५ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ॥
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥ ४६ ॥
गुणस्यादर्शनाद्दोषदृष्टेर्वा क्षीणकामनः ॥
सर्वक्लेशोपशान्त्यर्थमात्मज्ञानं समाश्रयेत् ॥ ४७ ॥
कामाश्रितो विधिः कामं दोषवन्न विलापयेत् ॥
कामुकः सन् प्रवर्तेत नात्मज्ञाने कथञ्चन ॥ ४८ ॥
उद्विजेताथवा ज्ञानात्सर्वपुम्भोगघस्मरात् ॥
तथाच रागिगीतायां पठ्यते वचनं त्विदम् ॥ ४९ ॥
अपि वृन्दावने शून्ये शृगालत्वं स इच्छति ॥
न तु निर्विषयं मोक्षं कदाचिदपि गौतम ॥ ५० ॥

---

वृद्धिहेतोर्न तन्निवर्तकत्वमिति दूषयति * नैवमिति ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ विषयेषु गुणदोषदृष्टिदृष्टिमतः श्रवणादौ प्रवृत्तिः सम्भाव्यत इत्युक्त्वा कामप्रविलयार्थं कर्मानुष्ठितंस्तत्प्रवृत्तिरेव न सम्भवतीत्याह * कामेति । "एवंकाम एतत्कुर्यात्" इति श्रूयमाणो विधिर्विषयदोषदर्शनाभावे तत्रैव पुनः पुना रागमुत्पादयतीत्यर्थः ॥ ४८ ॥ न केवलं ज्ञाने प्रवृत्त्यभावः विषयवासनाऽऽविष्टचित्तस्य वैषयिकसर्वभोगनाशकाद् ज्ञानाद्भीतश्च भवतीत्याह *उद्विजेतेति ॥४९॥ किञ्च प्राजापत्यपदस्य द्वारत्वं युक्तिबलात् श्रुतेर्वा ? नाद्य इत्याह *न

वैराजान्तं फलं भुक्त्वा मुच्येतेति यदीरितम् ॥
क्रममुक्तौ तत्तथाऽस्तु न तु सद्यो विमोचने ॥ ५१ ॥
द्वारं न नियतं मुक्तेः प्राजापत्यं पदं भवेत् ॥
न ह्युपाधिषु तत्त्वस्य विशेषः कश्चिदीक्ष्यते ॥५२॥
नाकाशस्याविशेषोऽस्ति कुम्भद्रोण्याद्युपाधिषु ॥
दूरान्तिकादिभिन्नेषु कल्पिताकल्पितेष्वपि ॥ ५३ ॥
अतः प्रजापतौ तत्त्वं कृमौ वा न विशिष्यते ॥
तर्कादागमतश्चापि तद्योय इति हीदृशात् ॥ ५४ ॥
प्रत्यबुध्यत देवानां मध्ये योऽयं स एव तत् ॥
अभवन्नान्य इत्याह श्रुतिर्वैषम्यवारिणी ॥ ५५ ॥
एको देवः सर्वभूतेष्विति चाहापरा श्रुतिः ॥
अतश्चोपाधिवैशेष्यान्नात्मतत्त्वं विशिष्यते ॥ ५६ ॥
सद्यो मुक्तिं वाञ्छतोऽतो दोषदृष्ट्या विलीयते ॥
कामोऽतः कर्मकाण्डस्य तात्पर्यं नैव तल्लये ॥ ५७ ॥
अन्ये तु मन्वते केचिद्गम्भीरन्यायवादिनः ॥
भेदस्य विलयो वेदे गम्यते कस्य चित्कचित् ॥ ५८ ॥

---

हीति तर्कादित्यन्तेन ॥ ५२ ॥ कल्पिताकल्पितेषु उत्पन्नोत्पत्स्यमानेषु ॥ ५३ ॥ द्वितीयं प्रत्याह * आगमत इति । न विशिष्यत इत्यनुषङ्गः ॥ ५४ ॥ प्रपञ्चविलयद्वारा कर्मकाण्डस्येतरशेषत्वमिति मतमुत्थापयति * अन्ये त्विति । प्रपञ्चाभावपरत्वे शास्त्रस्य प्रपञ्चो नास्तीत्येतावता ऽलं किं बहुवाक्येनात आह * भेदस्येति । निषेध्यबाहुल्यान्निषेधकवेदस्यापि युक्तं तथात्वमिति भावः ॥ ५८ ॥ कर्मविधयस्तत्कार्यतां

देहात्मभावविलयः स्वर्गकामपदे खलु ॥
देहाद्भिन्नोऽधिकार्यत्र स्वर्गभोग्यवगम्यते ॥ ५९ ॥
रागाद्युत्थप्रवृत्तीनां निषेधेषु लयोऽञ्जसा ॥
विधिष्वपि लयस्तासां कार्यान्तरवियोगतः ॥ ६० ॥
लोकेऽपि चानभिप्रेतात्पथः साक्षान्निवारणम् ॥
मार्गान्तरोपदेशाद्वा वेदेऽप्येवं प्रतीयताम् ॥ ६१ ॥
एवं रागादिहेतूत्थप्रवृत्तिलयवर्त्मना ॥
आत्मज्ञानाधिकारार्था निःशेषविधयः स्थिताः ॥६२॥

---

बोधयन्ति न प्रपञ्चाभावमत आह *देहेति॥ ननु यागस्य स्वर्गसाधनत्वपरमिदं न कस्यचिल्लयपरमित्याशङ्क्याह *देहादिति। अत्र कालान्तराधिगतस्वर्गभोगशक्तोऽधिकारी सिद्धः, स च देहाद्भिन्नो, देहस्यात्रैव भस्मीभूतस्य तद्भोगायोगात्, अतो देहात्मलये प्रमातव्ये तत्रैव वाक्यतात्पर्यं, यागस्य स्वर्गसाधनत्वं तु देवताधिकरणन्यायेनान्यपरादपि वाक्याच्छक्यं प्रमातुमिति भावः॥५९॥ काम्यविधीनां लयपरत्वमुक्त्वा निषेधवाक्यानामपि तत्परत्वमाह * रागादीति ॥ नित्यनैमित्तिकविधीनां तात्पर्यमाह *विधिष्विति ॥ कथं तर्हि विधिनिषेधयोर्भेदः ? तत्राह *कार्येति ॥ "सायं प्रातर्जुहुयात्" इत्यादिव्यापारान्तरोक्तिमुखेन तत्काले कार्यान्तरं वारयन्तः तदभावे नित्यादिविधयः पर्यवस्यन्तीत्यर्थः ॥ ६० ॥ कल्पनालाघवात्ते ऽपि कस्मादभावमेव नाभिदधीरन्नित्याशङ्क्य ईदृशाया अपि वाक्यप्रवृत्तेर्लोकसिद्धत्वान्न दोष इत्याह * लोकेऽपीति ॥ ६१ ॥ उक्तमर्थं निगमयति *एवमिति। प्रवृत्तिलय इति देहादिलयस्याप्युपलक्षणम् । अधिकारो नियोगः । विधिशब्दो निषेधोपलक्षणम् ॥ ६२ ॥

मैवं किं भेदविलयो विधीनां फलकाङ्क्षया ॥
तात्पर्यादात्मबोधस्य हेतुत्वाद्वाऽत्र कल्प्यते ॥ ६३ ॥
नाद्यस्तावद्यतोऽशेषा न कर्मविधयः फलात् ॥
स्ववाक्यावगतात्किञ्चिदपेक्षन्ते फलान्तरम् ॥ ६४ ॥
तात्पर्यं च विधीनां स्यात्कर्मानुष्ठान एव हि ॥
अन्तरेण त्वनुष्ठानं स्वर्गादेर्वाद्यसम्भवात् ॥ ६५ ॥
श्रुतेर्विलयतात्पर्ये फलमाकस्मिकं भवेत् ॥
फलार्थे चेल्लयो न स्यान्नोभयं वाक्यभेदतः ॥ ६६ ॥
श्रुतेऽपि स्वर्गतात्पर्ये कल्पना चेल्लयेऽर्थतः ॥
तन्न प्रत्यक्षवचनाद्देहादिलयसिद्धितः ॥ ६७ ॥
साक्षाद्धस्तिनि दृष्टेऽपि न हि हस्तिपदानुमा ॥
अस्थूलादिवचः साक्षाद्देहादिप्रतिषेधकृत् ॥ ६८ ॥
नात्मबोधोऽपि भेदस्य लयाद्भवति कुत्रचित् ॥

---

किं भेदलयो विध्यपेक्षिताविनाशिफलसिद्ध्यर्थं विधिकाण्डार्थत्वेन कल्प्यते, विधेर्लयपरत्वाद्वा, लयस्यात्मधीहेतुत्वाद्वेति विकल्पयति * किमिति ॥ ६३ ॥ तत्राद्यं निरस्य द्वितीयं प्रत्याह । * तात्पर्यमिति ॥ अनुष्ठानतात्पर्यहेतुमाह * अन्तरेणेति ॥ ६५॥ लयपरत्वे बाधकमप्याह * श्रुतेरिति ॥ फलार्थे फलस्वरूपे तात्पर्यमित्यनुषङ्गः॥६६॥ श्रुतेः फलपरत्वप्रतीतावपि देहादिलये तत्कल्प्यते ऽन्यथाऽऽमुष्मिके कर्मणि पुरुषं प्रवर्त्तयितुमसामर्थ्यादिति शङ्कित्वा परिहरति * श्रुतेऽपीति ॥६७॥ देहादिलयस्य शाब्दत्वे सम्भवत्यार्थिकं न कल्प्यमित्यत्र प्राकृतदृष्टान्तमाह * साक्षादिति ॥ ६८ ॥ तृतीयेऽपीदं वक्तव्यं, किं भेदलयः साक्षादात्मज्ञानहेतुर्भेदकारणनिवर्त्तनद्वारा वा ?

अलयेऽप्युपपन्नत्वाल्लये सुप्तावनीक्षणात् ॥ ६९ ॥
गुरुशास्त्राद्यविलये बोधोऽयमुपपद्यते ॥
लयमात्रेण चेद्बोधः सुप्तौ केन निवार्यते ॥ ७० ॥
सर्पाभासलयेऽपीयं रज्जुस्तमसि नेक्ष्यते ॥
प्रत्युताभाससर्पोऽयं लीयते रज्ज्ववेक्षणात् ॥ ७१ ॥
अथ प्रपञ्चनाशेन नाश्यते भेदकारणम् ॥
नैवं न कार्यनाशेन कारणं नश्यति क्वचित् ॥ ७२ ॥
कारणं किमविद्या स्याद्वस्तु वा तत्त्वबोधतः ॥
अविद्यानाशनं तत्र प्रपञ्चविलयोऽफलः ॥ ७३ ॥
वास्तवोऽयं प्रपञ्चश्चेत्स विलाप्यो न केनचित् ॥
अन्यथा स्वात्मतत्त्वस्य विलयो नैव वार्यते ॥ ७४ ॥
किञ्च कृत्स्नस्य विलयः कर्तुं शक्यो न जन्मभिः ॥
लयस्तु जायते स्वापे स्वत एव न शास्त्रतः ॥ ७५ ॥
किञ्च भावी न चोच्छेद्यो भूतोऽप्युपरतः स्वतः ॥
प्रपञ्चो वर्त्तमानस्तु कार्यत्वान्नश्यति स्वतः ॥ ७६ ॥
किञ्च भेदलयेनैव सर्वानर्थप्रहाणतः ॥

---

नाद्यः, अन्वयव्यतिरेकव्यभिचारादित्याह * नात्मेति ॥ ६९ ॥ उक्तमेव व्यनक्ति * गुर्विति ॥ ७० ॥ जाग्रत्यन्वयव्यभिचारमाह * सर्पेति । किञ्च भेदलयस्य न बोधहेतुत्वं बोधस्यैव तद्धेतुत्वदर्शनादित्याह * प्रत्युतेति ॥ ७१ ॥ द्वितीयमनूद्य प्रत्याह * अथेति ॥ ७२ ॥ प्रपञ्चकारणमविद्येति पक्षं दूषयति * तत्त्वेति ॥ नाशनं, स्यादिति शेषः ॥ ७३ ॥ तस्य सत्यत्वे तत्कार्यप्रपञ्चस्यापि सत्यत्वनियमात्तल्लय एव न सम्भवति कुतस्तेन कारणलय इत्याह * वास्तव इति ॥ ७४ ॥

पुरुषार्थस्य संसिद्धेर्विद्यानैष्फल्यमापद्येत् ॥ ७७ ॥
अत ऐकात्म्ययाथात्म्यज्ञानादज्ञानहानतः ॥
सिद्धे पुमर्थे विलयकल्पना निष्प्रयोजना ॥ ७८ ॥
इष्टसाधनता बोध्या विधिभिः सकलैरपि ॥
अनिष्टसाधनत्वं तु निषेधैरिति हि स्थितिः ॥ ७९ ॥
सोपानपाङ्क्तिगत्येव हर्म्यपृष्ठाधिरोहणम् ॥
अशेषकर्मक्रमतोऽधिकारं केचिदूचिरे ॥ ८० ॥
संध्यावन्दनमारभ्य क्रमानुष्ठितकर्मभिः ॥
सहस्रवर्षसत्रान्तैर्ज्ञानितामधिरोहति ॥ ८१ ॥
यथैव नगराध्वस्थग्रामगत्युपदेशनम् ॥
नगराध्वोपदेशस्य शेषत्वं प्रतिपद्यते ॥ ८२ ॥
तथैव मोक्षमार्गस्थस्वर्गादिगतिभाषणम् ॥
मोक्षमार्गोपदेशस्य शेषत्वं किं न गच्छति ॥ ८३ ॥

---

॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ विधीनां भेदलयपरत्वाभावे कुत्र तात्पर्यम् ? अत आह * इष्टेति ॥ ७९ ॥ यथा प्रासादशिखरमारुरुक्षुः सोपानपूर्वक्रमेण तदारोहति, एवं मुमुक्षुरपि स्वर्गादिद्वारा मोक्षमारोक्ष्यति अतः स्वर्गादिहेतुसर्वकर्मानुष्ठानानन्तरं ज्ञानाधिकारितेति मतान्तरमाह * सोपानेति ॥८०॥ ॥ ८१ ॥ सोपानगमनस्य हर्म्यारोहणशेषत्वं प्रत्यक्षं, नैवं स्वर्गादिकर्मणां ज्ञानशेषत्वं प्रामाणिकमित्यत आह * यथैवेति द्वाभ्यां ॥ विमताः ज्ञेयशेषाः तदर्थिनं प्रत्युपदिश्यमानत्वाद्यदेवं तदेवं यथा नगरजिगमिषुं प्रति मार्गग्रामगत्युपदेशो नगरगतिशेष इति भावः ॥ ८२ ॥ ८३ ॥ तत्रैव पक्षान्तरमा-

यद्वोपच्छन्दनार्थानि स्वर्गादीनि विमुक्तये ॥
नगराप्त्यै तदध्वस्थग्रामादिगुणगीरिव ॥ ८४ ॥
एवं च सति दृष्टेन द्वारेणैवोपकारिणः ॥
आत्मज्ञानाधिकारस्य विधयः सकला अपि ॥ ८६ ॥
मैवं ग्रामगतेः पुंसोऽनर्थ्यत्वादस्तु शेषता ॥
स्वयमेव पुमर्थत्वात्स्वर्गादेः शेषता कथम् ॥ ८६ ॥
यदुपच्छन्दनार्थत्वं नृवाक्ये तत्समञ्जसम् ॥
वेदे तु वक्तृराहित्यादाभिप्रायाद्यसम्भवः ॥ ८७ ॥
यद्वा तत्रैव तात्पर्यं यत्रोपच्छन्द्य नीयते ॥

---

* यद्वेति । यथोपच्छन्दनेन बालं नगरं निनीषुः तं मार्गस्थग्रामेष्वन्नपानादिभोगोपकरणानि वर्णयति तथा सांसारिकसुखविलक्षणमोक्षकामिनां मुक्त्यर्थप्रवृत्तये प्ररोचनाय कर्मविधयोऽपि स्वर्गादीन्यादिश्य तद्भोगेन तत्र वैराग्यभाजो ज्ञानाधिकारितामापाद्य मोक्षे पर्यवस्यन्तीत्यर्थः * दृष्टेनेति ॥ तद्भोगानन्तरं तत्कर्मप्रवृत्तिनिरोधद्वारेत्यर्थः ॥ ८४ ॥ ८५ ॥ नगरमार्गस्थग्रामगतेर्नगरं जिगमिषोरनार्थितत्वात्तदुक्तेः स्वार्थे विफलत्वात्फलवन्नगरगत्युक्तिशेषता युक्ता, स्वर्गादेः पुमर्थत्वान्न मुक्तिशेषत्वं, तथा चोक्तानुमाने स्वार्थे फलविधुरत्वमुपाधिरित्यभिसन्धाय दूषयति * मैवमिति ॥ ८६ ॥ मुमुक्षुप्रवृत्तये प्ररोचनार्था विधय इत्युक्तं तत्प्रत्याह * यदिति ॥८७॥ वक्तुरभावेऽप्यभिप्रायमङ्गीकृत्य दूषयति * यद्वेति । यथा बालः ग्रामादिगुणोक्तेस्तत्रैव तात्पर्यं प्रत्येति नगरप्राप्त्यभिप्रायस्याज्ञातत्वान्न ज्ञाताज्ञातयोः शेषशेषिता, तद्वद्विधीनामपि स्वर्गपरत्वमेवेति भावः । तत्रैव तात्पर्यं, यतः प्रतिपत्ता प्रत्येतीति

ततश्च विधितात्पर्यं स्वर्ग एव न मोक्षणे ॥ ८८ ॥
दृष्टद्वारं च रागादिप्रवृत्तिप्रतिबन्धनम् ॥
यदि तर्हि निषेधेषु द्वारं भवतु तत्तथा ॥ ८९ ॥
विधयस्तु निरुन्धन्ति न रागं रागहेतवः ॥
वर्धयन्ते प्रत्युतामी रागं भोगप्रधानतः ॥ ९० ॥
अशेषकर्मानुष्ठानमल्पायुषि न सम्भवेत् ॥
सोपानपङ्क्तिन्यायोऽतो मन्दबुद्धिप्रकल्पितः ॥ ९१ ॥
अपरे मन्वते मोक्षे ज्ञानकर्मसमुच्चयः ॥
प्रधानगुणभावेन त्रिविधोऽसौ समुच्चयः ॥ ९२ ॥
ज्ञानं प्रधानं केषाञ्चिदन्येषां कर्ममुख्यता ॥
समप्राधान्यमुभयोरपरेषां मते स्थितम् ॥ ९३ ॥
अन्तरङ्गं यथा वस्तु नित्यप्राप्तं महाफलम् ॥
एकरूपं च विज्ञानं कस्तस्यान्यसमुच्चयः ॥ ९४ ॥
अन्तरङ्गं हि विज्ञानं प्रत्यङ्मात्रैकसंश्रयात् ॥
बहिरङ्गं तु कर्म स्याद्बाह्यद्रव्याश्रयत्वतः ॥ ९५ ॥
सत्यन्तरङ्गे विज्ञाने बहिरङ्गं न सिध्यति ॥
अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत् ॥ ९६ ॥

---

शेषः ॥ ८८ ॥ यदुक्तं प्रवृत्तिनिरोधद्वारा विधीनामुपकारकत्वमिति तदनूद्य दूषयति * दृष्टेति ॥ ८९ ॥ ९० ॥ समुच्चयपक्षं दूषयितुं तदवान्तरभेदं दर्शयति ॥ * अपर इति ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ परस्परविरुद्धत्वान्न ज्ञानकर्मणोः समुच्चय इति दर्शयितुं ज्ञानस्वरूपं तावदाह * अन्तरङ्गमिति ॥ ९४ ॥ अन्तरङ्गत्वयथावस्तुत्वनित्यप्राप्तत्वमहाफलत्वैकरूपत्वानि क्रमेणोपपादयन् तद्विरुद्धकर्मणां समुच्चयं निरस्यति * अन्तरङ्गं

यथावस्त्वात्मविज्ञानं मोहमात्राश्रयाः क्रियाः ॥
सम्यग्ज्ञाने कुतः कर्म कर्महेतूपमर्दनात् ॥ ९७ ॥
नित्यप्राप्तं च विज्ञानं प्रतीचः सन्निधेः सदा ॥
कर्मानित्यं पृथग्रूपं नित्यं चानित्यबाधकम् ॥ ९८ ॥
क्षयी कर्मार्जितो लोकः स्वराड् ब्रह्मावबोधतः ॥
लब्धे त्रैलोक्यराज्ये तु भिक्षामाद्रियते कथम् ॥९९॥
एकरूपं हि विज्ञानमेकरूपात्ममेयतः ॥
भिन्नरूपाणि कर्माणि बहुकारकसंश्रयात् ॥ १०० ॥
एकरूपस्य मोक्षस्य भिन्नरूपं न साधनम् ॥
एकरूपस्य मोक्षस्य त्वेकरूपं हि साधनम् ॥ १०१ ॥
ऐकात्म्यवस्तुयाथात्म्यबोधे जात्यादिबाधनात् ॥
न कर्म कुरुते किन्तु कृतं प्रत्युत शोचति ॥ १०२ ॥
अयथावस्तुसर्पादिज्ञानं हेतुः पलायने ॥
रज्जुज्ञानेऽहिधीध्वस्तौ कृतमप्यनुशोचति ॥ १०३ ॥
एवं च ज्ञानिनः कर्मासम्भवाज्ज्ञानकर्मणोः ॥
न सम्भवति मोक्षार्थस्त्रिविधोऽपि समुच्चयः १०४ ॥
तस्मात्कामलये भेदलये सोपानवर्त्मनि ॥
समुच्चये च सम्बन्धो न युक्तः काण्डयोर्द्वयोः ॥१०५॥
परिशेषात्पुरा प्रोक्तः साध्यसाधनलक्षणः ॥
सम्बन्धोऽत्रावगन्तव्यो ज्ञानकर्माख्यकाण्डयोः॥१०६॥
इति वार्त्तिकसारे सम्बन्धपरीक्षाप्रकरणं समाप्तम् ॥

---

हीत्यादिना ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ स्वराट् स्वानन्दतुष्टो, भवतीति शेषः ॥ ९९ ॥ एवं विरुद्धत्वात्समुच्चयं निरस्य ज्ञानानन्तरं कर्माधिकारहेतुब्राह्मण्याद्यभिमानाभावेन तत्र

सम्बन्धसिद्धौ वेदान्तप्रामाण्यं चिन्त्यतेऽधुना ॥
अप्रामाण्ये तु सम्बन्धः पूर्वोक्तः प्रविलीयते ॥ १ ॥
केचित्कार्यैकनिष्ठत्वं कृत्स्नवेदस्य मन्वते ॥
ततो ब्रह्मणि सिद्धार्थे वेदान्तानाममानता ॥ २ ॥
न प्रवृत्तिनिवृत्तिभ्यां शून्यस्य वचसो यतः ॥
क्वचिदर्थोऽत्र दृष्टोऽतो वस्तुनि स्यादमानता ॥ ३ ॥
उत्तमप्रोक्तशब्दार्थे मध्यमव्यवहारतः ॥
बालो व्युत्पद्यते तस्माद् व्युत्पत्तिरपि कार्यगा ॥४॥
शुक्लां गामानयेत्युक्ते कं चिद्गोकर्मिकां क्रियाम् ॥
कुर्वाणमपि वीक्ष्याज्ञः कुरुते कारणानुमाम् ॥ ५ ॥
ज्ञातं ध्रुवमनेनैतद्यद्गोकर्मकमीक्ष्यते ॥

---

प्रवृत्त्ययोगाच्च न समुच्चय इत्याह * ऐकात्म्येति ॥ १०० ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥

इति वार्तिकसारटीकायां सम्बन्धपरीक्षा प्रकरणं समाप्तम् ।

वेदान्तप्रामाण्यं सिद्धवत्कृत्य तस्य पूर्वकाण्डेन सम्बन्धो दर्शितः, इदानीं तदेव प्रामाण्यं दर्शयति *सम्बन्धसिद्धाविति । उक्तसम्बन्धसिद्धिनिमित्तामित्यर्थः ॥ १ ॥ पूर्वपक्षमाह * केचिदिति ॥ २ ॥ ३ ॥ पुमर्थहेतुप्रवृत्त्यजनकवस्तुबोधित्वेन निष्फलत्वाद्वेदान्तानामप्रामाण्यमुक्त्वा प्राथमिकव्युत्पत्तौ कार्यान्विते पदानां शक्तिनिश्चयादपि तदमानत्वमाह * उत्तमेति॥४॥ व्युत्पत्तिप्रकारमभिनयति * शुक्लामिति द्वाभ्याम् । * कारणानुमामिति ॥ गोकर्मकानयनप्रवृत्तिः स्वविषयज्ञानसाध्या प्रेक्षावत्प्रवृत्तित्वात् मत्प्रवृत्तिवदित्यनुमाय, ज्ञानं च वाक्यजन्यं वाक्ये सति जातत्वात्पूर्वमभावादिति निश्चित्य वाक्यस्य गोकर्मकान-

तत एतस्य वाक्यस्य गवानयनबोधिता ॥ ६ ॥
कार्यार्थएव सद्भावाद् व्युत्पत्तिपुरुषार्थयोः ॥
विधेय एव वेदार्थो न सिद्धः कोऽपि कुत्रचित् ॥ ७ ॥
मन्त्रार्थवादनाम्नां च कार्यार्थानुप्रवेशतः ॥
प्रामाण्यं न स्वतस्तस्मात्कार्ये वेदस्य मानता ॥८॥
वेदान्तानामतो वाच्यं कार्यार्थानुप्रवेशनम् ॥
प्रामाण्यं वा निषेद्धव्यमत्र प्रतिविधीयते ॥ ९ ॥
किं मेयाभावतः प्रोक्ता वेदान्तानाममानता ॥
किं वा मीमांसकम्मन्यतया कार्यैकरागतः ॥ १० ॥
न मेयाभावशङ्काऽस्ति सर्वव्याप्तिसाक्षिणः ॥
चिदात्मनोऽपलापे तु जगदान्ध्यप्रसङ्गतः ॥ ११ ॥
निःशेषमातृतद्वृत्तिजन्मनां सर्वदाऽस्ति हि ॥

---

यनपरत्वं जानातीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ कार्यस्यैव वेदार्थत्वे सिद्धबोधिमन्त्रादीनामप्रामाण्यं स्यादित्याशङ्क्य तेषां तच्छेषत्वेन प्रामाण्यमाह * मन्त्रेति ॥८ ॥ सर्ववेदस्य कार्यार्थत्वे फलितमाह * वेदान्तानामिति ॥ ९ ॥ व्युत्पत्तिफलयोरनुपपत्तिमात्रं वेदान्ताप्रामाण्यप्रयोजकमुत प्रयोजकान्तरमप्यस्ति ? नाद्यः, तस्य तुच्छत्वात्परिहरिष्यमाणत्वाच्चेत्यभिसन्धाय द्वितीयं विकल्पयति * किमिति ॥ मीमांसकम्मन्यता नाम कार्यार्थत्वं शब्दानां स्वभाव इत्यभिनिवेशः ॥१०॥ *नेति । साक्षिण एव मेयत्वादिति शेषः ॥११॥ सर्वव्यवहारसाक्षित्वमुपपादयति*निःशेषेति ॥ १२ ॥ उक्तमर्थं व्याचष्टे * लिङ्गेत्यादिना ॥ १३ ॥ १४ ॥ १५ ॥ नन्वात्मनो विकारादृते बुद्ध्यादिव्याप्तौ बुद्ध्यादेरपि विना विकारं बाह्यान्तरविषयाकारभासनं स्यात्

स्वप्रकाशात्मचैतन्यव्याप्तिर्वस्तुस्वभावतः ॥ १२ ॥
लिङ्गदेहःप्रमाताऽत्र कामाद्यास्तस्य वृत्तयः ॥
चैतन्येन वियुक्तास्ता जायन्ते न कदाचन ॥ १३ ॥
लिङ्गतद्वृत्तिसम्भूतौ सत्यां चिद्व्याप्तये न हि ॥
कश्चिद्धेतुरपेक्ष्योऽस्ति स्वव्याप्तौ कलशेष्विव ॥१४॥
आकाशवस्तुस्वाभाव्यमात्रादेव न कारकात् ॥
वियता पूर्णता कुम्भस्यैवं दृक्पूर्णता धियाम् ॥१५॥
घटदुःखादिरूपित्वं धियां धर्मादिहेतुतः ॥
निर्हेतुस्तु स्वतःसिद्धदृग्व्याप्तिर्नित्यसन्निधेः ॥ १६ ॥
बुद्धितद्वृत्तिभावस्तदभावश्चाप्यनन्यमात् ॥
यतः सिद्ध्यते सोऽर्थो ज्ञेयः सिद्धः स्वतः सदा॥१७॥
ननु प्रमाणविरहात्स्वतःसिद्धो यदीक्ष्यते ॥
वाक्यस्य बुद्धबोधित्वादप्रामाण्यं प्रसज्यते ॥ १८ ॥

---

बोद्धृत्वाविशेषादिति चेत्, नेत्याह * घटेति । बुद्धेर्घटाद्याकारभजनमदृष्टकृतं न स्वारसिकं बुद्धितद्बोध्ययोः परिच्छिन्नत्वात्, अतो युक्तं बुद्धेर्विकारद्वारा विषयाकारत्वमित्यर्थः । बुद्धेः प्रत्यगाकारभजनं तु न धर्मादिकृतमित्याह * निर्हेतुरिति । तत्र हेतुमाह * नित्येति ॥ १६ ॥ स्वतःसिद्धा दृग्व्याप्तिरित्युक्तं, दृशः स्वतःसिद्धत्वं कथमित्याशङ्क्याह *बुद्धीति ॥ बुद्धितद्वृत्तिभावाभावौ यतो भासेते सोऽर्थः सदा ज्ञेय इति सम्बन्धः । तस्य स्वप्रकाशत्वे मानान्तरानपेक्षत्वं हेतुमाह * अनन्यमादिति । स्वविषयमानं विना भानादित्यर्थः ॥ १७ ॥ बुद्ध्यादिसाक्षी कूटस्थस्वप्रकाशो वेदान्तमेय इत्युक्तं, तर्हि तत्र तेषामनुवादकत्वादप्रामाण्यमिति शङ्कते *नन्विति ॥

मैवमप्रतिबद्धत्वाच्चिदेकरसवस्तुनः ॥
तद्व्युत्पत्तेः पुरा पश्चाद्बोधो व्युत्पत्तिमात्रतः ॥१९॥
बोधाबोधौ नृभिर्दृष्टौ स्वानुभूत्यैव वस्तुनः ॥
दृष्टे चानुपपन्नत्वं किंबलादभिधीयते ॥ २० ॥
वेदान्तशास्त्रव्युत्पत्तेः पुरा कः प्रतिबुध्यते ॥
को वा व्युत्पत्तितस्तूर्ध्वं बुद्धिमान्न विबुध्यते ॥२१॥
एवं सार्वजनीनौ तौ बोधाबोधौ चिदात्मनः ॥
अपह्नोतुं कथं नाम शक्यौ स्यातां कुतार्किकैः ॥२२॥
स्वप्रकाशोऽप्यसम्बुद्धः सुप्त्यादावनुभूयते ॥
अस्वप्रकाशतायां तु सुप्त्यादिः केन सिध्यति ॥२३॥
असम्बुद्धस्तदा बोधहेतुमात्राद्यभावतः ॥
अत एव न मानेन सुषुप्त्यादिः प्रसिध्यति ॥ २४ ॥

प्रमाणविरहात्तद्विनाभावादिति यावत् ॥ १८ ॥ वाक्योत्थज्ञानात्पूर्वं "मामहं न जानामि" इति सार्वजनीनानुभवेनैव स्वप्रकाशस्याप्यज्ञातत्वान्न बुद्धबोधित्वेनाप्रामाण्यमिति परिहरति *मैवमिति । तर्ह्यज्ञातत्वेऽपि कदाचित् ज्ञानं न स्यादित्याशङ्क्य व्युत्पत्तिशब्दितश्रवणादिना अपरोक्षबोधोदयान्मैवमित्याह *पश्चादिति ॥ १९ ॥ स्वप्रकाशे कादाचित्कं ज्ञानमनाद्यज्ञानं चायुक्तमित्याशङ्क्याह * बोधेति ॥ २० ॥ नृभिर्दृष्टावित्युक्तं व्यनक्ति * वेदान्तेति ॥ २१ ॥ २२ ॥ न केवलमुक्तानुभवादेवात्मा स्वप्रकाशः किन्त्वनुभवान्तरादपीत्याह * स्वप्रकाश इति ॥ सुप्तोत्थितस्य "अस्वाप्सं न किञ्चिदवेदिषम्" इति परामर्शस्तत्कालीनस्वप्रकाशानुभवं विना न सिध्यतीत्यर्थः ॥ २३ ॥ उक्तानुभवेनात्मनः स्वप्रकाशत्वेऽपि कथमज्ञातत्वं तत्राह *असम्बुद्ध इति ॥ तदा प्रमात्राद्यभावादेव योग्यानुपलम्भात्स्वापा-

सुषुप्त्यादेश्च संसिद्धिर्मात्रादिविरहेऽपि या ॥
सा त्विहान्तरसम्बुद्धस्वप्रकाशचिदाश्रयात् ॥ २५ ॥
न चाभावप्रमाणात्सा सति मातर्यभावमा ॥
मात्राद्यभावसंसिद्धिः कथं मात्रादिपूर्विका ॥ २६ ॥
एवं सर्वव्यवहृतिप्रसाधकचिदात्मनि ॥
सति स्पष्टेऽत्र वेदान्ता मेयहीनाः कथं वद ॥ २७ ॥
सर्वमानस्वभावस्य परीक्षायां चिदात्मनि ॥
मेये कैमुतिकन्यायसिद्धा वेदान्तमानता ॥ २८ ॥
यमप्रमाय मानानि नानात्मानं प्रमिन्वते ॥
वस्तुवृत्तानुरोधेन कथं तत्राप्रमावचः ॥ २९ ॥
चैतन्यमनभिव्यज्य चेत्यं व्यञ्जयितुं न हि ॥

---

दिसिद्धिरिति मतमप्यपास्तमित्याह * अत एवेति ॥ २४ ॥ ज्ञानविरोध्यज्ञानमनुभवमाश्रित्य तत्प्रसादात्कथं सिध्यति? न हि विरोधिनः साधकत्वमाश्रयत्वं चेत्याशङ्क्याह * सुषुप्त्यादेरिति ॥ मात्राद्यभावेऽपि या स्वापमूर्च्छादेः स्फूर्तिः साऽपीह व्यवहारभूमौ भवन्ती प्रत्यग्भूताज्ञानानुभवात्मकवस्त्ववष्टम्भाद्भवति। तथाच ज्ञानविरोधिस्वापादिसिद्धिवत्तद्विरोध्यज्ञानसिद्धिरप्यनुभवादेवेत्यर्थः ॥ २५ ॥ योग्यानुपलम्भात्तत्सिद्धिर्नेत्युक्तं विवृणोति *न चेति। किंच मात्राद्यभावः स्वापादिस्तस्य स्फूर्त्तिर्न मात्रादिनिमित्ता स्वस्य स्वाभावासाधकत्वादतोऽनुभवादुक्तस्वापादिसिद्धिवदज्ञानसिद्धिरपीत्याह * मात्रादीति। न च निवर्तकस्याज्ञानाश्रयत्वायोगः, वाक्योत्थबोधस्यैव निवर्तकत्वादिति भावः ॥२६॥ साक्षिणो वेदान्तमेयत्वमुक्तमुपसंहरति * एवमिति ॥ २७॥ कैमुतिकन्यायमेव दर्शयति * यमप्रमायेति ॥२८॥

शक्नुवन्ति प्रमाणानि चैतन्यं व्यञ्जयन्त्यतः ॥ ३० ॥
प्रकाशमगृहीत्वा न प्रकाश्यं रूपमीक्षते ॥
चक्षुः, तेन प्रकाशस्य ग्रहणं रूपतः पुरा ॥ ३१ ॥
तथैव चिदभिव्यक्तिश्चेत्याभिव्यक्तितः पुरा ॥
अनात्मग्राहकैर्मानैरत आत्मा प्रमीयते ॥ ३२ ॥
चिदात्मबोधनार्थैव प्रवृत्तायाः श्रुतेश्चिति ॥
मानत्वं किमु वक्तव्यं प्रकाशग्राहिनेत्रवत् ॥ ३३ ॥
मीमांसकम्मन्यतोऽपि मानवृत्तानभिज्ञताम् ॥
तव प्रकटयत्यत्र कार्यरागे निमज्जतः ॥ ३४ ॥ ३९ ॥
मानं हि व्यञ्जकं तच्च समानं सिद्धकार्ययोः ॥
अतः सर्वस्य वेदस्य बोधकत्वात्प्रमाणता ॥ ३५ ॥
वेदान्तवचसां स्वार्थे प्रामाण्यं न विहन्यते ॥
मानलक्षणसद्भावाज्ज्योतिष्टोमादिवाक्यवत् ॥ ३६ ॥
यद्धेतुकं प्रमाणत्वं वेदान्तानां समर्थ्यते ॥
तेनैव हेतुना कर्मकाण्डस्यापि प्रमाणता ॥ ३७ ॥
वेदान्तानाममानत्वं येन वा हेतुनोच्यते ॥

---

२९॥ अमुमेव श्लोकं विवृणोति * चैतन्यमिति ॥३०॥३१॥३२॥ आलोकाद्यभिव्यक्तरूपादिग्राहिणश्चक्षुरादेः प्रथममालोकादिग्रहणवच्चिदभिव्यक्तचेत्यग्राहिमानानामपि चिदात्मबोधकत्वेऽनन्यविषयतत्त्वमादेः प्रतीचि प्रामाण्यमवश्यम्भावीत्याह * चिदात्मेति ॥३३॥ द्वितीयं पक्षमनूद्य दूषयति * मीमांसकमिति ॥ ३४ ॥ मानस्वभावमेव प्रकटयति * मानं हीति ॥ व्यञ्जकम् अज्ञातार्थबोधकम् ॥३५॥ ३६ ॥ * यद्धेतुकमिति ॥ प्रामाण्यहेतोरज्ञातज्ञापकत्वस्य तुल्यत्वात्तदपि तयोस्तुल्यमित्य-

तेनैव हेतुना कर्मकाण्डस्यापि प्रसज्यते ॥ ३८ ॥
बोधकत्वेन मानत्वं काण्डयोरुभयोः समम् ॥
अकार्यबोधेनामात्वं कर्मकाण्डेऽप्यवारणम् ॥ ३९ ॥
कार्यं कालत्रयास्पर्शि त्वदभीष्टं न तत्कचित् ॥
कर्मकाण्डेऽपि सम्भाव्यं नृशृङ्गादविशेषतः ॥ ४० ॥
अतः समीहितोपायतया वस्तवबोधनात् ॥
कर्मकाण्डस्य मानत्वं कार्ये प्रेरणया न तु ॥ ४१ ॥
तथाच वस्तुयाथात्म्यज्ञापनेन प्रमाणता ॥
वेदान्तानां कुतो न स्यात्प्रत्यक्षादौ तदीक्षणात्॥४२॥
मन्त्रादेः कार्यशेषत्वं त्वयोक्तं तत्तथैव तत् ॥
अथापि त्वदभीष्टं यत्कार्यं तन्मानवर्जितम् ॥ ४३ ॥

---

र्थः । कर्मकाण्डविरोधाज्ज्ञानकाण्डप्रामाण्यमित्याशङ्क्य वैपरीत्यापत्तेर्मैवमित्याह * वेदान्तानामिति ॥ ३८ ॥ तथापि सिद्धवस्तुमात्रबोधिवेदान्तानाममानत्वमिति शङ्कते * कार्येति । तर्हि इष्टसाधनताबोधककर्मकाण्डस्याप्रामाण्यापत्तिरित्याह * कर्मेति ॥ ३९ ॥ इष्टसाधनत्वस्यैव तदर्थत्वं वक्तुं पराभिमतनियोगं दूषयति * कार्यमिति ॥ ४० ॥ तस्माच्छ्रेयःसाधनत्वं यागादेर्बोधयतो विधेरिव वस्तुतत्त्वबोधकतत्त्वमादिवचसोऽपि प्रामाण्यमविरुद्धमित्याह * अत इत्यादिना ॥ ४१ ॥ बोधकमेव मानं न प्रेरकमित्यत्र दृष्टान्तमाह * प्रत्यक्षादाविति ॥ ४२ ॥ अपिच मन्त्रवत्सिद्धबोधिवाक्यानामपि प्रामाण्यमविरुद्धमिति वक्तुं तेषां पराभिमतकार्यशेषत्वेन प्रमाणत्वमुक्तं निरस्यति *मन्त्रादेरिति ॥४३॥ * अत इति । स्वर्गादिसाधनत्वेन कृतिसा-

अतो यदेव साध्यार्थसाधनत्वेन गम्यते ॥
वेदात्तदेव साध्यत्वात्कार्यं नान्यत्ततः पृथक् ॥ ४४ ॥
कार्यशेषोऽप्यर्थवादो न स्वार्थेऽत्यन्तमप्रमा ॥
गुणानुवादभूतार्थरूपैस्त्रैविध्यसम्भवात् ॥ ४५ ॥
विरोधे गुणवादः स्यादनुवादोऽवधारिते ॥
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ ४६ ॥
आदित्यो यूप इत्यत्र प्रत्यक्षेण विरोधतः ॥
आदित्य इव पूतत्वगुणको यूप उच्यते ॥ ४७ ॥
अग्निर्हिमस्य भेषज्यमिति लोकप्रसिद्धितः ॥
अनूद्यार्थमिमं तेन विधिं प्रत्युपयुज्यते ॥ ४८ ॥
मेधातिथिं जहारेन्द्र इत्यपूर्वार्थबोधनात् ॥
एति मात्वमिहाभावादनुवादविरोधयोः ॥ ४९ ॥
मन्त्रनाम्नोरयं न्यायो योज्यः सिद्धप्रमापणे ॥
इत्थं सिद्धाऽन्यशेषाणामपि स्वार्थे प्रमाणता ॥ ५० ॥
किमुतानन्यशेषाणां वेदान्तानां चिदात्मनि ॥
मात्वं, तेनास्ति नैवान्यन्मानमैकात्म्यबोधकृत् ॥५१॥
ननु सर्वप्रमाणानि स्वस्वमेयावभासने ॥

---

ध्यत्वेन च प्रतीयमानयागाद्यतिरिक्तं कार्यं नास्तीत्यर्थः ॥४४॥ तथाप्यन्यशेषस्य मन्त्रादेः कथं स्वार्थे प्रमाणत्वमित्याशङ्क्य अन्यपरस्यापि वाक्यस्य मानान्तरविरोधाभावे प्रतीयमानार्थे प्रामाण्यं सम्भवतीति देवताधिकरणोक्तं न्यायं वक्तुमुपक्रमते * कार्येति ॥ ४५ ॥ त्रिविधमप्यर्थवादं सोदाहरणं विशदयति * विरोधे इत्यादिना ॥४६॥४७॥४८॥ अभूतार्थवादस्यैव विधिशेषत्वेन प्रमाणत्वमुक्त्वा भूतार्थवादस्याज्ञातज्ञापकत्वेन विरोधाभावाच्च

आत्मानं व्यञ्जयन्त्यादाविति पूर्वं त्वयेरितम् ॥ ५२ ॥
बाढं चिन्मात्रमखिलैः प्रमाणैर्व्यज्यतामिति ॥
अद्वितीयात्मतत्त्वं तु वेदान्तैरेव मीयते ॥ ५३ ॥
यदप्युक्तं प्रवृत्तिं वा निवृत्तिं वा विना ऽऽगमे ॥
पुमर्थो नेति, तन्नैव मोक्षस्य पुरुषार्थतः ॥ ५४ ॥
निःशेषसुखसम्प्राप्तेः सर्वानर्थहतेस्तथा ॥
मुक्तिरेव पुमर्थः स्यात्पुम्भिर्नार्थ्यो ऽतथाविधः ॥५५॥
कृत्स्नेष्टार्थस्य सम्प्राप्तिः कृत्स्नानर्थहतिस्तथा ॥
आत्मस्वरूपान्नान्यत्र सम्भाव्येते प्रमाणतः ॥ ५६ ॥
व्युत्पत्तिरपि कार्येऽर्थे नियन्तुं नैव शक्यते ॥
पुत्रस्ते जात इत्यादौ सिद्धे व्युत्पत्तिरीक्ष्यते ॥ ५७॥
श्रोतुर्मुखविकासेन वाक्यार्थं हर्षकारणम् ॥
निश्चित्य तद्विशेषं तु पश्चाद् व्युत्पद्यते शनैः ॥५८॥
न च सिद्धार्थवाक्यस्य लोके स्यादपुमर्थता ॥
पुत्रजन्म श्रुतवतः पितुरानन्ददर्शनात् ॥ ५९ ॥

---

स्वार्थे मानतामाह * मेधेति ॥४९॥५०॥५१॥ वेदान्तैकवेद्यत्वे ब्रह्मणः सर्वप्रमाणवेद्यत्वोक्तिर्विरुद्ध्येतेति शङ्कते * नन्विति ॥ ५२ ॥ सोपाधिकस्य सर्वप्रमाविषयत्वेऽपि निरुपाधिकस्य वेदान्तैकविषयत्वमविरुद्धमिति परिहरति * बाढमिति ॥ ५३ ॥ पूर्वपक्षोक्तदूषणाभासावनूद्य निराकरोति * यदपीत्यादि ॥ ५४ ॥* मुक्तिरेवेति ॥ न प्रवृत्तिनिवृत्ती पुमर्थ इत्यर्थः ॥५५॥ * तद्विशेषमिति ॥ प्रयोगान्तरेष्वावापोद्धारक्रमेणेत्यर्थः ॥५८॥ ननु लोके सिद्धबोधिवाक्यानां न पुमर्थहेतुत्वं दृष्टमतो वेदान्तस्यापि न तद्धेतुतेत्यत आह * न चेति ॥ ५९ ॥ * नि-

किञ्चाध्यस्ताहिदष्टस्य तद्विषव्याप्तचेतसः ॥
स्रगियं न फणीत्युक्ते दृष्टा विषनिराक्रिया ॥ ६० ॥
कुतूहलवतां तद्वन्निवृत्ताख्यानमात्रतः ॥
दृष्टा नराणां निःशेषकुतूहलनिराक्रिया ॥ ६१ ॥
व्युत्पत्तिः पुरुषार्थश्च सिद्धे सम्भवतः स्वतः ॥
वेदान्तानां प्रमाणत्वं निर्विघ्नं ब्रह्मणि स्थितम्॥६२॥
केचिदाहुः पदार्थत्वात्प्रमाणान्तरगम्यता ॥
आत्मनो नागमात्सिद्धिर्व्रीह्याद्यन्यपदार्थवत् ॥ ६३ ॥
व्रीह्याज्याग्निसमिद्दर्भाः क्रियाकाण्डे समीरिताः ॥
पदार्था लोकतः सिद्धास्तथैवात्मेति गम्यताम् ॥६४॥
अन्वयव्यतिरेकाभ्यां जाग्रत्स्वप्नसुषुप्तितः ॥
विविच्यात्माऽवगन्तव्यः प्रत्यभिज्ञानतस्तथा ॥६५॥
सदा व्यभिचरन्त्येव जाग्रदाद्याः परस्परम् ॥

---

वृत्तेति । भारतकथाद्यैरित्यर्थः । व्युत्पत्तिरित्युपलक्षणं विषयादिसम्भवाच्चेति॥ ६० ॥ ६१ ॥ ६२ ॥ सिद्धेऽप्यर्थे व्युत्पत्त्यादिसम्भवाद्वेदान्ताः प्रमाणमित्युक्तं, सम्प्रति वेदान्तेषु जागरादिवासनानिरोधस्य मनोनिरोधस्य चाभिधीयमानत्वात्तत्परा एव ते, न मानान्तरासिद्धात्मनि प्रमाणमिति मतमाह * केचिदिति । आत्मनो व्रीह्यादिवत्सिद्धार्थत्वेन मानान्तरयोग्यत्वात्तत्संवादविसंवादाभ्यां न वेदान्तगम्यता इत्यर्थः । आत्मन इत्यनन्तरमत इत्यध्याहार्य्यम् ॥ ६३ ॥ दृष्टान्तं स्पष्टयति * व्रीहीति ॥ ६४ ॥ किं तदात्मगमकमानमत्राह * अन्वयेति ॥ ६४ ॥ उक्तमेव व्यनक्ति * सदेति ॥ ६५ ॥ येषु व्यावर्त्तमानेषु यदनुवर्त्तते तत्तेभ्यो भिन्नं यथा कुसुमेभ्यः सूत्रम् , इति

तत्र व्यभिचरत्येतन्न चैतन्यं कदाचन ॥ ६६ ॥
व्यावृत्तेभ्योऽनुवृत्तस्य विवेकः सार्वलौकिकः ॥
ततश्चिज्जाग्रदादिभ्यो विविक्तेत्यनुमीयते ॥ ६७ ॥
यः पुरा स्वप्नमद्राक्षमस्वाप्सं चापि मूढधीः ॥
सोऽहं जागर्मीति पुंसां प्रत्यभिज्ञाऽऽत्मगोचरा ॥६८॥
प्रत्यभिज्ञानुमानाभ्यामात्मन्यवगते सति ॥
मान्व्यापारसमाप्तेर्न भूयो मानमपेक्ष्यते ॥ ६९ ॥
मानान्तरेण तत्सिद्धेर्नात्र व्याप्रियते वचः ॥
वासनानां निरोधे ऽतः पुमान् श्रुत्या नियुज्यते ॥७०॥
अनिरोधे वासनानामन्तकालेऽनुवर्त्तनात् ॥
भावि जन्मानिवार्यं स्यादन्त्यप्रत्ययकारितम् ॥७१॥
यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् ॥
तं तमेवेति कौन्तेय सदा तद्भावभावितः ॥ ७२ ॥
जाग्रत्स्वप्नसुषुप्त्याख्या याश्चानात्मार्थवासनाः ॥
निरोधनीयास्ताः सर्वा बिभ्यता भाविजन्मनः ॥७३॥
अनात्मप्रत्ययानन्तरितस्वात्मैकभावना ॥
कार्या, तया निरुध्यन्ते वासना जन्महेतवः ॥ ७४ ॥

---

व्याप्तिमभिसन्धायाह * व्यावृत्तेभ्य इति ॥ ६६ ॥ ६७ ॥ *मान्व्यापारेति । मानव्यापारस्यात्मस्फुरणस्य तदज्ञानहानेर्वा प्रत्यभिज्ञानादिना प्राप्तत्वादित्यर्थः ॥ ६८ ॥ आत्मनो मानान्तरयोग्यत्वे फलितमाह * नात्रेति । कुत्र तर्हि वेदान्तवचसो व्यापारस्तत्राह *वासनानामिति ॥ ६९ ॥ तन्निरोधस्यावश्यकतामाह *अनिरोधे इत्यादिना॥७०॥७१॥७२॥७३॥तत्रोपायमाह * अनात्मेति ॥ ७४ ॥ उक्तेऽर्थे प्रमाणप्रदर्शनपूर्वकमात्मप्रतिपादकसत्यादिवाक्यानामुपयोगमाह * उपासीतेति ॥७५॥

उपासीत स्वमात्मानामिति साक्षाद्विधिश्रुतिः ॥
तत्राङ्गभावसिद्ध्यर्थं चिदात्माऽनूद्यते श्रुतौ ॥ ७५ ॥
आत्मैकप्रत्ययो यावत्स्वभावात्सन्ततो भवेत् ॥
कुर्यादुपासनं तावत् क्षीयन्ते वासनास्ततः ॥ ७६ ॥
अन्यदृष्ट्या जाग्रदाद्याः कल्प्यन्तां क्षीणवासने ॥
विदुष्ययं, स्वदृष्ट्या तु स्वात्मनोऽन्यन्न पश्यति॥७७॥
देहं विनश्वरमवास्थितमुत्थितं वा
सिद्धो न पश्यति यतो ऽध्यगमत्स्वरूपम् ॥
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥ ७८ ॥
तस्मादशेषवेदान्ता वासनानां निरोधने ॥
नियुञ्जन्ते हि पुरुषमात्मोपासनमार्गतः ॥ ७९ ॥
अथवा मनसो रोधे मुमुक्षन्तं नियुञ्जते ॥
तस्मिन्निरुद्धे निखिला निरुध्यन्ते हि वासनाः ॥८०॥
तावन्मनो निरोद्धव्यं हृदि यावद्गतं क्षयम् ॥
इति श्रुतिर्मनोरोधं विदधाति विमुक्तये ॥ ८१ ॥
पातञ्जलं योगशास्त्रं मनोरोधे समाप्यते ॥
प्रवृत्तमनसो बन्धस्तन्निवृत्तौ विमुक्तता ॥ ८२ ॥
वासनामात्रहेतुत्वादात्मनोऽनर्थसङ्गतेः ॥

---

उक्तोपासनाया अवधिमाह *आत्मेति॥७६॥७७॥ क्षीणवासनस्य विदुषो देहप्रतीतिर्नेत्यत्र श्रीमद्भागवतश्लोकं संवादयति *देहमिति॥७८॥७९॥पक्षान्तरमाह *अथवेति ॥८०॥८१॥८२॥ वासनामनसोर्नाशादेव मुक्तिरित्यत्र युक्तिमप्याह * वासनेति ॥ ८३ ॥ आत्मनः प्रत्याभिज्ञादिना चिन्मात्रसिद्धावपि तद-

अन्योपायोऽस्तु वा मा वा निरोधादेव मुक्तता॥८३॥
स्वयञ्ज्योतिःस्वभावत्वान्निरुद्धस्वान्तवासनः॥
प्रमान्तरानपेक्षो हि स्वयमात्मा प्रकाशते ॥ ८४ ॥
एवं कार्यमुखेनैव ज्योतिष्टोमादिवाक्यवत् ॥
वेदान्तानां प्रमाणत्वं नाक्षवद्वस्तुनीष्यते ॥ ८५ ॥
इति व्याचक्षते मन्दा नियोगार्थैकरागिणः ॥
नैतत्साध्वभ्यधाय्यत्र नियोगस्यानपेक्षणात् ॥ ८६ ॥
कामितार्थस्य संसिद्धेर्लौकिकादेव मानतः ॥
वैदिकेन नियोगेन किं कार्यं वद बुद्धिमन् ॥ ८७ ॥
मनसो वासनानां च भावे ऽनर्थोऽस्ति जाग्रति ॥
तदभावे सुषुप्त्यादावनर्थो नैव वीक्ष्यते ॥ ८८ ॥
अन्वयव्यतिरेकाभ्यां निरोधो ऽनर्थवारणे ॥
उपाय इति विज्ञातः किमपूर्वं विधीयते ॥ ८९ ॥
अन्तरेणापि वेदोक्तं बौद्धादेरिव सिद्ध्यति ॥

---

द्वितीयत्वसिद्धये वेदान्तापेक्षा नेत्याह * स्वमिति । निरस्तसमस्तमनोवासनो निष्प्रत्यनीकतया स्वयमेव प्रकाशते । अद्वयत्वस्यापि तावन्मात्रत्वान्नान्यापेक्षेति भावः ॥८४॥८५॥ वासनानिरोधान्मोक्षपक्षे नियोगं विनाऽपीष्टार्थसिद्धेर्वेदवचसो वैयर्थ्यमिति दूषयति * नैतदिति ॥ ८६ ॥ ८७ ॥ लौकिकमानादेव तत्सिद्धिमुपपादयति * मनस इति ॥८८॥८९॥ वैदिकवचो विनैव मोक्षाख्यपुमर्थस्य तद्धेतोर्मनोनिरोधस्य च लिङ्गादिना सिद्धत्वे बौद्धादेरिव तवापि वेदानर्थक्यमिति फलितमाह * अन्तरेणेति ॥९०॥ बौद्धादेरिवेति दृष्टान्तं स्पष्टयति * शून्यमिति । अयमर्थः । अहमहमिति सन्तानपतितानि विज्ञाना-

पुरुषार्थो विमोक्षाख्यो वेदान्तो निष्फलो भवेत्॥९०॥
शून्यं स्वलक्षणं दुःखं क्षणिकं चेति भावनात् ॥
तदन्यवासनारोधे मुक्तिः स्यादिति सौगतः ९१ ॥
त्यक्त्वाऽपि वैदिकं मार्गं वासनानां निरोधतः ॥
न सम्पादयितुं मोक्षं शक्नोष्येवानिरूपणात् ॥ ९२ ॥
वासनाशब्दवाच्याः किं संस्काराः स्मृतिहेतवः ॥
नेत्रादिव्यवहारो वा, नाद्ये तद्रोधसम्भवः ॥ ९३ ॥
व्यतीतानेकजन्मोत्थवासनानामनन्ततः ॥
तासां निरोधो ऽसम्भाव्यो जन्मन्येकत्र मानवैः॥९४॥
कासां चिदप्यसम्भाव्य उपायस्यानवेक्षणात् ॥
चिरव्यवाहितोऽप्यर्थो ऽकस्मात्स्मर्यतएव हि ॥९५॥
किञ्च यां वासनां रोद्धुमिच्छेत्तद्विषये मनः ॥
सदैव सावधानं सद् दृढं प्रत्युत वासयेत् ॥ ९६ ॥

---

नि स्थायित्वानुसन्धानकल्पनाभ्यां रागादिदोषैर्विषयैश्चोपप्लुतान्युत्पद्यन्ते तत्र सर्वं क्षणिकमिति भावनया स्थायित्वादिकल्पना निवर्तते, स्वलक्षणभावनया द्रव्यगुणादिविशेषणविशेष्यकल्पना नश्यति, दुःखमिति भावनया रागादिदोषप्रवृत्तिसुखदुःखोपप्लवाः क्षीयन्ते, शून्यमिति भावनया विषयोपप्लवविगमः, ततः सर्वोपप्लवराहितविज्ञानोत्पत्तिर्मुक्तिरिति ॥ * अनिरूपणादिति । अशक्यत्वादित्यर्थः ॥९१ ॥ ९२ ॥ अशक्यत्वमुपपादयितुं विकल्पयति * वासनेति । आद्येऽपीदं वक्तव्यं– किं सकलवासनानां निरोधो मुक्तिहेतुः कासां चिदेव वा ? तत्राद्यं प्रत्याह * नेति ॥९३॥९४॥ द्वितीयं प्रत्याह * कासां चिदिति॥९५॥९६॥ नेत्रादिव्यवहारो वासनेति पक्षेऽपि

निवारयितुमिच्छन्तश्चतुर्थीचन्द्रदर्शनम् ॥
कस्मादपि गृहच्छिद्रात्पश्यन्त्येव यथा तथा ॥ ९७॥
नेत्रादिव्यवहाराश्चेद्वासनाः स्युस्तथापि च ॥
तन्निरोधान्न मोक्षोऽस्ति विना ब्रह्मात्मदर्शनम् ॥९८॥
वासनानामभावेऽपि सुषुप्त्यादौ न मुक्तता ॥
मानव्यापारविरहान्न प्रतीतिर्दृगात्मनः ॥ ९९ ॥
हेतुश्चात्मानर्थसङ्गे ह्यविद्यैव न वासना ॥
वासनानामपि युतौ सैव यस्मादपेक्ष्यते ॥ १०० ॥
अविद्यामन्तरेणात्मन्यसङ्गे वासनायुतिः ॥
अनर्थसङ्गतिर्वैषा शङ्कितुं न च शक्यते ॥ १०१ ॥
न वासनानिरोधेन नापि चित्तनिरोधतः ॥
शक्योच्छेत्तुमविद्यैषा विनैकात्म्यावबोधनम् ॥१०२॥
सति त्वात्मावबोधेऽस्मिन्नविद्याया निवृत्तितः ॥
वासनाऽनर्थसङ्गोऽयं स्वतोऽसङ्गान्निवर्त्तते ॥ १०३ ॥
साक्षादात्मावबोधेन प्रत्यग्ध्वान्तच्छिदा न चेत् ॥

---

तस्य दुर्निरोधत्वमुदाहरणमुखेनाह * निवारयितुमित्यादिना । वासनानिरोधस्य शक्यत्वेऽपि न तावन्मुक्तिः, प्रतीचोऽद्वयानन्दत्वबोधकमानाभावे तत्स्फुरणायोगादित्याह *तथापीत्यादिना ॥९७॥९८॥९९॥ किञ्चात्मनः प्रमातृत्वाद्यारोपनिमित्तमज्ञानं तावदङ्गीकर्त्तव्यम् अन्यथा कामादीनामपि तत्रारोपायोगात् । न च तेषामात्मधर्मत्वं शङ्क्यम् असङ्गत्वव्याघातात्, एवं सति ज्ञानं विनाऽज्ञाननिवृत्त्ययोगात्तेन तन्निवृत्तौ वासनानामप्यात्मन्यारोपनिवृत्तेर्विरोधवैयर्थ्यमिति मत्वाऽऽह *हेतुरित्यादिना ॥१००॥ १०१॥१०२॥१०३॥ ऐक्यभावनयैवाज्ञानमपि निवर्ततां तथा न

दुःखादिवासनाध्वस्ना कथं तद्वासना नुदेत् ॥१०४॥
उपासनाचित्तरोधविधी यावुदितौ त्वया ॥
तौ स्तां तथैव बोधस्य हेतुत्वेनाभ्युपैमि तौ ॥ १०५॥
लौकिकव्यवहारेषु प्रवृत्ता धीरुपासनात् ॥
अन्तर्मुखा सती स्वात्मविचारक्षमतां व्रजेत् ॥१०६॥
शब्दस्पर्शादिरहितमात्मानं स्थूलधीर्न हि ॥
द्रष्टुं शक्नोति सौक्ष्म्यार्थं धीनिरोधो विधीयताम्॥१०७॥
एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ॥
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मयेति श्रुतेर्वचः ॥१०८॥
अन्तर्मुखा सूक्ष्मबुद्धिः शास्त्रजन्यविवेकतः ॥
पश्यत्यद्वैतमात्मानं न पुनर्वीक्षतेऽन्यथा ॥ १०९ ॥
प्रमितस्यात्मतत्त्वस्य बाधाभावात्सदा तथा ॥
अर्थात्सिद्धा वासना स्यादन्त्यबुद्धिश्च नान्यथा॥११०॥

---

विधिवैयर्थ्यमित्याशङ्क्याह * साक्षादिति । प्रमाणजन्यज्ञानेन प्रत्यगज्ञानोच्छेदो यदि न स्यात्तदा चिरनिरूढानिबद्धदुःखादिवासनाभिर्ध्वस्ताऽल्पकालीनैक्यवासना कथमज्ञानं नुदेत्! न कथञ्चिदित्यर्थः॥१०४॥तर्हि तावदेव निरोद्धव्यमित्यादिविधेः का गतिः? तत्राह * उपासनेति ॥ १०५ ॥ वाक्येनैव ज्ञानोत्पत्तिसम्भवान्न तद्धेतुत्वेनापि तद्विधानमित्याशङ्क्य तयोर्ज्ञानोपयोगं दर्शयति * लौकिकेत्यादिना॥१०६॥ ऐकाग्र्यं विना आत्मयाथात्म्यज्ञानमसम्भवीत्यत्र श्रुतिं प्रमाणयति *एष इति। अग्र्या एकाग्र्या विवेकतः कर्तृत्वाद्यसम्पृक्ततया॥१०७॥१०८॥एवंविधज्ञानोत्पत्तावात्मवासनाया आमरणं स्वभावादेवानुवृत्तिसम्भवादन्त्यप्रत्ययार्थमपि न बोधानन्तरं निरोधविधिरित्याह *प्रमितस्ये-

अन्त्यबुद्धेरन्यथात्वासम्भवे जन्म भाव्यपि ॥
न भवेद्विदुषस्तस्माज्ज्ञानिनोऽनर्थको विधिः ॥ १११॥
ननु सार्थो विधिर्यस्मात्सिद्धो देहं न पश्यति ॥
अविधौ चित्तचाञ्चल्याद् दृश्येतैव स्वकं वपुः ॥११२॥
नैतत् किं वासनारोधात्किं वा चित्तनिरोधतः ॥
अद्वितीयात्मबोधाद्वा देहादर्शनमुच्यताम् ॥ ११३ ॥
नाद्यौ श्लोके तयोस्तत्र हेतुत्वानभिधानतः ॥
यतोऽध्यगमदित्येवं बोधो हेतुतयोच्यते ॥ ११४ ॥
अज्ञानेऽन्यदिव स्याच्चेत्तत्रान्योऽन्यत्प्रपश्यति ॥
ज्ञानेऽभूत्सर्वमात्मैव केन कं कोऽत्र पश्यति ॥११५॥
यस्मिन्त्सर्वाणि भूतानि ह्यात्मैवाभूद्विजानतः ॥
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ११६ ॥
इत्याद्याः श्रुतयो बोधादज्ञानप्रविलापनात् ॥
अनात्मदृष्टिशोकादीन्वारयन्ति न रोधतः ॥ ११७ ॥
चित्तस्य वासनानां वा निरोधाद् यो न पश्यति ॥
सुप्तेषुकारवत्तस्य विद्यया न विलापनम् ॥ ११८ ॥

---

ति॥१०९॥११०॥१११॥एवमप्यनात्मप्रदर्शननिवृत्त्यर्थं तद्विधान-मिति शङ्कते *नन्विति॥११२॥भागवतश्लोके ज्ञानादेव देहाद्यदर्शन मुच्यते न निरोधादतस्तदर्थमपि न बोधानन्तरं निरोधविधिरित्याह *नैतदित्यादिना॥११३॥ ज्ञानादेवानात्मधीनिवृत्तिरित्यत्र "यत्र वा अन्यदिव स्यात्"इति श्रुतिमपि प्रमाणयति *अज्ञान इति॥११४॥ ११५॥११६॥११७॥ किञ्च रज्जुज्ञानेन सर्पलयवत्प्रत्यक्तत्त्वसा-क्षात्कारेण द्वैतलयो यदि न स्यात्तदा वासनानिरोधात्तदप्रतीतिर्न मुक्तिहेतुरित्याशयेनाह * चित्तस्येति ॥ ११८ ॥ सुप्तेषुकारव-

निद्राभिभूतचित्तस्य यदन्यादर्शनं न तत् ॥
बोधप्रयुक्तं तद्वत्स्याद्द्विषणारोधवादिनः ॥ ११९ ॥
इष्वासक्तमनस्केन ह्यन्यचित्ततया पुरः ॥
सैन्यं न दृश्यते तद्वद्वासनारोधवादिनः ॥ १२० ॥
उपासनाव्यग्रतया यदन्यादर्शनं न तत् ॥
बोधप्रयुक्तं योषादिचिन्तायामपि सम्भवात् ॥ १२१॥
बोधलीनो भ्रमः पूर्वसंस्कारादनुवर्तते ॥
स्वप्नभ्रान्त्योर्बाधितयोरपि स्मृतिरुदेति हि ॥ १२२॥
बाधितस्यानुवृत्तिस्तु न जन्मानर्थकारणम् ॥
भ्रष्टबीजोपमा सर्वमोक्षशास्त्रेषु डिण्डिमः ॥ १२३॥
अनुवृत्तिं च ये सोढुमशक्तास्ते निरोधने ॥
मनसो वासनानां वा प्रवर्तन्तां निजेच्छया ॥१२४॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥

---

दित्युक्तं दृष्टान्तद्वयं क्रमेण व्यनक्ति * निद्रेत्यादिना ॥११९॥ प्रत्यक्तत्त्वबोधं विना ऽन्यासक्ततया यत्प्रपञ्चादर्शनं तन्निष्फलं कामुकेऽपि तत्सम्भवादित्याह * उपासनेति ॥१२०॥१२१॥ ननु बोधबाधितोऽपि प्रपञ्चो बाधितस्वप्नगजादिवत् पुनः कदाचित्प्रतीयेत तन्निवारणाय निरोधविधिरित्याशयेन शङ्कते * बोधेति ॥ भ्रमशब्दः कर्मव्युत्पत्त्या प्रपञ्चपरः ॥१२२॥ किं तत्प्रतीतेर्जन्मादिहेतुत्वात्तन्निरासाय निरोधविधिरुत दृष्ट-दुःखहेतुत्वाद्वा ? आद्यं प्रत्याह * बाधितस्येति ॥ १२३ ॥ द्वितीयेऽप्यन्वयव्यतिरेकाभ्यामेव तत्र प्रवृत्तिसम्भवाद्विधिवैयर्थ्यमित्याह * अनुवृत्तिमिति ॥ १२४ ॥ एवं वेदान्तानां निरोधविधिपरत्वाभावे ऽद्वितीयात्मपरत्वं सिद्ध्यतीत्याह

नैवास्ति किञ्चित्कर्त्तव्यमस्ति चेन्न स तत्त्ववित्॥१२५॥
ज्ञानेऽधिकारासिद्ध्यर्थमुपासाधीनिरोधयोः ॥
विधेः सिद्धे ऽधिकारेऽथ वेदान्ता आत्मबोधिनः॥१२६॥
व्रीह्यादिवत्पदार्थत्वाद्योक्ता मान्तरगम्यता ॥
तत्र हेतुरसिद्धः स्यादवाच्यत्वान्निजात्मनः ॥ १२७॥
न पदार्थो न वाक्यार्थ आत्माऽयं वस्तुवृत्ततः ॥
तत्प्रत्याख्यानश्रुत्यैव तद्याथात्म्यावबोधनात्॥१२८॥
यदनभ्युदितं वाचा वाग्येनाभ्युद्यते सदा ॥
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ १२९ ॥
इति वाग्विषयत्वं तु प्रत्याख्यायाथ साक्षिणः ॥
वाक्प्रेरकत्वमात्रेण याथात्म्यमवबोध्यते ॥ १३० ॥
प्रत्यभिज्ञानुमानाभ्यां चिद्वस्त्ववगमे सति ॥
अद्वितीयब्रह्मतत्त्वरूपत्वं नावबुध्यते ॥ १३१ ॥

---

* ज्ञान इति । ज्ञाने योग्यतासिद्ध्यर्थं ज्ञानशेषत्वेन निरोधविधेः प्रवृत्तौ सिद्धायामित्यर्थः ॥ १२५ ॥ पूर्वपक्षोक्तदूषणमनूद्य प्रत्याह *व्रीहीति ॥ १२६ ॥ १२७॥ पदार्थत्वहेतोरसिद्धिमेवाह * नेति । तर्हि कथमस्य वेदान्तार्थत्वं ? तत्राह * तदिति । पदार्थत्वादिसर्वो विशेषस्तच्छब्दार्थः । द्वितीयस्तच्छब्द आत्मविषयः ॥१२८॥ उक्तेऽर्थे यद्वाचेत्यादिश्रुतिं प्रमाणयति *यदिति ॥१२९॥१३०॥ यदुक्तं प्रत्यभिज्ञानादिनाऽऽत्मनो ज्ञातत्वान्न वेदान्तवेद्यतेति तत्राह *प्रत्यभिज्ञेति । सति सत्यपि । अखण्डानन्दत्वेन ज्ञातस्यैवात्मनः पुमर्थत्वादिति भावः ॥१३१॥ ननु वेदान्ता नियोगनिष्ठाः शब्दप्रमाणत्वाज्ज्योतिष्टोमादिवाक्यवत्, ततो न ते विध्यस्पृष्टमात्मानं बोधयन्तीति तत्सिद्धौ नियोगापेक्षादुर्वारेति नेत्याह * न हीति ॥ १३२ ॥ उक्तमर्थं प्रप-

वेदान्तानामतो वस्तुन्यक्षवन्मात्वमीक्ष्यताम् ॥
न हि कार्यव्यपेक्षाऽस्ति कार्यसाधकसाक्षिणः॥१३२॥
स्वानुभूतिबलादेव भवताऽपि विभाव्यते ॥
कार्यादिनिखिलो मेयो नानुभूतिस्तु कार्यतः ॥१३३॥
यस्याप्रसिद्धिर्नाज्ञानात्प्रसिद्धिर्नापि मानतः ॥
तस्यानुभवतत्त्वस्य कुतो ऽन्यापेक्षतोच्यते ॥ १३४ ॥
स्वप्रकाशात्मदृष्ट्यैव स्वात्मतत्त्वं प्रसिध्यति ॥
तद्व्युत्पत्त्यै परापेक्षा नानुभूत्यात्मवस्तुनः ॥१३५॥
अविद्याया निवृत्त्यर्थमेव व्युत्पत्त्यपेक्षिता ॥
स्वसत्तास्फूर्तिसिद्ध्यर्थं नान्यत्किञ्चिदपेक्ष्यते ॥१३६॥
असज्जडमपि द्वैतं यद्योगादस्ति भाति च ॥
तत्सच्चिद्रूपमन्यस्मात्कथं सिद्धिमपेक्ष्यते ॥ १३७ ॥
नन्वदृष्टं पुमर्थत्वमनुभूते कदाचन ॥
दृष्टाऽनुभूयमानस्य स्वर्गादेः पुरुषार्थता ॥ १३८ ॥

---

श्वयति * स्वानुभूतीति । नियोगवादिनाऽपि चिदात्मवशादेव नियोगादिजडोऽर्थोऽवगम्यते तथाच तत्साधकचिद्धातुः स्वसिद्धौ न नियोगाद्यपेक्षते, न हि सविता रूपादिप्रकाशकः तदपेक्षया प्रकाशत इति भावः ॥ १३३ ॥ १३४ ॥ ज्ञानाज्ञानाभ्यां प्रसिद्ध्यप्रसिद्ध्योरभावे वेदान्तमेयत्वमात्मनो व्याहन्येतेत्यत आह * स्वप्रकाशेति द्वाभ्याम् । अनुदितानस्तमितकूटस्थबोधैकरसस्य सिद्धावन्यानपेक्षत्वेऽपि तदावरकाज्ञाननिवृत्तये व्युत्पत्तिशब्दितवेदान्तजन्यापरोक्षबोधस्यापेक्षितत्वान्नोक्तविरोध इति भावः ॥ १३५ ॥ १३६ ॥ आत्मनो नियोगानपेक्षत्वमुपसंहरति *असदिति । तथा चोक्तानुमानमप्रयोजकं मन्त्रादौ व्यभिचारि चेति भावः ॥ १३७ ॥ एवमप्यपुमर्थस्यात्मस्वरूपानुभवस्य कथं

ततो ऽपुमर्थरूपां तामनुभूतिं श्रुतिः कथम् ॥
प्रतिपादयतीत्येतच्चोद्यं मूढेषु शोभते ॥ १३९ ॥
प्रमाणमूलभूतत्वादनुभूतेः पुमर्थता ॥
अनुभूतिप्रसिद्ध्यर्थं प्रमाणव्यापृतिर्भवेत् ॥ १४० ॥
स्वर्गानुभूतिरेवार्थ्या पुम्भिर्न स्वर्गमात्रकम् ॥
नो चेत्स्वर्गोऽन्यदीयोऽपि सर्वदाऽर्थ्येत मानवैः॥१४१॥
दुःखानुभूतेरर्थ्यत्वं न दृष्टमिति चेत्तदा ॥
सुखस्यापि पुमर्थत्वहेतुत्वमनुमन्यताम् ॥ १४२ ॥
अतो विज्ञानमानन्दं ब्रह्मेति श्रुतिरब्रवीत् ॥
या प्रतीतिर्घटादीनां तद्विज्ञानमिदं मतम् ॥ १४३ ॥
प्रतीतेर्माफलत्वेन कथं मेयैकनिष्ठता ॥

---

वेदान्तमेयत्वमिति शङ्कते * नन्विति । कस्य तर्हि पुमर्थता ? तत्राह *दृष्टेति ॥१३८॥१३९॥ चोद्यस्य मोहमूलत्वमेव दर्शयति *प्रमाणेति । यत्नपूर्वं नृत्यादिसामग्रीसम्पादनात्तस्याः पुमर्थतेत्यर्थः ॥ १४० ॥ स्वर्गादेः पुमर्थत्वमुक्तं दूषयति * स्वर्गेति ॥ १४१ ॥ अनुभूतेः पुमर्थत्वेऽतिप्रसङ्गमाशङ्क्य सुखानुभवस्यैव पुमर्थत्वं, स च क्वचित्सुखविषयः क्वचित्सुखाभिन्न इत्यभिसन्धायाह * दुःखेत्यादिना ॥ १४२ ॥ यतो ज्ञानसुखयोरन्यतरस्य न पुमर्थत्वमतो ब्रह्मणः पुमर्थत्वं दर्शयितुं तस्य श्रुतिरुभयरूपतामाहेत्यर्थः नन्वु स्वरूपानुभवस्योक्तश्रुत्या पुमर्थत्वासिद्धावपि प्रमाणफलभूतत्वादिति पूर्वोक्तहेतुना कथं तत्सिद्धिः ? न हि नित्यानुभवस्य मानजन्यत्वं तत्राह * या प्रतीतिरिति। घटविज्ञानमेवेदं श्रुत्युक्तं स्वरूपज्ञानमित्यर्थः ॥१४३॥ घटनिष्ठस्य घटज्ञानस्य कथं स्वरूपज्ञानाभेदस्तत्राह * प्रतीतेरिति । न

माक्रियाफलयोगोऽयं युक्तो मातरि भोक्तरि ॥१४४॥
लौकिको वैदिकः सर्वो व्यवहारो जगत्यपि ॥
भोक्त्रर्थ एव तेनास्य प्राधान्यं भोक्तुरिष्यते॥१४५॥
न वा अरे पत्युरिति तदेतत्प्रेय इत्यपि ॥
निखिलेऽपि जगत्यत्र प्राधान्यं स्वात्मनः श्रुतम्॥१४६॥
न प्रमाता प्रमाणं वा क्रिया मेयफलानि वा ॥
प्राधान्यायेह दृश्यन्ते ह्यभोक्तृत्वेन हेतुना ॥ १४७॥
आत्मनः कर्त्रवस्थाऽपि भोक्त्रर्थेति विनिश्चयः ॥

---

मानजन्यं मानफलं किन्तु तज्जन्यवृत्त्यभिव्यक्तघटाद्यवच्छिन्नस्वरूपज्ञानमेव, अतो न तस्य मेयनिष्ठतेत्यर्थः । ननु फलस्यास्वातन्त्र्यादाश्रयो वाच्यः, तत्र परिशेषान्मेयाश्रितत्वं, नेत्याह * माक्रियेति । मानस्य हि फलं मातारमाश्रयते, क्रियाफलं तु भोक्तारं, न च तौ भिद्येते ऽतो मानक्रियाया यदभिव्यक्तानुभवाख्यं फलं तस्य तत्तन्मेयोपहितत्वेनात्मनिष्ठत्वमुपपद्यत इत्यर्थः ॥ १४४ ॥ निरतिशयसुखस्वरूपे चिदात्मनि वेदान्तमानतेत्यत्रैव सर्वप्राधान्यं हेत्वन्तरमाह * लौकिक इति ॥ १४५ ॥ प्रतीचो निखिलव्यवहारशेषित्वेन प्राधान्यमुक्त्वा तस्य निरतिशयसुखत्वे प्रमाणं वदन् तेनापि प्राधान्यमाह * न वा इति ॥ १४६ ॥ मात्रादौ प्रधाने सति कथं भोक्तृप्राधान्यं तत्राह * नेति । इह व्यवहारभूमौ ॥ १४७ ॥ ननु कर्त्रवस्था क्रियाश्रयत्वात्प्रधानं तत्कथं भोक्तुरेव प्राधान्यं तत्राह * आत्मन इति । ननु विषयाभिनिवेशवान् पुमान् पुत्राद्येव प्रधानं मन्यत इत्यत आह * यत इति । कर्तृत्वस्य भोक्त्रर्थत्वे यदन्यत्पुत्रादि तत्सर्वं तदर्थमेव, अन्यत्राभिनिवेशस्तु भ्रान्तेरिति

यतोऽतोऽपरमप्येतच्छ्लोकार्थं विनियुज्यते ॥ १४८ ॥
क्रिययोपहितः कर्त्ता माता मानोपधानतः ॥
अनुपाधिश्चिदात्मा तु भोक्तेत्यत्र विवक्षितः ॥१४९॥
भुजिक्रियावेशतो यो भोक्ताऽसावत्र कर्त्तरि ॥
अन्तर्भूतः, प्रधानत्व चिन्मात्रस्यात इष्यते ॥ १५० ॥
न चात्मानुभवादन्यो विषयः कैश्चिदिष्यते ॥
अपि सर्वप्रमाणानां किमु वेदान्तशासने ॥ १५१ ॥
चिदात्मानं विना नैव वस्त्वन्यन्मानभूमिगम् ॥
इत्येषोऽर्थोऽतियत्नेन ह्युपरिष्टात्प्रवर्तते ॥ १५२ ॥
तदित्थं सर्ववेदान्ता न निरोधविधायिनः ॥
किं त्वात्मानं प्रमिमत इत्येतदिह सुस्थितम् ॥१५३॥
चित्तद्वासनारोधतात्पर्येऽत्र निराकृते ॥
प्रतिपत्तिविधौ शास्त्रतात्पर्यं केचिदूचिरे ॥ १५४ ॥

---

भावः ॥ १४८ ॥ नन्वेवं भोक्तुरेव प्राधान्ये तत्रैव वेदान्ताः पर्यवस्येयुर्न शुद्धे इत्यत आह * क्रिययेति ॥ १४९ ॥ विवक्षायां हेतुमाह * भुजिक्रियेति । अन्तःकरणाद्युपहितस्य सुखदुःखानुभवितुः कर्तृकोटिप्रविष्टस्य कल्पितत्वादुक्तप्राधान्यसिद्ध्यर्थं भोक्तृपदेन चिन्मात्रं विवक्षितमित्यर्थः ॥ १५० ॥ अपि च सर्वमानमेयस्यात्मनो वेदान्तमेयत्वं कैमुतिकन्यायसिद्धमित्याह * न चेति । वेदान्तेष्वनुभवात्मनोऽन्यो विषयो नेति किमु वक्तव्यं तस्यैवाज्ञातत्वादित्यर्थः ॥ १५१ ॥ तस्य सर्वमानमेयत्वं मेयपरीक्षायां च वक्ष्यत इत्याह * चिदिति ॥ २५२ ॥ प्रकरणार्थमुपसंहरति * तदिति ॥ १५३ ॥ वृत्तानुवादपुरःसरं मतान्तरमाह * चित्तेति ॥ १५४ ॥ विधिपरत्व-

आत्मा द्रष्टव्य इत्येवं प्रतिपत्तिविधिः श्रुतः ॥
कोऽसावात्मेति वीक्षायां सर्वमात्मेति वर्ण्यते॥१५५॥
सत्यज्ञानादिवाक्यानि तत्त्वमस्यादिकान्यपि ॥
विधिशेषतया ब्रह्म स्वात्मत्वेनार्पयन्ति हि ॥१५६॥
विधिशेषतया यूपाहवनीयाद्यलौकिकम् ॥
शास्त्रेणैवार्प्यते यद्वत्तथा ब्रह्माप्यलौकिकम् ॥ १५७॥
यद्वा स्वरूपवाक्यानि स्वरूपविधिमार्गतः ॥
बोधपर्यवसायीनि ततो बोधविधिर्मतः ॥ १५८ ॥
कर्मोत्पत्तिविधिर्यद्वत् कर्मबोधे व्यवस्थितः ॥
आत्मतत्त्वविधिस्तद्वदात्मबोधेऽवतिष्ठताम् ॥ १५९ ॥
अष्टाकपाल आग्नेय इत्यत्र द्रव्यदेवते ॥
कर्मस्वरूपम्, उत्पत्तिविधिनाऽनेन बोध्यते ॥ १६० ॥

---

मेव प्रतिपादयति * आत्मेति ॥ १५५ ॥ वेदान्तानां विधिपरत्वे ऽलौकिकब्रह्मणो मानान्तरेणाप्यसिद्धेः कथं तद्विशेषितदर्शनविधानमित्याशङ्क्य यथा यूपादिरलौकिकार्थो "यूपे पशुं बध्नाति" इत्यादिविधिशेषतया "यूपं तक्षति" इत्यादिनाऽर्प्यते तथा ब्रह्मणोऽपि द्रष्टव्यविधिशेषत्वेन सत्यज्ञानादिवाक्येनार्पणमित्याह *सत्येत्यादिना । तथाच वस्तुन्यवान्तरतात्पर्यमिति भावः ॥१५६॥१५७॥ तत्रैव पक्षान्तरमाह *यद्वेति॥१५८॥ कर्मणीव वेदान्तेषु विधिद्वयमङ्गीकृत्य स्वरूपबोधकसत्यादिवाक्यानां ज्ञातव्यपदाध्याहारेणोत्पत्तिविधित्वं तावदभिधाय उक्तमर्थं दृष्टान्तेन स्पष्टयति * कर्मेति ॥१५९॥ दृष्टान्ते उत्पत्तिविधेर्बोधपर्यवसायित्वं दर्शयति * अष्टेति ॥ १६० ॥ तत्रैवाधि-

स्वर्गकामो यजेतेति विधिरेषोऽधिकारिणम् ॥
उत्पत्तिविधिबुद्धेऽस्मिन्ननुष्ठातुं प्रवर्त्तयेत् ॥ १६१ ॥
तथा द्रष्टव्य आत्मेति प्रेरयन्मोक्षकामिनम् ॥
अधिकारविधिस्त्वेष प्रतिपत्तौ भविष्यति ॥१६२ ॥
अबुद्धं बोधयंस्तद्वदप्रवृत्तं प्रवर्त्तयन् ॥
उत्पत्त्याख्योऽधिकाराख्यो विधिरेष द्विरूपकः ॥१६३॥
एवं विधिमिहेच्छन्ति विध्ययोग्येऽपि वस्तुनि ॥
विधिरागवशात्केचित् तान्प्रतीदमथोच्यते ॥ १६४ ॥
प्रतिपत्तिविधिस्तावन्नात्मा द्रष्टव्य इत्ययम् ॥
विधेर्भाव्यार्थनिष्ठत्वाद्वस्तुन्यनुपपत्तितः ॥ १६५ ॥
किमैकात्म्यं विधेयं स्यात् किं वा तद्दर्शनं वद ॥
नोभयत्र विधिर्युक्तः पुंव्यापारानधीनतः ॥ १६६ ॥
सिद्धेऽसिद्धेऽथ वैकात्म्ये विधिर्नैवोपपद्यते ॥
नाकाशे नापि तत्पुष्पे विधिः सम्भाव्यते क्वचित्॥१६७॥

---

कारविधेर्व्यापारं दर्शयन् तन्न्यायेन द्रष्टव्य इत्यादेरप्यधिकारविधित्वमाह * स्वर्गेत्यादि । प्रतिपत्तौ प्रेरयन्निति सम्बन्धः ॥१६१॥१६२॥ उत्पत्त्यधिकारविध्योः स्वरूपं क्रमेण दर्शयति *अबुद्धमिति ॥ १६३ ॥ उक्तविधिद्वयमप्यत्र न घटत इति समाधत्ते * तान्प्रतीति ॥ १६४ ॥ पुरुषकृतिसाध्यधात्वर्थस्यैव विधिविषयत्वादात्मतज्ज्ञानयोरतथात्वान्नात्मज्ञाने विधिरित्याह * प्रतिपत्तीति ॥ १६५ ॥ १६६ ॥ उभयत्र साधारणमुक्त्वा प्रत्येकं दोषमाह * सिद्ध इति । अन्योन्याश्रयमेव विशदयति * दर्शनादित्यादिना । ब्रह्मविशेषितज्ञानस्य विधेयत्वे विधेः पूर्वं ब्रह्मज्ञानं वाच्यं, तच्च ज्ञानविधिवादिनो विध्यन्तरमनुष्ठानद्वारा सिद्ध्यतीत्यर्थः ॥ १६७ ॥ यदुक्तं सत्यादिवाक्या-

न विधिर्दर्शनेऽपि स्यादन्योन्याश्रयदोषतः ॥
दर्शनाद्विधिसंसिद्धेर्विधेर्दर्शनसिद्धितः ॥ १६८ ॥
पुंसाऽऽत्मदर्शने ज्ञाते विधिना प्रेर्यते पुमान् ॥
अज्ञाते विषये तत्र प्रेरणा नैव युज्यते ॥ १६९ ॥
ज्ञायमाने दर्शनेऽर्थादात्मा दृश्यतया तदा ॥
ज्ञातोऽतो दर्शने सिद्धे पश्चात्सिध्यति तद्विधिः॥१७०॥
विधिना प्रेरितो मर्त्यो ऽनुतिष्ठाति ततः परम् ॥
दर्शनं सिध्यतीत्येवमन्योन्याश्रय ईरितः ॥ १७१ ॥
न च यूपादिवच्छक्यं वेदेनैव समर्पणम् ॥
ऐकात्म्यस्य स्वतःसिद्धेः साध्यत्वाद्यूपवस्तुनः ॥ १७२ ॥
सिद्धं चेद्दर्शयेद्वेदः प्रसिद्धं दर्शनं तदा ॥
तन्निष्ठमेव वाक्यं स्यात् का वाऽस्य विधिशेषता॥१७३॥
तस्माद् द्रष्टव्य इत्येष प्रतिपत्तिविधिर्न हि ॥
बहिर्मुखत्वव्यावृत्तिर्विधेरर्हार्थताऽथवा ॥ १७४ ॥
नापि स्वरूपवाक्यानि विधातुं बोधमीशते ॥
विधिप्रयोजनस्यात्र दुर्निरूपत्वहेतुतः ॥ १७५ ॥

---

द् ब्रह्मणो विधिशेषतयाऽर्पणमिति तत्राह * नेति ॥ १६८ ॥
॥१६९॥१७० ॥ १७१ ॥ १७२॥ सिद्धस्यापि ब्रह्मणो यूपादिवद्विधिशेषतया समर्पणे को दोषः ? इत्याशङ्क्य कूटस्थं ब्रह्म यदि वेदो बोधयेत् तर्हि तस्योपक्रमादिषड्विधलिङ्गैस्तत्परत्वमेव स्यान्न विधिपरत्वं तदाऽस्मन्मतमेव प्रकर्षेण सिद्धं भवतीत्याह * सिद्धमिति । स्वप्रधानतया प्रतीतस्यान्यशेषत्वकल्पनमनुचितमिति भावः ॥ १७३ ॥ स्वमते द्रष्टव्य इत्यादेरर्थं वदन्नाधिकाराविधिनिराकरणमुपसंहरति * तस्मादिति ॥ १७४ ॥ स्वरूपविधिमपि प्रत्याह * नापीति ॥ १७५ ॥ दुर्निरूपत्वं द-

किं विधिर्वस्तुसिद्ध्यर्थः किंवा विज्ञानसिद्धये ॥
यद्वा निश्चयसिद्ध्यर्थं विवक्षासिद्धयेऽथवा ॥ १७६ ॥
पुमर्थसिद्धये वोत निरपेक्षत्वसिद्धये ॥
पदानामन्वयार्थं वा सर्वथाऽपि न युज्यते ॥ १७७ ॥
न तावद्वस्तुसिद्ध्यर्थं क्रियते व्यापृतिर्विधेः ॥
सर्वमात्मेत्यतेव वाक्यादक्षवद्वस्तुसाधनात् ॥ १७८ ॥
आत्मा ब्रह्मेति विज्ञानं विधिं नैव व्यपेक्षते ॥
यस्मात्तच्छ्रुतवाक्यस्य स्वयमेवोपजायते ॥ १७९ ॥
यजेतेति विधिज्ञानं वाक्यात्स्यान्न विधेर्बलात् ॥
विधिज्ञाने विधेः क्लृप्तावनवस्था प्रसज्यते ॥ १८० ॥
अथैतद्विधिविज्ञानं वेदाधीतिविधेर्बलात् ॥

---

र्शयितुं विकल्पयति * किमित्यादिना ॥ १७६ ॥ १७७ ॥ आद्यं दूषयति * न तावदित्यादिना ॥ १७८॥ विधिविधुरवाक्याद्वस्तुसद्भावमात्रसिद्धावपि वस्तुनः प्रत्यगभिन्नत्वज्ञानाय विधिरिति द्वितीयकल्पं प्रत्याह * आत्मेति ॥ १७९ ॥ अधिकारिणो विध्यनपेक्षाद्वाक्यादेव ज्ञानमुत्पद्यते इत्यत्र दृष्टान्तमाह * यजेतेति। ननु स्वर्गकामवाक्ये यागकार्यताज्ञानमपि विधिमपेक्ष्यैव जायत इति चेत्, किं तदेतद्वाक्यस्थमपि विधिमपेक्ष्य जन्यते विध्यन्तरं वा अध्ययनविधिं वा ? । नाद्य इत्याह *न विधेरिति । "यागः इष्टसाधनम्" इति वाक्यादपि तज्ज्ञानोत्पत्तिदर्शनादिति भावः । * विधीति । तत्रापि विध्यन्तरं विना तदर्थज्ञानायोगादिति भावः ॥ १८० ॥ तृतीयमुत्थापयति * अथेति । यद्यपि वाक्यस्य स्वार्थबोधकत्वं नान्यापेक्षं तथापि तदभ्युपेत्य अध्ययनविधेः काण्डद्वयसाधारणत्वात्तेनैवा-

तर्ह्यात्मबोधस्तेनैव विहितो नात्र तद्विधिः ॥ १८१ ॥
स्वपरोभयनिर्वाहसामर्थ्याङ्गीकृतेरिह ॥
वेदाधीतिविधेरर्थज्ञाने विध्यन्तरं न हि ॥ १८२ ॥
वस्तुतस्त्वर्थबोधो न कञ्चिद्विधिमपेक्षते ॥
मानस्य मेयबोधित्वस्वाभाव्यादक्षलिङ्गवत् ॥ १८३ ॥
अथ निश्चयसिद्ध्यर्थं विधिरित्येतदप्यसत् ॥
स निश्चयो वः किं शब्दादुतान्यस्मादितीर्यताम्॥१८४॥
शब्दाच्चेन्निश्चयो जातो विधिस्तत्र निरर्थकः ॥
अन्यस्मान्निश्चयः स्याच्चेत्सापेक्षत्वं प्रसज्यते ॥ १८५ ॥
अथार्थस्य विवक्षार्थं विधिरित्यप्यसङ्गतम् ॥
स्वतो विवक्षितार्थाः स्युः शब्दा असति बाधके॥१८६॥
विध्यर्थस्य विवक्षार्थमन्यथाऽन्यो विधिर्भवेत् ॥
विवक्षा लौकिकेऽप्यर्थे दृश्यते हि विधिं विना॥१८७॥
मतं पुमर्थसिद्ध्यर्थं ज्ञानस्य विधिरिष्यते ॥

---

त्मज्ञानोत्पत्तेर्नात्र विधिकल्पनामित्याह * तर्हीति ॥ १८१ ॥ अधीतिविधेरप्यन्याशङ्कां वारयति * स्वपर इति ॥ १८२ ॥ अभ्युपगमं त्यजति * वस्तुत इति । अन्यथाऽधीतिविधेरप्यन्यापेक्षा दुर्वारेति भावः ॥ १८३ ॥ शब्दाद् ब्रह्मज्ञाने जातेऽपि विषयनिश्चयाय विधिना प्रवर्त्यते पुमानिति तृतीयकल्पमनुभाष्य दूषयति * अथेति द्वाभ्याम् ॥ १८४ ॥ १८५ ॥ वाक्यस्य वस्तुनि तात्पर्यज्ञाने विधिः कल्प्यत इति चतुर्थमनूद्य प्रत्याह * अथार्थस्येत्यादिना ॥ १८६ ॥ १८७ ॥ पञ्चमकल्पमुत्थापयति * मतमिति । यागादौ फलस्य विध्यधीनत्वाद् ब्रह्मज्ञानस्यापि फलत्वोपगमात्पुमर्थसिद्धये विधिः तदनभ्यु-

फलस्य विध्यधीनत्वादुपेक्षाफलताऽन्यथा ॥ १८८ ॥
ज्ञेयव्यक्त्यतिरेकेण न विज्ञानात्फलान्तरम् ॥
इष्यते, कर्मवन्नातस्तदर्थं विधिकल्पना ॥ १८९ ॥
कर्मणो बोधमात्रेण न स्वर्गः प्राप्यते पितुः ॥
अनुष्ठानात् अतस्तत्रानुष्ठानाय विधिर्मतः ॥ १९० ॥
तत्त्वावबोधमात्रेण मुक्तिः सिद्धा न तत्र तु ॥
अनुष्ठानं किमप्यस्ति किमर्था विधिकल्पना ॥ १९१ ॥
ज्ञेयाभिव्यक्तिरेवात्र फलं सा च प्रमाणजा ॥
न वैधीति पुमर्थोऽत्र सिद्ध्यत्येव विधिं विना ॥१९२॥
अथ मान्तरसापेक्षा सिद्धवाक्यस्य मानता ॥
निरपेक्षं विधेर्मात्वं तदर्थो विधिरित्यसत् ॥ १९३ ॥
वस्तु मान्तरयोग्यं चेद्विधौ सत्यपि तत्तथा ॥
हरीतकीं भक्षयेति विधिर्मूलमपेक्षते ॥ १९४ ॥
आयुर्वेदवचो मूलं विधेर्विहितभक्षणे ॥
तदपेक्ष्य भिषक्प्रोक्तविधिः प्रामाण्यमाव्रजेत् ॥१९५॥
वस्तु चेन्मान्तरायोग्यमविधौ च प्रमा वचः ॥

---

पगमे तस्याविवक्षितफलता स्यादित्यर्थः ॥ १८८ ॥ वाक्यादखण्डाकारबोधोत्पत्तिमात्रेण सकलपुरुषार्थसिद्धेर्न तदर्थं तत्र विधिरिति दूषयति * ज्ञेयेति ॥ १८९ ॥ कर्मवदित्युक्तदृष्टान्तं विवृण्वन्दार्ष्टान्तिकमपि स्पष्टयति * कर्मण इत्यादिना ॥ १९० ॥ १९१ ॥ १९२ ॥ वेदान्तानां मानान्तरानिरपेक्षत्वाय विधिरिति पक्षमनूद्य दूषयति * अथेति ॥ १९३ ॥ वाक्यस्य सापेक्षत्वनिरपेक्षत्वे प्रतिपाद्यवस्तुनो मानान्तरयोग्यत्वायोग्यत्वकृते न तस्य सिद्धत्वसाध्यत्वकृते इत्युदाहरणमुखेन प्रतिपादयति * वस्त्वित्यादिना ॥ १९४ ॥ १९५ ॥

सहस्राक्षो गोत्रभिच्चेत्ययं मन्त्रः स्वतः प्रमा ॥१९६॥
अद्वैतं मानतरायोग्यं वेदो दोषविवर्जितः ॥
अतस्तद्बोधिवेदस्य निरपेक्षप्रमाणता ॥ १९७ ॥
न चान्वयो विध्यपेक्षः क्रियामात्रेण सिद्धितः ॥
तत्त्वमस्यादिवाक्येषु साऽस्त्येवास्यादिका क्रिया॥१९८॥
पराभिमतसत्ताऽत्र नासिशब्दार्थ इष्यते ॥
सत्ताजातेर्जडत्वेन चिदात्मत्वविरोधतः ॥ १९९ ॥
नाभूतं भवनं चार्थो नित्यत्वादात्मवस्तुनः ॥
चिद्रूपमेव शून्येन वैलक्षण्यात्सदुच्यते ॥ २०० ॥
शब्दाद्यगोचरोऽप्यर्थो लक्षणापाश्रयात् श्रुतौ ॥
सदित्यादिपदैः साक्षादात्माऽस्माकमितीर्यते ॥२०१॥

---

१९६ ॥ फलितमाह * अद्वैतमिति ॥ १९७ ॥ पदानामन्वयसिद्धये विधिरिति सप्तमं दूषयति * न चेति । * क्रियामात्रेणेति । विधिं विनेत्यर्थः । यद्यपि क्रियां विनाऽपि "अयमात्मा ब्रह्म"इत्यादावभेदान्वयः सिध्यति अथाप्यगत्येदमुक्तमिति ध्येयम् ॥ १९८ ॥ तत्त्वमस्यादिवाक्यस्य क्रियाकारकानेकार्थबोधित्वे ऽखण्डार्थत्वक्षतिरित्याशङ्क्य क्रियापदवाच्यत्वेनाभिमतसत्तादेरभेदान्वयायोग्यस्य तदर्थत्वेनानभ्युपगमान्नोक्तदोष इत्यभिसन्धायाह * परेत्यादिना ॥ १९९ ॥ अस्यादिशब्दस्य कस्तर्ह्यभिमतोऽर्थः ? तत्राह * चिद्रूपमिति ॥२००॥ अन्यवाचकशब्दस्य कथमन्यबोधकत्वं ? तत्राह * शब्देति । निःसामान्यविशेषे ब्रह्मणि शक्तिग्रहायोगात्सर्वपदार्थानां तत्र लक्षणावृत्तिरिष्टा ततः क्रियापदमपि लक्षणया सत्यत्वं बोधयतीत्यर्थः ॥ २०१॥ वृत्तानुवादपूर्वकं ज्ञाने विधिर्नास्तीत्यत्र दूषणान्तरमाह * उत्पत्तावित्यादिना । अत्र क-

उत्पत्तावधिकारे च यद्विधिद्वयमीरितम् ॥
कर्मदृष्टान्तसाम्येन न तद्युक्तमुदीरितुम् ॥ २०२ ॥
कर्मस्वरूपबोधे हि व्यापारो नेष्यते विधेः ॥
किं तु बुद्धमनुष्ठातुं पुरुषं प्रेरयेद्विधिः ॥ २०३ ॥
तथाऽऽत्मतत्त्वबोधेऽपि न काचिद्व्यापृतिर्विधेः ॥
कर्मस्थानीय आत्मा हि नानुष्ठेयः कदाचन ॥ २०४ ॥
व्रीह्यादिविषयं यद्वद्यत्नेनापि निरूपितम् ॥
प्रत्यक्षज्ञानमीषच्च न विधिस्पर्शमर्हति ॥ २०५ ॥
नात्मबोधस्तथा वेदवाक्यजन्यो विधिं स्पृशेत् ॥
किन्त्वैन्द्रियकविज्ञानमिव सिद्धार्थनिष्ठतः ॥ २०६ ॥
एवं च सति वेदान्ता ब्रह्मतत्त्वमलौकिकम् ॥
प्रबोधयन्ति विध्वस्तनिखिलद्वैतमव्ययम् ॥ २०७ ॥
ऐकात्म्यवस्तुयाथात्म्यप्रकाशनपटीयसः ॥
वचसस्त्वतिरेकेण किं मानं तद्धुरं वहेत् ॥ २०८ ॥
शाब्दज्ञानविधावेवं वेदान्तेषु निराकृते ॥
अपरे पण्डितम्मन्या विध्यन्तरमिहोचिरे ॥ २०९ ॥
अन्योऽप्यनुभवोपायो मननध्यानलक्षणः ॥

---

लिपतो विधिः कृत्यसाध्ये स्वविषये पुरुषं प्रेरयितुमशक्तः सन्निष्फलो भवतीति समुदायार्थः ॥ २०२ ॥ २०३ ॥ २०४ ॥ ॥ २०५ ॥ २०६ ॥ वेदान्तजन्यज्ञानस्य व्रीह्यादिविधिसंस्पर्शमन्तरेण सिद्धार्थनिष्ठत्वे फलितमाह * एवं चेति ॥ २०७ ॥ निर्धर्मब्रह्मणि मानान्तराप्रवृत्तेश्च तस्य वेदान्तैकवेद्यतेत्याह * ऐकात्म्येति ॥ २०८ ॥ वृत्तानुवादपूर्वकं ज्ञाने विधिर्नास्तीत्यत्र चतुष्पान्मानवादमुत्थापयति * शाब्देति ॥ २०९ ॥ किं तद्विध्यन्तरं ? तत्राह * अन्य इति । अनुभवः साक्षात्कारः सो-

सोपायो विहितोऽस्त्येव प्रतिपत्तिविधिं विना॥२१०॥
अवान्तरमहावाक्यरूपात् सिद्धार्थबोधकात् ॥
शास्त्राद्ब्रह्मात्मतामादौ पुरुषः प्रतिपद्यते ॥ २११ ॥
तत्त्वे शास्त्रात्प्रपन्नेऽपि पारोक्ष्यानपहारतः ॥
तत्साक्षात्करणायैव प्रसङ्ख्यानं विधीयते ॥ २१२ ॥
आवृत्तिर्हि प्रसङ्ख्यानं शब्दयुक्त्योरिदं त्विह ॥
मननध्यानरूपत्वात्साक्षात्कारयितुं क्षमम् ॥ २१३ ॥
प्रमाता मापकः शब्दो युक्तिरावृत्तिरित्यमी ॥
चत्वारोऽपि प्रमाणस्य पादा ऐकात्म्यदर्शकाः॥२१४॥
प्रत्येकं प्रमितेर्वृद्धिः पादैरेतैः क्रमाद्भवेत् ॥
वृद्धेर्विश्रामभूमिर्या सा साक्षात्कृतिरीर्यते ॥ २१५ ॥
साक्षात्कृतात्मयाथात्म्यः प्रसङ्ख्यानं न वीक्षते ॥
नदीमुत्तीर्य नो कश्चिन्नावं कुत्राप्यपेक्षते ॥ २१६ ॥
सम्भूय पादाः सर्वेऽपि ह्यैकात्म्यं बोधयन्त्यमी ॥

---

पायः शमाद्यङ्गसहितः ॥ २१० ॥ वेदान्तानां विधिपरत्वे वस्तुसिद्धिः कथमित्याशङ्क्य तेषां ब्रह्मात्मैक्यपरत्वं तावदाह * अवान्तरेति ॥ २११ ॥ शास्त्रात्तत्प्रतिपत्तौ पुनः किं विधिनेति तत्राह * तत्त्व इति ॥ २१२ ॥ किं तत्प्रसङ्ख्यानमिति वीक्षायां तदर्थं वदन् तस्य साक्षात्कारहेतुत्वमाह * आवृत्तिरिति । विदिततत्त्वस्याहं ब्रह्मेति शब्दवृत्तिरेव ध्यानमिति भावः ॥ २१३ ॥ मानहेतुकतत्त्वसाक्षात्कारस्य कथं ध्यानादिजन्यतेत्याशङ्क्य मानस्य चतुष्पात्त्वं दर्शयन्ध्यानादेरपि तत्पादत्वमाह * प्रमातेति । मापकः प्रमापकः । आवृत्तिर्ध्यानम् ॥ २१४ ॥ पादचतुष्टयस्यापि दर्शनहेतुत्वं व्यतिरेकेणाह

तैलवर्त्यग्नयो यद्वद्दीपं सम्भूय कुर्वते ॥ २१७ ॥
प्रमातारं विना शास्त्रं कस्य स्वार्थावबोधकृत् ॥
प्रमाताऽपि विना शास्त्रं केनार्थमवबुध्यते ॥ २१८ ॥
संसर्गकल्पनाशून्यमप्यैकात्म्यं प्रबोधयेत् ॥
अतद्व्यावृत्तितः शास्त्रं संसृष्टार्थाभिधाय्यपि ॥२१९॥
यतो वाचो निवर्तन्ते इति श्रुत्यैव दर्शितम् ॥
व्यपास्ताशेषसंसर्गकल्पनं ब्रह्म निर्भयम् ॥ २२० ॥
बोधयित्वाऽपि चैकात्म्यं नान्तरा पर्यवस्यति ॥
आपुमर्थावधेः शास्त्रमप्रामाण्यभयात्स्फुटम् ॥२२१॥
परोक्षवृत्त्या शब्दो हि वदन् स्वार्थं स्वभावतः ॥
सम्भावयन्प्रमाणत्वं युक्तिं स्वीकृत्य वर्तते ॥ २२२ ॥
न वस्तुदर्शने शक्ता धूमवद्वह्निवीक्षणे ॥

---

* प्रमातारमिति ॥ २१५ ॥ २१६ ॥ २१७ ॥ २१८ ॥ संसृष्टार्थवाचिनः शास्त्रस्य कथं निर्विशेषवस्तुबोधकत्वं ? तत्राह *संसर्गेति । अतद्व्यावृत्तित इत्युपलक्षणम् । लक्षणया विधिमुखेन चेति द्रष्टव्यम् ॥ २१९ ॥ संसर्गकल्पनाशून्यमैकात्म्यमित्यत्र मानमाह * यत इति ॥ २२० ॥ शास्त्रान्निष्प्रपञ्चात्मबोधे किं युक्त्या तत्राह *बोधयित्वेति द्वाभ्याम् ॥ परोक्षज्ञानजनकः शब्दस्तन्मात्रस्यापुमर्थत्वादपुमर्थे च स्वस्य प्रामाण्यायोगादसम्भावितदोषतया स्वप्रामाण्यं सम्भावयन् साक्षात्कारफलाय युक्तिं स्वीकरोतीत्यर्थः ॥२२१॥२२२॥ तर्हि युक्त्यैवालं किं प्रसङ्ख्यानेनेत्यत्राह *नेति । सा युक्तिः शास्त्रसहिताऽपि साक्षात्कारे न क्षमते, द्वयोरपि परोक्षवृत्तित्वाविशेषात्, यथा धूमो वाक्यसहायोऽपि साक्षाद्वह्निं न बोधयति एवमेषा युक्तिर्ध्यानमपि सहकारि-

आपरोक्ष्याय सा युक्तिः प्रसङ्ख्यानमपेक्षते ॥ २२३ ॥
लोके दर्शनसम्बद्धं प्रसङ्ख्यानं समीक्षितम् ॥
वेदेऽपि किं तथा तत्स्यान्न वेत्येतद्विधीयते ॥ २२४ ॥
सामान्येनौषधं यद्वज्ज्वरनाशोपलक्षितम् ॥
दृष्टं कष्टतरे ऽप्येतद्विशेषेणोपदिश्यते ॥ २२५ ॥
यद्यप्यात्मेक्षणाख्यं तत्फलं क्वापि न वीक्षितम् ॥
अथापि विध्यवष्टम्भात्प्रसङ्ख्यानात्फलं भवेत् ॥२२६॥
चित्रया पशुकामोऽयं यजेतेति विधेर्बलात् ॥
फलं निश्चिनुते यद्वत्तद्वदत्रावगम्यताम् ॥ २२७ ॥
विधिं विना श्रुतैकात्म्यस्तदर्थानुभवादृते ॥

---

त्वेनादाय वस्तु बोधयतीत्यर्थः ॥ २२३ ॥ ननु प्रसङ्ख्यानस्य साक्षात्कारहेतुत्वे सिद्धे तस्य सहकारित्वं कल्प्येत तदेवासिद्धमत आह * लोक इति । लोके गांधर्वशास्त्रादौ दर्शनफलेन साधनतया सम्बद्धं प्रसङ्ख्यानं दृष्टं तद्वद्वेदेऽपि दर्शनसाधनं न वेति विशये लोकवदेव दर्शनहेतुत्वेन प्रसङ्ख्यानं विधीयते इत्यर्थः ॥ २२४ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति* सामान्येनेति । यथौषधं कषायपानादि साधारण्येन ज्वरनिवर्तकं लोके दृष्टमेव विषमज्वरनिवर्तकत्वेन सम्भावनयाऽप्युपदिश्यते तद्वदित्यर्थः ॥ २२५ ॥ नन्वेवमप्यात्मसाक्षात्कारहेतुत्वेन अनिश्चिते प्रसङ्ख्याने तदर्थिनां कथं निष्कम्पप्रवृत्तिरत आह *यद्यपीति ॥ २२६ ॥ विधेः फलनिश्चायकत्वं दृष्टान्तेन स्पष्टयति * चित्रयेति ॥ २२७ ॥ उक्तविध्यनङ्गीकारे बाधकमाह * विधिमिति ॥ प्रसङ्ख्यानाख्यानुभवोपायानभ्युपगमे तदितरोपायस्याज्ञातत्वाच्छास्त्रमात्रात्तदर्थानुभवाभावात्त-

उपायाङ्गतया कुर्यात् तच्छास्त्रस्यार्थवादताम् ॥२२८॥
विध्येकनिष्ठे शास्त्रेऽपि वस्त्वसिद्धेः प्रमाणतः ॥
देवताध्यानवद्ब्रह्मविजन्मन्येतत्फलं भवेत् ॥ २२९ ॥
मानेन विषयासिद्धौ तद्दिदृक्षावियोगतः ॥
प्रसङ्ख्यानविधावस्मिन्नाधिकार्यपि को भवेत् ॥२३०॥
श्रुतात्मतत्त्ववृत्तस्याननुभूतमपि स्वकम् ॥
स्थानकं वाञ्छतः शास्त्रात्प्रसङ्ख्यानं विधीयते॥२३१॥
एवं चैकात्म्यतत्त्वेऽस्मिन्प्रसङ्ख्यानविधावपि ॥
तात्पर्यं स्याद्विशिष्टत्वाद्वाक्यभेदोऽपि नापतेत् ॥२३२॥
श्रवणं शाब्दविज्ञाने यथोपायस्तथा द्वयम् ॥
अनुभूतौ च मनननिदिध्यासनरूपकम् ॥ २३३ ॥

---

स्यामानतामापादयतीत्यर्थः ॥ २२८ ॥ तर्हि विधिनिष्ठमेवास्तु शास्त्रं तत्राह * विधीति ॥ शास्त्रस्यैक्यपरत्वाभावे तस्य मानान्तरविरोधेनासिद्धेस्तद्ध्यानस्य प्रतीकदृष्ट्यादेरिव पुण्यलोकादिफलता स्यादित्यर्थः ॥ २२९ ॥ किञ्च शास्त्रेण विषयासिद्धौ तत्साक्षात्कारेच्छाऽयोगात्तद्वतः प्रसङ्ख्यानविधिरेव न स्यादित्याह * मानेनेति ॥ २३० ॥ विषयासिद्धौ न विधिरिति व्यतिरेकमुक्त्वा ऽन्वयमाह * श्रुतेति । अननुभूतम् अप्रत्यक्षीकृतम् । स्थानकं स्वरूपम् । वाञ्छतः साक्षात्कर्त्तुमिच्छतः॥२३१॥ नन्वेवमुभयपरत्वे वाक्यभेदः स्यादित्याशङ्क्य प्रसङ्ख्यानरूपव्यापारेऽवान्तरतात्पर्यद्वारा शास्त्रस्य स्वार्थबोधित्वान्न वाक्यभेद इत्याह *एवमिति ॥२३२॥ दृष्टान्तपूर्वकं विधिद्वयस्यावश्यकतामुपसंहरति * श्रवणमित्यादिना । द्वितीयस्यानुभवोपायत्वात्तमेवेत्यादिवाक्यस्य प्रसङ्ख्यानपरत्वमङ्गीकार्यमित्यर्थः ॥ २३३ ॥

) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २

) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं असम्पूर्णम् ( वेदान्तः ) २

) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २

) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । २

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्कस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... १०

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रव-

र्तिकृता । श्रीगङ्गेशोपाध्यायविरचित-
तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरो-
मणिविरचितदीधित्या च गर्भिता। २

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणि-
ता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्या-
ख्यव्याख्ययातथासोमनाथकृतया मयुख-
मालिकया च व्याख्यया समलङ्कृता। ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा। श्रीमदुपा-
ध्यायोपनामक श्रीनागेशभट्टविरचिता।
श्रीमद् दुर्बलाचार्यविरचितकुञ्जिकाटीका-
श्रीमद्बालम्भट्टविरचितकलाटीका-इति
टीकाद्वयसंवलिता। ... २

(४७) व्याकरणसिद्धान्तसुधानिधीः।
पर्वतीय विश्वेश्वरसूरिविराचितः। १

(४८) वीरमीत्रोदयः। लक्षणप्रकाशः। महामहो-
पाध्यायश्रीमित्रमिश्रविरचितः। ४

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्वियारण्यस्वा-
मिविरचितः। महेश्वरतीर्थकृतयालघुसं-
ग्रहाख्यया टीकयासमलंकृतः। २

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी।

*February* *1915.*

THE

# CHOWKHAMBA SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINRY SANSKRIT WORKS.

## NO. 206.

# बृहदारण्यकवार्तिकसारः

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

## BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS II-२

*PUBLISHED & SOLD BY THE SECRETARY*,

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.

AGENTS:—

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—:o:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२०६

१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवक एक एव ग्रन्थो मुद्रयते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्रयन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ "

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

---

साम्प्रतं मुद्रयमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०
(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम्। श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्- वादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणानिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण(वेदान्तः)१
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत तत्त्ववित् ॥
इत्यादिना प्रसङ्ख्यानं विधेयमनुभूयते ॥ २३४ ॥
एवमैकात्म्यतात्पर्ये शास्त्रस्येष्टेऽपि युक्तिभिः ॥
केचित्कार्यमपीच्छन्ति तदेतन्नैव युज्यते ॥ २३५ ॥
किमात्मभासनायासावापरोक्ष्याय वाऽथवा ॥
व्यवधानापनुत्त्यर्थं मानजन्यफलाय वा ॥ २३६ ॥
भानलोपस्य शङ्कापनुत्त्यर्थं वोत मुक्तये ॥
सर्वथापि प्रयासस्ते विध्यर्थोऽत्यन्तनिष्फलः ॥२३७॥
प्रमात्रादित्रयं यस्मात्संविन्मात्रवपुर्भृतः ॥
भाति पूर्वमभातं सत्तज्ज्ञाने किमपेक्ष्यते ॥ २३८ ॥
अहङ्कारः प्रमाता स्याद्धीवृत्तिर्मानमुच्यते ॥
घटादिकं प्रमेयं स्याच्चिद्भासा भाति तत्त्रयम् ॥२३९॥
परोक्षमपि देहादि यस्य भासा ऽऽपरोक्ष्यभाक् ॥
विभात्यात्मेव तस्य स्यादापरोक्ष्यमहेतुकम् ॥२४०॥
अज्ञानमपि निःशेषप्रमेयव्यवधानकृत् ॥

---

॥ २३४ ॥ २३५ ॥ अयुक्तत्वं दर्शयितुं विकल्पयति * किमिति । यद्यपि साक्षात्काराय विधिरित्युक्तं तथापि शाखाचङ्क्रमणव्यावृत्त्यर्थो विकल्प इति बोध्यम् ॥ २३६ ॥ २३७ ॥ आद्यं प्रत्याह *प्रमात्रेति *संविदिति । चिदेकरसस्येत्यर्थः । पूर्वमभातं जडम् ॥ २३८ ॥ उक्तार्थं स्पष्टयति *अहमिति ॥२३९॥ द्वितीयं प्रत्याह * परोक्षमिति ॥ अतीन्द्रियमप्यहङ्कारादिर्यत्सम्बन्धात्साक्षादिवात्मेव च स्फुरति, स स्वतोऽपरोक्ष इत्यर्थः ॥ २४० ॥ तृतीयं निरस्यति । * अज्ञानमिति । चतुर्थेऽपि फलशब्देनात्मप्रकाशनमज्ञाननिवृत्तिरन्यद्वा विवक्षितमिति विक-

येनाव्यवहितं भाति तत्केन व्यवधीयते ॥ २४१ ॥
स्वमाहिम्नैव यः सिद्धस्तत्तमो हन्ति शास्त्रधीः ॥
किं ततोऽन्यत्फलं मानजन्यं यद्विधितो भवेत् ॥२४२॥
मात्रादित्रयलोपेऽपि लोपसाक्षितयेष्यते ॥
यो ऽसावलुप्तचैतन्यस्तल्लोपः शङ्क्यते कथम् ॥२४३॥
ऐकात्म्यस्य स्वतो मुक्तेरज्ञानात्तस्य बाध्यता ॥
ज्ञानादज्ञानहानौ स्यात्किमपेक्ष्यं विमुक्तये ॥ २४४ ॥
तमोमात्रान्तरायत्वादैकात्म्याख्यस्य वस्तुनः ॥
असाध्यसाधने तस्मिन्का ऽपेक्षा भावनां प्रति॥२४५॥
यदाऽनुभवकामस्य कार्यत्वेन प्रतीयते ॥
प्रसङ्ख्यानं तदैकात्म्यतात्पर्यं कथमुच्यते ॥ २४६ ॥
युक्तं नैकस्य शास्त्रस्य तात्पर्यं कार्यसिद्धयोः ॥
द्वयस्यापि प्रधानत्वाद्वैशिष्ट्यं नैव सम्भवेत् ॥२४७॥

---

ल्प्य क्रमेण दूषयति * स्वेति ॥ २४२ ॥ पञ्चममपवदति *मात्रादीति ॥ २४३॥ षष्ठं दूषयति * ऐकात्म्यस्येति । मुक्तेः स्वतःसिद्धत्वे ज्ञानवैयर्थ्यं तत्राह * अज्ञानादिति ॥ २४४ ॥ उक्तमेवार्थं स्पष्टयति * तम इति ॥ २४५ ॥ एवं विधेः प्रयोजनवत्त्वं निरस्य तदङ्गीकारे बाधकमप्याह * यदेति । साक्षात्कारमाकाङ्क्षतो यदा प्रसङ्ख्याने विधिर्निश्चितस्तदा न वेदान्तानामैकात्म्ये तात्पर्यं तेषामुक्तविधिपरत्वादित्यर्थः ॥ २४६ ॥ उभयपरत्वमुक्तं धुनीते * युक्तमिति । न चास्य प्रसङ्ख्यानद्वारा वस्तुबोधकत्वं भूतभव्यन्यायेन साध्यस्यैव प्राधान्यादैक्यसिद्धौ तत्परत्वाङ्गीकाराच्चेत्याह * द्वयस्यापीति ॥ २४७ ॥ ज्ञातेऽपि तत्त्वे पारोक्ष्यानपहारात्तत्साक्षात्काराय

ब्रह्मात्मत्वं यदि ज्ञातं कुतस्तर्हि परोक्षता ॥
न ह्यात्मनः परोक्षत्वं मूढोऽपि प्रतिपद्यते ॥ २४८ ॥
मितेर्वृद्धिर्मेयवृद्धौ तद्वृद्धिर्मितिवृद्धितः ॥
इत्यन्योन्याश्रयत्वेन मितिवृद्धिः कथं तव ॥ २४९ ॥
पादानामपि सम्भूय न युक्ता दर्शनार्थता ॥
सम्भूयकारितोत्पत्तौ दृष्टा न त्ववभासने ॥ २५० ॥
तैलवर्त्यग्नयोऽप्येते प्रदीपोत्पत्तिकारणम् ॥
जातात्मलाभो दीपोऽर्थं स्वयमेव प्रकाशयेत् ॥२५१॥
अतः सम्भूयकारित्वं यदि वाञ्छि तदोच्यताम् ॥
मानस्वरूपलाभाय, न तु मेयोपलब्धये ॥ २५२ ॥
मानपादत्वमप्येषां मात्रादीनामसङ्गतम् ॥
प्रमातुर्मानपादत्वे मानं स्यादप्रमातृकम् ॥ २५३ ॥
प्रमाणादतिरिक्तो यो मेयं मानेन बुध्यते ॥

---

विधिरित्युक्तं दूषयति * ब्रह्मेति ॥ २४८ ॥ यदुक्तं प्रमितेर्वृद्धिरित्यादि तत्प्रत्याह * मितेरिति । विषयगतातिशयमन्तरेण स्वतो ज्ञाने ऽतिशयायोगात्तस्य च ज्ञानातिशयपूर्वकत्वात्किमपि न सिध्यतीत्यर्थः ॥ २४९ ॥ यदुक्तं तैलवर्त्यग्निदृष्टान्तेन पादचतुष्टयस्य मिलित्वा बोधकत्वमिति, तत्र पादानां सम्भूय ज्ञानोत्पादकत्वेऽपि नाविद्यानिवर्तकत्वमित्याह * पादानामित्यादिना । मानस्वरूपलाभाय ज्ञानोत्पत्तये । तच्च शब्दमात्रादेव भवतीति भावः ॥२५०॥२५१॥२५२॥ मात्रादीनां मानपादत्वमङ्गीकृत्य दूषणमुक्तम्, अङ्गीकारं परित्यजति *मानेति । मातुः करणकोटिनिवेशे कर्त्रभावात्कार्याभावः तद्भिन्नत्वे मानपादत्वव्याघात इति दूषयति *प्रमातुरिति ॥ २५३ ॥

स प्रमाता कथं तस्य मानपादत्वमुच्यते ॥ २५४ ॥
द्वितीयपादः शब्दाख्य ऐकात्म्यं बोधयेन्न वा ॥
अबोधे मानपादत्वं केन द्वारेण गच्छति ॥ २५५ ॥
बोधे तु तावतैवात्र पुमर्थस्य समाप्तितः ॥
अप्रामाण्यभयं कस्माद्येन युक्तिमपेक्षते ॥ २५६ ॥
परोक्षत्वेन शास्त्रेण बुद्धं नत्वनुभूयते ॥
अप्रामाण्यभयं तस्मादिति चेद्युज्यते न तत् ॥२५७॥
मेयस्वभावात्पारोक्ष्यं किं वा शब्दस्वभावतः ॥
आद्ये किं ब्रह्मता तत्र परोक्षा स्यादुतात्मता ॥२५८॥
यत्साक्षादपरोक्षं तद् ब्रह्मेति ब्रह्मणः श्रुतौ ॥
मुख्यापरोक्ष्यमुदितं पारोक्ष्यं शङ्क्यते कुतः ॥२५९॥
आत्मनस्तत्र पारोक्ष्यं पूर्वमेव निराकृतम् ॥
शब्दः स्वयमुदासीनः परोक्षत्वापरोक्ष्ययोः ॥ २६० ॥
देशादिभिर्व्यवहितं पारोक्ष्येणावबोधयेत् ॥
इतरत्त्वापरोक्ष्येण दशमस्त्वमसीतिवत् ॥ २६१ ॥
देशात्कालाद्वस्तुतो वा व्यवधानं मनागपि ॥

---

॥ २५४ ॥२५५॥२५६॥यदुक्तं परोक्षवृत्त्या शब्दो हीत्यादिना तदनुभाष्य दूषयति * परोक्षत्वेनेत्यादिना । परोक्षत्वेन बुद्धमित्यन्वयः ॥ २५७ ॥ २५८ ॥ २५९ ॥ तत्त्वमस्यादिवाक्यं परोक्षजनकं वाक्यत्वाज्ज्योतिष्टोमादिवाक्यवदित्याशङ्क्य देशादिव्यवहितबोधित्वमुपाधिः दशमस्त्वमसीत्यादिवाक्ये व्यभिचारश्चेति अभिप्रेत्याह*देशादिभिरिति ॥ २६० ॥ २६१ ॥ तस्य साधनाव्यापकतामाह * देशादिति ॥ २६२ ॥ शब्दस्य नियमेन परोक्षबोधित्वे बाधकमाह * नियतमिति । अपरोक्षं

ऐकात्म्यवस्तुनो नास्ति तत्र पारोक्ष्यधीः कुतः ॥२६२॥
नियतं यदि शास्त्रस्य पारोक्ष्येणैव बोधनम् ॥
न तर्हि तत्त्वधीः शास्त्राद्याथात्म्यानवबोधकात् ॥२६३॥
परोक्षे बुद्ध ऐकात्म्ये वस्तुसिद्धिर्न तावता ॥
अनश्वरूपे बुद्धेऽपि गव्यश्वो न हि सिद्ध्यति ॥२६४॥
ततः शास्त्रात्तत्त्वधीश्चेन्न परोक्षतयैव धीः ॥
उदेति तेन युक्त्यादिपादद्वयमनर्थकम् ॥ २६५ ॥
व्यपास्तानर्थसंदर्भमात्मानमवगच्छतः ॥
किमाप्यमाधिकं तत्र येन युक्त्याद्यपेक्षते ॥ २६६ ॥
का वा युक्तिः प्रदीपस्य सर्पादिभयनाशकम् ॥
रज्ज्वादितत्त्वविज्ञानं कुर्वतः सहकारिणी ॥ २६७ ॥
शब्देन ज्ञाप्यते यद्वत्तथैव यदि युक्तिभिः ॥

---

वस्तु परोक्षत्वेन बोधयतः शब्दस्याप्रमाणत्वं स्यादिति भावः ॥२६३॥ ननु शास्त्रम् अपरोक्षविलक्षणं वस्तु बोधयत्प्रतियोगित्वेनापरोक्षमपि बोधयिष्यति अतस्तत्प्रामाण्यमित्याशङ्क्याह * परोक्ष इति । तत्र दृष्टान्तमाह * अनश्वेति । अश्वविलक्षणे गवि प्रत्यक्षसिद्धेऽपि न ततोऽश्वमितिः तथा परोक्षेऽर्थे शाब्देऽपि न प्रतियोगिनः शाब्दत्वमतः शब्दाद्वस्त्वसिद्धेस्तदप्रामाण्यमेवेत्यर्थः ॥२६४॥ शब्दस्य परोक्षवृत्तित्वानियमे फलितमाह *तत इति ॥२६५॥ किञ्च शास्त्रं वस्तु ज्ञापयित्वा फलसिद्ध्यर्थमन्यदपेक्षते स्वार्थबोधने वा ? नाद्यः, वस्तुज्ञानादधिकफलाभावादित्याह* व्यपास्तेति ॥ २६६ ॥ द्वितीयं दृष्टान्तेन निराह * कावेति ॥ २६७ ॥ अपिच यावानर्थः शब्देन भास्यते तावानेव युक्त्यादिभिरन्यो वा ? नाद्य इत्याह * शब्देनेति । शाब्देऽर्थे

व्यर्थताऽथ विशेषश्चेत्सम्प्राप्ता भिन्नमानता ॥ २६८ ॥
स्वप्नादियुक्तिभिश्चेत्तल्लौकिकीभिः प्रसाध्यते ॥
अवैदिकं भवेद्वस्तु स्याच्च शास्त्रानुवादता ॥ २६९ ॥
वैदिकत्वेऽपि युक्तीनामागमार्थप्रधानतः ।
अनुवादत्वमेव स्यात्स्याच्च शास्त्रादभिन्नता ॥ २७० ॥
चतुर्थपादआवृत्तिः कुर्यात्साऽतिशयं कथम् ॥
न ह्यावृत्तौ प्रमाणस्य प्रमेयेऽतिशयो मतः ॥ २७१ ॥
यत्रापि चान्धकारादिदोषात्क्रमविनिश्चयः ।
तत्रापि भिन्नमेयत्वान्नैव सम्भूय मानता ॥ २७२ ॥

---

युक्त्यादीनामकिञ्चित्करतेत्यर्थः । द्वितीयं प्रत्याह * अथेति । मेयभेदात्तेषां सम्भूय मानताऽसिद्धिरित्यर्थः ॥२६८॥ प्रत्येकं तेषां मानत्वेऽपि लोकसिद्धाभिः स्वप्नादिसम्बद्धाभिरन्वयव्यतिरेकाख्ययुक्तिभिर्ब्रह्म भास्यते वैदिकगम्याभिर्वा ? नाद्य इत्याह * स्वप्नादीति । अवस्थात्रयं व्यभिचारान्मिथ्या, आत्माऽत्राव्यभिचारादमिथ्येत्येवमादिलौकिकयुक्तिभिर्ब्रह्म भास्यते चेदवैदिकत्वं, तत्सिद्धब्रह्मानुवादित्वे च तत्त्वमादेरनपेक्षप्रामाण्यासिद्धिरित्यर्थः ॥ २६९ ॥ द्वितीयं प्रत्याह * वैदिकत्वेऽपीति । वस्तुप्रकाशकत्वेनेष्टयुक्तीनां वेदैकगम्यत्वेऽपि तासामागमिकार्थविषयत्वेनानुवादकत्वान्न मानांशतेत्यर्थः । युक्तीनां वैदिकत्वेऽनुवादकत्वेऽपि दोषमाह * स्याच्चेति । इत्थं च चतुष्पान्मानत्वहानिरिति भावः ॥ २७० ॥ युक्तेः शब्दसहायत्वमपोह्य प्रसङ्ख्यानस्यापि तन्निरस्यति * चतुर्थेति । शब्दावृत्तिः शाब्देऽर्थे नातिशयहेतुरित्यत्र हेतुमाह * न हीति । घटादिष्वदृष्टेरिति शेषः ॥ २७१ ॥ मन्दान्धकारे दूरदेशे चावस्थितार्थेषु तदावृत्त्या क्रमेण निश्चयादावृत्तिरर्थवादित्याशङ्क्याह *यत्रेति॥२७२॥

पूर्वं वस्त्विति विज्ञातं प्राण्ययं मानुषस्तथा ॥
पुरुषोऽयमथ श्यामो डित्थ इत्यर्थभिन्नता ॥ २७३ ॥
अतः प्रमेयएकस्मिन्नावृत्तिः किं करिष्यति ॥
मितिवृद्धिर्दूषिताऽतः प्रसङ्ख्यानमनर्थकम् ॥ २७४ ॥
अनुभूतिस्तत्फलं चेत्सकृदेव कृतेर्भवेत् ॥
ऐकात्म्यानुभवोऽवश्यं शास्त्रार्थस्य कृतत्वतः॥२७५॥
अथासकृदनुष्ठानं प्रसङ्ख्यानं न चेतरत् ॥
तथापि निश्चयो न स्यादवधेरनिरूपणात् ॥ २७६ ॥
न चात्र चोदितः कालः सङ्ख्या वा येन निश्चयः ॥
तद्द्वारेण भवेन्नापि संदिग्धे स्यात्प्रवर्त्तनम् ॥२७७॥
शब्दयुक्त्योः परोक्षत्वस्वभावस्यानपायतः ॥
ताभ्यामावृत्तियुक्ताभ्यामपि नानुभवो भवेत्॥२७८॥
इत्येवं विपरीतार्थनिश्चयस्यात्र सम्भवात् ॥

---

भिन्नमेयत्वमुदाहरति * पूर्वमिति ॥ २७३ ॥ २७४ ॥ प्रसङ्ख्यानस्य मेयेऽतिशयाजनकत्वेऽपि साक्षात्कारहेतुत्वेनार्थवत्त्वं शङ्कते। * अनुभूतिरिति । किं प्रसङ्ख्यानशब्देन ध्यानमात्रं विवक्षितम् उत नैरन्तर्येण दीर्घकालध्यानं ? तत्राद्यं प्रत्याह *सकृदिति । इत्थं च फलादर्शनादावृत्तिविधायकशास्त्रमप्रमाणं स्यादित्यर्थः ॥ २७५ ॥ द्वितीयमनुवदति *अथेति । अस्मिन्नपि पक्षे "सहस्रं लक्षमासंवत्सरं वा वर्त्तयेत्" इति सङ्ख्याकालयोरवध्यनिरूपणे तद्द्वारा फलसन्देहात्तत्र प्रवृत्तिर्न स्यादित्याह *तथापीति ॥२७६॥२७७॥ फले संशयबीजमुक्त्वा विपर्ययहेतुमप्याह * शब्देति ॥२७८॥ *प्रवृत्त इति । असकृत्प्रसङ्ख्यानमनुष्ठायापि तत्त्वादर्शनरूपविसंवादेन ततो विमुखीकृतो मध्ये नि-

प्रवृत्तोऽपि निवर्तेत विसंवादपराङ्मुखः ॥ २७९ ॥
यदुक्तं विध्यवष्टम्भात्फलं भावीति तत्र ते ॥
अदृष्टफलता वैधी कल्प्याऽग्निष्टोमवद्भवेत् ॥ २८० ॥
नातो मानेन विषयं बोधितेऽन्वेषणं पुनः ॥
कार्ययुक्त्योः क्वचिद् दृष्टं स्वतःप्रामाण्यवादिनः २८१॥
प्रत्यक्षेण घटे बुद्धे का युक्तिः कार्यमेव वा ॥
नापेक्षेत तथैवात्र किमर्थाऽन्यव्यपेक्षिता ॥ २८२ ॥
अदुष्टकारणत्वं तु सिद्धं वेदे नृवर्जनात् ॥
प्रत्यक्षादिविरोधश्च पश्चात्परिहरिष्यते ॥ २८३ ॥
ऐकात्म्यानुभवोऽतः स्याच्छास्त्रादेवाविरोधतः ॥
अज्ञातज्ञापनादन्यत्कार्यं नात्रास्ति किञ्चन ॥ २८४ ॥

---

वर्तेतेत्यर्थः ॥ २७९ ॥ * अदृष्टफलतेति । अस्य ज्योतिष्टोमवि-धिवददृष्टार्थत्वे तस्य शेषित्वात्तत्परशास्त्रस्य अध्यक्षादिविरो-धवस्तुनि न मानता स्यान्मोक्षहेतुत्वसाक्षात्कारमिच्छतां ज्योति-ष्टोमादाविव तत्र न प्रवृत्तिश्चेति भावः ॥२८०॥ प्रसङ्ख्यानाद्य-पेक्षत्वे शास्त्रस्य स्वतःप्रामाण्यं हीयेतेत्याह * नेति ॥ २८१ ॥ ॥२८२॥ ननु प्रत्यक्षदृष्टेऽपि घटादौ किमिदं ज्ञानं दुष्टहेतुजं नवेति तन्निर्णयाय निकटोपसर्पणाद्यपेक्षावच्छास्त्रदृष्टेऽपि युक्त्याद्य-पेक्षा युक्तेत्याशङ्क्यापौरुषेये वेदे पुरुषद्वारकदोषाभावात्तज्ज-न्ये ज्ञाने तद्राहित्यस्य सहजत्वान्नान्यापेक्षेत्याह * अदुष्टेति । नन्वेवमपि तत्त्वमादेर्नैवानुभवहेतुत्वमक्षादिविरोधात् नियोगाङ्गी-कारे तु न तद्विरोधस्तस्य सर्वप्रमाणाद् बलवत्त्वादित्याशङ्क्याह *प्रत्यक्षेति ॥ २८३ ॥ स्वस्यानपेक्षत्वमुक्तमुपसंहरति * ऐका-त्म्येति ॥ २८४ ॥ शास्त्रस्य युक्त्यनपेक्षत्वे ऽभ्युपगमविरोधः

ननु युक्तिस्त्वयाऽपीष्टा मननाय तथा विधिम् ॥
चतुर्थाद्याधिकरणे आवृत्तेः सूत्रकृज्जगौ ॥ २८५ ॥
बाढमिष्टाऽपि सा युक्तिर्न मानांशतयेष्यते ॥
मानांशत्वे तु वेदस्य निरपेक्षत्वहानितः ॥ २८६ ॥
इतिकर्त्तव्यरूपेण वेदस्य सहकारिणीम् ॥
युक्तिमाहुर्वेदविदो न मानेऽन्तर्भवेत्ततः ॥ २८७ ॥
धर्मे प्रमीयमाणे हि वेदेन करणात्मना ॥
इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥ २८८ ॥
एवं ब्रह्मणि वेदेन मीयमानेऽत्र युक्तिभिः ॥
मेयासम्भावनाख्योऽयं पुंधीदोषो निरस्यते ॥ २८९ ॥
नैतावतोपयोगेन युक्तेर्मानत्वसम्भवः ॥
उपयुक्तोऽप्यर्थवादो विध्यर्थं न प्रमापयेत् ॥ २९० ॥
न वायोः क्षिप्रकारित्वाच्छ्वेतालम्भो विभूतये ॥

---

सूत्रविरोधश्चेति शङ्कते * नन्विति । चतुर्थाध्यायप्रथमाधिकरणे आवृत्तिविधिं जगौ "आवृत्तिरसकृदुपदेशात्" इति तां विहितवानित्यर्थः ॥२८५॥२८६॥२८७॥ प्रमाणानन्तरगतयुक्तीनां तत्सहकारित्वं दृष्टान्तपूर्वकम् उपपादयति * धर्म इत्यादिना । यथाऽग्निहोत्रादिवाक्यानां विचारेणान्यपरत्वे निरस्ते वाक्यादेव तत्प्रतीतिरेवं मृल्लोहादिदृष्टान्तैर्लौकिकतर्कैश्चासम्भावनादिपुंदोषनिवृत्तौ वाक्यादेव तत्त्वधीरुदेतीत्यर्थः । प्रतिबन्धकध्वस्त्युपयोगियुक्तीनां न मानान्तर्भावः इत्यत्र दृष्टान्तमाह । उपयुक्त इति ॥ २८८ ॥ २८९ ॥ २९० ॥ तदेव दर्शयति * नेति । " वायुर्वै क्षेपिष्ठा " इत्यादिना श्रुताद्वायोः क्षिप्रकारित्वान्न श्वेतालम्भस्य भूतिहेतुत्वं ज्ञाप्यते,

विध्युद्देशात्तु तत्सिद्धेः शैघ्र्यं तूक्तं प्रवर्तयेत् ॥२९१॥
जाग्रत्स्वप्नसुषुप्तिभ्यो व्यतिरेकेण युक्तितः ।
दृश्यतां गोत्ववद्व्यक्तेर्ब्रह्मत्वेऽस्य किमागतम् ॥२९२॥
ब्रह्मत्वं प्रतिपाद्यापि स्वत एव श्रुतिः पुनः ।
सम्भावयति युक्त्या तत्पुंधीदोषं निरस्यति ॥२९३॥
महावाक्यात्पुरा युक्तिस्त्वम्पदार्थं विशोधयेत् ।
पश्चात्तु तत्पदार्थत्वं सम्भावयति तस्य हि ॥ २९४ ॥

---

" वायव्यं श्वेतमालभेत भूतिकामः " इत्यस्मादेव तस्य तद्धेतुत्वसिद्धेरार्थवादिकं तु वायोः शैघ्र्यं भूतिकामस्य तत्र प्रवृत्तिहेतुः क्षिप्रकारिदेवताकपश्वालम्भे शीघ्रमेव फलमित्येवमिहापि वाक्याज्ज्ञानोत्पत्तये न युक्त्यपेक्षा, किन्तु तत्प्रतिबन्धध्वंसार्थमित्यर्थः ॥ २९१ ॥ इतश्च युक्तीनां न तत्त्वनिश्चायकतेत्याह * जाग्रदिति । यथा व्यक्तिभ्यो गोत्वमतिरिच्यते, व्यावृत्तादनुवृत्तभेदस्य कुसुमसूत्रयोर्दृष्टत्वात्, तथाऽवस्थात्रयान्मिथो व्यभिचारिणः अव्यभिचार्यात्मवस्तुयुक्तिभिर्दृश्यतां नाम, अस्य त्वमर्थस्य तदर्थत्वे वाक्यं विना युक्तिभ्यो न किञ्चिद्भवतीत्यर्थः ॥ २९२ ॥ एवं लोकसिद्धान्वयव्यतिरेकाख्ययुक्तीनामसम्भावनानिवृत्तावुपयोगमुक्त्वा दुन्दुभ्यादिदृष्टान्तैनैक्यप्रकाशकवैदिकयुक्तीनामपि तत्रैवोपयोगमाह * ब्रह्मत्वमिति ॥ २९३ ॥ उक्तार्थं स्पष्टयति * महावाक्यादित्यादिना । देहादिविलक्षणमवस्थात्रयसाक्षिणं प्रत्यञ्चमजानतः तत्त्वमादिवाक्यादैक्यधीरेव नोदेति उक्तात्मज्ञानवत उदितमप्यैक्यज्ञानमनादिप्रवृत्तभेदवासनया प्रतिबद्धं सन्नाविद्यानिवर्तकमिति यावत् । अप्रतिबद्धापरोक्षबोधे युक्त्याख्याविचारः सफल

वाक्ये पुंसोऽधिकारः स्याद्युक्त्या पूर्वप्रवृत्तया ।
पश्चात्प्रवृत्तया स्थैर्यं वाक्यार्थे वाक्यबोधिते ॥२९५॥
उक्तप्रयोजनं युक्त्या यया स्यात्सैव गृह्यताम् ।
वेदार्थस्यानुकूलत्वे स्याल्लौकिक्यपि वैदिकी ॥२९६॥
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ २९७ ॥
इत्यङ्गीकुरुते तर्कं मनुर्वेदोपयोगिनम् ।
युक्तेर्मानात्पृथक्त्वेन त्वदुक्तदोषोऽस्ति नो मम ॥ २९८ ॥
मानानुग्राहकस्तर्क इति नैयायिकोऽब्रवीत् ।
पक्षे विपक्षजिज्ञासाविच्छेदस्तदनुग्रहः ॥ २९९ ॥
आवृत्तिः सूत्रकृत्प्रोक्तेत्युक्तं यत्तत्तथैव हि ।
न वारयाम आवृत्तिं प्रकारस्तु विभिद्यते ॥ ३०० ॥
वाक्यार्थावगतेः पूर्वं पदार्थद्वयशुद्धये ।
आवृत्तिं सूत्रकृत्प्राह तच्छुद्धिरवधिर्मतः ॥ ३०१ ॥
भ्रान्तांशानां निवर्त्यानां बाहुल्येन पदार्थयोः ।

---

इति भावः ॥२९४॥२९५॥ तत्रापि वेदाविरुद्धा एव युक्तयो ग्राह्या इत्याह *उक्तेति ॥२९६॥ वेदाविरुद्धयुक्तीनामादेयत्वं मनुनाऽप्युक्तमित्याह * आर्षमित्यादिना ॥ २९७ ॥ एवं सति न मतान्तरोक्तदोषोऽपीत्याह * युक्तेरिति ॥ २९८ ॥ युक्तेर्मानाङ्गत्वं गौतमादेरपि सम्मतमित्याह *मानेति । जिज्ञासा विचारः, संशय इति यावत् । अनुमानप्रयोगानन्तरं हेतोरप्रयोजकत्वे शङ्किते पक्षः साध्यवान्न वेति संशयस्तर्केण निवर्तते इति भावः॥२९९॥ सूत्राविरोधं परिहरति * आवृत्तिरिति ॥३००॥ प्रकारभेदमेव दर्शयन्नावृत्तेरवधिं च दर्शयति * वाक्येति ॥ ३०१ ॥ वाक्या-

क्रमेण तन्निवृत्त्यर्थमावृत्तिस्तत्र युज्यते ॥ २०२ ॥
पदार्थयोः शोधितयोरेकतां नेत्रवद्वचः ।
सकृदेवावगमयेत्तत्रावृत्तिर्निरर्थिका ॥ २०३ ॥
रत्नतत्त्वपरीक्षायामपि सूक्ष्मार्थलक्षणे ।
नेत्रस्य प्रसरायैव स्यादावृत्तिर्न दृष्टये ॥ २०४ ॥
प्रसृते तु क्षणेनैव चक्षुस्तत्त्वं प्रपश्यति ।
एवं जीवस्य वाक्येन मीयते ब्रह्मता क्षणात् ॥२०५॥
नित्यापरोक्ष्यं जीवस्य तदेव ब्रह्मतां वचः ।
अनुभावयते तत्र नावृत्तिरनुभूयते ॥ २०६ ॥
व्याधम्मन्यो राजपुत्रो राजतामाप्तवाक्यतः ।
स्वस्यानुभवितुं नैव वाक्यावृत्तिमपेक्षते ॥ २०७ ॥

---

र्थज्ञानात्पूर्वमावृत्तेरावश्यकत्वे युक्तिमाह * भ्रान्तेति । कर्तृत्वादिधर्माणामारोपितानां बहुत्वेनैकेनावधानेनैकमंशमपोह्यान्येनान्यमिति क्रमेण शुद्धात्मज्ञानी भवतीत्यर्थः ॥ २०२ ॥ पदार्थशुद्ध्यनन्तरमैक्यबोधः सकृद्वाक्यश्रवणादेव भवतीति सदृष्टान्तमाह * पदार्थयोरिति ॥ २०३ ॥ ननु नेत्रस्यापि सन्निकृष्टवस्तुविशेषबोधने आवृत्त्यपेक्षादृष्टेर्न दृष्टान्ततेत्याशङ्क्याह *रत्नेति । रत्नगतासाधारणधर्मस्यातिसूक्ष्मतया तेन चक्षुःसन्निकर्षायैव तदावृत्तिर्न तज्ज्ञानायेत्यर्थः ॥२०४॥२०५॥ चक्षुषः सन्निकृष्टघटबोधकत्ववद्वाक्यस्यान्यानपेक्षतया आत्मनो ब्रह्मत्वबोधकत्वेऽपि तदनुभवायावृत्त्यपेक्षेत्याशङ्क्यापरोक्षवस्तुविषयनिश्चयव्यतिरेकेणानुभवो नेति पूर्वोक्तं स्मारयति * नित्यापरोक्ष्यमिति ॥ २०६ ॥ उक्तमेवार्थमुदाहरणपूर्वकमुपपादयति * व्याधमित्यादिना । वस्तुतः परेशः सन्नविद्यया आत्मानं

जीवन्मन्यः परेशान ईशत्वं वेदवाक्यतः ।
स्वस्यानुभवितुं तद्वदावृत्तिं न ह्यपेक्षते ॥ ३०८ ॥
पुरा वाक्यार्थसम्बोधाच्छास्त्रावृत्तिर्मयेष्यते ।
ऊर्ध्वं तु भवताऽतस्ते यो दोषः स न मेऽस्ति हि ॥३०९॥
ननु विज्ञाय कुर्वीत प्रज्ञामित्यनुशासनात् ।
ऊर्ध्वं चावृत्तिरिति चेत्तत्सत्यं न हि संशयः॥३१०॥
नैतावताऽवकाशोऽस्ति त्वन्मतस्यात्र कश्चन ।
नैवानुभूतिसिद्ध्यर्थमिदं श्रौतानुशासनम् ॥ ३११ ॥
विज्ञायेत्यनुभूतिं तां वाक्यजन्यामुपेत्य तु ॥
विदधाति तदैकाग्र्यं बहिश्चित्तनिवृत्तये ॥ ३१२ ॥
विवक्षितोपयोगोऽत्र वाक्यशेषेण वर्णितः ॥
नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ३१३॥
ननु मुक्तौ प्रवृत्तायाः श्रुतेर्दृष्टार्थवर्णनम् ॥

---

ीविन्मन्यमान इत्यर्थः ॥ ३०७ ॥ ३०८ ॥ एवं सति नात्र
रोक्तदोषोऽपीत्याह * पुरेति ॥ ३०९ ॥ ऐक्यबोधानन्तर-
ापि श्रुत्यैवावृत्तेर्विधानान्न तदपलापो युक्त इति शङ्कते * न-
न्विति । साक्षात्कृततत्त्वस्य विक्षिप्तचित्तस्य वाक्यार्थे चित्त-
थैर्य विधीयते न ज्ञानाय ध्यानमिति परिहरति * तत्सत्य-
मित्यादिना ॥ ३१० ॥ ३११ ॥ ३१२ ॥ उक्तेऽर्थे वाक्यशे-
मनुकूलयति * विवक्षितेति । चित्तस्यान्तर्मुखत्वाभावे
न्द्रियग्लानिः स्यादिति दुःखस्यैव तत्फलत्वश्रवणात्तन्निवृ-
यर्थोऽयं विधिरिति निश्चीयते इत्यर्थः ॥ ३१३ ॥ दुःखाभा-
स्य पश्वादिवत्सुखशेषत्वेन श्रुतेर्मुख्यपुरुषार्थपरत्वे सम्भ-
ति न दुःखाभावपरत्वं युक्तमिति शङ्कते * नन्विति ।

अयुक्तामिति चेन्मैवं जीवन्मुक्त्यर्थमीरणात् ॥ ३१४ ॥
अबुद्धब्रह्मतत्त्वेऽस्मिन्यद्वज्जन्म भविष्यति ॥
तद्वद्बहिर्मुखे चित्ते स्यादेव ग्लानिरिन्द्रियैः ॥ ३१५॥
अथासङ्गस्य न ग्लानिरिति चेदिदमेव हि ॥
पर्यालोचनमत्रोक्तं श्रुत्याऽक्षग्लानिवारकम् ॥३१६॥
बुद्धतत्त्वस्य यस्यैतत्स्वतःसिद्धं न तं प्रति ॥
विधत्ते ऽन्यं त्वनात्माभिमुखं प्रति विधीयते ॥३१७॥
सूत्रकारोऽत एवाह निदिध्यासनरूपिणि ॥

---

निरतिशयपरमानन्दोद्बोधनद्वारा दुःखनिवृत्त्यर्थत्वाच्चित्तस्थैर्यविधेस्तस्य च सर्वादृष्टसाध्यत्वान्नोक्तदोष इति परिहरति मैवमिति ॥३१४॥ आत्मनो वस्तुतो निर्दुःखत्वादारोपितदुःखस्य बोधेन निवृत्तत्वात्कथं पुनर्दुःखानुवृत्तिरित्याशङ्क्य वस्तुतो ब्रह्मीभूतस्यापि जीवस्य बोधाभावे पुनर्जननमवश्यम्भावि एवं बुद्धतत्त्वस्यापि चित्तविश्रान्त्यभावे दुःखानुवृत्तिः दुष्परिहरेत्याह *अबुद्धेति ॥ ३१५ ॥ तथाप्यसङ्गत्वादात्मनो न दुःखसम्बन्ध इति मत्वा तस्य बुद्धस्य किं विधिना इत्याशङ्क्य, उक्तमननस्यैव निरन्तरकरणाय विधिरित्याह * अथेति ॥ ३१६ ॥ प्रत्यक्तत्त्वबोधाय सम्पादितचित्तैकाग्र्यस्य पुंसः तद्बोधानन्तराचित्तस्थिरीकरणं स्वतःसिद्धत्वान्न विधेयमित्याशङ्क्य, तथापि चित्तैकाग्र्यमसम्पाद्य श्रवणादिभिः स्वरूपं निश्चितवतो बहिर्मुखस्यायं विधिरर्थवानित्याह * बुद्धेति ॥ ३१७ ॥ उक्तेऽर्थे सूत्रकारसम्मतिमाह * सूत्रेति । सहकार्यन्तरसूत्रेण पाण्डित्यबाल्यादिशब्दितश्रवणमननाभ्यां निश्चिततत्त्वस्यापि ब-

पाण्डित्यबाल्यवाक्यस्थे मौनेऽस्मिन्पाक्षिकं विधिम् ३१८
न विध्यर्हो बुद्धतत्त्व इति चेद्वासनाबलात् ॥
अबुद्ध इव संक्लिश्यन्विधिं ध्याने तदार्हति ॥३१९॥
अप्रमत्तो यदा योगी तदा मा भूदयं विधिः ॥
ज्योतिष्टोमो न विहितः स्वर्गस्थपुरुषं प्रति ॥ ३२० ॥
वासनाभिः क्लिश्यतोऽस्य ध्यानवन्नैव कर्मसु ॥
विधिः प्रसज्यते यस्मात्कर्म क्लेशं न वारयेत् ॥३२१॥
यदि सेवेत कर्माणि तृडार्त्तोऽग्निं च सेवते ॥
तृड्वृद्धिरग्निदाहाच्चेत् क्लेशवृद्धिश्च कर्मतः ॥ ३२२ ॥
ध्यानं तु सावधानत्वमात्रत्वान्न हि दुःखकृत् ॥
प्रत्युतानन्दमुद्बोध्य पूर्वदुःखं तु वारयेत् ॥ ३२३ ॥

---

हिर्मुखत्वनिवृत्तये निदिध्यासनपर्यायमौनविधिमाहेत्यर्थः॥३१८॥ विदुषो न विधिस्तस्य कृतकृत्यत्वादिति शङ्कते * नेति । किं विद्वच्छब्देन सवासनो विर्वासनो वा विवक्षितः ? । आद्ये वासनानिवृत्तेः सम्पाद्यत्वेन तस्याज्ञवद्विधियोग्यतेत्याह * वासनाबलादिति ॥ ३१९ ॥ निर्वासनस्य विध्ययोग्यत्वमङ्गीकरोति * अप्रमत्त इति । फले सिद्धे तत्साधने न विधिरत्र दृष्टान्तमाह * ज्योतिष्टोम इति ॥ ३२० ॥ विदुषो विध्यङ्गीकारेऽग्निहोत्राद्यपि प्रसज्येतेत्याशङ्क्य कर्मणां वासनावर्द्धकत्वान्न तन्निवृत्तिकामेन तान्यनुष्ठेयानीति सदृष्टान्तमाह * वासनाभिरिति ॥ ३२१ ॥ कर्मसूक्तं दोषं ध्याने निरस्यति * ध्यानमिति ॥३२२॥३२३॥ ध्यानस्यापि मानसक्रियात्वात्कथं न दुःखहेतुतेत्याशङ्क्य चित्तस्य वाक्यार्थाभिमुख्यमनात्मधीनिवृत्त्यात्मकमत्र प्रज्ञाशब्देन विवक्षितं न क्रियारूपमतो नोक्तदोष इत्याह

विज्ञाने सावधानत्वमत्र ध्यानं तु न क्रिया ॥
इत्यर्थस्य विवक्षायै प्रज्ञाशब्दः प्रयुज्यते ॥ ३२४ ॥
मैत्रेयीब्राह्मणेऽप्येवं निदिध्यासनशब्दतः ॥
उपक्रमोपसंहारे विज्ञानमिति वर्णितम् ॥ ३२५ ॥
निदिध्यासस्वेति गिरा यदुक्तं श्रवणाय तत् ॥
ऐकाग्र्यं याज्ञवल्क्येन विहितं साधनं तु तत् ॥३२६॥
साधनं फलरूपं च द्विविधं ध्यानमीरितम् ॥
प्रज्ञां कुर्वीत वाक्येन फलाभिमुखतोच्यते ॥ ३२७ ॥
बहुनाऽत्र किमुक्तेन प्रसङ्ख्यानं त्वदीहितम् ॥
नैवात्र विहितं तद्वन्नापि चान्यत्र कुत्रचित् ॥३२८॥

---

*विज्ञान इति। उक्तविवक्षायां हेतुः *प्रज्ञेति। अन्यथा तं विज्ञाय ध्यानं कुर्वीतेत्येवं वाक्यप्रयोगः स्यादिति भावः॥३२४॥ श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यत्र क्रियारूपध्यानविधानवदत्रापि तद्विधिरेवास्त्वित्याशङ्क्य तत्रापि श्रवणेन मत्या विज्ञानेनेत्युपसंहारवाक्ये निदिध्यासनस्थाने विज्ञानशब्दप्रयोगादैक्याभिमुख्यमेव विधीयते इत्याह * मैत्रेयीति ॥३२५॥ निदिध्यासनशब्दस्यैक्याभिमुख्यपरत्वे "व्याचक्षाणस्य तु मे निदिध्यासस्व" इत्यत्र मैत्रयीं प्रति याज्ञवल्क्यवचनमसङ्गतं स्यात्तया तदा वाक्यार्थस्याज्ञातत्वादित्याशङ्क्य साध्यसाधनरूपोभयविधध्यानवाचिनिदिध्यासनशब्दस्यौचित्यादर्थनिश्चय इत्याह * निदिध्यासस्वेति ॥३२६॥३२७॥ प्रसङ्ख्यानविधिनिराकरणमुपसंहरति * बहुनेति ॥ ३२८ ॥ उक्तमेवार्थं दृढीकर्तुं वृत्तानुद्रवणपुरःसरमाक्षेपमवतारयति * दूषितमित्यादिना । कार्यविशेषानेव दर्शयति * निरोध इति ॥ ३२९ ॥ आक्षेपप्रकारमा-

दूषितं कार्यसामान्यं तद्विशेषाश्च दूषिताः ॥
निरोधः प्रतिपत्तिश्च प्रसङ्ख्यानमिति त्रयः ॥३२९॥
अथ ते निखिलाः कार्यवादिनो ऽखण्डवस्तुनि ॥
वेदान्तानां प्रमाणत्वमाक्षिपन्त्यतिसम्भ्रमात् ॥३३०॥
अलौकिकत्वात्संसृष्टसंसर्गानियतत्वतः ॥
अपुमर्थेन वेदस्य मिथ्यात्वाच्च न मानता ॥ ३३१ ॥
अलौकिकार्थवादित्वादात्मब्रह्माभिधानयोः ॥
सम्बन्धाग्रहणादात्मा ब्रह्मेति कथमुच्यते ॥ ३३२ ॥
ज्ञातार्थसङ्गतिः शब्दो वाक्यार्थावगतिक्षमः ॥
न चात्र सङ्गतिर्ज्ञातुं शक्यतेऽर्थाप्रसिद्धितः ॥३३३॥
ब्रह्मात्मार्थौ प्रसिद्धौ चेल्लोकादेव तदा तयोः ॥
मान्तरानुप्रवेशेन वाक्यं स्यादनुवादकम् ॥ ३३४ ॥
वाक्यं संसर्गबोध्येवाभिहितान्वयवादिनः ॥
अन्विताथीभिधाने तु संसृष्टस्यैव मेयता ॥ ३३५ ॥
अखण्डैकरसार्थस्य मेयता न क्वचिन्मते ॥

---

ह * अलौकिकत्वादिति ॥३३०॥३३१॥ आद्यहेतुं विवृणोति *अलौकिकेत्यादिना ॥३३२॥३३३॥ ब्रह्मात्मानौ मानान्तराद-ज्ञातौ ज्ञातौ वा,आद्ये तयोः शब्दशक्त्यग्रहादगृहीतशक्तिकशब्दस्या-बोधकत्वादप्रामाण्यमित्युक्त्वा द्वितीयं निरस्यति *ब्रह्मेति॥३३४॥ पदाभिहितपदार्थानां संसर्गो वा संसृष्टपदार्थो वा वाक्यार्थ इति-मतद्वयस्यैव प्रसिद्धत्वादखण्डार्थस्य मेयत्वमप्रसिद्धमिति द्विती-यहेतुं विवृणोति * वाक्यमित्यादिना ॥३३५॥ अपुमर्थत्वादिति तृतीयहेतुं व्याचष्टे * पुमर्थ इति ॥ ३३६ ॥ चतुर्थं विभजते अखण्डत्वायेति । प्रतीचो ऽखण्डाद्वितीयत्वाय जगतो मिथ्या-

पुमर्थश्चास्ति नाखण्डे हानोपादानवर्जनात् ॥ ३३६ ॥
अखण्डत्वाय जगतो मिथ्यात्वे सति वैदिकम् ॥
वचोऽपि मिथ्याभूतं सत्कथं मानं भविष्यति ॥३३७॥
अतो वेदान्तमानेन यदखण्डार्थबोधनम् ॥
तन्मनोराज्यमेवेति जल्पतामिदमुत्तरम् ॥ ३३८ ॥
प्रसिद्धात्मन्यात्मशब्दप्रयोगात्स हि लौकिकः ॥
ब्रह्मार्थोऽपि महत्त्वेन प्रसिद्धो व्यवहारतः ॥ ३३९ ॥
एवं पदात्परिज्ञाते पदार्थे लोकमानतः ॥
वाक्यार्थोऽतीन्द्रियो वेदवाक्यात्केन निवार्यते॥३४०॥

---

त्वस्वीकारात्तदन्तःपातिवेदस्यापि तथात्वाद्वन्हिप्रमायां बाष्पस्येव न तस्य ब्रह्मप्रमाहेतुत्वमित्यर्थः ॥ ३३७ ॥ आत्मा तावन्नालौकिकः विषयोपलब्धृत्वेन प्रसिद्धेः तस्मिन्वृद्धैरात्मशब्दप्रयोगात् । नापि ब्रह्माप्रसिद्धम् । बृहतिधात्वर्थानुसरणस्य वृद्धव्यवहारतोऽनतिशयमहत्त्वेन प्रसिद्धत्वान्नात्मब्रह्मशब्दयोः शक्तिग्रहानुपपत्तिरिति परिहरति *इदमित्यादिना ॥३३८॥३३९॥ तर्हि तत्त्वमादेरनुवादकत्वं तत्राह * एवमिति । पदद्वयादर्थद्वये लोकव्यवहाराद् दृष्टेऽपि वाक्यार्थो ऽखण्डैकरसरूपो मानान्तरागोचरो वाक्यादेव मीयमानो नानुवाद्यतां गन्तुमलमित्यर्थः ॥ ३४० ॥ उक्तेऽर्थे दृष्टान्तमाह * अपूर्वेति । यथा स्वर्गापूर्वादिषु लोकसिद्धेषु तत्तच्छब्दानां शक्तिं गृहीत्वा ज्ञातशक्तिपदसंहतिरूपवाक्याद्विशिष्टार्थं वेद भवानेवमात्माद्यर्थे लोकसिद्धेऽपि तदेकरससरूपो वाक्यार्थो वाक्यादेव मम सिद्ध्यतीत्यर्थः ॥ ३४१ ॥ स्वर्गादिपदार्था न वृद्धव्यवहारमात्रात्

अपूर्वदेवतास्वर्गपदार्थाँल्लोकमानतः ॥
व्युत्पाद्यालौकिकोऽप्यर्थो वाक्याद्बुद्धस्त्वया यथा॥३४१॥
अथार्थवादादिबलात्स्वर्गाद्यर्थोऽवगम्यते ॥
तर्ह्येवान्तरवाक्येन ब्रह्मार्थोऽप्यवगम्यते ॥ ३४२ ॥
अप्रसिद्धपदार्थोऽपि प्रसिद्धार्थपदैः सह ॥
समभिव्याहृतो बोद्धुं शक्यो मधुकरादिवत् ॥३४३॥
अतो लोकानुसारिण्या व्युत्पत्त्याऽर्थोऽप्यलौकिकः ॥
धर्मब्रह्मात्मकः सिद्ध्येत्तत्र कस्मादमानता ॥ ३४४ ॥
नृविवक्षाव्यवहिते लोके शङ्का भवेदपि ॥
वेदे त्वपौरुषेयत्वात् साक्षात् स्वार्थे प्रमाणता ॥३४५॥
अर्थावबोधकत्वेन दुष्टकारणवर्जनात् ।

---

सिद्ध्यन्ति किन्तु यत्र दुःखेनेत्याद्यर्थवादादेरतो न ते दृष्टान्ता इत्याशङ्कते * अथार्थवादादिबलादिति । प्रकृतेऽपि सदेव सोम्येत्युपक्रम्य तत्सत्यं स आत्मेत्यन्तेन ग्रन्थेन वाक्यार्थज्ञानात्पूर्वं ब्रह्मपदार्थोऽपि सुगम इत्याह * तर्हीत्यादिना ॥३४२॥ प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र प्रसिद्धकमलादिपदसमभिव्याहारादप्रसिद्धस्य मधुकरशब्दस्य भ्रमरे शक्तिग्रहणवद् ब्रह्मपदस्यापरिच्छिन्नवस्तुनि शक्तिः सुग्रहेत्यर्थः ॥३४३॥ व्युत्पत्तिग्रहणसमर्थनमुपसंहरति * अत इति । धर्मग्रहणं दृष्टान्तार्थम् ॥ ३४४॥ अपिच वक्त्रभिप्रायानुसारिलौकिकवाक्येऽप्रामाण्यशङ्कायामपि वेदे तच्छङ्कैव न कार्येत्याह * नृविवक्षेति ॥ ३४५ ॥ तस्मादबोधकत्वसांशयिकत्वविपर्ययहेतूनामभावाद्वेदान्तानां मानत्वं सुस्थमित्याह * अर्थेति ॥३४६॥ यदुक्तं संसृष्टसंसर्ग नियतत्वत इति तद् दूषयति * अन्यत्रेति ।

अबाधाच्च प्रमाणत्वं वस्तुन्यक्षादिवच्छ्रुतेः ॥ ३४६ ॥
अन्यत्रैवात्र वाक्यार्थो नैव संसृष्टलक्षणः ॥
संसर्गलक्षणो वा स्यात्किंत्वखण्डार्थलक्षणः ॥३४७॥
ब्रह्मणो नात्मतारूपमब्रह्मत्वं तथाऽऽत्मनः ॥
अज्ञानजं द्वयं द्वाभ्यां पदाभ्यां विनिवार्यते ॥३४८॥
नेहान्यत्रात्मनो ब्रह्म न चात्मा ब्रह्मणोऽन्यतः ॥
तादात्म्यमनयोस्तस्मान्नीलोत्पलविलक्षणम् ॥ ३४९ ॥
नीलत्वमुत्पलत्वं च ह्यन्योन्यव्यभिचारिणी ॥
आत्मब्रह्मत्वयोर्नास्ति व्यभिचारो मनागपि ॥३५०॥
अब्रह्मानात्मते यद्वदत्राज्ञाननिबन्धने ॥

---

गामानयेत्यादिवाक्यस्य संसर्गाद्यर्थत्वेऽपि तत्त्वमादिवाक्यवदखण्डार्थत्वमित्यर्थः ॥ ३४७ ॥ तत्त्वमादेरखण्डव्यक्तिपरत्वे एकेन पदेन तद्बोधसम्भवात्पदान्तरवैयर्थ्यमित्याशङ्क्यात्मब्रह्मणोरारोपिताब्रह्मत्वानात्मत्वनिवृत्त्यर्थं पदद्वयमर्थवदित्याह * ब्रह्मण इति ॥ ३४८ ॥ यतो ब्रह्मात्मनोरखण्डैकव्यक्तिपरत्वं ततो नीलोत्पलयोर्भेदसहाभेदवत्तयोर्न तादात्म्यमित्याह * नेहेति । शास्त्रमिहेत्युच्यते ॥ ३४९ ॥ वैलक्षण्यं स्पष्टयति * नीलत्वमिति । अतो नात्मब्रह्मणोर्भेदाभेद इत्यर्थः । ॥ ३५० ॥ ब्रह्मणो ऽनात्मत्वमात्मनश्चाब्रह्मत्वमाविद्यमितिवदात्मत्वं ब्रह्मणो ब्रह्मत्वं चात्मनो ऽज्ञानकृतं किं न स्यादित्याशङ्क्याह * अब्रह्मेति । अत्रेत्यात्मनो निर्देशः । भेदस्यान्योन्याश्रयादिदुष्टत्वात्कल्पितत्वं नाभेदस्येत्यात्मनो ब्रह्मत्वं ब्रह्मणश्चात्मत्वं स्वाभाविकमित्यर्थः ॥ ३५१ ॥ यथा वस्त्रं मैत्र इत्यत्र समानाधिकृतपदद्वयप्रतिपाद्ययोरप्यन्योन्यसंबधो मैत्रस्य वस्त्र-

आत्मताब्रह्मते नैवं कल्पिते किन्तु ते स्वतः ॥३५१॥
न चात्र नाम्नोः सम्बन्धे षष्ठी प्राप्नोत्यभेदतः ॥
नरस्य वस्त्रमित्यर्थभेदे षष्ठी प्रयुज्यते ॥ ३५२ ॥
न चात्र भेदः सम्भाव्य एकव्यक्त्युपलक्षणात् ॥
ब्रह्मात्मार्थपरीक्षायां व्यक्तिरेकोपलक्ष्यते ॥ ३५३ ॥
प्रत्यक्त्वमात्मता तद्वद्ब्रह्मत्वं चाद्वितीयता ॥
द्वौ प्रत्यञ्चावसम्भाव्यौ तत्रैकस्य पराक्त्वतः ॥३५४॥
अतः प्रत्यक्त्वमेवैतदद्वयत्वं न चेतरत् ॥
तथाप्यविद्याविभ्रान्तिव्यावृत्त्यर्थं पदद्वयम् ॥ ३५५ ॥

---

मित्येवं तत्त्वंपदार्थयोरपि सम्बन्धो वाच्यः । तथाचाखण्डार्थत्वहानिरत आह * न चेति । तयोः सम्बन्धाभावे भेदाभावं हेतुमाह * अभेदत इति ॥ ३५२ ॥ तर्हि प्रवृत्तिनिमित्तरहिते एकरसे तस्मिन् कथं शब्दप्रवृत्तिरित्याशङ्क्य लक्षणयेत्याह *एकेति । एकव्यक्तावपि लक्षणया नामसम्बन्धसम्भवादित्यर्थः। तयोरेकव्यक्तित्वे हेत्वन्तरमाह * ब्रह्मेति । ब्रह्मात्मशब्दयोरपरिच्छिन्नवस्तुवाचित्वात्तद्वयोः सार्वात्म्यायोगात्तयोरेकव्यक्तितेत्यर्थः ॥ ३५३ ॥ एकव्यक्तित्वे फलितमाह * प्रत्यक्त्वमिति ॥ प्रतीच्यात्मत्ववद् ब्रह्मत्वमद्वितीयत्वं च स्वतः सिद्धमित्यर्थः । किञ्चाद्वितीयब्रह्मणः प्रत्यगभिन्नत्वाभावे पराक्त्वेन घटादिवदनित्यत्वप्रसङ्ग इत्याह * द्वाविति ॥ ३५४ ॥ तस्मादुक्तदोषपरिहाराय प्रत्यग्ब्रह्मणोरैक्यमङ्गीकार्यमित्याह * अत इति । तर्हि पदद्वयं व्यर्थमित्याशङ्क्य पूर्वोक्तं परिहारं स्मारयति * तथापीति ॥ ३५५ ॥ वेदान्तानामखण्डैकरसे ब्रह्मात्म-

आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम् ॥
ब्रह्मापि संस्तथैवात्मा सद्वितीयतयेक्ष्यते ॥ ३५६ ॥
आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात् ॥
अखण्डे निष्ठितं शास्त्रं पुरुषार्थे समीहिते ॥ ३५७ ॥
दृष्टाऽखण्डार्थता वाक्ये प्रत्यभिज्ञापके यतः ॥
तदेतद्देशकालाभ्यां व्यक्तिरेकोपलक्ष्यते ॥ ३५८ ॥
दृष्टस्य देवदत्तस्य दृश्यमानस्य चैकता ॥
बुभुत्सिता सोऽयमितिवाक्येन प्रतिपाद्यते ॥ ३५९ ॥
प्रतिपाद्यौ देशकालौ न तयोरबुभुत्सनात् ॥
परस्परविरोधाच्च व्यक्त्यैकत्वं तु बोध्यते ॥ ३६० ॥
एवमत्रापरोक्षस्य प्रतीचोऽन्यनिवारणात् ॥
ब्रह्मत्वलक्षणोऽखण्डो वाक्येनार्थोऽवबुध्यते ॥३६१॥
हानोपादानराहित्येऽप्यपुमर्थो भवेन्न हि ॥

---

नि समन्वयमुपसंहरति * आत्मापीत्यादिना । ब्रह्मण्यात्मसम्बन्धात्पारोक्ष्यस्य आत्मनि च ब्रह्मसम्बन्धात्सद्वयत्वस्य निरासात्परानन्दतया परमपुरुषार्थे वाक्यमैक्यतात्पर्येण पर्यवासितमित्यर्थः॥३५६॥३५७॥ तत्त्वमादिवाक्यस्य सोऽयमादिवाक्यवदखण्डार्थत्वमुक्तं, तत्र दृष्टान्ते विप्रतिपन्नं प्रति तस्याखण्डार्थत्वमाह * दृष्टेति ॥ देशकालाभ्यां, सम्बद्धेति शेषः ॥३५८॥ उक्तमेवार्थं स्पष्टयति * दृष्टस्येति । प्रतिपाद्यते, लक्षणयेति शेषः ॥३५९॥ लक्षणाबीजं दर्शयन् सोऽयमित्यादेरखण्डार्थत्वमुपसंहरति *प्रतिपाद्याविति ॥३६०॥ एवं सति तत्त्वमादिवाक्यस्य कल्पितभेदनिरासपूर्वकं प्रतीचोऽखण्डब्रह्मत्वबोधकत्वमुपपन्नमित्याह * एवमिति ॥ ३६१ ॥ अपुमर्थत्वादिति यदुक्तं तत्प्र-

इष्टप्राप्तेरनिष्टार्थनिवृत्तेश्चेह सम्भवात् ॥ ३६२ ॥
प्राप्तं चाप्राप्तमित्येवं द्विधेष्टं प्राप्तुमिष्यते ॥
अनिष्टं द्विविधं त्यक्तमत्यक्तं च जिहासितम् ॥३६३॥
ग्रामादि किञ्चिदप्राप्तं प्राप्तुमिष्टमिहेच्छति ॥
हेमादि विस्मृतं किञ्चित्करस्थमपि लिप्सते ॥३६४॥
अनिष्टं चापरित्यक्तं कण्टकादि जिहासति ॥
रज्ज्वां सर्पादिकं किञ्चित्त्यक्तमेव जिहासति ॥३६५॥
अप्राप्तं प्राप्तुमत्यक्तं त्यक्तुं कर्मैव साधनम् ॥
लोके वेदेऽप्यतः कर्मविधीनां स्यात्तदर्थता ॥ ३६६ ॥
अज्ञानारोपितत्वेन सम्प्राप्तत्यक्तयोः पुनः ॥
याथात्म्यज्ञानतो नान्यत्पुरुषार्थाय कल्प्यते ॥ ३६७॥
त्वं ब्रह्मेति श्रुते वाक्ये सिद्ध्यत्येवाप्रयत्नतः ॥
अशेषानर्थविच्छेदो ब्रह्मानन्दोऽप्यनुत्तमः ॥ ३६८ ॥

---

त्याह * हानेति ॥ ३६२ ॥ हानाद्यविषयस्यापि ब्रह्मणः पुमर्थ-त्वमुक्तं स्पष्टयितुं लोके इष्टानिष्टयोर्द्वैविध्यं दर्शयति * प्राप्तमि-त्यादिना ॥ ३६३ ॥ ३६४ ॥ ३६५ ॥ इष्टप्राप्तिमनिष्टपरिहारं च विभज्य तत्राप्राप्तस्यात्यक्तस्य च प्राप्तित्यागयोरुपायमाह * अप्राप्तमिति । तयोः शास्त्रान्वयव्यतिरेकसिद्धोपायसाध्य-त्वाद्विधिनिषेधाभ्यामन्वयव्यतिरेकाभ्यां च साधनभेदं ज्ञात्वा तदनुष्ठानेन प्रेप्सिता प्राप्तं प्राप्नोति अपरिहृतं च परिजिहीर्षितं परिहरतीत्यर्थः ॥३६६॥ अवशिष्टयोः प्राप्तित्यागयोरुपायमाह * अज्ञानेति । अप्राप्तत्वादेरिति शेषः ॥ ३६७ ॥ एवं विभागे सिद्धे वेदान्तवेद्यस्यापि हानादिकं विना पुमर्थत्वं सिद्ध्य-तीत्याह * त्वमिति ॥ ३६८ ॥ ऐक्यस्य पुमर्थत्वे फलितमाह

पुरुषार्थोपदेष्टृत्वाद्यद्वत्कार्ये प्रमाणता ॥
तथैकात्म्ये विशेषाद्वा पुमर्थातिशयत्वतः ॥ ३६९ ॥
न चैकात्म्याभ्युपायस्य मिथ्यात्वमिह चोद्यताम् ॥
कदा वेदस्य मिथ्यात्वं भवता ज्ञायते वद ॥ ३७० ॥
ऐकात्म्यप्रतिपत्तेः प्राङ्ग मिथ्यात्वमबाधनात् ॥
पुमर्थस्य समाप्तत्वादूर्ध्वं वेदेन किं तव ॥ ३७१ ॥
अज्ञातमपि मिथ्यात्वं प्रागस्त्येवेति चेच्छृणु ॥
मानसत्यत्वमिथ्यात्वे न मात्वामात्वकारणे ॥३७२॥
सत्येनाप्यनुपायेन घटेनाग्निर्न मीयते ॥
असत्येनाप्युपायेन प्रतिबिम्बेन बिम्बधीः ॥ ३७३ ॥
धूमाभासात्तु बाष्पादेर्यदग्निर्नावगम्यते ॥
हेतुस्तत्रानुपायत्वमविनाभाववर्जनात् ॥ ३७४ ॥
वेदान्तानामुपायत्वाद् धूमवत्परमार्थता ॥

---

* पुरुषेति । वस्तुतस्त्वबाधितपुमर्थबोधित्वादैक्यश्रुतेरेव तत्त्वावेदनं प्रामाण्यमित्याह * विशेषादिति ॥ ३६९ ॥ मिथ्याभूतवेदनस्य न प्रमापकत्वं बाष्पवदिति यदुक्तं तन्निराचष्टे * न चेति । वेदस्य मिथ्यात्वं ज्ञातममानत्वे हेतुरुत स्वरूपेण । ज्ञातं च वस्तुधियः प्रागूर्ध्वं वेति विकल्प्य दूषयति * कदेति ॥ ३७० ॥ ३७१ ॥ ३७२ ॥ ३७३ ॥ असत्योपायस्यापि बोधकत्वे वाष्पादपि वन्हिप्रमा स्यादित्याशङ्क्य तस्य तदुपायत्वमेव नास्ति तेनाव्यभिचारितसम्बन्धाभावादित्याह * धूमेति । धूमाभासात् धूमविलक्षणादिति यावत् ॥ ३७४ ॥ वेदः सत्यः उपायत्वात् धूमादिवदित्याशङ्क्याद्वितीयश्रुतिबाधितमनु-

न शङ्कार्हो तदैकात्म्यश्रुतिबाधः स्फुटो भवेत् ॥३७५॥
बाष्पवन्नापि मिथ्यात्वादनुपायत्वमुच्यताम् ॥
ऐकात्म्याज्ञानबाधेन सिद्धैवोपायता भवेत् ॥३७६॥
उपेयबोधनं मुक्त्वा मितेर्नान्याऽस्ति सत्यता ॥
उपेयैकात्म्यबोधस्तु वेदान्तेषूपलभ्यते ॥ ३७७ ॥
अतः स्वरूपमिथ्यात्वेऽप्युपायत्वादसत्यता ॥
नास्तीत्युपायतो वेदादुपेयं ब्रह्म मीयताम् ॥ ३७८ ॥
सत्यामैकात्म्यसंवित्तौ चरितार्थत्वतः श्रुतेः ॥
वृथोपायपरीक्षा स्यादुत्तीर्णस्य प्लवे यथा ॥ ३७९ ॥
बाह्येष्वर्थेष्वनात्मत्वात्काचिच्छङ्का भवेदपि ॥
अत्रात्मत्वादुपेयस्य का शङ्का मानतां प्रति ॥३८०॥

---

मानमित्याह * वेदान्तानामिति ॥३७५॥ किञ्च वेदो नोपायः मिथ्यात्वाद्बाष्पवदित्यत्र किं मिथ्यात्वशब्देनाकार्यकरत्वं विवक्षितं बाधयोग्यत्वं वा ? आद्ये हेत्वसिद्धिः अज्ञाननिवृत्तिरूपकार्यकरत्वादित्याह * बाष्पेति ॥ ३७६ ॥ न द्वितीयः, धूमे व्यभिचारात् । तस्यापि नेह नानेति श्रुतिबाधितत्वादित्याह * उपेयेति । मितिशब्देन तज्जनकं मानं लक्ष्यते । उक्तानुवादपूर्वकं वेदस्य ब्रह्मबोधोपायत्वमुक्तमुपसंहरति * उपेयेत्यादिना ॥ ३७७॥ ३७८॥ ऐकात्म्यबोधित्वे सत्युपायस्य सत्यत्वं तस्मिन् सति तद्बोधित्वम् इति अन्योन्याश्रयमाशङ्क्य नेत्याह *सत्यामिति । प्रमितौ सत्यामुपायान्वेषणं वृथेत्यत्र दृष्टान्तमाह * उत्तीर्णस्येति ॥ ३७९ ॥ इतश्च श्रुत्यादेः सत्यत्वाभावेऽपि नाबोधकत्वमित्याह * बाह्येति। अबाधितवस्तुबोधिनो मानभावं प्रति शङ्कैव नोत्तिष्ठेदित्यर्थः ॥३८०॥ फलितं दर्शयन् शिष्याव-

बोधकत्वेन मानत्वमखण्डार्थेऽप्यवस्थितम् ॥
वेदान्तानामथैतेषां बाधः परिहरिष्यते ॥ ३८१ ॥
ननु भेदाश्रितैर्वाक्यैर्विधायकनिषेधकैः ॥
अक्षादिभिश्च नैकात्म्यं बाधितत्वात्प्रमाणवत् ॥३८२॥
न चास्यैकात्म्यशास्त्रस्य तैर्विकल्पसमुच्चयौ ॥
यत एतावसम्भाव्यौ क्रियायामिव वस्तुनि ॥ ३८३ ॥
व्रीहिभिर्वा यवैर्वेति यथा यागो विकल्प्यते ॥
नैवमेकमनेकं वेत्येतद्वस्तु विकल्प्यते ॥ ३८४ ॥
समुच्चित्यै यथादर्शपौर्णमासौ तथा न तु ॥
भिन्नाभिन्नात्मना वस्तु समुच्चेतुमिहार्हति ॥ ३८५ ॥
अत ऐकात्म्यमानस्य भेदमानस्य वा द्वयोः ॥
एकबाधस्य सम्प्राप्तावैक्यधीर्बाध्यतेऽन्यथा ॥ ३८६ ॥
नेह नानेति भेदानां निषेधो नान्यबाधकः ॥

---

धानायोत्तरग्रन्थप्रतिपाद्यमर्थमाह * बोधकत्वेनेति ॥ ३८१ ॥ अध्यक्षादिविरोधं परिहृत्याखण्डे वस्तुनि वेदान्तानां समन्वयं दृढीकर्त्तुं पूर्वपक्षमवतारयति * नन्विति । विधिनिषेधवाक्यान्यक्षादीनि च भेदविषयाणि तैरैक्यस्य बाधान्न तस्य वेदान्तगम्यतेत्यर्थः ॥३८२॥ वेदान्तानामप्यविशेषात्प्रामाण्ये तैर्विकल्पः समुच्चयो वा स्यादतो वेदान्तवेद्यं वाऽक्षादिगम्यं वा द्वयमपि वा सत्यमित्याशङ्क्य समाधिमाह * न चेति ॥३८३॥ विकल्पसमुच्चयावुदाहरन् वस्तुनि तदसम्भवमाह ॥ व्रीहिभिरित्यादिना ॥ ३८४ ॥ वस्तुनि विकल्पाद्यसिद्धौ फलितमाह * अत इति ॥ ३८५ ॥ ३८६ ॥ नन्वैक्यमानेन भेदमानं वा बाध्यतां नेत्याह * नेहेति । तत्र हेतुमाह * वर्णादीति । प्रत्य-

वर्णादिग्रहणोपायप्रत्यक्षाद्युपजीवनात् ॥ ३८७ ॥
वर्णान् ग्रहीतुमर्थस्य व्युत्पत्त्यैवोपजीवति ॥
श्रुतिरक्षानुमाने द्वे प्रबलत्वं तयोस्ततः ॥ ३८८ ॥
निषेधविध्योर्यच्छास्त्रं चित्तशुद्ध्युपकारि तत् ॥
ऐक्यशास्त्रेणोपजीव्यं प्रबलं तेन तन्मतम् ॥ ३८९ ॥
तत्तु भेदाश्रयेणैव विधत्ते च निषेधति ॥
तस्मादभेदशास्त्रस्य बाधो विध्यादिशास्त्रतः॥३९०॥
औपचारिकमैकात्म्यशास्त्रं कर्त्रात्मसम्भवात् ॥
सावकाशं भवेद्यद्वा जपार्थमुपयुज्यते ॥ ३९१ ॥
भेदसाधकमक्षादि भेदादन्यत्र कुत्र वा ॥
सावकाशं ततस्तस्य बाधो नैकात्म्यशास्त्रतः॥३९२॥
ऐकात्म्यबोधकत्वेऽपि वेदान्ता बाधितत्वतः ॥

---

क्षादिर्वर्णपदवाक्यादिग्रहोपायः, न च शास्त्रेण तद्बाधो युक्तस्तथा सति हेत्वभावाद्वस्तुनि ज्ञानासिद्धेर्मोक्षाभावप्रसङ्गादित्यर्थः ॥ ३८७ ॥ उक्तमेवार्थं स्पष्टयन्नादिशब्दगृहीतानुमानस्यापि श्रुत्युपजीव्यत्वमाह * वर्णानिति । मध्यमवृद्धप्रवृत्तेरिष्टज्ञानपूर्वकत्वादिकमनुमाय गृहीतसङ्गतिकस्यैव बोधकत्वाच्छ्रुतेरित्यर्थः ॥३८८॥ ऐक्यशास्त्रेण कर्मशास्त्रस्याबाधे हेत्वन्तरमाह* निषेधेत्यादिना ॥ ३८९ ॥ ३९० ॥ का तर्हि वेदान्तानां गतिस्तत्राह * औपचारिकमिति ॥ गत्यन्तरमाह * यद्वेति ॥३९१॥ "सावकाशनिरवकाशयोर्निरवकाशं बलवत्" इति न्यायात् द्वैतमानानां च द्वैतं विना ऽनवकाशानां दर्शितरीत्या सावकाशेनाद्वैतशास्त्रेणाबाध्यतेत्याह * भेदेति ॥ ३९२ ॥ द्वैतग्राहिमानविरोधान्न वेदान्तानामेकरसे ब्रह्मणि प्रामाण्यमिति प्राप्ते सिद्धान्तमाह

अप्रामाण्यं भजन्तीति पूर्वपक्षो व्यवस्थितः ॥३९३॥
उच्यते लोकतः सिद्धं भेदमाश्रित्य चोदना ॥
प्रवृत्ता पुरुषार्थाय न तु भेदाविबुद्धये ॥ ३९४ ॥
भेदस्य चापुमर्थत्वात्तादर्थ्ये स्यादमानता ॥
पुमर्थत्वेन चास्येष्टं प्रामाण्यं वेदवादिभिः ॥ ३९५ ॥
भेदाप्रमापिका ऽप्येषा चोदना भेदमाश्रयेत् ॥
इति चेदल्पमेवोक्तमैक्यशास्त्रं च तादृशम् ॥ ३९६ ॥
गुरुशिष्यादिभेदेन विनैकात्म्यावबोधने ॥
प्रवर्त्तेत कथं शास्त्रं तस्माद्भेदाश्रितं हि तत् ॥३९७॥
एवं तर्ह्युपजीव्येन विरोध इति मा वद ॥

---

* उच्यते इति । तत्रादौ कर्मकाण्डविरोधं निराह * लोकत इति । कर्मकाण्डं लौकिकं कर्त्रादिभेदमादायाभ्युदयार्थं प्रवृत्तं न तं प्रतिपादयितुं तस्यापूर्वत्वाभावात्तत्रातात्पर्यादित्यर्थः ॥३९४॥ भेदशास्त्रस्य तत्रातात्पर्ये हेत्वन्तरमाह * भेदस्येति । "द्वितीयाद्वै भयं भवति"इतिश्रुतेरस्यानर्थत्वात्तन्निष्ठत्वे शास्त्रस्याप्रामाण्यं स्यात्तस्य पुमर्थापूर्वनिष्ठत्वे प्रामाण्यमित्यभ्युपगमविरोधश्चेति भावः ॥ ३९५ ॥ भेदस्य लोकसिद्धत्वेनापुमर्थत्वेन च विधिकाण्डं यद्यपि भेदाप्रमापकं तथापि क्रियाकारकादिभेदं विना तत्प्रवृत्त्ययोगादैक्यशास्त्रस्य परम्परया भेदहेतुकत्वं दुर्वारमिति शङ्कते * भेदेति । वेदान्तानामप्युक्तभेदोपजीवनान्न परम्परया तस्य हेतुत्वं शङ्क्यमित्याह * अल्पमित्यादिना ॥ ३९६ ॥ भेदस्य साक्षादैक्यशास्त्रप्रवृत्तिहेतुत्वे कथं बाधकत्वमित्याशङ्क्य यो भेद उपजीव्यते ऐक्यश्रुत्या स न बाध्यते यस्तु बाध्यते स नोपजीव्यत इत्याह * एवमिति ॥

ऐक्यश्रुत्योपजीव्यस्य भेदस्यात्रानिराकृतेः ॥ ३९८ ॥
मायया कल्पितो भेद उपजीव्यो न वास्तवः ॥
नेह नानेति शास्त्रेण वास्तवः प्रतिषिद्ध्यते ॥ ३९९ ॥
दृश्यस्य मायिकत्वेन प्रसक्तिर्वास्तवे कुतः ॥
इति चेत्तव विभ्रान्त्या प्रसक्तिरिति तुष्यताम्॥४००॥
न भ्रमामीति चेत्तर्हि न त्वां प्रति निषिद्ध्यते ॥
यो भ्राम्यति विमूढोऽत्र तं प्रत्येव निषिद्ध्यते ॥४०१॥
अत्यन्तादृष्टविषयो भ्रमादपि न भासते ॥
इति चेद्रज्जुसर्पोऽयं क्व वा दृष्टस्त्वया पुरा ॥ ४०२ ॥
सत्यः सर्पः पुरा दृष्ट इति चेन्मायिकी भिदा ॥
किं न दृष्टा पुरा येन न भवेत्सत्यभेदधीः ॥ ४०३ ॥
सत्यं सर्पं पुरा दृष्ट्वा रज्जुसर्पं यथेक्षते ॥

---

३९८ ॥ ३९९ ॥ भेदस्य साक्षादैक्यशास्त्रप्रवृत्तिहेतुत्वे कथं तस्य तद्बाधकत्वमित्याशङ्कते * दृश्यस्येति । यस्य भेदभ्रमाद्वस्तुत्वं प्रसक्तं तं प्रति तन्निषिद्ध्यते इत्याह * तवेति ॥ ४०० ॥ ४०१ ॥ अन्यत्रानुभूतमन्यत्रारोप्यते इति नियमादननुभूतस्य भेदसत्यत्वस्य कथं भ्रमविषयत्वमिति शङ्कते * अत्यन्तेति । भ्रममात्रस्य अपूर्ववस्तुविषयत्वान्न दोष इति परिहरति * रज्जुसर्प इति ॥ ४०२ ॥ अथापि पूर्वदृष्टजातीयस्यैव भ्रमविषयत्वमित्याशङ्क्य प्रकृतेऽपि तदस्तीत्याह *सत्य इति ॥४०३॥ उक्तमेव स्पष्टयति *सत्यमिति । यद्यपि पूर्वं भेदो मिथ्यात्वेन नानुभूतस्तथापि वस्तुतस्तस्य मिथ्यात्वात् मिथ्याभेदं पुरेत्युक्तं, वस्तुतस्तु पूर्वपूर्वभ्रमादुत्तरो-

मिथ्याभेदं पुरा दृष्ट्वा सत्यं भेदं तथेक्षताम् ॥ ४०४ ॥
अत्यन्तादृष्टसत्त्वोऽपि सत्यो भेदो भ्रमान्नृणाम् ॥
विभातीति स्थितं तस्मात्प्रसक्तं सन्निषिध्यते ॥४०५॥
आगमो मायिकं भेदं न निषेधति किन्त्विमम् ॥
मायिको भेद इत्येव प्रत्युत प्रतिपादयेत् ॥ ४०६ ॥
यद्वदज्ञातमद्वैतं ब्रह्म ज्ञापयते तथा ॥
भेदमायिकतां पुम्भिरज्ञातां ज्ञापयेच्छ्रुतिः ॥ ४०७ ॥
न चात्रापुरुषार्थत्वं ब्रह्मबोधाङ्गभावतः ॥
न मायिकत्वमज्ञातया ब्रह्माद्वैतं विबुध्यते ॥ ४०८ ॥
अद्वैते द्वैतविभ्रान्तिं द्वैते सत्यत्वविभ्रमम् ॥
आपादयेदियं माया रज्जुसर्पौ यथा तथा ॥ ४०९ ॥
रज्जौ सर्पत्वमारोप्य सर्पेऽस्मिन् रज्जुसत्यताम् ॥

---

त्तरभ्रमः सम्भवतीति भावः ॥ ४०४ ॥ सत्यत्वेनाप्रमितोऽपि भेदो यस्मात्पूर्वानुभवसंस्कारात्सत्यतया भाति तस्माद्भेदसत्यत्वमात्रनिषेध उपपद्यत इत्याह *अत्यन्तेति ॥४०५॥ नेह नानेति श्रुत्या द्वैतमात्रनिषेधप्रतीतेः कथं भेदस्यानिषिध्यमानत्वं ? तत्राह *आगम इत्यादिना ॥४०६॥४०७॥४०८॥ मायिकभेदस्य ब्रह्मवदज्ञातत्वफलत्वाभ्यां श्रुत्या प्रतिपिपादयिषितत्वाद्भेदसामान्यविषयत्वेन प्रतीयमानोऽपि निषेधोऽनुपपत्त्या सत्यभेदविषयत्वेन कल्प्यते इति भावः ॥ यदि भेदस्य कल्पितत्वं श्रुत्या प्रतिपाद्यते तर्हि तेनैव तत्सिद्धेर्भेदसत्यत्वनिषेधो मुधेत्याशङ्क्य तस्योपयोगं दर्शयितुम् एकस्मिन्नेव विषये मायायाः भ्रान्तिद्वयहेतुत्वमाह * अद्वैत इति ॥४०९॥ रज्जुसर्पदृष्टान्तं स-

सम्बन्धयति, तेनायं सत्यः सर्प इवेक्ष्यते ॥ ४१० ॥
तथैव ब्रह्मसत्यत्वं द्वैतसम्बद्धमीक्ष्यते ॥
अतो द्वैतमिदं सत्यमिति मूढैर्विनिश्चितम् ॥ ४११ ॥
ब्रह्मैव सत्यं द्वैतं तु मायामयमिति श्रुतिः ॥
प्रतिपादयितुं सत्यं द्वैतमत्र निषेधति ॥ ४१२ ॥
मायां तु प्रकृतिं विद्यादिति मायामयं जगत् ॥
अभ्युपेत्य वियन्मुख्यां सृष्टिं ब्रूते प्रयत्नतः ॥ ४१३ ॥
श्रुत्या मायामयो भेदो य एषोऽभ्युपगम्यते ॥
उपजीव्यः स एवातो नोपजीव्यविरोधिता ॥ ४१४ ॥
निषेधविधिशास्त्रं च कल्पितं भेदमाश्रयेत् ॥
तस्मान्न वास्तवाद्वैतशास्त्रं तेनात्र बाध्यते ॥ ४१५ ॥
अक्षादीनां च मध्ये किं मानं भेदावबोधकम् ॥
प्रत्यक्षमनुमानं वा मानाभावो ऽथवेर्यताम् ॥ ४१६ ॥

---

दार्ष्टान्तिकमुपपादयति * रज्जावित्यादिना ॥ ४१० ॥४११॥ अधिष्ठानस्य सद्रूपत्वम् आरोपितस्य तत्सम्बन्धात्सत्यत्वं च प्रतीयतां मायया ततः किं? तत्राह *ब्रह्मेति। द्वैतस्य प्रतीयमानसत्यत्वमनिषिद्ध्य तस्य मायामयत्वप्रतिपादनमशक्यमिति तन्निषेधोऽर्थवानित्यर्थः ॥४१२॥ केन वाक्येन जगतो मायिकत्वं? तत्राह * मायामिति। मायोपादानजगतो मायिकत्वं सिद्धमिति कृत्वा वियदादिसृष्टिमाहेत्यर्थः।४१३।कल्पितभेदस्य श्रुतिगम्यत्वे फलितमाह * श्रुत्येति ॥४१४॥४१५॥ ऐक्यश्रुतेः कर्मकाण्डेन विरोधं परिहृत्याक्षादिविरोधं परिहर्तुं विकल्पयति * अक्षादीनामिति। अनुमानं चेत्येतदुपमानमर्थापत्तिर्वेति विकल्पद्वयस्याप्युपलक्षणम् ॥४१६॥ आद्येऽपि तत्किं घटादिबोधनक्षणे तद्गतं

प्रत्यक्षं वस्तुबोध्येव न तु भेदावबोधकम् ॥
न च भेदस्य वस्तुत्वं वस्तुतत्त्वाश्रुतत्वतः ॥ ४१७ ॥
न सिद्ध्यति विना भेदो भिद्यमानेन वस्तुना ॥
अतो भेदाश्रयत्वेन वस्तु सिद्ध्यति मानतः ॥४१८॥
मितिर्वस्तु प्रसाध्याथ न क्षमा भेदसाधने ॥
विरम्य व्यापृतिर्नास्ति प्रमितेः क्षणिकत्वतः ॥४१९॥
वस्तुमात्र उपक्षीणात्प्रत्यक्षान्न तु भेदधीः ॥
यथा तथा ऽनुमानाच्च परस्परसमाश्रयात् ॥ ४२० ॥
विरुद्धकर्मधर्मत्वे धर्मिभेदोऽनुमीयते ॥
एकस्मिन्ननवस्थानं विरोधो धर्मयोर्मतः ॥ ४२१ ॥
द्विधर्मिस्थत्वनियमाद्विरोधेऽनुमिते सति ॥

---

भेदं बोधयति क्षणान्तरे वा ? नाद्यः, प्रत्यक्षस्य वस्तुमात्रबोधकत्वदृष्टेरित्याह * प्रत्यक्षमिति । भेदस्यापि वस्तुत्वमाशङ्क्य निरस्यति * न चेति। वस्तुस्वरूपस्य निरपेक्षत्वाद्धर्म्यादिसापेक्षभेदस्य सर्पादिवत्कल्पितत्वान्न वस्तुतेत्यर्थः ॥ ४१७ ॥ आद्यपक्षनिरसनमुपसंहरति * अत इति ॥ ४१८ ॥ आद्यद्वितीयं प्रत्याह * मितिरिति ॥ ४१९ ॥ प्रत्यक्षवदनुमानस्यापि न भेदबोधित्वमित्याह * वस्त्विति ॥ ४२० ॥ कथं परस्पराश्रयत्वमित्याशङ्क्य किं विमतौ भिन्नौ विरुद्धधर्मवत्त्वात्सम्मतवदित्यनुमीयतेऽनेकधर्मवत्त्वादिति वा ? । तत्राद्यमनुवदति * विरुद्धेति । अस्मिन् कल्पे धर्मयोः सहानवस्थितत्वरूपविरोधज्ञानम् इमौ विरुद्धौ नियमेन धर्मिद्वयनिष्ठत्वादित्यनुमानाधीनं, धर्मिभेदज्ञानं च उक्तानुमानाधीनमित्यन्योन्याश्रयः

अनुमेयो धर्मिभेद इत्यन्योन्यसमाश्रयः ॥ ४२२ ॥
अथाविरुद्धधर्माभ्यामपि धर्मी विभिद्यते ॥
तर्हि दाहप्रकाशाभ्यामग्नेर्भेदः प्रसज्यते ॥ ४२३ ॥
अर्थापत्तिरनेनैव न्यायेनात्र निराकृता ॥
उपमानमनाशङ्क्यं तस्य सादृश्यसंश्रयात् ॥ ४२४ ॥
मानाभावोऽपि नैवात्र भेदं बोधयितुं क्षमः ॥
मेयाभावैकविषयो वादिभिः सोऽभ्युपेयते ॥ ४२५ ॥
नन्वन्योन्याभावमेव भेदमाहुर्विपश्चितः ॥
मानाभावेन मेयोऽतो भेद इत्यप्यसङ्गतम् ॥ ४२६ ॥
मानाभावस्य मानत्वं मेयाभावस्य मेयता ॥
न्यायं न सहते ऽतीव तल्लक्षणवियोगतः ॥ ४२७ ॥
अबुद्धबोधकं मानमिति मानस्य लक्षणम् ॥
न च पञ्चप्रमाणानामभावो बोधकः क्वचित् ॥ ४२८ ॥

---

स्पष्ट इत्याह * एकस्मिन्नित्यादिना ॥ ४२१ ॥ ४२२ ॥ द्वितीयमनूद्य अतिप्रसक्त्या दूषयति * अथेति ॥ ४२३ ॥ अर्थापत्त्याऽपि न तत्सिद्धिरित्याह * अर्थेति । अत्रानुमानोक्तदूषणं हेतूकरोति * अनेनेति । सादृश्यमात्रविषयस्योपमानस्य भेदबोधित्वशङ्कैव नास्तीत्याह * उपमानमिति ॥ ४२४ ॥ अनुपलब्धेरभावबोधिन्या न तद्विलक्षणभेदबोधित्वमित्यन्त्यपक्षं निराह * मानमिति ॥ ४२५ ॥ भेदस्याभाववैलक्षण्यासिद्धेरनुपलब्धिगम्यतेति शङ्कते * नन्विति । न्यायविरुद्धत्वान्नेदं चोद्यं शोभत इत्याह *इत्यपीत्यादिना ॥४२६॥४२७॥ मानाभावस्य मानलक्षणाभावान्मानत्वाभावं वक्तुं तल्लक्षणमाह *अबुद्धेति । मानाभावस्य तदनाक्रान्तत्वमाह*न चेति॥४२८॥

निरस्तसर्वसामर्थ्याद्यद्यभावप्रमाणता ॥
वन्ध्यापुत्रः प्रमाता स्यात्समत्वान्मातृमानयोः ॥४२९॥
योग्यस्यानुपलब्धिर्या मेयाभावस्य बोधने ॥
तस्याः सामर्थ्यमिति चेन्न तत्सिद्धेरसम्भवात् ॥४३०॥
मेयाभावः प्रमाणानां यद्यभावेन गम्यते ॥
प्रमाणानामभावस्य गमकः को भविष्यति ॥ ४३१ ॥
किञ्चायं सर्वमानानामभावः कीदृगुच्यताम् ॥
स्तैमित्यमात्मनः स्याच्चेत्तद्ब्रह्मैवास्मदीहितम् ॥ ४३२ ॥

---

तत्र हेतुः *निरस्तेति ॥ सर्वसामर्थ्यहीनस्याप्यभावस्य प्रमापकत्वे दोषमाह*यदिति॥४२९॥निरस्तसर्वसामर्थ्यादिति हेतुरसिद्धःयोग्यानुपलब्धेरभावधीहेतुत्वस्यानुभवसिद्धत्वादिति शङ्कते *योग्यस्येति ।अनुभवसिद्धत्वमसिद्धम् अनुपलब्धिसाधकमानाभावेन तस्या एवासिद्धेरित्याह *नेति ॥४३०॥ एतदेव स्पष्टयति *मेयेति ।अनुपलब्धिग्राहकमक्षादिज्ञानपञ्चकमुपलब्ध्यभावो वा? नाद्यः, अनङ्गीकृतेः । नान्त्यः, मानमेयत्वस्य भेदापेक्षत्वादिति भावः ॥४३१॥ दुर्निरूपत्वाच्चाभावस्य न मानतेत्याह *किञ्चेति । आत्मनो निर्व्यापारावस्थानं वा भावान्तरं वा भावविलक्षणो वेति कीदृक् शब्दार्थः ? आद्यमनूद्य कूटस्थवस्त्वतिरेकेणोपलब्ध्यभावेनेति स्वपक्षप्राप्तिमभिप्रेत्याह *स्तैमित्यमिति ॥४२६॥ द्वितीयं प्रत्याह *विकल्पेति । अभावस्य भावान्तर्भावे भावाद्वैतापाताद्भावस्याभावान्तर्भावे तदद्वैतप्रसङ्गात्तस्य सत्यत्वायोग्यत्वे फलितमाह * अत इति ।तृतीयमनुभवविरोधेन दूषयति * नहीति । तस्माद् दुर्निरूपो भेद इति भावः ॥४३३॥ किञ्चानुपलब्धेः सत्त्वमङ्गीकुर्वाणस्य प्रतियोगिनोऽपि सत्त्वेनैकरूप्यात्तयोर्न

विकल्पमात्ररूपोऽयमभावोऽतो न वास्तवः ॥
न हि मायातिरेकेण भाववत्सिद्धिमश्नुते ॥ ४३३ ॥
विश्वं सदेव यस्येष्टं तस्याभावो मितेः कुतः ॥
तेनाभावद्वारतोऽपि भेद आपाद्यते कथम् ॥ ४३४ ॥
यावत्किञ्चिज्जगत्यस्मिन्भेदकं वस्तु लक्ष्यते ॥
अनापन्नादिमध्यान्तं सदेव तदितीक्ष्यताम् ॥ ४३५ ॥
सदेवेदमिति स्पष्टं सन्मूला इति चापरम् ॥
श्रुत्योदाहारि नः साक्षात्सदैकात्म्यावबुद्धये ॥४३६॥
धर्मभेदावभासेऽपि धर्म्यभेदो यथेष्यते ॥
तथा गवादेर्भेदेऽपि सन्मात्रं न हि भिद्यते ॥ ४३७ ॥
न गवादिभिदा मेया गवादेर्व्यभिचारतः ॥
सदेव मेयं सर्वत्र सद्रूपस्यानपायतः ॥ ४३८ ॥
सद्रूपमपि सन्त्यज्य भ्रमाद्भेदनिबन्धनाः ॥

---

वैलक्षण्यं स्यादित्याह * विश्वमिति । भेदस्यान्योन्याभावान्तर्भावेऽपि मानतस्तदसिद्धिमुक्त्वोपसंहरति । *तेनेति ॥४३४॥ वस्तुतस्तु न घटादीनामपि मेयत्वं किं त्वखण्डसद्रूपस्यैवेति वक्तुं सर्वस्य सन्मात्रत्वमाह * यावदिति ॥ ४३५ ॥ तत्र मानमाह * सदेवेति ॥ ४३६ ॥ गोघटादीनामन्योन्यभेदेन तद्विशिष्टसतोऽपि भेदात्कथं तस्याखण्डतेत्याशङ्क्य दाहादिधर्मभेदेऽपि दहनभेदाभाववद्गवादिभेदेऽपि सतो न भेद इत्याह*धर्मेति॥४३७॥ एवं सतः सर्वानुस्यूतत्वे सिद्धे तस्यैव मेयत्वं, न भिद्यमानगवादेरित्याह * नेति ॥४३८॥ सद्रूपस्यानपायत इत्युक्तमेवार्थं प्रपञ्चयति * सद्रूपमित्यादिना ॥ द्रव्यगुणाद्यवान्तरनिमित्ता ये व्यवहारास्ते सद्रूपात्यागेनैव प्रतीयन्ते तेन द्रव्यादिषु सद्रूप-

व्यवहाराः प्रतीयन्ते सत्तत्त्वं तेष्ववस्थितम् ॥ ४३९ ॥
न सत्तत्त्वं परित्यज्य भ्रान्तिदृष्ट्यदयः क्वचित् ॥
एकाकारा हि संवित्तिः सद्द्रव्यं सद्गुणस्थितिः ४४०।
सत्तावगुण्ठितास्तेन सर्वे भावाः सदैव हि ॥
व्यवहाराय कल्पन्ते भेदो भ्रान्त्याऽवभासते ॥४४१।
प्रमाणैरखिलैश्चात्र सद्वस्त्वेव प्रतीयते ॥
तस्माद्वस्त्वेकनिष्ठत्वान्न भेदोऽक्षादिगोचरः ॥४४२॥
घटोऽयमिति संवित्त्या घट एव प्रमीयते ॥
न व्यावृत्तिः पटादिभ्यस्त्वताद्रूप्येण संविदः ॥४४३॥
व्यावृत्तिरूपं चेद्भाति भासेत प्रतियोग्यपि ॥
प्रतियोगि जगत्सर्वं नासर्वज्ञेन गृह्यते ॥ ४४४ ॥
घटेतरत्वं सामान्यरूपेण यदि गृह्यते ॥

---

मवस्थितमास्थेयं, ततो निष्कृष्टानामसत्त्वेन दृष्टादृष्टव्यवहारहेतुत्वायोगात् तथा च सन्मात्रं तत्त्वं तस्मादुद्रिक्तं तस्मिन् कल्पितमिति सर्वकल्पनाधिष्ठानस्य तस्यैव मेयतेत्यर्थः । तस्मादित्यस्य व्याख्या *वस्त्वेकेति । मानानामिति शेषः । भेदपदमत्र प्रपञ्चपरम् ॥ ४३९ ॥ ४४० ॥ ४४१ ॥ ४४२ ॥ अस्तु वा घटादेरपि मेयता तथापि न तद्गतो भेदः प्रामाणिक इति प्रत्यक्षं वस्तुबोध्यैवेति सङ्ग्रहेण पूर्वोक्तमर्थं प्रपञ्चयति*घट इति ॥४४३॥ घटज्ञानस्य पटादिव्यावृत्त्यप्रकारत्वमसिद्धमिति शङ्कते * व्यावृत्तिरूपमिति । तर्हि व्यावृत्तिप्रतियोगिनो भासेरन्नित्याह *भासेतेति । अस्तु को दोषः ? इति चेत्, किं ते विशिष्य भासन्ते सामान्यतो वा ?। तत्राद्यं प्रत्याह *प्रतियोगीति ॥४४४॥ अन्त्य-

तर्ह्यन्योन्याश्रयो दोषो न दण्डेन निवार्यते ॥ ४४५ ॥
व्यावृत्तेः प्रथमं सिद्धावितरत्वं प्रसिद्ध्यति ॥
इतरत्वे च सिद्धेऽथ तद्व्यावृत्तिः प्रसिद्ध्यति ॥ ४४६ ॥
तस्माद् घटो निजाकारां जनयेद् बुद्धिसंविदम् ॥
घट एव तया ग्राह्यो व्यावृत्तिर्भ्रमकल्पिता ॥ ४४७ ॥
संवेद्यभेदाभावेऽपि वेदनं तु विभिद्यते ॥
इति चेत्, संविदो भेदः स्वतो वा परतोऽथवा॥४४८॥
घटज्ञानं पटज्ञानमिति ज्ञेयपुरःसरम् ॥
भेदभानादयं भेदः संविदो न स्वभावजः ॥ ४४९ ॥
घटादिभेदोपाधिश्चेत् सुतरां भ्रान्त एव सः ॥
न पारमार्थिकं क्वापि रज्जुसर्पविसर्पणम् ॥ ४५० ॥
सम्यक्संशयमिथ्याख्याः संविद्भेदाः स्वतो यदि ॥

---

नूद्य निराह * घटेति ॥ ४४५ ॥ अन्योन्याश्रयमाह *व्या-
त्तेरिति ॥ ४४६ ॥ अतो मानजन्यघटाकारवृत्तेर्घटमात्रविष-
त्वं, भेदस्तु साक्षिमात्रभास्य इत्याह * तस्मादिति ॥ ४४७ ॥
द्यभेदस्याप्रामाणिकत्वेऽपि वेदनभेदस्य प्रामाणिकत्वे बाध-
ाभावान्नाद्वैतसिद्धिरिति शङ्कते * संवेद्येति । बाधकाभावो
सिद्ध इत्यभिसन्धाय विकल्पयति * संविद इति ॥ ४४८ ॥
ाद्यं प्रत्याह * घटेति ॥ ४४९ ॥ द्वितीयं निराह * घटा-
ीति । घटादिभेदस्य कल्पितत्वेन तदुपाधिकतद्धीभेदस्यापि क-
ल्पितत्वं सिद्धमित्यत्रोदाहरणमाह *नेति॥४५०॥प्रकारान्तरेण
ंविद्भेदं शङ्कते * सम्यगिति । अन्तःकरणवृत्तीनां सम्यक्त्वा-
देना भिन्नत्वेऽपि चैतन्यस्याखण्डत्वे न क्वचित्क्षतिरित्याह *त-
ति ॥ ४५१ ॥ चितः स्वतो भेदाभावे रज्जुसर्पस्फुरणस्यापि

तन्न, धीवृत्तिधर्मत्वात्सम्यक्त्वाद्या न चिद्गताः॥४५१॥
स्फुरणं रज्जुसर्पेति न मिथ्या बाधवर्जनात् ॥
तद्बाधे रज्जुतत्त्वस्य पश्चात्स्फूर्तिः कथं भवेत् ॥४५२॥
रज्जुस्फूर्तिः पृथक्सर्पस्फूर्त्तेरिति मतं यदि ॥
कथं तर्हि प्रयुज्येत स्फूर्तिरित्यर्थयोर्द्वयोः ॥ ४५३ ॥
स्फूर्त्तित्वजात्यनुगमादिति चेत् स्वस्ति ते यतः ॥
व्यावृत्तमनुवृत्तं च द्वयमङ्गीकृतं त्वया ॥ ४५४ ॥
भाषाभेदेऽप्यर्थभेदो नास्ति काश्चिदिहावयोः ॥
जातिव्यक्ती त्वदीयाख्ये चिद्बुध्दिर्मम भाषया॥४५५॥
गोत्वादिष्वप्ययं न्यायो योजनीयो विपश्चिता ॥
सर्वत्रानुगतं ब्रह्म व्यावृत्तिर्मायिकी खलु ॥ ४५६ ॥
सम्यक्संशयमिथ्याख्या भिन्नाकाराः स्वतो धियः ॥
मातृमानप्रमित्याद्या अपि तद्वत्समीरिताः ॥ ४५७ ॥

---

सत्यत्वं स्यादित्याशङ्क्य ओमित्याह *स्फुरणमिति ॥ आरोपितसर्पादिस्फुरणस्यापि स्वरूपेण बाधाभ्युपगमे बाधमाह । *तदिति ॥४५२॥ काऽत्र कथंता, अधिष्ठानारोप्यस्फुरणयोर्भिन्नत्वादिति शङ्कते * रज्ज्वति । तयोर्भिन्नत्वे स्फुरणं स्फुरणमित्येकाकारप्रतीतिर्न स्यादित्याह * कथमिति ॥ ४५३ ॥ अनुगतबुद्धेरन्यथासिद्धिं शङ्कते * स्फूर्त्तित्वेति । अनुगतबुद्धिविषयस्य कस्य चिदङ्गीकारे तस्य ब्रह्माभिन्नत्वे मानाभावादस्मादिष्टसिद्धिरित्याह *स्वस्तीत्यादिना॥४५४॥४५५॥ उक्तन्यायमन्यत्राप्यतिदिशति *गोत्वेति । गवादिव्यक्तिष्वनुस्यूतमखण्डं सदेव परैर्गोत्वादिभाषया व्यवह्रियत इत्यर्थः ॥४५६॥४५७॥

सम्यक्त्वादौ प्रमात्रादावपि भेदो घटादिवत् ॥
कल्पितः,कल्पिताः सर्वे विशिंषन्ति स्वसंविदम्॥४५८॥
संविदेका स्वतःसिद्धा प्रत्यग्रूपैकलक्षणा ॥
भावाभावादिरूपाय व्यवहाराय कल्पते ॥ ४५९ ॥
संवित्तत्त्व उपक्षीणं सर्वं मानं न भेदगम् ॥
तत ऐकात्म्यशास्त्रस्य न बाध इति सुस्थितम्॥४६०॥
बोधकत्वादबाधाच्च प्रामाण्ये निश्चिते सति ॥
अनुवादत्वशङ्काऽथ वेदान्तानामपोद्यते ॥ ४६१ ॥
ननु वेदान्तसिद्धान्तमजानन्तोऽपि वादिनः ॥
लौकिकाश्च निजात्मानं जानन्त्येव स्वमानतः॥४६२॥
मानं प्रत्यक्षमन्यद्वा यद्योग्यं तद्धवेत्ततः ॥
ज्ञातात्मकथनादेते वेदान्ता अनुवादिनः ॥ ४६३ ॥

---

वृत्तिशब्देन तद्विशिष्टपदार्था लक्ष्यन्ते, न केवलमन्तःकरण-
वृत्तीनामेव सम्यक्त्वादिना भेदः, प्रमात्रादिसर्वपदार्थानामपि भे-
दोऽस्त्येव, परन्तु स कल्पितः। तथा च भिद्यमानपदार्थोपाधिभि-
श्चैतन्यस्य भिन्नत्वेऽपि सर्वकल्पनाधिष्ठानस्य स्वतो ऽभेद इत्याह
* सम्यगित्यादिना ॥४५८॥४५९॥ भेदस्य मानागम्यत्वे फलित-
माह * तत इति ॥ ४६० ॥ उक्तानुवादपुरःसरमुत्तरग्रन्थप्रति-
पाद्यमर्थमाह * बोधकत्वादिति ॥ ४६१ ॥ यद्यपि वेदान्तानाम्
अनुवादकत्वं नेति पूर्वमुक्तं, तथापि प्रकारान्तरेणापि तत्परिहर्तुं
पूर्वपक्षमुत्थापयति * नन्विति ॥ स्वमानतः आत्मबोधकमा-
नात् ॥ ४६२ ॥ किं तन्मानमित्याशङ्क्य वादिभेदेन प्रत्यक्षम-
नुमानं वा यत्किञ्चिदस्तु श्रुतेरनुवादकत्वं तावत्सिद्धमित्याह
* मानमिति ॥४६३॥ भोक्तुर्मानान्तरगम्यत्वेऽपि वेदान्तानामश-

नैवात्मनोऽन्यद्वस्त्वेतैर्वेदान्तैः प्रतिपाद्यते ॥
येनापूर्वार्थलाभेन तेषामननुवादता ॥ ४६४ ॥
उच्यते मान्तरात् सिद्धः किं देहात्माऽथवेतरः ॥
नाद्ये स्यादनुवादत्वं देहात्माप्रतिपादनात् ॥ ४६५ ॥
न वेदान्ताः क्वचिद्देह आत्मेति प्रत्यपादयन् ॥
यः कोशोऽन्नमयः प्रोक्तस्तत्रास्त्येवानुवादता ॥४६६॥
देहेतरोऽपि किं कर्त्ता ब्रह्म वोभयथाऽपि च ॥
तयोर्मानान्तराबोधादाशङ्का नानुवादता ॥ ४६७ ॥
वादिनो लौकिका वाऽत्र भविष्यद्देहयोगिनम् ॥
कर्त्रात्मानं न जानन्ति वेदान्तवचसा विना ॥४६८॥
देहान्तराभिसम्बन्धो भावित्वान्नाक्षगोचरः ॥
लिङ्गसादृश्यविरहान्नानुमा नोपमा तथा ॥ ४६९ ॥
भावरूपात्मबोधाय नाभावोऽपि प्रवर्त्तते

---

नायाद्यतीतवस्तुबोधिनां नानुवादकत्वमित्याशङ्क्याध्यक्षादिविरोधेन तेषामविवक्षितत्वान्नैवमित्याह * नेति ॥ ४६४ ॥ विकल्पासहत्वान्नेदं चोद्यमिति परिहरति * उच्यत इति । प्रतिज्ञातार्थं साधयितुम् आत्मपदार्थं विकल्पयति * मान्तरादिति । आद्यं प्रत्याह * नाद्य इति ॥ ४६५ ॥ "स वा एष पुरुषोऽन्नरसमयः" इतिवाक्यस्य तद्बोधकत्वमाशङ्क्य तस्यानुवादकत्वमिष्टमेवेत्याह * य इति ॥ ४६६ ॥ द्वितीयं विकल्प्य दूषयति * देहेति ॥ ४६७ ॥ तत्र कर्त्रात्मनस्तावन्मानान्तरगम्यत्वमुपपादयति * वादिन इति ॥ ४६८ ॥ आत्मनो वर्तमानदेहादि हित्वा देहान्तरादियोगे मानं वाच्यम्, अन्यथा तदसिद्धेः । तत्र च न प्रत्यक्षादि प्रभवतीत्याह *देहान्तरेति ॥४६९॥ अर्थापत्तिरपि भविष्यद्देहयोगमात्मनो दृष्टा श्रुता वा बोधयति ?

अर्थापत्तिर्न सम्भाव्या दृष्टकल्पकवर्जनात् ॥ ४७० ॥
अन्यथाऽनुपपन्नोऽपि श्रुतस्वर्गो न कल्पकः ॥
श्रुतार्थापत्तितोऽप्यत्र श्रुतिरेव बलीयसी ॥ ४७१ ॥
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ॥
इति वेदान्तवचसा भविष्यद्देहयोगधीः ॥ ४७२ ॥
भविष्यद्देहसम्बन्धी वाक्यादात्मा न चेतनः ॥
चार्वाक इव नो कुर्याददृष्टार्थाःक्रियाः सुधीः ॥ ४७३ ॥
आगमेन विना साङ्ख्या आत्मानं स्वर्गमोक्षयोः ॥
अनुगन्तारमवदन्ननु मानान्न तत्तथा ॥ ४७४ ॥
नैव साङ्ख्यानुमासिद्धमसङ्गमवगच्छतः ॥
भाविदेहाद्यसम्बन्धे प्रवृत्तिः स्यात्क्रियास्विह॥४७५॥
अहंबुद्ध्याऽनुमानाच्च कर्त्तारं तार्किका जगुः ॥

---

तत्राद्यं निराह * अर्थापत्तिरिति ॥ ४७० ॥ द्वितीयमनूद्य श्रुतेरेव तद्बोधितत्वान्न श्रुतार्थापत्तेस्तत्कल्प्यं गौरवादित्याह * अन्यथेति ॥ ४७१ ॥ तादृशश्रुतिं पठति * योनिमिति ॥ ४७२ ॥ ननु भविष्यदेहसम्बन्धिभोक्तृज्ञानमेवास्तु विधित एव क्रियासु प्रवृत्तिसम्भवादिति, नेत्याह * भविष्यदिति ॥४७३॥ साङ्ख्यास्तु, अन्तःकरणे चित्प्रतिबिम्बः तथाविधबिम्बपुरःसरः प्रतिबिम्बत्वात्सम्मतवदित्यनुमानादात्मानं साधयन्तस्तस्मिन्वेदप्रामाण्यं न मृष्यन्ते, तन्मतमनूद्य प्रत्याह * आगमेनेत्यादि ॥ असम्बन्धे निश्चिते सतीति शेषः॥४७४॥४७५॥अन्ये त्वहङ्कर्तेत्यनुभवेन बुद्ध्यादयः साश्रयाः गुणत्वाद्रूपादिवदिति परिशेषसहितानुमानेन वा स्वाभाविककर्तृत्वविशिष्टात्मसिद्धिमिच्छन्ति । तन्मतमनूद्य दूषयति * अहमित्यादि । कारकाद्यप्रयो-

मीमांसका अपि तथा न युक्तमुभयोर्मतम् ॥ ४७६ ॥
नात्मनः कर्तृता युक्ता व्यापिनो निष्क्रियत्वतः ॥
न चाकर्त्तुः फलं युक्तमायासो वादिनां वृथा ॥४७७॥
पारलौकिकवृत्तान्तमागमादेव वादिनः ॥
ज्ञात्वा प्रच्छाद्य शास्त्रेषु स्वकीयेष्वन्यथा वदन्॥४७८॥
योगिप्रत्यक्षतो यद्वा जानन्त्येव महर्षयः ॥
तथापि योगिता श्रौतानुष्ठानादेव नान्यथा ॥४७९॥
महर्षिव्यवधानाद्वा साक्षाद्वा श्रुतिरेव हि ॥
कर्त्रात्मनि प्रमाणं स्यात्स्वर्गादिफलभोक्तरि ॥४८०॥
ब्रह्मात्मन्यप्यहंबुद्धिर्न मानं स्यात्कथञ्चन ॥
बोधानुभवसंवित्तिशब्दैर्ब्रह्मात्मवर्णनात् ॥ ४८१ ॥

---

ज्यस्य तत्प्रयोक्तृत्वं कर्तृत्वं तदात्मनो नभोवद्विभुत्वादक्रियस्यायुक्तमित्यर्थः ॥ ४७६ ॥ अकर्तृत्वेऽपि तस्य भोक्तृत्वमाशङ्क्याह *न चेति । अकृताभ्यागमप्रसङ्गादिति भावः ॥४७७॥ वस्तुतस्तु वादिनोऽपि श्रुतेरेवात्मनो देहान्तरयोगं ज्ञात्वा स्वपाण्डित्याय तत्रानुमानादिकं वदन्तीत्याह * पारलौकिकमिति ॥ ४७८ ॥ तथाप्यात्मनः श्रुत्येकमेयत्वमसिद्धमिति शङ्कते * योगीति । अत्र योगशब्देन निरुद्धं चित्तं विवक्षितम् । एवं चात्मनो देहान्तरयोगमृषयो वशीकृतमनसः साक्षात्कुर्वन्तीत्यर्थः । चित्तवशीकारस्यापि श्रौतधर्मानुष्ठानहेतुकत्वान्न श्रुत्येकमेयत्वहानिरित्याह *तथापीति ॥ ४७९॥ उक्तमर्थम् उपसंहरति *महर्षीति ॥४८०॥ एवं कर्त्रात्मनः श्रुत्येकमेयत्वमुक्त्वा शुद्धात्मनोऽपि तदाह * ब्रह्मेति । तस्य स्वप्रकाशत्वादिति भावः । बोधः स्वप्रकाशो न तु ब्रह्मेत्याशङ्क्य तयोरैक्यमाह * बोधेति ॥ ४८१ ॥ किं

पस्याहंप्रत्ययस्यात्र सिद्धिः स्यादनुभूतितः ॥
ततोऽहंप्रत्ययात्सिद्धिमश्नुते ऽनुभवः कथम् ॥४८२॥
आत्मनोऽहंधियः सिद्धिरात्मसिद्धिरहम्मतेः ॥
अन्योन्याश्रयतैव स्यादहम्बुद्ध्यात्मनोर्ध्रुवम् ॥४८३॥
अथाहंधीः स्वप्रकाशा जड आत्मेति मन्यसे ॥
तर्ह्यत्र भाषाभेदोऽयमावयोः परिशिष्यते ॥ ४८४॥
स्वप्रकाशाज्जडं सिद्ध्येदित्येतदुभयोः समम् ॥
न जडं ब्रह्म तत्र स्यात्सत्यं ज्ञानमिति श्रुतेः ॥४८५॥
किञ्च संवित्प्रमेया चेत्संविदन्या फलं भवेत् ॥
न च संविद्द्वयं भाति नानुमेयं फलं क्वचित् ॥ ४८६ ॥
युगपद्व्यवसायानुव्यवसायवदात्मनि ॥

---

चाहमितिबुद्धिर्नात्मग्राहिका तद्ग्राह्यत्वात् घटवदित्याह * य-स्येति ॥ ४८२ ॥ तस्याहंधीग्राह्यत्वे बाधकान्तरमप्याह * आ-त्मन इति ॥ ४८३ ॥ स्वप्रकाशेनाहङ्कारसमवेतज्ञानेन जडा-त्मसिद्धेर्नान्योन्याश्रयतेति शङ्कते * अथेति । "अत्रायं पुरुषः स्वयञ्ज्योतिः"इत्यादिश्रुतिविरोधान्नात्मनो जडत्वमिति गूढाभि-सन्धिः परिहरति * तर्हीति ॥४८४॥ तथाप्यहंधियाऽऽत्मासिद्धौ कथं त्वदिष्टसिद्धिरित्याशङ्क्याशयमाविष्करोति * नेति । तत्र ब्रह्मात्माहंधियोर्मध्ये । तथाचात्मनैव सर्वव्यवहारसिद्धेर्नाहं-धियः स्वप्रकाशत्वमिति भावः ॥ ४८५ ॥ संवित्स्वरूपस्याहं-धीगम्यत्वे दूषणान्तरमाह * किं चेति । संविदात्मनि संविद-न्तरस्याननुभवेऽपि व्यवहारलिङ्गेन तदनुमेयमित्याशङ्क्यानौ-पाधिके स्वप्रकाशे तस्मिन्नानुमानमित्याह * नेति ॥ ४८६ ॥ घटज्ञानवानहमित्यादिवन्मेयभूतप्रत्यगात्मसंविदोऽप्यन्या सं-

अस्तु संविद्द्वयामिति प्रतीत्यैतत्पराहतम् ॥ ४८७ ॥
घटादिस्थितसंविद्वच्छुद्धायामपि संविदि ॥
संविदन्या प्रतीयेत न चासावात्मनीक्ष्यते ॥ ४८८ ॥
द्रव्यबोधस्वरूपोऽयमात्मा यैरभ्युपेयते ॥
तेषामपि मते युक्ता नाहंधीगम्यताऽऽत्मनः ॥ ४८९ ॥
द्रव्यांशो यद्यहम्बुद्धिः स्यात्तदाऽन्योन्यसंश्रयः ॥
बोधाद् द्रव्यांशसंसिद्धौ द्रव्याद्बोधः प्रसिध्यति॥४९०॥
बोधांशश्चेदहम्बुद्धिः किं द्रव्यांशेन ते वद ॥
तत्त्यागे स्वप्रकाशोऽयं बोध आत्मेति शिष्यते॥४९१॥

---

वित्, फलमस्तु का हानिरिति शङ्कते * युगपदिति । अनुभवविरोधान्नैवमित्याह * प्रतीत्येति ॥ ४८७ ॥ उक्तमेवार्थं द्रढयति * घटेति ॥ ४८८ ॥ आत्मनो द्रव्यरूपेण मेयत्वं बोधरूपेण मातृत्वमित्येकस्यैव ग्राह्यग्राहकात्मकस्याहंधिया सिद्धिरिति केचित्, तान्प्रत्याह * द्रव्येति ॥ ४८९ ॥ आत्मसाधकमानत्वेनाभिमताऽहम्बुद्धिर्द्रव्यांशो बोधांशो वा ? । नाद्य इत्याह *द्रव्येति । अन्योन्याश्रयं स्पष्टयति ॥ बोधादिति ॥ अयमर्थः । न तावत् बुद्धेरबुद्धायाः साधकत्वं, प्रकाशो बुद्धिरिति न्यायात् दीपवज्ज्ञाने सत्येव तस्याः साधकत्वं, तज्ज्ञानं चानुमानात्साकारमेव, बुद्धिमनुमिमीमह इति स्थितेः । अहम्बुद्ध्यनुमानेचात्मज्ञातता लिङ्गं ततो लिङ्गज्ञाने तद्विशिष्टात्मनोऽपि तत्र ज्ञानादात्मनि ज्ञातेऽहंधीस्ततश्चात्मधीरिति ॥ ४९० ॥ द्वितीयमनूद्य प्रत्याह * बोधेति । प्रकाशात्मकबोधस्यैव किञ्चिदुपाध्यवच्छिन्नस्याहंबुद्धित्वे तेनैव सर्वव्यवहारसिद्धेर्द्रव्यांशाङ्गीकरणं मुधा, तदनङ्गीकारे च सिद्धान्तादविशेष इति भावः ॥ ४९१ ॥ आ-

यदि बोधः स्वप्रकाशो वेदान्तैः क्रियतेऽत्र किम् ॥
इति चेत्तमनूद्यास्य बोध्यते ब्रह्मरूपता ॥ ४९२ ॥
यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा ॥
असन्त्यपि च सत्त्वेन तत्सद्ब्रह्मेति बोध्यते ॥ ४९३ ॥
अभातानि यतो भान्ति जडानि निखिलान्यपि ॥
याऽनन्यदृक् स्वप्रकाशा सा चिद्ब्रह्मेति बोध्यते॥४९४॥
योऽनन्यार्थो यदर्थं च सर्वं जगदिदं प्रियम् ॥
सर्वं प्रियतमानन्दम् एष ब्रह्मेति बोध्यते ॥ ४९५ ॥
यमाश्रयति भेदोऽयं भावाभावात्मकोऽखिलः ॥
न भावो नाप्यभावोऽसावभिन्नश्च निराश्रयः॥४९६॥
प्रमेयादित्रयं त्वेतत्परस्परविलक्षणम् ॥
यस्मिन् विजृम्भते सोऽयमविकार्यविलक्षणः ॥ ४९७ ॥
असङ्कुचितचित्पद्मः सुप्तेऽपि स्वप्रबोधवत् ॥

---

त्मनः स्वप्रकाशत्वेऽपि वेदान्तानामनुवादकत्वं तदवस्थमेवेत्य-
त आह * यदीति । त्वमर्थं शुद्धमनूद्य तस्य ब्रह्मत्वबोधना-
द्वाक्यार्थस्य चाज्ञातत्वान्न उक्तदोष इत्यर्थः ॥ ४९२ ॥ वाक्या-
र्थमाह * यत इत्यादिपञ्चभिः । अध्यक्षादिमानानि जा-
ग्रदाद्यवस्थाः सर्वाण्यपि जडानि स्वतःसत्तास्फूर्तिहीनानि य-
त्प्रसादात्ते[1] लभन्ते, यश्च सुखलक्षणाक्रान्ततया सुखत्वेन शास्त्रे
दृश्यते, यत्र च भावाभावविलक्षणे ऽद्वितीये स्वमहिमस्थे कूटस्थै-
कस्वभावे प्रमात्रादित्रयं कर्तृत्वादित्रयं भोक्तृत्वादित्रयं भावाभा-
वात्मकः सर्वोऽपि प्रपञ्चो विवर्तते, तेन परमात्मना साक्ष्यैक्यं
वाक्यबोध्यमित्यर्थः ॥४९३॥४९४॥४९५॥४९६॥४९७॥ अव-
स्थात्रयसाक्ष्येव नास्ति स्वापे नित्यानुभवस्याननुभवात् कथं तस्य

१ ते सत्तास्फूर्ती इत्यर्थः ।

प्रज्ञानघन एवायं सुप्तवत्स्वप्नबोधयोः ॥ ४९८ ॥
साक्ष्यसम्बन्धतः साक्षी न स्वतः साक्षिताऽऽत्मनः ॥
प्रत्यङ्मात्रैकदृष्टित्वाद्धियां वाचामगोचरः ॥ ४९९ ॥
अस्मत्पक्षे तु कर्तृत्वमविद्यामात्रकल्पितम् ॥
तदभावान्न संसारो भूतो भावी न वर्तते ॥ ५०० ॥
स्वाभाविक्यप्यविद्येयमनुभूत्या विभासिता ॥
तमः सूर्योदयेनेव ज्ञानेनोत्कृत्य नाश्यते ॥ ५०१ ॥

---

ब्रह्मत्वं बोद्ध्यते तत्राह * असङ्कुचितेति ॥ जागरादौ स्फुटानुभववत्सुषुप्तावपि स वक्तव्यः, न हि द्रष्टुरित्यादिश्रुतेः। आत्मनस्तत्र सवितृसन्निधौ सरोजवत्प्रकटितानुभवत्वासिद्धेरित्यर्थः। तर्हि जागरादाविव स्वापेऽपि सविशेषः स्यादित्याशङ्क्यावस्थाद्वये विषयेषु स्थितोऽपि स्वापवन्निर्विशेष एवात्मा, असङ्गो हीत्यादिश्रुतेः। अतस्तस्य सविशेषत्वापादनमयुक्तमित्याह * प्रज्ञानघन इति ॥ ४९८ ॥ साक्षित्वाद् बोधस्य सविशेषत्वमाशङ्क्याह * साक्ष्येति । न ह्यविद्यदृश्यसम्बन्धकृतं साक्षित्वं तस्य वास्तवाविशेषत्वं निहन्तीति भावः । तथापि वागादिविषयत्वाद् बोधस्य सविशेषत्वं घटादिवदित्याशङ्क्यासिद्धिमाह *प्रत्यगिति ॥४९९॥ नन्वात्मा सविशेषः कर्तृत्वात् राजवत्तत्राह * अस्मत्पक्ष इति । कर्तृत्वादिसम्बन्धस्य कल्पितत्वे फलितमाह * तदभावादिति । सर्वकल्पनाहेतोरज्ञानस्य ज्ञानात् ध्वस्तेस्तद्धेतुको बन्धः सर्वथा ध्वस्तो भवतीत्यर्थः ॥ ५०० ॥ अनुभवसिद्धमज्ञानमनादित्वादात्मवन्न निवर्त्तते इत्याशङ्क्य हेतोरप्रयोजकत्वं घटज्ञाने व्यभिचारश्चेति मत्वाऽऽह * स्वाभाविकीति ॥ ५०१ ॥ उक्तव्यभिचारसिद्ध्यर्थं घटाज्ञानस्य

अनाद्यपि तदज्ञानं ज्ञानेनादिमता क्षणात् ॥
दृश्यते नाश्यमानं हि घटाद्यज्ञानबोधयोः ॥ ५०२ ॥
एवम्भूतः स्वयं प्रत्यक् सर्वाज्ञानादिसाक्ष्यपि ॥
व्युत्पत्तेः प्रागविज्ञातः संस्तथैवानुभूयते ॥ ५०३ ॥
तस्मात्तत्त्वमसीत्यादेरागमादेव नान्यतः ॥
ऐकात्म्यवस्तुनः साक्षाद् व्युत्पत्तिरविचालिनी॥५०४॥
कार्यं निरोधः प्रतिपत्प्रसङ्ख्यानमखण्डनम् ॥
अबाधानुवादौ च प्रामाण्याय विचारिताः ॥५०५॥

इति वार्त्तिकसारे प्रामाण्यपरीक्षाख्यं तृतीय-
प्रकरणं समाप्तम् ॥

---

तज्ज्ञाननिवर्त्यत्वं स्पष्टयति * अनादीति ॥ ५०२ ॥ नन्वेव-
मपि स्वप्रकाशे तस्मिन्नज्ञानायोगात्प्रमाणाप्रवृत्तिरिति चेत्, नेत्या-
ह * एवमिति । सर्वबुद्धितद्वृत्तिसाक्षित्वादात्मा स्वप्रकाशो-
ऽपि प्राक् तत्त्वज्ञानोत्पत्तेः स्वानुभवादज्ञातः सिद्धोऽतस्तत्र
मानप्रवृत्तिरपि युक्तेत्यर्थः ॥ ५०३ ॥ ऐक्यस्य वेदान्तैकवेद्यत्व-
मुक्तमुपसंहरति * तस्मादिति ॥ ५०४ ॥ इयता प्रबन्धेन
प्रामाण्याय वेदान्तानामुक्तमर्थं संगृह्याह * कार्यमिति ॥ निरो-
धादिविधिपरत्वं निरस्याखण्डार्थत्वादि साधितमित्यर्थः॥५०५॥
इति वार्त्तिकसारटीकायां प्रामाण्यपरीक्षा समाप्ता ॥

---

प्रमाणं मेयसापेक्षं मेयता कस्य युज्यते ॥
इत्याकाङ्क्षानिवृत्त्यर्थं मेयमत्र निरूप्यते ॥ १ ॥
अविज्ञातः प्रमाणानां विषयो वादिनां मतः ॥
सोऽज्ञातो ऽर्थः प्रमाणात्किं सिद्ध्येद्यद्वा ऽनुभूतितः ॥ २ ॥
न तावन्मानतः सिद्धिर्मानेन तदपेक्षणात् ॥
न ह्यज्ञातमनुद्दिश्य कश्चिन्मानं प्रवर्तते ॥ ३ ॥
मानसिद्धं समुद्दिश्य यदि मानं प्रवर्तते ॥
आत्माश्रयादिदोषः स्यान्नैष्फल्यं च मितेस्तथा ॥ ४ ॥
अज्ञातत्वक्षतिं कुर्वन्मानं मानत्वमश्नुते ॥

---

शुद्धब्रह्मणो वेदान्तवेद्यत्वं तस्यैवोपहितस्य सर्वमानवेद्यत्वमिति प्रमाणनिरूपणप्रस्तावे ऽभिहितं, तदेवोत्तरग्रन्थेनोपपत्तिभिः प्रतिपाद्यत इत्याह * प्रमाणमिति ॥ १ ॥ अध्यक्षादिमानानां चिद्विषयत्वं साधयितुं सर्वसम्मतमर्थमाह * अविज्ञात इति । उक्तार्थसाधकं प्रमाणं वा साक्षी वेति विमृशति * स इति ॥ २ ॥ आद्यं प्रत्याह * नेति । अज्ञातत्वोपलक्षितविषयाभावे मानप्रवृत्तिरेव न स्यात्, तथा च मानप्रवृत्तिहेतुत्वेन पूर्वसिद्धस्याज्ञातार्थस्य न मानात् सिद्धिरित्यर्थः ॥ ३ ॥ अस्तु तर्हि ज्ञातार्थगोचरो मानमित्यापातशङ्कां निरस्यति * मानेति । मितेर्ज्ञातार्थविषयत्वे विषयविशेषणीभूतं ज्ञानं स्वस्मादभिन्नं भिन्नं वा ? । आद्ये आत्माश्रयः । अन्त्येऽन्योन्याश्रयादिः स्यादित्यर्थः । अज्ञातत्वस्य मानगम्यत्वे दूषणान्तरमाह * नैष्फल्यं चेति ॥ ४ ॥ तदेवोपपादयति * अज्ञातत्वेति । अज्ञातत्वं मानाज्ज्ञायते चेन्न तत्क्षतिर्मानफलं स्यात्, तद्गम्यस्य तदनिवर्त्यत्वात्, इत्यज्ञानानिवृत्तौ मानवैयर्थ्य-

सा चेदज्ञातता मानान्न कथं निष्फला मितिः ॥ ५ ॥
अथाज्ञातत्वसिद्ध्यर्थं तन्मितेः फलमिष्यते ॥
तर्ह्यज्ञातत्वमेतत्ते केनान्येन निवर्तते ॥ ६ ॥
न तन्निवर्त्तकं मेयं तस्य मेयैकसंश्रयात् ॥
अज्ञातो घट इत्येवमज्ञातत्वं प्रमेयगम् ॥ ७ ॥
अज्ञातं मानमित्युक्तेर्मानगं चेति चेन्न तत् ॥
मानेऽपि मेयताकार एवाज्ञातत्वसंश्रयः ॥ ८ ॥
यन्मानं पूर्वमज्ञातं तदन्येन प्रमित्सति ॥
मानेऽतो मेयताकारो घटादाविव विद्यते ॥ ९ ॥
अज्ञातत्वं मेयगतं मानेनातो निवर्त्यते ॥
नाज्ञातत्वमतो मानात्सिद्ध्यतीति विनिश्चयः ॥१०॥
अज्ञातत्वमिदं मानादसिद्धं केन सिद्ध्यति ॥

---

मित्यर्थः ॥ ५ ॥ अज्ञातत्वस्य मानगम्यत्वेऽपि न मितिवै-
र्थ्यं तद्व्यवहारादेरेव प्रमाफलत्वादिति शङ्कते * अथेति ।
मानगम्यत्वे तस्य निवृत्तिरेव न स्यादित्याह * तर्ही-
ति ॥ ६ ॥ ७ ॥ माननिष्ठत्वेनाप्यज्ञातताया अनुभवान्न तेना-
पि तन्निवृत्तिरिति शङ्कते * अज्ञातमिति । माने चाज्ञातत्वा-
श्रयतावच्छेदकं न मानत्वं किन्तु तद्गतमेयत्वमेवेति परिहरति
* न तदिति ॥ ८ ॥ उक्तेऽर्थे मानमाह * यन्मानमि-
ति । अन्येन मानगोचरमानेन प्रमातुमिष्टत्वे फलितमाह
* मानेऽत इति ॥ ९ ॥ तस्मादज्ञातत्वस्य निवर्तकान्तराभा-
वात्तन्निवृत्तेरनुभवसिद्धत्वाच्च न मानात्तत्सिद्धिरित्याह * नेति
॥ १० ॥ अज्ञातार्थसिद्धिः साक्षिणेति द्वितीयं कल्पं प्रश्नपू-
र्वकं परिशिनष्टि * अज्ञातत्वमित्यादिना । ज्ञानोत्तरकालमज्ञा-

इति चेत्, नित्यचैतन्यानुभवेनानुभूयते ॥ ११ ॥
नाज्ञासिषमिदं पूर्वमित्येवं प्रमिते पटे ॥
पूर्वाज्ञातत्वविषयः परामर्शो ह्यतिस्फुटः ॥ १२ ॥
न तस्याननुभूतस्य परामर्शः कथञ्चन ॥
अनुभूतिर्न प्रमाणाच्चैतन्यं तेन शिष्यते ॥ १३ ॥
प्रवृत्तं विषये मानं बोधयेद्विषयाकृतिम् ॥
ज्ञातताज्ञातते भातो न तेनाविषयत्वतः ॥ १४ ॥
रूपार्थं सम्प्रवृत्तेन नेत्रेण रसगन्धयोः ॥
अगृहीतिर्यथा तद्वज्ज्ञाताज्ञातत्वयोर्भवेत् ॥ १५ ॥
नेत्रागृहीतयोरन्यद् ग्राहकं स्याद्यथा तथा ॥
ज्ञातताज्ञातते ग्राह्ये मानामेये च ते चिता ॥ १६ ॥
घटोऽपि तर्हि गृह्येत चितैव ज्ञाततादिवत् ॥
इति चेदिष्टमेवैतद् गृह्येत च घटश्चिता ॥ १७ ॥
ज्ञातत्वेन घटो भाति सोऽज्ञातत्वेन भासते ॥

---

तत्त्वपरामर्शोऽन्यथानुपपन्नः सन् तस्य साक्षिवेद्यत्वं कल्पयति इत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ घटादिबोधकमानस्यैव तद्गतज्ञातताबोधकत्ववत् प्राक्कालीनाज्ञातत्वबोधित्वसम्भवात् किं साक्षिवेद्यत्वकल्पनयेत्याशङ्क्य घटादौ प्रवृत्तं मानं तदनुभवमात्रावसानं नाधिकबोधकमित्याह * प्रवृत्तमिति ॥ १४ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति * रूपेत्यादि ॥ १५ ॥ तयोश्चिन्मात्रग्राह्यत्वे प्रमित्यगोचरत्वं हेतुमाह * मानामेय इति ॥ १६ ॥ उक्तविधया घटस्यापि चिद्भास्यत्वसम्भवात् मानवैयर्थ्यमित्याशङ्कते * घट इति । चिद्भास्यत्वमात्रमङ्गीकरोति * इष्टमिति ॥ १७ ॥ तत्रानुभवं प्रमाणयति * ज्ञातत्वेनेति

इत्युक्ते घट एवात्र चिता ह्येवाऽवभास्यते ॥ १८ ॥
न चैवं मानवैयर्थ्यं ज्ञातृत्वाद्योपयोगतः ॥
अज्ञातत्वाद्योपयुक्तं तत्राज्ञानं यथा तथा ॥ १९ ॥
मानाज्ञानविहीनस्य कालस्यासत्त्वतो घटः ॥
ज्ञाताज्ञातत्वनिर्मुक्तः केवलो भाति न क्वचित् ॥२०॥
सर्वथापि चिता भास्यमज्ञातत्वं घटादिषु ॥
प्रमाणनैरपेक्ष्येण तत्सिद्धेः सर्वसम्मतेः ॥ २१ ॥
स्वतोऽनुभवतः सिद्धां बालोऽप्यज्ञाततां हठात् ॥
न किञ्चिज्ज्ञातमित्येवं वक्ति पृष्टः प्रमां विना ॥ २२ ॥
अथानुभूतपूर्वत्वाद् घटादौ शङ्क्यते प्रमा ॥
अत्यन्ताननुभूतोऽर्थ उदाहार्यस्तथा सति ॥ २३ ॥
अत्यन्ताननुभूतेषु हिमवत्पृष्ठवस्तुषु ॥
अज्ञातत्वमशङ्कः सन् परामृशति मानवः ॥ २४ ॥

---

॥ १८ ॥ मानवैयर्थ्यमुक्तं निरस्यति * न चैवमिति । ज्ञा-
ात्पूर्वमज्ञातत्वविशिष्टघटादेर्यथा चिद्भास्यत्वं तद्वत् ज्ञानकाले
ातत्वविशिष्टस्य तस्य चिद्भास्यत्वमिति विशेषणीभूतज्ञातत्व-
सिद्ध्यर्थं मानमित्यर्थः ॥ १९ ॥ केवलो घटस्तर्हि केन गम्यत
त्याशङ्क्य न केनापीत्याह * मानेति ॥ २० ॥ अज्ञातत्वस्य
नित्यानुभवसिद्धत्वमुक्तं निगमयति * सर्वथापीति । घटश्चिद्भा-
यो मानभास्यो वा भवत्वित्यर्थः ॥ २१ ॥ सर्वसम्मतत्वमेवाह
* स्वत इति ॥ २२ ॥ किञ्च प्रमितवस्तुषु प्राक्कालेनाज्ञातत्वं
मया सिध्यति साक्षिणा वेति स्यादपि शङ्का, अत्यन्तादृष्टव-
तुषु तत्सिद्धिः केवलानुभवाधीनेत्याह * अथेति ॥२३॥२४॥
नु नानुभवसिद्धमज्ञातत्वम् अनुभवस्यैवाभावादिति तत्राह

न चात्रानुभवो लुप्तो न जानामीति तत्स्मृतेः ॥
अदृष्टमपि तद्दृष्ट्वा स्मरेन्नाज्ञासिषं त्विति ॥ २५ ॥
अथेन्द्रियाणां सत्त्वेन कथञ्चिच्छङ्क्यते प्रमा ॥
तर्हि लुप्तेन्द्रियावस्था स्यात्सुषुप्तिरुदाहृतिः ॥ २६ ॥
निःशेषकरणग्रामलयेऽप्यनुभवः स्वतः ॥
अलुप्तदृक् सुषुप्तेऽस्ति जाग्रद्बोधाविशेषतः ॥ २७ ॥
पुमान् सुप्तोत्थितोऽतीतमज्ञातत्वं स्मरत्ययम् ॥
अनुभूतमतः सुप्तौ लुप्यतेऽनुभवो न हि ॥ २८ ॥
नन्विदानीन्तनाद्बोधान्नाज्ञासिषमितीदृशात् ॥
लिङ्गजन्याद् बुद्ध्यभावः सौषुप्तोऽत्रानुमीयते ॥ २९ ॥
ततः किञ्चिद्भावरूपमज्ञातत्वं न विद्यते ॥

---

*न चेति । मेरुगतं वस्तु जानासीत्यन्येन पृष्टे मैत्रो न जानामीत्यज्ञातत्वं स्मरति, तस्य पूर्वाननुभूतत्वे तदयोगान्नानुभवाभाव इत्यर्थः । किञ्चादृष्टं वस्तु दृष्ट्वा नैतावन्तं कालमेतदवेदिषमिति स्वानुभूताज्ञानानुसन्धानान्नानुभवापलाप इत्याह * अदृष्टमिति ॥ २५ ॥ अपिच स्वापे प्रमाणसामग्रीविरहेऽपि नित्यसिद्धचिद्धातुरूपोऽज्ञातत्वानुभवः स्वतोऽस्त्येव, अन्यथोत्थितस्य नावेदिषमिति परामर्शायोगात् । अतो जागरितेऽप्यज्ञाततावोधस्य स्वापादविशेषात्तत्र तत्प्रमासामग्रीविरहेऽपि सम्भावनायामपि साक्षिसिद्धा सर्वत्र सेत्याह *अथेत्यादिना । उक्तपरामर्शान्यथानुपपत्त्या सुप्तावपि साक्षिसिद्धौ न नित्यानुभवाभावशङ्केत्याह * अतः सुप्ताविति ॥ २६ ॥ २७ ॥ २८ ॥ सुप्तोत्थितस्य नावेदिषमिति ज्ञानमनुमितिः स्मृतिर्वा ज्ञानाभावविषयं न भावरूपाज्ञानविषयमिति तार्किकशङ्कां परिहरति *न-

नानुभूतिस्ततः सुप्तावित्यूचुस्तार्किका न तत् ॥ ३० ॥
न हि सुप्त्यविनाभूतं लिङ्गमद्य निरीक्ष्यते ॥
येन सौपुप्तवृत्तान्त इदानीमनुमीयते ॥ ३१ ॥
सौपुप्तबुद्ध्यभावोऽद्य स्मार्यैतेत्येतदप्यसत् ॥
सुप्तावननुभूतस्य नेदानीं युज्यते स्मृतिः ॥ ३२ ॥
गृहीत्वा धर्मिणं स्मृत्वा निषेध्यं प्रतियोगिनम् ॥
तदभावो ऽनुभूयेत सुप्तौ तन्न हि सम्भवेत् ॥ ३३ ॥
ग्रहणस्मरणे सुप्तौ स्यातां चेज्जागृयात् पुमान् ॥
अतोऽभावो नानुभूत इदानीं स्मार्यते कथम् ॥ ३४॥
तस्मात्साक्ष्यनुभूतं यदज्ञानं भावरूपकम् ॥
तत्प्रबुद्धः स्मरत्येष पुमानित्यभ्युपेयताम् ॥ ३५ ॥
बोधस्य लिङ्गजन्यत्वं यत्त्वयोक्तं तदप्यसत् ॥

---

त्यादिना ॥२९॥३०॥ सुप्तिकालीनज्ञानाभावव्याप्तलिङ्गाभा-
न्न तस्यानुमेयत्वम् इत्याह * न हीति ॥ ३१ ॥ अस्तु
र्हि तस्य स्मर्यमाणत्वमिति शङ्कते * सौपुप्तेति । अननुभूते
मरणायोगान्नैवमित्याह * एतदपीति ॥ ३२ ॥ ननु सुपुप्तौ
नाभावोऽप्यस्तीत्यत आह * गृहीत्वेति ॥ ३३ ॥ अभा-
ानुभवहेतुत्वेन सुपुप्तावपि धर्मिग्रहणस्य प्रतियोगिस्मरणस्य
स्वीकारे सर्वज्ञानोपरमलक्षणसुप्तिरेव न स्यादित्याह *ग्र-
णेति ॥ ३४ ॥ ज्ञानाभावस्यानुमितिस्मृत्यविषयत्वे फलित-
ाह * तस्मादिति ॥ ३५ ॥ यदुक्तम् इदानीन्तनबोधाल्लिङ्ग-
न्यात्सुप्तज्ञानाभावोऽनुमीयते इति तदुक्तिरेव न घटत इत्याह
*बोधस्येत्यादि । घटज्ञानमुत्पन्नमित्यादिप्रतीतेरन्तःकरण-
त्तिविषयत्वान्नानुभवस्य जन्यत्वं, तथा देशकालादिभेदान्न त-

सर्वत्र जन्या धीवृत्तिर्नित्यो बोधो न जन्यते ॥ ३६ ॥
इदानीन्तनबोधोऽयं तदानीन्तन इत्यपि ॥
भेदो ऽयं नित्यबोधस्य कालेन क्रियते कथम् ॥ ३७॥
बोधादेव प्रसिद्ध्यन्ति कालावस्थादयोऽखिलाः ॥
मातृमानादयश्चैव कुतस्तैरस्य विक्रिया ॥ ३८ ॥
प्रमातृमानतन्मेयेष्वागमापायिषु त्रिषु ॥
अलुप्तानुदितो बोधः प्रथते प्रत्यगेकलः ॥ ३९ ॥
अभितोऽनुभवाक्रान्ता ज्ञाताज्ञातत्वभूमिषु ॥
घटादयोऽर्थाः सिद्ध्यन्ति लीयन्तेऽनुभवे पुनः ॥४०॥
सर्वं वस्तु ज्ञाततया ह्यज्ञातत्वेन वा सदा ॥

---

स्य भिन्नत्वम् अतस्त्वदुक्तमसङ्गतमित्यर्थः ॥३६॥३७॥ नन्वनुभवस्य क्षीरादिवत्कालादिवशात्परिणामोऽस्तीत्यत्राह * बोधादिति । बोधाधीनसत्तास्फूर्त्तिकात्कालादेरादावेव सिद्धानुभवस्य न तद्वशाद्विकारः, नहि निर्विकारः स्वरसतो विकारतां गच्छतीत्यर्थः ॥ ३८ ॥ आत्मानुभवस्यापरिणामित्वे हेत्वन्तरमाह * प्रमात्रिति ॥ आगमापायिमात्रादिसाधकत्वेनागमादिशून्यः प्रत्यगेकस्वभावोऽनुभवो भाति अतो हेत्वभावान्नास्य विक्रियेत्यर्थः ॥ ३९ ॥ मात्रादीनामाधारत्वं तेषु सप्तमीप्रयोगात् बोधस्याधेयत्वं तत्र प्रथमाप्रयोगात् तत्कथं तस्य प्रत्यगेकलत्वमित्याशङ्क्याह * अभित इति । ज्ञातत्वेनाज्ञातत्वेन चाक्रान्तार्थगोचरव्यवहारकाले सर्वतोऽनुभवव्याप्ता घटादयः सत्तां लभन्ते, न चानुभवादन्यत्र ते तिष्ठन्ति, नाप्यर्थान्तरे लीयन्ते अतो मात्राद्यर्थानामनुभवात्मन्येवोत्पत्तिस्थितिलयभावादतिरेकेणासत्त्वं, काल्पनिकभेदाच्चाधाराधेयतेत्यर्थः ॥४०॥ ज्ञातत्वाज्ञा-

साक्षिचैतन्यविषय एवेति ज्ञानडिण्डिमः ॥ ४१ ॥
एवमज्ञाततासिद्धावज्ञातो यः प्रमीयते ॥
सर्वैर्मानैरतश्चिन्त्यं कस्याज्ञातत्वमीदृशम् ॥ ४२ ॥
चेतनो ऽचेतनो वा ऽयमज्ञातो यद्यचेतनः ॥
तत्राज्ञातार्थकार्यस्य जडस्याज्ञातता कुतः ॥ ४३ ॥
अज्ञातरज्जुकार्यस्य सर्पस्य ज्ञातता न हि ॥
अज्ञातब्रह्मकार्यस्य जडस्य ज्ञातता कथम् ॥ ४४ ॥
रज्जुसर्पं न जानामि बोद्धुमिच्छामि मानतः ॥
इति व्यवहृतिं प्राज्ञा नाङ्गीकुर्वन्ति केऽपि च ॥४५॥
किञ्चाज्ञातत्वतो लभ्यं तिरोधानं न चेतरत् ॥
स्वयमेव तिरोभूते जडे काऽन्या तिरोहितिः ॥ ४६ ॥

---

त्वाक्रान्तकाल इत्युक्तेः इतरकाले कथमिति शङ्का स्यात् तां निरस्यति * सर्वमिति ॥ ४१ ॥ ४२ ॥ एवं साक्षिसिद्धाज्ञातत्वविशिष्टस्यैव मानविषयत्वे सिद्धे तत्कस्य युज्यत इति विमृशति * चेतन इति । घटं न जानामीत्यनुभवाद्घटादेरेव तद्युक्तमित्याशङ्क्यानुभवस्यान्यथाप्युपपत्तेर्मैवमिति परिहरति * यदीत्यादिना ॥ ४३ ॥ ४४ ॥ रज्जुसर्पादिष्वज्ञातत्वाभावः कथमित्याशङ्क्य व्यवहाराभावादित्याह * रज्ज्विति ॥ यद्यपि घटादावुक्तव्यवहृतेरुपलम्भादज्ञातता शक्यशङ्का तथापि रज्जुसर्पदृष्टान्तेन कल्पितस्याज्ञातत्वाभावे निश्चिते तदवच्छिन्नचैतन्यनिष्ठाज्ञानविषयेणाप्युक्तव्यवहारोपपत्तिरिति भावः ॥४५॥ एवं जडेष्वज्ञातताकल्पकमानाभावान्न तेषां तदाश्रयत्वमित्युक्त्वा प्रयोजनाभावादपि न तदित्याह * किञ्चेति । स्वतोऽनभिव्यक्तात्मकजडस्याज्ञानकृतानभिव्यक्त्या न किञ्चित्प्रयोजनमित्यर्थः ॥ ४६ ॥ अभिव्यक्तचैतन्ये त्वनाभिव्यक्तरूपविशेषाधा-

आविर्भूतस्वरूपे तु चेतनेऽन्येन निर्मितात् ॥
तिरोधानाद्विशेषोऽस्ति शुभ्रवस्त्रे मषी यथा ॥ ४७ ॥
चन्द्रं मलिनयेद्राहुर्नीलमेघं न तु क्वचित् ॥
एवं चेतनमज्ञानं जडं त्वज्ञानदेहकम् ॥ ४८ ॥
कार्यकारणरूपं यन्निखिलं जडमीक्ष्यते ॥
तेन सर्वेण चिद्रूपः स्वप्रकाशस्तिरोहितः ॥ ४९ ॥
तिरोहितेनोभयं यद्भासते चन्द्रराहुवत् ॥
लोपः प्रकाशनाशो वा नास्ति चन्द्रवदेव हि ॥५० ॥
राहुग्रस्तत्वमिन्दौ चेदस्मद्दृष्ट्यैव भासते ॥
अज्ञातत्वं चितस्तद्वन्मूढदृष्ट्यैव भासताम् ॥ ५१ ॥
अतोऽनुभव एवैको विषयोऽज्ञातलक्षणः ॥
अक्षादीनां स्वतःसिद्धो यत्र तेषां प्रमाणता ॥ ५२ ॥

---

यकत्वादज्ञानं फलवदित्यत्र दृष्टान्तद्वयमुक्त्वा दार्ष्टान्तिकमाह *एवमिति॥ अज्ञानं मलिनयेदिति पूर्वेण सम्बन्धः। किञ्चाखिलजडस्याज्ञानकार्यत्वेन तदात्मकत्वादेव न तदाश्रयत्वमित्याह *जडन्त्विति ॥४८॥ तस्मात्सर्वप्रपञ्चात्मकेनाज्ञानेन चिन्मात्रमेव तिरोधीयत इत्याह * तेनेति ॥ ४९ ॥ चितस्तिरोहितत्वे जगदान्ध्यप्रसङ्गश्चित्प्रकाशस्य विपरिलोपादित्याशङ्क्याह * तिरोहितेनेति । लोप इत्यस्य व्याख्या प्रकाशनाश इति । वाशब्दोऽवधारणार्थो नास्तीत्यनेन सम्बध्यते । चन्द्रे प्रकाशालोपप्रसिद्धिं हिशब्देन सूचयति ॥५०॥ अमलस्यैवेन्दोरस्मद्दृष्ट्या राहुग्रस्तत्वप्रतीतेः प्रकाशालोपेऽपि चिति कथं तदलोप इति शङ्कते । राहुग्रस्तेति । साम्येन समाधत्ते*अज्ञातत्वमिति ॥५१॥ अज्ञातत्वाच्चित एव सर्वमानमेयत्वमित्युपसंहरति*अत इति॥५२॥

अनुभूतिग्रहायैव प्रवृत्तान्यपि दुष्टया ॥
सामग्र्याऽखिलमानानि गृह्णते जडसंयुतम् ॥ ५३ ॥
शुक्तिकाग्रहणायैव प्रवृत्तमपि लोचनम् ॥
गृह्णाति रजतोपेतं शुक्त्यंशं दोषयोगतः ॥ ५४ ॥
वेदान्तेतरसामग्री दुष्टैषा चक्षुरादिका ॥
तज्जधीरत्र गृह्णाति स्फूर्त्तिं रूपादिसंयुताम् ॥ ५५ ॥
एवं च सति विभ्रान्तः कल्पिते रजते धियम् ॥
प्रमाणं मनुते यद्वद्रूपादौ मनुजास्तथा ॥ ५६ ॥
धर्मिण्यभ्रान्तमखिलं ज्ञानमिच्छन्ति वादिनः ॥
सर्वधर्मिणि सद्रूपे प्रमा धीवृत्तयो ऽखिलाः ॥ ५७ ॥
विपर्ययं प्रकारे तु वदन्ति रजतादिके ॥
तथा रूपादिके बुद्धिः स्याद्विपर्ययरूपिणी ॥ ५८ ॥
एवं न्यायेन संसिद्धा प्रमाणानां प्रमाणता ॥
ब्रह्मण्येव तथाऽप्यज्ञा रूपादावेव तां विदुः ॥ ५९ ॥

---

नु तर्हि सर्वमानानि चिन्मात्रमेव किमिति न गृह्णन्ति तत्राह *अनुभूतीति ॥५३॥ अन्यार्थं प्रवृत्तमानस्य दोषवशादन्यस्यापि- हणे दृष्टान्तमाह * शुक्तिकेति ॥ ५४ ॥ तत्र चक्षुषि काचा- देवद्रूपादिग्राहकमानेषु दोषाभावात्कथं विपरीतग्राहकत्वमित्या- ङ्क्य नेहनानेतिश्रुत्या बाधितार्थबोधकत्वेन वेदान्तातिरिक्त- ानसामग्रीमात्रस्य दुष्टत्वाद्विपरीतधीरुपपद्यते इत्याह * वे- ान्तेति ॥ ५५ ॥ नन्वेवंसति रूपादिज्ञाने प्रमात्वप्रसिद्धिः कथमिति तत्राह * एवं च सतीति ॥ ५६ ॥ भ्रान्तिज्ञानगोच- चितिरपि तर्हि मिथ्या स्यादित्याशङ्क्याह * धर्मिणीति ॥ उ- क्तमेवार्थं दृष्टान्तमुखेन स्पष्टयति * सर्वधर्मिणीति ॥ ५७ ॥ चा- षुषज्ञानस्य न रूपाद्यंशे भ्रमत्वं श्रुतिविरोधादिति शङ्कते * प-

धर्मिण्येव प्रमाणं सदपि ज्ञानविमूढधीः ॥
रजतग्राहकं मानामिति विद्याद्यथा तथा ॥ ६० ॥
ब्रह्मण्यक्षादिमानत्वमिति न्यायविदां मतम् ॥
रूपादावेव तन्मात्वमिति मूढधियो जगुः ॥ ६१ ॥
पराञ्चि खानि व्यतृणदिति श्रुत्यैव दर्शितम् ॥
रूपादौ मात्वमक्षादेरिति चेत्तदसङ्गतम् ॥ ६२ ॥
बुद्धिवृत्तिं विहायान्यन्न किञ्चिन्मानमिष्यते ॥
नेत्रादीनि तु सामग्री दुष्टा तस्य इतीरितम् ॥ ६३ ॥
श्रुतिश्च दुष्टसामग्रीं लोकसिद्धामनूद्य ताम् ॥
निषेधति न नेत्रादेर्मानत्वाय प्रवर्तते ॥ ६४ ॥
मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ॥
इति नेत्रादिजन्यं यद् दर्शनं तन्निषेधति ॥ ६५ ॥
अतो मूढप्रसिद्ध्यैव नेत्रादीनां प्रमाणता ॥
तत्प्रसिद्ध्यैव रूपादेर्ज्ञातताज्ञातते अपि ॥ ६६ ॥
ननु पूर्वं चितोऽप्येतन्मूढदृष्ट्यैव वर्णितम् ॥

---

राञ्चीति । श्रुत्यर्थानभिज्ञो भवानित्याह ॥ तदिति ॥६२॥ रूपाद्यंशेऽपि प्रमात्वेनाभिमतं ज्ञानमन्तःकरणवृत्तिरन्यद्वा ? नान्त्यः अनुपलम्भादित्याह * बुद्धीति ॥ आद्ये तस्याः उक्तविधया दुष्टसामग्रीजन्यत्वान्न मात्वशङ्केत्याह * नेत्रेति ॥ ६३ ॥ कस्तर्हि श्रुतेरर्थ इत्याशङ्क्य चक्षुरादीनां रूपादिग्राहकत्वं लोकसिद्धमनूद्य ज्ञानस्यानर्थहेतुत्वं वदन्ती अर्थात्तस्य यथार्थविषयत्वं निषेधतीत्याह * श्रुतिरिति ॥ ६४ ॥ निषेधकवाक्यमर्थतः पठति * मृत्योरिति ॥ ६५ ॥ ६६ ॥ चैतन्ये रूपादौ चाज्ञातत्वादेर्मूढबुद्धिकल्पितत्वे चैतन्यमेवाज्ञातं नरूपादीति व्यवस्था कथमिति शङ्कते * नन्विति ॥ मूढद्वैविध्या-

अज्ञातत्वं सत्यमेवमस्ति भेदोऽत्र मूढयोः ॥ ६७ ॥
अप्रबुद्धो बुध्यमानः प्रबुद्धश्च त्रयो नराः ॥
प्रबुद्धं प्रति मूढौ द्वावाद्यो मूढस्तयोर्मतः ॥ ६८ ॥
अज्ञातत्वं प्रबुद्धस्य न कदाचिच्चिदात्मनि ॥
ज्ञातताज्ञातते तस्मिन्ध्यायमानो ऽभिमन्यते ॥६९॥
न्यायेन बुद्ध्यमानोऽसावप्रबुद्धस्य विभ्रमम् ॥
परीक्षमाणो मूढत्वमापादयति तं प्रति ॥ ७० ॥
अज्ञाते ब्रह्मचैतन्ये रूपमज्ञातमित्ययम् ॥
भ्रान्त्या रूपविबोधाय नेत्रं मानमपेक्षते ॥ ७१ ॥
दोषस्थानीयनेत्रेण जन्या धीर्ब्रह्मवस्तुनि ॥
आरोप्यरूपं ब्रह्मैव गृह्णात्यर्थात्तु रूपधीः ॥ ७२ ॥

---

न्न दोष इति परिहरति * सत्यमिति ॥ ६७ ॥ मूढस्वरूपं वक्तुं लोके मनुष्यत्रैविध्यं दर्शयति * अप्रबुद्ध इति । अज्ञातब्रह्मतत्त्वाः, केवलं श्रुतब्रह्मतत्त्वाः, साक्षात्कृतब्रह्मतत्त्वा इति लोके त्रिविधा नरा इत्यर्थः । तत्राद्यमध्ययोरन्त्यापेक्षया मूढत्वम् आद्यस्य तु मध्यमापेक्षयापि मूढत्वमित्याह * प्रबुद्धं प्रतीति ॥ ६८ ॥ एवंसति बुद्धतत्त्वदृष्ट्या चिति अज्ञातत्वादि कालत्रयेऽपि नास्तीत्याह * अज्ञातत्वमिति । श्रुतब्रह्मतत्त्वस्तु न्यायपूर्वं विचारयँश्चैतन्ये ऽज्ञातत्वादि कल्पयित्वा रूपादौ तत्कल्पयतोऽबुद्धतत्त्वस्य मूढतामापादयतीत्याह*ज्ञाततेत्यादिना ॥६९ ॥ तस्य मूढत्वापादनप्रकारव्याजेन ब्रह्मविचारसर्वस्वं दर्शयति *अज्ञात इति । अज्ञातत्वं रूपादौ परिकल्प्य तज्ज्ञानाय मानव्यापारं कुर्वन् ब्रह्मग्राहकमानेनारोपितरूपादिष्वपि दोषवशाज्ज्ञातेषु ज्ञातत्वमपि तत्र कल्पयतीत्यर्थः ॥७२॥ क्लृप्तः कल्पितः अ-

ज्ञाते ब्रह्मणि तद्रूपं ज्ञातमित्यभिमन्यते ॥
धिया भाते ब्रह्मतत्त्वे घटः क्लृप्तोऽवतिष्ठते ॥ ७३ ॥
यथा लोके लोचनेन भासिते शुक्तिखण्डकम् ॥
दोषेणापादितं तत्र रजतं केवलं स्थितम् ॥ ७४ ॥
नाज्ञातं रजतं पूर्वं क्लृप्तेः प्राक्तदसत्त्वतः ॥
ज्ञाताज्ञातत्वचिन्तेयं न ह्यस्ति नरशृङ्गके ॥ ७५ ॥
अज्ञातत्वं विना चक्षुर्न तद्बोधं प्रवर्तते ॥
किन्त्वज्ञानं शुक्तिखण्डमेव ज्ञापयति स्वतः ॥७६॥
चक्षुर्दृष्टे शुक्तिखण्डे दोषाद्रूप्येवकल्पिते ॥
नान्तरीयकभानत्वाद्रूप्यं ज्ञातमिति भ्रमः ॥ ७७ ॥
अश्वारूढे राजपुत्रे तन्मूर्धस्थितमक्षिकाम् ॥
दृष्ट्वा मूढो वदत्येषा यात्यारुह्य तुरङ्गमम् ॥ ७८ ॥
अतो न रूप्यमज्ञातं नापि ज्ञातं यथा तथा ॥
न ज्ञातो नाप्यविज्ञातः केवलं कल्पितो घटः ॥७९॥

---

वतिष्ठते केवलं न तत्र ज्ञाततेत्यर्थः ॥ ७३ ॥ कल्पितस्य ज्ञातत्वाद्यनाश्रयत्वे दृष्टान्तमाह * यथेति । केवलं ज्ञातत्वविधुरम् ॥ ७४ ॥ तत्र हेतुमाह *नाज्ञातमिति । ज्ञातत्वाज्ञातत्वयोरेकाधिकरणत्वादित्यर्थः । अज्ञातत्वं तस्य कुतो न तत्राह * क्लृप्तेरिति ॥ असतो निर्धर्मकत्वादिति भावः ॥ ७५ ॥ अज्ञातत्वाभावेऽपि रजतादौ ज्ञातत्वमस्तु तस्य मानजन्यज्ञानविषयत्वादित्याशङ्क्यासिद्धिमाह * अज्ञातत्वमिति ॥ ७६ ॥ कथं तर्हि रजतं पश्यामीत्यनुभवस्तत्राह * चक्षुरिति ॥ ७७ ॥ नान्तरीयकस्यापि मुख्यव्यवहारविषयत्वं भ्रमात्सम्भवतीत्यत्र दृष्टान्तमाह * अश्वेति ॥ ७८ ॥ उपपादितं दृष्टान्तमनुवदन् दार्ष्टान्तिकमाह * अत इति ॥ ७९ ॥ एवमनात्मन्यज्ञातत्वे निर-

ज्ञानाज्ञाने भावरूपे धीमाये ब्रह्म तद्युतम् ॥
ज्ञाताज्ञातत्वरूपस्य व्यवहारस्य गोचरः ॥ ८० ॥
ब्रह्मैव विषयो मायाधियोरिति सुनिश्चितम् ॥
धीवृत्तिरूपमानानां सर्वेषां ब्रह्म गोचरः ॥ ८१ ॥
सामग्रीभेदतस्तत्र बन्धमोक्षौ व्यवस्थितौ ॥
नेत्राद्युपनिषद्रूपे धीसामग्र्यौ धियो जने ॥ ८२ ॥
स्वत एवाज्ञानहान्यै प्रवृत्तामपि तां धियम् ॥
नेत्राद्याः प्रतिबन्ध्याशु रूपाद्यारोपयन्ति हि ॥८३॥
रूपाद्याकुलिता बुद्धिरज्ञानं हन्तुमक्षमा ॥
अभिभूयैतदज्ञानं क्षणं पश्चान्निवर्तते ॥ ८४ ॥
स्वत एवाप्रमाणत्वाद्रूपाद्याकुलनादपि ॥
व्यावहारिकमानत्वं भजते बुद्धिरीदृशी ॥ ८५ ॥

---

स्ते आत्मन्येव तदिति फलितं दर्शयन् प्रसङ्गान्मायाऽविद्ययोर्भेद-भ्रमं निरस्यति * ज्ञानेति । ज्ञानग्रहणं दृष्टान्तार्थम् ॥ ८० ॥ उक्तार्थमेव विवृणोति * ब्रह्मेति । विषयपदेन तद्योग्यत्वं विवक्षितमतो न पुनरुक्तिः ॥ ८१ ॥ ननु सर्वमानानां ब्रह्मविषयत्वे नेत्रादिज्ञानेनापि मोक्षः स्यात्, अन्यथा वेदान्तज्ञानेनापि स न स्यादत आह * सामग्रीति । सामग्रीभेदमाह*नेत्रेति ॥८२॥ तत्राद्याया बन्धहेतुत्वमाह* स्वत एवेति द्वाभ्याम् । स्वतोऽज्ञान-निवर्तनसमर्थमपि ज्ञानं नेत्रादिदोषजत्वादारोपितविषयं सद-ज्ञानं क्षणमभिभूय स्वयं नश्यतीत्यर्थः ॥ ८३ ॥ ८४ ॥ नेत्रा-दिजन्यधियो वेदान्तधीवत्स्वतोऽप्रमात्वादुक्तविधया विपरीत-ग्रहाच्चाज्ञानानिवर्तकत्वेऽपि व्यवहारहेतुत्वमस्तीत्याह * स्वत इति ॥ ८५ ॥ श्रुतब्रह्मतत्त्वेनाप्रबुद्धे मूढत्वापादनप्रकारमु-

अतो मूढा एवमाहुरज्ञातत्वविघाततः ॥
मात्वमक्षादयो यान्तीत्येवं तीर्थकरा अपि ॥ ८६ ॥
नेत्रादिमात्ववादेऽस्मिन् घटादेरेव मेयता ॥
घटादयः प्रमासिद्धा मुञ्चन्त्यज्ञातता ततः ॥ ८७ ॥
ननु मानमपेक्ष्यैते मुञ्चन्त्वज्ञातता जडाः ॥
चिदात्मा न विना मानं त्यजेदज्ञातता कुतः ॥ ८७ ॥
उच्यते साधकत्वेन नाज्ञानं हन्ति सा चितिः ॥
यत्साधकं न तल्लोके बाधकं क्वचिदिष्यते ॥ ८९ ॥
मानयोगात्पुरा सिद्धिर्लौकिकस्यापि वस्तुनः ॥
संवित्तत्त्वबलादेव तत्तमोऽव्यवधानतः ॥ ९० ॥
किमु वक्तव्यमासन्नं तमः सिद्ध्यति चिद्बलात् ॥
तस्मात्प्रमाणमेवास्य तमसो घातकं न चित् ॥ ९१॥

---

क्तमुपसंहरति * अत इति। नेत्रादिमानानां व्यवहारहेतुत्वादि-त्यर्थः * अज्ञातत्वेति । रूपादीनामिति शेषः ॥ न केवलं लौकिका एव भ्रमन्ति अपितु वादिनोऽपीत्याह *एवमिति ॥८६॥ एवं मूढद्वैविध्ये सिद्धे भ्रान्तत्वादिकं प्रथममूढदृष्ट्या घटादिनिष्ठमिति न पूर्वोत्तरविरोध इत्याह * नेत्रेति ॥ ८७ ॥ अज्ञातत्वं जडनिष्ठमिति पक्षे मानानां तन्निवर्तकत्वेन फलवत्त्वेऽपि चैतन्यनिष्ठं तदिति पक्षे तेनैव तन्निवृत्तिसम्भवान्मानवैयर्थ्यमिति शङ्कते *नन्विति ॥८८॥ अज्ञानसाधकचैतन्यस्य तदनिवर्तकत्वात्तन्निवृत्तये मानमर्थ्यत इत्याह *उच्यत इति ॥८९॥ चितेरज्ञानसाधकत्वं कैमुतिकन्यायेन दर्शयति * मानेति । अज्ञानव्यवहितघटादेरपि साक्षिभास्यत्वमुक्तं किमुताज्ञानस्येत्यर्थः ॥ ९० ॥ चैतन्याज्ञानयोरविरोधे फलितमाह * तस्मादिति ॥ ९१ ॥ नेत्रादिजन्यज्ञानमपि तर्हि निवर्तकं स्यादित्याश-

मानं च नेत्राद्युत्थं चेदभिभावकमीरितम् ॥
न दोषदुष्टबुद्ध्या हि तमस्तत्कार्यनिन्हुतिः ॥ ९२ ॥
कृत्स्नमात्राद्युपादानतमोबाधस्तु बोधतः ॥
तत्त्वमस्यादिवाक्योत्थात्पूर्णैकात्म्यस्वलक्षणात्॥९३॥
ननु वाक्यजबुद्ध्याऽपि युज्यते न तमोन्हुतिः ॥
नेत्रादिदोषजातस्य तदवस्थत्वदर्शनात् ॥ ९४ ॥
नैष दोषो यतो भिन्ना सामग्री वैदिकं वचः ॥
न ह्यन्धत्वापराधेन शब्दं न शृणुयात्पुमान् ॥ ९५ ॥
अथैकविषये भिन्नसामग्र्यप्येकदा कथम् ॥
विरुद्धबुद्धिमेकस्य जनयेदिति चेच्छृणु ॥ ९६ ॥
किं भिन्नविषयेऽप्यस्ति त्वेकदा धीद्वयं तव ॥
नेति चेदेकशब्देन विशेषयसि किं वृथा ॥ ९७ ॥

---

द्य तस्य नेहनानेति श्रुत्या बाधितरूपादिविषयत्वेन दोषज-
यत्वस्योक्तत्वान्नाज्ञानतत्कार्यनिवर्तकत्वमित्याह * मानमि-
ि ॥ ९२ ॥ अतः पारिशेष्यात्तत्त्वमादिजन्यज्ञानस्यैवाज्ञानत-
कार्यनिवर्तकत्वमित्याह * कृत्स्नेति । मीयन्त इति मात्रा ग-
नादयः ॥ ९३ ॥ दोषत्वेनाभिमतद्वैतग्राहकमानानां तदवस्थ-
ात्कथमद्वैतज्ञानेनाज्ञाननिवृत्तिरिति शङ्कते * नन्विति ॥ ९४॥
थापि वेदवाक्यस्य निर्दुष्टत्वात्तमोनिवर्त्तकधीजनकत्वमविरुद्ध-
ेति समाधत्ते * नैष दोष इति ॥ ९५ ॥ सामग्रीभेदेऽप्येक-
स्मिन् ब्रह्मणि सविशेषानिर्विशेषत्वधीरेकदैकस्य कथमिति शङ्कते
*अथेति ॥ ९६ ॥ एकस्मिन्विषये युगपद्धीद्वयं न घटत इति
दतो भिन्नविषये तदनुमतं न वा ? । नाद्यः, एकं करणमेकदै-
ामेव क्रियां जनयतीति न्यायविरोधादित्यभिप्रेत्याह * कि-
ेति । द्वितीयमनूद्य मत्याह * नेति ॥ ९७ ॥ एवमेकस्मिन्निति

क्रमेण विषये भिन्नएकस्मिन्नपि धीद्वयम् ॥
स्वसामग्र्यनुसारेण भवन्न हि विरुद्ध्यते ॥ ९८ ॥
ततः सत्येव नेत्रादावद्वैतं बोधयेद्वचः ॥
अविज्ञातत्वमद्वैते तद्बोधेन निवर्त्यते ॥ ९९ ॥
तदैव ज्ञातमित्येव व्यवहारस्ततो भवेत् ॥
अज्ञातत्ववदद्वैते ज्ञातत्वं न विरुद्ध्यते ॥ १०० ॥
अज्ञातत्वं मायिकं चेज्ज्ञातत्वमपि तत्तथा ॥
विद्यया को विशेषश्चेज्ज्ञाततैवेति निश्चिनु ॥ १०१ ॥
पुरुषार्थः क इति चेन्मोक्ष एव न चेतरः ॥
श्रुतिं प्रतिभुवं विद्धि ज्ञानमात्रेण मुक्तये ॥ १०२ ॥
आगामिजन्माभावेऽपि साम्प्रतं लभ्यतेऽत्र किम् ॥
इति चेत्कृतकृत्यत्वधिया विश्रान्तिरुत्तमा ॥ १०३ ॥

---

विशेषणवैयर्थ्यं एकदैकस्य पुंसो बुद्धिद्वयानङ्गीकारान्नोक्तशङ्कावकाश इत्याह * क्रमेणेति । दृष्टान्तार्थं भिन्नविषय इत्युक्तम् ॥९८॥ तस्मान्नेत्रादौ सत्यपि वाक्यजन्याद्वयज्ञानादज्ञाननिवृत्तिरुपपद्यत इत्याह * तत इति ॥९९॥ अज्ञाननिवृत्तौ लिङ्गमाह * तदेति । ननु निर्धर्मके ब्रह्मणि ज्ञातत्वं कथं ? तत्राह *अज्ञातत्ववदिति । न च मायायाः नष्टत्वात् कथं मायिकं ज्ञातत्वमिति शङ्क्यम् । प्रारब्धप्रतिबद्धतल्लेशस्य विद्यमानत्वादिति भावः ॥१००॥ मायाकार्यस्य यथापूर्वमवस्थाने आत्मनि विद्याकृतविशेषाभावात्तद्वैफल्यमित्याशङ्क्यासिद्ध्या दूषयति *विद्ययेति ॥१०१॥ तथापि ज्ञाततायाः अपुमर्थत्वान्न विद्याफलत्वमित्याशङ्क्य ज्ञानेनाज्ञाननिवृत्तेरप्यङ्गीकारान्न दोष इत्याह *पुरुषेति । * प्रतिभुवमिति । घटकप्रमाणमिति यावत् ॥ १०२ ॥ १०३ ॥

आस्तां फलविचारोऽयं रूपशब्दादिकल्पकम् ॥
नेत्रादिकं स्याद्विद्यायां लब्धायामिति चेच्छृणु ॥१०४॥
कल्पयत्येव रूपादि यथापूर्वं न संशयः ॥
ऋजुत्वं कः श्वपुच्छस्य कामयेतेह बुद्धिमान् ॥१०५॥
रूपाद्यकल्पनान्मोक्षः श्रूयते न क्वचिच्छ्रुतौ ॥
कल्प्यतामत्र रूपादि का ते हानिः प्रकल्पने ॥१०६॥
मृत्योः स मृत्युमित्येव द्वैतदृष्टिरपोद्यते ॥
यदि तर्हि न पश्यामि द्वैतं तस्य प्रमापणात् ॥१०७॥
निषेधति श्रुतिर्द्वैतदृष्टिमेव न कल्पनम् ॥
प्रत्युतैतस्य यत्नेन कल्पितत्वं वदत्यसौ ॥ १०८ ॥
कल्पितत्वावबोधेन कल्पितं न निवर्तते ॥
मनुष्यत्वावबोधेन मनुष्यस्यानिवर्तनात् ॥ १०९ ॥
कल्पितं न निवृत्तं चेद्वाचैवाद्वैतमीर्यते ॥
इति चेत्ते किमद्वैतं कर्त्तव्यं पाणिना वद ॥ ११० ॥
न कर्त्तव्यं किंतु बुद्ध्या बोद्धव्यमिति चेत्प्रभो ॥
बुध्यस्वाखिलवेदान्तैः किमुपालम्भसे वृथा ॥ १११ ॥

---

विद्याफलं यत्किञ्चिदस्तु, आत्मन्यतदारोपो नेत्रादिप्रयुक्तोऽस्ति नवेति पृच्छति *आस्तामिति ॥१०४॥ अस्तीत्युत्तरमाह * कल्पयतीति॥ स्वभावस्यानिवृत्तौ दृष्टान्तमाह*ऋजुत्वमिति॥१०५॥ कथं तर्हि मुक्तिरित्याशङ्क्य कल्पितप्रपञ्चस्य मोक्षप्रतिबन्धकत्वे मानाभावान्मुक्तिर्युक्तेत्याह * रूपेति ॥१०६॥ श्रुत्यैव द्वैततद्दृष्टेरपोदितत्वात् द्वैतस्य कथं प्रतीतिरित्याशङ्क्य द्वैतसत्यत्वमेव श्रुत्याऽपोद्यते न स्वरूपमित्याह * मृत्योरिति । द्वैतम्, अबाधितमिति शेषः ॥१०७॥ य इह नानेत्यादिसामान्यश्रुतेः क

परोक्षमेव वेदान्ता बोधयन्तीति चेन्न तत् ॥
बोद्धुरात्मानमुल्लिख्य त्वं ब्रह्मेत्यवबोधनात् ॥११२॥
स्वयं स्वस्य परोक्षश्चेत्कोऽपराधोऽन्य ईर्यताम् ॥
ब्रह्मत्वं च स्वतो नान्यत्कस्यात्र स्यात् परोक्षता॥११३॥
अद्वैतत्वं परोक्षं चेन्नास्य ब्रह्मत्वमात्रतः ॥
नहि ब्रह्मातिरेकेण किंचिदद्वैतमिष्यते ॥ ११४ ॥
एवमप्यापरोक्ष्यं ते मनो नाङ्गीकरोति चेत् ॥
तर्हि वैश्यपिशाच्या त्वं गृहीतस्त्वद्धिभेम्यहम् ॥११५॥
भूयो भूयो बलिं वैश्याः पिशाच्यै ददतेऽनिशम् ॥
अथापि सा पिशाची तान् बाधतेऽनपराधिनः॥११६॥
एवं बहुश्रुतिन्यायबोधितं सन्मनः पुनः ॥
विसंवदत एवेति का तत्र स्यात्प्रतिक्रिया ॥ ११७ ॥
कल्पितं चेत्समुच्छिन्द्यास्तुष्याम्येतावतेति चेत् ॥
उच्छेत्स्यामि यदा रज्जुसर्पं मारयसे तदा ॥ ११८ ॥
मा भूत्तर्हि समुच्छेदः कल्पनं विनिवारय ॥
इति चेदिन्द्रियाणि त्वं त्यज यास्यति कल्पनम्॥११९॥
जीवनायेन्द्रियापेक्षा यदि तर्हि क्षमस्व तत् ॥
कल्पनं तावता हानिः का तेऽसङ्गचिदात्मनः॥१२०॥
जातायां रज्जुविद्यायां सर्पक्लृप्तिर्न दृश्यते ॥

---

थं द्वैतसत्यत्वनिषेधपरत्वमपीत्याशङ्क्याह *मत्युतेति ॥ कल्पितस्य श्रुतितात्पर्यविषयत्वं प्रतिपादितमधस्तात्, अतो न तन्निषिद्ध्यत इत्यर्थः ॥१०८॥१०९॥११०॥१११॥ बोद्धुरिति ॥ दशस्त्वमसीतिवाक्यवदपरोक्षं वस्तु बोधयतो न परोक्षार्थत्वमित्यर्थः ॥११२॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७

इति चेत् दृश्यतेऽस्माभिर्मन्दे तमसि पूर्ववत् ॥१२१॥
न तत्र मृत्युभीतिश्चेन्नात्र जन्मभयं पुनः
यदि तत्र तमोदोषः कर्मदोषोऽत्र तत्समः ॥ १२२ ॥
किंचानुसृत्य तद्बुद्धिसाम्यमेवमुदीर्यते ॥
सर्वसाम्यं न दृष्टान्ते प्रार्थ्यते केनचित् क्वचित्॥१२३॥
विवक्षितं तु सादृश्यमधिष्ठानं न कल्पितम् ॥
अवस्त्वारोप्यमित्येतत्कण्ठं शोषय मा वृथा ॥१२४॥
कल्पितस्यानुवृत्त्यर्थं दृष्टान्ताश्चेदपेक्षिताः ॥
प्रतिबिम्बादिदृष्टान्ताः शतशोऽथ सहस्रशः ॥१२५॥
स्वानुभूत्यैकसंवेद्या विद्या सर्वेषु वस्तुषु ॥
यदि तेऽनुभवो नास्ति तर्हि जन्मास्ति ते ध्रुवम्॥१२६॥
किं बहूक्त्या प्रमेयः स्यादज्ञातत्वेन चेतनः ॥
सर्वेषामपि मानानामज्ञातत्वाभिभाविनाम् ॥१२७॥
वेदान्तानां विशेषेण निःशेषाज्ञानघातिनाम् ॥
अज्ञातश्चेतनो मेयो नाज्ञातोऽन्योऽस्ति कश्चन ॥१२८॥
किं चानन्दाप्तिरूपस्य पुरुषार्थस्य हेतवः ॥
वेदान्तास्तेन तन्मेय आनन्दात्मा परः पुमान्॥१२९॥
ननु दुर्वारसंसारदुःखसन्दर्भहानतः ॥

---

॥ ११८ ॥ ११९ ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥१२४॥ ॥ १२५ ॥ १२६ ॥ एवं प्रसङ्गागतं समाप्य ब्रह्मणः सर्वमानमेयत्वमुक्तमुपसंहरति * किमिति ॥ १२७ ॥ चितः सर्वमानमेयत्वे वेदान्तमेयत्वं कैमुत्येनाह *वेदान्तानामिति ॥१२८॥ ब्रह्मात्मन एव वेदान्तमेयत्वे हेत्वन्तरं *किञ्चेति॥१२९॥ परमात्मा नानन्दात्मकः दुःखनिवृत्तीतरसुखाभावात् भावाभावयोरै-

किमन्यत्सुखमिष्टं स्याद्यस्याप्तेः पुरुषार्थता ॥ १३० ॥
नहि भावः सुखं किन्तु स्यात् दुःखाभाव एव तत् ॥
लोके हि व्याधिसन्तापविच्छित्तौ सुखतेष्यते॥१३१॥
यदि भावः सुखं तर्हि न प्रवृत्तिर्विरागिणाम् ॥
तदासक्त्या प्रवृत्तिश्चेद्भवेत्संसार एव सः ॥ १३२ ॥
स्वरूपं चेत्सुखं तच्च नावेद्यं पुम्भिरर्थ्यते ॥
वेद्यत्वे कर्मकर्तृत्वमेकस्यैव प्रसज्यते ॥ १३३ ॥
तस्मान्न भाव आनन्दो मोक्षे यः प्राप्यते नृभिः ॥
अतो वेदान्तमेयत्वे आनन्दत्वमसाधकम् ॥ १३४ ॥
उच्यते सुखदुःखे द्वे भावरूपे गवाश्ववत् ॥
स्पष्टमेवानुभूयेते सुखस्याभावता कुतः ॥ १३५ ॥
नदीमग्नार्द्धकायस्य युगपत्सुखदुःखयोः ॥
शैत्यौष्ण्यजन्ययोर्ग्रीष्मेऽनुभूतिः केन वार्यते ॥१३६॥
मनसः क्रमबोधित्वात् यौगपद्यं न यद्यपि ॥
नैतावता ऽपराधेन दुःखाभावत्वमापतेत् ॥ १३७ ॥

---

व्यायोगादिति जरत्तार्किकः शङ्कते *नन्विति ॥१३०॥१३१॥ विरक्तानां भावसुखे प्रवृत्तौ दोषमाह * तदेति ॥ इच्छामात्रस्य बन्धहेतुत्वादित्यर्थः ॥ १३२ ॥ किञ्च भावरूपं सुखमसंवेद्यं संवेद्यं वा?। आद्ये ऽज्ञातनिधिवदपुमर्थतेत्याह *स्वरूपमिति। द्वितीयं निराह * वेद्यत्व इति॥१३३॥१३४॥सर्वानुभवविरुद्धत्वान्नेदं मतमादेयमित्याह * उच्यत इत्यादिना ॥१३५॥१३६॥ एकदा सुखदुःखानुभवो भ्रमः एकस्मात्कारणाद्युगपत्क्रियाद्वयायोगादित्याशङ्क्य, तथापि न त्वदिष्टसिद्धिरित्याह * मनस इति ॥ १३७ ॥ दुःखोत्तरक्षणे जायमानस्य सुखस्य तदभावत्वशङ्का-

कालभेदेन शङ्का चेद्वैपरीत्यं कुतो न ते ॥
आनन्दाभाव एवेदं दुःखमित्यपि शङ्कनाम् ॥१३८॥
अश्रुपातादिहेतुत्वात् दुःखं भावो यदा तदा ॥
दृग्विकासादिहेतुत्वात्सुखं भावः कुतो न ते ॥१३९॥
आहारादिज आनन्दो बुभुक्षादिपुरःसरः ॥
नियतस्तेन दुःखस्य ध्वंस आनन्द इत्यसत् ॥१४०॥
तृप्ता अपि च दाक्षिण्याद् भुञ्जानाः सुखमाप्नुयुः ॥
अनातुरोऽपि चाभ्यङ्गे मर्दनात् सुखमश्नुते ॥ १४१ ॥
सुखोपायविहीनानां क्वाप्यानन्दमपश्यताम् ॥
मर्दनादेः पुरा दुःखं कल्प्यमित्येतदप्यसत् ॥ १४२ ॥
चन्दनादिसुखोपायसम्पन्नाः सुखिनोऽप्यलम् ॥
पुत्रजन्मादिवार्ताभिः प्राप्नुवन्ति सुखान्तरम्॥१४३॥
पुत्राद्यप्राप्तिरूपं च दुःखं तत्र न कल्प्यते ॥
अप्रतीतेरवेद्यं तु न दुःखं वैरिदुःखवत् ॥ १४४ ॥

---

ां वैपरीत्यं प्रसञ्जयति *कालेति॥१३८॥१३९॥सुखस्य नियमेन
ःखानन्तरभावित्वात्तदभावत्वमित्याशङ्क्य नियमासिद्धिमाह
*आहारेत्यादिना ॥१४०॥१४१॥ तत्रापि मर्दनाद्यभावप्रयुक्तं
ःखमस्तीति न नियमभङ्ग इत्याशङ्क्य निर्दुःखसुखिनामपि सु-
ान्तरदर्शनात् मैवमित्याह *सुखेत्यादिना॥१४२॥१४३॥ ननु
त्र पुंसि पुत्रजन्मादिश्रवणकृतं सुखं जायते तत्रापि पुत्राप्तिनि-
मित्तदुःखध्वंस एव सुखमिति चेत्, नेत्याह * पुत्रादीति ।
त्र हेतुः * अप्रतीतेरिति । अननुभूयमानस्यादुःखत्वे दृष्टा-
तः * वैरिदुःखेति ॥ १४४ ॥ अप्रतीतेरिति हेतुरसिद्धः

अपुत्रा दुःखिनः केचित् दृश्यन्ते मनुजा यदि ॥
तथाप्यज्ञानतो दुःखं तिरश्चां नैव विद्यते ॥ १४५ ॥
तिर्यञ्चोऽपि स्ववत्सानां लाभे प्रीतिं व्रजन्ति हि ॥
प्रीताः पृथग्जिहासन्ति वेदनां ताडनादिजाम् ॥१४६॥
दुःखाभावो यदि प्रीतिर्जिहासाप्रेप्सयोर्भिदा ॥
लुप्येतातः प्रेप्सितैषा प्रीतिर्दुःखं जिहासिता॥१४७॥
लौकिकस्य सुखस्यैवं भावत्वे सुस्थिते सति ॥
वैदिकस्यापि भावत्वमैकार्थ्याल्लोकवेदयोः ॥ १४८ ॥
वेदोऽपि शुद्धमात्मानं सुखं मुख्यं प्रदर्शयन् ॥

---

पुत्रहीननरेषु तत्प्रयुक्तदुःखोपलम्भान्नोक्तव्याप्तिभङ्ग इत्याशङ्क्य पशुशकुन्तादिषु व्यभिचारमाह । * अपुत्रा इति ॥ तेषां पुत्राद्यभावप्रयुक्तं दुःखं नेत्यत्र हेतुः * अज्ञानत इति । अवेद्यं तु न दुःखमित्यनुपदमेवोक्तत्वादिति भावः ॥ १४५ ॥ ननु दुःखवत्तेषां तत्प्रयुक्तप्रीतिरपि नास्ति तत्राह * तिर्यञ्च इति । तेषामपि स्ववत्सेषु प्रीतिरस्ति तल्लिङ्गानामुपलम्भादिति भावः । अपिच सुखाप्तिव्यतिरेकेण दुःखध्वस्तेरिष्टत्वाच्च न दुःखाभावः सुखमित्याह * प्रीता इति ॥ १४६ ॥ यस्मात्सुखदुःखयोः प्रेप्साजिहासे पृथगुपलभ्येते तस्माद् दुःखाभावस्य पश्वादिवत्सुखशेषत्वान्न सुखात्मकत्वमित्याह *अत इति ॥१४७॥ लोके सुखपदार्थस्य भावत्वेऽपि वेदे कथं तत्सिद्धिरित्याशङ्क्य "य एव लौकिकास्त एव वैदिकाः"इति न्यायेन वेदेऽपि तस्य भावत्वं सिद्ध्यतीत्याह * लौकिकस्येति ॥ १४८ ॥ आत्मसुखस्य भावत्वं न केवलं न्यायसिद्धं किन्त्वशनायाद्यतीतमात्मानं सुखात्मकं, दुःखं चात्माऽस्पृष्टं ब्रुवन् वेदोऽप्येवमेवमाह-

अनात्मानं तथा दुःखं तयोर्भावत्वमिच्छति ॥१४९॥
तदेतत्प्रेय इत्यादिवाक्येभ्योऽनेकधा श्रुतम् ॥
तथाऽऽत्मनस्तु कामायेत्यतो भावः सुखं भवेत्॥१५०॥
यदुक्तं भावरूपत्वे रागात्तत्र प्रवृत्तितः ॥
मोक्षः संसार एवेति त्वत्पक्षेऽपि समं हि तत्॥१५१॥
संसारदुःखद्वेषेण दुःखोच्छेदाख्यमोक्षके ॥
प्रवृत्तेः संसृतित्वं ते मुक्तेः केन निवार्यते ॥ १५२ ॥
पुरुषार्थाभिसम्बन्धात् द्वेषस्यापि विरागिता ॥
यदि तर्ह्येष रागोऽपि सिद्ध्ये चात्रेति तुष्यताम्॥१५३॥
दुःखद्वेषो द्वयोस्तुल्यो रागिता नेऽधिकेति चेत् ॥
तवापि गुरुशास्त्रादाविच्छायां किं न रागिता॥१५४॥
तस्मादानन्दभावत्वे मोक्षे किंचिन्न दुष्यति ॥

---

याह *वेद इति ॥१४९॥ कोऽसौ वेदः ? इत्याशङ्कायामात्मनः
सुखत्वे वेदवाक्यान्युदाहरति * तदिति ॥ श्रुतम्, आत्मनः
सुखत्वमिति शेषः ॥१५०॥ आत्मसुखरागिणां न मुक्तिः राग-
मात्रस्य बन्धहेतुत्वादिति पूर्वपक्षोक्तं दोषमनूद्य प्रतिबन्द्या परि-
हरति *यदिति ॥१५१॥१५२॥ नास्मत्पक्षे मिथ्याज्ञाननिमित्तात्
द्वेषात् मोक्षे प्रवृत्तिः किन्तु विवेकपूर्वकात्, तस्य च पुमर्थहेतुत्वान्न
बन्धहेतुत्वमित्याशङ्कते * पुरुषार्थेति । विरागिता बन्धहेतुता ।
साम्येन समाधत्ते * यदीति ॥ अत्र चेति सम्बन्धः । अस्म-
पक्षेऽपीत्यर्थः ॥ १५३ ॥ १५४ ॥ एवं मोक्षस्य भाव-
रूपसुखत्वे न कश्चित् दोष इत्युपसंहरति * तस्मादिति ।
तथापि कथं तस्य परमपुरुषार्थत्वं ? तत्राह * तस्येत्या-
दिना । आनन्दवल्यां मानुषानन्दमारभ्योत्तरोत्तरं शतगुणत्वेन

तस्यानतिशयत्वेन पुरुषार्थः परो मतः ॥ १५५ ॥
अथ ये शतमित्यादिवाक्याच्छतगुणोत्तरः ॥
उत्कर्षोऽवसितो यत्र मोक्षानन्दः स उच्यते ॥१५६॥
एष ह्येवानन्दयाति जीवान्सर्वानिति श्रुतिः ॥
लौकिलानन्दलिङ्गेन ब्रह्मानन्दं व्यनक्ति हि ॥१५७॥
न चात्यन्तपरोक्षोऽयमानन्दः प्राणिनां यतः ॥
स्वकीयः परमानन्दः सुषुप्तावनुभूयते ॥ १५८ ॥
स्वानन्दाभिमुखः स्वापे बोध्यमानोऽत एव च ॥
पीड्यते स्त्र्यादिसम्पर्कसुखविच्छेदतो यथा ॥ १५९ ॥
यदुक्तं कर्मकर्तृत्वं वेद्यत्वे ऽथापुमर्थता ॥
अवेद्यत्व इतीदं तु नात्र दोषद्वयं भवेत् ॥ १६० ॥
आनन्दस्य स्वरूपत्वाद्वेद्यता तत्र नार्थ्यते ॥
निःसम्बोधेऽर्थ्यते सा हि न तु बोधैकलक्षणे ॥१६१॥

---

वर्णितस्यानन्दस्य यत्र परा काष्ठा स स्वरूपानन्दः तस्य च निरतिशयत्वात्परमपुरुषार्थत्वमित्यर्थः॥१५५॥१५६॥ ब्रह्मणः सुखत्वे हेत्वन्तरमाह * एष इति ॥ स्वप्रतिबिम्बभूतान् जीवानप्यानन्दिनः कुर्वाणस्य प्रचुरानन्दत्वं व्यक्तमित्यर्थः ॥१५७॥ प्रत्यक्षसिद्धत्वाच्च नात्मसुखे विवदितव्यमित्याह*न चेति ॥१५८॥१५९॥ आत्मनः सुखत्वे बाधकमुक्तमनूद्य प्रत्याह * यदिति ॥१६०॥ प्रतिज्ञातमर्थं साधयति * आनन्दस्येति । *निःसम्बोध इति । अयमर्थः-प्रकाशमानत्वेन सुखस्य पुरुषार्थत्वं न तु प्रकाशविषयत्वेन गौरवात्, तच्च प्रकाशाभिन्नस्यापि सम्भवति, तथाच विषयेन्द्रियसम्पर्काद् वृत्तिविशिष्टत्वेन जायमानसुखस्य बोधविलक्षणत्वेनातिरिक्तप्रकाशापेक्षायामपि न शुद्धे बोधस्वरूपे तदपेक्षेति ॥१६१॥

अतः प्रकाशमानत्वात्पुमर्थत्वमपि स्थितम् ॥
पुमर्थत्वेन वेदान्तैस्तात्पर्येण प्रमीयते ॥ १६२ ॥
सुखस्य लौकिकत्वेन कथं वेदान्तमेयता ॥
इत्यचोद्यं यतोऽखण्डरूपं लोकान्न सिद्ध्यति॥ १६३ ॥
नेति नेत्यादिवाक्येभ्यो योऽर्थोऽनन्यानुभूतिगः ॥
लौकिकत्वं कथं तस्य सर्वमेयातिलङ्घिनः ॥ १६४ ॥
यद्यप्यलौकिकानन्दः स्वर्गो जायेत कर्मभिः ॥
तथापि तदनित्यत्वात्पुरुषार्थो न तावता ॥ १६५ ॥
निःशेषाल्हादसम्प्राप्तिः सर्वानर्थन्हुतिस्तथा ॥
सर्वेषां प्राणिनामेतत्स्वत इष्टं प्रयोजनम् ॥ १६६ ॥
यथोक्तपुरुषार्थस्य यद्यप्यात्मस्वरूपता ॥

---

उक्तमर्थमुपसंहरन्नात्मनः पुरुषार्थत्वे फलितमाह * अत इति ॥ १६२ ॥ अहं सुखीति सर्वानुभवसिद्धसुखस्य कथं वेदान्तवेद्यतेत्यापातशङ्कामनूद्य प्रत्यक्षाद्यसिद्धनिरतिशयानन्दस्यैव तन्मेयत्वाङ्गीकारान्न दोष इत्याह * सुखस्येति ॥ १६३ ॥ उक्तमर्थं स्पष्टयति * नेति । सर्वप्रपञ्चनिषेधावधिभूतस्य स्वप्रकाशस्य लोकमानमेयत्वशङ्कैव नास्तीत्यर्थः ॥ १६४ ॥ अलौकिकानन्दस्य पुमर्थत्वेन वेदान्तमेयत्वे स्वर्गादेरपि तन्मेयत्वं स्यादित्याशङ्क्य नित्यपुमर्थत्वस्य हेतुत्वेनानभिमतत्वान्मैवमित्याह * यदीति ॥ १६५ ॥ सर्वाभिलषितत्वाच्च मुक्तेरेव मुख्यपुमर्थत्वमित्याह * निःशेषेति । अत एव भूतात्मन एव वेदान्तमेयतेत्यर्थः ॥ १६६ ॥ आत्मनः पुमर्थत्वे तस्य नित्याप्तत्वेन हेत्वनपेक्षत्वात्कृतं वेदान्तारम्भेणेत्याशङ्क्याह * य-

तथाप्यज्ञानमूढेन तदप्राप्तमिवेक्ष्यते ॥ १६७ ॥
अतः सुखेच्छा दुःखस्य जिहासा चानिवर्तिता ॥
तन्मूलस्याऽनिषिद्धत्वात्तन्निषेधाय तत्त्वधीः ॥ १६८ ॥
अविद्याव्यवधानस्य नात्मज्ञानातिरेकतः ॥
प्रध्वस्तिः कर्मभिः कर्तुं शक्या तेषाममानतः ॥१६९॥
व्यञ्जकं विरहय्यान्यत्साधनं कारकात्मकम् ॥
आत्माभिव्यक्तये नालं तन्मोहस्याप्रदाहतः ॥१७०॥
यावच्च सम्यग्विज्ञानवन्हिनाऽसौ न दह्यते ॥
न तावत्किञ्चिदप्याप्तं सुखं दुःखेन वर्जितम् ॥१७१॥
दक्षिणोदगधोगत्या प्रत्यगज्ञानमूढधीः ॥
बम्भ्रमीत्यनिशं दुःखी पुमान्कर्मपुरःसरः ॥ १७२ ॥
काम्यैर्दक्षिणमन्वेति ज्ञानयुक्तैस्तथोत्तरम् ॥

---

थेति ॥ १६७ ॥ अविद्यावृतत्वादेव नित्याप्तयोः सुखदुःखाप्तिपरिहारयोरिच्छाऽपि घटते इत्याह * अत इति । * तदिति इच्छाहेत्वज्ञानस्यानिवृत्तत्वादित्यर्थः ॥ १६८ ॥ अस्तु तर्हि कर्मभिरेवाविद्यानिवृत्तिरिति, नेत्याह * अविद्येति ॥ १६९ ॥ तत्रैव हेत्वन्तरमाह * व्यञ्जकमिति । कारकात्मकं कर्म तस्य मानवदनभिव्यञ्जकत्वान्न तमोनिवर्तकत्वमित्यर्थः ॥ १७० ॥ तर्हि मा ज्ञानं निवर्तिष्ट,सत्येव तस्मिन् कर्मणा मोक्षः स्यादित्याशङ्क्याह *यावदिति। मुक्तेः कर्मजन्यत्वेऽनित्यत्वं स्यादित्यर्थः॥१७१॥ कर्मफलस्याऽनित्यत्वं प्रपञ्चयति *दक्षिणेति त्रिभिः । ज्ञानयुक्तैः उपास्तिसहितैः । कर्मसम्भारसम्भृत इत्यस्य सर्वत्र सम्ब-

निषिद्धैश्चाप्यधो जन्म कर्मसम्भारसम्भृतः ॥ १७३ ॥
धर्माधर्मांशसाम्ये च मनुष्यत्वं प्रपद्यते ॥
धर्मादिसाधना पुंसामज्ञानां नश्वरी गतिः ॥ १७४ ॥
ब्रह्माद्या स्थावरान्तैषा प्रत्यगज्ञानहेतुजा ॥
नामरूपादिचित्राढ्या स्वप्नमायेन्द्रजालवत् ॥१७५॥
अविद्यातिमिरोच्छित्तौ नानानिष्कृतमण्वपि ॥
कार्यकारणवद्वस्तु नानपास्तं तमोऽप्यतः ॥ १७६ ॥
यत एवमतः प्रत्यग्याथात्म्यप्रतिपत्तये ॥
प्रारब्धेयं प्रयत्नेन वेदान्तोपनिषत्परा ॥ १७७ ॥
अधिकारश्च सम्बन्धः प्रामाण्यं मेयनिर्णयः ॥
चातुर्विध्यं विचार्येदं वेदान्तोऽत्रावतारितः ॥१७८॥

इति वार्तिकसारे मेयपरीक्षा समाप्ता ।
इत्युपोद्धातः समाप्तः ।

---

धः॥ १७२ ॥ १७३ ॥ १७४ ॥ न केवलमनित्यं कर्मफलम्,
ाविद्याकृतत्वात् अनर्थरूपमपि, अतस्तस्माद्विरज्येतेत्यभिसन्धा-
ाह * ब्रह्मेति । एषा कर्मगतिः ॥ १७५ ॥ किञ्चात्म-
यभिव्यक्ते सर्वमाभिव्यक्तं भवतीत्यात्मज्ञानस्यैव पुमर्थत्वमि-
याह * अविद्येति ॥ १७६ ॥ आत्मज्ञानात्तदज्ञानध्वस्तावपि
कार्यकारणात्मकसमस्तवस्तुव्यक्तिः तदावरणस्य सत्त्वा-
इत्याशङ्क्याज्ञानध्वस्तावावरणस्यापि नाशान्मैवमित्याह * ना-
पास्तमिति । यस्मादात्मनि ज्ञाते सर्वपुरुषार्थसमाप्तिः अ-
ाते च सर्वानर्थाप्तिस्तस्मादात्मज्ञानार्थत्वेन साधनचतुष्ट-

यसम्पन्नमधिकृत्यायं वेदान्तारम्भः सम्भवतीत्याह * यत-इति ॥ १७७ ॥ १७८ ॥

परं सहस्रा भुवि सन्ति मर्त्या-
स्त्वदर्थिनो राम तथापि मादृक् ॥
न लभ्यते दीनतमोऽतिदुःखी
पात्रं दयाया इह आत्मदाने ॥ १ ॥

इति बृहद्वार्तिकसारटीकायां मेयपरीक्षा
समाप्ता ॥ ४ ॥

इत्युपोद्घातः समाप्तः ।

प्रकरणचतुष्टयात्मकसम्बन्धवार्तिकसारस्थश्लोकसङ्ख्या १०४५॥

श्रुतिः॥उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्द्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मा॑ंसान्युवध्य॑ंसिकताः सिन्धवो गुदा यकृच्च क्लोमा-

---

विद्यारण्यश्रीचरणैस्तात्पर्येणोपवर्णितः ॥
श्रुत्यर्थो यादृशः पूर्वाचार्यवाक्यैर्विभज्यते ॥ १ ॥

*उषा वा इति॥वैशब्दः स्मारणार्थः प्रसिद्धं ब्राह्ममुहूर्तं स्मारयति *मेध्यस्य–मेधार्हस्य। व्यात्तं–विवृतं मुखम्। क्रव्यादाग्निव्यावृत्त्यर्थमग्निं विशिनष्टि * वैश्वानर इति। शुद्धोऽग्निर्विवृतं मुखमित्यर्थः। आत्मा–शरीरम्।अश्वस्य मेध्यस्येति सर्वत्रानुषङ्गार्थं पुनर्वचनम्। *पाजस्यमिति। वर्णव्यत्ययेन(१) पादा अस्यन्ते यस्मिन्निति व्युत्पत्त्याऽश्वखुर उच्यते। दिशश्चतस्रोऽपि पार्श्वे। यद्यपि द्वे दिशौ द्वाभ्यां पार्श्वाभ्यां सम्बध्येते,तथाप्यश्वस्य चरिष्णुत्वेन चतुर्दिग्भिरपि सम्बन्धसम्भवात्तत्र दृष्टिरविरुद्धेति भावः। पर्शवः–पार्श्वास्थीनि। अङ्गानि–अनुक्तावयवाः। पर्वाणि–सन्धयः। अहोरात्राणि–ब्राह्मदैवपित्र्यमानुषाणि। प्रतिष्ठाः प्रतितिष्ठत्येतैरिति पादाः। नभो–नभस्था मेघाः,अन्तरिक्षस्योदरत्वोक्तेः। उवध्यम्–अश्वोदरस्थमपक्वमशनम्। सिन्धवो–नद्यः गुदस्थनाड्यः,बहुवचनात्। यकृच्च क्लोमानश्च हृदयाधस्थौ दक्षिणोत्तरमांसखण्डौ। क्लोमान इति दारशब्दवन्नित्यबहुवचनम्। उद्यन्नादित्यः पूर्वार्द्धः। मध्यान्हात्प्राक्तना दृष्टिरश्वस्य नाभेरूर्ध्वभागे

(१) पाजस्यमित्यत्रार्थकाले जकारस्थाने दकारकरणेन

नश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्द्धो निम्लोचन् जघनार्द्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

अहर्वा अश्वं पुरस्तान्महिमाऽन्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमाऽन्वजायत तस्यापरे समुद्रे योनिरेतौ वा अश्वं महिमानावभितः सम्बभूवतुर्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वा

---

कर्तव्येत्यर्थः। निम्लोचन्—अस्तमयन्सूर्यः जघनार्द्धः अश्वस्य नाभेरपरार्द्धे मध्याह्नादनन्तरभाव्यादित्यदृष्टिः कार्या । विजृम्भते इत्यादौ प्रत्ययो न विवक्षितः । जृम्भणं—मुखविदारणम् । विद्योतनं विद्युत्, तत्र तद्दृष्टिः कार्येत्यर्थः । विधूननं—गात्रकम्पः । स्तनितं मेघगर्जनम् । मेहनं—मूत्रकरणं वृष्टिः । अश्वस्य हेषितशब्दे आरोपो नास्तीत्याह *वागेवेति ॥ १ ॥ अश्वं पुरस्तात्संज्ञपनात्पूर्वम् अहर्महिमा अश्वमन्वजायत,अहर्दृष्ट्या संस्कृतो महिमाख्यः सुवर्णग्रहो हवनीयद्रव्याधारपात्रविशेषोऽश्वस्य प्रजापतिरूपत्वात्तं लक्षयित्वा प्रावर्तत इत्यर्थः । तस्य ग्रहस्य पूर्वे समुद्रे योनिरासादनस्थानं यत्र ग्रहः स्थाप्यते तत्पूर्वसमुद्रत्वेन ध्येयमित्यर्थः । सप्तम्यौ प्रथमार्थे । पूर्वः समुद्र इति । एनमश्वं पश्चादेतत्संज्ञपनानन्तरं रात्रिदृष्टिसंस्कृतो महिमाख्यराजतग्रहः प्रकृतमश्वं लक्षयित्वा प्रवृत्त इत्यर्थः । * तस्यापर इति ॥ तदासादनस्थाने पश्चिमसमुद्रदृष्टिः कार्येत्यर्थः । "एतौ वा" इत्याद्युक्तस्य पुनर्वचनमश्वस्तुत्यर्थम् । एवं हयो भूत्वेत्यादिरपि स्तुत्यर्थमेव । हय इत्यादयो जातिविशेषाः । देवानवहत्—देवानां देवत्वं प्रापितवान् प्रजापतित्वा-

ऽसुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥

इत्युपनिषदि प्रथममश्वब्राह्मणं समाप्तम् ।

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो
वंशऋषिभ्यो नमो गुरुभ्यः ॥
बृहदारण्यकव्याख्यां कर्तुमादावुदीरितः ॥
उपोद्धातोऽथ तात्पर्यात्तद्व्याख्याऽऽरभ्यते स्फुटा ॥ १ ॥
अरण्याध्ययनादेतदारण्यकमुदीर्यते ॥
बृहत्त्वाद् ग्रन्थतोऽर्थाच्च बृहदारण्यकं मतम् ॥ २ ॥
बृहदारण्यके काण्डत्रयमाद्यं मधु स्मृतम् ॥
द्वितीयं याज्ञवल्क्याख्यं तृतीयं खिलसंज्ञकम् ॥ ३ ॥
उपदेशोपपत्ती द्वे उपास्तिश्चेति ते त्रयः ॥
अर्थाः क्रमेण काण्डानां प्राधान्येन निरूपिताः ॥ ४ ॥
मधुकाण्डे तु चत्वारोऽध्यायास्तत्राद्ययोर्द्वयोः ॥
प्रवर्ग्यसंज्ञकं कर्म प्रोक्तं नोपनिषत्ततः ॥ ५ ॥

---

त् । वाजी गन्धर्वानवहादित्यनुषज्यते * समुद्र इति । समुत्पद्य द्रवन्ति लीयन्ते भूतान्यस्मिन्निति समुद्रः परमात्मा । बन्धुः स्थितिहेतुत्वात्, एतत्सर्वमभिप्रेत्याह * समुद्र इति ॥ २ ॥ इति टीकायां प्रथममश्वब्राह्मणं समाप्तम् ॥ १ ॥

उक्तानुवादपूर्वकं प्रतिज्ञातमर्थं शिष्यावधानाय स्मारयति । * बृहदिति ॥ १ ॥ * अरण्येति । बृहदारण्यकशब्दनिर्वचनेनारण्ये नियमेनोपनिषदमधीत्य तदुक्तान्तरङ्गबहिरङ्गसर्वसाधनानुष्ठायिनामेव विद्या फलवतीत्युक्तं भवति ॥ २ ॥ इदानीं शिष्यबुद्धिसौकर्यायोपनिषदि काण्डादिसङ्ख्यां तत्प्रति-

विद्यासान्निधिपाठेऽपि विद्यांशत्वं न कर्मणः ॥
अरण्याध्ययनायैव विद्यासन्निधिरिष्यते ॥ ६ ॥
गुणोपसंहृतावेतत्सूत्रकारेण वर्णितम् ॥
अतस्तृतीयमारभ्य व्याख्यानं न तु पूर्वयोः ॥ ७ ॥
अध्यारोपापवादाभ्यां मधुकाण्डं प्रवर्तते ॥
अध्यारोप्य तृतीयेन चतुर्थेन त्वपोद्यते ॥ ८ ॥
षड् ब्राह्मणानि ज्ञेयानि तृतीये ब्राह्मणत्रयम् ॥
आद्यं संसारसीमान्तसाधनप्रतिपादकम् ॥ ९ ॥
चतुर्थे तत्फलं प्रोच्य विद्याविद्ये च सूत्रिते ॥
विस्तरात्संग्रहाद्वात्तिराविद्याया अथोभयोः ॥ १० ॥
विद्यासूत्रादधस्ताद्यत्साधनं सफलं श्रुतम् ॥
प्रतियोगितया सर्वं तद्विद्यास्तुतये भवेत् ॥ ११ ॥
हिरण्यगर्भप्राप्तिर्या कर्मोपासनसाधिता ॥
साऽपि संसार एवातो विद्यैवैका विमुक्तिदा ॥ १२ ॥
प्रथमब्राह्मणे ह्यश्वे विराड्दृष्टिर्विधीयते ॥
संसाराभिमुखीभूतब्रह्मलोकार्थिनं प्रति ॥ १३ ॥
सत्स्वप्यन्यप्रतीकेषु हय एवेह गृह्यते ॥

---

पाद्यार्थं च विभज्य दर्शयति * बृहदित्यादिना ॥३॥४॥५॥६॥ * गुणेति । "वेधाद्यर्थभेदात्" [व्या. ३-३-२५] इत्यधिकरणे "सर्वं प्रविध्य" इत्यादिमन्त्राणां विद्यासन्निधिपाठात्तदङ्गत्वमाशङ्क्य लिङ्गादिना प्रथममेव तेषां कर्मभिरन्वितत्वात्सान्निधिमात्रेऽपि न विद्यया सम्बन्ध इत्युक्तमित्यर्थः ॥७॥८॥९॥१०॥११॥१२॥ *प्रथमेति॥ अश्वे विराड्दृष्टिरित्युपलक्षणम् । अहङ्ग्रहाविषयं दर्शनं विधीयते इति द्रष्टव्यम् ॥१३॥ नन्वश्वमेधस्याङ्गबाहुल्ये कस्माद-

प्राधान्यादश्वमेधस्य हयनामाङ्कितत्वतः ॥ १४ ॥
क्रतुराडश्वमेधोऽयं तत्र मुख्यतमो हयः ॥
एतस्मादधिकं किंवा प्रतीकमधिकं भवेत् ॥ १५ ॥
कर्माङ्गमश्वसम्बन्धादुपास्तिरिति चेन्न तत् ॥
कर्मोपास्त्योरेकफले विकल्पस्य श्रुतत्वतः ॥ १६ ॥
यजते योऽश्वमेधेन यश्चैवं वेद तं क्रतुम् ॥
सर्वपापविनाशादि तयोस्तुल्यमिति श्रुतिः ॥ १७ ॥
उपासनस्य स्वातन्त्र्यात्कर्मानधिकृतोऽपि च ॥
मनसा कल्पयित्वाऽश्वं विराड्रूपेण चिन्तयेत् ॥१८॥
अश्वस्याङ्गेषु संयोज्या उषःकालादिदृष्टयः ॥
उत्कृष्टदृष्टिर्हीने स्यादिति सूत्रकृदब्रवीत् ॥ १९ ॥
अश्वसंज्ञपनात्पूर्वं पश्चादपि च यौ ग्रहौ ॥

---

श्वाख्याङ्गविषयमेवोपासनमुच्यते? तत्राह *सतिस्वति॥१४॥१५॥ अङ्गोपासनस्य कर्मसमृद्धिहेतुत्वाद् ब्रह्मलोकार्थित्वं कथमुक्तम्? इति शङ्कते * कर्माङ्गमिति । "तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद" इति श्रुतौ "पापं तितीर्षुरश्वमेधं तदुपास्तिं वा कुर्यात्" इत्युपास्तेः स्वतन्त्रफलत्वश्रवणान्न कर्माङ्गतेत्याह * न तदिति ॥ १६ ॥ १७ ॥ एवं सति अश्वमेधानधिकृतब्राह्मणानामपि उक्तोपास्तावधिकारः सिद्ध्यतीत्याह *उपासनस्येति ॥ १८ ॥ उषा वा अश्वस्येत्याद्यर्थमाह * अश्वस्येति । आश्वमेधिकाश्वशिरस्युषसो मुहूर्त्तविशेषस्य दृष्टिः कार्या, आदिना तस्यैव चक्षुराद्यङ्गेषु सूर्यादिदृष्टयः कार्या इत्यर्थः । उक्तेऽर्थे "आदित्यादिमतयश्चाङ्ग उपपत्तेः" [४-१-६] इति सूत्रं प्रमाणयति * उत्कृष्टदृष्टिरिति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥

महिमाख्यावहोरात्रदृष्टी कुर्यात्तयोः क्रमात् ॥ २० ॥
समुद्रे वडवा यद्वदुत्पद्याश्रित्य वर्तते ॥
परात्मनि विराडश्वस्तथैवेति विचिन्तयेत् ॥ २१ ॥
अश्वोपास्तिरियं ज्ञेया प्रथमब्राह्मणोदिता ॥
द्वितीयब्राह्मणे सम्यक् फलमस्याः प्रवक्ष्यते ॥ २२ ॥
पृथक् फलस्याकथनाद्ब्राह्मणद्वयवर्णितम् ॥
एकोपासनमेवेति विज्ञातव्यमुपासकैः ॥ २३ ॥
प्रतीकयोरश्ववह्न्योर्विभेदाद्ब्राह्मणद्वयम् ॥
अश्वप्रतीके वैराजरूपोपास्तिरिहोदिता ॥ २४ ॥

इति बृहदारण्यकवार्त्तिकसारे प्रथमाध्याये
प्रथममश्वब्राह्मणं समाप्तम्

---

द्वितीयब्राह्मणे वन्हेरश्वमेधोपयोगिनः ॥
उपासनं विराड्बुद्ध्या कार्यत्वेन विधीयते ॥ १ ॥
अश्वमूर्द्धादिषु यथा ह्युषःकालादिदृष्टयः ॥
अग्निमूर्द्धादिषु तथा ज्ञेयाः प्राच्यादिदृष्टयः ॥ २ ॥
पक्ष्याकाराश्रितो योऽग्निः प्राग्दिगाद्यखिलात्मकः ॥

---

"अहर्वा" इत्यादेरर्थं तात्पर्यतः संगृह्णाति * अश्वेति ॥ २४ ॥

इति वार्तिकसारटीकायां प्रथममश्वब्राह्मणं समाप्तम् ।

---

उत्तरब्राह्मणसमुदायार्थं संगृह्णाति * द्वितीयेति । ॥ १ ॥ २ ॥ नन्वश्ववदग्नेः शिरआद्यभावात्कथं प्रागादिदृष्टिस्तत्राह * पक्षीति । इदानीं ब्राह्मणद्वयप्र-

सोऽप्सु प्रतिष्ठित इति ध्याताऽपि प्रतितिष्ठति ॥ ३ ॥
प्रतिष्ठागुणविज्ञानस्यैवैतत्फलमीरितम् ॥
प्रधानोपासनफलं विराट्प्राप्तिः प्रवक्ष्यते ॥ ४ ॥
गुणस्य यस्य सम्प्रोक्तं प्रधानादपरं फलम् ॥
तद्गुणोपासनं पुंस इच्छयैव विकल्प्यते ॥ ५ ॥
तद्विशेषफलानिच्छोर्विनाऽप्येतं गुणान्तरैः ॥
प्रधानोपास्तिसम्पूर्त्या मुख्योपास्तिफलं भवेत् ॥ ६ ॥
उषःकालादिवपुषमश्वं प्राच्यादिदेहकम् ॥
अग्निं चोपासकः स्वात्मस्वरूपत्वेन चिन्तयेत् ॥ ७ ॥
ननु प्रतीकमेवात्र विराड्बुद्ध्या विचिन्त्यते ॥
न प्रतीकेऽहंग्रहोऽस्ति सूत्रकारेण वारणात् ॥ ८ ॥
नैवं फलं विराड्भावः श्रुतः सोऽहंग्रहं विना ॥
न सिध्येत्सूत्रकारेण तत्क्रतुन्यायवर्णनात् ॥ ९ ॥

---

ोपाद्योपास्तिक्रमं दर्शयिष्यन् प्रधानफलकाङ्क्षिणां फला-
न्तरसाधनगुणोपासनमैच्छिकमिति दर्शयितुं तत्प्रतिपादि-
काम् "एषोऽप्सु प्रतिष्ठितः" इत्यादिवक्ष्यमाणश्रुतिमर्थतः पठति
॥ सोऽप्सु प्रतिष्ठित इति। प्रतिष्ठालक्षणमेतत्फलं सर्वात्मकोऽग्नि-
प्सु प्रतिष्ठित इति यद् गुणोपासनं तस्यैवेत्यर्थः ॥ ३ ॥ ४ ॥
क्तन्यायमन्यत्राप्यतिदिशति * गुणस्येति ॥ ५ ॥ ६ ॥
धानोपास्तिप्रकारमाह * उष इति ॥ ७ ॥ अश्वाग्न्योः स्वा-
स्वरूपत्वेन चिन्तनमनुपपन्नं "न प्रतीकेन हि सः" [४-१-४]इति
त्रविरोधादिति शङ्कते * नन्विति ॥ ८ ॥ फलश्रुत्यन्यथानुपप-
याऽहङ्ग्रहोपास्तिरेवेयमिति परिहरति *नैवमिति । तत्र हेतुमाह

यादृक्संकल्पयुक्तः सन्नुपास्ते तादृगाप्नुयात् ॥
फलमित्येष एवात्र तत्क्रतुन्याय ईरितः ॥ १० ॥
विराड्भावमसंकल्प्य न विराड् भवति स्वयम् ॥
अतः श्रुतफलावाप्तौ भवत्येव ह्यहङ्ग्रहः ॥ ११ ॥
सर्वात्मत्वोपासनेषु कुतोऽहङ्ग्रहवर्जनम् ॥
अनन्तर्भाव्य चात्मानं कथं सर्वात्मता भवेत् ॥ १२ ॥
अतद्भावफलेष्वेव प्रतीकं समुपास्यते ॥
तद्भावापादकेष्वात्मा गुणैस्तैस्तैरुपास्यते ॥ १३ ॥
आत्मोपासनयुग्ध्येवमश्वाग्नी अत्र वर्णितौ ॥
वाचं धेनुमितीवात्र न प्रतीकप्रधानता ॥ १४ ॥
प्रतीकस्य प्रधानत्वे निषिद्धोऽहङ्ग्रहोऽन्यथा ॥

---

*सूत्रेति ॥ ९ ॥ "तत्क्रतुश्च"[४-३-१५] इति सूत्रावयवस्यार्थमाह * यादृगिति ॥ १० ॥ ११ ॥ न केवलमनयोरेव प्रतीकयोरहङ्ग्रहत्वं, प्रज्ञेत्येवमुपासीतेत्यादिनाऽपि तद्दृश्यत इत्यभिप्रायेणाह * सर्वेति ॥ १२ ॥ यत्रोपास्यप्राप्तिर्न फलं तत्र नाहङ्ग्रहता, यत्र तत्प्राप्तिः फलत्वेन श्रूयते तत्राहङ्ग्रहताऽऽवश्यकेति नियममाह * अत इति ॥ १३ ॥ तस्मादश्वाग्न्योरात्मत्वेन चिन्तनम् उपपन्नमित्याह * आत्मेति । तर्हि "न प्रतीक" इत्यादिसूत्रविरोधः ? इत्याशङ्क्य, यत्र "वाचं धेनुम्" इत्यादौ प्रतीकस्यैव प्राधान्यं तस्य चात्मत्वेन चिन्तनं निषिध्यते, प्रकृते तदभावान्न तन्निषेध इति न सूत्रविरोध इत्याह * वाचमिति ॥ १४ ॥ उक्तव्यवस्थानङ्गीकारे बाधकमाह * अन्यथेति । तस्याहङ्ग्रहत्वं सर्वसम्मतमिति

---

(१) अप्रतीकालम्बनान्नयतीति बादरायण उभयथा ऽदोषात्तत्क्रतुश्च इति सूत्रम् ।

प्रणवे ब्रह्मचिन्तायां लुप्येताहङ्गहो ध्रुवम् ॥ १५ ॥
आत्मानमश्वमग्निं च चिन्तयित्वाऽथ तं हयम् ॥
काललोकादिधर्माणं समालब्धुं समुत्सृजेत् ॥ १६ ॥
अब्दमात्रं मयोत्सृष्टो विमुक्तप्रग्रहो हयः ॥
अब्दादूर्ध्वं मदात्मानं मदर्थं हयमालभे ॥ १७ ॥
मदात्मभ्योऽन्यदेवेभ्यो ददाम्यन्यपशूनहम् ॥
अश्वेनान्यैश्च पशुभिरालब्धैरस्मि तर्पितः ॥ १८ ॥
इति ध्यात्वाऽश्वमेधस्य फलत्वेनोदितं रविम् ॥
संवत्सरात्मकं ध्यात्वा पुनरग्निं विचिन्तयेत् ॥१९॥
क्रत्वात्मसाधकत्वेन वन्हिरेषोऽर्कनामकः ॥
सर्वलोकात्मकस्तौ द्वावश्वमेधार्कनामकौ ॥ २० ॥
तन्नामानौ भास्कराग्नी फलसाधनरूपिणौ ॥

---

भावः ॥ १५ ॥ एवं प्रसङ्गागतं परिसमाप्य प्रकृतमुपास्तिक्रममाह *आत्मानमित्यादिना ॥ १६ ॥ *विमुक्तप्रग्रहो हयः इति । स्वच्छन्द इत्यर्थः ॥१७॥१८॥ * फलत्वेनोदितमिति । "य एषः" इत्यादिवक्ष्यमाणश्रुतेरित्यर्थः * संवत्सरेति । आदित्योदयास्तमयाभ्यामहोरात्रादिद्वारा हि संवत्सरव्यवस्था ततस्तन्निर्मातुस्तस्य युक्तं तदात्मकत्वमिति भावः ॥ १९ ॥ अग्निचिन्ताप्रकारमाह * क्रत्वात्मेति । यः क्रतुस्वरूपसाधकत्वेन स्थितः प्रागादिदिगात्मत्वेन दृष्टः सर्वलोकात्मकः सोऽर्कनामेति चिन्तयेदित्यर्थः । अग्न्यादित्यौ पुनरश्वमेधत्वेन चिन्तयेदित्याह * तौ द्वाविति ॥ २० ॥ अक्रियात्मनोस्तयोः कथमश्वमेधत्वमित्याशङ्क्य साध्यसाधनयोरभेदविवक्षयेत्याह

निवर्त्तिते स्वाधिकारे पश्चादेकत्वमश्नुतः ॥ २१ ॥
एकत्वरूपः प्राणात्मा मृत्युशब्दोक्त ईश्वरः ॥
सोऽहमस्मीत्यभिध्यायेदातादात्म्याभिमानतः ॥२२॥
इहैव देवो भूत्वाऽसौ शरीरे पतिते ततः ॥
पुनर्देहं न गृह्णाति मृत्युर्भूत्वाऽवतिष्ठते ॥ २३ ॥
सर्वदेवसमष्ट्यात्मा द्वैतैकत्वात्मकः प्रभुः ॥
भवत्युपासकः सोऽत्र मृत्युः संहारहेतुतः ॥ २४ ॥
उपास्तितत्फले प्रोक्ते निष्कृष्यात्रार्थवादतः ॥
अर्थवादस्य तात्पर्यमतः परमुदीर्यते ॥ २५ ॥
अवान्तरं महच्चेति द्विधा तात्पर्यमेतयोः ॥
महातात्पर्यमत्र स्यादुपास्याग्निप्रशंसनम् ॥ २६ ॥
अवान्तरं तु तात्पर्यमग्न्युत्पत्तावतो जनिम् ॥
वन्हेर्वक्तुमियं सृष्टेः प्रागवस्थाऽत्र वर्ण्यते ॥ २७ ॥

* तन्नामानाविति । अश्वमेधस्तच्छब्दार्थः ॥ २१ ॥ २२ ॥ एवम्भूताग्न्यादित्यौ येन सूत्रात्मना स्वाधिकारान्ते ऐक्यमाप्नुतः सोऽहमस्मीति स्वस्य हिरण्यगर्भत्वाभिमानपर्यन्तं चिन्तयतः फलमाह * इहैवेति ॥ २३ ॥ मृत्युशब्दस्यात्र विवक्षितमर्थमाह * सर्वदेवेति । * द्वैतैकत्वात्मक इति । नानारस इत्यर्थः । मृत्युर्भवतीति सम्बन्धः । हिरण्यगर्भसायुज्यं प्राप्नोतीत्यर्थः । तस्य मृत्युशब्दार्थत्वे हेतुमाह * संहारेति । वाय्वात्मके तस्मिन्नग्न्यादीनां संवरणादित्यर्थः ॥२४॥ वृत्तानुवादपुरःसरमुत्तरग्रन्थप्रतिपाद्यार्थमाह *उपास्तीति । अत्र—प्रकृतब्राह्मणे एवम् अर्थवादस्योभयपरत्वे सत्यग्न्युपास्तिप्रकरणे किं "नैवेह किञ्चन"इत्यादिकथनेनेति न शङ्क्यमित्याह * अत इत्यादिना ॥२५॥२६॥२७॥ प्रागवस्थाप्रतिपादकवाक्यमर्थतः

नैवेह किञ्चनाग्रेऽभून्मृत्युनैवेदमावृतम् ॥
इति श्रुतौ प्रागवस्था तत्रैतत्प्रविचार्यते ॥ २८ ॥
प्रागवस्था शून्यरूपा सद्रूपा वेति संशये ॥
नैवेह किञ्चनेत्युक्तेः शून्यं स्यादिति केचन ॥ २९ ॥
मैवं यतः श्रुतिः साक्षात्सत्त्वमेवावदत्स्वयम् ॥
कार्यकारणयोः स्पष्टं मृत्युनैवेति सादरा ॥ ३० ॥
मृत्युना कारणेनेदं कार्यं सर्वं समावृतम् ॥
आवृतौ कारकाभावे श्रुतिर्नावक्ष्यदीदृशम् ॥ ३१ ॥
सत्तामात्रस्वरूपं यद् ब्रह्माज्ञातसतत्त्वकम् ॥
मृत्युर्जनिमतः साक्षात्तत्राशेषजगल्लयात् ॥ ३२ ॥
लयो नामात्र नाभावस्तस्य वस्त्वविभेदतः ॥
भिन्नत्वेन परैरिष्टो नाभावो वस्तुनः पृथक् ॥ ३३ ॥

---

पठति * नैवेति । प्रागवस्थास्वरूपं निर्णेतुं विमृश्य पूर्वपक्षयति * तत्रेत्यादिना ॥ २८ ॥ २९ ॥ "मृत्युनैवेदमावृतम्" इत्यादिवाक्यशेषविरोधान्न प्रागवस्थायाः शून्यतेति सिद्धान्तयति । * मैवमिति ॥ ३० ॥ उक्तार्थं विवृणोति * मृत्युनेति ॥ ३१ ॥ प्रसिद्धमृत्योर्जगद्धेतुत्वाभावात्तेन कथं कार्यस्यावृतिरित्याशङ्क्य अज्ञानोपहितं जगत्कारणं ब्रह्मैव मृत्युशब्देनोच्यत इत्याह * सत्तेति । जनिमतः, कारणमिति शेषः । जगत्कारणस्य मृत्युत्वे युक्तिमाह * तत्रेति ॥ ३२ ॥ ननु ब्रह्मणि जगल्लयाङ्गीकारे ध्वंसवत्तत्र तत्प्रागभावस्यापि सम्भवात् कथं सृष्टेः प्राक् कार्यसत्त्वमिति तत्राह * लय इति । तत्र हेतुमाह * तस्येति । ध्वंसादेर्भावत्वं च युक्तितो वक्ष्यति । तर्हि ध्वंसो न भावाद्भिन्न इति निषेधानुपपत्तिरप्रसक्तत्वात्तत्राह *भिन्नत्वेनेति ॥ ३३ ॥ तर्हीदानीं घटो नेति व्यवहारो न स्या-

सूक्ष्मं वस्त्वनभिव्यक्तमपश्यन् मन्ददृक् पुमान् ॥
नास्तीत्यभावतां वक्ति शून्यता नास्ति तावता॥३४॥
अभिव्यक्त्यनभिव्यक्ती भावाभावौ तथासति ॥
नैवेहेत्यनभिव्यक्तिमपेक्ष्य श्रुतिरब्रवीत् ॥ ३५ ॥
नाभिव्यक्ते नामरूपे सृष्टेः पूर्वं तथापि च ॥
विद्येते इत्यभिप्रेत्य श्रुतिरावृततां जगौ ॥ ३६ ॥
सन्मूलाः सदवस्थानाः सल्लया अखिलाः प्रजाः ॥
इति कालत्रयेऽप्यस्य जगतः सत्त्वमब्रवीत् ॥ ३७ ॥
मृदं घटं कपालं च पश्यामस्तत्र वादिनः ॥
प्रागभावं मृदि प्राहुः कपाले ध्वंसमूचिरे ॥ ३८ ॥
एवं च वाद्यभिमतावभावावनुभूतितः ॥
मृत्कपालात्मकौ भावौ सदद्वैतं ततो भवेत् ॥ ३९ ॥

---

दत आह * सूक्ष्ममिति ॥ न हि मूढव्यवहाराद्वस्तुसिद्धिर्देहात्मव्यवहारेष्वदृष्टेरिति भावः ॥ ३४ ॥ स्वमते भावाभावयोः स्वरूपं वदन् फलितमाह * अभिव्यक्तीति ॥ ३५ ॥ उक्तार्थं स्पष्टयति * नाभिव्यक्त इति । अनभिव्यक्ते इत्यर्थः ॥ यद्यपीति शेषः ॥ ३६ ॥ सृष्टेः प्राक्कार्यसत्त्वे "सदेव सोम्येदम्"इत्यादिसदद्वैतश्रुतिविरोध इत्याशङ्क्य सतामपि कार्याणां कारणाधीनसत्ताकत्वान्नोक्तविरोध इत्यभिप्रेत्य सतो जगदुपादानत्वप्रतिपादिकां "सन्मूलाः सोम्येमाः" इत्यादिश्रुतिमर्थतः पठति । *सदिति । *जगतः सत्त्वमिति ।कारणसत्तयेति शेषः ॥३७ ॥ नन्वेवमपि कार्यध्वंसादेरनुभवसिद्धत्वान्नाद्वयत्वं तत्राह । *मृदमित्यादिना । मृदादिव्यतिरेकेण घटप्रागभावादेरनुपलम्भाद्वादिवाक्यस्य तदनुभवस्य चाप्रमाणत्वाज्जगद्ध्वंसादि सन्मात्रमेवेत्यर्थः ॥ ३८ ॥ ३९ ॥ श्रुतिप्रत्यक्षाभ्यां कार्यकारणयोः

सदेवागमतः सिद्धं प्रत्यक्षाच्च सदीक्ष्यते ॥
अनुमानाच्च सत्सर्वं यथा तदधुनोच्यते ॥ ४० ॥
अनुमेयं जगत्सृष्टेः पूर्वं सत्कारणं तथा ॥
सत्कार्यमुभयं चैतत्प्रयोगेण प्रदर्श्यते ॥ ४१ ॥
स्रक्ष्यमाणं जगत्सर्वं सत्कारणकमिष्यताम् ॥
कार्यत्वाद्धटवद्वेदासिद्धा ऽऽकाशादिकार्यता ॥ ४२ ॥
अङ्कुरो मृदिते बीजे बीजाभावात्प्रजायते ॥
इत्ययुक्तं बीजदाहादङ्कुरोत्पत्त्यदर्शनात् ॥ ४३ ॥
बीजस्यावयवा एव जनयेयुरिहाङ्कुरम् ॥
बीजं त्ववान्तरावस्था ज्ञेया पिण्डो यथा मृदः ॥४४॥
मृत्तिका घटहेतुः स्यान्मृदस्तत्रानुवर्तनात् ॥
मृदस्त्ववान्तरावस्थापिण्डस्याननुवर्त्तनात् ॥ ४५ ॥
पिण्डे घटे कपालादौ याऽनुवृत्ता विभाति सा ॥
मृदेव सर्वहेतुः स्यात्कार्याः पिण्डादयोऽखिलाः॥४६॥
विरुद्धानेककार्याणां युगपज्जन्म नेष्यते ॥

---

सत्त्वमुक्तमनुवदन्ननुमानेनापि तत्साधयति * सदेवेत्यादिना॥जगन्मात्रस्य पक्षत्वे आकाशादौ भागासिद्धिमाशङ्क्य "आत्मन आकाशः सम्भूतः" इत्यादिश्रुतया तस्यापि कार्यत्वं सिद्धमित्याह * वेदेति ॥४०॥४१॥४२॥ बीजादिनाशादङ्कुराद्युत्पत्तिदृष्टेरुक्तानुमानं बाधितमित्यभिप्रायेणाशङ्कते * अङ्कुर इति । बीजनाशान्न कार्योत्पत्तिरतिप्रसङ्गादिति दूषयति * इत्ययुक्तमिति ॥ ४३ ॥ केन तर्ह्यङ्कुरजनिस्तत्राह * बीजस्येति ॥ ४४ ॥ मृत्पिण्डदृष्टान्तं व्यनक्ति * मृत्तिकेत्यादिना ॥ ४५ ॥ ४६ ॥ पिण्डादिनाशस्याहेतुत्वे पिण्डादौ सत्यपि घटाद्युत्पत्तिमा-

एकस्मात्कारणात्तेन पिण्डादेः क्रमभाविता ॥ ४७ ॥
पिण्डाद्यखिलकार्येण विना मृत्कापि नेष्यते ॥
अतोऽसती मृदिति चेन्न मानेनोपलम्भनात् ॥ ४८ ॥
असाधारणरूपेषु व्यावृत्तेष्वितरेतरम् ॥
बहुष्वेकं यदा भाति प्रत्यक्षं कारणं तु तत् ॥ ४९ ॥
कारणस्यास्तिता तस्मात्सिद्धा कार्योदयात्पुरा ॥
कार्यस्याप्युदयात्पूर्वं यथा ऽस्तित्वं तथोच्यते ॥ ५० ॥
सत्त्वपूर्वं जगत्कार्यं तमोऽन्तस्थघटादिवत् ॥
अभिव्यक्तत्वधर्मित्वादन्यथा स्यान्नृशृङ्गवत् ॥ ५१ ॥
सत्यामपि हि सामग्र्यां वन्ध्यापुत्रो ह्यसत्त्वतः ॥
अभिव्यक्त्यालम्बनत्वं न कदाचित्प्रपद्यते ॥ ५२ ॥
सदेव चेत् सदा कार्यं घटः पिण्डकपालयोः ॥

---

शङ्क्य नेत्याह * विरुद्धेति ॥ ४७ ॥ पिण्डस्यापि कार्यत्वे कार्यावस्थानापन्नमृदोऽनुपलम्भात्सत्कारणवादो न स्यादित्याशङ्क्यासिद्ध्या दूषयति * पिण्डेति * मानेनेति ॥ अन्वयव्यतिरेकानुसन्धानप्रत्ययेन ॥ ४८ ॥ तमेव व्यनक्ति * असाधारणेत्यादिना ॥ ४९ ॥ ५० ॥ कार्यसत्त्वेऽप्यनुमानं रचयति *सत्त्वेति * अभिव्यक्तत्वेति ॥ अभिव्यज्यमानत्वादिति यावत्। हेतोरप्रयोजकत्वशङ्कां निरस्यति * अन्यथेति ॥ ५१ ॥ ननु नृशृङ्गस्यापि अनभिव्यक्तिर्नासत्त्वात् किन्तु सामग्र्यसत्त्वादिति, नेत्याह * सत्यामिति ॥ ५२ ॥ प्रकृतानुमाने सदोपलब्धिप्रसङ्गं बाधकमाशङ्क्य निराह* सदेवेत्यादिना ॥ पिण्डकपालयोः काल इति सम्बन्धः। पिण्डावस्थायां कपालावस्थायां चेत्यर्थः।

कालेऽपि चोपलभ्येतेत्येतच्चोद्यं न युज्यते ॥ ५३ ॥
विद्यमानत्वमात्रेण नाभिव्यक्तिर्भवेद्यतः ॥
सद्वस्त्वेवानभिव्यक्तं तत्सामग्र्यां च लक्ष्यते ॥५४॥
अविज्ञातो ज्ञातुमिष्टो ज्ञायमानोऽथ विस्मृतः ॥
स्मर्यते स्मृत इत्येवं सन्नेवं बहुधोच्यते ॥ ५५ ॥
लोके सामग्र्यभावाद्वा कुड्याद्यावृतितोऽथ वा ॥
सन्घटोऽपि न दृश्येत पिण्डस्थो नेक्ष्यते कुतः ॥५६॥
आवृतत्वादिति ब्रूमः पिण्डेनैव तदावृतिः ॥
न पिण्डस्थो घटः किन्तु मृन्निष्ठः पिण्डसंवृतः ॥५७॥
कुम्भदेशाद्भिन्नदेशं कुड्याद्यावरणं भवेत् ॥
अभिन्नदेशपिण्डेन कुम्भ आव्रियते कथम् ॥ ५८ ॥
एकस्मिन्नेव वियति चान्द्रं तेजोऽभिभूयते ॥
सौरेण तेजसा तद्वत्पिण्डेनाव्रियतां घटः ॥ ५९ ॥

---

उक्तेऽर्थे हेतुमाह * यत इति ॥ ५३ ॥ ५४ ॥ अभिव्यक्तिसामग्र्यभावे सतो घटादेरपि नाभिव्यक्तिरित्यत्रानुभवं प्रदर्श्य व्यवहारमपि दर्शयति * अविज्ञात इति ॥ ५५ ॥ सतोऽप्यनभिव्यक्तिमुपेत्य प्रकृते पिण्डसन्निकर्षानन्तरम् अप्रतिबद्धसामग्रीसत्त्वाद्घटोपलब्धिः स्यादिति शङ्कते * लोक इति ॥ ५६ ॥ असिद्ध्या दूषयति* आवृतत्वादिति ॥ घटोपादानं पिण्डस्तेन स कथमाव्रियेतेति तत्राह *नेति ॥ ५७ ॥ पिण्डादि न घटाद्यावरणं तेन समानदेशत्वान्न यदेवं न तदेवं यथा कुड्यादि इति शङ्कते * कुम्भेति ॥ ५८ ॥ उक्तानुमानं दूषयति * एकस्मिन्निति ॥ सामान्यव्याप्तौ सौरालोके व्यभिचार इत्यर्थः । विशेषव्याप्तौ तमसि व्यभिचार ऊह्यः ॥ ५९ ॥ पिण्डादेः कार्यत्वे घटाव-

एकस्यां मृदि पिण्डाद्याः कार्याः सन्ति सहस्रशः ॥
यस्याभिव्यक्तिसामग्री स्यात्तेनान्येऽत्र संवृताः ॥६०॥
पिण्डेनाव्रियते कुम्भः कुम्भेनापि कपालकम् ॥
कपालेनावृतः कुम्भ एवमन्योन्यसंवृतिः ॥ ६१ ॥
कुम्भेनैव कपालाख्याः कुम्भांशा भान्त्यतो घटः ॥
न कपालैरावृतश्चेन्न विभक्तैस्तदावृतेः ॥ ६२ ॥
यदि पिण्डावृतिः कुम्भः कुलालस्तर्हि साधनैः ॥
भङ्गायैवावृतेर्यत्नं कुर्यान्न घटनिर्मितौ ॥ ६३ ॥
एवं चोदयतस्तेऽत्र कोऽभिप्रायस्तमीरय ॥
किमुत्पत्तिं वारयसे किंवा दण्डादिसाधनम् ॥ ६४ ॥
आद्य इष्टो द्वितीये तु मा दण्डादि निवार्यताम् ॥
घटाभिव्यक्तिहेतुत्वाद् ग्राह्यं दण्डादिसाधनम्॥६५॥
अनेकसाधना यस्मादभिव्यक्तिर्जगत्यसौ ॥
वस्तुभेदादतो लोकसिद्धं साधनमिष्यताम् ६६ ॥
दीपेन व्यज्यते रूपं नवनीतं तथा घटः ॥
दण्डादिना ततः सर्वं सदेव व्यक्तितः पुरा ॥ ६७ ॥

---

स्थायामपि प्रतीतिः स्यादित्याशङ्क्य घटादिनैवावृतत्वान्नैवमित्याह * एकस्यामिति ॥ ६० ॥ ६१ ॥ कपालो न घटावरकः तद्भानेऽपि घटभानादित्याशङ्क्य कपालशब्देन भिन्नकपालो विवक्षित इत्याह *कुम्भेनेति ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ सत एव घटादेरभिव्यक्त्यङ्गीकारे दीपेनाप्यभिव्यज्येतेत्याशङ्क्यान्वयव्यतिरेकाभ्यां दण्डादेरेव तद्धेतुत्वान्नैवमित्याह * अनेकेति ॥ ६६ ॥ साधनभेदमुदाहरति * दीपेनेति ॥ फलितमाह * तत इति ॥ ६७ ॥ दीपेन तमसि नष्टे चक्षुरादि-

तमोविनाशनायैव दीपश्चेदस्तु तावता ॥
सदेव व्यज्यते सर्वमिति नैवापनुद्यते ॥ ६८ ॥
भावाभावोत्पन्ननष्टशब्दप्रत्ययभेदधीः ॥
अभिव्यक्तितिरोभावद्वैविध्यादुपपद्यते ॥ ६९ ॥
व्यक्तो दीपेन भावः स्याज्जातो व्यक्तस्तु दण्डतः ॥
पिण्डावृतस्त्वभावः स्यान्नष्टश्छन्नः कपालकैः ॥७० ॥
एवं व्यक्त्यावरणयोर्बहुत्वादेक एव सन् ॥
उच्यते बहुभिः शब्दैस्तदुदाह्रियते पुनः ॥ ७१ ॥
कुड्यावृतस्त्वसंस्पृष्टः स्पृष्टो व्यक्तस्तु पाणिना ॥
मोहावृतस्त्वविज्ञातो ज्ञातो व्यक्तः प्रमाणतः ॥ ७२॥
ननूदाहरणेष्वेषु तत्तदावृतिभङ्गतः ॥
अन्या का स्यादभिव्यक्तिर्यया कार्यं नियम्यते॥७३॥
अभिव्यक्तेरनन्यत्वे शिलया पिण्डभङ्गतः ॥

---

नैव रूपं व्यज्यते तत्कथं दीपेन रूपव्यक्तिरुक्तेत्याशङ्क्य एवमपि सदेवोपलभ्यत इत्यत्र न विवाद इत्याह * तम इति ॥ ६८ ॥ सत एवाभिव्यक्त्याद्यङ्गीकारे घटो विद्यते उत्पन्नस्तिरोहितो नष्टः इति ज्ञानभेदानुभवः कथमित्याशङ्क्य व्यञ्जकभेदेन व्यक्तितिरोभावभेदाङ्गीकारान्न दोष इत्याह * भावेत्यादिना ॥ ६९ ॥ ७० ॥ एकस्मिन्नेव घटे आवरणाभिव्यक्तिभेदाज्ज्ञानभेदो व्यवहारभेदोऽप्यस्तीत्याह * एवमित्यादिना ॥ ७१ ॥ ७२ ॥ नन्वेवमप्युक्ताभिव्यक्तेर्दुर्निरूपत्वान्न सत्कार्यसिद्धिरिति शङ्कते * नन्विति ॥७३॥ कथं दुर्निरूपत्वमिति चेत्, किम् अभिव्यक्तिरावरणभङ्गादन्याऽनन्या वा ? नाद्यः, अनुपलम्भादित्युक्त्वा अन्त्यं दूषयति * अभीति॥७४॥घटज्ञानेन तद्व्यक्त्यावरणनिवृत्त्योः पृथगुप-

अभिव्यज्येत कुम्भोऽयं विना दण्डादिसाधनैः॥७४॥
उच्यते तावदज्ञातज्ञातोदाहरणेऽन्तिमे ॥
भेदो विशद एवाभिव्यक्त्यावरणभङ्गयोः ॥ ७५ ॥
अज्ञातत्वावमृष्ट्यर्थमादित्सन्ते हि मानिनः ॥
मानानि, मानसम्बन्धादज्ञातत्वं च नश्यति ॥ ७६ ॥
मातुर्मानाभिनिष्पत्तिर्निष्पन्नं मेयमेति तत् ॥
मेयाभिसङ्गतं तच्च मेयाभत्वं प्रपद्यते ॥ ७७ ॥
मेयाभत्वमभिव्यक्तिर्नश्येदज्ञातता तया ॥
घटोऽवगत इत्येतत्ततः सम्पद्यते फलम् ॥ ७८ ॥
एवं दीपप्रकाशेन सप्रकाशो घटो भवेत् ॥
घटनिष्ठप्रकाशोऽयं घटनिष्ठं तमो नुदेत् ॥ ७९ ॥
एवं दण्डादिना मृत्स्थो घटाकारः स्फुटो भवेत् ॥
पिण्डाकारस्तिरोधत्ते ततो दण्डाद्यपेक्ष्यते ॥ ८० ॥
शिलया पिण्डभागे तु व्यज्येतान्यत्तदा मृदि ॥
कार्यं विदलचूर्णादि तेनाप्यावृतता घटे ॥ ८१ ॥

---

लम्भादनुपलब्धिरसिद्धेति परिहरति *उच्यतइति ॥७५॥ उक्तं भेदवैशद्यम् उपपादयति * अज्ञातत्वेति ॥ मानिनः—प्रामाणिकाः ॥ ७६ ॥ उक्तमर्थं स्पष्टयति *मातुरित्यादिना। साभासबुद्ध्याश्रयं ज्ञानमादावुत्पद्यते, ततश्च विषयं स्पृष्ट्वा तदाकारं भजते, तदाकारभजनरूपाभिव्यक्त्या तदज्ञाननाश इत्यर्थः॥७७॥किञ्चावरणनाशो यथा ज्ञाततालक्षणफलाद्भिद्यते एवमभिव्यक्तेरपि, इत्यभिप्रेत्याह *घट इति॥७८॥७९॥ उक्तन्यायमन्यत्राप्यतिदिशति * एवमित्यादिना ॥ ८० ॥ दण्डाद्यभावे तु पिण्डनाशे सत्यपि न घटव्यक्तिरित्याह *शिलयेति ॥ ८१॥८२॥दण्डाद्यु-

अतो नियतमेवात्र कार्याभिव्यक्तिसाधनम् ॥
सदेव व्यज्यते कार्यं नापूर्वं जायते ततः ॥ ८२ ॥
भाषामात्रविभेदोऽयमिति चेत्तर्ह्यवैदिकीम् ॥
त्यक्त्वा भाषां कार्यसत्तां वद वैदिकभाषया ॥८३॥
भूतभाविघटौ न स्तस्तव सन्तौ मते मम ॥
तयोर्ज्ञानं सद्विषयं वर्तमानस्य धीरिव ॥ ८४ ॥
अतीतानागतोऽर्थो ऽसन्निति यद्युच्यते तदा ॥
अतीतानागतज्ञानं भ्रान्तमेवेश्वरं भवेत् ॥ ८५ ॥
प्रागभावस्तथा ध्वंस इत्याद्या वाद्युदीरिताः ॥
अभावाः ब्रह्मकार्यत्वात्सद्रूपाः स्युर्घटादिवत् ॥ ८६ ॥
भावत्वस्याविशेषेऽपि यथा जलभुवोर्भिदा ॥
भावावान्तरभेदाः स्युः प्रागभावादयस्तथा ॥ ८७ ॥
लोकप्रसिद्धिमुल्लङ्घ्य किं भावत्वदुराग्रहात् ॥

---

पादाननैयत्ये व्यक्तिशब्देन घटाद्युत्पत्तिरेवोक्ता स्यान्नार्थभेद इति शङ्कते *भाषेति। अर्थभेदाभावमुपगम्य परिहरति *तर्हीति॥८३॥ अभ्युपगमं त्यजति * भूतेति । मम मते सन्ताविति सम्बन्धः । वैलक्षण्यान्तरमाह * तयोरिति । त्वन्मते, असद्विषयत्वमिति शेषः ॥ ८४ ॥ कार्यस्य सत्त्वे सर्वदोषं परिहृत्य तदसत्त्वे दोषमाह *अतीतेति ॥८५॥ ध्वंसादेर्भावत्वं तर्केण प्रसाध्य तदनुग्राह्यमनुमानमाह*प्रागिति ॥८६॥८७॥ ध्वंसादेर्जलादिवद्भावविशेषत्वकल्पनं व्यर्थं व्यावहारिकाभावत्वाङ्गीकारेऽपि तवाद्वैतासिद्धेरिति शङ्कते *लोकेति । *कार्यमिति । कार्यशब्दः फलवचनः किंशब्देन सम्बध्यते । श्रुत्युक्तं सदद्वैतमुल्लङ्घ्यातिरिक्ताभावकल्पनवैयर्थ्यं तवापि तुल्यम् अभावव्यवहारस्यान्यथाप्युपप-

कार्यं तवेति चेत्ते वा किं कार्यं वेदलङ्घने ॥ ८८ ॥
अभावव्यवहारस्तु भावत्वेऽप्युपपद्यते ॥
भावान्तरमभावो हि कयाचित्तु व्यपेक्षया ॥ ८९ ॥
सदेव सर्वमित्युक्त्वा व्यावर्त्यं किं भवेदिद ॥
अभाव इति चेत्तर्हि सोऽभ्युपेयो बलात्त्वया ॥ ९० ॥
बाढमभ्युपगच्छामि शून्यत्वं भ्रान्तिकल्पितम् ॥
तन्निवर्त्याथ भावत्वं युक्तियुक्तमिहोच्यते ॥ ९१ ॥
किं प्रागभावः प्रध्वंसाद्भिद्यतेऽथ न भिद्यते ॥
अभेदे तेऽपसिद्धान्तो भेदे भेदकमुच्यताम् ॥ ९२ ॥
विलक्षणस्वरूपत्वं न तयोः शून्यमात्रयोः ॥
न चौपाधिकभेदः स्याच्छून्यस्योपाध्यसम्भवात् ॥ ९३ ॥
घटस्य प्रागभावो यः स पिण्डोपाधिको यदि ॥

---

त्तोरित्याह *तवेत्यादिना । तथाच लोकप्रसिद्धेर्निर्मूलत्वादुक्तमे-वोपादेयमिति भावः ॥ ८८ ॥ ८९ ॥ अतिरिक्ताभावानङ्गीकारे सदेवेत्येवकारविरोधः व्यावर्त्याप्रसिद्धेरित्याशङ्क्य परिहरति । * सदेवेत्यादिना । परभ्रमकल्पितं यच्छून्यत्वं तत् सदेवेत्ये-वकारेण व्यावृत्यानन्तरमेकमेवाद्वितीयमित्यादिना भावत्वमेव युक्तिपूर्वमुच्यते इत्यर्थः । इह—सदेवेत्यादिवाक्ये ॥ ९० ॥ ९१ ॥ किञ्च युक्तिविरुद्धत्वादपि ध्वंसादिर्नाभ्युपेय इत्यभिप्रेत्य विक-ल्पयति * किमिति। भेदपक्षेऽपि स्वाभाविकविलक्षणधर्मवत्त्वात्त-योर्भेदः, औपाधिकधर्मवत्त्वाद्वा? इति पृच्छति * भेदे भेदकमिति ॥ ९२ ॥ आद्यं प्रत्याह * विलक्षणेति । द्वितीयं निराह * न चेति ॥९३॥ औपाधिकभेदाभावोऽसिद्धः, पिण्डस्थोऽभावः प्रा-गभावः कपालस्थो ध्वंस इति पिण्डकपालादिलक्षणोपाधिभेदेन

तर्ह्यत्र मानं वक्तव्यं प्रत्यक्षं तु न युज्यते ॥ ९४ ॥
नीरूपप्रागभावस्य चाक्षुषत्वमसङ्गतम् ॥
पिण्डे दृष्टे प्रागभावो दृष्ट इत्येष ते भ्रमः ॥ ९५ ॥
प्रागभावव्यवहृतिर्यदि पिण्डदृशस्तदा ॥
स एव प्रागभावोऽस्तु किमुपाधितया तव ॥ ९६ ॥
पिण्डत्वप्रागभावत्वे एकस्याप्यविरोधिनी ॥
स्वतः पिण्डोऽप्यपेक्ष्यान्यं प्रागभावत्वमश्नुते ॥ ९७ ॥
प्रागभावोऽस्ति दृष्टश्चेत्येवं तत्सत्त्वदर्शने ॥
भावस्यैवोपपद्येते न शून्यस्य निरात्मनः ॥ ९८ ॥
युक्तियुक्तं वैदिकं च मतं त्यक्त्वा दुराग्रहात् ॥
कुतर्कसमये मग्नः किं मुधा परिमुह्यसि ॥ ९९ ॥
अभावस्यापि भावत्वे कुतः कार्यमसद्भवेत् ॥

---

तयोर्भेदादित्याशङ्क्य निराकरोति * घटस्येति ॥ ९४ ॥ नीरूपस्याप्यभावस्यानुभवबलाच्चाक्षुषत्वमाशङ्क्य लोकानां तदनुभवाभावाद्द्वादिभ्रमस्य चार्थासाधकत्वान्नैवमित्याह * पिण्ड इति ॥ ९५ ॥ अस्तु वा पिण्डाक्षसन्निकर्षानन्तरं प्रागभावानुभवस्तथापि तस्य पिण्डविषयत्वेनाप्युपपत्तेर्नातिरिक्ताभावसिद्धिरित्याह * प्रागिति ॥ ९६ ॥ अभावगोचरधियः कथं भावविषयत्वम् इत्याशङ्क्य भावात्मकस्य पिण्डादेर्घटादिकमपेक्ष्याभावत्वमप्यविरुद्धमित्याह * पिण्डत्वेति । किञ्चाभावोऽस्तीत्यादिना सत्त्वादिधर्मितया प्रतीतस्य भावरूपत्वमेव वक्तुमुचितं न निःस्वरूपत्वमित्याह * प्रागिति ॥ ९८॥ ९९ ॥ अस्तु ध्वंसादेः कपालाद्यात्मकत्वं प्रकृते किमायातमित्याशङ्क्य कार्याभावाभावे ऽस्मदिष्टं कार्यसत्त्वं सिद्ध्यतीत्याह * अभावस्येति । कार-

कारणस्य तु भावत्वमविवादं मतेऽपि ते ॥ १०० ॥
नन्वत्रैकं स्वतःसिद्धं प्रत्यग्रूपमनन्यदृक् ॥
यस्त्विष्टं वेदसिद्धान्ते किमर्थे कार्यकारणे ॥ १०१ ॥
एवम्भूतात्मबोधार्थं कारणादि प्रसाध्यते ॥
उपायः सोऽवतारायेत्याचार्यैरेतदीरणात् ॥ १०२ ॥
सत्तत्त्वकमिदं सर्वमिति संसाध्य यत्नतः ॥
तस्यापि संविन्मात्रेण पूर्णतैवोच्यते स्वतः ॥१०३॥
कारणादिनिषेधेन नन्वद्वैतमभीप्सितम् ॥
तथाच नेतिनेतीति बोधस्योक्तमता मता ॥ १०४ ॥
बाढं किन्तु निषेधोऽयं नोपादेयतयोच्यते ॥
ऐकात्म्यमात्रबोधेन निषेधस्याप्यपह्नवात् ॥ १०५ ॥

णतत्त्वं तु निर्विवादमित्याह * कारणस्येति॥ १०० ॥एवमपि तत्र सिद्धान्तहानिरिति चोदयति*नन्विति । किमित्याक्षेपे । साध्येते इति शेषः।अद्वयत्वविरोधादिति भावः ॥ १०१ ॥ कार्यकारणतद्भावविलक्षणाद्वितीयब्रह्मसिद्धये कारणादेरतुच्छत्वं साधयतो न सिद्धान्तहानिरिति परिहरति * एवमिति । तत्त्वज्ञानसिद्धौ कारणादि हेतुरित्यत्र मृल्लोहविस्फुलिङ्गेत्यादिवृद्धवाक्यमुदाहरति * उपाय इति ॥ १०२ ॥ नन्वेवमपि कारणादिसत्त्वे कथमद्वैतसिद्धिस्तत्राह * सदिति ॥ १०३ ॥ यदि कारणादिकं ब्रह्माधीनसत्ताकम् इति संसाध्य नेतिनेत्यादिना तदपि निषिध्य संविन्मात्रतया पूर्णत्वमुच्यते तर्हि मुक्तावन्तरङ्गत्वान्निषेधज्ञानमेवोपादेयं स्यादिति शङ्कते * कारणेति । एवं च कारणादिसत्त्वचिन्ता मुधेत्यर्थः ॥ १०४ ॥ निषेधबोधस्यान्तरङ्गत्वमङ्गीकरोति * बाढमिति । तस्योपादेयत्वमुक्तं धुनीते * किन्त्विति ॥ १०५ ॥ तर्हि कार्यादिसत्त्वनिषेधबोधयोः किमुपा-

निषेधबोधसद्बोधौ तयोः काऽत्र व्यवस्थितिः ॥
उच्यते नैनयोरंशभेदेनात्र व्यवस्थितिः ॥ १०६ ॥
यथा चूतफले बीजं त्याज्यं ग्राह्यस्तु तद्रसः ॥
नैवं जगति बोधाय त्याज्यं ग्राह्यं च भिद्यते ॥ १०७ ॥
किं तर्हि सर्वं सन्त्याज्यमुपादेयं तथाऽखिलम् ॥
रज्जुसर्पेऽखिलं त्याज्यं ग्राह्यं चाखिलमेव तत् ॥ १०८ ॥
न शिरोभागमुत्सृज्य पुच्छभागं प्रगृह्णते ॥
निखिलां सर्पतां त्यक्त्वा निखिलां रज्जुतां विदुः ॥ १०९ ॥
जगद्भावभ्रमं त्यक्त्वा ब्रह्मत्वेनैति पूर्णताम् ॥
ततः पुरुषचित्तस्य भेदाद्बोधौ व्यवस्थितौ ॥ ११० ॥
दृश्याभिमुखमेवैतच्चित्तं चेत्तन्निवृत्तितः ॥
दृङ्मात्रत्वावशेषाय निषेधोऽयं प्रशस्यते ॥ १११ ॥
नानात्वाख्यग्रहग्रस्तं चित्तमद्वैतवस्तुनि ॥
प्रवेशयति चिन्तेयं कार्यकारणसत्त्वगा ॥ ११२ ॥

---

ह्येयमिति पृच्छति * निषेधेति । प्रपञ्चान्तःपातित्वादुभयमपि ह्येयमेवेत्याह * उच्यत इति ॥ १०६ ॥ तत्र व्यतिरेकदृष्टान्तमाह * बोधायेति । साक्षान्मोक्षसाधनायेति शेषः ॥ १०७ ॥ तर्ह्युपादेयज्ञानं किमिति पृच्छति * किमिति । प्रपञ्चान्तःपातिसर्ववस्तुत्यागावधिभूतपूर्णात्मज्ञानमेवेत्याह * सर्वमिति । उक्तमर्थं दृष्टान्तेनाह * रज्ज्वित्यादिना । निषेधज्ञानमपि हेयं चेत् कथं तस्य मुख्यत्वमङ्गीकृतमित्याशङ्क्य पुरुषमतिभेदेनेत्याह * तत इति । व्यवस्थितौ, गौणमुख्यत्वेनेति शेषः ॥ ११० ॥ उक्तव्यवस्थां स्फुटयति * दृश्येति ॥ १११ ॥ द्वैताभिनिविष्टचित्तस्याद्वैतावतारणार्थत्वान्न कार्यादिसत्त्वचिन्ताऽपि वृथेत्याह *नानात्वेति ॥ ११२ ॥ ननु पुरुषमतिभेदेन श्रुतिः कारणादि-

त्वम्पदार्थमुखेनायं तत्पदार्थमुखेन वा ॥
पूर्णोऽवशिष्यतां विद्वानित्येतच्छ्रुतिहृद्गतम् ॥ ११३ ॥
तस्मात्सत्कार्यमखिलं कारणेन सताऽऽवृतम् ॥
जगतः प्रागवस्थायां नामरूपे न हि स्फुटे ॥ ११४ ॥
प्रागवस्थामुपक्रम्य बह्व्युत्पत्त्यवसानया ॥
सृष्ट्या स्तोतुमिमं वह्निं सा सृष्टिरिह वर्ण्यते ॥११५॥
यत्सद्रूपं परं ब्रह्म संविन्मात्रसतत्त्वकम् ॥
अविज्ञातात्मयाथात्म्यं जगतः कारणं हि तत्॥११६
स्वाज्ञानादेव सद्ब्रह्म ग्रसिष्णु प्रभविष्णु च ॥
विनाऽज्ञानमसङ्गस्य कुतः स्यात्सर्वशक्तिता॥११७॥
अकारणं सदज्ञानात्कारणत्वं यथा भजेत् ॥
बह्वाकारत्वमित्येवं निराकारमपि स्वतः ॥ ११८ ॥

सत्त्वं तन्निषेधं च ब्रवीति चेत् तस्याः कुत्र मुख्यतात्पर्यं तत्राह । *त्वमिति।११३॥नैवेह किञ्चनेत्यादिवाक्यार्थमुपसंहरति*तस्मादिति ॥ १४ ॥ "तेजोरसो निरवर्ततताग्निः" इत्यन्तग्रन्थतात्पर्यं सङ्क्षिप्य दर्शयति * प्रागवस्थामिति ॥ ११५ ॥ एवं प्रसङ्गप्राप्तं चोद्यमपोह्य प्रकृतं मृत्युशब्दार्थमेव पूर्वोक्तमनुवदति * यदिति । यदेवम्भूतं जगत्कारणं प्रसिद्धं तन्मृत्युशब्दवाच्यमित्यर्थः ॥ ११६॥ "अविज्ञातात्मयाथात्म्यम्"इत्यनेन स्वाश्रयविषयाविद्यासहितस्यैव ब्रह्मणः कारणत्वमुक्तमुपपन्नम् । सर्वशक्तियुक्तब्रह्मणो विनाऽपि मायां तत्सम्भवादित्याशङ्क्याह *स्वाज्ञानादिति ॥ ११७ ॥ आत्मनोऽसङ्गत्वे जगदात्मत्वं न स्यात् तथाच "सच्च त्यच्चाभवत्" इति श्रुतिः कुप्येतेत्याशङ्क्यासङ्गत्वेऽपि निष्प्रपञ्चस्य ब्रह्मणो वस्तुतो जगदाकारत्वाभावेऽपि मायया तदपि कारणत्ववत्सम्भवतीत्याह * अकारणमिति ॥११८॥

शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २
मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३
कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं ब्रसंपूर्णम् ( वेदान्तः ) २
श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । ( वेदान्तः ) १४
आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८
ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... ... १
क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २
ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १
शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविट्ठलनाथदीक्षितविरचितटिप्पणीसहिता । २
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । द्वैताद्वैतदर्शनानुगतः । ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १
(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११
(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रव-

र्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । १

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्ययातथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता । ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-

श्रीमद्बालम्भट्टविरचितकलाटीक
टीकाद्वयसंवलिता । ...

(४७) व्याकरणसिद्धान्तसुधानिधिः । 
विश्वेश्वरसूरिविरचितः ।

(४८) विरमित्रोदयः । लक्षणप्रकाशः । 
महामहोपाध्यायश्रीमित्रमिश्रविर

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्या
मिविरचितः । महेश्वरतीर्थकृत
प्रहाख्यया टीकया समलंकृतः ।

पत्त्रादिप्रेषणस्थानम् } हरिदासगुप्तः,
चौखम्बा बनारस सिटी ।

THE

# HOWKHAMBÂ SANSKṚIT SERIES;

A

OLLECTION OF RARE & EXTRAORDINRY SANSKRIT WORKS.

NO. 207.

# बृहदारण्यकवार्तिकसारः

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

## BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS III-३

*UBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.

AGENTS:—

OTTO HARRASSOWITZ, LEIPZIG:

PANDIIA JYESHTHARAMA MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO., BOOKSELLERS, ·LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२०७


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवक एक एव ग्रन्थो मुद्रयते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्रयन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...



साम्प्रतं मुद्रयमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) २

(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरीमल्लिषेणानिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्तः)१

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

स्वचिदाभासमार्गेण स्वात्माज्ञानजवर्ष्मसु ॥
प्रविष्ट एको बहुधा वियद्यद्वद्धटादिषु ॥ ११९ ॥
घटेषु ये घटाकाशा वास्तवं वियदेव ते ॥
घटस्थेषु जलेष्वन्ये स्वाभासाः प्रतिबिम्बिताः॥१२०॥
तथैव बुद्धिद्रष्टारो जीवा ब्रह्मैव वास्तवम् ॥
जलौष्ण्यवच्चिदाभासाः प्राप्ता बुद्धिस्वरूपताम्॥१२१॥
अङ्गारतापसान्निध्याद्यथा कुम्भजलादिषु ॥
तापाभासा उदेत्येवं चिदाभासोऽपि बुद्धिषु॥१२२ ॥
चिदाभासेषु नानात्वं दुःखित्वाद्यवभासनात् ॥
बुद्धिद्रष्टृषु दुःखादेरारोपो मुह्यतां नृणाम् ॥ १२३ ॥
अज्ञानानुपमर्देन यत्सृष्टौ द्वैतभासनम् ॥

---

नन्वेवं चेतनाचेतनप्रपञ्चस्य सर्वस्य मायिकत्वे जीवानां मुक्तिफलभागित्वं न स्यादत आह * स्वेति । स्वचितः ब्रह्मचैतन्यस्य यस्मिन्नाभासस्तदज्ञानं, तथा च तदनुसारेणेत्यर्थः । वर्ष्मसु–अन्तःकरणादिषु ॥ ११९ ॥ आकाशदृष्टान्तं विकासयति * घटेष्विति ॥ १२० ॥ दार्ष्टान्तिकमाह * तथेति । एवं च घटस्थजलप्रतिबिम्बिताकाशवद् बुद्धिस्थाभासस्य कल्पितत्वेऽपि तदधिष्ठानसाक्षिणो घटाकाशवत्सत्यत्वान्नामुक्तिभाक्त्वमित्यर्थः । जीवस्य वस्तुतो ब्रह्मत्वे तस्मिन्कर्तृत्वादिबुद्धिः कथमित्याशङ्क्य चिदाभासद्वारा साक्षिणि तदारोपादिति वक्तुं बुद्धौ चितः प्रतिबिम्बं तावदाह *जलेति । बुद्धिस्वरूपतां बुद्धितादात्म्यम्॥१२१॥उक्तमर्थं विशदयति। *अङ्गारेति॥१२२॥ एवं सति बुद्धिनिष्ठकर्तृत्वादीनां तन्निष्ठाभासद्वारा तद्द्रष्टर्यारोपादविवेकिनां तत्प्रतीतिरुपपद्यत इत्याह *चिदिति ॥ १२३ ॥

स्वप्नविज्ञानवन्नेदं वस्तुतत्त्वावभासकम् ॥ १२४ ॥
अथापि तत्त्वविज्ञानहेतुत्वं द्वैतमृच्छति ॥
निद्रां हित्वा यथा स्वापान्निमित्तादपि बुद्ध्यते॥१२५॥
साध्यसाधनतां तस्मादज्ञानैकव्यपाश्रयाम् ॥
उच्चैरनूद्य तत्तत्त्वं वेदान्ताः प्रत्यपादयन् ॥ १२६ ॥
अकारणमकार्यं सत् कार्यकारणतामगात् ॥
मोहादेव, ततः शास्त्रं मोहोच्छित्त्यै प्रवर्तते ॥ १२७ ॥
नामरूपादिना येयमसत्येवावभासते ॥

---

ननु दुःखादिप्रपञ्चस्य सत्यत्वमेवास्तु नाहं दुःखीत्यादिबाधकज्ञानानुपलम्भादित्यत्राह * अज्ञानेति । प्रत्यगज्ञाने स्थिते जगति यद्यज्ज्ञानमस्ति तत्सर्वं न वस्तुविषयं, न हि सत्यामेव निद्रायां प्रवृत्तं स्वप्नज्ञानं तत्कालेऽबाधितमिति कृत्वा वस्तु गोचरयति, एवमज्ञानकालेऽध्यक्षेणाबाधितमपि द्वैतं वस्तु न भवतीत्यर्थः ॥ १२४ ॥ स्वप्नवज्जाग्रतोऽपि मिथ्यात्वे श्रुत्यादेरपि मिथ्यात्वात्कथं ततो ब्रह्मधीरित्याशङ्क्याह * अथेति ॥ द्वैतं—वेदान्तादिकम् । स्वापादसत्यव्याघ्रादिदर्शनात् ॥ १२५ ॥ ननु सृष्ट्यादिश्रुतिप्रतिपाद्यत्वात्कार्यकारणभावस्य वस्तुत्वमिति तत्राह *साध्येति । उक्तन्यायेनानाद्यज्ञाननिमित्तकार्यकारणतां सृष्ट्यादिवाक्यैरनूद्य कल्पितकार्यादेः स्वरूपं प्रत्यग्ब्रह्ममात्रमिति तत्त्वमसीत्यादयो वेदान्ताः प्रतिपादयितुं प्रवृत्ताः न सृष्ट्यादिस्तत्र विवक्षितः, अपूर्वत्वाभावादफलत्वाच्चेति भावः ॥१२६॥ उक्तार्थं संक्षिप्याह *अकारणमिति । सत् ब्रह्म॥१२७॥ मोहादेवेत्युक्तः कोऽसौ मोहस्तत्राह * नामेति । अनिर्वचनीया या माया नामरूपात्मनाऽध्यक्षं भासते तत्कारणीभूतापञ्चीकृतमहाभू-

माया तस्याः परं सौक्ष्म्यं मोहशब्देन भण्यते॥१२८॥
निर्गीर्णाशेषसंसारं शुद्धं संस्कारसंश्रयम् ॥
अव्याकृतमिति ब्रह्म मोहयोगेन भण्यते ॥ १२९ ॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ॥
खं वायुर्ज्योतिरापश्च भूमिर्विश्वस्य धारिणी ॥१३०॥
श्रुतिः। नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत् अशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुताऽऽत्मन्वी स्यामिति सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्त ॥

---

तावस्थातिरिक्ततदुपादानं मोह इत्यर्थः ॥ १२८ ॥ ननु तद्धेदमित्यत्राव्याकृतस्य जगद्धेतुत्वं श्रूयते तत्कथं मोहयुक्तं ब्रह्म तत्कारणमिति तत्राह * निगीर्णेति ॥ शुद्धं ब्रह्म व्यावर्त्तयति *संस्कारेति ॥ संसारिब्रह्म व्यावर्त्तयति *शुद्धमिति॥१२९॥मूलकारणादेव सर्वसृष्टिरित्यत्राथर्वणश्रुतिं संवादयति * एतस्मादिति ॥ १३० ॥

नैवेहेत्यादिश्रुतेरक्षरार्थस्तु—इह संसारमण्डले सृष्टेः प्रागभिव्यक्तनामरूपं किञ्चिदपि नासीत् । नामरूपयोस्तदा कुतो नाभिव्यक्तिस्तत्राह * मृत्युनेति । मृत्युना कारणेनावृतमासीत् । मूलकारणे मृत्युशब्दप्रवृत्तौ हेतुः *अशनाययेति । अशनायावत्प्राणहेतुत्वादित्यर्थः । प्राणस्य च मृत्युत्वं प्रसिद्धमित्याह *अशनाया हि मृत्युरिति । अयं भावः—अशनायाशब्देन तद्वान्प्राणो लक्ष्यते । प्राणस्य चाध्यात्मवागादीनामधिदैवाग्न्यादीनां च संवरणान्मृत्युत्वमुक्तं, तत् प्राणकारणे परमात्मन्यप्युपचर्यत इति । तथाच मृत्युशब्दलक्ष्ये जगत्कारणे सर्वं जगत् सूक्ष्मरूपेण स्थितमित्यर्थः ॥

तत्रादौ सृज्यवस्तूनां प्राणादीनां विचारणे ॥
दक्षं मनोऽसृजत्तेन वेदे सृज्यं व्यचारयत् ॥ १३१ ॥
न चास्य मनसः सृष्ट्यै प्रसज्येत मनोऽन्तरम् ॥
न हीदमतिगम्भीरं शक्यं तर्कयितुं नृभिः ॥ १३२ ॥
स तेन मनसा स्वास्मिन्लीनान्वेदाननुस्मरन् ॥
समन्वालोचयद्देवो वेदोक्तां सृष्टिपद्धतिम् ॥ १३३ ॥
सृष्टिः सर्वा मनस्यस्य प्रादुरासीद्यथायथम् ॥
हिरण्यगर्भ एषोऽभूदीशो मानससृष्टितः ॥ १३४ ॥
श्रुतिः॥अर्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं क॰

---

तन्मनोऽकुरुतेत्यादेरर्थमाह वार्तिककारः *तत्रेति । तदिति मनसो निर्देशः । प्रकृतो मृत्युर्मनःशब्दवाच्यं वक्ष्यमाणसंकल्पं कृतवानित्यर्थः ॥ १३१ ॥ संकल्पस्यापि कार्यत्वात्तद्गोचरं संकल्पान्तरं स्यादित्यनवस्थामाशङ्क्य श्रुतितात्पर्यविषयेऽर्थे न कुतर्कावतार इत्याह * न चेति । संकल्पव्यतिरिक्तकार्याणि संकल्पपूर्वकाणीति श्रुतिवशादङ्गीकार्यमिति भावः ॥ १३२ ॥

संकल्पं कृतवानित्युक्तं, तमेव संकल्पं दर्शयति श्रुतिः * आत्मन्वी स्यामिति ॥ लिङ्गव्यत्ययश्छान्दसः । आत्मवान् वियदादिप्रपञ्चैः शरीरी स्यामिति । सोऽर्चन् सृष्टिपद्धतिमालोचयन् अचरत् आलोचनं कृतवान् इति यावत् । तस्यार्चतः आलोचयतः सम्बधिन्यः आपो ऽजायन्त, आप इति सर्वभूतोपलक्षणम् । मूलकारणादपञ्चीकृतभूतोत्पत्त्या तदुपाधिकहिरण्यगर्भो जातः ॥

एतदभिप्रेत्याह * स तेनेत्यादिना ॥ १३३ ॥ १३४ ॥

ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥
आपो वा अर्कस्तद्यदपाᳬशर आसीत्तत्समहन्यत सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य तप्तस्य तेजोरसो निरवर्त्तताग्निः ॥ २ ॥

---

अश्वमेधाङ्गभूताग्नेरर्कनामत्वेनाप्युपासनां वक्तुं तन्नाम्नस्तत्र प्रवृत्तौ बीजमाह श्रुतिः * अर्चत इति । षष्ठ्यर्थे चतुर्थी । सूत्रसृष्ट्यनन्तरमीशः एवममन्यत अर्चतो मे मत्सम्बन्धि कं जलं भूतान्तरसहितं सूत्ररूपमभूदिति तत्तस्मादेवमीश्वरस्य मननादेव अर्चतिपदावयवेन अर् इत्यनेन कशब्दसंयोगात्सूत्रात्मा अर्कनामा जातस्तस्यार्कस्य सूत्रात्मनोऽर्कत्वमेव तत्सृष्टपार्थिवाग्नेरप्यर्कनामत्वे हेतुरिति शेषः ॥ य एवं यथोक्तमर्कस्याग्नेरर्कत्वं वेदोपास्ते कं सुखं ह वा इत्यवधारणे, भवत्येवेति ॥ १ ॥ इदानीं श्रुत्यन्तरसिद्धपञ्चीकृतभूतेभ्यः सूत्रकर्तृकां विराडुत्पत्तिं वक्तुम् उक्तं सूत्रमनुवदति * आपो वा अर्कः । भूतान्तरसहितानामपां सूत्ररूपाणामर्कत्वोक्तेः । तत्तत्र सूत्रस्य विराट्सिसृक्षायां सत्यामपां पञ्चीकृतभूतान्तरसहितानां यः शरः उच्छूनत्वावस्थाऽऽसीत्स शरः समहन्यत कार्याभिमुखं कारणं परस्परं सङ्घातमापद्यतेत्यर्थः । लिङ्गव्यत्ययश्छान्दसः । स सङ्घातो येयं पृथिवी सा ऽभवत् । पृथिवीशब्दोऽण्डपरः, पञ्चभूतेभ्योऽण्डं जातमित्यर्थः । तस्यां पृथिव्यां सृष्टायां सत्यां प्रजापतिरश्राम्यत् श्रान्तो जातः महत्कार्यकरणात् । तस्य श्रान्तस्य तप्तस्य खिन्नस्य तेजोरसस्य ज्ञानक्रियात्मकस्य विभक्तिव्यत्ययश्छान्दसः। अग्निस्त्रैलोक्यात्मा प्रथमशरीरी निरवर्तत सूत्रात्मा विराड्देहावच्छिन्नस्तदभिमानविशिष्टो निर्वृत्त

स त्रेधाऽऽत्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधा विहितः तस्य प्राची दिक् शिरोऽसौ चासौ चेर्मौ अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा चोदीचीच पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवत् अशनाया मृत्युः तद्यद्रेत आसीत्स संवत्सरोऽभवत् ॥

---

इत्यर्थः॥२॥स सूत्रात्माऽऽत्मानं कार्यकरणसङ्घातमुपासनार्थं त्रेधा व्यभजत्। अत्र अग्निं तृतीयमित्यपि द्रष्टव्यम्। इत्थमसौ शुद्धजन्माऽग्निरश्वमेधाङ्गभूतः पक्ष्याकारेण चितः सर्वात्मत्वेनोपास्य इत्याह * तस्याग्नेः प्राची दिक् शिरः असौ चासौ च ऐशान्याग्नेय्यौ ईर्मौ बाहू । अथ–शिरसि बाह्वोश्च प्राच्यादिदृष्टिकरणानन्तरं पुच्छं जघन्यभागो ऽसौ चासौ वायव्यनैर्ऋत्यौ सक्थ्यौ पृष्ठनिष्ठोन्नतास्थिद्वयं सक्थिशब्दार्थः । इयं पृथिवी । स एष लोकात्मकोऽग्निरप्सु भूतान्तरसहितासु प्रतिष्ठितस्तासां सर्वलोककारणत्वात् ॥ अग्नेरप्सु प्रतिष्ठितत्वगुणविज्ञानफलमाह । *यत्र क्व च यस्मिन्कस्मिंश्चिद्देशे एति गच्छति तत्रैव प्रतिष्ठां लभत इत्यर्थः ॥ ३ ॥ एवं सङ्ग्रहेण सूत्रकर्तृकां विराट्सृष्टिमुक्त्वा तामेव सप्रकारां दर्शयति श्रुतिः । *स सूत्रात्मा एवं कामयित्वा मनसा ज्ञानेन वाचं वेदलक्षणां मिथुनं द्वन्द्वभावं समभवत् सम्भवनं कृतवान्, त्रयीविहितं सृष्टिक्रमं ज्ञानेनालोचयदित्यर्थः। उक्तालोचनकर्तृत्वं विराजो व्यावर्तयति ॥ *अ-

क्रियाविज्ञानशक्त्यात्मा सूक्ष्मादृष्टशरीरभृत् ॥
स्थूलभूतानि सृष्ट्वाऽत्र रेतो विन्यदधात्स्वकम्॥१३५॥
द्वैतैकत्वात्मकज्ञानकर्मणी पूर्वसाश्रिते ॥
भावना च तयोरेतत् त्रयं रेतोऽभिधीयते ॥ १३६ ॥
भूतानां सार एकत्र सङ्घीभूयाथ रेतसा ॥
यतोऽण्डमभवत्तेन विधाता गर्भवानभूत् ॥ १३७ ॥
हिरण्यगर्भगर्भो यः स संवत्सरतामगात् ॥

श्रुतिः ॥ न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभर्यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत तं जातमभिव्याददात्स भाणमकरोत्सैव वागभवत् ॥ ४ ॥

---

शनायेति ॥ अशनायापदलक्षितो मृत्युरित्यर्थः ॥ तत्तत्र मिथुने यद्रेत आसीत्तद् भूतेषु विसृष्टवानिति शेषः ॥

एतत् सर्वमभिप्रेत्याह *क्रियाविज्ञानेति। *स्थूलभूतानीति ॥ अदृष्टद्वारेति शेषः ॥ १३५ ॥ प्रकृते विवक्षितं रेतःशब्दार्थमाह *द्वैतैकत्वेति । उपास्यस्य नानारसत्वात्तदुपास्तेरपि नानात्वम् उपचर्यते। प्रजापतेर्जगत्स्रष्टिबीजं जन्मान्तरार्जितं यज्ज्ञानादित्रयं रेतःशब्दितं त्रय्यालोचनेन प्रादुरभूत्तेन भूतेष्वण्डजननशक्तिमुत्पादयामासेत्यर्थः ॥ १३६ ॥ एवं रेतःसेकानन्तरं यद्वृत्तं तदाह * भूतानामिति ॥ १३७ ॥ स संवत्सरोऽभवदित्यस्यार्थमाह * हिरण्यगर्भेति ।

ननु गर्भस्य कथं कालात्मत्वं तत्राह श्रुतिः * न ह पुरेति। ततः—विराडुत्पत्तेः पूर्वं हिरण्यगर्भकाले स संवत्सरो नाम नासीत् विराडन्तर्भूतस्य संवत्सरनिर्मातुः सूर्यस्याभावात् । तं गर्भं

हिरण्यगर्भः कालेन हीनोऽण्डं कालसंयुतम् ॥१३८॥
अण्डं भित्त्वान्तरसृजद्विराजं पुरुषं प्रभुः ॥
क्रियाविज्ञानशक्त्यात्मा विराजोपहितो ह्यभूत् ॥१३९॥
नामरूपादिमद्देहसम्बन्धात्तद्विलक्षणम् ॥
अरूपोऽपि हि सूत्रात्मा लक्ष्यते रूपवानिव ॥ १४०॥
सूक्ष्मस्थूलशरीराभ्यां चिदाभाभ्यामविद्यया ॥
युतः कूटस्थ ईशोऽपि सशरीरो बभूव ह ॥ १४१ ॥
स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥
आदिकर्त्ता स भूतानां ब्रह्मोपास्य इहेरितः ॥१४२ ॥
अशनायादिमत्त्वात्स स्वभावबलचोदितः ॥
हिरण्यगर्भस्तं पुत्रमत्तुं दारितवान्मुखम् ॥ १४३ ॥

---

यावानिह संवत्सर इति प्रसिद्धस्तावन्तं कालमबिभः भृतवान् । तथाच संवत्सरोऽभवदिति संवत्सरमात्रं गर्भे स्थित इत्यर्थः ॥

एतदेवाभिप्रेत्याह ॥ * हिरण्यगर्भ इति ॥ १३८ ॥ तमेतावत इत्यादेरर्थमाह * अण्डमिति ॥ उक्तमर्थं विशदयति * क्रियेति ॥ १३९ ॥ सूत्रस्य स्थूलदेहावच्छेदफलमाह * नामेति ॥ १४० ॥ एतावता किं फलमुक्तमित्याशङ्क्य श्रेयस्कामानामनायासेनोपास्तिः सिद्ध्यतीत्यभिप्रेत्य ईश्वरस्य विशेषणाभिव्यक्तत्वाद्देहद्वयावच्छिन्न ईश्वर एवेत्याह * सूक्ष्मस्थूलेति* चिदाभाभ्यामिति ॥ चित आभाऽभिव्यक्तिर्ययोस्ते तथोक्ते। अपिः अवधारणे ॥ १४१ ॥ फलितमाह * स वा इति ॥ १४२ ॥ तं जातमभिव्याददादित्यस्यार्थमाह *अशनायेति ॥ स्वभावबलचोदितः अनादिवासनाप्रेरितः॥१४३॥

भिनत्ति सर्वमर्यादां नान्वयाद्यप्यपेक्षते ॥
अस्य दग्धोदरस्यार्थे को न कुर्यादसाम्प्रतम् ॥१४४॥
स्थूलदेहविहीनस्य कथं मुखविदारणम् ॥
इत्यचोद्यं यतः स्वप्न इव स्यात्प्रतिभासतः ॥ १४५ ॥
जन्मान्तरसमभ्यस्तविद्याकर्मादिहेतुतः ॥
जन्यकर्मप्रयुक्तः सन् शिशुर्भीतस्तदाऽरुदत् ॥१४६ ॥
स्वभावप्रेरितो ह्येष प्राण्यदृष्टवशानुगः ॥
रोदनोत्थरवत्रस्तः स्वभावं चिच्छिदे भयात् ॥१४७॥
अत्यन्तमपि शूराणां स्वस्वभावैकहेतुतः ॥
तित्तिरादिसमुत्पाते वेपथुर्जायते भयात् । १४८ ॥
इत्थं विचारयामास विरतः पुत्रभक्षणात् ॥
अन्नबीजं विराड्देहस्तन्न भक्ष्यं फलार्थिना ॥ १४९ ॥

---

ुधितः प्रजापतिरपि पुत्रं भक्षयति, अन्यः किं पुनरन्यन्न क-
ातीत्याक्रोशति * भिनत्तीति । * यत इति । सङ्कल्पादे-
ति शेषः ॥१४४॥१४५॥ स भाणमकरोदित्यस्य सहेतुकम-
माह * जन्मेति । जनिष्यमाणप्राणिकर्मणश्च तत्र हेतुत्वमाह
जन्येति । भाणित्यसंस्कृतशब्दकरणे हेतुमाह * शिशुरिति
१४६ ॥ किमिति मृत्युस्तं न भक्षितवान्? तत्राह *स्वभावे-
। स्वभावो हिंस्रत्वम् ॥ १४७ ॥ सर्वसंहर्तुरतिशूरस्य प्रजा-
तेः शिशुशब्दश्रुतिमात्रात्कथं त्रासः स्यात्? तत्राह *अत्यन्त-
ाति । श्रुतौ सैव वागभवत्—वक्ष्यमाणशब्दप्रपञ्चहेतुरभूदित्य-
: ॥ १४८ ॥ स ऐक्षतेत्यादेरर्थमाह * इत्थमिति । विचार-
कारमाह * अन्नबीजमिति । फलार्थिना—बह्वन्नकामिना
द्बीजं न भक्ष्यमित्यर्थः ॥ १४९ ॥ स तयेत्यादेस्तात्पर्यमाह

विचार्य तेन बीजेन भोक्तृभोज्ये ससर्ज सः
अग्न्याद्या इह भोक्तारो वेदयज्ञादि भोग्यकम्॥१५०॥
स्वरूपानुपमर्देन स विराट् देवतात्मभिः ॥
आत्मानं व्यभजत्स्थूलैस्त्रिधा वाय्वग्निभानुभिः॥१५१॥
श्रुतिः॥ स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदꣳ सर्वमसृजत यदिदं किञ्चर्चो यजूꣳषि सामानि च्छदाꣳसि यज्ञान्प्रजाः पशून् स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेरदितित्वꣳसर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥५॥

---

* विचार्येति ॥ १५० ॥ सिंहावलोकनन्यायेन स त्रेधाऽऽत्मानमित्यादेरर्थमाह * स्वरूपेति ॥ १५१ ॥

स ऐक्षतेत्यादिश्रुतेरेषोऽक्षरार्थः—स कुमाररवभीतः प्रजापतिरालोचयत् यदि वै इममभिमंस्ये, अभिपूर्वो मन्यतिः हिंसार्थः हिंसिष्य इत्यर्थः, कनीयोऽल्पमन्नं करिष्ये। एतद्द्वारा बहु भोग्यजातं सम्पाद्यमिति तद्भक्षणादुपररामेत्यर्थः । स तया—कुमारवक्त्रोद्गतया शब्दप्रपञ्चहेतुभूतया। तेनात्मना—कुमारेणार्थप्रपञ्चनिमित्तेन। ननु विराजः सृष्ट्या स्थावरजङ्गमात्मनो जगतः सृष्टत्वात्किं पुनः सृष्ट्येत्याशङ्क्य सर्वशब्दस्य सङ्कोचमाह *ऋच इति। गायत्र्यादीनि। प्रजाः यज्ञकर्त्रीः।पशून् यज्ञाङ्गभूतान्। स प्रजापतिः स्वसृष्टं सर्वमत्तुं भक्षयितुम् अध्रियत मनो धृतवान् सर्वं भोग्यं वै इति यस्माद्त्ति तस्माददितेः प्रजापतेरादितित्वं प्रसिद्धम् । तथाच मन्त्रः—अदितिर्द्यौरदितिरन्तारिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवा अदितिः पञ्चजना

इत्थं महाभाग एष वह्निस्तेन विराड्धिया ॥
उपास्य इति संस्तौति ध्येयोऽश्वः स्तूयते तथा॥१५२॥
स विराडश्वमेधेन यजेयेति व्यचारयत् ॥
विराजः प्राण उत्क्रान्तो विचारश्रमकर्शितात् ॥ १५३ ॥
प्राणोत्क्रान्तौ विराजोऽस्य देह उच्छूनतां गतः ॥

श्रुतिः ॥ सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत् प्राणा वै यशोवीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत्॥६॥सोऽकामयत मेध्यं म इदꣳस्यादात्मन्व्यनेन स्यामिति ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूत् इति तदेवाश्वमेधस्याश्वमेधत्वम् ।

---

अदितिर्जातमदितिर्जनित्वमिति । प्रजापतेरदितिनामत्वगुणध्यानफलमाह * सर्वस्येत्यादिना ॥ ५ ॥

वृत्तानुवादपूर्वकमुत्तरकण्डिकातात्पर्यमाह *इत्थमिति॥१५२॥ सोऽकामयतेत्यादेरर्थमाह * स विराडित्यादिना । भूयसेत्यस्य व्याख्या अश्वमेधेनेति । तस्य भूयोदक्षिणाकत्वाद् भूयस्त्वम् । जन्मान्तरकारणापेक्षया श्रुतौ भूयःशब्दप्रयोगः । स तपोऽतप्यत श्रमात् खेदमापद्यत इत्यर्थः । यशोवीर्यमित्यादेरर्थमाह * विराज इति । प्राणानां यशोवीर्यत्वं तद्धेतुत्वादिति द्रष्टव्यम् ॥ १५३ ॥ तत्प्राणेष्वित्यादेरर्थमाह * प्राणेति ।

तस्येत्यादिश्रुतेरयमर्थः—तस्य शरीरान्निर्गतस्यापि प्रजापतेस्तस्मिन्नेव मन आसीत्स इदं शरीरं मेध्यं यज्ञियं स्यादनेन श-

यतोऽश्वयत्ततोऽश्वाख्यां वैराजो देह आप्तवान् ॥१५४॥
सोऽकामयत मेध्यं मे शरीरं स्यादिति प्रभुः ॥
कामयित्वा विवेशास्मादमेध्यं मेध्यतामगात् ॥१५५॥
अश्वयन्मेध्यमभवदश्वमेधस्ततो विराट् ॥
अश्वाश्वमेधौ स्तूयेते ज्ञानकर्मप्रवृत्तये ॥ १५६ ॥
अश्वाश्वमेधवह्नीनामर्थवादेन संस्तवात् ॥
ज्ञानकर्मविधानेन तस्य स्यादेकवाक्यता ॥ १५७ ॥

इति वार्तिकसारे प्रथमाध्याये द्वितीयमग्नि-
ब्राह्मणं समाप्तम् ॥

---

रीरेणात्मन्वी स्यां शरीरी स्यामिति कामितवान् ।

ततोऽश्वः समभवदित्यत्र तच्छब्दापेक्षितमुत्तरवाक्य-मनुषञ्जयंस्तदर्थमाह * यत इति ॥ १५४ ॥ १५५ ॥ * अश्वयादिति । यस्माद्यशोवीर्यहीनमश्वत् अश्वयत् उच्छूनतामापद्यत प्रजापतिप्रवेशाच्च मेध्यमभूत् अभवत्तदेव तस्मादेवाश्वमेधस्य प्रजापतेरश्वमेधत्वं निष्पन्नमित्यक्षरार्थः । शरीरस्याश्वाश्वमेधत्वनिर्वचनेन तत्तादात्म्यापन्नप्रजापतेस्तन्निर्देशफलमाह * अश्वेति । एतेन प्रजापतेः कर्मानधिकारिणः कथं यजेयेत्याशंसनमित्यादिविरोधशङ्का न कार्येत्युक्तं भवति॥१५६॥ एवमश्वादिस्तवनादेकफलोद्देशेन ज्ञानकर्मविधायिब्राह्मणद्वयस्यैकवाक्यत्वं पूर्वमुक्तं युक्तमित्याह * अश्वाश्वमेधेति । तस्येति बुद्धिस्थं ब्राह्मणद्वयं परामृश्यते ॥ १५७ ॥

एतदेवाभिप्रेत्य एष ह वेत्याद्युत्तरश्रुतिः प्रवृत्ता । अस्या अयमर्थः—यः कश्चिदेनं प्रजापतित्वेनोक्तमश्वमग्निं च एवं वक्ष्यमाणप्रकारेण विस्पष्टं वेद स एषो ऽश्वमेधं वेद तस्मादेवं

श्रुतिः ॥ एष ह वा अश्वमेधं वेद य एनमेवं वेद तमनवरुध्येवामन्यत तᳪ संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत् तस्मात्सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते ॥

एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मा अयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति एतासां देवतानामेको भवति॥ ७॥ इत्युपनिषादि द्वितीयमग्निब्राह्मणं समाप्तम् ॥

---

वेदितव्यमित्यर्थः । तत्राश्वविषयं दर्शनमाह । प्रजापतिरात्मानमेवाश्वं कल्पयित्वा तमश्वमनवरुद्ध्यैवामन्यत, मया मुक्तोऽश्वः स्वच्छन्दोऽब्दमात्रं विचरति इत्यचिन्तयत् । तमश्वं संवत्सरस्य परस्तादात्मार्थमालम्भनं कृतवान् पशून् ग्राम्यारण्यान् स्वावयवभूताभ्यो देवताभ्यः प्रत्यौहत् प्रतिगमितवान् एवमन्योप्युपासीतेत्यर्थः । तत्प्रकारश्चाधस्तादुक्तः । यस्मादेवमुक्तवान् प्रजापतिस्तस्मात्तत्कार्यभूतयाज्ञिकाश्च प्रोक्षितं मन्त्रसंस्कृतं तुरगं सर्वदेवत्यं प्राजापत्यमालभन्ते । सर्वदैवतत्वे हेतुः *प्राजापत्यमिति। तस्य सर्वात्मत्वात्। एवमुपास्तिमुक्त्वा तत्फलमाह *एष इति। उ हैतावदश्वमेधक्रिया मानसी कायिकी च, द्विविधक्रियाऽपि फलरूपेण स्थिता सवितैवेत्यर्थः । स संवत्सरत्वेन चिन्त्य इत्याह * तस्येति । तस्य रवेः संवत्सरः शरीरं तन्निर्वर्त्यत्वात् । एवं क्रतोरर्कत्वमुक्त्वा तदङ्गस्याग्नेरपि तदाह * अयमग्निरर्क इति । अयं पूर्वोक्तचित्योऽग्निरर्क एवेति चिन्तयेदित्य-

र्थः । कथं क्रत्वङ्गस्याग्नेः क्रतुफलादित्यनामत्वमित्याशङ्क्य तस्य प्राची दिगित्यादिना सर्वात्मत्वोक्तेरर्कनामत्वं युक्तमित्याह * तस्येमे लोका आत्मान इति । तस्य चित्याग्नेरित्यर्थः । तावेतौ यथा विशेषितौ अर्कार्कौ अग्न्यादित्यावश्वमेधौ भवतस्तयोरश्वमेधत्वम् अग्नेस्तत्साधनत्वाद्रवेस्तत्फलत्वादुपचर्यत इत्युक्तम् । तावग्न्यादित्यौ । * सो पुनरिति । सा उ इतिच्छेदः । पुनर्भूयः स्वाधिकारान्ते एकैव देवता भवति । तच्छब्दस्य विधेयदेवतापेक्षया स्त्रीत्वम् । का सा देवता यया ऐक्यं प्राप्नुतः ? तत्राह * मृत्युरेवेति । हिरण्यगर्भ इत्यर्थः । पूर्वोक्तक्रमेणोपासनस्य फलमाह * अपपुनरिति । तस्यैव व्याख्या नैनमिति । तत्र हेतुः * अस्येति । अग्न्यादिदेवताप्रेष्यत्वं वारयति * एतासामिति । वर्त्तमानदेहपातानन्तरमग्न्यादिभेदभिन्नानां देवतानामात्मनाऽभिन्नो भवतीत्यर्थः ॥ ७ ॥

इति वार्त्तिकसारटीकायां प्रथमाध्याये द्वितीयमग्निब्राह्मणं समाप्तम् ॥ २ ॥

तृतीयब्राह्मणे प्राणः शुद्ध्यादिगुणसंयुतः ॥
हिरण्यगर्भप्राप्त्यर्थमुपास्यः प्रतिपाद्यते ॥ १ ॥
आध्यात्मिकपरिच्छेदं परित्यज्याधिदैविके ॥
रूपे स्वरूपबुद्धिर्या सा तत्प्राप्तिरितीर्यते ॥ २ ॥
अत्रवाग्न्युपासनस्यापि फलमेतन्न चेतरत् ॥
तथाप्युपास्यभेदेन भिन्नैवोपास्तिरिष्यते ॥ ३ ॥
एकत्वेऽपीश्वरस्यास्य गुणभेदेन भिन्नता ॥
स्थूलसूक्ष्मशरीराख्यौ विराट्प्राणौ हि तौ गुणौ ॥४॥
पूर्वस्य स्थूलमुख्यत्वमिह सूक्ष्मस्य मुख्यता ॥
तथाच सूक्ष्मदेहोत्थाद्र्वेत्स्थूलाद्विवेचितः ॥ ५ ॥
आत्मविद्याधिकारेऽस्मिन्नुपास्त्यादि यदुच्यते ॥
तद्विवेकोपयोग्येव तस्मात्प्राणो विविच्यते ॥ ६ ॥
स्थूलस्य सुविवेचत्वादादौ मन्दं प्रतीरितम् ॥

---

उद्गीथब्राह्मणार्थं संगृह्णाति * तृतीयेति ॥ १ ॥ प्राप्त्यर्थमित्यत्र प्राप्तिशब्दार्थमाह * आध्यात्मिकेति ॥ २ ॥ ३ ॥ फलैक्ये कथमुपास्यभेदस्तत्राह * एकत्वेऽपीति । यथा सायुज्यरूपफलाभेदेऽपि परमेश्वरोपास्तिर्मनोमयत्वादिगुणभेदाद्भिद्यते, एवं सूत्रोपास्तिरपि समष्टिस्थूलसूक्ष्मशरीराख्यगुणभेदाद्भिन्नेत्यर्थः ॥ ४ ॥ सर्वात्मकोऽहमित्येवंरूपोपास्तेः कथमेकशरीरालम्बनत्वं ? तत्राह * पूर्वस्येति । एवंसति फलान्तरमपि सिद्ध्यतीत्याह *तथा चेति ॥ ५ ॥ सूक्ष्मदेहस्य स्थूलाद्विवेचनं चार्थादुक्तमित्यत्र कल्पकाभावादुपास्तिमात्रपरमेवास्तु वाक्यमित्याशङ्क्य प्रकरणविरोधान्मैवमित्याह * आत्मेति ॥ ६ ॥ तथासति पूर्वोत्तरब्राह्मणयोः क्रमोऽप्यनुगुणः स्यादित्याह

उत्तमं प्रत्यसौ प्राणो दुर्विवेचो विविच्यते ॥ ७ ॥
पौर्वापर्यमतो युक्तं विराट्प्राणाख्यविद्ययोः ॥
मुख्यं प्राणमुपासीत शुद्ध्यादिगुणसंयुतम् ॥ ८ ॥
वागादयो न शुद्धाः स्युर्विषयासङ्गदूषिताः ॥
मुख्यप्राणस्तु शुद्धः स्याद्विषयासङ्गवर्जनात् ॥ ९ ॥
मुख्यप्राणोऽहमस्म्येष आसुरैरप्रधर्षितः ॥
हिरण्यगर्भदेवस्य त्रीणि रूपाणि सन्ति मे ॥ १० ॥
अयास्य इति नामैकं तथाऽऽङ्गिरस इत्यपि ॥
दूरित्येतानि नामानि तेषामर्थो मयि स्थितः ॥ ११ ॥
अयमास्येऽन्तरस्तीति देवा मां प्राणमूचिरे ॥
तेनायास्योऽभवं सर्वप्राणिवक्त्रास्थितत्वतः ॥ १२ ॥
अङ्गानां सारभूतत्वादहमाङ्गिरसोऽभवम् ॥
पाप्मनो दूरभूतत्वात् दूर्नाम प्राप्तवानहम् ॥ १३ ॥
वागादिदेवताभ्योऽहं पाप्मानमपहृत्य ताः ॥

---

*स्थूलस्येत्यादिना । एवमुपास्तिभेदं प्रदर्श्य प्राणोपास्तिक्रमं वक्तुमुपक्रमते * मुख्यमित्यादिना । वागादेर्विषयासङ्गादशुद्धिः मुख्यप्राणस्य शुद्ध्यादिगुणाश्चाक्षरव्याख्यानावसरे स्पष्टं वक्ष्यन्ते ॥७॥८॥९॥१०॥११॥ नामत्रयवाच्यत्वेन रूपत्रयमुपपाद्य स्वस्मिन्नयास्यादिनाम्नां प्रवृत्तौ श्रुत्युक्तं निमित्तमाह * अयमित्यादिना । इदं च स्पष्टं वक्ष्यते । अग्न्यादिदेवैरन्विष्टः सर्वेषां मुखबिलवर्ती प्राणस्तैरयमास्येऽन्तरित्युक्तत्वेनायास्यनामत्वम्, अङ्गानां रसत्वादाङ्गिरसत्वं, पापलक्षणमृत्योर्दूरीकरणाद् दूर्नामत्वमित्यर्थः ॥ १२ ॥ १३ ॥ सा वा एषा देवता एतासां देवतानां पाप्मानं मृत्युमपहत्येत्यादिश्रुत्यर्थमाह * वागादी-

अग्न्यादिभावमनयं ते यथायथमासते ॥ १४ ॥
मदर्थमन्नं सम्पाद्य तद् भुञ्जे तेन देवताः ॥
वागादयो मदात्मानस्तृप्यन्त्वहमिवेतराः ॥ १५ ॥
भर्ता श्रेष्ठः पुरो गन्ता ह्यन्नादोऽस्मि तथाऽधिपः ॥
ऋग्यजुःसामरूपोऽहं सा चामश्चेति साम तत् ॥१६॥
सेति वाचोऽभिधानं स्यादमः प्राणाभिधा तथा ॥
सामेत्युभयमत्रोक्तं समत्वाद्वाऽथ साम तत् ॥ १७ ॥
पुत्तिका मशको नागो विराट् सूत्रामितीरिताः ॥
ये देहास्तैः समोऽहं स्यां लिङ्गेनैषां प्रपूरणात् ॥ १८ ॥
उद्गीथोऽहं प्राण उत् स्याद्वाग्गीथाऽहं द्व्यात्मकः ॥
प्राणप्रधानया वाचा करोम्यौद्गात्रमध्वरे ॥ १९ ॥
साम्नो मम धनं कण्ठमाधुर्यं वर्णसौष्ठवम् ॥

---

ति ॥ १४ ॥ आत्मनेऽन्नाद्यमागायदित्यादेरर्थमाह*मदर्थमिति ॥ १५ ॥ भर्ता स्वानां श्रेष्ठ इत्यादेरर्थमाह *भर्त्तेति । एष उ एव बृहस्पतिरित्याद्यर्थमाह *ऋगिति । एष उ एव सामेति सामपदं व्याचष्टे *सा चेति । सेत्येतस्य वागभिधायकत्वे अमशब्दस्य प्राणवाचकत्वे कथं प्राणस्य समस्तसामशब्दवाच्यत्वमित्याशङ्क्य वागुपसर्जनः प्राणः सामशब्दित इत्याह*सामेत्युभयमिति । सर्वशरीरेषु समत्वेन वर्त्तमानत्वाद्वा सामत्वं प्राणस्येत्याह *समत्वादिति ॥१६॥१७॥१८॥ उद्गीथशब्दार्थमाह *उद्गीथ इति । प्राणस्योच्छब्दमात्रवाच्यत्वेऽपि गीथाशब्दार्थस्य वाचस्तस्मिन्नुपसर्जनतया सम्बन्धाद्वागुपसर्जनप्राण उद्गीथशब्दित इत्याह *प्राणेति ॥ १९ ॥ तस्य स्वर एव स्वमित्यादिश्रुत्यर्थमाह *साम्न इति ॥ तस्य वागेव प्रतिष्ठेत्यादेरर्थमाह

सुवर्णं मे, प्रतिष्ठा तु वाग्देहो वा भवेदिह ॥ २० ॥
अभ्यारोहजपस्याहं देवता प्राणविग्रहः ॥
इत्युपासीन एवेममभ्यारोहं जपेत्पुनः ॥ २१ ॥
इत्युपास्तिप्रकारोऽयं यथावदिह वर्णितः ॥
प्रधानगुणभेदेन फलमत्र विभज्यते ॥ २२ ॥
ऐहिकामुष्मिकत्वाभ्यां प्रधानस्य फलं द्विधा ॥
तदभ्यारोहमन्त्रेषु द्वाभ्यामादौ प्रदर्शितम् ॥ २३ ॥
प्राणात्मत्वाभिमानेन साक्षात्कारोऽयमैहिकः ॥
स आसुरासङ्गपापनाशे भवति नान्यथा ॥ २४ ॥
लोष्टः पाषाणभेदाय क्षिप्तश्चूर्णी भवेद्यथा ॥
नश्येदासुरपाप्मैवं प्राणोपासनशालिनः ॥ २५ ॥
उपासनविरोधिन्यो रागाद्याश्चित्तवृत्तयः ॥
आसुर्यो दूरतो यान्ति दूर्नामप्राणचिन्तनात् ॥ २६ ॥

---

*प्रतिष्ठा त्विति ॥ २० ॥ असतो मा सद् गमयेत्यादिमन्त्रप्रकाश्या प्राणदेवतेत्याह *अभ्यारोहेति । प्राणोपास्त्युक्तमन्त्रजपं समुच्चिनोति *अभ्यारोहमिति ॥ २१ ॥ २२ ॥ प्रथमं प्रधानफलं तावद्विभजते *ऐहिकेति । फलद्वैविध्ये मानमाह *तदभ्यारोहेति । असतो मा सदित्यादिवक्ष्यमाणमन्त्रत्रयेष्वाद्यद्वितीयाभ्यां क्रमेण फलद्वयं दर्शितमित्यर्थः ॥ २३ ॥ किं तदैहिकं फलं ? तदाह * प्राणेति । उक्तफले प्रयोजकं दर्शयन् न केवलं साक्षात्कारः फलं किन्तु तत्प्रयोजकः प्रतिबन्धविरहोऽपीत्याह * स इत्यादिना ॥ २४ ॥ २५ ॥ कोऽसावसुरपाप्मेति तत्राह * उपासनेति । एवं च प्राणस्य दूर्नामचिन्तनं प्रधानफले हेतुत्वान्न गुणोपासनमित्युक्तं भवति ॥२६॥ननु स्वाभिमतवस्तुध्यानेनापि इतरनिवृत्तिसम्भवान्न

नैरन्तर्यप्रवृत्तेषु ध्यानेष्वन्येष्वपि क्षयः ॥
कामादेरस्तथाऽप्यत्र त्वरा स्यात्प्राणवीर्यतः ॥२७॥
आध्यात्मिकपरिच्छेदं मृत्युं वागादिदेवताः ॥
तीर्त्वा वह्न्यादिभावेन ध्याननिष्ठस्य भान्त्यमूः॥२८॥
अहं मनुष्य इत्येतद्भावं त्यक्त्वाऽथ चिन्तकः ॥
हिरण्यगर्भ एवास्मीत्यात्मानमभिमन्यते ॥ २९ ॥
आध्यात्मिकपरिच्छेदः प्राकृतज्ञानहेतुकः ॥
युक्तोऽस्य बाधः शास्त्रीयाद्देवतात्माभिमानतः ॥३०॥
जीवाविष्ट उपास्योऽत्र देवताविग्रहः सदा ॥
प्राणो हिरण्यगर्भात्मा यावत्तदभिमानता ॥ ३१ ॥
भावनोपचयाज्जह्यात्परिच्छेदं स्वमासुरम् ॥
न सकृत्प्राणविज्ञानमात्रेण ब्रह्मबोधवत् ॥ ३२ ॥

---

तस्य प्राणचिन्तनमात्रफलत्वमित्याशङ्क्य श्रुतिप्रामाण्यात्प्राणचिन्तकस्य कामादिक्षयस्तूर्णमेव भवतीति विशेषमाह *नैरन्तर्येति ॥२७॥ऐहिकफलं साक्षात्कार इत्युक्तं, तस्य लक्षणमाह* आध्यात्मिकेति द्वाभ्याम् ॥ २८॥ २९ ॥ नन्वहं मनुष्य इति परिच्छिन्नत्वाभिमानस्य कथमपरिच्छिन्नत्वभावनया बाधः वैपरीत्यसम्भवादिति तत्राह *आध्यात्मिकेति । प्राकृतज्ञानं प्रकृतिशब्दवाच्यमायाजन्यमिथ्याज्ञानम् ॥ ३० ॥ प्राणस्योपास्यत्वमुक्तं तस्य कथं हिरण्यगर्भतादात्म्याभिमानः फलत्वेनोच्यते तत्क्रतुन्यायविरोधादित्याशङ्क्य प्रकृते प्राणशब्दस्य विवक्षितार्थमाह * जीवेति । उपास्तेरवधिं पूर्वोक्तं स्मारयति * यावदिति ॥ ३१ ॥ शास्त्रीयज्ञानस्य बलवत्त्वे हिरण्यगर्भोऽहमिति सकृत्प्रत्ययेनापि परिच्छिन्नभ्रमो निवर्त्तेतेत्याशङ्क्य नेत्याह * भावनेति । तत्र व्यतिरेकदृष्टान्तमाह * ब्रह्मेति ॥ ३२ ॥

भावनातोऽन्यदेवात्मसाक्षात्कारादयं पुमान् ॥
देवो भूत्वेह तच्चित्तो मृत्वा देवोऽभिजायते ॥ ३३ ॥
ब्रह्मैव सन् वस्तुतः स्यादब्रह्माज्ञानमात्रतः ॥
ज्ञानादज्ञानमुच्छिन्द्याद्भावना तत्र नार्थ्यते ॥ ३४ ॥
हिरण्यगर्भता पूर्वमसती भावनाबलात् ॥
लब्धव्या तेन तद्भावाभिमानो ध्यानजो मतः ॥ ३५ ॥
देवात्मत्वाभिमानो यः स साक्षात्कार ऐहिकः ॥
आद्याभ्यारोहमन्त्रेण प्रार्थ्यते फलरूपतः ॥ ३६ ॥
हिरण्यगर्भरूपत्वं स्वस्यैवामुष्मिकं फलम् ॥
प्रार्थ्यं द्वितीयमन्त्रेण तृतीयेनोभयं पुनः ॥ ३७ ॥
सायुज्यमपि सालोक्यं स्याद् द्विधाऽऽमुष्मिकं फलम्॥
भावनाया विचित्रत्वाद् द्वयं पुरुषभेदतः ॥ ३८ ॥
मनुष्यत्वव्यवहृतेर्यावत्स्यात् दृढविस्मृतिः ॥
तावच्चेद्भावनां कुर्यात्तदा सायुज्यमाप्नुयात् ॥ ३९ ॥

---

उक्तेऽर्थे हेतुमाह * भावनात इति । अन्यात्मनोऽन्यं प्रत्यतीन्द्रियत्वात्तत्ताद्दात्म्याभिमानलक्षणसाक्षात्कारस्य दीर्घकालभावनां विना दुःसम्पादत्वात् तयैव तत्सम्पाद्य तथैव आमृति धारयन्नन्ते तत्सायुज्यं गच्छतीत्यर्थः ॥३३॥ ब्रह्मबोधवदित्युक्तदृष्टान्तं स्पष्टयति *ब्रह्मेति ॥३४॥ दार्ष्टान्तिके तद्वैषम्यमाह *हिरण्येति ॥३५॥ ऐहिकफलमुक्तमुपसंहरति *देवेति । साक्षात्कारस्य सुखदुःखाभावविलक्षणस्य कथं फलत्वमित्याशङ्क्य सुखसाधनस्यापि पुम्भिरर्थ्यमानत्वात्फलत्वमस्तीत्याह *आद्येति ॥ ३६ ॥ हिरण्यगर्भप्राप्तिरामुष्मिकफलमित्याह *हिरण्येति ॥ ३७ ॥ अभ्यारोहमन्त्रप्रार्थ्यं फलमुक्त्वा पुनरप्यामुष्मिकफलतत्साधनभेदानाह * सायुज्यमित्यादिना ॥ ३८ ॥ ३९ ॥

देवात्मतायाः प्राचुर्यं मर्त्यत्वं च कदाचन ॥
भाति चेत्तर्हि सालोक्यं तदप्येवमनेकधा ॥ ४० ॥
हिरण्यगर्भो यः पूर्वः सायुज्यं तत्प्रवेशनम् ॥
सत्यलोकप्रवेशस्तु सालोक्यमिति कथ्यते ॥ ४१ ॥
सारूप्यसार्ष्टिसामिप्यभेदा अन्तर्भवन्ति हि ॥
सालोक्य एव तत्रापि यथाध्यानं फलं मतम् ॥४२॥
हिरण्यगर्भो भूयासं भाविसृष्टौ जगत्सृजन् ॥
इति सङ्कल्पयुक्तश्चेत्तथैव भवति ध्रुवम् ॥ ४३ ॥
इत्थमुक्तं मुख्यफलं गुणानां फलमुच्यते ॥
न दूर्गुणफलं पापदूरत्वं तस्य मुख्यतः ॥ ४४ ॥
वागादिपोषकत्वं यत्प्राणस्य तदुपासनात् ॥
ज्ञातीनां पोषको भूत्वा श्रैष्ठ्यादिगुणवान्भवेत् ॥४५॥
अस्य वैरी स्वपोष्याणां पोषणाय न शक्नुयात् ॥
अस्य शिष्यश्च भक्तश्च शक्नुतां ज्ञातिपोषणे ॥४६॥
स्वसुवर्णप्रतिष्ठानध्यानात्स्वादिफलं भवेत् ॥

---

॥ ४० ॥ सायुज्यादिलक्षणमाह * हिरण्यगर्भ इत्यादिना । सार्ष्टिः—समानैश्वर्यम् ॥ ४१ ॥ ४२॥ उक्तोपासनस्यैव सङ्कल्पानुरोधात्साक्षाद्धिरण्यगर्भत्वमपि फलमित्याह *हिरण्येति । *न दूरिति । साक्षात्कारहेतुत्वात्पापनिवृत्तेस्तत्फलकं दूर्नामध्यानं न गुणोपासनमित्यर्थः ॥ ४३ ॥ ४४ ॥ प्राणस्य वागिन्द्रियपोषकत्वं नाम कश्चिद् गुणः तच्चिन्तनफलमाह *वागित्यादिना ॥ ४५ ॥ ४६ ॥ साम्नो मम धनमित्यादिपूर्वोक्तगुणत्रयध्यानफलमाह *स्वसुवर्णेति । यद्यपि गुणोपास्तिं विनापि प्रधानफलं सिध्यति तथापि प्रधानोपास्तौ तीव्रश्रद्धोत्पादकत्वादेतदपि कर्तव्यमेवेत्याह *एतैरित्यादि-

एतैर्गुणफलैर्मुख्ये फले विश्वास उद्भवेत् ॥ ४७ ॥
मुख्यात्फलं चिरेण स्यादचिरेण गुणात्फलम् ॥
अतो गुणफले दृष्टे पुंसः श्रद्धा विवर्द्धते ॥ ४८ ॥
गुणमुख्यफले उक्ते फलभागथ चिन्त्यते ॥
कर्म्यैव फलभागत्र कर्मकाले विधानतः ॥ ४९ ॥
प्रस्तोता प्रस्तुयात्साम यस्मिन्काले तदा जपः ॥
कार्योऽभ्यारोह उद्गात्रा स च प्राणविदीरितः ॥५०॥
एष एवंविदुद्गाता यं कामं कामयेत तम् ॥
स्वार्थं वा यजमानार्थं सम्पादयति सर्वथा ॥ ५१ ॥
इति श्रुतेरन्यतरो यजमानर्त्विजोः फलम् ॥
परकर्मप्रवेशो ऽपि वचनादृत्विजः फलम् ? ॥ ५२ ॥
तस्मात्स्यादेवभावाप्तिर्ज्ञानकर्मसमुच्चयात् ॥
कर्महीने तु विदुषि स्यान्न वेत्यत्र शङ्क्यते ॥ ५३ ॥

---

ना ॥४७॥४८॥ *फलभागिति । उपासनादेरुद्गातृकर्तृकत्वात् कर्मणो याजमानत्वाद्देवभावः कस्येति विचार्यते इत्यर्थः ॥ उद्गातुर्यजमानेन क्रीतत्वात्तज्ज्ञानेन ज्ञानी यजमानः अतस्तस्य समुच्चयाद्देवभावावाप्तिरित्याह *कर्मीति ॥ ४९ ॥ कर्मकाले विहितत्वमेव दर्शयति *प्रस्तोतेति । एष एवंविदुद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तदागायतीति श्रुत्या प्राणविद एवोद्गातृत्वमुक्त्वा तस्य स्वार्थमप्यागानविधानादृत्विजो यजमानस्य वा गुणफलमित्याह *स चेत्यादिना ॥ ५० ॥ यजमानेन क्रीतस्यापि ऋत्विजो वचनात्फलभाक्त्वं युक्तमित्याह *परेति ॥ ५१ ॥ ५२ ॥ *शङ्क्यत इति । फलस्य समुच्चयहेतुकत्वश्रवणादिति भावः ॥५३॥ तदे-

---

१ प्राप्नुयादिति शेषः ।

तदेतत्प्राणविज्ञानं कर्महीनमपि ध्रुवम् ॥
स्वफलप्रदमेवेति श्रुत्या शङ्का निवार्यते ॥ ५४ ॥
इहैवासुरभावस्य प्राणोऽस्मीत्यभिमानतः ॥
प्रध्वस्तत्वात्कुतः शङ्का भवेद्धेतुविवर्जनात् ॥ ५५ ॥
मनुष्योऽस्मीति धीर्यस्य भवेदासुरपाप्मतः ॥
तन्मूलात्तस्य शङ्का स्यात्सत्यप्यस्मिन्समुच्चये ॥५६॥
न च धीजन्ममात्रेण परमात्मप्रबोधवत् ॥
सम्भाव्यो देवभावोऽस्य देवो भूत्वेति संश्रयात्॥५७॥
इहैव देवो भूत्वाऽसौ भावनोपचयादथ ॥
मृत्वा देवानवाप्नोतीत्याह न्यायेन वेदवाक् ॥ ५८ ॥
न्याय आसुरनाशाख्यः स च साक्षात्कृतेर्भवेत् ॥
साक्षात्कृतिः स्यात्सन्तत्या सन्ततिश्च न कर्मिणः॥५९॥
समुच्चयाद्देवभाव आगमादेव निश्चितः ॥

---

तदित्यस्य श्रुत्येत्यनेन सम्बन्धः । तद्धैतल्लोकजिदेवेतिश्रुतेरित्यर्थः ॥ ५४ ॥ न्यायतोऽपि केवलप्राणविज्ञानस्य फलप्रदत्वशङ्का न भवतीत्याह *इहैवेति ॥५५॥ प्रत्युत समुच्चयात्फलमिति मतमेवोक्तन्यायविरोधाच्छङ्कास्पदमित्याह । *मनुष्य इति । प्राणदर्शनस्याभ्यारोहजपेन समुच्चयेऽङ्गीकृते सति ज्ञानसन्तत्ययोगादासुरस्य परिच्छेदाभिमानस्यानिवृत्तत्वाद्देवभावशङ्का स्यादिति भावः ॥ ५६ ॥ ननु सकृत्प्रत्ययादेव ब्रह्मभाववद्देवभावोऽप्यस्त्विति नेत्याह *न चेत्यादिना ॥ ५७ ॥ ॥ ५८ ॥ ५९ ॥ तर्हि समुच्चयान्न देवभावः स्यादित्याशङ्क्य वचनेन न्यायबाध इत्याह *समुच्चयादिति । फलितमाह *अत इति । अस्य समुच्चयानुष्ठायिनः शङ्क्यमानो देवभाव

अतोऽस्य शङ्क्यमानोऽपि न शङ्क्यः प्राणदर्शिनः॥६०॥
यस्तु कर्मजविक्षेपं सोढ्वा प्राणात्मभावदृक् ॥
तस्याप्यशङ्कितोपास्तिबलादेव न कर्मणः ॥ ६१ ॥
कर्मकाले चिन्तयतो देवावाप्तिः समुच्चयात् ॥
निरन्तरं चिन्तयत इहैव प्राणरूपता ॥ ६२ ॥
उपासकप्रयोज्यत्वादभ्यारोहजपो न तु ॥
सूत्रितः कल्पसूत्रेषु विद्याप्रकरणोक्तितः ॥ ६३ ॥
ज्ञानकर्मसमुच्चेतुर्जप आवश्यको मतः ॥
प्राणात्मदर्शनेनैव नियम्येतोर्ध्वरेतसः ॥ ६४ ॥
ध्यानं फलं फली चेति त्रय इत्थं निरूपिताः ॥
सुस्थितं विधितात्पर्यमर्थवादो निरूप्यते ॥ ६५ ॥

---

इत्यनुषङ्गः ॥ ६० ॥ केवलप्राणदर्शिनः फलशङ्का नेत्युक्तं तदेव दर्शयति *य इति । तस्यापि ज्ञानकर्मसमुच्चेतुरपि देवभावाप्तिरुपास्तिबलादेवाशङ्कितेत्यर्थः । अयमाशयः—समुच्चयपक्षे जायमानाऽपि शङ्का उपास्त्या देवभावाप्तिरस्ति उत कर्मविक्षेपाज्ज्ञानासन्तत्या न वेत्येव जायते । एवञ्च निरन्तरप्राणचिन्तकस्य फलशङ्कालेशोऽपि नास्ति शङ्कैककोटिप्रविष्टदेवभावाप्तेर्ज्ञानफलवत्त्वस्योभयवादिसिद्धत्वादिति ॥ ६१ ॥ तस्मादागमप्रामाण्यात्पक्षद्वयमप्यादेयमित्याह *कर्मेति ॥ ६२ ॥ ननु मन्त्रजपस्य न फलहेतुत्वं तत्सूत्रयद्भिरापस्तम्बादिभिरसूत्रितत्वात् तत्राह *उपासकेति ॥ ६३ ॥ विद्याप्रकरणपठितस्य मन्त्रस्य प्राणवित्प्रयोज्यत्वेन नित्यकर्मवदसूत्रितत्वेऽपि गृहस्थेन स जप्तव्य इत्याह * ज्ञानेति । इतराश्रमाणां प्राणदर्शनमेव फलहेतुरित्याह *प्राणेति ॥ ६४ ॥ ६५ ॥ अर्थवादसमुदायार्थमाह *देवेति ।

देवासुराख्यायिकया प्राणशुद्धिः परीक्ष्यते ॥

श्रुतिः ॥ द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्द्धन्त ते ह देवा ऊचुः हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ॥ १

सात्त्विक्यो वृत्तयो देवास्तामस्योऽसुरसंज्ञकाः ॥६६॥
प्रजापतित्वप्राप्त्यर्थमुपासीनस्य वृत्तयः ॥
बागादिजन्या द्विविधास्तत्राल्पा एव देवताः॥६७॥
दैवं वृत्तं यत्नसाध्यमासुरं सहजं ततः ॥
देवाः कियन्त एव स्युरनन्ता असुरा नृणाम् ॥६८ ॥
ब्रह्मादिस्तम्बपर्यन्तलोकेष्वेनमुपासकम् ॥
यथायथं नयामेति ते ऽस्पर्द्धन्त परस्परम् ॥ ६९ ॥
अधोलोकफलेष्वेव प्राकृतासङ्गकर्मसु ॥

---

द्वयाः द्विप्रकाराः । वर्त्तमानप्रजापतेः पूर्वजन्मनि यद्वृत्तं तद्वद्योतको हशब्दः । प्रजापतेर्यजमानावस्थस्यापत्यानि प्राजापत्या इत्यक्षरार्थः ।

देवासुरशब्दयोरत्र विवक्षितमर्थमाह *सात्त्विक्य इत्यादिना ॥ ६६ ॥ ततः कानीयसा इत्यादेरर्थमाह *तत्रेति । तत इत्यस्य व्याख्या *तत्रेति ॥ तयोर्मध्ये इत्यर्थः ॥ ६७ ॥ देवानामल्पत्वेऽसुराणां बहुत्वे च हेतुमाह *दैवमिति । देवताध्यानादिसात्त्विकवृत्तीनामल्पत्वं कामादीनां बाहुल्यं च सर्वप्राणिषु दृष्टमित्यर्थः ॥ ६८ ॥ एतेषु लोकेष्वस्पर्द्धन्तेत्यस्यापेक्षितं पूरयन्नर्थमाह *ब्रह्मादीति ॥ ६९ ॥ यथायथमित्येतत्स्पष्टयन्नसुराणां देवैः स्पर्द्धां कुर्वतामाशयमाह *अधोलोकेति *प्राकृतेति । स्वाभाविकेषु दृष्टप्रयोजन-

यज्ञादासञ्जनीयोऽयं पितेत्यासुरनिश्चयः ॥ ७० ॥
प्राकृतासङ्गहानेन पिताऽयं देवसाधनैः ॥
उत्कृष्टव्यो यथाशक्तीत्येवं देवचिकीर्षितम् ॥ ७१ ॥
यद्यप्यचेतनत्वेन न स्पर्द्धेन्द्रियवृत्तिषु ॥
अथापि तासां साकल्याद्देवानां वाऽभिमानिनाम् ॥७२॥
यदोद्भवति शास्त्रोत्था दैवी वृत्तिरथासुरम् ॥
बलं नश्यत्यशेषेण स देवानां जयो भवेत् ॥ ७३ ॥
आसुरी तु यदा सेना कामक्रोधपुरःसरा ॥
जृम्भतेऽथ जयं प्रापुरसुरा देवनाशतः ॥ ७४ ॥
स्वाभाविकत्वादासुर्या भूयस्या सेनयाऽर्दिताः ॥
देवा असुरविध्वंसहेतुं बुद्ध्या व्यचारयन् ॥ ७५ ॥
उपास्योद्गानकर्त्तारं जेष्यामो निखिलासुरान् ॥

---

कर्मस्वित्यर्थः । पिता यजमानः ॥ ७० ॥ सुराणामाशयमाह *प्राकृतेति । देवसाधनैः शास्त्रीयज्ञानकर्मभिः ॥ ७१ ॥ अचेतनवृत्तीनां कथं स्पर्द्धेत्याशङ्क्य स्पर्द्धाशब्दार्थमाह *यद्यपीति *साकल्यादिति । उद्भवाभिभवात्स्पर्द्धेत्युपचर्यत इत्यर्थः । पक्षान्तरमाह *देवानामिति । वागादिजन्यवृत्तिशब्देन वागाद्यभिमानिन्यो देवता लक्ष्यन्त इत्यर्थः ॥ ७२ ॥ श्रेयस्कामैर्देवानां जये पराजये चासुराणां यतितव्यमित्यभिप्रेत्य तयोर्जयपराजयस्वरूपमाह *यदेत्यादिना ॥ ७३ ॥ ७४ ॥ अस्पर्द्धन्तेत्येतदन्तवाक्यार्थमनूद्य ते देवा इत्यादेरर्थमाह *स्वाभाविकत्वादिति ॥ ७५ ॥

ते देवा दैतेयैरभिभूयमाना ह किल ऊचुः परस्परं समालोचयन्नित्यर्थः ।

हन्तेत्यादेरर्थमाह * उपास्येति ।

हन्त इदानीमस्मिन्यज्ञे ज्योतिष्टोमे उद्गीथेनौद्गात्र-

श्रुतिः-ते ह वाचमूचुस्त्वन्न उद्गायेति तथेति तेभ्यो वागुदगायद्यो वाचि भोगस्तं देवेभ्यो आगायद्यत् कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मना ऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

इति मत्वा वाचमादौ कर्तृत्वेनात्र वव्रिरे ॥ ७६ ॥
यत्तु लोकेऽत्र कर्तृत्वं वागादिद्वारमात्मनः ॥
ईक्ष्यते तदविद्योत्थं निरविद्ये निषेधतः ॥ ७७ ॥
जीवस्य तमसैवेह देहाद्यनुविधानतः ॥

---

कर्मणा उद्गातुः सकाशात्खलु यजमानः स्वाभिलषितं प्राप्नोति, आत्मने यजमानाय वा यं कामं कामयते तमागायतीति श्रुतेः । एवं यजमानस्थानीयाः करणदेवता उद्गातारमाश्रित्यात्ययाम परिच्छेदाभिमानं हित्वा स्वं स्वं देवभावं प्रतिपद्येमहीत्यालोचयन्निति पूर्वेण सम्बन्धः ॥ १ ॥

ते ह वाचमित्यादेरर्थमाह *इति मत्वेति । वाचं वागभिमानिनीं देवतां नोऽस्मभ्यम् उदगाय औद्गात्रं कर्म कुर्वित्युद्गातृत्वेन वरयामासुरित्यर्थः ॥७६॥ ते ह वाचामित्याद्यर्थवादस्य वागादिगतत्वेन सर्वव्यवहारं वदतस्तात्पर्यमाह *यत्त्विति । प्रतीयमानं कर्तृत्वादि जाग्रत्सुप्त्योरन्वयव्यतिरेकाभ्यां वागाद्युपाधिकं, स्वतस्तस्य नित्यमुक्ते परस्मिन्नयोगादित्यर्थः ॥७७॥ तत्र तदभावेऽपि जीवे दृष्टत्वात्तदेष्टव्यमित्याशङ्क्येष्टापत्तिरित्याह *जीवस्येति । अविद्यया बुद्ध्यादिचेष्टाऽनुसारित्वाद्युक्ता तत्र कर्तृत्वादिधीरित्यर्थः । तर्हि कर्तृत्वादिमानेकः तद्राहितोऽन्य इति द्वैतमाशङ्क्याह *कूटस्थेति । परस्मिन्नेव प्रतीचि विशिष्टद्वारा

कूटस्थात्मातिरेकेण रूपमन्यन्न लभ्यते ॥ ७८ ॥
वाक्कर्तृत्वमतः सिद्धमुदगायदियं च वाक् ॥
कल्याणोच्चारणं कीर्त्तिर्द्वयमुद्गानतो भवेत् ॥ ७९ ॥
कीर्त्तिं निखिलदेवेभ्यो दत्त्वा कल्याणभाषणम् ॥
स्वार्थं जग्राह तत्सर्वमविदन्नसुरास्तदा ॥ ८० ॥
उद्गातारमुपास्यैनं देवाः कल्याणवादिनम् ॥
जेष्यन्त्यस्मानिति भयादविध्यन्नसुरा अमुम् ॥८१॥
आसङ्गशस्त्रविद्धेयं वाक्कल्याणाभिमानभाक् ॥

---

स्वाविद्यारोपितं कर्तृत्वादिकमित्युक्तमिति भावः ॥ ७८ ॥

अर्थवादरूपाख्यायिकातात्पर्यमुक्त्वा तेभ्यो वागुदगायदित्यस्यार्थमाह *उदगायदिति । यो वाचि भोग इत्यादेरर्थमाह * कल्याणेत्यादिना । कल्याणवदनं नाम व्याकरणादिशास्त्रोक्तप्रकारेणोच्चारणसामर्थ्यम् । उच्चारणक्रियया यः सर्वकरणानामुपकारः स वाचि भोगः स एव कीर्त्तिरित्युच्यते ॥ ७९ ॥ ज्योतिष्टोमे द्वादश स्तोत्राणि । तत्र पवमानाख्येषु त्रिषु याजमानमुद्गानं, कर्मफलस्योत्सर्गतो यजमानगामित्वात् । परिशिष्टेषु नवसु स्तोत्रेष्वार्त्विज्यमुद्गानम्, उद्गातुः फलसम्बन्धस्यात्मनेऽन्नाद्यमागायदिति वाचनिकत्वात् । वाग्देवता चोद्गात्री यजमानस्थानीयेभ्य इतरदेवेभ्यः कीर्तिं दत्त्वा कल्याणवदनं स्वस्य गृहीतवतीत्यर्थः । ते ह विदुरित्यादेरर्थमाह *तत्सर्वमित्यादिना । उद्गातारमागम्य स्वेनासङ्गलक्षणपाप्मना संयोजितवन्त इत्यर्थः ॥ ८० ॥ ८१ ॥ असुरासङ्गग्रस्तानां वैदिकज्ञानकर्मभ्यो वैमुख्यं स्यादित्यभिप्रेत्य स यः स पाप्मेत्यस्यार्थमाह * आसङ्गेति । आसङ्गशस्त्रवेधोऽपि वाचः कल्याणवदनस्य स्वीयत्वेन

असभ्यानृतबीभत्सायुक्तं वक्त्यवशा सती ॥ ८२ ॥
पूर्वजन्मन्यभूदेतद्वर्त्तमानप्रजापतेः ॥
अतस्तत्सृष्टजीवानां वाचि दोषोऽयमीक्ष्यते ॥ ८३ ॥

श्रुतिः-अथ ह प्राणमूचुस्त्वं न उद्गायेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥ अथ ह चक्षुरूचुस्त्वन्न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायद्यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन् स यः स पाप्मा यदेवमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥ अथ ह श्रो-

---

स्वीकृतत्वादित्याह *कल्याणेति ॥८२॥*पूर्वेति । पूर्वकल्पे यजमानावस्थस्य तत्सम्भवादिति भावः ॥ ८३ ॥ श्रुतौ स एव पाप्मेति । यः प्रजास्वसभ्यादिना पाप्मा दृष्टः यश्च तासां हेतुभूतसूत्रवाङ्गनिष्ठः स एव सः। तथा चाद्यसकाराभ्यां कारणस्थं पाप्मानमनूद्य तस्यैव कार्यत्वमुक्तम् । उत्तराभ्यां तु कार्यस्थं पाप्मानमनूद्य तस्यैव कारणस्थत्वमुच्यत इति ततो भेदः ॥२॥३॥ ॥ ४ ॥ ५ ॥ अथ ह प्राणमित्यादिपर्यायचतुष्टयस्य तात्पर्यमाह *क्रमेणेति । अत्र प्राणशब्दो घ्राणवचनः, जिघ्रतीति लिङ्गात् । *एवमु खल्विति । एवं वागादिदेवता अनुक्ता अपि त्वगादिदेवताः कल्याणाकल्याणस्पर्शनादिकार्यदर्शनात्पाप्मभिरुपासृजन् पापसंसर्गं कृतवन्तः इत्यर्थः ।

श्रमूचुः त्वन्न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ शृणोति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥ अथ ह मन ऊचुस्त्वन्न उद्गायेति तथेति तेभ्यो मन उदगायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणꣳ सङ्कल्पयति तदात्मने ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपꣳ सङ्कल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरुपासृजन्नेवमेनाः पाप्मनाऽविध्यन् ॥ ६ ॥

क्रमेणान्येन्द्रियाण्येवं विध्वा प्राणं मुखस्थितम् ॥
विव्यत्सन्तोऽसुरा नष्टाः पाषाणक्षिप्तलोष्टवत् ॥८४॥

---

मुख्यं प्राणं पृथगेव वक्तुम् असुरविद्धप्राणप्रकरणमुपसंहरति श्रुतिः *एवमेनाः पाप्मना ऽविध्यन्निति ॥६॥ एवं वागादिदेवताः क्रमेण परीक्ष्य कल्याणवदनाद्यासङ्गहेतोरासुरपाप्मसंसर्गेणोद्गीथादिनिर्वर्तनादनुपास्यत्वं निश्चित्य अथानन्तरं ह इममित्यभिनयदर्शनार्थम् । आसन्यम् आस्यमध्यगतं प्राणमुचुः त्वन्न इत्यादि पूर्ववत् ।

तमभिद्रुत्य पाप्मना विव्यत्सन्नित्यादेरर्थमाह वार्त्तिककारः *प्राणं मुखस्थितामित्यादिना । विव्यत्सन्तो व्यधनं कर्तुमिष्टवन्तः । दोषासंसर्गिणं मुख्यप्राणं स्वेनासङ्गदोषेण संयोक्तुमिच्छन्तो ऽसुराः स्वयमेव विनष्टाः ॥ ८४ ॥

श्रुतिः—अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत् ते विदुरनेनैवोद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविव्यत्सन् स यथाऽश्मानमृत्वा लोष्टो विध्वंसेतैवंहैव विध्वंसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् पराऽसुरा, भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

यदप्यन्नादनं देहधारणं चेति तद्द्वयम् ॥

---

तत्र दृष्टान्तमाह श्रुतिः *स यथेति । स दृष्टान्तो यथा स्पष्टं भवति तथोच्यत इत्यर्थः । अश्मानमृत्वा प्राप्य। विष्वञ्चो नानागतयः। तत आसुरविनाशाद्देवा वागादयोऽभवन् परिच्छेदाभिमाननिवृत्तौ शास्त्रोक्तं स्वंस्वमग्न्यादिभावमभजन्नित्यर्थः। किञ्च प्रतिपक्षभूता असुराः परा,अभवन्नित्यनुवर्त्तते। पराभूता नष्टाः । एवंविधप्राणचिन्तकस्य फलमाह *भवतीति । यथा पूर्वकल्पे कश्चिद्यजमानः सूत्रपदप्रेप्सुस्तामसवृत्तिभिरभिहन्यमानस्तन्निवृत्तये वागादिदेवताः परीक्ष्यासङ्गपाप्मदोषवत्त्वेन तासां जपमन्त्राप्रकाश्यत्वं प्राधान्येनानुपास्यत्वं च निश्चित्यादोषास्पदं मुख्यं प्राणमात्मत्वेनोपास्याध्यात्मिकपिण्डपरिच्छिन्नात्माभिमानं हित्वा वैराजं पदं प्राप्तः, एवमन्योऽपि यः कश्चिद्देद पूर्वयजमानवच्छुद्धं प्राणमुपास्ते स विराडात्मना भवति विराट्स्वरूपो भवतीत्यर्थः । किञ्च प्रजापतित्वप्रतिपक्षभूतासङ्गलक्षणपाप्मा भ्रातृव्यः पराभवति, लोके ऽद्वेष्टापि कश्चिच्छत्रुकुले जातो भ्रातृव्यो भवति, अयं तु पाप्मा सकलपुमर्थविघातकत्वाद्द्वेष्टा शत्रुरित्याह *द्विषन्निति । एवम्भूतपाप्मा नश्यतीत्यर्थः ॥७॥

मुख्यप्राणस्य शुद्धत्वेन जपमन्त्रप्रकाश्यत्वमुपास्यत्वं चासिद्धम्

मुख्यप्राणेन कर्तव्यं स्वार्थं स्यात्तथापि तत ॥८५॥
स्वार्थे आसङ्गविषयो नास्ति कश्चिदतोऽसुरैः ॥
अप्रधृष्या विशुद्धेयमभ्यारोहस्य देवता ॥ ८६ ॥

श्रुतिः-ते होचुः क नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ॥८॥

सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद ॥ ९ ॥ सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात् तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

उपास्यमाना सा देवैस्तत्पापं ध्यानवर्जिते ॥
जने तदीये देशे च न्याक्षिपत्तौ विवर्जयेत् ॥ ८७ ॥

श्रुतिः—सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युममपहत्याथैना मृत्युमत्यवहत् ॥ ११ ॥

स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमाग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

---

आत्मनेऽन्नाद्यमागायदित्यादिना ऽऽत्मार्थमागानेन वागादिवत्पाप्मवेधसम्भवादित्याशङ्क्याह *यद्यपीति द्वाभ्याम् ॥८५॥ ८६ ॥

उक्तस्यैव प्राणस्यायास्यत्वादिगुणान्विधातुमुपक्रमते श्रुतिः *ते होचुरित्यादिना । ते प्राप्ताग्न्यादिभावा वागादयो मुख्यं प्राणमूचुः । किमित्यत्राह *क न्विति । न इत्थम् असक्त आसञ्जितवान् देवभावं प्रापितवान् क नु कुत्राभूदिति । स्मरन्ति हि

अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥ १३ ॥

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सो ऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

---

लोके कृतोपकारिणं, तद्वत्स्मरन्तो वागादयः देह एव तं पश्यन्तः ऊचुः *अयमास्येऽन्तरिति। मुखाकाशमध्ये ऽयं प्रत्यक्षो वर्त्तत इति यावत्। यस्मादेवं देवैरुक्तस्तस्मात्प्राणः अयास्यनामा बभूवेत्यर्थः॥ नामान्तरमाह *आङ्गिरस इति। तत्र हेतुः *अङ्गानामिति। प्राणस्याङ्गिरसत्वं श्रुतिरेवोपपादयिष्यति ॥८॥ नामान्तरमाह *सेति। या प्रजापतिशरीरस्थाऽयमास्येन्तरिति देवैर्निर्धारिता सैवैषा देवता, देवतात्वं चास्या उपासनक्रियायाः कर्मभावेन गुणभूतत्वात्। अस्या दूरिति नामप्राप्तौ हेतुः *दूर ह्यस्या इति। अस्याः प्राणदेवतायाः मृत्युरासङ्गलक्षणपाप्मा दूरम् असंश्लेषाद् दूरभूत इत्यर्थः। एवं विदुषः फलमाह*दूरं ह वा इति ॥९॥ सा वा एषेत्युक्तार्थः। एतासां वागादीनाम्। मृत्युशब्दव्याख्या *पाप्मानमिति। अपहत्य यत्रासां प्राच्यादीनामन्तस्तत्र गमयाञ्चकार, तत्र गमयित्वा, आसां पाप्मन इति द्वितीयाबहुवचनम्। विन्यदधाद्विविधं स्थापितवती ॥

एतत्सर्वमभिप्रेत्याह। उपास्यमानेति। न जनमित्यादेरर्थमाह* तौ विवर्जयेदिति। श्रुतिस्मृत्याचाररहितं जनं नेयान्न गच्छेत्सम्भाषणादिभिर्न संसृज्येत तादृशजनाश्रितदेशं च न गच्छेदित्यर्थः ॥८७॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः॥१५॥

अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भात्येवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

एवं प्राणः स्वयं शुद्धः शुद्धं कुर्यादुपासकम् ॥
अतो वागादिकं त्यक्त्वा प्राणं ध्यायेत्प्रतर्पकम्॥ ८८॥

तद्गमने दोषमाह श्रुतिः *नेदिति। निपातः परिभवार्थे। तादृशजनसंसर्गेऽवश एव पाप्मानमन्ववायानि अनुगच्छेयमित्येवम्भीतो जनमन्तं च नेयादिति पूर्वेणान्वयः ॥१०॥ सा वा एषेत्यादि पूर्ववत्। अथोपासनानन्तरम् उपासकप्राणः एना वागादिदेवताः मृत्युमत्यवहत् भावनासामर्थ्यादुपासकोपाधिभूतवागादीनां परिच्छेदाभिमानलक्षणप्रतिबन्धं निरस्याग्न्यादिभावं नीतवानित्यर्थः॥११॥सामान्येनोक्तमर्थं विशिष्याह *स वै वाचमित्यादिना। स प्राणः प्रथमामुद्गाने प्रधानामित्यर्थः। सा वाग्यदा मृत्युमत्यमुच्यत मोचिता तदा स्वरूपभूतमग्निभावं प्राप्तः सोऽयमतिक्रान्तोऽग्निः परेण मृत्युं मृत्योः परस्ताद्दीप्यते। प्राणो वायुरभवत्स तु पवते। चक्षुरादित्योऽभवत्स तु तपति । श्रोत्रं दिशोऽभवन् दिशः प्राच्यादिविभागेन स्थिताः । मनश्चन्द्रमा भाति ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ एवं ह वा इत्यादेरर्थमाह *एवं प्राण इति ॥ ८८ ॥

य एवमुक्तवक्ष्यमाणगुणविशिष्टं प्राणं प्राधान्येन वेद आसाक्षात्कारमुपास्ते एनमुपासकम् एषा प्राणदेवता मृत्युमतिवहति, परिच्छेदाभिमानं निरस्य सर्वात्मत्वं प्रापयतीत्यक्षरार्थः ॥ १६ ॥ *अथेति । वागाद्युपाधिकस्य यज-

**श्रुतिः॥अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥**

ते देवा अब्रुवन्नेतावद्वा इदꣳसर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माऽभिसंविशतेति तथेति तꣳसमन्तं परिण्यविशन्त तस्माद्यदनेनान्नमत्ति॥
तर्पयत्येष वागादीन् स्वभुक्तान्नेन सर्वशः ॥

---

मानस्याभ्युदयार्थमागानं त्रिषु पवमानेषु कृत्वाऽप्यनन्तरमवशिष्टेषु नवस्तोत्रेष्वात्मनेऽन्नाद्यम् अन्नं चाद्यं च, अन्नशब्देन भोज्यसामान्यमुच्यते, आद्यशब्दः संस्कृतान्नपरः। आगानफलमार्त्विज्यं च वचनादित्युक्तम्। आत्मार्थमन्नाद्यं गीतमित्यत्र हेतुमाह*यद्धीति। हिः हेतौ। यस्माल्लोके प्राणिभिर्यत्किञ्चिदन्नसामान्यमद्यते तदनेन प्राणेन, अनशब्दः प्राणपर्यायः, प्राणेनैव तदद्यत इत्यर्थः। किञ्चेह शरीराकारपरिणतेऽन्ने प्रतितिष्ठति प्राणः तस्मात्प्राणेनात्मार्थमन्नाद्यं गीतामित्यर्थः ॥ १७ ॥ ननु प्राणेनैव तदद्यत इत्यवधारणमयुक्तं, वागादीनामप्यन्ननिमित्तोपकारदर्शनादित्याशङ्क्य तदुपकारस्यापि प्राणद्वारत्वं दर्शयति* ते देवा इत्यादिना। ते वागादयो देवा मुख्यप्राणमब्रुवन् यदिदं शरीरद्वयस्थितिकरमद्यते एतावदेवान्नं नान्यदस्ति तत्सर्वमात्मार्थमागासीरागीतवानासि गानेनात्मसात्कृतमित्यर्थः। वयं चान्नं विना स्थातुमशक्ताः, अतोऽनु पश्चादस्मानस्मिन् त्वदीयेऽन्ने आभजस्वास्मांश्चान्नभागिनः कुरु। आभाजयस्वेति वक्तव्ये णिचो लोपश्छान्दसः। प्राण आह ते यूयम् अन्नार्थिनो मामेवाभितः संविशतेति। एवमुक्तवति प्राणे तथेति तं प्राणं परि समन्तात् न्यविशन्त प्राणं परिवेष्ट्य निवि-

इत्यर्थस्य कुतः सिद्धिरिति चेदुच्यते शृणु ॥ ८९ ॥
भुक्तं त्रिधा भवत्यन्नं स्थूलमध्यमसूक्ष्मकैः ॥
भागैः स्थूलो बहिर्याति मध्यमाद्देहपोषणम् ॥ ९० ॥
अणीयान्सूक्ष्मनाडीस्थो देवताः पोषयत्ययम् ॥
पुष्टेन्द्रियैः सुखोत्पत्तिर्या जीवात्मन एव सा ॥ ९१ ॥
ता एता देवताः सप्तदश ज्ञानक्रियात्मकाः ॥
सोऽयं सप्तदशग्रामो भोक्तुः करणलक्षणः ॥ ९२ ॥
बुद्धीन्द्रियाणि पञ्चैव तथा कर्मेन्द्रियाण्यपि ॥
वायवः पञ्च बुद्धिश्च मनः सप्तदशं विदुः ॥ ९३ ॥
त्यक्तेऽपि स्थूलदेहेऽस्मिन्भूतपञ्चकमाश्रयः ॥

---

ष्टवन्त इत्यर्थः । त्यक्तप्राणस्यान्नेन वागादिस्थित्यनुपलब्धेः प्राणद्वारैव वागादेस्तृप्तिरित्युपसंहरति * तस्मादिति । अनेनानशब्दितप्राणेन यदन्नमत्ति लोकस्तेनान्नेन प्राणद्वारैता वागादयस्तृप्यन्ति ।

एतत्सर्वमभिप्रेत्याह * तर्पयतीति । नन्विदमयुक्तं, न हि चैत्रे भुक्तवति मैत्रस्तृप्यतीत्याशङ्क्य परिहरतीति । *अर्थस्येति ॥ ८९ ॥ भुक्तान्नभागानां प्रकृतोपयोगिविनियोगविशेषमाह *स्थूलो बहिर्यातीति । पुरीषत्वेनेति शेषः । *मध्यमादिति । त्वगादिक्रमेण स्थूलदेहपुष्टिर्भवतीत्यर्थः ॥ ९० ॥ देवताः वागादीन् । पुष्टिवत्तज्जन्यसुखस्यापीन्द्रियधर्मत्वशङ्कां निरस्यति *पुष्टेति ॥ ९१ ॥ अणिष्ठो रसो या देवताः पोषयति तासां स्वरूपमाह *ता इति । तासां स्वातन्त्र्यं वारयति * सोऽयमिति ॥ ९२ ॥ तमेव करणग्रामं परिगणयति *बुद्धीति ॥ ९३ ॥ अस्य लिङ्गदेहस्य स्थूलदेहस्थत्वात्तन्नाशे निराश्रयस्यानवस्थानात् मुक्तिरित्याशङ्क्य सूक्ष्मावस्थस्य पञ्चीकृत-

लिङ्गं सप्तदशग्रामं प्राहुः पञ्चकसंयुतम् ॥ ९४ ॥
पयोम्भोवदिदं लिङ्गं नानारूपैः समन्वितम् ॥
आविर्भावतिरोभावैः कारणात्मनि वर्त्तते ॥ ९५ ॥
एकीभूते क्षीरनीरे यथा ज्ञानक्रिये तथा ॥
एकीभूते स्थिते लिङ्गे रूपेणानेकशक्तिके ॥ ९६ ॥
यथा वा धेनुभिः पीतं नीरं क्षीरीभवेत्तथा ॥
साभासमोहश्चिन्निष्ठो लिङ्गीभूयावभासते ॥ ९७ ॥
आविर्भावतिरोभावौ बहुशः पटचित्रवत् ॥
पटे विकाससङ्कोचाविव बोधसुषुप्तके ॥ ९८ ॥
कूटस्थबोधतन्मोहचिदाभासत्रयात्मना ॥
सङ्कोच्य जागरस्वप्नौ लिङ्गं सुप्तौ तिरोभवेत् ॥ ९९ ॥

---

भूतस्यैव तदाश्रयत्वान्नैवमित्याह *त्यक्त इति । " तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः " ( ३-१-१ ) इति सूत्रे भाष्यकारैरेवमेवोक्तमित्याह * लिङ्गमिति ॥ ९४ ॥ लिङ्गदेहस्य मूलकारणमाश्रय इति पक्षान्तरमाह *पयोम्भोवदिति । यथा पयसोऽम्भसश्च दध्यादिना हिमादिना च नानारूपत्वमेवं समष्टिव्यष्ट्यात्मकनानाविधाकारोपेतं लिङ्गमपि मूलकारणे तिष्ठतीत्यर्थः ॥ ९५ ॥ आविर्भावतिरोभावैरित्युक्तं, तत्र तिरोभावं दृष्टान्तेन स्पष्टयति *एकीभूत इति । लिङ्गात्मके ज्ञानक्रिये क्षीरनीरवदेकीभूयानेकशक्तिके मूलकारणे स्वरूपेण कारणात्मना स्थिते यदा तदा तिरोभाव इति शेषः ॥ ९६ ॥ आविर्भावमाह *यथेति ॥ ९७ ॥ सत एवाविर्भावादित्यत्र दृष्टान्तान्तरमाह *आविर्भावेति ॥ बोधो जाग्रत्स्वप्नः ॥ ९८ ॥ लिङ्गस्य सुप्तौ सङ्कोचमाह *कूटस्थेति ॥ ९९ ॥ लिङ्गस्य विस्तृ-

अपास्ताशेषयाथार्थ्यं तज्जवासनयाऽन्वितम् ॥
लिङ्गमाविर्भवेत्स्वप्ने प्रसार्याखिलवासनाः ॥ १०० ॥
जाग्रत्काले विशेषेण स्थित्वा हृदयसद्मनि ॥
द्वासप्ततिसहस्राणि नाडीर्व्याप्यावतिष्ठते ॥ १०१ ॥
स एष परमात्मैव स्वात्ममोहसहायवान् ॥
ज्ञानशक्त्या क्रियाशक्त्या जानन्कुर्वन्वपुःस्थितः ॥१०२॥
आपादमस्तकं व्याप्तं लिङ्गेनास्मद्वपुर्यथा ॥
तथा देवादिदेहाश्च लिङ्गं सर्वात्मकं ततः ॥ १०३ ॥
एकमेव यथा गोत्वं प्रतिव्यक्ति समापितम् ॥
प्रतिदेहं समाप्यास्ते तथैका लिङ्गदेवता ॥ १०४ ॥
लिङ्गं क्षुद्रशरीरेण पुत्तिकाख्येन तत्समम् ॥
मशकेन गजेनापि विराट्पिण्डेन तत्समम् ॥ १०५ ॥
वायुर्गौतम तत्सूत्रमित्युक्तेर्वायुदेहभृत् ॥

---

तपटवत्स्वप्नजाग्रतोर्विकासमाह *अपास्तेति ॥१००॥१०१॥ एवमवस्थात्रये लिङ्गस्थितिमुक्त्वा तदवच्छिन्नजीवस्य परेण वास्तवभेदशङ्कां धुनीते *स एष इति ॥ ज्ञानशक्त्या जानन् क्रियाशक्त्या कुर्वन् वपुषि स्थित इत्यर्थः ॥१०२॥ ननु लिङ्गदेहः परिच्छिन्नोऽपरिच्छिन्नो वा। नाद्यः, पुत्तिकादिशरीरपरिमितस्य गजशरीरग्रहणे तद्व्यापित्वं न स्यात् । नान्त्यः, देहाद्बहिरपि सुखाद्युपलब्धिप्रसङ्गादित्याशङ्क्य हिरण्यगर्भलिङ्गं विना इतरेषां परिच्छिन्नं, तेषामपि क्वचिदपरिच्छिन्नोक्तिरुपासनार्था, परिच्छिन्नानामपि तेषां सङ्कोचविकासाद्गजादिशरीरव्याप्तिरुपपन्नेत्याह *आपादेति॥ गोत्वदृष्टान्तोक्तिर्व्यष्टिसमष्ट्योः कार्यकारणलिङ्गदेहयोरभेदविवक्षयेति ध्येयम्॥१०३॥१०४॥१०५॥ हिरण्यगर्भलिङ्गं तच्छरीरस-

हिरण्यगर्भस्तेनापि लिङ्गमेतत्समम्मतम् ॥ १०६ ॥
समस्तव्यस्तदेहेषु समष्टिव्यष्टितामगात् ॥
लिङ्गं समस्तदेहोऽयं वायुर्व्यस्ता गजादयः ॥ १०७ ॥
धेन्वां गर्भस्थवत्से च यथा गोत्वं समं तथा ॥
सूत्रात्मन्यस्मदादौ च लिङ्गसाम्यं श्रुतीरितम्॥१०८॥
समायामपि जिह्वायां नरो वक्ति पशुर्न तु ॥
सत्यसङ्कल्पता तद्वत्सूत्रादौ नास्मदादिषु ॥१०९॥
अभ्यासेन वचःपानाद्यथा वक्ति शुकस्तथा ॥
योगाभ्यासेन धर्मात्मा सत्यसङ्कल्पवान्नरः ॥ ११० ॥
प्रबोधसुप्तिवत्सृष्टिसंहृत्योः सूत्रविग्रहे ॥
आविर्भावतिरोभावौ लिङ्गमाप्नोति मोहजम् ॥१११॥
चिदात्मव्यवहारार्थमुपाधिर्लिङ्गमीरितम् ॥
लिङ्गोपहित आत्मैष बहुधा व्यवतिष्ठते ॥ ११२ ॥
प्रतिप्राणि परिच्छेदो ज्ञानकर्मानुरोधतः ॥

---

ममिति वक्तुं तस्यापि लिङ्गातिरिक्तं वाय्वात्मकं शरीरमस्तीत्याह *वायुरिति॥१०६॥१०७॥लिङ्गसाम्यं तच्छरीरव्यापित्वम्॥१०८॥ १०९॥ वचः वेखण्ड इति भाषायाम् ओषधी तस्याः वचनस्य वा पानात् राम रामेति शिक्षणात्॥११०॥जाग्रत्सुप्त्योरुक्तन्यायं सृष्टिप्रलययोरितिदिशति *प्रबोधेति ॥ सूत्रविग्रहेऽपञ्चीकृतभूते तस्य लयेऽपि सूक्ष्मरूपेणावस्थानादिति भावः ॥ १११ ॥ जीवव्यवहारहेतुं लिङ्गदेहं निरूप्य तत्प्रसङ्गात्तदुपहितात्मस्वरूपं निरूपयति *लिङ्गोपहितेति ॥ बहुधा ब्रह्मादिपुत्तिकान्तशरीरेषु तत्तद्रूपेणेत्यर्थः ॥ ११२ ॥ एकस्यैवात्मनः सर्वशरीरवर्त्तित्वे प्राणिनां व्यवहारवैचित्र्यं कथमित्याशङ्क्याह *प्रति-

धर्माधर्मानपेक्षः सन्नानन्त्येनावतिष्ठते ॥ ११३ ॥
एवं च सति सूत्रात्मा वर्त्तमानः पुरातनात् ॥
अनुष्ठितज्ञानकर्मसाधनात्स्रष्टृतामगात् ॥ ११४ ॥
एकापूर्वप्रयुक्तत्वात्समस्तव्यस्तरूपिणाम् ॥
प्राणिनां व्यवहारोऽयं स्रष्ट्रभिप्रायतो भवेत् ॥ ११५ ॥
प्रातिस्विकान्यपूर्वाणि प्राणिनां यानि तान्यपि ॥
तत्रैवान्तर्भवन्त्यस्य तादृक्सङ्कल्पयोगतः ॥ ११६ ॥
सर्वात्मप्राणरूपोऽस्मीत्येवं सङ्कल्प्य तत्फलम् ॥
प्राप सूत्रादिदेहेषु पुत्तिकान्तेष्ववस्थितः ॥ ११७ ॥
एकमेव जगद्बीजमीशाभिप्रायहेतुतः ॥
भूरिनानाप्रदेशेन प्रत्यात्मं व्यवतिष्ठते ॥ ११८ ॥
कुर्यान्मेरावणुधियमणौ मेरुधियं तथा ॥

---

प्राणि परिच्छेद इति । परिच्छेदो व्यवहारः । उपाधिविनिर्मुक्तस्य तस्य स्वरूपमाह *धर्माधर्मेति॥११३॥जीवव्यवहारस्य कर्माधीनत्वे हिरण्यगर्भसृष्ट्यादिव्यवहारोऽपि तथा स्यादित्याशङ्क्याङ्गीकरोति *एवं च सतीति ॥ ११४ ॥ नन्वेवं तस्यानीश्वरत्वात्तदभिप्रायानुसारेण जीवानां व्यवहारो न स्यात्तत्राह *एकेति ॥ ११५ ॥ जीवव्यवहारस्यैकापूर्वप्रयुक्तत्वमसिद्धं प्रतिजीवमपूर्वभेदादित्याशङ्क्याह *प्रातिस्विकानीति द्वाभ्याम् । सर्वात्मभावनया वैराजं पदं प्राप्तस्य सत्यसङ्कल्पत्वादीशतुल्यतेति भावः ॥ ११६ ॥११७॥ आत्मस्वरूपनिरूपणमुपसंहरति *एकमिति ॥ यद्यपि जगत्कारणमनाद्यनिर्वाच्यमेकं तथापि तत् ईशस्य तस्मिन्नभिप्रायश्चिदाभासस्तदनुसारेण बहुविधहेतुभेदेन फलभेदेन प्रतिजीवं भातीत्यर्थः ॥११८॥ प्रत्यगज्ञानं साभास-

सर्वत्राप्रतिघात्येव प्रत्यगज्ञो महेश्वरः ॥ ११९ ॥
अतत्त्वज्ञस्य तमसो रज्ज्वज्ञानोरगादिवत् ॥
अष्टावस्थाप्रभेदेन मिथ्याऽज्ञानं प्रजायते ॥ १२० ॥
देहेन्द्रियमनःप्राणविराट्सूत्रेशशक्तयः ॥
अष्टावस्था इमाः प्रोक्ताश्चिदेकरसवस्तुनः ॥ १२१ ॥
प्रत्यगज्ञानविध्वस्तौ रज्ज्वज्ञानहताविव ॥
तत्कल्पितनिवृत्तिः स्याच्छिष्यते केवलः परः ॥१२२॥
समस्तव्यस्ततैषेह प्रत्यगज्ञानभूमिगा ॥
न त्वपास्तसमस्तान्ध्ये नेतिनेति परात्मनि ॥१२३॥
इत्थं प्राणस्य सर्वाक्षतर्पकत्वप्रसङ्गतः ॥

---

मपि कथमविद्यमानं भेदमावेदयोदित्याशङ्क्याह *कुर्यादिति । अघटितघटनापटीयस्त्वेन प्रसिद्धाज्ञानस्य साभासस्य न किञ्चिदपि प्रतिहतिरित्यर्थः । चिदात्मनः प्राधान्येन निर्देशोऽज्ञानस्यास्वातन्त्र्यज्ञापनायेति द्रष्टव्यम् ॥ ११९ ॥ केचित् द्वैतस्य नाज्ञानजत्वम्, अष्टावस्थस्य तस्य वस्तुत्वादित्याहुस्तान्प्रत्याह *अतत्त्वेति द्वाभ्याम् ॥ १२० ॥ ॥ १२१ ॥ अवस्थानां कल्पितत्वे मानमाह *प्रत्यगिति । यत्र त्वस्य सर्वमित्यादिश्रुत्या मुक्तौ द्वैताभावात्, अज्ञाने सति द्वैतं तदभावे नेत्यन्वयव्यतिरेकाभ्यां जगत् अज्ञानजम् । विमतम् अज्ञानजं तदन्वयव्यतिरेकाद्रज्जुसर्पवादित्यनुमानादित्यर्थः ॥ १२२ ॥ समस्तव्यस्तात्मकं ब्रह्मस्वभाव इति केचित्, तन्मतं श्रुतिविरोधादनादेयमित्याह*समस्तेति । न तु वास्तवीति शेषः ॥ तत्र हेतुः *अपास्तेति । नेति नेतीति निरस्तसमस्तजडे परस्मिन्नानारसताया अयोगादिति भावः ॥ १२३ ॥ परमप्रकृ-

उक्ता तत्त्वस्थितिः प्राणस्तर्पको ध्येय इष्यताम् ॥१२४॥
शुद्धिं ब्रुवन्नर्थवादस्तत्त्वस्थितिमसूसुचत् ॥
अतः प्रतीयमानेऽर्थे प्रमाणमविरोधतः ॥ १२५ ॥
ननूपास्तिविधिं नैव पश्यामो ब्राह्मणे क्वचित् ॥
अभ्यारोहजपस्यैव विधिरत्रावलोक्यते ॥ १२६ ॥
मैवमासुरपापस्य नाशोक्तौ तद्विधिश्रुतेः ॥
य एवं वेद स प्राणो भवेत्पाप्मा तु नश्यति ॥१२७॥
वागादिनिन्दया मुख्यप्राणोपासा न चेदिह ॥
विधित्सिताऽथ तन्निन्दा व्यर्था प्राणस्तुतिस्तथा ॥१२८॥
ऐहिकामुष्मिकफले पूर्वोक्ते जपमात्रतः ॥
न सिध्यतस्ततो नास्य जपशेषार्थवादता ॥ १२९ ॥

---

समुपसंहरति । *इत्थमिति ॥ १२४ ॥ प्रसङ्गात्तत्त्वावस्थितिरुक्तेत्युक्तम् । प्रसङ्गमेव व्यनक्ति *शुद्धिमिति ॥ वागादिनिष्ठत्वेनोद्गानादिकर्तृत्वं वदताऽर्थवादेनात्मनो वस्तुतः कर्तृत्वादिकं नेति सूचितमित्युक्तमिति भावः । विधिशेषस्यार्थवादस्य कथं शुद्ध्यादिप्रमापकत्वं तत्राह *अत इति । अबाधिताज्ञातार्थबोधित्वेन तस्यापि प्रामाण्यमविरुद्धमिति भावः ॥१२५॥ एवं शुद्ध्यादिगुणविशिष्टप्राणस्योपास्यत्वमुक्तं, तदेव स्थूणानिखननन्यायेन द्रढयितुमाक्षिपति *नन्विति ॥ १२६ ॥ उपास्तिविधेः श्रवणात्तत्परं वाक्यमिति परिहरति * मैवमिति ॥ १२७ ॥ वेदेत्यस्य विधित्वाभावे बाधकमाह * वागिति ॥ "यत्स्तूयते तद्विधीयते " इति न्यायादत्र विधिः कल्प्यत इति भावः ॥ १२८ ॥ जपविधिशेषत्वेनार्थवादत्वमुक्तं प्रत्याह *ऐहिकेति । जपस्य साक्षात्कारहेतुत्वं च न्यायविरुद्धमित्युक्तमिति भावः ॥१२९॥

उपास्त्या तु फलं सिद्ध्येदन्तरेणापि तं जपम् ॥
इत्यर्थो गम्यते लोकजिदेवेति श्रुतत्वतः ॥ १३० ॥
शुद्ध्यादिप्राणमाहात्म्यं विधिशेषार्थवादतः ॥
न सिध्यतीति नो वाच्यं बाधस्यानुपलम्भनात्॥१३१॥
मुख्यस्थित्यादयः प्राणे गुणा दृष्टा न तेष्विह ॥
योषाग्नित्वादिवत्काश्चिद्विरोध उपलभ्यते ॥ १३२ ॥
अक्षाद्यविषया ये तु गुणा आगमतो मताः ॥
शुद्ध्यक्षतर्पकत्वाद्याः कुतस्तेषां मृषार्थता ॥ १३३ ॥
मृषात्वसाधकं मानं न किञ्चिदिह विद्यते ॥
न च कारणदोषोऽत्र वेदे सम्भाव्यते क्वचित् ॥१३४॥
अद्वैतश्रुतिबाधेन मृषात्वमिति चेन्न तत् ॥
प्राणोऽस्ति शुद्धिर्मिथ्येति नैवमाह श्रुतिः क्वचित्॥१३५॥
सत्यासत्यविभागोऽयमविभागात्मवस्तुनि ॥

---

उपास्तेर्विधित्सितत्वे वाक्यशेषमप्यनुकूलयति *उपास्त्येति । प्राणोपास्तिविधिमङ्गीकृत्य प्राणो न शुद्ध्यादिगुणो मानाभावाद्वाक्यस्य विधिपरत्वादिति शङ्कते *शुद्ध्यादीति ॥ देवताधिकरणन्यायेन [ १-३-२६ ] परिहरति *बाधस्येति ॥१३१॥आसन्यत्वादिगुणेषु प्रत्यक्षासिद्धेष्वविरोधं तावदाह *मुख्येति ॥ मुख्यास्थितिर्मुखबिलवर्त्तनमासन्यत्वमित्यर्थः । आदिपदेन आङ्गिरसत्वादिग्रहः ॥ १३२ ॥ श्रुतिमात्रगम्यानामिन्द्रियपुष्टिजनकत्वादीनामध्यक्षादिविरोधशङ्कैव नास्तीत्याह *अक्षेत्यादिना ॥ १३३ ॥ १३४ ॥ अद्वैतश्रुतिविरोधात् शुद्ध्यादेरसत्त्वमाशङ्क्य परिहरति *अद्वैतेति । प्राणस्य सत्यत्ववच्छुद्धितत्त्वस्याभ्युपगमेऽपि नाद्वैतक्षतिरिति भावः ॥ १३५ ॥ प्रतीयमानस्य सर्वस्यापि नित्यत्वाभ्युपगमे किं परं तर्हि नेह नानेति वाक्यं ?

प्रत्यगज्ञानहेतूत्थः पृथङ् नास्तीतिभाषत ॥ १३६ ॥
स्वाभासफलकारूढस्तदज्ञानजभूमिषु ॥
तत्स्थोऽपि तदसम्बद्ध ईशः प्राणादितां गतः ॥१३७॥
तदज्ञानं तदुत्थं च जगत्कृत्स्नं तदात्मकम् ॥
यतोऽतस्तदनूद्याह सदेवेदमिति श्रुतिः ॥ १३८ ॥
प्राणो वा तस्य शुद्धिर्वा सर्वं सत्तत्त्वमित्यसौ ॥
अद्वैतश्रुतिराचष्टे न तु किञ्चिन्निषेधति ॥ १३९ ॥
नृशृङ्गाद्यपि सत्तत्त्वमित्यभ्युपगमः श्रुतेः ॥
प्राणशुद्ध्यादिसत्तत्त्वमिति वक्तव्यमत्र किम् ॥१४०॥

---

तत्राह * सत्येति । आत्मा सत्यः प्रपञ्चोऽसत्य इति विभागो मोहजन्यः प्रपञ्चसत्यताया अप्यात्मस्वरूपत्वात् । निषेधश्रुतिरात्मसत्तातिरिक्तां द्वैतसत्यतामपवदति न तु द्वैतरूपमिति भावः ॥ १३६ ॥ ननु प्राणादिसत्ताया आत्मस्वरूपत्वमनुपपन्नम् असङ्गस्य तेन सम्बन्धाभावात्तत्राह *स्वेति ॥ स्वस्यात्मन आभासः प्रतिबिम्बो यस्मिन्नज्ञाने तत्तथा तस्मिन् फलके समारूढोऽविद्याद्वारेत्यर्थः ॥ आत्मनः प्राणादिभिर्वास्तवसम्बन्धाभावेऽपि व्यवहारदशायामाविद्यकं तादात्म्यमविरुद्धमिति भावः ॥ १३७ ॥ आत्मसत्तातिरेकेण द्वैतसत्ता नेत्यत्र श्रुतिं प्रमाणयति *तदिति । कार्यस्य कारणस्य सर्वस्य प्रतीचि कल्पितत्वेन तन्मात्रत्वादिदमिति तदनुवादेन सदेवेत्यद्वयं वस्तु निःसंदिग्धं श्रुतिराहेत्यर्थः ॥ १३८ ॥ निषेधवाक्यतात्पर्यं निगमयति *प्राण इति ॥ १३९ ॥ एवं श्रुतितात्पर्ये शुद्ध्यादिसत्यता कैमुतिकन्यायासिद्धेत्याह *नृशृङ्गेति ॥ नृशृङ्गशब्देन प्रातिभासिकं वस्तु लक्ष्यते तदपि नासत् असत्त्वेऽनुपलम्भप्रसङ्गादिति भावः ॥ १४० ॥ फलितमाह *यादृशमिति ॥ किञ्च प्रा-

यादृशं प्राणसत्यत्वं तादृशी शुद्धिसत्यता ॥
अनर्थकारि शास्त्रं स्यादयथावस्तुबोधने ॥ १४१ ॥
नाम ब्रह्मत्येवमादावयथावस्तुधीर्भवेत् ॥
शास्त्रेणेति न वक्तव्यं तद्बुद्धेर्गौऽणता यतः ॥ १४२ ॥
यद्वन्निर्ज्ञातभेदेऽपि विष्णुधीरुपलात्मनि ॥
विधीयते तथा नाम्नि ब्रह्मबुद्धिर्विधीयते ॥ १४३ ॥
अज्ञातरज्जुतत्त्वो हि रज्जुसर्पधियेक्षते ॥
नामादौ न तथा तस्माद्गौणी धीर्न तु सा मृषा ॥१४४॥
ब्रह्माख्यं न हि वस्त्वस्ति बुद्धिरेवास्त्यतो मृषा ॥
इति चेन्न यतो गौणबुद्धिर्मुख्यार्थपूर्विका ॥ १४५ ॥
गौणस्य मुख्यापेक्षत्वान्मुख्यं ब्रह्म विना न तत् ॥
गौणं ब्रह्म यथा गौणो वह्निर्मुख्याग्निपूर्वकः ॥ १४६ ॥
विध्यभावाद्ब्रह्मवाक्यमाभास इति चेन्न तत् ॥

---

णस्याशुद्धत्वे शुद्धत्वेन तं वदन्वेदोऽप्रमाणं स्यादित्याह *अनर्थेति ॥ १४१ ॥ अयथावस्तुबोधिनोऽपि शास्त्रस्य प्रामाण्यमाशङ्क्य परिहरति *नामेति ॥ १४२ ॥ नामादौ ब्रह्मधियो गौणत्वं दृष्टान्तेन स्पष्टयति *यद्वदित्यादिना ॥१४३॥१४४॥ नामादावविद्यमानब्रह्मण एवारोपान्न तद्दृष्टिर्गौणीति शङ्कते *ब्रह्मेति ॥ सत्यादिवाक्यस्य विधिविधुरत्वान्न ब्रह्मणि मानतेत्यभिमानः । ऋगादिषु पृथिव्यादिदृष्टिविधानवन्नामादेर्गृहीतभेदस्यैव सतो ब्रह्मणस्तत्र दृष्टिविधानानियमान्न ब्रह्मदृष्टेरगौणत्वमिति मत्वा परिहरति *नेति ॥ एवं तद्दृष्टेर्गौणत्वे विनाऽपि श्रुतिं ब्रह्म सिध्यतीत्याह *यत इति ॥ १४५ ॥ उक्तमेव व्यनक्ति *गौणस्येति ॥ १४६ ॥ विधिविधुरत्वात्सत्यादिवाक्यं न ब्रह्मणि मानमिति तदनूद्य प्रत्याह *विध्यभा-

क्रियावाक्यसमानत्वाद्विद्यावाक्यस्य सर्वतः ॥१४७॥
असन्दिग्धाविपर्यस्तधीः समा वाक्ययोर्द्वयोः ॥
मानत्वे तावता सिद्धे विधिः किं ते करिष्यति ॥१४८॥
अकार्ये ऽपि हि मर्यादावस्ति मेरुरितीरणात् ॥
सम्यग्धीर्जायते यद्वत्तथा तत्त्वमसीत्यतः ॥ १४९ ॥
वेदेऽप्यस्ति विना कार्यं निषिद्धार्थावबोधनम् ॥
पलाण्ड्वादावकरणान्नान्या धीर्जायते श्रुतेः ॥ १५० ॥
मृगतोये प्रवृत्तस्य तृष्णार्तस्योषरे क्षणात् ॥
तमोध्वस्तौ निवृत्तिः स्यान्निषेधेषु तथेक्ष्यताम् ॥१५१॥
इदं हितमिति भ्रान्त्या प्रवृत्तस्य निषेधतः ॥
भ्रान्तिनाशे निवृत्तिः स्यात्पलाण्ड्वादेरभक्ष्यतः॥१५२॥
तस्मान्निषेधशास्त्रस्य शुद्धभूतार्थनिष्ठता ॥
पुंव्यापारस्य गन्धोऽपि न तत्रास्तीति निश्चयः॥१५३॥
आत्मयाथात्म्यविज्ञाननिष्ठता तद्वदीक्ष्यताम् ॥
तत्त्वमस्यादिवाक्यानां नानुष्ठेयं मनागपि ॥ १५४ ॥

---

वादित्यादिना ॥ १४७ ॥ १४८ ॥ १४९ ॥ किन्तु अकार्यबोधिनोऽपि "लशुनं न भक्षयेत्" इत्यादिनिषेधवाक्यस्य यथा प्रामाण्यं तद्वद्वेदान्तस्यापि किं न स्यादित्याह *वेदेऽपीति । निषेधवाक्यानामपि कार्यार्थत्वे विधिनिषेधाभेदप्रसङ्गात् । नञः स्वसम्बन्ध्यभावबोधने मुख्यार्थस्यार्थान्तरवृत्तौ लक्षणापाताद्रागादिप्रसक्तभक्षणादिक्रियानिवृत्त्युपलक्षितौदासीन्यादन्या धीरनुष्ठेयविषया नोदेतीत्यर्थः ॥१५०॥ हितबुद्ध्या हननादौ प्रवृत्तस्य निषेधश्रुत्या तत्राहितत्वे बोधिते औदासीन्यव्यतिरेकेण नानुष्ठेयं किञ्चिदिति दृष्टान्तपूर्वकमाह * मृगेत्यादि ॥ १५१ ॥ ॥ १५२ ॥ १५३ ॥ १५४ ॥ *पूर्वं प्रवृत्तेति । कर्मकाण्डिनः कर्त्त-

न केवलमनुष्ठेयस्याभावः किन्तु वेदनात् ॥
पूर्वं प्रवृत्तकर्मापि बाध्यं पुंसो निषेधवत् ॥ १५५ ॥
अकर्त्रात्मधिया कर्म लौकिकं वैदिकं तथा ॥
बाध्यं निषेधशास्त्रेण कलञ्जादिप्रवृत्तिवत् ॥ १५६ ॥
अथ कृष्यादिबाधेऽपि न बाधः श्रौतकर्मणः ॥
नैवमज्ञानहेतूत्थानर्थाधत्वसमत्वतः ॥ १५७ ॥
हितत्वभ्रान्तिनरकौ कलञ्जादाविवात्मनः ॥
कर्तृत्वभ्रान्तिदेहाप्ती समाने श्रौतकर्मसु ॥ १५८ ॥
शास्त्ररागादिजन्यत्वात्काम्यानामेवमस्तु तत् ॥
शास्त्रमात्रनिमित्तत्वान्नित्यानां नेति चेन्न तत् ॥१५९॥
स्वर्गादिकामिनो यद्वदग्निहोत्रविधिस्तथा ॥
मोहकामादिदुष्टस्य नित्यं कर्म विधीयते ॥ १६० ॥
अकर्त्तारं स्वमात्मानं कर्तृत्वेनाभिमन्यते ॥
नित्यकर्माधिकार्यस्मान्मोहदोषोऽधिकारिणः ॥१६१॥
सोऽकामयत जाया मे स्यादित्यादि श्रुतौ स्फुटम् ॥
कामदोषः प्रत्यपादि सर्वकामाधिकारिणाम् ॥१६२॥

---

व्यतया निश्चितेऽप्यौदासीन्यं स्यादित्यर्थः ॥ १५५ ॥ उक्तमेव व्यनक्ति *अकर्त्रेति ॥१५६॥१५७॥ साम्यमेवोपपादयति *हितत्वेति ॥ निषेधशास्त्राज्ञानात्तदविश्वासाद्वा हननादौ हितत्वभ्रमः तत्करणफलं नरकपातः, एवमात्मनः तत्त्वाज्ञानात्कर्तृत्वादिभ्रमस्तत्फलं च देहान्तराप्तिः । आत्यन्तिकपुमर्थत्वाभावाच्छ्रौतकर्मणां कृष्यादितुल्यतेति भावः ॥ १५८ ॥ *शास्त्रेति ॥ शास्त्रं च रागादि च तदुभयनिमित्तत्वादित्यर्थः । नित्यानां, त्याग इति शेषः ॥ १५९ ॥ १६० ॥ नित्यकर्मकर्तुरपि मोहं कामं च क्रमेणाह *अकर्तारमिति द्वाभ्याम् ॥१६१॥१६२॥

आविरिञ्च्याद्विरक्तोऽपि मुक्तिं कामयते ततः ॥
तत्प्रवृत्तिश्च काम्येति चेत्तर्ह्येषाऽपि बाध्यताम् ॥१६३॥
आत्माज्ञानैकहेतुत्वाद्वाङ्मनःकायकर्मणाम् ॥
आत्मज्ञानेन तद्धानात्समाप्तिः सर्वकर्मणाम् ॥१६४॥
कर्मोपयोगाभावेऽपि वृथाकालक्षयाद्वरम् ॥
कर्मानुष्ठानमिति चेन्न प्रवृत्तेरसम्भवात् ॥ १६५ ॥
न चोच्छिन्नात्ममोहस्य सदैवात्मधियः स्मृतेः ॥
अल्पोऽप्यवसरोऽस्तीह वाङ्मनःकायकर्मणाम्॥१६६॥
कर्मणोऽवसरश्चेत्स्यात्त्वद्भिक्षावसरो यथा ॥
मैवं क्षुधादिदोषैकहेतुत्वेनानिवारणात् ॥ १६७ ॥
कर्मापि मोक्षकामादिमूलं चेद्यो विमुह्यति ॥
स करोत्येव कर्माणि को ह्यज्ञं विनिवारयेत् ॥१६८॥

---

नन्वेवं सति श्रवणादिप्रवृत्तिरपि बाध्येत, तस्या अपि मुक्तिकामना-प्रयुक्तत्वात्तथा च आसुप्तेरामृतेरित्यादिशास्त्रविरोध इति शङ्कते ॥ आविरिञ्च्यादिति । इष्टापत्त्योत्तरयति *तर्हीति । साक्षात्कार-हीननरविषयत्वेनोक्तस्मृत्युपपत्तिरिति भावः ॥ १६३ ॥ उ-क्तमेव विशदयति *आत्मेति ॥ १६४ ॥ १६५ ॥ प्रवृत्त्यसम्भवमु-पपादयति *न चेति । स्मृतेः, प्रवाहरूपेणेति शेषः ॥ १६६ ॥ विदुषो भिक्षाटनादिवत्कर्माचरणं स्यादिति शङ्कते *कर्मण इति। विद्वच्छब्देन साक्षात्कृततत्त्वः केवलविवेकी वा विवक्षितः ? आद्ये तस्य भिक्षाप्रवृत्तौ मुख्यकारणीभूतक्षुधादिवत्कर्मप्रवृ-त्तिहेतुकामादिदोषाभावान्न तत्र प्रवृत्तिरिति परिहरति *मैव-मिति । भिक्षाटनादेरिति शेषः ॥ १६७ ॥ द्वितीयमनुवदति *कर्मेति ॥ इष्टापत्त्योत्तरयति *स इत्यादिना ॥ १६८ ॥

अनिवार्यक्षुधेवायं मोहो यस्यानिवारणः ॥
तस्मिन्कुर्वत्यमूढस्य किं छिन्नं ब्रह्मवेदिनः ॥ १६९ ॥
क्षुधितो भुङ्क्त इत्येवं भुङ्क्ते तृप्तो न कुत्रचित् ॥
मूढः कुरुत इत्येवं नैव कुर्यादमूढधीः ॥ १७० ॥
उच्छिन्नस्य न मोहस्य ह्यकस्मात्पुनरुद्भवः ॥
येन मूढः प्रवर्त्तेत नित्यकर्मसु तत्त्ववित् ॥ १७१ ॥
कर्मब्रह्मधियोः कालभेदेनावसरो यदि ॥
नैवं वस्तुनिमित्तत्वाद्ब्रह्मबुद्धेः सदा स्थितेः ॥ १७२ ॥
न वस्त्ववसरापेक्षं स्वतःसिद्धत्वकारणात् ॥
क्रियैवावसरापेक्षा तस्याः कारकतन्त्रतः ॥ १७३ ॥
यदोद्भवेत्क्षुधेवास्य प्रबला मोहवासना ॥
तदा कृतं न नित्यं स्यात्तस्य यादृच्छिकत्वतः॥१७४॥
दोषजन्येऽपि भिक्षादौ कालादिनियमः श्रुतः ॥

---

अनिवारणो दुर्निवारः ॥१६९॥१७०॥ अज्ञानस्य नष्टस्यापि पुनरुद्भवात् ज्ञानिनोऽपि कर्मावकाशमाशङ्क्य ज्ञानध्वस्तस्य तस्योत्पत्तिकारणाभावान्निर्हेतुकोत्पत्तावनिर्मोक्षप्रसङ्गान्नैवमित्याह *उच्छिन्नस्येति । मूढः, सन्निति शेषः ॥१७१॥१७२॥ ब्रह्मधियो वस्तुनिमित्तत्वेऽपि कालापेक्षाऽस्तु को दोषस्तत्राह *नेति । वस्तुनः कालापेक्षा जन्मनि ज्ञप्तौ वा न युक्ता नित्यत्वात्स्वप्रकाशत्वाच्चेत्यर्थः॥ कस्य तर्हि कालापेक्षा तत्राह*क्रियेति॥१७३॥ विदुषामपि व्युत्थानदशायां कार्यानुष्ठानमुपलभ्यमानं विध्यभावेऽनुपपन्नं स्यादित्याशङ्क्य न विधिकृतं तत् किन्तु वासनाकृतं बालक्रीडावदित्याह * यदेति ॥१७४॥ न विदुषो विध्यभावः चातुर्वर्ण्यं चरेद्भैक्ष्यमित्यादिविधिश्रवणादत आह * दोषे-

विधिः स एष विदुष इति चेन्न तदिष्यते ॥ १७५ ॥
नैवायं नियमोऽस्माकं परिसङ्ख्या हि सा यतः ॥
नो चेद्विहितकालेऽस्य भिक्षात्यागो न शक्यते॥१७६॥
एवं चेत्परिसङ्ख्या ते कालेऽभुक्त्वा तु तत्त्ववित् ॥
प्रत्यवेयादिति प्राप्तं बाढमस्य न दुष्कृतम् ॥ १७७ ॥
मोहवासनया कृत्वा विहितं सुकृती यथा ॥
निषिद्धातिक्रमेणैवं दुष्कृती न भवेत्कुतः ॥ १७८ ॥
अश्लेषवचनान्नास्य सुकृतं लेपकं यदि ॥
दुष्कृतं च तथेत्येवं सन्तोष्टव्यं विपश्चिता ॥ १७९ ॥
तस्मात्कर्माधिकाराणां निषेधायात्मधीवचः ॥
निषेधवाक्यवत्तेन कार्या शङ्का न काचन ॥ १८० ॥
तथा चात्र निषेधेऽपि शुद्ध्यादौ वेदमानता ॥
ब्रह्मणीव ततः प्राण उपास्यो गुणसंयुतः ॥ १८१ ॥

---

त्यादिना । नियमविधित्वे बाधकमाह * नो चेदिति ॥ अस्य विदुषः ऋतौ भार्यामगच्छतो गृहस्थस्येव भोजनाकरणे प्रत्यवायः स्यादित्यर्थः ॥ १७५॥ १७६॥ परिसङ्ख्यायामप्यविहितकाले भुञ्जानस्य विदुषः प्रत्यवायः स्यादिति शङ्कते *एवं चेदिति । विदुष्येवंविधदुष्कृतसद्भावेऽपि न तस्य तस्मिन्फलजनकत्वमित्याह*बाढमिति । सुकृती भवति, विद्वानिति शेषः॥१७७॥१७८॥ "इतरस्याप्येवमसंश्लेषः"इति न्यायात्कृतमपि सुकृतं न विदुषः फलजनकमित्याशङ्क्य साम्येन समाधत्ते *अश्लेषेति ॥१७९॥ विधिहीनमपि प्रत्यक्तत्त्वधीजनकं तत्त्वमादिवाक्यं सर्वव्यवहारोपरमहेतुरित्युपसंहरति *तस्मादिति॥ तस्य सिद्धार्थबोधित्वे फलितमाह *तेनेति ॥ १८० ॥ परमप्रकृतमु-

विध्यर्थवादन्यायानां पूर्वस्मिन्ब्राह्मणे यथा ॥
सङ्ग्रहस्तद्वदत्रापि तृतीयब्राह्मणे कृतः ॥ १८२ ॥

इति वार्त्तिकसारे तृतीयम् उद्गीथब्राह्मणं समाप्तम् ।

श्रुतिः–तेनैतास्तृप्यन्त्येवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदꣳ स्वेषु प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान्बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

---

पसंहरति *निषेधेत्यादिना ॥ १८१ ॥ १८२ ॥

इति वार्तिकसारटीकायां तृतीयब्राह्मणं समाप्तम् ।

इयमत्र श्रुतिशेषपदयोजना । तेनैतास्तृप्यन्तीति प्राणस्याक्षतर्पकत्वमुक्तं, तच्चिन्तनफलमाह *एवमिति । एवम् उक्तगुणोपासकं स्वाः ज्ञातयः एवं वागादयः प्राणमिवाभितः संविशंति ज्ञातीनामाश्रयो भवतीत्यर्थः । आश्रितानां स्वानां भर्ता भरणसमर्थोऽपि भवति तेषां गुणतः श्रेष्ठश्च पुर एता अग्रगण्यश्चान्नादोऽरोगी च भवतीत्यर्थः । अधिपतिरधिष्ठाय पालकोऽपि भवति । किञ्च य एवंविदं प्राणविदं प्रति स्वेषु ज्ञातीनां मध्ये प्रतिः प्रतिकूलः सन् बुभूषति प्रतिस्पर्द्धीभवितुमिच्छति स भार्येभ्यो भरणीयेभ्यो नालं महद्द्वेषेण निःश्रीको रक्ष्येषु रक्षां विधातुमशक्तो भवतीत्यर्थः । अथ पुनर्ज्ञातीनां मध्ये एनं प्राणविदम् अनु अनुगतो भवति यश्चैनं प्राणविदम् अनुवर्त्तयन्नेव भार्यान्भरणीयान् बुभूर्षति भर्त्तुमिच्छति स भार्येभ्योऽलं भृत्यान् रक्षितुं समर्थो भवतीत्यर्थः ॥ १८ ॥

सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानां रसस्तस्माद्य-स्मात्कस्माचाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गानाꣳ रसः ॥ १९ ॥

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

---

प्राणस्याङ्गिरसत्वमुक्तं सोऽयास्य आङ्गिरस इत्यत्र तदुपपत्त्या साधयितुमुक्तमनुवदति श्रुतिः *सोऽयास्य इति ॥ प्राणस्याङ्गिर-सत्वं प्रसिद्धमित्याह *प्राणो हीति । तस्माच्छब्दः एष हीत्यु-परितनवाक्येन सम्बध्यते । हिशब्दसूचितप्रसिद्धिमुपपादयति ॥ यस्मात्कस्माद्यतः कुतश्चिच्चाङ्गादित्यर्थः । सति प्राणे हस्ताद्य-ङ्गं रसवदन्यथा नीरसमित्यन्वयव्यतिरेकाभ्यां तस्याङ्गिरसत्वं सिद्धमित्युपसंहरति *तस्मादेष हीति ॥ १९ ॥ देहेन्द्रिया-द्यात्मत्वकथनेन प्राणस्य रूपप्रपञ्चात्मत्वमुक्तं, नामप्रपञ्चात्म-त्वमप्याह *एष इत्यादिना । एष प्राण एव बृहस्पतिः । तत्र हेतुः *वाग्वै बृहतीति । वागित्यनेन वाग्विशेषा ऋचो लक्ष्यन्ते, सर्वासाम् ऋचां बृहत्याख्यशब्दविशेषेऽन्तर्भूतत्वाद् बृहतीत्वं, त-स्या ऋगात्मकत्वाच्च, एष, प्राणः पतिः पालकः प्राणेन हि पा-ल्यते वाक् अप्राणस्य शब्दोच्चारणासामर्थ्यात् । तस्मादु बृहस्प-तिः ऋचां प्राण आत्मेत्यर्थः ॥२०॥ तथा यजुषामपीत्याह *एष इति । अत्रापि वागित्यनेन यजूंषि लक्ष्यन्ते, यजुषां ब्रह्मश-ब्दितवेदेन सामानाधिकरण्यं तदेकदेशत्वादुपपन्नमिति ध्येयम् ।

एष उ एव साम वाग्वै साऽमैष सा चामश्चेति तत्साम्नः सामत्वम्। यद्वेद समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यꣳ सलोकतां य एवमेतत्साम वेद ॥ २२ ॥

एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीदꣳ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ॥ २३ ॥

---

यजूंषि वाग्विशेष एव तस्या वाच एष प्राणः पतिः पूर्ववत् ॥२१॥ सामात्मत्वमाह *एष इति। सामशब्दस्य प्राणे प्रवृत्तौ निमित्तमाह *वाग्वै सेति। सर्वनाम्ना सन्निहिता वागभिधीयते इत्यर्थः। *अमैष इति। एष प्राणोऽमशब्देनोच्यत इत्यर्थः। तथाच सा चामश्चेतिपदद्वयात्मकसामशब्देन वागुपसर्जनप्राणोऽभिधीयत इत्युक्तम्। यस्मादेवं तस्मादेव साम्नो वाक् प्राणनिर्वर्त्यगीतिविशेषस्यापि सामत्वं प्रसिद्धं लोके इत्यर्थः। यदु एव यस्मात्सर्वेण समस्तुल्यस्तस्माद्वा सामेत्युत्तरवाक्येन सम्बन्धः। प्लुषिणा पुत्तिकाशरीरेण। त्रिभिर्लोकैः सम इति विराड्देहेन साम्यमुक्तम्। समोऽनेनेति हिरण्यगर्भदेहेन। तस्यापि वाय्वात्मकदेहोऽस्तीति उक्तम्। सामाख्यं प्राणं य आत्मत्वेनोपास्ते तस्य भावनातारतम्येन फलभेदमाह *साम्न इति ॥२२॥ एष प्राणः उद्गीथः। उद्गीथशब्दस्य प्राणे प्रवृत्तौ निमित्तमाह *प्राण इति। उत्तब्धं विधृतम्। तथाच धृतिक्रियावाचिन उच्छब्दस्य क्रियाशक्तिमति प्राणे प्रवृत्तिरित्यर्थः। गीथाशब्दार्थमाह *वागिति। गीयतेऽनयेति व्युत्पत्त्या गीथा वाक्। एवं च वागुपसर्जनप्राण उद्गीथशब्दित इत्याह *उच्च गीथा चेति ॥ २३ ॥ स उद्-

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नु-
वाचायं त्यस्य राजा मूर्द्धानं विपातयताद्यदितोऽयास्य
आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन
चोदगायदिति ॥ २४ ॥

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं
तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचि

---

गीथ उद्गाननिर्वर्तकत्वाद्वागुपसर्जनप्राण एवोद्गीथदेवतेत्यु-
क्तार्थदार्ढ्यायाख्यायिकाऽऽरभ्यते ॥ *तत्तत्रोक्तार्थे ह अपि
आख्यायिका श्रूयते इत्यर्थः । ब्रह्मदत्तो नामतश्चिकितानस्यापत्यं
चेकितानस्तदपत्यं युवा च चैकितानेयो राजानं सोमरसम् ।
तद्वचनप्रकारमेवाह *अयमिति । अयं राजा मया भक्ष्यमाणसो-
मरसस्त्यस्य तस्य मे मूर्धानं विपातयतु यद्यहं वागुपसर्जनः प्राण
उद्गानदेवतेति मिथ्यावादी स्यामित्यर्थः । न मया मिथ्योच्य-
ते मद्वचनस्याप्तमूलत्वादित्याह *यदिति । यद्यदि अस्माद्वागु-
पसर्जनप्राणादन्येन देवतान्तरेण आयास्याङ्गिरसनामोदगायत्त-
तोहमनृतवादी स्यामिति । अयं भावः—ब्रह्मदत्तो नाम कश्चित्क-
स्यचिद्यज्ञे उद्गाता बभूव तत्रागतानामृषीणामुद्गीथदेवतामुद्दिश्य
प्रतिपत्तिरासीत्तदा यः पूर्वं नैमिषाणां सत्रे प्राणोपास्त्या त-
द्भावमापन्न अतएवायास्याङ्गिरसनामा विद्वदग्रणीः प्राणोपसर्ज-
नवाचा तेषामुद्गानं कृतवान् तस्य वाक्यं प्रमाणं मत्वा शपथद्वारे-
णेष्टदेवतां निर्धारितवानिति । इममेवाख्यायिकानिर्णीतमर्थमर्थवा-
दाद्युत्थाय उपसंहरति श्रुतिः*वाचा चेति ॥२४॥ तस्यैव प्राणस्य
स्वसुवर्णप्रतिष्ठाख्यगुणत्रयं विधत्ते कण्डिकात्रयेण * तस्येति ॥
तस्य ऋगाद्यात्मत्वेनोक्तस्य प्राणस्य साम्नः सामशब्दवाच्यस्य
यः स्वं धनं वेदास्य विदुषः स्वं धनं भवति । किं तत्साम्नः

स्वरमिच्छेत तया वाचा स्वरसम्पन्नयाऽऽर्त्विज्यं कुर्या-त्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव अथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥

तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥

तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह ति-ष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः॥२७॥

स्वमिति तत्राह *तस्य साम्नः स्वरः कण्ठमाधुर्यमेव स्वं भूषणं यस्मादेवं तस्मादुद्गानं करिष्यन् तैलपानादिना वाचि स्वरं स-म्पादयेदिति प्रसङ्गाद्विधत्ते । कण्ठमाधुर्योपेतमुद्गातारं सर्वे द्रष्टु-मिच्छन्तीत्यत्र दृष्टान्तमाह *अथो इति ॥ अथो अपि यस्य स्वं धनमस्ति तं धनिनं द्रष्टुमिच्छन्तीति लोकेऽपि प्रसिद्धमि-त्यर्थः । उक्तं गुणमुपसंहरति । भवति हेति । तस्य स्वर एव सुवर्णमित्यत्र स्वरशब्देन लाक्षणिकवर्णज्ञानपूर्वकं तदुच्चारणमु-च्यते । शेषं पूर्ववत् *प्रतिष्ठामिति । प्रतितिष्ठत्यस्मिन्निति प्र-तिष्ठा तां साम्नो गुणं यो वेद स प्रतिष्ठां लभत इत्यर्थः ॥ प्रा-णप्रतिष्ठास्वरूपमाह *वागिति । वाग्छब्देन जिह्वामूलीयक-ण्ठदन्तोष्ठनासामूर्द्धतालूनि लक्ष्यन्ते । एतान्यष्टौ स्थानानि । प्राणस्य प्रतिष्ठेत्यत्र हेतुमाह *वाचीति ॥ उक्तस्थानेषु प्रति-ष्ठितः एष प्राण एतद्गानं गीयते गीतिभावमापद्यत इत्यर्थः। अन्ने शरीरे प्रतिष्ठितः सन् प्राणो गीतिभावमापद्यत इति उ ह केचिदाहुरतो वाग्वा अन्नं वा प्रतिष्ठेत्युपास्तौ विकल्प इत्य-र्थः ॥ २५ ॥ २६ ॥ २७ ॥

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत्, असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्माऽमृतं गमयेति, स यदाहासतो मा सद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवैतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं मा कुर्वित्येवै-

---

अथ प्राणविज्ञानविध्यनन्तरम् अतः प्राणवित्प्रयोज्यत्वात्तच्छेपत्वेनाभ्यारोहनामा जपो विधीयत इत्यर्थः ॥ जपकालमाह *पवमानानामिति । ज्योतिष्टोमे द्वादश स्तोत्राणि सन्ति तत्र त्रीणि पवमानाख्यानि याजमानफलानीत्युक्तं, तत्पठनसमये जपेदित्यर्थः । तत्रापि कालसङ्कोचमाह*स वै खलु प्रसिद्धः प्रस्तोता साम प्रस्तौति स यत्र यस्मिन्काले साम प्रस्तुयात्साम प्रारभेत तदा एतानि असतो मासदित्यादीनि त्रीणि यजूंषि जपेत् अस्याभिमुख्येनारोहति अनेन जपकर्मणैवंविद्देवभावमित्यभ्यारोहसंज्ञा। मन्त्रार्थं स्वयमेवाह श्रुतिः *स इति। स मन्त्रः यदाहासतो मा सद्गमयेति तस्यार्थ उच्यत इत्यर्थः । मृत्यु र्वा असत् स्वाभाविककर्मविज्ञाने मृत्युरित्युच्यते तत् असत् अत्यन्ताधोभावहेतुत्वात्, सत्–शास्त्रीयकर्मविज्ञाने अमृतममरणहेतुत्वात् तस्मान्मृत्योरासुरज्ञानादेर्मा व्युत्थाप्यामृतं शास्त्रीयकर्मविज्ञाने गमय । एवं पदार्थमुक्त्वा वाक्यार्थमाह *अमृतं मा कुरु इत्येवैतदाहेति। द्वितीयमन्त्रं व्याख्यातुं सङ्गृह्णाति *तमस इति । मृत्युर्वै तम इति तत्तमः। शास्त्रीयकर्मविज्ञाने मृत्युः सातिशयविनाशिफलत्वात् तज्ज्योतिःप्राजापत्यं पदममृतं तद्धेतुत्वान्मृत्योर्माऽमृतं गमयेति मृत्योः

तदाह मृत्योर्माऽमृतं गमयेति नात्र तिरोहितमिवा-स्ति अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत तꣳ स एष एवंविदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशाऽस्ति य एवमेतत्साम वेद ॥ २८ ॥

इत्युपनिषदि तृतीयब्राह्मणं समाप्तम् ।

---

शास्त्रीयकर्मविज्ञानान्मां व्युत्थाप्य तत्साध्यं फलं गमयेत्यर्थः। वाक्यार्थमाह *अमृतमिति । मन्त्रद्वयोक्तार्थ एव पुनः सङ्ग्रहेण तृतीयमन्त्रेणोच्यतेऽतः स न व्याख्येय इत्याह *नात्रेति। उक्तमन्त्राणां तात्पर्यमुक्तमधस्तात्तदप्यनुसन्धेयम् । एवं त्रिषु पवमानेषु याजमानमुद्गानं कृत्वाऽथानन्तरमवशिष्टेषु नवसु स्तोत्रेष्वात्मनेऽन्नाद्यमागायेत्प्राणविदुद्गाता, यथा प्राणः यजमानस्थानीयेन्द्रियाणामागानं कृत्वा स्वार्थमन्नाद्यमागायत्तद्वदित्यर्थः॥ तस्मादित्यस्य स एष एवंविदित्यनेनान्वयः । यस्मात्स एष उद्गाता एवंवित्प्राणोपास्त्या प्राणवित् प्राणभूतस्तस्मादात्मने स्वामिने वाऽभीष्टमागातुं समर्थः । अतस्तेषु नवसु स्तोत्रेषु गीयमानेषु यजमानो यं कामं कामयेत तं कामं वृणीत प्रार्थयेदिति योजना । एवं कर्माधिकारिणां कर्मकाण्डीयप्राणदर्शनेन जपेन च प्राणात्मापत्तिरुक्ता । ऊर्ध्वरेतसां तु केवलप्राणदर्शनात्तदापत्तिमाह *तद्ध तदिति। तदेतदुक्तप्राणदर्शनं कर्महीनमपि लोकजिदेव लोकसाधनमेवेत्यर्थः । न हैवालोक्यतायै अलोकार्हत्वाय आशा मनोरथोऽपि नैवास्ति, निरन्तरं प्राणध्यानेनात्मानं हिरण्यगर्भत्वेनानुभवतः पुंसो मम हिरण्यगर्भप्राप्त्यभावे कीदृशं जन्म स्यादिति मनोरथोऽपि नोदेतीति भावः। एवमेतत्साम वेदोपास्ते । उपास्तिक्रमश्च पूर्वं प्रतिपादितः ॥२८॥

इति टीकायाम् उद्गीथतृतीयब्राह्मणव्याख्या समाप्ता ॥ ३ ॥

चतुर्थे ब्राह्मणे पूर्वज्ञानकर्मफलोर्जितम् ॥
अव्याकृतं व्याकृतं च विद्याविद्ये च वक्त्यसौ ॥ १ ॥
श्रुत्वा फलोर्जितिं भीमां तद्दोषानखिलान्धिया ॥
अवेक्ष्य शुद्धया तस्माद्विरक्तोऽथ मुमुक्षति ॥ २ ॥
अव्याकृतोक्त्या वेदान्तप्रमेयं कथितं भवेत् ॥
व्याकृतोक्त्या ब्रह्मबोधद्वारं जीवोऽत्र वर्णितः ॥ ३ ॥
आदेयहेयनिर्देशो विद्याऽविद्यावचोद्वयात् ॥
एतावता च शास्त्रार्थः संक्षेपेणात्र पूर्यते ॥ ४ ॥
यद्वैराजं पदं पूर्वज्ञानकर्मफलं हि तत् ॥
चिदात्मैव विराड्रूपो यथा स्यादुच्यते तथा ॥ ५ ॥

---

पुरुषविधब्राह्मणप्रतिपाद्यमर्थं संगृह्य दर्शयति *चतुर्थे इति । *पूर्वेति । पूर्वं ब्राह्मणत्रयप्रतिपादितं ज्ञानकर्मफलोत्कर्षमसौ श्रुतिर्वक्तीत्यर्थः ॥ १ ॥ एवमत्र श्रुतिप्रतिपाद्यं प्रमेयपञ्चकमुक्त्वा तत्प्रतिपादनफलं क्रमेण वर्णयन् प्रथमं ज्ञानकर्मफलोत्कर्षप्रतिपादनस्य फलमाह *श्रुत्वेति । *तद्दोषानिति । कर्मज्ञानयोर्यदुत्कृष्टं फलं वैराजं पदं तत्प्राप्तस्यापि भयारत्यादिदोषान्वक्ष्यमाणानित्यर्थः ॥ २ ॥ अव्याकृतव्याकृतोक्तेस्तत्त्वम्पदार्थधीः फलमित्याह *अव्याकृतेति ॥ ३ ॥ अवशिष्टयोः कथनस्य फलमाह *आदेयेति । नन्वेवं शास्त्रार्थस्यात्र प्रतिपादने उत्तरग्रन्थवैयर्थ्यं स्यात्तत्राह *एतावतेति । तथा चायमेवोत्तरत्र विस्तरेण प्रतिपाद्यत इति भावः ॥ ४ ॥ नन्वादौ कर्मज्ञानफलमुच्यत इत्युक्तमयुक्तम्, आत्मैवेदमित्यात्ममात्रस्योक्तत्वात्तत्राह *यदिति । पूर्वोक्तज्ञानकर्मफलत्वेन प्रसिद्धं यद्वैराजं पदं तत् विराडुपहितश्चिदात्मैव, अयमर्थो यथास्पष्टं स्यात्तथैवोच्यत इत्यर्थः ॥ ५ ॥ प्रतिज्ञातमर्थं साधयितुमात्मैवेत्यत्रात्मपदार्थमाह

प्रत्यग्रूपः पराग्रूपाद् व्यावृत्तोऽनुभवात्मकः ॥
प्रथते यः स आत्मेति प्राहुरात्मविदो बुधाः ॥ ६ ॥
आत्मात्मीयादिरूपं यन्नामरूपादिमज्जगत् ॥
तस्य यद्वास्तवं रूपं स प्रत्यङ्ङद्वयस्तथा ॥ ७ ॥
नानात्वेनैव यद्भाति तत्प्रत्यग्दृष्टिशालिनाम् ॥
प्रत्यङ्मात्रे विलीनं स्यात्परागेवैति चित्रताम् ॥८॥
अपामार्गलतेवायं विरुद्धफलदो भवः ॥
प्रत्यग्दृशां विमोक्षाय संसाराय पराग्दृशाम् ॥ ९ ॥
अग्रादधो मार्जने सा न लग्ना कण्टकैः करे ॥
मूलादूर्ध्वं मार्जने तु लग्ना स्याद् बहुधा करे ॥ १० ॥
एवमन्तर्मुखस्यायं संसारो नैव दुःखदः ॥
बहिर्मुखस्तु संसारे दुःखाद् दुःखतरं व्रजेत् ॥ ११ ॥
प्रबुद्धोऽन्तर्मुखस्तिष्ठेदप्रबुद्धो बहिर्मुखः ॥

---

*प्रत्यगिति ॥६॥ इदंशब्दार्थमाह *आत्मीयेति ॥ आत्मैवेदमितीदमा निर्दिष्टस्य जगत आत्मसामानाधिकरण्यायोगादिदंशब्देन जगत्यनुस्यूतसत्तां लक्षयित्वाऽवधारणफलमाह *तस्येति ॥७॥ आत्मनोऽद्वितीयत्वे विद्वदनुभवं प्रमाणयति *नानात्वेनैवेति । प्रपञ्चस्य प्रतीतस्य प्रतीचि लीनत्वेन पुनस्तत्प्रतीतिर्न स्यादित्याशङ्क्याज्ञदृष्ट्या प्रतीयत इत्याह *परागिति । अत्र दृष्टिशालिनामित्यनुषज्यते । चित्रतां नानात्वम् । पराग्दृष्टिशालिनां नानात्वेन प्रतीयत इत्यर्थः ॥८॥ उक्तमर्थं दृष्टान्तेनाह*अपामार्गेति ॥ संसाराय दुःखाय ॥ ९ ॥ दृष्टान्तं स्पष्टयति *अग्रादिति ॥ १० ॥ दार्ष्टान्तिकमाह *एवमिति ॥ ११ ॥ अन्तर्मुखस्य दुःखं नेत्युक्तं, तदन्तर्मुखत्वं च केन लभ्यत इत्याशङ्क्या-

बहिर्मुखेन न ज्ञातं प्रत्यक्तत्त्वं विना मितिम् ॥ १२ ॥
यदज्ञातं परं तत्त्वं तच्छ्रुतं कारणं श्रुतौ ॥
आऽन्त्यात्कार्यात्तदेव स्यात्सर्वकार्यस्य कारणम्॥१३॥
तेन तेनात्मकार्येण विशिष्टः सन् सृजेत्प्रभुः ॥
स्वात्माभासतमोयुक्तस्तेजोबन्नानि मायया ॥ १४ ॥
ज्ञानकर्मादितन्त्रं सत्सूत्रं जज्ञे ततो विभोः ॥
ज्ञानक्रियाशक्तिमत्त्वात्तत्रेदं जगदाहितम् ॥ १५ ॥
विराडपि ततो जज्ञे त्रैलोक्यात्मकदेहवान् ॥
यथोक्तज्ञानकर्मभ्यामेवं प्रत्यग्विराडभूत् ॥ १६ ॥

---

त्मतत्त्वज्ञानादेवेत्याह *प्रबुद्ध इति ॥ सम्भावनायां लिङ् ॥ तत्त्वज्ञानमनोनाशयोरिवाज्ञत्वबहिर्मुखत्वयोर्मिथः साधनतामाह *बहिर्मुखेनेति ॥ मितिं विनेति, विवेकाभावादित्यर्थः ॥१२॥ एवं प्रासङ्गिकं परिसमाप्य प्रकृतं पुरुषविधशब्दार्थं दर्शयितुम् अज्ञातं ब्रह्मैव सर्वजगत्कारणमित्याह *यदिति। परस्य मूलकारणत्वेऽपि वियदाद्यवान्तरकारणमिति, नेत्याह *आऽन्त्यादिति ॥ अन्त्यं कार्यं पृथ्वी, तावत्पर्यन्तस्य सर्वकार्यस्य तेन तेनोपाधिनोपहितं ब्रह्मैव कारणमित्यर्थः ॥ कथं निर्विकारस्य ब्रह्मणः कारणता ? तत्राह *स्वात्मेति । स्वात्मनश्चिद्धातोराभासो यस्मिन् तमसि तत्तथा । उपाधिभूततमसो जगज्जनौ प्राधान्यं दर्शयितुं माययेत्युक्तम् ॥ असृजत् इति शेषः ॥१३॥१४॥ ब्रह्मण एव हिरण्यगर्भोत्पत्तिमाह *ज्ञानेति ॥ ततः सूक्ष्मभूतोपहिताद्ब्रह्मण इत्यर्थः । कर्मविज्ञानफलभूतस्य सूत्रस्य लक्षणमाह *ज्ञानेति ॥ १५ ॥ सूत्रोपहितब्रह्मणो विराडुत्पत्तिमाह *विराडिति ॥ फलितमाह *एवमिति ॥ १६ ॥ उक्त-

स एष परमोऽप्यात्मा कोशपञ्चकधारणात् ॥
संवृतः पुरुषाकारः कामाविद्याद्युपप्लुतः ॥ १७ ॥
सोऽनुवीक्ष्यात्ममोहात्थं वैराजं रूपमात्मनः ॥
नापश्यदपरं किञ्चित्सोऽहमस्मीत्यथाभ्यधात् ॥ १८ ॥
अहमित्येव नामास्य सम्पन्नं तेन लौकिकाः ॥
तत्सृष्टाः स्वं स्वमात्मानमहमित्यभिचक्षते ॥ १९ ॥
कोशपञ्चकयुक्तस्य प्रत्यक्तत्त्वस्य नाम तत् ॥
विराजा कृतमित्येतत्सर्वसाधारणं मतम् ॥ २० ॥
असाधारणदेहस्य तत्तत्पित्रादिना कृतम् ॥
देवदत्तादिकं नाम जघन्यं पूर्वनामतः ॥ २१ ॥
कस्त्वमित्यपि पृष्टः सन्नादावहमिति ब्रुवन् ॥
पश्चाज्जघन्यनामेदं वक्ति जिज्ञासवे जनः ॥ २२ ॥

---

मेव व्यनक्ति *स एष इति । एवं चेदं घटादिकार्यम् अ-ग्रेऽवान्तरप्रलये विराड्भावापन्नात्मैवासीदिति ज्ञानकर्मफल-स्य विराज एवेत्युक्तत्वान्न पूर्वोक्तविरोध इति भावः ॥ १७ ॥ सोऽनुवीक्ष्येत्यादेरर्थमाह *सोऽन्विति ॥ १८ ॥ ततोऽहंना-माऽभवदित्यस्यार्थमाह *अहमिति ॥ प्रजापतिरहमित्युक्त्वाऽहं-नामाऽभूदित्यत्र कार्यलिङ्गमनुमानमाह श्रुतिस्तस्मादिति। तद्व्याच-ष्टे *तेन लौकिका इति ॥ १९ ॥ नन्वेवमपि पित्रादिकृतना-मकथनात्पूर्वमेवाहमित्युक्तौ को हेतुस्तत्राह *कोशेति ॥ २० ॥ २१ ॥ तात्पर्यमुक्त्वाऽक्षराणि योजयति *कस्त्वमिति । तस्मा-द्विराजा साधारणनामकरणादेतर्ह्यप्यामन्त्रितः कस्त्वमिति पृष्टोऽयं जनोऽहमित्युक्त्वाऽथानन्तरं यदस्य भवति पित्रादिकृतं नाम तद् ब्रूत इत्यर्थः ॥ २२ ॥ शुद्धस्यापीयमवस्था अहो अ-

चिदेकरस आत्मैव कश्मले कोशपञ्चके ॥
एकतामभिसम्पन्नोऽहङ्करोत्यभिमाननः ॥ २३ ॥
बहवो वीतकल्पेऽन्ये आसन्यद्यप्युपासकाः ॥
तथापि भावनाधिक्यादेक एव विराडभूत् ॥ २४ ॥
निःशेषेणासुरं पापं दग्धवान्बहुजन्मभिः ॥
ततो विराडभूदन्योऽप्येवं दग्ध्वा भवेद्विराट् ॥ २५ ॥

श्रुतिः ॥ आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहंनामाऽभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाऽथान्यं नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥
सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे

---

ज्ञानादित्याक्रोशति *चिदिति ॥ स यदित्यादेस्तात्पर्यमाह *बहव इत्यादिना ॥ २४ ॥ २५ ॥

अक्षरार्थस्तु—स विराट् यजमानावस्थायां यद्यस्मादुपासकसङ्घातात्पूर्वः प्रथमः सन्नौषत् अदहत् अत एव पूर्वम् औषदिति पुरुषाख्योऽभूत् । पुरुषत्वगुणविराडुपासनफलमाह *औषदिति । यः अस्माद्विदुषः पूर्वं प्रजापतित्वं बुभूषति भवितुमिच्छति तं विद्वानोषति वै दहत्येवेत्यर्थः ॥ अयम्भावः—अहमहमिकया प्राथम्येन प्रजापतित्वप्रेप्सूनां मध्ये प्रथमत एव भावनाद्यतिशयाद्यस्माद्भावं गतवान् तेनेतरे दग्धवर्जिता भवन्तीति ॥ १ ॥ सोऽबिभेदित्यत्र विराजो भयकारणमाह *दग्धेति ॥ *अभयमन्यतेति । अहमिति शेषः ॥ अस्मदादिवदिति सदृष्टान्तं

यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद् द्वितीयाद्वै भयं भवति ॥ २ ॥

दग्धपापोऽप्यनात्मज्ञो देहादावभ्यमन्यत ॥
ततः स्वनाशमाशङ्क्य सोऽबिभेदस्मदादिवत् ॥ २६ ॥
स्रज्यहिं कल्पयित्वाऽऽस्ते तद्भयादाकुलेन्द्रियः ॥
एवं नश्वरदेहादिं प्रतीच्यारोप्य कम्पते ॥ २७ ॥
आलोचयेत्स्रजस्तत्त्वं भीतिध्वस्त्यै यथा नरः ॥
विराडालोचयत्तद्वत्प्रतीचस्तत्त्वमादरात् ॥ २८ ॥
आलोचयन्यथातत्त्वमपास्तध्वान्ततद्भयम् ॥
अनन्यानुभवं साक्षाद्ददर्शैकात्म्यमात्मनि ॥ २९ ॥
प्रत्यग्याथात्म्यविज्ञानशिखिप्लुष्टमहातमाः ॥
आप्ताशेषपुमर्थोऽथ सोऽमन्यत ततो विराट् ॥ ३० ॥
देहेन्द्रियमनोबुद्धिभावाभावादिसाक्षिणः ॥
प्रतीचोऽन्यत्किमप्यत्र नास्ति कस्माद्बिभेम्यहम् ॥ ३१ ॥

---

दार्ष्टान्तिकं स्पष्टयति *स्रजीति ॥ २६ ॥ २७ ॥ स हायमीक्षांचक्र इत्यस्यार्थमाह *आलोचयेदिति ॥ २८ ॥ आलोचनफलमाह *आलोचयन्निति ॥ २९ ॥ ऐकात्म्यसाक्षात्कारफलमाह *प्रत्यगिति ॥ अमन्यत अद्याप्ताशेषपुमर्थोऽस्मीति शेषः ॥ ३० ॥

तस्मादित्यादिश्रुतेरयमर्थः—यस्माद्विराट् भीतवान् तस्मादद्याप्येकाकी बिभेति कार्यस्य भयलिङ्गेन कारणेऽपि विराजि तदनुमेयमिति भावः ॥ *स हायमिति ॥ सोऽयं विराडीक्षितवान् ॥

यन्मदन्यदित्यादेरर्थमाह *देहेन्द्रियेति ॥ ३१ ॥ एवम-

अन्वयव्यतिरेकाभ्यां स्वमात्मानं यदा पुमान् ॥
प्रतीच्यैवानुसन्धत्ते ब्रह्मास्मीति तदैक्षत ॥ ३२ ॥
प्रत्यग्दृष्ट्या तदज्ञानं न तज्जं चेक्षते स्वतः ॥
ब्रह्मप्रतीचोरैकात्म्यात्तदूरीकृत्य गर्जति ॥ ३३ ॥
प्रत्यक्ता ब्रह्मणो रूपं ब्रह्मता चात्मनः स्वतः ॥
एवं सति कुतो मे भीरिति विद्वांस्त्रपायते ॥ ३४ ॥
ब्रह्मविद्यामृते नान्यद्भयहेतुविनाशकृत् ॥
अतोऽत्र बोधादेवास्य भयं वीयाय सर्वतः ॥ ३५ ॥
कस्मादभेष्यदीशोऽयं द्वितीयात्खलु तद्भयम् ॥
द्वितीयो नेश्वरस्यास्ति ततो निर्भय एव सः ॥३६॥
ननु प्रजापतेरैक्यदर्शनं कुत उद्बभौ ॥
शास्त्राचार्यादितद्धेतोरसत्त्वात्तदसम्भवः ॥ ३७ ॥
यदि जन्मान्तराभ्याससंस्कारोत्थमिदं तदा ॥

---

न्यस्याप्यधिकारिण आत्मानमालोचयतः साक्षात्कारः सुलभ इत्याह *अन्वयेति ॥ ३२ ॥ साक्षात्कृततत्त्वस्य प्रजापतिवद्भीतिनिवृत्तिश्च भवतीत्याह *प्रत्यगिति ॥ तत्त्वज्ञानादज्ञानतत्कार्यादर्शने हेतुमाह *स्वत इति ॥ तदज्ञानं दूरतो निरस्य सन्तुष्यतीत्यर्थः ॥ ३३ ॥ उक्तमेव व्यनक्ति *प्रत्यक्तेति । त्रपायते किमर्थं भीतोऽहमिति लज्जावान्भवतीत्यर्थः ॥ ३४ ॥ तत एवेत्यादेरर्थमाह *ब्रह्मेति । वीयाय विस्पष्टमपगतवत् ॥ ३५ ॥ कस्मादित्यादेरर्थमाह *कस्मादिति ॥ अभेष्यत् भीतोऽभवत् ॥ ३६ ॥ ब्रह्मात्मैक्यज्ञानात्प्रजापतेर्भयध्वस्तिरयुक्ता तस्य तद्भाने हेत्वभावादित्याक्षिप्य समाधत्ते *नन्वित्यादिना ॥३७॥ *नैरर्थक्येति । पूर्वजन्मोत्पन्नविद्या चेदिदानीं सं-

नैरर्थक्यप्रसक्तिः स्यात्सम्यग्ज्ञानस्य सर्वतः ॥ ३८ ॥
स्वभ्यस्ताऽप्यात्मविद्येयं पूर्वजन्मनि नत्तमः ॥
नाधाक्षीद्येन वैराजं देहं स्वीकृत्य वर्त्तते ॥ ३९ ॥
उच्यते महता पुण्यपुञ्जपाकेन तत्पदम् ॥
वैराजं लब्धवांस्तेन ज्ञानसस्योद्भवो स्वतः ॥ ४० ॥
ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः ॥
ऐश्वर्यं चैव धर्मश्च सहसिद्धमिति स्मृतिः ॥ ४१ ॥
"सहैव सिद्धं चेज्ज्ञानं तन्निवर्त्यं भयं कथम् ॥
उदेति"इति न वक्तव्यं, भीतेरूर्ध्वं विबोधनात् ॥४२॥
सहसिद्धत्ववचसा परापेक्षा निवार्यते ॥
न जन्मकाल एवाऽस्य ज्ञानसद्भाव उच्यते ॥ ४३ ॥
आचार्यनिरपेक्षत्वे शुश्रूषादिरनर्थताम् ॥
प्राप्नोति चेत्स्वयम्भातवेदानामस्त्वनर्थता ॥ ४४ ॥
मार्जारो रूपविज्ञाने प्रकाशं न ह्यपेक्षते ॥
नापेक्षन्ते योगिनश्च लोचनं चित्तसाधनम् ॥ ४५ ॥
एवं यत्साधनफलं सिद्धं यस्यान्यसाधनात् ॥
तस्य तत्साधनं व्यर्थमितरस्य च सार्थकम् ॥ ४६ ॥
नावेदविद् बृहन्तं तं मनुते कश्चिदित्यसौ ।

---

स्कारद्वारा स्मर्यते इदानीं विराड्देहस्वीकरणात्तदानीं सा विद्या अविद्यां न अदहादिति वक्तव्यं, तथाच सति सर्वं सम्यग्ज्ञानं व्यर्थं स्यादित्यर्थः ॥ ३८ ॥ ३९ ॥ ४० ॥ अप्रतिघं निरङ्कुशम्, एतच्च प्रत्येकं सम्बध्यते ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ प्रजापतेः शुश्रूषाद्यनपेक्षत्वेऽप्यस्माकं तदपेक्षा सम्भवतीत्यत्र दृष्टान्तद्वयमाह *मार्जार इति ॥ ४५ ॥ ४६ ॥ नन्वेवं प्रमाणे-

श्रुतिर्ब्रह्मात्मविज्ञाने वेदादन्यं निषेधति ॥ ४७ ॥
नातो विकल्पते वेद एक एवात्मवेदने ।
अन्यानि तु विकल्पन्ते साधनानि यथायथम् ॥४८॥
एवं सति स्वयम्भातवेदत्वाद् बुद्ध्वान्स्वयम् ॥
बोधध्वस्तात्ममोहस्याप्यरतिः समजायत ॥ ४९ ॥
स्वाभीष्टवस्त्वलाभेन चेतसो याऽनवस्थितिः ॥
अरतिः सा सिसृक्षोः सा वध्वलाभादजायत ॥५०॥
ननु विज्ञानविध्वस्तावविद्यायाः कुतोऽरतिः ॥
ध्वस्तान्ध्यस्यापि सा चेत्स्यादनिर्मोक्षः प्रसज्जते॥५१॥
अरत्युद्भूतिलिङ्गेन नास्ति विद्येति कल्प्यताम् ॥
द्वितीयवैर्यभावस्य बोधाद्भीतिरपैष्यति ॥ ५२ ॥
समीचीनाऽपि विद्येयं प्रकृतानुचितत्वतः ॥
अकालकुसुमानीव नैव प्रीतिकरी सताम् ॥ ५३ ॥
पिण्डसृष्टौ प्रवृत्तायां ज्ञानस्यावसरोऽत्र कः ॥

---

ऽपि विकल्पः स्याद्वेदादनुमानादेर्वा प्रमाणं विना वा ज्ञानोत्पत्तिरिति, नेत्याह *नावेदवदित्यादिना ॥ ४७ ॥ ४८ ॥ उपसंहरति *एवमिति । स वै नैव रेमे इत्यस्यार्थमाह *बोधेति ॥ ४९ ॥ अरतिशब्दार्थमाह *स्वेति ॥ ५० ॥ प्रकारान्तरेण विराजस्तत्त्वज्ञानमाक्षिपति *नन्वित्यादिना ॥ तत्त्वज्ञानाभावे पूर्वोक्तभयापगमो न स्यादित्याशङ्क्य तस्यान्यथासिद्धत्वमाह *द्वितीयवैरीति ॥ ५१ ॥ ५२ ॥ किञ्च प्रकरणविरोधाच्च नात्र परविद्योक्तिरित्याह *समीचीनेति ॥ अपिः अनुचितत्वत इत्यनेन सम्बध्यते ॥ ५३ ॥ प्रकरणविरोधं स्फोरयति *पिण्डेति ॥ पिण्डशब्देन मन्वादिदेहो गृह्यते । उक्तं

इति चेत्युक्तमेवात्र ज्ञानं प्रकरणत्वतः ॥ ५४ ॥
आरब्धोपानिषत्सर्वा विद्यार्थैव तथासति ॥
त्वद्विद्याऽऽक्षेप एवायमकालकुसुमायते ॥ ५५ ॥
पिण्डसृष्टेर्निन्द्यतया तन्निन्दायै भयादिगीः ॥
तद्भीतिध्वस्तिहेतुत्वगिरा विद्या प्रशस्यते ॥ ५६ ॥
लोकेऽपि महतीं भीतिमापन्नाः परमेश्वरम् ॥
तूर्णं शिव शिवेत्येवं स्मरन्ति भयहारिणम् ॥ ५७ ॥
विराजो जगदीशस्य भीतावन्यः परात्मनः ॥
को वा स्मार्यस्ततो विद्या स्वकालकुसुमायते ॥५८॥
न विराजो वैरिशङ्का न तादृक् पूर्ववासना ॥
सर्वात्मको विराडस्मीत्येवं पूर्वमुपासनात् ॥ ५९ ॥
अथ वैरी स्वस्य पिता भक्षणाय प्रवर्त्तितः ॥
तर्ह्ययुक्तो भीतिनाशो द्वितीयस्यात्र संस्थितेः ॥६०॥
अविज्ञातात्मवृत्तान्तो देहनाशात्स्वविच्युतिम् ॥
मत्वा भीत्या प्रबुद्धोऽभून्निर्भीरिति तु युज्यते ॥६१॥

---

चोद्यमनूद्य परिहरति *इति चेदिति ॥५४॥ *त्वद्विद्याऽऽक्षेप इति । त्वया कृतः "अप्रस्तुतं परविद्याकथनम्" इत्याक्षेप इत्यर्थः ॥५५॥ उपनिषदां विद्यार्थत्वे विराजो भयादिकथनं व्यर्थमत आह *पिण्डेति ॥ ५६ ॥ ५७ ॥ ५८ ॥ पिण्डसृष्टेः शरीरग्रहणस्येशस्मृतिं विनाऽपि ममात्र वैरी नास्तीति बुद्ध्या भयनिवृत्तिरुपपन्नेति उक्तमयुक्तमित्याशङ्क्य, विराजो वैरी हिरण्यगर्भोऽन्यो वा? न चरम इत्याह *न विराज इति॥५९॥आद्यमनूद्य प्रत्याह *अथेति॥६०॥ तस्मात्पूर्वोक्तमेव साध्वित्याह * अविज्ञात इति । प्रबुद्धः सन् स्वस्य प्रच्युतिभयं हित्वेत्यर्थः ॥ ६१ ॥ तर्ह्यरतिर्न स्यादि-

अप्युत्पन्नात्मबोधानामाऽधिकारसमाप्तितः ॥
अरत्यादि यथादृष्टं तथैव स्यात्प्रजापतेः ॥ ६२ ॥
अधिकारो यस्य यावान्भुङ्क्ते भोगं स तावति ॥
कुतो न मुच्यते मुक्तिप्रतिबन्धस्य संक्षयात् ॥ ६३ ॥
सत्यामप्यात्मविद्यायां दोषो न विनिवर्तते ॥
तेन दोषेणानुमेयोऽधिकारो विदुषामसौ ॥ ६४ ॥
विराजोऽधिकृतिः सृष्टौ व्यासादेः शास्त्रनिर्मितौ ॥
अस्मदादौ यथायोग्यं कार्यात्कारणमूह्यताम् ॥६५॥
दोषोऽस्तीत्येव विद्येयं नास्तीत्येवं न शक्यते ॥
वक्तुं, न ह्यनुमेयाऽसौ, दृष्टैषा घटबोधवत् ॥ ६६ ॥
चार्वाकवत्स्वस्य देहं पुष्णन्नपि न वैदिकः ॥
व्यतिरिक्तात्मविज्ञानविहीन इति कथ्यते ॥ ६७ ॥
व्यतिरिक्तात्मबोधस्य शङ्क्यते न परोक्षता ॥

---

त्युक्तमिति तत्राह *अपीति । उत्पन्नात्मबोधानाम्, अस्मदादीनामिति शेषः । अधिकारः प्रारब्धं कर्म ॥६२॥ तत्त्वधियोऽपि भयाद्यनिवर्त्तकत्वे निवर्त्तकान्तराभावात्कदाऽपि मुक्तिर्न स्यादित्याशङ्क्य भयादिप्रारब्धकर्मनिवृत्त्या तन्निवृत्तिसम्भवान्मैवमित्याह *अधिकार इति ॥ ६३ ॥ ६४ ॥ दोषहेतुभूतकर्मविशेषानुदाहरति *विराज इति ॥ ६५ ॥ दोषे सत्यपि स्वानुभवसिद्धं ज्ञानं दुरपह्नवमित्याह*दोष इति ॥६६॥ विदुषामीषद्दोषानुवृत्तिमात्रेणाज्ञत्वापादने देहादिपोषणपराणां वैदिकानां नास्तिकतापात इत्याह *चार्वाकेति ॥ ६७ ॥ ननु तेषां देहातिरिक्तात्मधीः परोक्षैव, नेत्याह *व्यतिरिक्तेति । *मानसमिति । मनोजन्यधियः प्रत्यक्षत्वं सर्वसम्मतमिति

अहं देहीत्यापरोक्ष्यान्मानसं सर्वसम्मतम् ॥ ६८ ॥
यथाऽतिरिक्तात्मबोधेऽप्यरातिः कर्मिणीक्ष्यते ॥
तथा ब्रह्मात्मबोधेऽपि विदुष्यरतिरीक्ष्यताम् ॥ ६९ ॥
नायं दोषः कर्मिणि स्याद्भोक्तृत्वादिति मन्यसे ॥
भोक्तर्येवारातिस्तर्हि विद्वद्देहेऽपि नो चिति ॥ ७० ॥
अभोक्तृचिद्विबोधेन बाधिता भोक्तृतेति चेत् ॥
अतिरिक्तात्मबोधेन देहात्मा किन्न बाधितः ॥ ७१ ॥
बाधितोऽपि यथापूर्वं वर्त्तते स्वस्वभावतः ॥
इत्येतत्कर्मिविदुषोः स्वस्थाने सममुत्तरम् ॥ ७२ ॥
देहातिरिक्तकर्त्तारं कर्मी जानात्ययं पुनः ॥
कर्त्तुरप्यधिकं ब्रह्मेत्येतावन्मात्रभिन्नता ॥ ७३ ॥
कर्त्रात्मानं विबुध्यासौ करोतीति मतं यदि ॥
तर्ह्यकर्त्रात्मबोधेन न करोतीति तत्समम् ॥ ७४ ॥
किं बहूक्तेन बोधौ द्वौ स्वस्वबोध्यावभासने ॥

---

भावः ॥ ६८ ॥ फलितमर्थं दार्ष्टान्तिकेऽप्याह *तथेति ॥६९॥ आत्मनि भोक्तृत्वाध्यासस्यानिवृत्तेः कर्मिणां देहपोषणं न दोषायेति शङ्कते *नायमिति । गूढाभिसन्धिरुत्तरमाह *भोक्तरीति । प्रारब्धं कर्म निवृत्ताविद्यस्यापि भोगैकनाश्यमित्युक्तमित्याशयः । *नो चितीति । शुद्धचैतन्ये नास्तीत्यर्थः ॥ ७० ॥ आशयमजानानस्य चोद्यमनूद्य तमुच्चाटयति *अभोक्तृचिदित्यादिना ॥ ७१ ॥ ७२ ॥ तर्हि विद्वत्कर्मिणोः को भेदस्तत्राह *देहेति ॥ ७३ ॥ ७४ ॥ तस्मात्कर्त्रात्मशुद्धात्मधियोः स्वस्वगोचरप्रकाशकत्वं तु तुल्यं, तथाच कर्मिण इव विदुषोऽपि प्रारब्धकर्माधीनव्यवहारो दुर्निवार इत्याह *किं बहूक्तेनेति

शक्तौ, त्वरहानिर्नश्येत्स्वाधिकारनिवृत्तितः ॥ ७५ ॥
अरतेरङ्कुरे भीतिः कुतो नोद्भवतीति चेत् ॥
भये नाधिकृतः किन्तु सृष्टाविति तदुत्तरम् ॥ ७६ ॥
नियामकोऽधिकारोऽतः क्वापि नातिप्रसञ्जनम् ॥
अतिप्रसङ्गभीरुः किमधिकारं नियच्छति ॥ ७७ ॥
ईश्वरोऽप्यनुसृत्यैव प्राणिकर्म जगत्सृजेत् ॥
नियन्तृत्वाभिलाषस्ते त्वं सामर्थ्यं वेत्सि नो वयम् ॥७८॥
आत्मक्रीड आत्मरतिरिति रत्यन्तरं श्रुतिः ॥
वारयेदिति चेत्तर्हि व्यवस्थाऽस्तु श्रुतिद्वये ॥ ७९ ॥
प्रबलारब्धविषयं विज्ञेयमरतेर्वचः ॥
इतरद् भ्रान्तिविषयरत्यन्तरनिवारकम् ॥ ८० ॥
विनाऽपि प्रबलारब्धमविवेकभ्रमार्पिताः ॥
ये रागास्ते विलीयन्ते विवेकेन न संशयः ॥ ८१ ॥

---

॥ ७५ ॥ प्रजापतेरेवंसति भयानुवृत्तेरपि सम्भवाज्ज्ञानात्तन्निवृत्तिकथनं वृथेत्याशङ्क्य प्रारब्धकर्मणां विचित्रफलत्वान्नेदं चोद्यं शोभत इत्याह *अरतेरित्यादिना । *भये नाधिकृत इति । भयानुवृत्तिहेतुप्रारब्धकर्म नास्तीत्यर्थः ॥ ७६ ॥ ७७ ॥ नियन्तुं न शक्यते कर्मेत्यत्र हेतुमाह *ईश्वर इति । एवंविधमपि कर्म नियच्छामीति वदतस्तव शक्तिं त्वमेव जानासि न वयमित्याह *नियन्त्रिति ॥ ७८ ॥ विदुषोऽपि दोषानुवृत्त्यङ्गीकारे श्रुत्यन्तरविरोधमाशङ्क्य परिहरति *आत्मेति ॥ ७९ ॥ व्यवस्थामेवाह *प्रबलेति । इतरद् आत्मरतिरित्यादिवाक्यं भ्रान्तिजन्यरागादिनिषेधपरमित्यर्थः ॥ ८० ॥ दुर्बलप्रारब्धप्रापितस्य भ्रान्तिप्रयुक्तस्य च रागादेर्भोगं विनाऽपि निवृत्तिः सम्भवतीत्याह *विनाऽपीति ॥ ८१ ॥ इममेवात्मानमित्यादेस्तात्पर्य-

प्रबलारब्धवेगेन कामुकः सन्प्रजापतिः ॥
एकं देहं स्वभोगार्थमसृजन्मिथुनात्मकम् ॥ ८२ ॥
तं द्वेधा ऽपातयद्देहमभूतां दम्पती उभौ ॥
मनुः पुमान् वधूर्ज्ञेया शतरूपाऽत्र नामतः ॥ ८३ ॥
तयोः सम्भोगतो जाता मनुष्या, दम्पती पुनः ॥
नानादेहाननुगृह्णीतां ताभ्यां द्वन्द्वानि जज्ञिरे ॥ ८४ ॥
गवाश्वरासभाजाविप्रमुखा आपिपीलिकम् ॥
प्राणिनो मिथुनात्मानो जाताः कर्मानुसारतः ॥८५॥

श्रुतिः—स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सहैतावानास यथा स्त्रीपुमाꣳसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत् ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्द्धबृगलमिव स्व इति ह स्माह याज्ञवल्क्यस्तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत्ततो मनुष्या अजायन्त ॥ ३ ॥

---

माह *प्रबलेत्यादिना ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

तस्मादेकाकीत्यादिश्रुतेरयमर्थः—कार्यनिष्ठारत्या कारणेऽप्यरतिरनुमेयेत्याह श्रुतौ *तस्मादिति । स प्रजापतिररत्यपनोदनाय द्वितीयं स्त्रीवस्त्वैच्छत् । सहैतावानिति सामान्यत उक्तमेव विवृणोति श्रुतिः *स यथेति । स प्रजापतिरात्मानं स्त्रीपरिष्वक्तं कल्पयित्वा लोके स्त्रीपुमांसौ सम्परिष्वक्तौ यथा यावत्परिमाणौ स्यातां तावत्परिमाणपिण्डवानास सङ्कल्पमात्रादित्यर्थः । स इमं स्त्रीपुम्परिमाणपिण्डमात्मानमात्मस्वरूपं द्वेधा अपातयत्, द्विधा कृतवान् । एवकारेणोत्पन्नपिण्डस्यैव द्विधाकरणं न स्वरूपस्येत्युक्तं भवति । ततो द्विधा पातनात्पतिश्च पत्नी चाभवताम् । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः ।

सो हेयमीक्षां चक्रे कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ताꣳ समेवाभवत्ततो गावोऽजायन्त वडवेतराऽभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्ताꣳ समेवाभवत्तत एकशफमजायत अजेतराऽभवद्बस्त इतरोऽविरितरा मेष इतरस्ताꣳ समेवाभवत् ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥

सोऽवेदहं वाव सृष्टिरस्म्यहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥

---

मनुः शतरूपा चाभवदित्यर्थः । यस्मात्स्त्री शरीरार्द्धं तस्मादिदं शरीरम्, स्व इति षष्ठ्यर्थे, स्वस्य पुंसो विवाहात्पूर्वमर्द्धबृगलमिव द्विधाकृतवेणुदलादिकमिव तिष्ठतीति ह स्म किल याज्ञवल्क्यनामा ऋषिः ह इति इत्थमाह स्म उक्तवान् । यस्मादयं स्त्रीशून्यः पुमानर्द्ध आकाशस्तस्माद्विवाहेन स्त्रिया स्त्र्यर्द्धेन पूर्यते तां स्त्रियं मन्वाख्यः प्रजापतिः समभवन्मैथुन्यमुपगतवान् ततस्तस्मादुपगमनात् मनुष्या अजायन्त ॥ ३ ॥ *सो हेयमिति । सा उ ह इयमिति छेदः । सेयं शतरूपा एवमालोचितवती मामात्मन एव जनयित्वा कथं नु सम्भवति जुगुप्सितं दुहितृगमनं कथं करोति । यद्यप्ययं निर्घृणः अहं हन्त इदानीं तिरोऽसानि जात्यन्तरेण तिरस्कृता भवामीत्येवमीक्षित्वा सा गौरभवदुत्पत्स्यमानप्राणिकर्मवशात् सोऽपि ऋषभो भूत्वा तां समभवदेव । बस्त इति मेषावान्तरजातिविशेषः ॥४॥ *सोऽवेदिति । स प्रजापतिरहं वाव अहमेव सृष्टिरस्मीत्यवेत् निश्चितवान् । सृष्टिशब्दः कर्म-

अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतस्तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽतिसृष्टिर्यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥

मुखबाहूरुपादेभ्यो वह्नीन्द्रवसुभूमयः ॥

---

व्युत्पत्त्या जगद्वचनः। स्वस्य जगद्भेदे हेतुमाह । अहं हीदं सर्वमसृक्षि सृष्टवानस्मि अतः स्वकार्यस्य स्वाभेदो युक्त इत्यर्थः । यतोऽहं सृष्टिरित्युवाच प्रजापतिस्तस्मात्सृष्टिनामाऽभवत् । य एवं सर्वं जगदहमेवेति वेद सोऽप्यस्य प्रजापतेरेतस्यां सृष्ट्यामेतस्मिन्जगति तद्वदेव स्रष्टा भवति ॥ ५ ॥ स प्राणिसृष्टेरनन्तरं तदनुग्राहकाग्न्यादिदेवताः सिसृक्षुरथेत्यभ्यमन्थत् । अथेतिशब्दद्वयमभिनयप्रदर्शनार्थम्। अनेन प्रकारेण मुखे हस्तौ प्रक्षिप्याभिमुख्येन मन्थनं कृतवानेवं कृत्वा मुखाच्च योनेर्हस्ताभ्यां च योनिभ्यामग्निमसृजत तस्माद्दाहकार्यग्नियोनित्वादेतदुभयं हस्तौ मुखं चान्तरतो लोमवर्जितम् । प्रसिद्धयोन्या च साम्यमाह *अलोमकेति । अलोमका हि योनिरन्तरतः स्त्रीणाम् ।

यद्यप्यत्र ब्राह्मणदेवताया अग्नेरेव मुखादुत्पत्तिरुक्ता, तथापि क्षत्रादिदेवतासर्गं वक्ष्यमाणं बुद्धिसौकर्या योक्तवदुपसंहरते तद्यदिदमित्यादिश्रुतिरित्याह वार्त्तिककारः *मुखे-

देवता असृजद्ब्रह्मा चातुर्वर्ण्यनियामिकाः ॥ ८६ ॥
तत्रेन्द्रादीन् भिन्नदेवान्मन्यन्ते यागभूमिषु ॥
कर्मिणस्तदसज्ज्ञेयं विराडेवाखिला इमे ॥ ८७ ॥
अविद्वदधिकारित्वात्कर्मणां भिन्नदेवताः ॥
उच्यन्तां कर्मकाण्डेन वस्तुतस्तु न तत्तथा ॥ ८८ ॥
विराजो जीवतामाहुः केचिदन्ये परात्मताम् ॥
उभयं युक्तमेवैतद्विवक्षाया विशेषतः ॥ ८९ ॥
सोपाधिकाविवक्षायां जीव एव विराड् भवेत् ॥
निरुपाधिविवक्षायां परमात्मैव नेतरः ॥ ९० ॥
वयमप्येवमेवेति यद्युच्येत तथाऽस्तु तत् ॥
सृष्ट्वा विराड्भोक्तृवर्गं भोग्यमन्नमचीक्लृपत् ॥९१॥

---

ति ॥ ८६ ॥ तात्पर्यमुक्त्वाऽक्षरार्थमाह*तत्रेति ॥ ८७ ॥

तत्र कर्मप्रकरणे यदिदं वचनमाहुरमुमग्निममुमिन्द्रं यजेत्यादिना एकैकमन्यमन्यमित्यर्थः ॥ तत्र यस्मात्पूर्वोक्ता द्विविधा सृष्टिरग्न्याद्या एतस्य विराज एव स्वरूपं तस्मादेष विराडेव सर्वे देवाः कार्यकारणयोरभेदादेकैव देवतेति भावः ।

आत्मव्यतिरिक्तस्य कल्पितत्वात्तद्व्यतिरिक्तदेवतान्तरं नास्तीति पक्षान्तरमाह *अविद्वदिति ॥८८॥८९॥९०॥ *वयमिति । न चास्मदादितुल्यत्वे विराजः श्रुत्यादिषु कथं प्रायेण परत्वकथनमिति वाच्यम् । परस्य रजउपाधिकस्य प्रजापतिशरीरे विशेषतोऽभिव्यक्तत्वादिति दिक् । अथ यदित्यादेरर्थमाह *सृष्ट्वेति ॥ ९१ ॥

अथ भोक्तृसृष्ट्यनन्तरं यत्किञ्चेदं लोके आर्द्रात्मकं तद्रेतःसकाशादसृजत । अत्र प्रसङ्गात्किञ्चिदुपासनं विधत्ते, तद्द्रवा-

पूर्वजन्मनि मर्त्यः सन्कृत्वाऽसौ ज्ञानकर्मणी ॥
अमृतानसृजद्देवान्यद्यप्येतन्महाद्भुतम् ॥ ९२ ॥
सृष्ट्वाऽखिलमवेत्सृष्टमहमस्म्यखिलं जगत् ॥
ईदृशो महिमा ज्ञेयः कृतयोर्ज्ञानकर्मणोः ॥ ९३ ॥
वर्णितेत्थं प्रयत्नेन ज्ञानकर्मफलोर्जितिः ॥
उपासितुः प्रवृत्त्यर्थं निवृत्त्यर्थं मुमुक्षतः ॥ ९४ ॥
सृष्टयैश्वर्ये स्वतन्त्रत्वं तत्कामी बहु मन्यते ॥

---

त्मकं सर्वं सोमः एतावद्वा इदं सर्वमन्नं चैवान्नादश्च नातोऽधिक-मस्ति । तथाच यद्यदद्यते तदन्नं सोम एवेति चिन्तयेत् । य एवान्नादो अत्ता सोऽग्निरेवेति चिन्त्यः । एवमग्नीषोमात्मकं जगदिति ध्यायन्न केनचिद्दोषेण लिप्यते इति भावः । सैषा देवसृष्टिर्ब्रह्मणोऽतिसृष्टिः । तत्र हेतुर्यच्छ्रेयस इति । यद्यस्माच्छ्रे-यसोऽतिप्रशस्तान्देवानसृजत तस्मादियमतिसृष्टिरित्यर्थः । तत्रैव पक्षान्तरमाह श्रुतिः *अथेति । अथवेत्यर्थः ।

प्रजापतेर्देवत्वात्कथं मनुष्यत्वमिति शङ्कां परिहरन्नुक्तश्रुतिं व्याचष्टे *पूर्वेति । यद्यपीत्यत्रापिरवधारणे । यदि यत् एतदे-वाद्भुतम्, अतिसृष्टिरित्यर्थः ॥ ९२ ॥
देवसृष्टिं स्तुत्वा तच्चिन्तनफलमाह श्रुतिः *अतिसृष्ट्यामिति ॥६॥

अस्य वाक्यस्य सो ऽवेदहमिति पूर्वोक्तवाक्येन तुल्यार्थतां मन्वानस्तद्वाक्यार्थमाह *सृष्ट्वाऽखिलमिति । उक्तां विराड्विभूति-मुपसंहरति *ईदृश इति ॥ ९३ ॥ ननु ब्रह्मप्रकरणे श्रुत्यां विराड्विभूतिः किमर्थमुक्ता ? तत्राह *वर्णितेति । उपासितुः क्रम-मुक्तिकामस्य ॥ ९४ ॥ ननु सर्वसृष्टौ विराजः स्वातन्त्र्यकथने मुमुक्षोरपि तत्साधने प्रवृत्तिरेव स्यान्न निवृत्तिरित्यत आह

दोषानेव विवेक्यत्र बहूनुत्प्रेक्षते धिया ॥ ९५ ॥
अविद्यापटसंवीतचक्षुषामियदेव हि ॥
वैदिकं साधनं ज्ञेयं ज्ञानकर्मस्वभावकम् ॥ ९६ ॥
तच्च कर्मादिसापेक्षं विरिञ्चयन्तफलप्रदम् ॥
जन्मादिविक्रियाषट्कयुक्तं सातिशयं जडम् ॥९७॥
दुःखानि च विचित्राणि सन्त्येतद् बहुजन्मसु ॥
अनेकक्लेशयुक्तेन दुर्लभं तपसा विना ॥ ९८ ॥
कथं चित्साधितेऽप्यस्मिन्परानन्दघनं प्रभुम् ॥
अन्तर्भाव्य विराट्पिण्डे स्थातव्यं हि जुगुप्सिते॥९९॥
न केवलं पिण्डवासस्तादात्म्यं चाभिमानिना ॥
ततो भयं भक्षणाय पितुर्मुखविदारणात् ॥ १०० ॥
चण्डालानां च नेयं भीः किन्तु पन्नगजन्मनः ॥
को भेदः स्याद्विराड्जन्मन्युरगात्पुत्रभक्षिणः॥१०१॥
कृच्छ्राद्भये प्रशान्तेऽपि जग्राहाथारतिग्रहः ॥
क्रियमाणे प्रतीकारे गर्दभादिशरीरताम् ॥ १०२ ॥
एकयोनौ सकृज्जातः क्लेशं सोढुं न शक्नुयात् ॥
अनन्तयोनिष्वसकृज्जायमानस्य का कथा ॥ १०३ ॥

---

*सृष्ट्यैश्वर्य इति । मुमुक्षोरतिनिर्मलचित्तत्वाद्वक्ष्यमाणदोषाननुसन्धाय ततो निवृत्तिः सम्भवतीत्यर्थः ॥ ९५ ॥ तत्र दोषोत्प्रेक्षाप्रकारमाह *अविद्येत्यादिना ॥ ९६ ॥ ९७ ॥ एतद् बहुजन्मसु एतदर्थं विराट्प्राप्त्यर्थम् अनेकजन्मसु, स्वीक्रियमाणेष्विति शेषः ॥ ९८ ॥ ९९ ॥ १०० ॥ १०१ ॥ *अथारतिग्रह इति । अथ भीनिवृत्तिक्षण इत्यर्थः ॥ १०२ ॥ १०३ ॥

निस्तरेद्विद्यया चेत्किं वक्रबन्धप्रयासतः ॥
अथ विद्यामुपेक्ष्योर्ध्वं किं विद्यां प्रार्थयिष्यते॥१०४॥
क्लेशेन महतोपास्य बहुयोनिं प्रविश्य च ॥
विद्यान्वेषणतः श्रेय इदानीमेव वेदनम् ॥ १०५ ॥
एवं विचार्य बहुशस्तूर्णमेव मुमुक्षति ॥
निवृत्तः सर्वबाह्यार्थात्प्रमेयं मातुमर्हति ॥ १०६ ॥
अधिकारी साधितः स्यादेवं फलविचारतः ॥
तेन प्रमातुं यद्योग्यं तदिदानीं निरूप्यते ॥ १०७ ॥
ननु शास्त्रं प्रमाणत्वात्प्रमापयतु वस्तु तत् ॥
प्रमातुं योग्यता त्वादौ यत्नेन किमितीर्यते ॥ १०८ ॥
न कर्मशास्त्रं यत्नेन कर्मणो मानयोग्यताम् ॥
कचिद् ब्रूते तथा साऽत्र न वक्तव्येति चेन्न तत्॥१०९॥

---

विराजः "सहसिद्धं चतुष्टयम्" इति वचनेन ब्रह्मज्ञानावश्यम्भावात्तेन सर्वदुःखनिवृत्तिर्भवति "तत्र को मोहः कः शोकः" इति श्रुतेरित्याशङ्क्य, हन्त तर्हि ब्रह्मज्ञानमेव सम्पादनीयं विराट्प्राप्तिप्रयुक्तसुखस्यापि ब्रह्मानन्दलेशत्वादिति मत्वाह * निस्तरेदित्यादिना। अथ विद्यामित्यत्राथशब्देन वैदिककर्मप्रवृत्त्यनन्तरभाव्युपासनकाल उच्यते । ऊर्ध्वं विराट्प्राप्त्यनन्तरम् ॥ १०४ ॥ *बहुयोनिमिति। उपास्तेर्बहुजन्मसाध्यत्वादिति भावः ॥१०५ ॥१०६॥ फलितमर्थं दर्शयन्नुत्तरग्रन्थस्य पूर्वेण सम्बन्धमाह * अधिकारीति ॥ १०७ ॥ नन्वधिकारिणः पुमर्थो वाच्यः न तु प्रमातुं योग्यत्वं मानस्य मेयबोधकत्वस्वाभाव्यात् । कर्मशास्त्रे तथा दृष्टत्वाच्च । अतः तद्वेदमित्यादिवाक्यमसङ्गतमित्याक्षिपति । * नन्वित्यादिना ॥ १०८ ॥ १०९ ॥ वैधर्म्येण प-

कर्मशास्त्रव्यवहृतिर्लौकिकव्यवहारवत् ॥
साध्यसाधनरूपेण प्रसिद्धा न विलक्षणा ॥ ११० ॥
वेदान्तप्रतिपाद्यं तु न साध्यं नापि साधनम् ॥
अलौकिकत्वात्पुम्बुद्धिर्नैतत्सम्भावयत्यपि ॥ १११ ॥
सम्भावितः प्रतिज्ञायां पक्षः साध्येत हेतुना ॥
इति न्यायेन तन्मेयमादौ सम्भाव्यते श्रुतौ ॥ ११२ ॥
उपादेयस्य मेयस्य वाच्या सम्भावना यथा ॥
हेयसंसारहेतुश्च वक्तव्यो यत्नतस्तथा ॥ ११३ ॥
संसाराख्यमहाव्याधेः किं मूलमिति चिन्तिते ॥
तद्ध्वस्तये चिकित्सेयं तदा फलवती भवेत् ॥११४॥
अविज्ञातनिदानेन भिषजा यच्चिकित्सितम् ॥
तद् अनर्थकरं यद्वत्प्रकृतेऽप्यवगम्यताम् ॥ ११५ ॥
मायामूलं द्वैतमेतदित्यज्ञाते कथं त्विदम् ॥

---

रिहरति * न तदित्यादिना । * साध्येति । व्रीह्यादिसाधनस्य तत्साध्यक्रियायास्तन्निष्ठेष्टसाधनत्वस्य च दृष्टसजातीयत्वादित्यर्थः । नापि साधनं, वस्तुत इति शेषः ॥ ११० ॥ १११ ॥ सम्भावितेऽर्थे एव मानं प्रवर्त्तत इत्यत्राभियुक्तसम्मतिमाह*सम्भावित इति । पर्वतो वह्निमानित्युक्ते तत्र वह्नेः सम्भावितत्वेन हेत्वाकाङ्क्षायां धूमवत्त्वादिना वह्निः साध्यते, नैवं ह्रदादाविति भावः । किञ्चास्मिन्वाक्येऽव्याकृतमित्यज्ञानमप्युच्यते ॥ तच्चावश्यं वक्तव्यं तन्मूलकसर्वानर्थनिरासाय, तस्मादपीदं वाक्यमत्र सङ्गतमित्याह *उपादेयस्येत्यादिना॥११२॥११३॥११४॥११५॥ अद्वैतं बुद्धिं कथमारोहेन्न कथञ्चिदित्यर्थः । अद्वैते बुद्ध्यनारूढे दोषमाह *स्यादत इति । अतोऽद्वैतादन्यत्र द्वैते आकुलः स्यादि-

अद्वैतं बुद्धिमारोहेत्स्यादतोऽन्या तु नैव धीः ॥११६॥
देहादृष्टक्रियाकर्तृरागाध्यासार्थसप्तकात् ॥
द्वारा संसारहेतुः स्यादात्माज्ञानं तु लोकवत् ॥११७॥
आत्माज्ञानमनर्थानां मूलं लोकेऽपि नेतरत् ॥
स्वपराक्रममज्ञात्वा युध्यन्म्रियत एव हि ॥ ११८ ॥
एवं स्वात्मानमज्ञात्वा संसारानर्थमाप्नुयात् ॥
अनर्थाज्ञानयोः कार्यकारणत्वं प्रपञ्च्यते ॥ ११९ ॥
जिहासितस्यानर्थस्य हेतुः स्यात्सशरीरता ॥
न प्रियाप्रियविच्छेदः सशरीरस्य कस्य चित् ॥१२०॥
धर्माधर्मौ च देहस्य योनिरित्यागमोऽब्रवीत् ॥
विहितं प्रतिषिद्धं च कर्म मूलं तयोरपि ॥ १२१ ॥
कर्तुरेव भवेत्कर्म रागद्वेषाच्च कर्तृता ॥
शोभनाशोभनाध्यासौ रागद्वेषप्रयोजकौ ॥ १२२ ॥

---

त्यर्थः ॥११६॥ अज्ञानं नानर्थहेतुः स्वापादौ तस्य तद्धेतुत्वाद-
र्शनादित्याशङ्क्य शरीरादिद्वाराऽनर्थहेतुत्वमाह *देहेति । द्वारस-
प्तकं स्वयमेव वक्ष्यति ॥ ११७ ॥ लोकवादित्युक्तं दृष्टान्तं सदा·
र्ष्टान्तिकं स्फुटयति *आत्मेत्यादिना ॥ ११८ ॥११९॥ तत्रा-
ज्ञानस्य देहद्वाराऽनर्थहेतुत्वं तावत् दर्शयति *जिहासितस्येति ।
हातुमिष्टस्यानर्थस्य दुःखस्य ॥ १२० ॥ अदृष्टशब्दितधर्मादेर्देह·
हेतुत्वमाह *धर्मेति । आगमः–यथाकर्म यथाश्रुतमित्यादिः ।
क्रियाया धर्माधर्महेतुत्वमाह *विहितमिति ॥१२१॥ कर्तृत्वस्य
क्रियाहेतुत्वमाह *कर्तुरिति । कृतिमत्त्वरूपकर्तृत्वे रागादेर्हेतु-
त्वमाह *रागेति । अध्यासशब्दितसङ्कल्पादे रागादिहेतु-
त्वमाह *शोभनेति ॥ १२२ ॥ तत्रापि स्वातिरिक्तार्थसद्भाव-

उक्ताध्यासोऽप्यन्यवस्तुसद्भावात्स्यान्न चान्यथा ॥
वस्त्वन्तरस्य सद्भाव आत्माज्ञानेन कल्पितः ॥१२३॥
एवं देहादिवस्त्वन्तससक्त्व्यवधानतः ॥
संसारानर्थहेतुः स्यादात्माज्ञानं जगत्सृजत् ॥ १२४ ॥
प्रत्यग्याथात्म्यसंमोहाज्जगत्सदिव भासते ॥
प्रत्यग्याथात्म्यसम्बुद्धौ न सत्तन्नासदुच्यते ॥ १२५ ॥
अशेषानर्थरूपस्य प्रत्यगज्ञानरूपिणः ॥
ध्वस्तौ ध्वस्तिरनर्थानामानन्दश्च समाप्यते ॥ १२६ ॥
निरस्तातिशयानन्दरूपता प्रत्यगात्मनः ॥
यो वै भूमा तत्सुखं स्यादित्यादिश्रुतिसम्मता ॥ १२७॥
स्वत आनन्दयाथात्म्येऽप्यबोधाद् दुःखसंप्लुतिः ॥
स बोधोऽनर्थहेतुत्वान्निर्देष्टव्यश्चिकित्सितुम् ॥ १२८॥
अबुद्धमात्मनस्तत्त्वं प्रमातुं योग्यमागमैः ॥
निर्देष्टव्यं तदप्यत्र सम्भावयितुमञ्जसा ॥ १२९ ॥

---

धीमूलमित्याह *उक्तेति ॥ तत्राज्ञानं हेतुरित्याह *वस्त्वन्तरस्येति ॥ १२३ ॥ उपसंहरति *एवमिति ॥ जगत्सृजत्—जगदात्मनि कल्पयदज्ञानं तद्द्वारा दुःखहेतुः स्यादित्यर्थः ॥ १२४ ॥ एवमज्ञानस्य दुःखहेतुत्वमुक्त्वा तन्निवृत्त्या सर्वानर्थनिवृत्तिमाह *प्रत्यगित्यादिना । न केवलतन्निवृत्त्या सर्वानर्थनिवृत्तिः किन्तु निरतिशयानन्दावाप्तिरित्याह *आनन्दश्चेति ॥१२५॥१२६॥ आत्मन उक्तसुखरूपत्वे श्रुतिं प्रमाणयति । *निरस्तेति ॥१२७॥ आत्मनः सुखरूपत्वेऽप्यारोपितदुःखप्रतीतिरुपपद्यत इत्याह *स्वत इति ॥ अज्ञानस्यात्र वक्तव्यत्वम् अज्ञातवस्तुन आगमैः प्रमातुं योग्यतायाश्च निर्देष्टव्यत्वमुक्तं क्रमेणोपसंहरति *स इत्यादिना ॥ १२८ ॥ १२९ ॥ ननूभयं वक्तव्यं चेदत्र केन पदेन

तमबोधं तच्च मेदमव्याकृतगिरा श्रुतिः ॥
निरदिक्षच्छ्रुतिः सा तु न्यायेनात्र विचार्यते ॥ १३० ॥
तद्धेदं तर्ह्यविस्पष्टमासीदव्याकृताभिधम् ॥
इत्येतस्मिञ्छ्रौतवाक्ये पदार्थस्तावदीर्यते ॥ १३१ ॥
अज्ञातात्मावशेषेण लीनं ब्रह्मस्वरूपधृक् ॥
तच्छब्देन जगत्प्रोक्तं परोक्षार्थाभिधायिना ॥१३२॥
अव्याकृतस्य जगतो भूतकालाभिसङ्गतेः ॥
बुभुत्सुं प्रति पारोक्ष्यात्तच्छब्दस्तत्र युज्यते ॥१३३॥
ऐतिह्यार्थे हशब्दः स्यात्सुखेनार्थावबुद्धये ॥
तर्केणोक्तौ धियः क्लेशः परमाण्वनुमानवत् ॥ १३४ ॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥
नाप्रतिष्ठिततर्केण गम्भीरार्थस्य निश्चयः ॥ १३५ ॥
नामरूपादिविकृतं पराज्ञानेन भासितम् ॥
इदंशब्देन निखिलं जगदेतदुदीर्यते ॥ १३६ ॥
सामानाधिकरण्येन तदिदम्पदयोः श्रुतम् ॥

---

तदुच्यत इति तदाह *तमबोधमिति । निरदिक्षत् निर्दिष्टवती । *न्यायेनेति । पदार्थकथनानन्तरमिति शेषः ॥ १३० ॥ एवं वाक्यसङ्गतिमुक्त्वा वाक्यस्थपदानि व्याख्यातुमुपक्रमते*तद्धेदमिति ॥ १३१ ॥ तत्पदार्थमाह *अज्ञातेति ॥ १३२ ॥ कथं जगतो यथोक्तस्य परोक्षत्वं ? तत्राह *अव्याकृतस्येति ॥१३३॥ निपातार्थमाह ॥ *ऐतिह्येति ॥१३४॥ न केवलं तर्कोक्तौ धियः क्लेशः, तेनातर्क्यब्रह्मावशेषं जगन्न सिद्ध्यति चेत्याह* अचिन्त्या इति ॥ अतः परोक्षस्य सुखधीरैतिह्याधीनेति तदेव वक्तव्यमिति भावः ॥ १३५ ॥ इदंशब्दार्थमाह । *नामेति ॥ १३६ ॥

कार्यकारणयोरैक्यं व्याकृताव्याकृतात्मनोः ॥ १३७॥
एकस्य जगतोऽवस्थे व्याकृताव्याकृतात्मिके ॥
अवस्थयोर्विभेदेऽपि तद्धर्मी न हि भिद्यते ॥ १३८ ॥
बाल्ययौवनभेदेऽपि देवदत्तो न भिद्यते ॥
ततो जगदभेदेन सामानाधिकरण्यधीः ॥ १३९ ॥
नामरूपाद्यभिव्यक्तेः प्राक्तनः काल उच्यते ॥
तर्हीत्यनेन शब्देन, स कालो लोककल्पितः ॥१४०॥
यद्यप्यव्याकृते कालव्यक्तिर्नास्ति तथाऽप्यमी ॥
लोकाः प्रलयकालत्वव्यवहारं प्रकुर्वते ॥ १४१ ॥
जगतोऽप्यनभिव्यक्तिरव्याकृतगिरोच्यते ॥
न जगत्प्रागवस्थायां व्यक्तं गर्भस्थपुत्रवत ॥ १४२ ॥
आसीदिति च सत्त्वमधिष्ठानतयोदितम् ॥
तथाच भावरूपत्वाज्जगद्व्याकृतिमर्हति ॥ १४३ ॥
अव्याकृतं च वस्त्वेवमवतार्यास्य वर्णिताः ॥
पदार्था, अथ वाक्यार्थो न्यायेनैव निरूप्यते ॥ १४४ ॥

---

पदद्वयसामानाधिकरण्यफलमाह *सामेति ॥ १३७ ॥ कार्यकारणयोरत्यन्ताभेदे कारकव्यापारवैयर्थ्यादिदोषमाशङ्क्याह *एकस्येति ॥ १३८ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति *बाल्येति ॥ १३९ ॥ तर्हिपदार्थमाह *नामेति । अविद्योपहितचिद्व्यतिरेकेण तन्निष्ठकाले मानाभावात्कथमनेन पदेन तदुक्तिरित्यत्राह *स काल इति ॥ १४० ॥ १४१ ॥ अवशिष्टपदयोरर्थमाह *जगत इत्यादिना ॥ १४२ ॥ जगत उत्पत्तेः प्रागधिष्ठानसदात्मनाऽवस्थाने फलितमाह *तथाचेति ॥ १४३ ॥ १४४ ॥ प्रतिज्ञातमर्थं निरूपयितुं सिद्धान्त्यभिम-

नन्वव्याकृतवस्त्वत्र वाक्यार्थस्तस्य च त्वया ॥
प्रमेयत्वं कारणत्वमित्याकारावुभौ मतौ ॥ १४५ ॥
आस्तां कारणताऽऽकारः प्रमेयत्वं निरूपय ॥
अज्ञात आत्मा मेयश्चेन्नाज्ञानस्यानिरूपणात् ॥ १४६॥
ज्ञानाभावः किमज्ञानं किंवा ऽनिर्वाच्यरूपभृत् ॥
आद्ये तवापसिद्धान्तो द्वितीये तु न सम्भवः ॥१४७॥
अनिर्वाच्यं किमज्ञानं मीयतेऽथ न मीयते ॥
आद्ये मानानिवर्त्यं स्यान्नेतरस्तदसिद्धितः ॥ १४८ ॥
अप्रमेयं तदज्ञानं भासते वा न भासते ॥
भानं च किं स्वतःसिद्धमात्मचैतन्यतोऽथ वा ॥१४९॥
जडस्य न स्वतो भानमात्माऽप्येतन्न भासयेत् ॥
तद्भासनेऽस्य तत्सङ्गादसङ्गत्वं विहन्यते ॥ १५० ॥
विधूताशेषसम्बन्धम् अनन्यानुभवात्मकम् ॥
कूटस्थसंविन्मात्रैकं ब्रह्मात्मेति मतं तव ॥ १५१ ॥
स्वतोऽवबुद्धं तद्यस्मान्निराविद्यमतः सदा ॥

---

तार्थानुवादपूर्वकमाक्षेपमवतारयति *नन्वित्यादिना ॥ १४५ ॥ *निरूपयेति । तच्च दुर्निरूपमिति भावः। दुर्निरूपत्वासिद्धिं शङ्कते *अज्ञात इति । अज्ञाने निरूपिते तद्विशिष्ट आत्मा वेदान्तप्रमेयः स्यात्, तदेव दुर्निरूपं विकल्पासहत्वादित्याह *नेत्यादि॥१४६॥ ॥१४७॥ अनिर्वाच्यमिथ्याज्ञानस्यासम्भवं प्रकटयितुं विकल्प्य दूषयति *अनिर्वाच्यमित्यादिना ॥ आत्मभास्यमज्ञानमिति पक्षे ऽप्यात्मा स्वसम्बद्धं भासयति असम्बद्धं वा ? अन्त्येऽतिप्रसङ्गात्वाऽऽद्यं दूषयति *तद्भासने इति ॥१४८॥१४९॥१५०॥ आत्मनो ऽसङ्गत्वानङ्गीकारे ऽपसिद्धान्तमाह *विधूतेति ॥ १५१ ॥

सङ्गतिर्निरविद्यस्य नाविद्याजनितैर्मलैः ॥ १५२ ॥
नातोऽसङ्गेन भातं तदभातं तु न सिध्यति ॥
नैष्फल्याच्च तदज्ञानं नैव कल्प्यं चिदात्मनि ॥१५३॥
अतिरोभूतसंवित्कः सदाऽनस्तमयोदयः ॥
निःसामान्यविशेषोऽयं तत्राज्ञानेन किं फलम् ॥१५४॥
अत्रोच्यते किमज्ञाने विचारासहतोच्यते ॥
किंवा स्वानुभवाभाव आद्यः सिद्धान्त एव मे ॥१५५॥
अविचारितसंसिद्धिमविद्यां ब्रूम आत्मनि ॥
स्वभावव्यतिरेकाभ्यां ध्वान्तसिद्धेरसम्भवात् ॥१५६॥
न चिदात्मस्वभावः स्यादविद्या जाड्यरूपतः ॥

---

आत्मनः स्वप्रकाशत्वाङ्गीकाराच्च न तत्राविद्यातत्कार्यसम्बन्ध इत्याह *स्वत इति ॥ १५२ ॥ फलितमाह *नात इति । यतोऽसङ्गे ज्ञानं नास्त्यतोऽसङ्गेनात्मना तन्न भातमित्यर्थः । न भासत इति पक्षं दूषयति *अभातमिति । किञ्चाज्ञाने कल्पिते प्रकाशलोपो वाच्यः, स च न सम्भवति, तस्य नित्यत्वात् अतः कल्पितमप्यज्ञानं वृथैवेत्याह *नैष्फल्यादिति ॥ १५३ ॥ अज्ञानस्य स्वरूपसंविदावरकत्वान्न नैष्फल्यमित्याशङ्क्य, संवित्सामान्यमावृणोति उत तद्विशेषं वा ? नाद्यः, तस्य सदाऽहमिति अवगतेरित्याह *अतिरोभूतेति । द्वितीयं निराह *निःसामान्येति ॥ १५४ ॥ सर्वानुभवसिद्धमज्ञानं युक्त्या दुरपह्नवमिति समाधत्ते *अत्रोच्यत इति ॥ किम् उक्तरीत्या विचारासहत्वमात्रमुच्यते उतानुभवाभावोऽपीति विकल्पार्थः ॥ १५५ ॥ स्वसिद्धान्तमेव प्रकटयति *अविचारितेति । तत्र हेतुः *स्वभावेति । आत्माभिन्नतया, तद्भिन्नत्वेन, स्वतन्त्रतया वा तदसिद्धेरित्यर्थः॥१५६॥

नापि चात्मातिरेकेण स्वतः सिद्ध्यति जाड्यतः ॥१५७॥
न द्वितीयो यतः स्वात्मन्यविद्यैषाऽनुभूयते ॥
स्वानुभूतिर्न वेद्मीति दृष्टा प्रागैक्यबोधतः ॥ १५८ ॥
विधूताशेषसम्बन्धमित्यादि यदुदीरितम् ॥
तत्तथैवाभ्युपैम्यत्र नासङ्गे विवदामहे ॥ १५९ ॥
निरविद्योऽप्यसङ्गोऽयमज्ञानः स्यात्स्वभावतः ॥
तमोवृत्तमपेक्ष्यैव न तु वास्तववृत्ततः ॥ १६० ॥
यादृग्वस्तुनि मर्यादा न तादृक् स्यात्तमस्यसौ ॥
दृश्यते स्वशिरश्छेदो निद्राणेन तमस्विना ॥ १६१ ॥
वस्तुमर्यादया स्वात्मा निरविद्योऽपि सन्नसौ ॥
तमोमर्यादया कस्मात्साविद्यो न भविष्यति ॥१६२॥
मर्यादयोर्यदि ज्ञातुं नियामकमिहेच्छसि ॥

---

एतदेव स्फुटयति *नेति ॥ १५७ ॥ अनुभवाभावमसिद्ध्या दूषयति *न द्वितीय इति । अनुभवमभिनयति *स्वेति ॥ १५८ ॥ यदुक्तमात्मनोऽसङ्गत्वं तदङ्गीकरोति *विधूतेति ॥ १५९ ॥ निरविद्यस्यापि कल्पिताविद्याश्रयत्वमविरुद्धमित्याह *निरविद्य इति । स्वभावत इत्युक्तं हेतुं व्याकरोति *तम इति । ब्रह्मणो वस्तुतः शुद्धत्ववत्कल्पिताज्ञानवत्त्वमपि स्वभाव इति भावः ॥ १६० ॥ सत्यवस्तुनि या मर्यादा सा कल्पिते नास्तीत्यत्र दृष्टान्तमाह *दृश्यत इति ॥ १६१ ॥ *वस्त्विति । विरुद्धस्वभावयोरपि भिन्नसत्ताकयोरेकवृत्तित्वं युक्तमिति भावः ॥ १६२ ॥ उक्तमर्यादाभेदे वा किं नियामकम् ? इत्याशङ्क्य प्रतिबन्द्योत्तरयति *मर्यादयोरित्यादिना । *नीरादाविति । किञ्चिज्जलं हिमकरकादिरूपं कठिनं, किञ्चिद् द्रवात्मकं,

द्रवकाठिन्ययोस्तर्हि नीरादौ तदुदीर्यताम् ॥ १६३ ॥
तादृक्स्वभावभेदश्चेत्समोऽसौ ब्रह्ममाययोः ॥
स्वभाववादापत्तिश्च समानैवावयोर्द्वयोः ॥ १६४ ॥
अनुभूत्या समाधानमुभयोरपि तत्समम् ॥
एवं च युक्तिहीनत्वं शङ्कितुं च न शक्यते ॥ १६५ ॥
वस्तुस्वभावानुभवावनुसृत्योपपाद्यते ॥
यन्मतं युक्तियुक्तं तद्ब्रह्मवादश्च तादृशः ॥ १६६ ॥
तर्हि स्वभाववादोऽयं कुतो विप्रैर्निषिध्यते ॥
धर्माधर्मस्वभावस्य लङ्घनादिति विद्धि भोः ॥ १६७ ॥
स्वभावो लौकिको यद्वद्वैदिकोऽपि तथा यदि ॥
चार्वाकेणाभ्युपेतः स्यान्नासौ दूष्यस्तथासति ॥१६८॥
ब्रह्मणो निरविद्यत्वस्वभावस्त्वनुभूयते ॥
ज्ञातात्मतत्त्वो जानाति त्रिकालं निरविद्यताम्॥१६९॥
अविद्यायाः स्वभावश्च ब्रह्मावरणलक्षणः ॥

---

तत्र नियामकवदेवेत्यर्थः॥१६३॥१६४॥१६५॥१६६॥नन्वेवंसति स्वभावमनुभवं चानुसरतश्चार्वाकस्य मतं युक्तियुक्तत्वाद्वैदिकैः किमर्थं निषिध्यत इति पृच्छति * तर्हीति । वेदस्वभावातिलङ्घनादित्याह * धर्मेति ॥ १६७ ॥ यदि लोकस्वभाववद्वेदोऽप्यन्वयव्यतिरेकाद्यसिद्धहितसाधनत्वबोधकस्वभाव इति तेनाङ्गीकृतः स्यात्तदा स न दूष्यत एवेत्याह *स्वभाव इति ॥१६८ ॥ ब्रह्मणः शुद्धस्वभावत्वमसिद्धं तथाऽनुपलम्भादित्याशङ्क्यासिद्ध्या दूषयति * ब्रह्मण इति ॥ १६९ ॥ विद्वदनुभवसिद्धं ब्रह्मस्वभावमुक्त्वा ऽविद्वदनुभवसिद्धोऽविद्यास्वभाव इत्याह *अविद्याया इति ॥ १७० ॥ ब्रह्मणः स्वप्रकाशत्वेन सदा प्रकाश इति

अनुभूयत एवेह प्राकृतैरखिलैर्जनैः ॥ १७० ॥
अत एव न वैफल्यमविद्यायाश्चिदात्मनि ॥
अतिरोभूतसंवित्त्वादिकं तत्त्वविदां दृशा ॥ १७१ ॥
इत्थमात्मा स्वतोऽसङ्गोऽप्यविज्ञातो ऽनुभूतितः ॥
सिद्धोऽस्यार्थस्य दार्ढ्यार्थमनुभूतिः परीक्ष्यते ॥ १७२॥
ननु कैषाऽनुभूतिः स्याद्याऽविद्यायाः प्रसाधिका ॥
किं मानजन्या धीवृत्तिश्चिदात्मा वाऽथ वेतरः॥१७३॥
नाद्यो नामाद्यभिव्यक्तेः प्राग्धीवृत्तेरसम्भवात् ॥
ऊर्ध्वं च मानहेयत्वान्न मानेन प्रमीयते ॥ १७४ ॥
किञ्च मात्राद्युपादाने कथं मानं प्रवर्त्तते ॥
अव्याकृतैकदेशत्वाच्चाविद्यायां कुतो मितिः ॥१७५॥

---

व्यवहारसामग्र्यां सत्यां न प्रकाशत इति विपरीतव्यवहारद-र्शनेन तद्योग्यत्वलक्षणावरणसिद्धौ फलितमाह *अत एवेति । यदुक्तं चित्सामान्ये तद्विशेषे वाऽऽवरणं न सम्भवतीति तत्राह *अतिरोभूतेति । संवित्सामान्यप्रतीतावप्यखण्डानन्दात्मत्वे-नाप्रतीतेर्विद्वद्दृष्ट्या निःसामान्यविशेषस्याप्यज्ञदृष्टिकल्पितविशे-षांशसम्भवात्तत्रावरणमुपपद्यत इति भावः॥१७१॥१७२॥अज्ञान-साधकानुभूतिं निर्णेतुं शङ्कामुत्थापयति *नन्विति ॥ १७३ ॥ आद्येऽपि नामरूपात्मनाऽभिव्यक्तेः पूर्वं धीवृत्तिरविद्यां साधयति ऊर्ध्वं वा ? नाद्यः, अव्याकृतस्यातीन्द्रियत्वेनाक्षमानाविषयत्वा-दित्याह *नामादीति ॥ द्वितीयं निराह *ऊर्ध्वमिति ॥ घटादि-वद्धेयस्तदज्ञाननिवर्त्तकत्वदृष्टेरिति भावः ॥ १७४ ॥ धीवृत्तिमा-त्रस्याज्ञानासाधकत्वे युक्त्यन्तरमाह *किञ्चेति ॥ प्रमात्रादि-विभागात्पूर्वं सुप्तौ प्रमितेरेवायोगादिति भावः । तत्रैव हेत्वन्त-रमाह *अव्याकृतेति ॥ १७५ ॥ अव्याकृतैकदेशस्य मेयत्वे

अव्याकृतमविज्ञातं प्रमाणाविषयं विदुः ॥
प्रमाणानभिसम्बद्धं प्रमाणाच्चेति साहसम् ॥ १७६ ॥
प्रमात्रादिनिषेधेन यदव्याकृतमुच्यते ॥
तस्य मानाभिसम्बन्धो न बालेनापि शङ्क्यते ॥१७७॥
तद्वेदमित्यनेनापि वाक्येनाव्याकृतं नहि ॥
प्रमीयते, किन्तु तत्त्वबोधायैतदनूद्यते ॥ १७८ ॥
न द्वितीयश्चिदात्माऽयमविकारी न साधयेत् ॥
न तृतीयो बुद्धिचिद्भ्यां को वाऽन्योऽनुभवो भवेत्॥१७९
अत्रोच्यते चिदात्माऽयमविकार्यपि भासयेत् ॥
न विक्रियन्ते सूर्याद्या जगतोऽस्यावभासने ॥ १८० ॥
स्वरूपसत्तामात्रेण योऽन्यस्योपकरोत्यसौ ॥
न विक्रियत एवात्र प्रयत्नानुपयोगतः ॥ १८१ ॥

---

को दोषस्तत्राह *अव्याकृतमिति । तस्य व्याख्या *अविज्ञातमिति । प्रमाणाविषयत्वं साधयति *प्रमाणेति । प्रमित्युत्पत्तिनान्तरीयकतया नष्टस्याज्ञानस्य तत्सम्बन्धायोगादित्यर्थः । प्रमाणात्, ज्ञातमिति शेषः ॥ १७६ ॥ तस्मान्न मात्रादिविभागशून्यस्याव्याकृतस्य मानगम्यत्वशङ्केत्युपसंहरति *प्रमात्रादीति ॥ १७७ ॥ प्रमात्रादिविभागानन्तरमव्याकृतवाक्येन तत्सिद्धिमाशङ्क्य तस्य ऐक्यपरत्वान्नाज्ञानप्रमापकत्वमित्याह *तद्वेदमिति ॥१७८॥ अज्ञानसाधकः साक्षीति पक्षं प्रत्याह *न द्वितीय इति । उक्तज्ञानद्वयाविलक्षणं ज्ञानान्तरं तत्साधकमिति पक्षं निराह *नेति ॥ १७९ ॥ मध्यमं पक्षमादाय समाधत्ते *अत्रेति ॥ निर्विकारस्यापि साक्षिणस्तद्भासकत्वं दृष्टान्तमुखेनोपपादयति *नेत्यादिना ॥ १८० ॥ १८१ ॥ अज्ञानं साक्षिणा

यथा प्रमाप्रमाभासरागादीनामशेषतः ॥
स्वार्थानन्यप्रमाणात्स्यात्प्रसिद्धिस्तमसस्तथा ॥ १८२॥
न मानानि स्वतो भान्ति जडत्वान्न परस्परम् ॥
भासयन्ति पृथक्कालवर्त्तित्वाद्भान्त्यतोऽन्यतः॥ १८३॥
संदेहमिथ्याज्ञानाख्यौ प्रमाभासौ न मानतः ॥
भातो माननिवर्त्यत्वादतोऽन्यद्भासकं तयोः ॥ १८४॥
धीवृत्तिरूपा रागाद्याः प्रमीयन्ते न मानतः ॥
वृत्तिद्वयस्य युगपदभावाद्भान्त्यतोऽन्यतः ॥ १८५ ॥
तच्चान्यत्स्वार्थमेव स्यान्नो चेन्मेयत्वमापतेत् ॥
मेयत्वे चानवस्था स्यादतः स्वार्थमनन्यगम् ॥ १८६ ॥
तमसो मानमेयत्वं दूषितं पूर्वपक्षिणा ॥
भाति चेत्तत्ततस्तस्मात्साक्षिणैव विभाति तत्॥१८७॥
तस्मादात्मानमाश्रित्य स्वतःसिद्धमनन्यगम् ॥

---

सिध्यतीत्यत्र दृष्टान्तमाह *यथेति *स्वार्थेति । स्वार्थं स्वतन्त्रम् अनन्याधीनसिद्धिकमिति यावत् । अनन्यत् प्रत्यग्रूपं यत् प्रमाणं साक्ष्याख्यं तस्मादित्यर्थः ॥ १८२ ॥ प्रमितीनां चिद्भास्यत्वं तावदुपपादयति । *नेति ॥ १८३ ॥ प्रमाऽऽभासयोस्तदुपपादयति *संदेहेति ॥ १८४ ॥ रागादेरपि तदाह *धीवृत्तीति ॥ १८५ ॥ ननु तेषां ज्ञानान्तरभास्यत्वेऽपि न साक्षिभास्यत्वसिद्धिस्तत्राह *तच्चेति ॥ स्वार्थं स्वप्रकाशम् । तत्र हेतुमाह *अनन्यगमिति । संविद्रूपमित्यर्थः ॥ १८६ ॥ एवं प्रमाणादिदृष्टान्तेन तमसः साक्षिवेद्यत्वमुक्त्वा परिशेषाच्च तदाह *तमस इति ॥१८७॥ यस्मात्साक्षिसिद्धं तमः तस्मात्कार्यमपि तेनैव सिध्यतीति प्रसङ्गादाह *तस्मादिति

भावाभावात्मकं विश्वं सर्वमेतत्प्रसिध्यति ॥ १८८॥
नहि संविदनारूढः प्रमात्रादिः प्रसिद्ध्यति ॥
संविन्मात्रैकयाथात्म्यात्प्रमात्रादेरनात्मनः ॥ १८९ ॥
प्रमात्रादिवियुक्तैषा संवित्कुत्रानुभूयते ॥
इति चेत्, सुप्तिकाले सा विस्पष्टमवभासते ॥१९०॥
प्रत्यक्षकुम्भवत्साक्षात्सुषुप्तेऽनन्यबोधनम् ॥
आत्मा ह्यात्मानमैकात्म्यादात्मना वेत्त्यकारकः॥१९१॥
न चावस्थान्तरेऽप्यात्मा न विविक्तोऽनुभूयते ॥
अज्ञानसंशयादीनां प्रबुद्धेनानवेक्षणात् ॥ १९२ ॥
प्रत्यक्प्रवणया दृष्ट्या जाग्रत्स्वप्नसुषुप्तिषु ॥
नैवाज्ञानं मृषाज्ञानं संशयज्ञानमीक्ष्यते ॥ १९३ ॥
पराक्प्रवणया दृष्ट्या विमूढो मोहमात्मनि ॥

---

॥१८८॥ तदेव व्यतिरेकमुखेन व्यनक्ति *न हीति ॥ तत्र हेतुः *संविदिति ॥१८९॥ प्रमात्रादेः तत्र कल्पितत्वेन तन्मात्रत्वमुक्तमयुक्तं, तदधिष्ठानसाक्षिणस्तद्विविक्ततया कदाऽप्यप्रतीतेरिति शङ्कित्वा परिहरति *प्रमात्रादीति ॥ १९० ॥ उक्तमेव व्यनक्ति *प्रत्यक्षेति। अनन्यबोधनम् अधिष्ठानान्तरशून्यम् आत्मानं स्वापे आत्मना आत्मा साक्षाद्वेत्तीत्यन्वयः। कर्मकर्तृभावं व्यावर्त्तयति *अकारक इति। वस्तुतः कर्तृत्वादिशून्य इत्यर्थः। तत्र हेतुः *ऐकात्म्यादिति।सुप्तौ स्वमहिमस्थः स्वयमेव प्रथत इति भावः॥१९१॥ किं चात्मा विदुषां सदा विविक्त एव भातीत्याह *न चेति। तत्रात्मास्फुरणसंशयविपर्ययाभावं हेतुमाह *अज्ञानेति ॥१९२॥ एतदेव प्रपञ्चयति *प्रत्यगित्यादिना॥१९३॥१९४॥ननु विद्वद्दृष्ट्याऽपि सुप्तावज्ञानमस्ति, अन्यथा उत्थितस्य तस्य नावेदिषमि-

खकार्ण्यवत्कल्पयतु विद्वद्दृष्टेः किमागतम् ॥१९४॥
विदुषोऽविदुषश्चापि सुप्तावज्ञानमात्मनि ॥
अस्त्युत्थाने परामर्शादिति चेत, नैतदिष्यते ॥१९५॥
न सुप्तगमोहस्य नाज्ञासिषमिति स्मृतिः ॥
अनतीतात्मगत्वेन मोहेऽस्मिन्स्मृत्यसम्भवात् ॥१९६॥
न भूतकालस्पृक् प्रत्यङ् न चागामिस्पृगिष्यते ॥
अन्यथा वर्त्तमानेऽस्मिन्काले प्रत्यङ् न सम्भवेत् ॥१९७॥
क्वापि प्रत्यक्षविज्ञानान्नात्मतत्त्वं समीक्ष्यते ॥
नानुमानादयः सन्ति मिथ्याज्ञानमतो भवेत् ॥१९८॥

---

ति परामर्शो न स्यादिति शङ्कते *विदुष इति । दृष्टान्तार्थमविदुष इत्युक्तम् । नायं परामर्शः सुप्तिकालाज्ञानसाधक इति परिहरति *नैतदिति ॥ १९५ ॥ नेयं सुप्तिकालीनमोहगोचरस्मृतिरित्यत्र हेतुमाह *अनतीति । आत्मनः कालव्यवधानाभावेन तद्गताज्ञानस्यापि व्यवधानाभावान्न स्मृतिविषयत्वमिति भावः ।।१९६।। विद्वद्दृष्ट्या प्रत्यक्त्वस्य कालव्यवधानं नेत्युक्तमेव प्रपञ्चयति *न भूतेति । *अन्यथेति । विदुषोऽपि मूढवद् ब्रह्म न प्रकाशत इति प्रतीतिः स्यादिति भावः ॥१९७॥ नावेदिषमित्यस्य स्मृतित्वाभावेऽपि सुप्तिकालीनाज्ञानसाधकत्वमाशङ्क्य, किं तत्प्रत्यक्षमुत परोक्षं ? नाद्यः, तस्य वर्त्तमानमात्रग्राहित्वादित्याह *क्वेति । द्वितीयं निराह *नेति । अतीतत्वस्याश्वशृङ्गवदसत्त्वेन साधनसामानाधिकरण्याद्ययोगान्न मानगम्यतेति भावः । का तर्हि नाज्ञासिषमिति व्यवहारस्य गतिस्तत्राह *मिथ्येति । यतोऽज्ञानं पूर्वकालश्च न स्तोऽतो नाज्ञासिषमिति तद्गोचरज्ञानं मिथ्याविकल्परूपमित्यर्थः । तदुक्तमभियुक्तैः- "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति ॥ १९८ ॥ विदु-

तस्मात् तिसृष्ववस्थासु कालभ्रमवतीष्वतः ॥
अविलुप्तस्वप्रकाशं दृगात्मानं सदेक्षते ॥ १९९ ॥
यथा कालभिदां प्रत्यक्कटाक्षेणापि नेक्षते ॥
एवं देशविभेदोऽपि न प्रतीच्युपपद्यते ॥ २०० ॥
देशभ्रमयुताः सर्वे देहाद्याः पारतन्त्र्यतः ॥
स्वतन्त्रं प्रत्यगात्मानं देशत्वेन समाश्रिताः ॥ २०१ ॥
यत्तत्त्वगं स्याद्यद्वस्तु न तत्तदतिवर्तते ॥
नाज्ञातरज्जुजः सर्पो रज्जुमुल्लङ्घ्य वर्त्तते ॥ २०२ ॥
तस्मान्नानाशरीरेषु ह्यन्योन्यव्यभिचारिषु ॥
प्रत्यक्चैतन्यमेवैकं सर्वत्राव्यभिचारवत् ॥ २०३ ॥
सर्वधीविक्रियासाक्षिण्येवं सिद्धे स्वतो दृशौ ॥
कार्यं येऽनुभवं प्राहुस्ते वार्याः श्रुतियुक्तिभिः ॥२०४॥
न जायतेऽज इत्यादि विज्ञानघन इत्यपि ॥

---

षां परपरिकल्पितावस्थात्रयेऽप्यात्मस्फुरणमुक्तं निगमयति *तस्मादिति ॥ १९९ ॥ कालपरिच्छेदाभाववदात्मनो देशपरिच्छेदाभावमप्याह *यथेति ॥ २०० ॥ कथं तर्ह्यात्मनि परिच्छेदव्यवहार इत्याशङ्क्याह *देशभ्रमयुता इति । परिच्छिन्नधीविषया इत्यर्थः । तथाचात्मनि देहाद्युपाधिकृतः परिच्छेद इति भावः ॥२०१॥ प्रतीचो देहाद्याश्रयत्वे सद्वितीयत्वमाशङ्क्याह *यदिति । कल्पितस्याधिष्ठानापरिच्छेदकत्वे दृष्टान्तमाह *नेति ॥२०२॥ साक्षिणो विश्वभासकत्वमुपसंहरति *तस्मादिति॥२०३॥ एवं कालाद्यपरिच्छिन्नस्याद्वितीयत्वेन नित्यत्वे सिद्धेऽप्यहङ्कारभासकचैतन्यस्यानित्यत्वं केचिदाहुः, तन्मतं श्रुतिविरुद्धत्वादुक्तवक्ष्यमाणयुक्तिविरुद्धत्वाच्चानादेयमिति आह *सर्वधीति॥२०४॥

कृत्स्नपुंविक्रियोत्सारि वाक्यं कस्मादुपेक्ष्यते ॥ २०५ ॥
प्रमात्राद्युत्थितेः पूर्वं कारकं दुर्लभं चितः ॥
कारकव्यापृतिस्तत्र निपुणेनापि नेक्ष्यते ॥ २०६ ॥
भवताऽप्यभ्युपेतव्यमेतच्च स्वानुभूतितः ॥
तस्मादजायमाना चिज्जायमानेव लक्ष्यते ॥ २०७ ॥
प्रमेये च क्रियायां च प्रमाणेऽथ प्रमातरि ॥
सम्बन्धात्तदुपाधित्वाज्जायमानेव चिद्भवेत् ॥ २०८ ॥
तद्विनाशेऽपि साक्षित्वाद्विनश्यन्तीव लक्ष्यते ॥
यतोऽतः कार्यतां तस्या नेश्वरोऽपि प्रसाधयेत् ॥२०९॥
कार्यत्वे प्रागभावोऽस्या वक्तव्यः स न युज्यते ॥
अशेषाभावसाक्षित्वात्प्रागभावो न संविदः ॥२१०॥
तस्याश्चेत्प्रागभावः स्यात्सिद्ध्येन्निःसाधकः कथम् ॥
प्रध्वंसासम्भवोऽप्येवं तस्मान्नित्यैव चिद्भवेत् ॥२११॥
स्वात्मसाक्षिकतां मुक्त्वा भावाभावाख्यवस्तुनः ॥

---

श्रुतिमुदाहरति *न जायत इति ॥ २०५ ॥ युक्तिमप्याह *प्र-
मात्रादीति ॥ २०६ ॥ वादिभिरप्यनुभवानुसारिभिः सुप्तौ
प्रमात्राद्यभावः स्वीकार्य इत्याह *भवतेति । तर्हि ज्ञानमुत्पन्न-
मित्यादिव्यवहारः कथमित्याशङ्क्य उपाध्युत्पत्त्या तदुपहिताचि-
तोऽप्युत्पन्नत्वमुपचारादित्याह *तस्मादिति ॥२०७॥ उक्तमेव
प्रपनक्ति *प्रमेय इति । क्रिया मानमेयसन्निकर्षः । अद्य जाय-
मानेत्यन्वयः। सत्यां सामग्र्यां वृत्तिरूपज्ञानोत्पत्तौ तदवच्छिन्न-
चेतोऽप्युत्पन्नत्वप्रतीतिरुपपद्यत इति भावः ॥ २०८ ॥ अतएव
वृत्तश्चैतन्यनाशो नेत्याह *तदिति ॥ २०९ ॥ चितो नित्यत्वे
युक्त्यन्तरमाह *कार्यत्व इत्यादिना ॥२१०॥२११॥ जन्माद्यभा-

यतोऽसिद्धिरतः प्रत्यङ्ङिरस्ताखिलविक्रियः ॥ २१२ ॥
याऽविद्यायाः साधिका स्यात्साऽनुभूतिः परीक्षिता॥
याऽनुभूत्या साध्यमाना साऽविद्याऽथ परीक्ष्यते॥२१३
नन्वविद्या स्वतो बुद्धे न कथंचन सम्भवेत् ॥
विरोधादविरोधे तु केन सैषा निवर्त्यते ॥ २१४ ॥
न तन्निवर्त्तकं मानं तत्कार्यत्वाद्धटादिवत् ॥
चिद्योगान्नाशकं तच्चेच्चिदेवास्तु निवर्त्तिका ॥ २१५ ॥
असम्भवे त्वविद्यायास्तत्कार्या संसृतिः कुतः ॥
तदभावे मेयचिन्ता काकदन्तपरीक्षणम् ॥ २१६ ॥
उच्यते किं तमस्व्येवं चोदयेदुत तत्त्ववित् ॥
नाद्यो मूढस्य चोद्यार्थ ईदृग्व्युत्पत्त्यसम्भवात् ॥२१७
स्वतो बुधे कुतो ऽविद्या तामृते संसृतिः कुतः ॥
इति बुद्धात्मतत्त्वस्य गीरियं न तमस्विनः ॥ २१८॥
अयुक्तोपालम्भनं स्यात्तत्त्वज्ञस्यात्र चोदने ॥
न तं प्रति वयं तत्त्वपरीक्षामारभामहे ॥ २१९ ॥

---

वादेवात्मानुभवस्य विकारान्तराणि न सन्तीत्याह *स्वात्मेति। सर्वविक्रियासाक्षिणो न काऽपि विक्रियेत्यर्थः ॥ २१२ ॥ याऽविद्याया इति। अविद्याभासकसाक्षी निरूपितः,इदानीं तद्भास्याऽविद्या विचार्यत इत्यर्थः ॥ २१३ ॥ तत्र पूर्वपक्षमुत्थापयति *नन्वित्यादिना । स्वतो बुद्धे स्वप्रकाशे । *चिदेवेति । वृत्तेः जडत्वेन सहकारित्वेनाप्यनिवर्त्तकत्वादिति भावः॥२१४॥२१५॥ ॥२१६॥ विकल्पासहत्वान्नेदं चोद्यं शोभत इति परिहरति *उच्यत इति । तमस्वी आत्मतत्त्वानभिज्ञः ॥२१७॥२१८॥ अस्तु तर्हि तत्त्वविद एवेदं चोद्यं तत्राह *अयुक्तेत्यादिना ॥२१९॥

तमस्विनं प्रति त्वेषा परीक्षा, तस्य दृष्टितः ॥
स्वप्रकाशाद्यप्रसिद्धं तमसा तदपह्नुतेः ॥ २२० ॥
यथोच्छिन्नात्ममोहोऽयं गुर्वादीनपि निह्नुते ॥
तथा तमस्वी बोधात्प्रागैकात्म्यमपि निह्नुते ॥२२१॥
काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनोः ॥
या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ॥ २२२ ॥
सत्येव तत्त्वे व्युत्पत्तेः प्राङ्मोहादीक्ष्यते यतः ॥
तस्मान्न वस्तुनस्तत्त्वं तद्ध्वान्ताद्यपनोदकृत् ॥२२३॥

---

न चात्मनः स्वप्रकाशत्वादज्ञस्यापीदं चोद्यमुपपन्नं तत्राह *त-
स्येति ॥२२०॥२२१॥ विद्वद्दृष्ट्या गुर्वादेः, अविद्वद्दृष्ट्याऽत्म-
तत्त्वस्यासत्त्वमित्यत्र दृष्टान्तमाह *काकेति । काकादीनां प्रसि-
द्धा निशा तस्यामुलूको जागर्ति, तद्दृष्ट्या साऽपलप्यते, यदा
काकादयो जाग्रति तदा नक्तंदृशां निशेति काकादिदृष्ट्या सा-
ऽपह्नूयते यथा,एवमज्ञदृष्ट्याऽत्मतत्त्वस्य विद्वद्दृष्ट्या संसारस्या-
सत्त्वमित्यर्थः । तत्र भगवद्वाक्यं प्रमाणयति *या निशेति । या
ब्रह्मावस्था सर्वप्राणिनां निशाऽसत्कल्पा स्यात् तस्यां विद्वान्
जागर्ति, यस्यामविद्यावस्थायां सर्वप्राणिनो जाग्रति सा निवृत्ता-
विद्यस्यासत्कल्पेति दृष्टिभेदेन सत्त्वादिविभागं भगवानप्याहेत्य-
र्थः ॥ २२२ ॥ यद्यपि वस्तुयाथात्म्यमज्ञस्य न स्फुरति तथापि
स्वप्रकाशे चेदविद्या तर्हि निवर्त्तकाभावात्सा न निवर्तेतेत्या-
दे तेनापि शङ्कितुं शक्यत एवेति तत्परिहारो वाच्य इत्याशङ्क्य
स्वरूपज्ञानस्य निवर्त्तकत्वमङ्गीकरोति *सत्येवेति । व्युत्पत्तिः
प्रमाणज्ञानम् । मोहादित्यादिना प्रमातृत्वादिग्रहः ॥ २२३ ॥

प्रमाणमूढतां लब्ध्वा हन्त्यविद्याद्यशेषतः ॥
ब्रह्मविद्भिरतो यत्नात्प्रमाणमिह संश्रितम् ॥ २२४ ॥
तृणादेर्भासिकाऽप्येषा सूर्यदीप्तिस्तृणं दहेत् ॥
सूर्यकान्तमुपारुह्य तन्न्यायं चिति योजयेत् ॥२२५॥
नैतावता प्रमाणस्य प्राधान्यमिह शङ्क्यते ॥
विषयस्य महिम्नैव प्रमाणानां प्रमाणता ॥ २२६ ॥
अबाधितात्मयाथात्म्यसमुल्लेखनसंश्रयात् ॥
तन्मानमत्र मानत्वं लभते न तु केवलम् ॥ २२७ ॥
चिन्मात्रमेव याथात्म्यं प्रत्यगात्मत्वकारणात् ॥

---

केवलचितेरबोधाद्यनिवर्त्तकत्वेऽपि बुद्ध्याद्युपारूढायास्तस्यास्तन्निवर्तकत्वमाह *प्रमाणेति ॥ प्रमाणजन्यस्याज्ञानध्वंसित्वादेव वेदान्तानां ब्रह्मणि प्रामाण्यं सूत्रकारादिभिरादृतमित्याह *ब्रह्मविद्भिरिति ॥ २२४ ॥ अज्ञानसाधकमपि चैतन्यं वृत्त्युपारूढं सत्तन्निवर्तयतीत्याह *तृणादेरिति ॥२२५॥ यदुक्तं वृत्तेर्जडत्वेन घटादिवदज्ञानादाहकत्वमिति । तत्र वक्तव्यं किं वृत्तेः प्राधान्येन तददाहकत्वमुत सहकारित्वेनापि ? नान्त्यः, सूर्यकान्तादिवज्जडस्यापि तत्सम्भवादित्यभिप्रेत्याद्यमङ्गीकरोति *नेति ॥२२६॥ उक्तमेव स्फुटयति *अबाधितेति । आत्मयाथात्म्यसमुल्लेखनं तदाकारभजनम् । तदाश्रयात् आत्मप्रतिविम्बग्रहणादिति यावत् । तन्मानं वाक्यजन्यज्ञानम् अत्र व्यवहारभूमौ अज्ञानध्वंसित्वात् मानत्वं लभते, न केवलं जडरूपेणेत्यर्थः ॥२२७॥ ननु घटादिज्ञानवदात्मज्ञानस्यापि मात्रादिहेतुकत्वात्कथं चिन्मात्राकारत्वं तत्राह *चिदिति । घटादिषु ज्ञानोत्पत्तिकालवत्कालान्तरेऽपि मात्रादिभेदोऽस्ति, प्रतीचि तु ज्ञानोदयकाले सन्नपि तज्जन्मनान्तरीयकत्वेन बाधितस्य प्रमात्रादिजगन्मात्रस्य

पराक्ष्विव न भेदोऽस्ति मात्रादेः प्रत्यगात्मनि॥२२८॥
कूटस्थोऽपि स्वतः प्रत्यक्पराग्व्यवहृतावयम् ॥
स्वचिदाभासवन्मोहयोगादाप्नोति मातृताम् ॥२२९॥
चिन्मात्रस्यैव वस्तुत्वेऽप्यनाद्यज्ञानमात्मनि ॥
प्रथते स्वात्मचैतन्यात्स्वरूपेणाविरोधतः ॥ २३० ॥
कार्यकारणरूपाभ्यामतथाविधतात्त्विका ॥
आत्माविद्यैव सर्वत्र प्रथते स्वात्मसाक्षिका ॥२३१॥
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥
इति श्रीमत्सुरेशस्य वाक्यमेवं समञ्जसम् ॥ २३२ ॥
अविद्या वाऽथ तत्कार्यं न भेदान्नाप्यभेदतः ॥
निरूप्यते यतोऽतः स्यादविचारितसिद्धिकम् ॥२३३॥
स्वमहिम्ना न संसिद्ध्येज्जडत्वान्नात्मनः पृथक् ॥

---

प्रत्यग्रूपेणावसानादुत्तरक्षणे स नास्तीति भावः ॥ २२८ ॥ नन्वेवमपि प्रतीचः प्रमाकर्तृत्वेन कौटस्थ्यहानिस्तत्राह *कूटस्थ इति । स्वकीयचिदाभाससहितमोहद्वारा कर्तुर्न तात्त्विककौटस्थ्यहानिरिति भावः ॥ २२९ ॥ साक्षिभास्यत्वेन साधितमज्ञानं निगमयति *चिदिति ॥ २३० ॥ उक्ताविद्यैवानिर्वचनीया कार्याकारेणापि वर्त्तत इत्याह *कार्येति ॥ इत्थम्भावे तृतीया। *अतथाविधेति । आत्मवन्न सत्या किं त्वनिर्वचनीयेत्यर्थः । तथाचाविद्यकसंसारानिवृत्त्यर्थं मेयचिन्ता सफलेति भावः ॥ २३१ ॥ जगतो मायाकार्यत्वे भगवद्वाक्यं प्रमाणयति *मयेति॥२३२॥अविद्यातत्कार्ययोरनिर्वचनीयत्वं युक्तितोऽप्याह *अविद्येति ॥२३३॥ उक्तमेव स्फुटयति *स्वेत्यादिना । अतो

अत एव जडत्वान्न चिदभेदं समर्हति ॥ २३४ ॥
जडस्वभावान्नैवान्यद्रूपं कार्येषु गम्यते ॥
तमश्च चिद्विभातत्वान्न जाड्यमतिवर्त्तते ॥ २३५ ॥
यथा नीलोत्पलाभं खं द्विरेफोदरवत्तमः ॥
अविचारितसिद्ध्येवं तमस्तज्जं च वीक्ष्यताम् ॥ २३६ ॥
स्वानुभूत्या भासितत्वान्नाविद्या खरशृङ्गवत् ॥
विचारबाधितत्वेन नाप्यविद्या चिदात्मवत् ॥२३७॥
अनुभूतावविद्याया विवादो नैव कस्यचित् ॥
न वेद्मीति व्यवहृतेराऽङ्गनाबालपण्डितम् ॥ २३८ ॥
प्रमात्रादिविविक्तार्थमनुभूयोत्थितस्ततः ॥
नावेदिषमिति प्राह स्वानुभूत्यनुसारतः ॥ २३९ ॥
प्रमात्राद्युत्थितेः पूर्वं चिदन्यानन्वयात्तमः ॥
चैतन्येनैव तद्भास्यं नतु मानेन केनचित् ॥ २४० ॥
आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ॥

---

नात्मनः इत्यन्वयः ॥ २३४ ॥ २३५ ॥ द्वैतस्य कल्पितत्वे दृष्टान्तमाह *यथेति । "आलोकाभावस्तमः" इति मते निदर्शनान्तरमाह *द्विरेफेति । नीरूपयोराकाशतमसोर्यथा नैल्यं कल्पितम् एवमविद्यातत्कार्यमपीत्यर्थः ॥ २३६ ॥ अविद्यायाः सदसद्विलक्षणत्वमेव प्रपञ्चयति *स्वानुभूत्येत्यादिना ॥२३७॥२३८॥२३९॥ मानागोचरत्वादप्यविद्याऽनिर्वाच्येत्याह *प्रमात्रादिति । स्वापादौ चिद्व्यतिरिक्तवस्त्वभावेन तमसस्तेन सम्बन्धाभावादित्यर्थः ॥ २४० ॥ अज्ञानस्य मानागम्यत्वं तद्गमकमनुवचनविरुद्धमित्याशङ्क्याह *आसीदिति । प्रागवस्थस्य जगतोऽप्रत्यक्षत्वमाह * अप्रज्ञातमिति । अनु-

इति स्मृत्या न तन्मेयमनुभूतं त्वनूद्यते ॥ २४१ ॥
सुप्तिस्मृतिर्यथाऽस्माकमनायासेन सिद्ध्यति ॥
अनायासात्तथा सिद्ध्येन्मन्वादेः प्रलयस्मृतिः॥२४२॥
न मानात्सिद्ध्यतो लोके ज्ञातताऽज्ञातते अपि ॥
मूलाविद्या न प्रमेयेत्येवं वक्तव्यमत्र किम् ॥ २४३ ॥
अज्ञातत्वं न मानेभ्यो ज्ञातत्वं तत्कृतं यतः ॥
तैरप्यज्ञातता चेत्स्यात्काऽतिशीतिर्मितेर्भवेत्॥२४४॥
ज्ञातत्वमपि मानेन क्रियते नतु मीयते ॥
ज्ञातत्वं मानतः पूर्वमसत्तन्मीयते कथम् ॥ २४५ ॥
ज्ञातोऽयमर्थो ऽज्ञातो वेत्येतत्साक्ष्यवभासयेत् ॥
ज्ञानाज्ञाने अपि तथा भास्येते साक्षिणैव हि ॥२४६॥

---

मानाद्यविषयत्वमाह * अलक्षणमिति ॥ २४१ ॥ ननु प्रलयकालस्य स्मृत्यगोचरत्वात्तत्कालेऽनुभूतमज्ञानं कथमनूद्यते इति तत्राह * सुप्तीति । ईश्वरप्रसादादिति शेषः ॥ २४२ ॥ किंचाविद्याद्वारा साक्षिण्यध्यस्ते ज्ञातत्वाज्ञातत्वे साक्षिमात्रभास्ये किमु वक्तव्यं साक्षाच्चिदध्यस्ताविद्यायाश्चिन्मात्रभास्यत्वमित्याह *नेति ॥ २४३ ॥ अज्ञातत्वस्य मानापेक्षा कुतो नास्तीत्याशङ्क्य, किं तदुत्पत्तौ मानमपेक्षते ज्ञप्तौ वा ? नाद्यः इत्याह *अज्ञातत्वमिति । न मानेभ्यो, भवतीति शेषः । विपक्षे दोषमाह *तैरिति ॥ किं मानैरज्ञाततामात्रं क्रियते किंवा ज्ञाततापि । आद्ये मानवैफल्यं, प्रागेव तत्सिद्धेः । द्वितीये त्वज्ञातत्वस्य ज्ञातत्वाव्यतिरेकः स्यात् मानकार्यत्वात्,तद्वदित्यर्थः ॥ २४४ ॥ अस्तु तर्हि ज्ञातत्ववदज्ञातत्वस्यापि ज्ञप्तौ मानापेक्षेत्याशङ्क्य दृष्टान्तासिद्ध्या दूषयति *ज्ञातत्वमिति॥२४५॥२४६॥ ज्ञातत्वादीनां

प्रथते यः स्वयं साक्षादज्ञातत्वादिभूमिषु ॥
अप्रमेयं स्वयञ्ज्योतिः प्राक् प्रसिद्धेः प्रमाणतः॥२४७॥
स्वयम्प्रकाशतत्त्वोऽपि स्वाविद्यायाः प्रमाणतः ॥
अनिवृत्तेरविज्ञातः स प्रमाणमपेक्षते ॥ २४८ ॥
असाधारणमज्ञानं प्रतीच्येव यतः स्थितम् ॥
ततोऽयमेवाज्ञातत्वान्मानमेयो न चेतरः ॥ २४९ ॥
अज्ञानकार्यमखिलं न तस्याज्ञातता भवेत् ॥
न खड्गधारा खड्गेन प्रहृता कुत्रचिद्भवेत् ॥ २५० ॥
अज्ञात आत्मा यः पूर्वं सङ्ग्रहेणोपपादितः ॥
चिदाविद्यापरीक्षाभ्यां स एवेत्थं प्रपञ्चितः ॥ २५१ ॥

---

साक्षिमात्रभास्यत्वे मानानां विषयाभावादमानतेत्याशङ्क्य अज्ञातत्वोपलक्षितप्रतीचो विषयभानान्मैवमित्याह *प्रथत इति। स्वयं प्रथमानत्वे प्रत्यक्षसंविद्रूपत्वं हेतुमाह *साक्षादिति। कथमस्य युक्त्यालम्बनस्याध्यक्षादिविषयत्वं ? तत्राह *अज्ञातत्वादीति। आदिना संदिग्धत्वादिग्रहः। उक्तं स्वप्रकाशत्वमनूद्य तत्र हेत्वन्तरमाह *स्वयञ्ज्योतिरिति। *प्रागिति ॥ मात्रादिविभागात्पूर्वमात्मनः स्वापादौ प्रथनादपि स्वप्रकाशत्वसिद्धिः ॥ २४७ ॥ ननु स्वप्रकाशस्य कथं मानापेक्षा ? तत्राह *स्वयमिति ॥ प्रमाणत इत्यत्र प्रागित्यनुषज्यते। स्वाविद्यायाः अनिवृत्तेरिति सम्बन्धः ॥ २४८ ॥ आत्मन एव सर्वमानमेयत्वमुक्तमुपसंहरति *असाधारणमिति ॥ २४९ ॥ आत्मन एव मेयत्वसिद्ध्यर्थं जडेषु अज्ञातत्वाभावं साधयति*अज्ञानेति॥२५०॥ मेयपरीक्षायामेवास्य कथितत्वात् पौनरुक्त्यमित्याशङ्क्य पूर्वोक्तार्थस्य युक्त्यन्तरेणात्र पुनः साधनान्न पुनरुक्तिदोष इत्याह *अज्ञात इति ॥२५१॥ वृत्तानुद्रवणपुरःसरमुत्तरग्रन्थतात्पर्यमाह *अज्ञान

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। ( मीमांसा ) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं असम्पूर्णम् ( वेदान्तः ) २

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीब्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । २

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... १०

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रव-

र्निकृता । श्रीगङ्गेशोपाध्यायविरचित-तत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ३

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्ययातथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता ! ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-श्रीमद्बालम्भट्टविरचितकलाटीका-इति टीकाद्वयसंवलिता । ...

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वतीय विश्वेश्वरसूरिविरचितः ।

(४८) वीरमीत्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः ।

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः ।

पत्राद्दिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा वनारस सिटी ।

April 1915.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 208.

# बृहदारण्यकवार्तिकसारः

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

# BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS IV–४.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT BOOK-DEPOT. BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

-*-

**आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥**
**सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥**
**चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥**
**रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥**

**स्तवकः—२०८**


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके 'सुन्दरैः सीसकाक्षरैरुत्तमे पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवा सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वां एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्–मुद्राः७आनका

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ "

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ..


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । ( वेदान्तः )

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपर श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामु मुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्ट रकाचार्यसंगृहीतः । आचार्यचित्सुर मुनिविरचितव्याख्योपेतः ( वेदान्तः )

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमा सप्तविभक्तिविस्तृतविचाररूपः म० म श्रीगिरिधरोपाध्यायविरचितः । सम्पू ( न्यायः ) ... ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृत म् । सम्पूर्णम ( मीमांसा ) ...

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भ सोमेश्वरविरचिता । ( मीमांसा ) १

अज्ञानावृतचैतन्यं प्रमेयमिति साधितम् ॥
परवादिप्रमेयं यत् तदिदानीं निरूप्यते ॥ २५२ ॥
अविज्ञातार्थगन्तॄणि प्रमाणानीति वादिनाम् ॥
सर्वेषां सम्मतिस्तत्र प्रमेयोऽर्थो विचार्यते ॥ २५३ ॥
ज्ञातोऽयमर्थोऽज्ञातो वा ज्ञाताज्ञातात्मकोऽथवा ॥
यदि वानुभयात्माऽयं चतुर्द्धाऽपि न युज्यते ॥२५४॥
आद्ये ज्ञातत्वमर्थस्य न तावद्ब्रह्मसंविदः ॥
अनभ्युपगमान्नापि प्रमाणाद्बकबन्धतः ॥ २५५ ॥
ज्ञातत्वमादौ सम्पाद्य ज्ञातमर्थं प्रमापयत् ॥
मानं न बकबन्धस्य प्रयासमतिवर्त्तते ॥ २५६ ॥
स्वत एव प्रमेयोऽर्थो यदि ज्ञातस्तथापि च ॥
अनन्यायत्तसंसिद्धेर्मेयत्वं किन्निबन्धनम् ॥ २५७ ॥
नहि दीपान्तराद्दीपो भारूपत्वं प्रपद्यते ॥
तद्वत्स्वतो ज्ञातघटो मानेन नहि मीयते ॥ २५८ ॥

---

इति ॥ २५२ ॥ परपक्षे सर्वव्यवहारासिद्धिरिति वक्तुमनेकमतसिद्धमर्थमाह *अविज्ञातेति ॥२५३॥ विचारं दर्शयति *ज्ञात इति । अयं साङ्ख्यस्य पक्षे, अज्ञात इति वैशेषिकादेः, तृतीयस्तु योगाचारस्य, सम्भावनोपनीतश्चतुर्थः कल्प इति द्रष्टव्यम् ॥२५४॥ ज्ञातार्थो मेय इत्यत्राप्यर्थगतं ज्ञातत्वं किं ब्रह्मचैतन्येन निष्पन्नम् उत मानमेव स्वप्रवृत्त्यर्थं पूर्वं तत्र ज्ञातत्वं सम्पादयति अथ वा स्वतःसिद्धम् । नाद्यः, इत्याह *आद्य इति । न द्वितीय इत्याह *नापीति । बकबन्धन्यायापातादित्यर्थः ॥ २५५ ॥ तमेव स्पष्टयति *ज्ञातत्वमिति ॥ २५६ ॥ तृतीयं दूषयति *स्वत इत्यादिना ॥२५७॥॥२५८॥ वैशेषिकादिमतमनूद्य विकल्प्य दूषयति

अथाज्ञातो घटाद्यर्थस्तदाप्यज्ञातता कुतः
स्वतो वा परतो वा स्यात् स्वतश्चेद्बाध्यते कथम्॥२५९॥
नहि मृन्मयता बाध्या घटस्याज्ञातता तथा ॥
किंचाज्ञाते कल्पितं स्याज्ज्ञातत्वं रज्जुसर्पवत्॥२६०॥
नच यद्वास्तवं रूपं तदध्यासेन बाध्यते ॥
रज्जुसर्पधिया लोके न रज्जुरिति धीह्नुतिः॥२६१॥
परतोऽपि कुतो न्वेतदज्ञातत्वं घटे भवेत् ॥
अनिर्वाच्याज्ञानतो वा ज्ञानाभावादुतेर्यताम्॥२६२॥
आद्ये तवापसिद्धान्तो द्वितीये कूर्मलोमवत् ॥
अज्ञातत्वं प्रसज्येत न ह्यभावात्सतो जनिः ॥२६३॥
यदाऽत्यन्ताभावरूपमज्ञातत्वं तदा तव ॥
स्वतः सर्वज्ञतैव स्यान्न वस्त्वज्ञातमस्ति हि ॥२६४॥
साधकाभावतश्चेद्दगज्ञातत्वं न सिध्यति ॥
नच मानात्प्रसिद्धिः स्यात्कूर्मलोमादिवस्तुनः॥२६५॥
ज्ञाताज्ञातोभयात्मत्वं पर्यायेणैकदाऽथवा ॥
पर्यायेऽनुगतं वस्तु न तयोर्वस्तुरूपता ॥ २६६ ॥

---

*अथेति ॥ २५९ ॥ स्वाभाविकस्याबाध्यत्वे दृष्टान्तमाह *नहीति । अज्ञाततायाः स्वाभाविकत्वे तद्विरुद्धज्ञाततायास्तत्रारोपो वाच्यः, तथा चारोपितज्ञातत्वेन तन्निवृत्तिरेव न स्यादिति दूषणान्तरमाह *किञ्चेत्यादिना ॥२६०॥२६१॥ द्वितीयं विकल्प्य दूषयति *परत इत्यादिना ॥ २६२ ॥ २६३ ॥ अस्तु तर्हि अज्ञातत्वमप्यसदेवेति तत्राह *यदेति । अभावशब्दोऽसद्वचनः ॥ २६४ ॥ अज्ञातत्वमसदिति पक्षे दोषान्तरमाह *साधकेति ॥ २६५ ॥ योगाचारमतं विकल्प्य दूषयति *ज्ञाताज्ञातेति ॥ २६६ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति *नेति ।

न देवदत्तस्यात्मानौ क्रमभाविगमागमौ ॥
ज्ञातताऽज्ञातते तद्वद्व्रजतो न घटात्मताम् ॥ २६७ ॥
शीतोष्णवद्विरुद्धत्वाद्यौगपद्यं न युज्यते ॥
नापि चानुभवात्मत्वं विविक्तस्यानुदाहृतेः ॥ २६८ ॥
ज्ञातताऽज्ञाततेत्युक्त्वा घटमात्रं त्वया क्व वा ॥
उदाह्रियेतावगत एव स्यात्तदुदाहृतौ ॥ २६९ ॥
ज्ञातताऽज्ञातते यस्य स तयोरनुगच्छति ॥
व्यावृत्ताभ्यां विभिन्नोऽयमिति चेत्तत्र का प्रमा॥२७०॥
सर्वावभासकः साक्षी त्वया वेदविरोधिना ॥
उपेक्षितोऽन्यः को नाम तत्सर्वं तव भासयेत्॥२७१॥
चतुर्विधविकल्पानामभावेऽप्यानिरूपितः ॥
यद्यज्ञातस्तदाऽवश्यं भवेन्मे मतमेव ते ॥ २७२ ॥

---

यथा पर्यायेणोत्पन्नयोर्गमनागमनयोर्देवदत्तशरीरमनुस्यूतं भवति न तु क्रियाया देहस्वरूपत्वम्, एवं ज्ञातत्वाज्ञातत्वयोः पर्यायेऽङ्गीक्रियमाणे धर्मिणस्तयोरनुस्यूतिरेव स्यान्न पुनस्तयोर्धर्मिरूपत्वमित्यर्थः ॥ २६७ ॥ एकदेति पक्षं दूषयति *शीतेति । चतुर्थकल्पं निराह *नापीत्यादिना ॥२६८॥ *अवगत एवेति । मेयज्ञानाभावे तदुदाहरणायोगादित्यर्थः ॥ २६९ ॥ क्रमभाविनोर्ज्ञानत्वाज्ञानत्वयोरनुगतधर्मिणस्ताभ्यां भिन्नत्वादनुभयात्मत्वमिति शङ्कते *ज्ञाततेति । क्रमभाविनोस्तयोर्भासकाभावान्नायं पक्षः साधुरिति दूषयति *तत्रेत्यादिना ॥२७०॥२७१॥ ननु दुर्निरूपमप्यज्ञातं वस्त्वनुभवबलादङ्गीकार्यमिति चेत्, ओमित्याह *चतुर्विधेति ॥२७२॥ अज्ञानस्य सा-

सर्वथा न तवाज्ञातं प्रमाणेन प्रसिध्यति ॥
अज्ञानं न यथा मानान्मिथ्याधीसंशयौ तथा॥२७३॥
प्रत्यक्षादिप्रमाणानामज्ञानादिप्रसिद्धये ॥
नेक्ष्यतेऽन्यतमं मानं स्वप्रकाशं न वर्त्तते ॥ २७४ ॥
विषयेन्द्रियसम्बन्धविरहाद्बाह्यमक्षजम् ॥
नास्ति दुःखादिधीवत्स्यात्प्रत्यक्षं नापि मानसम्॥२७५॥
ज्ञानाभावाख्यमज्ञानं मानसे सति तत्कथम् ॥
अयौगपद्यात्प्रत्यक्षं संशयादेर्न मापकम् ॥ २७६ ॥

---

क्षिगम्यत्वमुपसंहरति *सर्वथेति । उक्तन्यायमन्यत्राप्यतिदिशति* अज्ञानमिति । मानादित्यत्र न सिध्यतीत्यनुषज्जते॥२७३॥ साक्षिसिद्धस्याज्ञानस्यान्यतोऽपि सिद्धिसम्भवात्साक्षिमात्रभास्यत्वमनुपपन्नं येन तद्दृष्टान्तेन संशयादेरपि तत्स्यादित्याशङ्क्य, किं मानेन तत्सिद्ध्यति उत स्वप्रकाशतया ? नाद्य इत्याह *प्रत्यक्षेति । निर्धारणे षष्ठी । द्वितीयं प्रत्याह *स्वप्रकाशमिति । अनात्मत्वादित्यर्थः ॥ २७४ ॥ स्वतःसिद्धत्वाभावेऽपि कथं तत्साधकमानानीक्षणमित्याशङ्क्य किं तत्राध्यक्षं मानम् उतानुमानादि? आद्येऽपि किं तद्बाह्येन्द्रियजन्यम् उत मनोजन्यं ? नाद्य इत्याह *विषयेति । सम्बन्धविरहश्चाज्ञाने कदापि चाक्षुषत्वादेरननुभवादिति ध्येयम् । आद्यद्वितीयं प्रत्याह *दुःखादीति । दुःखादिधियः साक्षित्वेन मानसत्वासिद्धेरिति भावः ॥२७५॥ किंच परैर्ज्ञानसामान्याभावव्यतिरेकेणाज्ञानानङ्गीकारात् तस्य च मानसज्ञाने सत्ययोगान्न तद्गोचरत्वमित्याह *ज्ञानेति । अस्तु तर्हि संशयादेर्मानसत्वं तत्राह *अयौगपद्यादिति ॥ २७६ ॥ एतदेव व्यनक्ति *नेति । एकं करणमेकदैकामे-

न ज्ञानयौगपद्यं त्वन्मतेऽस्ति युगपत्कथम् ॥
ग्राह्यग्राहकविज्ञाने स्यातां संशयमानसे ॥ २७७ ॥
प्रत्यक्षार्थवदेवेदमज्ञानाद्यनुभूयते ॥
नाशङ्क्यतेऽनुमानादि यतः पारोक्ष्यबोधकम् ॥ २७८ ॥
मिथ्याज्ञानादिसंसिद्ध्यै क उपाय इतीर्यताम् ॥
इति चेत्, शरणं गच्छ साक्षिणं सर्वभासकम् ॥ २७९ ॥
यथेह घटविज्ञाने घटाकारोऽनुभूयते ॥
विशदः साक्षिणस्तद्वदज्ञानाद्यनुभूयते ॥ २८० ॥
इत्थं साधनदोषाभ्यां स्वपक्षपरपक्षयोः ॥
प्रमेयं साधितं तस्य जगत्कारणतोच्यते ॥ २८१ ॥
कार्यकारणभावोऽयं शास्त्रयुक्तिपरीक्षणे ॥
अविचारितरम्यः सन् भासते न तु वास्तवः ॥ २८२ ॥
नासतो विद्यते भावो नाभावो विद्यते सतः ॥
इति वास्तवजन्मादि शास्त्रेणैव निराकृतम् ॥ २८३ ॥

---

व क्रियां जनयतीति नियमादिति भावः। उक्तनियमासिद्धौ फलितमाह *युगपदिति ॥ २७७ ॥ सुखादिवदध्यक्षेणानुभूयमानाज्ञानादेः परोक्षमानगम्यत्वशङ्का नास्तीति द्वितीयं कल्पं निराह *प्रत्यक्षेति ॥ २७८ ॥ अतः परिशेषात्तेषां साक्षिमात्रभास्यत्वमनिच्छताऽपि स्वीकार्यमिति प्रश्नपूर्वकमाह *मिथ्येति ॥ २७९ ॥ २८० ॥ *इत्थमिति। स्वपक्षसाधनेन परपक्षदोषेण चेत्यर्थः। *प्रमेयमिति। अज्ञातं ब्रह्म प्रमेयमिति साधितमित्यर्थः॥ २८१ ॥ २८२ ॥ जगतोऽनिर्वचनीयत्वात्तत्कारणमपि तथेत्यत्र शास्त्रं तावदुदाहरति *नेति। असतोऽनुत्पन्नस्य भाव उत्पत्तिर्वस्तुतो नास्तीत्यत उत्पन्नस्य विनाशोऽपि न वास्तव इत्यर्थः ॥ २८३ ॥

युक्तिश्चान्योन्यसापेक्षा कार्यकारणतेत्यसौ ॥
मृषात्वमाह न तयोरेकस्याप्यनपेक्षता ॥ २८४ ॥
नाकुर्वत्कारणं दृष्टं कार्यापेक्षा ततो भवेत् ॥
कार्यं नाक्रियमाणं स्यात्कारणापेक्षता ततः ॥ २८५॥
अविचारितरम्यश्चेदज्ञानात्मैकहेतुकः ॥
स्यात्, स्वप्नस्य तथा दृष्टा ह्यज्ञातात्मैकहेतुता ॥२८६॥
अज्ञातात्मातिरेकेण ब्रुवतो जगतो जनिम् ॥
सम्यग्ज्ञानान्न मुक्तिः स्यान्न ज्ञानं वस्तुनुत्क्वचित्॥२८७॥
कर्मभ्योऽपि न मुक्तिः स्यात्कर्मापि नहि वस्तुनुत् ॥
ततो ज्ञानेन मुक्त्यर्थमज्ञातात्मैकहेतुता ॥ २८८ ॥
प्रथते वैश्वरूप्येण यस्याविद्यैव सर्वदा ॥

---

तत्र युक्तिमाह *युक्तिश्चेति॥२८४॥ कार्यकारणयोर्मृषात्वापादकं परस्परापेक्षत्वं प्रकटयति *नाकुर्वदिति। कार्यविषयव्यापाररहितस्य कारणत्वे सदा कार्योत्पत्तिः स्यात्, एवं कारकव्यापाराविषयस्यापि तत्कार्यत्वे पटोऽपि दण्डादिकार्यं स्यादिति कारणसिद्धौ कार्यसिद्धिः कार्यसिद्धौ तत्सिद्धिरित्येकमपि न सिद्ध्येदिति भावः ॥२८५॥ अस्मत्पक्षे कार्यकारणभावोऽपि मायिकत्वात्स्वप्नादिवदुपपन्न इत्याह *अविचारितेति ॥ २८६ ॥ किञ्च कर्तृत्वादिप्रपञ्चस्याज्ञानकार्यत्वाभावे ज्ञानेन कर्मणा वा सत्यस्य निवृत्त्ययोगादनिर्मोक्षप्रसङ्ग इत्याह *अज्ञातेत्यादिना ॥ २८७॥ तस्मात् "तरति शोकमात्मवित्" इत्यादिश्रुतिप्रामाण्याय प्रपञ्चस्याज्ञानकार्यत्वमास्थेयमित्याह *तत इति। वक्तव्येति शेषः॥२८८॥ नन्वज्ञातात्महेतुकोऽपि प्रपञ्चस्ततोऽत्यन्तमभिन्नो भिन्नो वा, आद्येऽज्ञातात्मव्यतिरेकेण प्रपञ्चो नास्तीत्युक्तं स्यात्। अन्त्ये उपा-

तन्मतेऽनुपपत्तिः का नोपालभ्यो भ्रमः क्वचित् ॥२८९॥
वस्तुवृत्तमपेक्ष्यैतन्न स्वतः परतस्तमः ॥
तज्ज्ञं वाऽतस्तमोदृष्टया तमस्तत्कार्ययोर्वचः ॥२९०॥
तमश्चिदाभासयुतं नाज्ञासिषमितीक्षणात ॥
जगज्जन्मस्थितिलयास्तस्मादज्ञातआत्मनि ॥ २९१ ॥
तमःप्रधानः क्षेत्राणां चित्प्रधानश्चिदात्मनाम् ॥
परः कारणतामेति जडाजडभिदा ततः ॥ २९२ ॥
तत्तत्प्राणिकृतैस्तैस्तैर्भावनाज्ञानकर्मभिः ॥
देवतिर्यङ्मनुष्यादिवैचित्र्यमुपपद्यते ॥ २९३ ॥
तत्तज्ज्ञात्युदिते शिल्पे भूयोऽभ्यासेन वासना ॥
कौशलातिशयाख्या या भावनेत्युच्यते हि सा॥२९४॥

---

दानोपादेयभावो न स्यात् अद्वैतहानिश्चेति तत्राह *प्रथत इति। वैश्वरूप्येण कार्यकारणमित्यनेकाकारेणेत्यर्थः। *नोपालभ्य इति। नहि भ्रान्तेर्लक्षणं नास्तीति भावः॥ २८९॥ द्वैतस्य भ्रमविषयत्वमेव स्फुटयति *वस्त्विति। यस्मादद्वितीयवस्तुस्वरूपमपेक्ष्याज्ञानतत्कार्ये न भेदेनाभेदेन वा सिध्यतः, तस्मादेवाविद्वद्भ्रमकल्पितत्वं तयोरित्यर्थः ॥ २९० ॥ अस्तु तर्ह्यज्ञानमेव लाघवाज्जगत्कारणमिति तत्राह *तम इति। यस्माच्चित्संवलितमेवाज्ञानमनुभूयते तस्माद्विशिष्टस्यैव हेतुत्वमित्यर्थः॥ २९१ ॥ विशिष्टस्यैव कारणत्वे कार्ये जगति चेतनाचेतनविभागभानं कथमित्याशङ्क्य कारणेऽपि विभागमाह *तम इति ॥ २९२ ॥ नन्वेवमपि चेतनेष्वेवावान्तरवैलक्षण्यं कथमिति तत्राह *तत्तदिति ॥२९३॥ भावनाज्ञानकर्मशब्दानामभिप्रेतार्थं क्रमेण व्यनक्ति *तत्तज्ज्ञात्युदितेत्यादिना ॥ २९४ ॥

शास्त्राभ्यासोपासनादिज्ञानमप्यभिधीयते ॥
विहितं प्रतिषिद्धं च कर्म नैश्चिमत्रजन्मता ॥ २९५ ॥
यद्व्याकृतगतं किञ्चिद्भावनादि समीक्ष्यते ॥
तदव्याकृतरूपेण स्थितं व्यज्येत सृष्टये ॥ २९६ ॥
तद्व्यक्तौ तम एवात्र निमित्तं लोकदृष्टितः ॥
लोके कार्यविशेषाणां तम एव नियामकम् ॥ २९७॥
तैलशक्तिस्तिले कस्माद् दधिशक्तिः कुतो नहि ॥
इति पृष्टो न जानामित्येवं प्रत्युत्तरं वदेत् ॥ २९८ ॥
तन्नियामकमज्ञानमिति तेनोदितं भवेत् ॥
प्रष्टुश्च तावता तत्र गच्छत्येव पिपृच्छिषा ॥ २९९॥
वक्तुर्नाकौशलं शङ्क्यं कुशलैश्चैवमीरणात् ॥
अन्यथा कुशलम्मन्यस्त्वमेवात्रोत्तरं वद ॥ ३०० ॥
सर्वेषामविवादेन प्रश्नोत्तरतया वचः ॥
यद्विभाति न तज्ज्ञातं किन्तु वस्तु तथैव तत् ॥३०१॥

---

॥ २९५ ॥ ईश्वरस्य कर्माद्यपेक्षया हेतुत्वे प्रलये तदस्ति न वा । आद्ये सर्वलयासिद्धेः । चरमे तदपेक्षस्याकारणत्वमिति तत्राह *यदिति ॥ २९६ ॥ अनभिव्यक्तकर्मादौ सृष्टिकालेऽभिव्यक्तौ को हेतुरित्याशङ्क्य प्राणिनां भोगकालाभिज्ञेश्वरसंकल्पवशात्तच्छक्त्या तमसैव तद्व्यज्यते इत्याह *तद्व्यक्ताविति ॥ २९७ ॥ अज्ञानस्यैव कार्यविशेषहेतुत्वं लोके दृष्टमित्युक्तमुदाहरणेन स्फुटयति *तैलेत्यादिना॥२९८॥ पिपृच्छिषा प्रष्टुमिच्छा॥२९९॥ न जानामीत्युक्तेरन्यथापि सम्भवान्नैतावता तस्य हेतुत्वसिद्धिरित्याशङ्क्य किमसामर्थ्यात्तदुक्तिरुत भ्रान्त्या ? नाद्य इत्याह *वक्तुरिति । *अन्यथेति । तिले दधिशक्तिः कुतो नेत्युक्ते न वेद्मीति व्यतिरेकेण त्वयाऽप्युत्तरं वक्तुमशक्यमित्यर्थः ॥ ३०० ॥ द्वि-

प्रश्नविश्रान्तिभूमित्वाच्चोद्यं तमसि नोदियात् ॥
न बुद्धिमन्तः पृच्छन्ति न जानामीति वादिनम्॥३०२॥
पृच्छन्त्यभिज्ञमिति चेद्बाढं न विवदामहे ॥
चोद्यानर्हत्वमज्ञाने तावता वारितं कथम् ॥ ३०३ ॥
न चोदनीयमज्ञानं दुर्घटानां नियामकम् ॥
इति लौकिकदृष्टान्तात्सिद्धं वेदविदां मतम् ॥३०४॥
एवं तर्हि न जानामीत्येवं सर्वत्र भण्यताम् ॥
किं सृष्टयुक्तिश्रमेणेति वक्षि चेदुत्तरं शृणु ॥३०५॥
साक्षान्नियामकं यत्र तमस्तत्रैव तद् ब्रुवे ॥
अन्यद्द्वारा नियमने वक्तव्यं द्वारमापतेत् ॥३०६॥
परमाणुर्मूलहेतुरित्येवं द्व्यणुकादिकम् ॥
ननूच्यते यथा तद्वद्वच्मि सृष्टिं तमःकृताम् ॥ ३०७ ॥
तमो नियामकं चेत्तत्किमन्तर्यामिणेति चेत् ॥
अन्तर्यामित्वशक्तिर्या सैव तत्तम उच्यते ॥ ३०८॥

---

तीयं प्रत्याह *सर्वेषामिति ॥ ३०१ ॥ कुशलेनापि काञ्चित्कक्षां गत्वा न जानामीति कथनात्प्रष्टुराकाङ्क्षानिवृत्तेश्चाज्ञानस्य हेतुत्वमित्याह *प्रश्नेति ॥ ३०२ ॥ न जानामीत्युक्ते प्रष्टुराकाङ्क्षा न निवर्त्ततेऽन्यथा विशेषज्ञं प्रति तन्न पृच्छेदित्याशङ्कते *पृच्छन्तीति ॥ न वेद्मीत्युक्त्या क्वचिदाकाङ्क्षानिवृत्त्यभावेऽपि तमसश्चोद्यानर्हतया पूर्वोक्तहेतुभिश्च दुर्घटकार्यहेतुत्वं सिद्धमेवेत्याह *चोद्येत्यादिना॥३०३॥३०४॥३०५॥३०६॥अज्ञानस्यैव मूलकारणत्वेऽप्यवान्तरकारणाभिप्रायेणाकाशाद्वायुरित्याद्युक्तिरुपपन्नेत्यत्र पराभिमतं दृष्टान्तमाह *परमेति । *ननूच्यत इति । उच्यत एवेत्यर्थः ॥३०७॥३०८॥ साक्षिव्यतिरेकेणान्तर्याम्यभ्यु-

ईशस्तमःप्रधानः सन्नियम्यानां नियामकः ॥
तेष्वेव चित्प्रधानः सन् साक्षितां प्रतिपद्यते ॥३०९॥
तमोनियमिताः कर्मभावनाद्यास्तमस्विनम् ॥
जीवं बध्नन्ति नो मुक्तं कारणानतिवृत्तितः ॥३१०॥
यथा कार्यो घटः कोऽपि मृत्तिकां नातिवर्तते ॥
तमःकार्यं भावनादि नातिक्रामेत्तमस्तथा ॥ ३११ ॥
जलूका व्रणगा रक्तं दुष्टमेव विवेचयेत् ॥
तथाऽऽत्मगतकर्मादि लब्धात्मानं विचिन्तयेत् ॥३१२॥
स्वकर्तुरुपभोगार्थं कर्माव्याकृतरूपकम् ॥
व्यक्तीभवत्प्रयुङ्क्ते तद् भूतभौतिकदृग्जगत् ॥ ३१३ ॥

---

पगमे ऽद्वैतहानिरित्याशङ्क्य तयोः कल्पितावान्तरभेदमाह *ईश इति ॥३०९॥ नन्वव्याकृतात्मना लीनाः कर्माद्या ईशेन चेदभिव्यज्यन्ते तर्ह्यविशेषान्मुक्तानपि बध्नीयुरिति नेत्याह *तम इति *तत्र हेतुमाह *कारणेति ॥ ३१० ॥ कर्माद्या मूढकार्यत्वा-त्तमतिक्रम्य न वर्त्तन्त इत्यत्र दृष्टान्तमाह *यथेति । तमःशब्दो मूढवचनः ॥३११॥ किञ्च यथा व्रणसम्बन्धाज्जलूका स्वभावादेव शुद्धशोणितं विहाय दुष्टशोणितमेव पृथक्कृत्य पिबति तद्वत् स्वभावादेव कर्मादयो जीवमाश्रयन्तीत्याह *जलूकेति। *लब्धात्मानमिति। लब्ध आत्मा स्वरूपं यस्मात्स तथोक्तस्तस्य कर्त्तारमित्यर्थः ॥ ३१२ ॥ एवं तमसो भावनाद्यभिव्यक्तिहेतुत्वमुपपाद्य तदभिव्यक्तेः फलमाह *स्वेति ॥ पूर्वकल्पे जीवेन कृतमव्याकृतात्मना स्थितं यत्कर्म तदेव व्यक्तं सत् जीवभोगाय भूतभौतिकात्मकं जगत्सृजतीत्यर्थः ॥ कर्मशब्दो ज्ञानादेरुपलक्षणम् ॥३१३॥ कर्मादिना जगज्जन्म चेत् तस्य सदा भावात्सदा

अव्यक्तजगतो व्यक्तिरन्तर्यामिप्रभावतः ॥
भवन्ती देशकालादिव्यवस्थां प्रतिपद्यते ॥ ३१४ ॥
यथा नियमयत्येष तथा भवति तज्जगत् ॥
नियन्ता सर्वजगतो नान्यः सम्भाव्यते प्रभोः॥३१५॥
न चोपालब्धुमस्माभिः शक्यते परमेश्वरः ॥
अतो विमुच्य चोद्यानि श्रूयतां महिमेश्वरः ॥३१६ ॥
अन्तर्यामी यदा कर्म नोद्बोधयति संहृतिः ॥
तदा भवेद्यदोद्बोधं कुर्यात्सृष्टिस्तदा भवेत् ॥ ३१७ ॥
अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ॥
अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥ ३१८॥
तादृशो ब्रह्मणोऽकस्मात्कर्मोद्बोधे प्रवर्तकम् ॥
तथा कर्मोपसंहारे नेश्वरोऽन्यदपेक्षते ॥ ३१९ ॥
वाति वायुर्यथा ऽकस्मादकस्माच्चोपशाम्यति ॥

---

जगज्जायेतेति प्रलयादिव्यवस्था न स्यात्तत्राह *अव्यक्तेति ।
जगच्छब्दः कर्मादिपरः ॥३१४॥ उक्तमेव व्यनक्ति *यथेति ।
शोऽपि किमिति कदाचिदेव जगद् व्यनक्ति न सर्वदेत्याश-
ङ्क्य स्वतन्त्रत्वात्तस्य न चोद्यावकाश इत्याह *नियन्तेति ॥
३१५॥३१६॥ संहृतिः प्रलयः ॥ ३१७॥ नन्वीदृक्शक्तिसम्पन्नं
द् ब्रह्म तर्हि तस्यैव जगद्धेतुत्वसम्भवात् किं तमसो जडस्य
द्धेतुत्वकल्पनयेत्याशङ्क्य तम एव तच्छक्तिरिति पूर्वोक्तं स्मार-
ति *अस्य द्वैतेति ॥ ३१८ ॥ जगद्व्यवस्था ईश्वरकृता चेत्तस्य
र्हि सशरीरत्वं स्यात् लोकेश्वरवत्तत्राह *तादृश इति। अज्ञान-
हितस्येत्यर्थः । अकस्मात् अज्ञानातिरिक्तहेतुं विना ॥३१९॥
स्य देहं विनाऽपि प्रवर्तकत्वे दृष्टान्तमाह *वातीति ।

निर्निमित्ते तथैवयात्कर्मोद्बोधोपसंहृती ॥ ३२० ॥
उत्थास्यामि मुहूर्तेऽहं ब्राह्म इत्यभिसन्दधत् ॥
शयानो नियमेनैव तदोत्तिष्ठेत्तथेक्ष्यताम् ॥ ३२१ ॥
संहरन्नभिसन्धत्ते इयत्तां संहृतेस्ततः ॥
तावत्याः संहृतेरन्ते सिसृक्षोदेति सत्वरम् ॥ ३२२
अज्ञानमात्रोपहितं ब्रह्माकाशस्य कारणम् ॥
आकाशोपहितं वायोर्वायूपहितमर्चिषः ॥ ३२३॥
अग्निनोपहितं चापां जलेनोपहितं भुवः ॥
एवमुत्तरकार्येषु ततः सर्वकृदुच्यते ॥ ३२४ ॥
कार्यकारणरूपेण स्थितं यज्जगदीक्ष्यते ॥
ओतं प्रोतं तदीशेऽस्मिन्कार्पासे तन्तुवस्त्रवत् ॥३२
प्रतिबिम्बतया कार्येष्वीशो नानात्वमाव्रजेत् ॥

---

तृणादि चालयतीत्यर्थः ॥ ३२० ॥ तस्य नियतकालसृष्टौ दृष्टा
न्तमाह *उत्थास्यामीति । स्वतन्त्रश्चेतनः स्वसङ्कल्पानुरोधेन य
था कृत्यं निर्वहति तथा निरङ्कुशस्वातन्त्र्ययुक्तः परमेश्वरोऽपि
सङ्कल्पानुरोधेन नियमेन सृष्ट्यादिकं करोतीत्यर्थः ॥ ३२१
॥ ३२२ ॥ कर्मादीनामपि जगद्धेतुत्वे ब्रह्मणः सर्वकर्तृत्वस
र्वाधारत्वहानिस्तत्राह *अज्ञानेति ॥ ३२३ ॥ ३२४ ॥ तत्तत्का
र्यस्वरूपेण स्थितं ब्रह्मैव सर्वकारणमित्युक्त्वा तथैव सर्वाधा
रत्वं सदृष्टान्तमाह * कार्येति ॥ ३२५ ॥ नन्वेवमपि क
ब्रह्मणोऽद्वितीयत्वं जीवानां पृथक्त्वेनोपलम्भात् इत्याशङ्क्य
भेदस्यौपाधिकत्वं दृष्टान्तेनाह * प्रतिबिम्बेति । “ आदित्या
ज्जायते वृष्टिः ” इतिस्मृतेरादित्योत्सृष्टा वृष्टिधारा इत्य

स्वोत्सृष्टतोयधारासु प्रतिबिम्बैर्यथा रविः ॥ ३२६ ॥
अपास्ताज्ञान ईशो ऽसावस्थूलाश्रुत्तिगोचरः ॥
साभासाज्ञानयुक्तः सन्साक्ष्यन्तर्यामितां व्रजेत् ॥ ३२७ ॥
हिरण्यगर्भो बुद्धिस्थो रजःसत्त्वतमोगुणैः ॥
ब्रह्मा हरिः पिनाकी स्यादेवमर्त्यादयस्तथा ॥ ३२८ ॥
तत्तत्सोपाधिजन्मैवं जन्मात्मन इहोच्यते ॥
अजनेर्वियतो जन्म यथा कुम्भादिजन्मना ॥ ३२९ ॥
असाधारणरूपैव मृत् स्वकार्ये बहुत्वतः ॥
सामान्यरूपतामेति स्वकार्येष्वीश्वरस्तथा ॥ ३३० ॥
अव्यावृत्तानुगतमपि ब्रह्म तमोवशात् ॥
व्यावृत्तानुगतात्मत्वमित्थं प्रासमिवेक्ष्यते ॥ ३३१ ॥

---

॥ ३२६ ॥ तत्रैव दृष्टान्तान्तरमप्याह *अपास्तेत्यादिना । यथाऽयमेव परमात्मा निरुपाधिकः सन्निर्गुणं ब्रह्मेत्युच्यते, स एव साभासाज्ञानयुतश्चित्प्रधानतयाऽऽत्मा साक्षी, तमःप्रधानतयाऽन्तर्यामीति च व्यपदिश्यते । यथा वा समष्टिबुद्ध्युपहितः स एव हिरण्यगर्भ इति, गुणत्रयोपहितः सन् ब्रह्मविष्णुरुद्रा इति च व्यपदिश्यन्ते । एवं व्यष्टिबुद्धिषु प्रतिबिम्बितः सन् जीव इत्युच्यत इत्यर्थः ॥३२७॥३२८॥ अत एव जीवस्य जनिरप्यौपाधिकीति सदृष्टान्तमाह *तत्तादिति॥३२९॥ ननु कारणत्वेन विशेषात्मना स्थितस्य ब्रह्मणः सर्वानुस्यूतसद्रूपेण कथं सामान्यात्मकत्वमेकरसत्वविरोधात्तत्राह *असाधारणेत्यादिना ॥३३०॥३३१॥ नन्वज्ञानमनादि उत सादि ? आद्ये तन्निवृत्तिर्न स्यात् । अन्त्ये तन्मूलसंसारस्याकस्मिकत्वं स्यादत आह *अनादीति । तत्र हेतुः *तज्जेति । अज्ञान-

अनादि तत्तमो ज्ञेयं तज्ज्ञकालाद्यनाप्लुतेः ॥
आगन्तु चेदिहाज्ञानमनिर्मोक्षः प्रसज्यते ॥ ३३२ ॥
न चानादेरनुच्छित्तिरनाद्यज्ञाननाशने ॥
मानानां मानतां सर्वे आश्रयन्ति हि वादिनः॥३३३
मान्तरैः पूर्वमज्ञातं वस्तु मेयमितीर्यते ॥
यद्वस्तुबोधादज्ञाननाशकं मानमुच्यते ॥ ३३४ ॥
उक्ताज्ञानप्रधानत्वे कार्यकारणता चितः ॥
चित्प्राधान्यविवक्षायां कार्यकारणसाक्षिना ॥३३५॥
साक्ष्ये अज्ञानतत्कार्ये अपेक्ष्य भ्रान्तबुद्धिभिः ॥
कूटस्थो निर्द्वयोऽप्यात्मा साक्षीत्यध्यस्यते जडैः॥३३६

---

न्त्वात्कालादेस्तस्ये तेनापरिच्छेदादित्यर्थः *अनिर्मोक्ष इति नष्टस्यापि पुनः उत्पत्तिसम्भवादिति भावः ॥ ३३२ ॥ अनादिभावस्यात्मवदनुच्छित्तिमाशङ्क्याह *न चेति । मानतां हेतुतामिति यावत् । मानेनाज्ञाननिवृत्तेरनुभवात्तस्यास्तत्फलत्वं वादिभिरङ्गीकार्यम् । अन्यथा मानवैफल्यप्रसङ्गादिति भावः॥३३३॥ एतदेव स्पष्टयति *मान्तरैरिति । पूर्वं कदापि मानान्तरादज्ञातं यद्वस्तु तस्य मेयत्वमङ्गीकृत्य तद्बोधकमानस्य तदज्ञाननिवर्त्तकत्वं वदद्भिरनाद्यज्ञाननिवृत्तेर्मानफलत्वमङ्गीकृतम्, अतोऽनादेरपि प्रागभाववन्निवृत्तिः सम्भवतीति भावः ॥३३४॥ ईश्वरस्य सर्वात्मत्वे "मयाऽध्यक्षेण प्रकृतिः" इत्यादिवचनविरोध इत्याशङ्क्य विवक्षाभेदेनोभयोपपत्तिमाह *उक्तेति॥३३५॥ ननु चित्प्रधानत्वे साक्षित्वस्याविद्यत्वं न स्यादिति नेत्याह *साक्ष्येति ॥ ३३६ ॥ इयांस्तु विशेषः—अज्ञानमात्रान्न साक्षित्वं किन्तु अज्ञानाभासेनापि भाव्यमित्याह *मोहेति

मोहतत्कार्यनीडं यत्कूटस्थाभासरूपकम् ॥
ज्ञानं तदाविनाभूतः परः साक्षीति भण्यते ॥ ३३७ ॥
कूटस्थस्य न साक्षित्वं द्वितीयासङ्गतेर्भवेत् ॥
नाशिनोऽपि न साक्षित्वं साक्ष्येणाव्यतिरेकतः॥३३८॥
अज्ञानमात्रहेतौ तु सर्वमेतत्समञ्जसम् ॥
कर्तृत्वाद्यन्यथाज्ञानहेतुत्वात्तस्य चात्मनि ॥ ३३९ ॥
नचाज्ञानस्य वस्तुत्वं शक्यते शङ्कितुं बुधैः ॥
तेन साक्षित्वकर्तृत्वभोक्तृत्वादेरवस्तुता ॥ ३४० ॥
ज्योतिषामपि तज्ज्योतिरस्मद्धीपारिमोषणात् ॥
तमोरूपमिवाभाति भानुर्नक्तंदृशामिव ॥ ३४१ ॥

---

अज्ञाने तत्कार्ये च स्थितं यच्चिदाभासात्मकं ज्ञानं तेन तादात्म्यं गतः परमात्मा साक्षीत्युच्यत इत्यर्थः ॥३३७॥ *कूटस्थस्येति । साक्ष्येण सम्बद्धः साक्षी, असङ्गस्य तदयोगादित्यर्थः । *नाशिन इति । प्रमातुरपि साक्ष्यावच्छिन्नत्वेन तत्कोटिनिविष्टत्वादित्यर्थः ॥ ३३८ ॥ सामञ्जस्यमेवाह *कर्तृत्वादिति । अज्ञानस्यात्मनि दर्शनकर्तृत्वात्मकसाक्षित्वारोपहेतुत्वादारोपितं तदुपपन्नमिति भावः ॥ ३३९ ॥ अज्ञानकार्यस्यापि साक्षित्वादेः सत्यत्वमस्त्वित्याशङ्क्य अज्ञानस्य स्वप्रकाशात्मनो भेदेनाभेदेन वा दुर्निरूपस्यासत्यत्वे सिद्धे तत्परिणामस्य जगतः सत्त्वशङ्कैव नास्तीत्याह *न चेति ॥ ३४० ॥ आत्मनः स्वप्रकाशत्वे तदभिन्नब्रह्मानुभवः सदा किमिति न स्यादत आह *ज्योतिषामिति । आदित्यादिप्रकाशकं ब्रह्म यद्यपि स्वप्रकाशं तथाप्यशुद्धबुद्धीनामस्वप्रकाशमसदिव भाति उलूकादीनामिवादित्य इत्यर्थः ॥ ३४१ ॥ तर्हि स्वप्रकाशब्रह्मणो मोहस्य कः सम्ब-

आत्मात्मवत्त्वसम्बन्ध आत्मात्माज्ञानयोर्मतः ॥
ईशादिविषयान्तं यत्तदविद्याविजृम्भितम् ॥ ३४२ ॥
मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
इति वेदशिरःसूक्तिरुक्तार्थे युज्यते स्फुटम् ॥ ३४३ ॥
दैवी ह्येषा गुणमयी मम मायेति च स्मृतिः ॥
वैष्णवी खल्वियं मायेत्येवं लोके च गीयते ॥३४४॥
इत्थमव्याकृतस्यास्य जगत्कारणतोदिता ॥
प्रमेयत्वं पूर्वमुक्तं द्वैविध्यं तत्र सुस्थितम् ॥ ३४५ ॥
चित्प्रधानं प्रमेयत्वे हेतुत्वे मोहमुख्यता ॥
मेयत्वात्तदुपादेयं हेयं तत्कारणत्वतः ॥ ३४६ ॥
तस्मिन्नव्याकृते ब्रह्मभागः शास्त्रेण मीयते ॥
मोहभागोऽनर्थमूलं ब्रह्मबोधेन बाध्यते ॥ ३४७ ॥
यतो बिभ्यति भूतानि संसाराख्यादनर्थतः ॥

---

न्धस्तत्राह * आत्मेति । आत्मात्मवत्त्वमाध्यासिकं तादात्म्यम् । ब्रह्मातिरिक्तस्य मायिकत्वमुक्तमुपसंहरति *ईशादीति ॥ ३४२ ॥ तत्र श्रुत्यादि प्रमाणयति *मायामिति ॥ ३४३ ॥ ॥ ३४४ ॥ एवमुपपादितार्थस्य निरवद्यत्वमाह *इत्थमित्यादिना ॥ ३४५ ॥ द्वैविध्यकथनस्य फलमाह *मेयत्वादिति । प्रमातुं योग्यत्वात् तत् चित्प्रधानमव्याकृतम् उपादेयं प्रमितव्यम् । मोहप्रधानमव्याकृतमनर्थहेतुत्वाद्धेयं ब्रह्मज्ञानेन प्रविलाप्यमित्यर्थः ॥ ३४६ ॥ एतदेव स्फुटयति * तस्मिन्निति ॥ ३४७ ॥ सम्भावितप्रतिज्ञायां संसाराख्यमहाव्याधेः किं मूलमित्यादिना प्रमेयसम्भावनायाः अनर्थमूलत्वस्य च वक्तव्यत्वमुक्त्वा तदुभयकथनायाव्याकृतवाक्यं प्रवृत्तमित्युक्तम् । इदानीमनर्थ-

तन्मूलं मोह इत्युक्ते स्यादुच्छेद्यत्वसम्भवः ॥ ३४८ ॥
आगता बहवश्चोरा इति श्रुत्वाऽतिविह्वलः ॥
स्वप्नप्रलापं तं ज्ञात्वा भवेत्स्वस्थो यथा तथा ॥३४९॥
महासम्भ्रमसंसारदुरुच्छेदत्वशङ्कया ॥
विह्वलो मूलशैथिल्यं ज्ञात्वोच्छेदे प्रवर्तते ॥ ३५० ॥
स्वात्मैव मेय इत्युक्ते बोधसौलभ्यसम्भवात् ॥
भवेदभिमुखो यत्नाच्छ्रुतमव्याकृतं ततः ॥ ३५१ ॥
इत्यव्याकृतवाक्यार्थो न्यायेन सुनिरूपितः ॥
अथ व्याकृतवाक्यार्थः क्रमप्राप्तो निरूप्यते ॥ ३५२ ॥
व्याकृतं द्विविधं देहसृष्टिर्देहप्रवेशनम् ॥
देहादिर्विषयत्वेन प्रवेशात्पूर्वमुच्यते ॥ ३५३ ॥
अव्याकृतं यत्पुरोक्तमनामकमरूपकम् ॥
श्रुतिः—तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत ॥
वार्त्तिकम्–तदिदं नामरूपाभ्यामेव

---

मूलमज्ञानमित्युक्तेः प्रयोजनमाह *यत इति ॥ ३४८ ॥ उक्तमर्थं दृष्टान्तपूर्वकमुपपादयति *आगता इत्यादिना । चोरागमनवाक्यस्याप्तोक्तत्वभ्रमादुत्पन्ना भीतिर्यथा तस्य सुप्तप्रलपितत्वज्ञानान्निवर्त्तते एवं दुःखहेतुरपि संसारो दुरुच्छेद इति भ्रमस्तस्य निर्मूलत्वज्ञानान्निवर्त्तेत इत्यर्थः ॥ ३४९ ॥ ३५० ॥ आत्मनो मेयत्वोक्तेः फलमाह *स्वेति । *श्रुतमिति । यस्मान्मेयत्वाज्ञानयोरुक्तिः सफला तस्मादर्थोन्मुखतश्च तदुभयं वस्तुमव्याकृतवाक्यं प्रवृत्तमित्यर्थः ॥ ३५१ ॥ ३५२ ॥ *देहादिरिति । प्रवेश्यं विना प्रवेशानुपपत्तेरित्यर्थः ॥ ३५३ ॥

व्याक्रियते स्वयम् ॥ ३५४ ॥
सुषुप्तादुत्थितो राज्ञः स्वयमेव यथा तथा ॥
जग्धाशेषजगन्मूर्तेरव्यक्ताद्व्याकृतिर्मुहुः ॥ ३५५ ॥
नामरूपे तु शब्दार्थौ न ताभ्यामतिरिच्यते ॥
जगत्किञ्चिद्घटादौ हि द्वयमेव समीक्ष्यते ॥ ३५६ ॥
प्रक्रियानियमो नात्र पुंव्युत्पत्तिप्रधानतः ॥
अतः श्रुतिषु सृष्ट्यादिविगानं बहुधेक्ष्यते ॥ ३५७ ॥
यया यया भवेत्पुंसां व्युत्पत्तिः प्रत्यगात्मनि ॥
सा सैव प्रक्रियेह स्यात्साध्वी सा चानवस्थिता॥३५८॥

---

तन्नामरूपाभ्यामित्यादेरर्थमाह *अव्याकृतमिति ॥ ३५४ ॥ अज्ञातप्रत्यग्धातोर्बाह्यनिमित्तानपेक्षस्य स्रष्टृत्वे दृष्टान्तमाह *सुषुप्तादिति । यद्यपि बन्दिभिर्बोध्यते राजा तथापि कदाचित्स्वयमेव प्रतिबुध्यमानो दृश्यत इति दृष्टान्तसिद्धिः । *मुहुरिति संसारस्यानादित्वं सूचयति ॥ ३५५ ॥ तन्नामरूपाभ्यामित्यत्र नामरूपशब्दयोरर्थं वदन्नवधारणस्याप्यर्थमाह *नामेति॥३५६॥ नामरूपाभ्यां सकारणेऽपि व्याक्रियमाणतत्त्वानि कियन्तीत्याशङ्क्य सृष्टेरविवक्षितत्वान्न सृज्यमानसङ्ख्याऽन्वेषणमित्याह *प्रक्रियेति । अविवक्षितत्वे हेतुः * पुंव्युत्पत्तीति । पुंसो व्युत्पत्तिर्ज्ञानं तत्परत्वात्सृष्टिश्रुतेरित्यर्थः । तत्रैव हेत्वन्तरमाह *अत इति । क्वचिदाकाशादिका क्वचिदग्न्यादिका क्वचिदक्रमेणेति विरुद्धमुच्यत इत्यर्थः ॥ ३५७ ॥ का तर्हि सृष्टिरेष्टव्या ? *ययेति । इहेति श्रुतौ मार्गोक्तिः । साध्वीति फलवत्त्वकथनम् । व्यवस्थिता तर्हि सेत्याशङ्क्याधिकारिबुद्धितारतम्यान्नेत्याह *सा चेति ॥ ३५८ ॥ व्याक्रियतेति पदस्यार्थमाह

त्विस्पष्टत्वं व्याकृतत्वं शुक्तिकारजतादिवत् ॥
स्पष्टमव्याकृतान्मोहान्मिथ्याज्ञानमिदं जगत्॥३५९॥
ननु सामान्यविज्ञानविशेषाज्ञानसंश्रयात ॥
जातरूप्यस्मृतेर्लोके मिथ्याज्ञानं प्रसिध्यति ॥३६०॥
यत्राध्यासो यदध्यस्तं भेदश्चापेक्षितस्तयोः ॥
या मिथ्याज्ञानसामग्री सा त्वैकात्म्येऽति दुर्लभा॥३६१॥
उच्यतेऽनिर्वाच्यवादे त्रितयान्न मृषा मतिः ॥
अपि त्वज्ञानमेवैकं भ्रान्तिरूपेण वर्त्स्यति ॥ ३६२ ॥
येनानिर्वाच्यमज्ञानमुपेक्ष्यान्यदुपेयते ॥
मिथ्याज्ञानं मते तस्य त्रितयं भ्रान्तिकारणम् ॥३६३॥
अवस्तुत्वादनिर्वाच्यं कथं संसारकारणम् ॥
मिथ्याज्ञानं तु वस्तुत्वाद्धेतुः स्यादिति चेन्न तत्॥३६४॥

---

*विस्पष्टत्वमिति। किमपेक्षया स्पष्टत्वं ? तदाह *स्पष्टमव्याकृता-दिति । मिथ्याज्ञानशब्दः कर्मव्युत्पत्त्या विषयवचनः । मिथ्या-ज्ञानविषयः प्रपञ्चः शुक्तिरजतवत् स्पष्टो बभूवेत्यर्थः ॥ ३५९ ॥ दृष्टान्तवैषम्यं शङ्कते *नन्विति । दृष्टान्ते कारणत्रयमस्ति दार्ष्टान्तिके तन्न दृष्टम् आत्मनो निःसामान्यविशेषत्वादनात्मनश्च नित्यसाक्षिवेद्यत्वेन स्मृत्ययोगादित्यर्थः ॥ ३६० ॥ किञ्च भेदाग्रहोऽध्यासव्यापकः तदभावान्नानात्माध्यास इत्याह *य-त्रेति । अद्वैतवादे भेदस्यैवाभावादिति भावः । ततः सामग्र्य-भावादध्यासासम्भव इत्युपसंहरति *या मिथ्येति ॥ ३६१ ॥ कारणत्रयाभावान्न भ्रान्तिरित्युक्तं तावत् चोद्यं समाधत्ते *उ-च्यत इत्यादि॥३६२॥३६३॥अज्ञानस्य संसारहेतुत्वे सिद्धे तदेव मिथ्याज्ञानरूपेणापि वर्तते तदेवासिद्धमिति शङ्कते *अवस्तु-त्वादिति । किं तर्हि तत्कारणं तत्राह *मिथ्येति ॥ ३६४ ॥

वस्तुप्रमित्या हेयस्य मिथ्याज्ञानस्य वस्तुता ॥
न युक्ता वस्तुनो मानहेयत्वे शून्यशेषता ॥ ३६५ ॥
मिथ्या च वस्तु चेत्येतत्कथं न व्याहतं वचः ॥
न च त्रितयजन्यत्वं मिथ्याज्ञानस्य युक्तिमत् ॥३६६॥
व्योमनैल्ये दिग्भ्रमे च रविप्राग्याननिद्रयोः ॥
अङ्गीकर्त्तव्यमेवैतन्मिथ्याज्ञानमृते त्रयात् ॥ ३६७ ॥
व्योमन्यचाक्षुषे नैल्यभ्रमश्चाक्षुष ईक्ष्यते ॥
न च सामान्यविज्ञानं चाक्षुषं तत्र सम्भवेत् ॥३६८॥
नीरूपदिग्विभेदेषु प्राच्यादिव्यत्ययेक्षणम् ॥
पश्चाद्गच्छत्सु मेघेषु रवौ प्राग्गतिविभ्रमः ॥ ३६९ ॥
स्वप्ने नानाप्रपञ्चाढ्यं मिथ्याज्ञानमवेक्ष्यते ॥
न सम्पादयितुं शक्यं तत्र तत्रोचितं त्रयम् ॥३७०॥
सम्यग्ज्ञाने च मिथ्यात्वं स्यात्तत्र त्रयसम्भवात् ॥
सोऽयं घट इति ज्ञाने सम्भवत्युदितं त्रयम् ॥३७१॥

---

संसारहेतुत्वेनाभिमतं मिथ्याज्ञानम् अधिष्ठानज्ञानेन बाध्यते न वा ? आद्ये न तस्य वस्तुत्वमित्याह *वस्त्विति । सत्यस्यापि माननिवर्त्यत्वे दोषमाह *वस्तुन इति ॥ ३६५ ॥ द्वितीयं निराह *मिथ्या चेति । अधिष्ठानज्ञानादीनां मिथ्याज्ञानहेतुत्वमभ्युपेत्य अनिर्वचनीयवादेन तदपेक्षेत्युक्तम्, इदानीमभ्युपगमं त्यजति *न चेत्यादिना ॥३६६॥३६७॥ गगननैल्यादिभ्रमचतुष्टयस्याधिष्ठानज्ञानाद्यहेतुत्वं क्रमेणोपपादयति *व्योमनीत्यादिना ॥३६८॥३६९॥३७०॥ किञ्च न सामान्यज्ञानादित्रयजन्यत्वं भ्रमत्वं सम्यग्ज्ञानेऽतिव्याप्तेरित्याह *सम्यगिति ॥ ३७१ ॥ *विशेष इति । घटाद्यन्तःप्रवेशेन चक्षुःसन्निक-

कालद्वयेऽप्यनुगतं सामान्यं भात्यथान्तरे ॥
विशेषो नैव भात्यस्ति तत्रांशे स्मरणं तथा ॥३७२॥
मिथ्याधियः स्मृतित्वेन वस्तुत्वं ये प्रचक्षते ॥
तन्मतं च न सम्भाव्यं पुरोवर्तित्वभासनात् ॥३७३॥
अनालिङ्गितबाह्यार्था बुद्धावेव स्मृतिर्भवेत् ॥
इदं रजतमित्येतद्भाति बाह्यार्थगोचरम् ॥ ३७४ ॥
वस्तुत्वं वस्तुबोधित्वान्मिथ्यासंशययोर्यदि ॥
सम्यग्ज्ञानात्तयोर्भेदस्तदा तं केन हेतुना ॥ ३७५ ॥
अतोऽनिर्वचनीयं तदज्ञानं भावरूपकम् ॥
रजताद्यन्यथाज्ञानकारणं युक्तिगौरवात् ॥ ३७६ ॥
अहमत्र विपर्येमि सन्दिहानोऽथवा न मे ॥
अस्त्यत्र ज्ञानमित्याहुस्तयोरज्ञानहेतुताम् ॥ ३७७ ॥
मिथ्याज्ञानातिरेकेण ये त्वज्ञानं न मन्वते ॥
तेषां दोषद्वयं वज्रसमानं केन वार्यते ॥ ३७८ ॥
किं न्वेतदिति जिज्ञासोर्नेदं रजतमित्यतः ॥

---

भावादिति ॥ ३७२ ॥ अन्ये तु मिथ्याज्ञानस्य स्मृतित्वान्न
मत्वमित्याहुः, तान्प्रत्याह *मिथ्येति । तस्य स्मृतित्वाभावे
तुः *पुर इति ॥ ३७३ ॥ स्मृतिवैलक्षण्यमेवाह *अना-
ङ्गितेति । अनालिङ्गितोऽविषयीकृतो बाह्यार्थः सन्निकृष्टवि-
यो यया ॥ ३७४ ॥ मिथ्याधीसंशययोरुभयोरपि सत्यवस्तु-
षयत्वं केचिदाहुः, तान्निराह *वस्तुत्वमिति ॥ ३७५ ॥
रेशेषादनिर्वाच्यवाद एव श्रेयानित्युपसंहरति *अत इति
३७६ ॥ अनुभवानुसारित्वाच्चेदं मतमुपादेयमित्याह *अह-
ति ॥३७७॥३७८॥ दुष्परिहरं दोषद्वयमुदाहरति *किं न्विति

प्रतिषेधाद्वस्तुतत्त्वं बुध्येताज्ञानहानतः ॥ ३७९ ॥
रजतभ्रमयुक्तस्य शुक्तिकैषेति वाक्यतः ॥
शुक्तिबोधो भवेन्नैव मिथ्याज्ञानानिषेधतः ॥ ३८० ॥
अज्ञानमेव हेतुः स्याद्यदि भ्रान्तेस्तदा कथम् ॥
रूप्यधीनियमः शुक्ताविति चेत्तेऽपि तत्समम्॥३८१॥
अथ ते शौक्ल्यसाम्येन रौप्यधीर्यदि तर्हि ते ॥
वस्तुत्वसाम्यतः शुक्तौ गजधीरपि नो कुतः ॥३८२॥
अस्तु शौक्ल्येन नियमस्तस्य वा रूप्य एव कः ॥
पक्षपातो विना हेतुं बलाकाज्ञानकृन्न किम् ॥ ३८३ ॥
अदृष्टेनास्य नियमे समो मायामतेऽपि सः ॥
यद्वा दुर्घटकारिण्यां मायायामेव सम्भवेत् ॥ ३८४ ॥

---

द्वाभ्याम् । अधिष्ठानसाक्षात्कारात्पूर्वं किमेतच्छुक्तिका वा रजतं वेति ज्ञातुमिच्छतो नेदं रजतमित्याप्तोपदेशानन्तरं शुक्तितत्त्वसाक्षात्कारं विनाऽपि जिज्ञासा निवर्तेत, त्वदभिमताज्ञानस्य वाक्यादेव नष्टत्वात्। एवमिदं रजतमिति पुरोवर्तिनि रूप्यभ्रमवतीयं शुक्तिरेवेत्याप्तवाक्याच्छुक्तितत्त्वधीर्नोदियात्, नेदं रजतमिति त्वदभिमताज्ञानानिषेधादित्यर्थः । सिद्धान्ते त्वियं शुक्तिरिति वाक्याच्छुक्तितत्त्वे ज्ञाते तन्नान्तरीयकतया तदज्ञाननिवृत्तिः, नेदं रजतमित्येतत्तदनुवादकमिति भावः ॥ ३७९॥ ३८० ॥ ३८१ ॥ *वस्तुत्वेति । वस्तुत्वस्य सामान्यत्वेन शौक्ल्यात्प्रागेव ग्रहणादित्यर्थः ॥३८२॥ *अस्त्विति । शौक्ल्यस्य बलाकादिभिरपि सम्बन्धाच्छुक्तौ बलाकाज्ञानं वा किमिति न करोतीत्यर्थः॥ ३८३ ॥ शुक्तौ नियमेन रूप्यभ्रमेऽदृष्टस्य हेतुत्वमङ्गीकृत्य साम्येन परिहृतम्, इदानीमङ्गीकृतं परित्यजति *यद्वेत्यादिना । मायायां, सत्यामेव भ्रमनियम इति शेषः ॥ ३८४ ॥ मायाचोद्ये

कस्माद्दृष्टमप्येतन्नान्यथैव नियच्छति ॥
मायाचोद्ये वस्तुवादी कथं परिहरिष्यति ॥ ३८५ ॥
न जानामीति चेद्वक्ति मायावाद्येव तर्हि सः ॥
तस्मादज्ञानएवैष विभ्रमः पर्यवस्यति ॥ ३८६ ॥
अज्ञातशुक्तौ रजतभ्रान्तिर्यद्वत्तथाऽऽत्मनि ॥
अविज्ञाते नामरूपे विभ्रमाद् द्वैतलक्षणम् ॥ ३८७ ॥
पदार्थान्तरसद्भावमपेक्ष्यान्यस्य वस्तुनः ॥
यस्य सिद्धिर्मृषा तत्स्याद्रज्जुसर्पाद्विचन्द्रवत् ॥ ३८८ ॥
प्रमात्रादीह यत्किञ्चित्तत्सर्वं प्रत्यगात्मनः ॥
सत्तामपेक्ष्य संसिद्ध्येत्तस्मात्तत्स्वप्नवन्मृषा ॥ ३८९ ॥
अनन्यापेक्ष आत्माऽयं स्वमहिम्नैव सिद्ध्यति ॥
नहि भावमपेक्षन्ते लोका अहमितीक्षणे ॥ ३९० ॥
अस्य द्वैतस्य वस्तुत्वं यद्विभाति प्रतीतितः ॥
तदात्मवस्तुसम्बन्धाद्भाति तत्र ननु स्वतः ॥ ३९१ ॥
रज्जुसर्पो यथा रज्ज्वा सात्मकः प्राग्विवेकतः ॥

---

मायावादिचोद्ये इत्यर्थः ॥ ३८५ ॥ ३८६ ॥ शुक्तिरजतस्याज्ञानकार्यत्वे सिद्धे दृष्टान्तवैषम्याभावादज्ञानकार्यनामरूपात्मकद्वैतस्य मिथ्यात्वं सिद्धमित्याह *अज्ञातेति । अविज्ञाते आत्मनीति सम्बन्धः । विभ्रमात् स्फुरतीति शेषः ॥ ३८७ ॥ किञ्च जगत् कल्पितं सापेक्षत्वात् रज्जुसर्पवादित्याह *पदार्थेति । ३८८ ॥ सापेक्षत्वमेवाह *प्रमात्रादीति ॥ ३८९ ॥ उक्तहेतोरात्मनि व्यभिचारमाशङ्क्य अनादिस्वप्रकाशस्यात्मन उत्पत्तौ ज्ञप्तौ वा नान्यापेक्षेत्याह *अनन्येति ॥ ३९० ॥ ननु सन् घटः इत्यादिना सत्यत्वेन प्रतीयमानद्वैतस्य कथमसत्यत्वं ?

स्वतो निरात्मकं तत्स्यात्सात्मद्वैतं तथाऽऽत्मना ॥३९२
यत्स्याद्यस्मिन्नविज्ञाते ज्ञाते तस्मिन्न तद्भवेत् ॥
स्वतो निरात्मकं तत्स्यादिदं द्वैतं च तादृशम् ॥ ३९३॥
अहं ब्रह्मेत्यविज्ञाते द्वैतमेतद्विभासते ॥
ज्ञाते त्वविद्याविध्वंसान्न क्वचिद्भेदधीर्भवेत् ॥ ३९४ ॥
विद्योत्पत्तावविद्येयं विरुद्धत्वेन बाध्यते ॥
नातः पृथगपेक्षाऽस्ति मिथ्याधीबाधनं प्रति ॥३९५॥
मिथ्याधियोऽस्याः सद्भावः स्यादविद्यैकमूलतः ॥
मूलध्वस्तौ हतैवैषा भाताऽप्यस्मान्न बाधते ॥३९६॥
मूले क्रकचसंछिन्ने सुमहानपि पादपः ॥

---

तत्राह *अस्येति ॥ ३९१ ॥ ३९२ ॥ जगतः स्वसत्ताशून्यत्वेऽनुमानमाह *यत्स्यादिति । विमतं सत्ताशून्यं ज्ञाननिवर्त्यत्वात् सम्मतवदित्यर्थः ॥ ३९३ ॥ ३९४ ॥ ज्ञानस्याज्ञाननिवर्त्तकत्वेऽपि न प्रपञ्चनिवर्त्तकत्वं, ज्ञाततत्त्वस्यापि तत्प्रतीत्यनुवृत्तेः । अतो ज्ञानानन्तरभाविज्ञाननिवर्त्यत्वं वक्तव्यमिति नोक्तहेतुना तस्य मिथ्यात्वसिद्धिरित्याशयेन शङ्कते *विद्योत्पत्ताविति ॥३९५॥ तत्त्वान्यत्वाभ्यां दुर्निरूपस्य द्वैतस्याविद्यामूलत्वस्य वक्तव्यत्वाज्ज्ञानेनैव तन्निवृत्तिः, तत्त्वधियः सविलासाज्ञाननिवर्त्तकत्वदृष्टेः । अतो न हेत्वसिद्धिरिति परिहरति *मिथ्याधिय इति । कथं तर्हि ज्ञानानन्तरं तदनुवृत्तिस्तत्राह *भाताऽपीति । बाधितस्यापि प्रारब्धकर्मवशादनुवृत्तिसम्भवात्तन्नाशादेव नाशोपपत्तेर्न ध्यानादिनाश्यत्वं कल्प्यमिति भावः॥३९६॥ मूलनाशे सति कार्यनाशे न हेत्वन्तरापेक्षेत्यत्र दृष्टान्तमा-

यथापूर्वं फलं नैव दत्ते शुष्यति कालतः ॥ ३९७ ॥
यत्राध्यासो यदध्यस्तं भेदो भाति तयोरिति ॥
यदुक्तं तदसद्भेद एवात्राध्यस्यते यतः ॥ ३९८ ॥
न भेदभेदिनोर्लोके भेदान्तरमपेक्ष्यते ॥
तस्मादध्यस्यते भेदो निर्भेदात्मन्यविद्यया ॥३९९ ॥
ईश्वराव्याकृतप्राणविराड्भूतेन्द्रियादिधीः ॥
नाविद्योपाश्रयं मुक्त्वा सम्भाव्या प्रत्यगात्मनि॥४००॥
प्रत्यग्याथात्म्यदृष्ट्या तन्निपुणोऽपि न वीक्षते ॥
नच प्रत्यग्धियं मुक्त्वा पराग्बुद्धिर्मितिर्भवेत्॥४०१॥
पराञ्चि खानीत्येतच्च साटोपमभिधीयते ॥

---

इ *मूलेति ॥ ३९७ ॥ भेदग्रहाभावादात्मन्यनात्माध्यासो
ेति पूर्वपक्षोक्तमनूद्य निराकरोति *यत्रेति ॥ ३९८ ॥
उक्तमेव व्यनक्ति *नेति ॥ वस्तुस्वरूपव्यतिरेकेण भे-
दस्य दुर्निरूपत्वादिति भावः ॥ ३९९ ॥ अत एवे-
श्वराद्यष्टावस्थं जगत् सत्यमिति मतं निरस्तमित्याह * ईश्व-
ेति ॥ अन्तर्यामिसाक्षिणौ ईश्वरशब्दितौ । भूतशब्दो भौ-
तिकस्याप्युपलक्षणम् ॥ इन्द्रियशब्देन देवतोच्यते । आदिना
जातिः ॥ ४०० ॥ उक्तेऽर्थे हेत्वन्तरमाह *प्रत्यगिति ॥ त-
थापि पराग्दृष्ट्या दृष्टत्वात् द्वैतस्य सत्यत्वमित्याशङ्क्याह *न-
चेति ॥ ४०१ ॥ आत्मनोऽपि तर्हि पराग्बुद्धिबोध्यत्वान्मि-
थ्यात्वं, स हि सर्वप्रत्ययवेद्योऽभ्युपेयते, नेत्याह *पराञ्चीति॥
एतत् प्रत्यग्दृष्टिरूपमानमात्रगम्यत्वमात्मनो वेदान्तेषु पराञ्ची-
त्यादिश्रुत्या सतात्पर्यमुच्यते, नहि तस्य सोपाधिकस्य सर्व-

प्रत्यङ्मानैकमेयत्वं वेदान्तेष्वात्मवस्तुनः ॥ ४०२ ॥
नित्यशुद्धस्तथा बुद्धो मुक्तः सत्यः परः स्वतः ॥
प्रत्यग्दृष्ट्याऽवसेयोऽसौ सद्वेदान्तोक्तिमानतः ॥४०३॥
एवम्भूतोऽप्यसम्बुद्धस्वात्मतत्त्वो महेश्वरः ॥
आपेदे कारणात्मत्वं नामरूपादिसर्जने ॥ ४०४ ॥
नामरूपाध्यास एवं व्याकृतः प्रतिपादितः ॥
प्रवेश्यः, तत्र जीवस्य प्रवेशः प्रतिपाद्यते ॥ ४०५ ॥
श्रुतिः-असौनामाऽयमिदꣳरूप इति, तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियतेऽसौनामाऽयमिदꣳरूप इति, स एष इह प्रविष्ट आनखाग्रेभ्यः ॥

---

प्रत्ययवेद्यत्वेऽपि निरुपाधिकस्य तथात्वमिति योजना ॥४०२॥ तर्हि प्रत्यङ्मानमात्रगम्यात्मा कीदृशः ? तत्राह * नित्य इति । *सदिति । निर्दुष्टापौरुषेयवेदान्तवाक्यादित्यर्थः ॥४०३॥ एव-म्भूतस्यापि परस्याविद्यावशात्कारणत्वं सम्भावयति * एव-मिति ॥ ४०४ ॥ व्याकृतवाक्यार्थमुपसंहरन्नुत्तरवाक्यस्यानेन सङ्गतिमाह * नामेति ॥ ४०५ ॥

असौनामाऽयमित्यादिश्रुतेरयमर्थः— असाविति नि-पातः, तेन नामसामान्यं व्यपदिशति । चैत्रो मैत्र इति यो नामास्येत्यसौनामा । अयमिति रूपसामान्य-निर्देशः । शुक्लं कृष्णं वा रूपमस्येतीदंरूपमव्याकृतवस्तु नामरूपसामान्यात्मना तद्विशेषात्मना च निमित्तवशाद्व्यक्तीब-भूवेत्यर्थः । अव्याकृतमेव व्याकृतात्मना व्यक्तमित्येतत्सुप्तप्र-बुद्धदृष्टान्तेन स्पष्टयति—तदिदमव्याकृतं वस्तु सुप्तिकालीन-मेव । एतर्हि प्रबोधकाले ।

वा० सर्वशास्त्रारम्भ एष यदर्थस्तद्विबुद्धये ॥
स एष इह देहेषु प्रविष्ट इति गीयते ॥ ४०६ ॥
आत्मज्ञानावतारार्थः सर्वशास्त्रसमुद्भवः ॥
संसारोच्छेदमेवामी फलं शास्त्रकृतो ब्रुवन् ॥ ४०७॥
स्वत एव मनुष्याणां प्रवृत्तिर्भोगसिद्धये ॥
तत्रानुवादि शास्त्रं स्यान्निवृत्तावेव तन्मितिः ॥४०८॥
विरोधः सर्वशास्त्रेषु पदार्थानां व्यवस्थितौ ॥
युक्तस्तात्पर्यहीनत्वाच्छ्रुतौ सृष्टिविगानवत् ॥४०९ ॥
अपि वात्स्यायनादीनां शास्त्राणां द्वारभेदतः ॥
प्रामाण्यमविरुद्धं स्यादैकात्म्यज्ञानजन्मने ॥ ४१० ॥

---

स एष इहेत्यादिवाक्यतात्पर्यमाह * सर्वेति ॥ ४०६ ॥ यदर्थं सर्वशास्त्रारम्भ इत्युक्तं विवृणोति *आत्मेति । तत्र हेतुः *संसारेति ॥ ४०७ ॥ अन्यार्थत्वेन प्रवृत्तशास्त्राणां कथं संसारनिवृत्तिफलकत्वमित्याशङ्क्य, स्वर्गादिबोधित्वेन तदुपायबोधित्वेन वा तेषां प्रवृत्तिः ? नाद्य इत्याह * स्वत एवेति । भोगसिद्ध्यर्थमिच्छात्मिकायाः प्रवृत्तेः स्वतःसिद्धत्वात्तद्बोधकत्वेन प्रवृत्तं शास्त्रमनुवादकं सत् अप्रमाणं स्यादित्यर्थः ॥ द्वितीयं प्रत्याह *निवृत्ताविति । स्वर्गादेः पुमर्थाभासत्वात्तत्रापर्यवस्यच्छास्त्रं रागादिनिवृत्तिद्वारा संसारोच्छेदपरमित्यर्थः॥४०८॥ सर्वशास्त्रारम्भस्य संसारनिवृत्त्यर्थत्वे मिथो विरोधः शास्त्राणां स्यादित्याशङ्क्य अविवक्षितांशविरोधेऽपि विवक्षितसंसारनिवृत्तौ न विरोध इत्याह *विरोध इति ॥ ४०९ ॥ वात्स्यायनीयशास्त्रात्स्त्रीसम्भोगे प्रवृत्तस्य ततो निवृत्तिहेत्वभावात्कथमात्मज्ञानपरत्वं तस्येत्याशङ्क्याह *अपीति ॥ ४१० ॥ द्वार-

प्रवर्त्तमानः कामेषु शास्त्रदीपितवर्त्मना ॥
दुर्लभत्वादिकान्दोषान्दृष्ट्वाऽतो विनिवर्त्तते ॥ ४११ ॥
अनित्यदुःखशून्यत्वं पदार्थानां स्फुटं ब्रुवन् ॥
बुद्धोऽपि रागाद्युच्छित्तौ यतते नात्मनिह्नुतौ॥४१२॥
यद्वा वेदस्य कृत्स्नस्य स्वात्मज्ञानार्थतोदिता ॥
तिष्ठन्त्वनात्मवादास्ते किन्नस्तैस्तैः प्रयोजनम् ॥४१३
स एषोऽत्रानखाग्रेभ्यः प्रविष्ट इति वेदगीः ॥
व्याख्यायतेऽसौ पदश आदौ मीमांस्यते त्वथ ॥४१४
स इत्यनेन शब्देन प्रकृतार्थावलेहिना ॥
अव्याकृताध्यक्ष आत्मा यः पुरोक्तः स उच्यते ॥४१५
ननु व्याक्रियतेत्येष शब्दः स्यात्कर्मकर्त्तरि ॥

---

भेदमाह *प्रवर्त्तमान इति ॥ ४११ ॥ नन्वेवमपि वैनाशिक-शास्त्रस्य कथं तदर्थता तस्य नैरात्म्यपरत्वात्तत्राह *अनित्ये-ति ॥ ४१२ ॥ यथोक्तन्यायेन सर्वशास्त्राणामात्मज्ञानार्थत्वे मुमुक्षूणां क्षपणकादिमतेष्वपि यथेच्छया प्रवृत्तिः स्यादित्यरुचेराह *यद्वेति । ॥४१३॥ * स एष इति । स एष इत्यादौ पदार्थः कथ्यतेऽनन्तरमयमर्थः उपपद्यते न वेति विचार्यत इत्यर्थः ॥ ४१४ ॥ ४१५ ॥ स इति पदेनाव्याकृतसाक्षी परामृश्यते इत्यु-क्तमाक्षिपति * नन्विति । अव्याकृतशब्दितस्य तमःप्रधाना-त्मन एव प्रकृतत्वेनाप्रकृतः साक्षी कथं परामृश्येत । न चा-व्याकृतपरिणामनिमित्तत्वेन सोऽपि प्रकृत इति वाच्यम् । व्याक्रियत इति कर्मकर्तृप्रयोगेण जगत्कर्तुरविवक्षितत्वान्न साक्षी प्रकृत इत्यर्थः । कर्त्तारं विना कार्यायोगादस्ति साक्षिणः प्र-कृतत्वमिति समाधत्ते * नार्थेति । कर्मकर्तरि लकारस्तु स्व-

नोक्तोऽतोऽध्यक्ष इति चेन्नार्थाक्षिप्तत्वसम्भवात्॥४१६॥
अव्याकृतेदम्पदयोः सामानाधिकरण्यतः ॥
व्याकृताव्याकृतैकत्वादध्यक्षोऽत्रैव कल्प्यताम्॥४१७॥
इदं जगन्नियन्त्रादिविभिन्नानेकरूपवत् ॥
यथाऽधुना तथा पूर्वमव्यक्तत्वं विशिष्यते ॥ ४१८ ॥
नामरूपाद्यभिव्यक्तेः प्रागव्यक्तापह्नवेऽप्यभूत् ॥
अव्यक्ताध्यक्ष आत्मैको व्यक्तं यत्साक्षिकं जगत्॥४१९॥
अध्यक्षोऽर्थाक्षिप्त एव न शाब्द इति चेन्न तत् ॥
जगदन्तर्गतत्वेन शाब्दत्वस्यापि सम्भवात् ॥४२०॥
तत्सम्भवप्रकारश्च विशदः प्रतिपाद्यते ॥

---

यमेव लूयते केदार इतिवत् व्याकरणसुकरत्वापेक्षयोक्त इति भावः ॥४१६॥ अध्यक्षस्य प्रकृतत्वे हेत्वन्तरमाह * अव्याकृतेति। अत्र व्याकृतावस्थायां यथा स्वसाक्षिकं जगत् एवमव्याकृतावस्थायामपि तस्य साक्षी कल्प्यः, तयोरेकत्वादित्यर्थः। एकत्वे हेतुः * व्याकृतेति । इदमव्याकृतमासीदिति सामानाधिकरण्यात्तस्य चाभिन्नार्थवृत्तित्वादित्यर्थः ॥ ४१७ ॥ अत्रैव कल्प्यतामित्युक्तं विवृणोति * इदमिति ॥ ४१८ ॥ ननु पूर्वावस्थायां जगतो व्यक्तत्वाभाववत्साक्ष्यभावोऽप्यस्तु, तत्राह *नामेति। अभिव्यक्तं जगत् येन साक्षिणाऽनुभूयते स तदुत्पत्तेः पूर्वं तदपह्नवात् ऊर्ध्वं चाव्यक्तसाक्षित्वेनापि वर्तेत इति वक्तव्यम्, अन्यथा तस्यासिद्धिप्रसङ्गात् साक्षिभेदे मानाभावाच्चेत्यर्थः॥४१९॥ एवमपि साक्षी न तच्छब्देन परामर्ष्टुं योग्यः तस्याशाब्दत्वात्, शाब्दी ह्याकाङ्क्षा शब्देनैव शाम्यतीति न्यायादित्याशङ्क्यासिद्धिमाह *अध्यक्ष इति ॥ ४२० ॥ एवमव्याकृतपदस्यानेकार्थ-

ग्रामादिवदनेकार्थो जगच्छब्दो विवक्षया ॥ ४२१ ॥
ग्रामः शून्य इति प्रोक्ते निवासस्थलमुच्यते ॥
ग्राम आगत इत्युक्ते निवासिजन उच्यते ॥ ४२२ ॥
ग्रामः सुस्थित इत्युक्ते द्वयमप्यभिधीयते ॥
अर्थत्रयं जगच्छब्दे ग्रामशब्दवदिष्यते ॥ ४२३ ॥
जगन्नश्वरमित्युक्ते जडमेवाभिधीयते ॥
जगदव्यक्तमित्युक्ते चिन्मात्रमभिधीयते ॥४२४॥
व्याकृतं वाऽव्याकृतं वा जगदित्यभिधानतः ॥
आत्मानात्मोभयार्थैव विवक्षेत्यभिगम्यताम् ॥४२५॥
तर्ह्यव्याकृतवाक्येऽस्मिन् द्वयस्य प्रकृतत्वतः ॥
परस्यैव परामर्शः कथमत्रेति चेच्छृणु ॥ ४२६ ॥
जगज्जनिस्थितिध्वंसनृत्तसाक्षिणमीश्वरम् ॥
मुक्त्वाऽन्यस्य प्रवेश्यत्वात्प्रवेष्टा शिष्यते परः ॥४२७॥
अथवा भयनाशाय विराजः स्वात्मवीक्षणे ॥

---

स्वाभावात्कथं साक्षिणः शब्दत्वसम्भवस्तत्राह *तत्सम्भव इति ॥ ४२१ ॥ विवक्षाभेदेन ग्रामादिशब्दस्यानेकार्थत्वं वा कथमित्याशङ्क्य तद्विवरणपूर्वकं दार्ष्टान्तिकं प्रपञ्चयति *ग्राम इत्यादिना ॥ ४२२ ॥ ४२३ ॥ ४२४ ॥ ४२५ ॥ अव्याकृतपदस्योभयथाऽभिधायकत्वे साक्षिमात्रपरामर्शो न स्यादित्याशङ्कते *तर्हीति ॥ ४२६ ॥ उभयोः प्रकृतत्वेऽपि योग्यतावशादेकस्यैव परामर्शः सम्भवतीत्याह *जगदिति ॥ ४२७ ॥ अस्तु वाऽव्याकृतवाक्ये परस्याप्रकृतत्वं तथापि यन्मदन्यत् नास्तीत्यत्र प्रकृतत्वात्तस्यात्र शब्देन परामर्शो युक्त इत्याह *अथ वेति

तच्छब्देनोदितः साक्षी स परामर्शमर्हति ॥ ४२८॥
यद्वा विराडधिष्ठानं ब्राह्मणादावुदीरितम् ॥
आत्मशब्देन तस्यात्र परामर्शो भविष्यति ॥ ४२९॥
तच्छब्देन परामृष्टः साक्ष्यव्याकृतभासकः ॥
एतच्छब्देन कार्यस्थः प्रत्यक्षमुपदिश्यते ॥ ४३० ॥
अद्वितीयमधिष्ठानं कार्यस्थः सद्वयस्तयोः ॥
स एष इत्यभेदोक्तिर्दुष्करेति न चोद्यताम् ॥ ४३१॥
अज्ञातवस्तुतत्त्वस्य दुष्करं नास्ति किञ्चन ॥
नीलीकृतं नभः पश्य चक्षुषा नीलवस्त्रवत् ॥ ४३२ ॥
योग्यायोग्यव्यपेक्षेयं मानव्यवहृतौ भवेत् ॥

---

॥ ४२८ ॥ तत्रैव पक्षान्तरमाह *यद्वेति । *आत्मशब्देनेति ॥ आत्मैवेदमग्र इत्यत्रेत्यर्थः ॥ ४२९ ॥ सर्वथाऽपि युज्यते तच्छब्देन साक्षिपरामर्श इत्याह *तच्छब्देनेति । एतत्पदार्थमाह *एतदिति । कार्यस्थः बुद्धिस्थः प्रत्यगात्मेति यावत् ॥ ४३० ॥ स एष इति सामानाधिकरण्यात्तत्त्वम्पदार्थयोरुक्तमैक्यमाक्षिपति *अद्वितीयमिति । द्वैतस्याविद्यातो भानाद्वस्तुतो विरोधासिद्धेः सामानाधिकरण्यलब्धमैक्यमविरुद्धमिति परिहरति *न चोद्यतामिति ॥ ४३१ ॥ अज्ञानादपि कथमैक्यविरुद्धद्वैतधीरित्याशङ्क्य कुर्यान्मेरावणुधियमित्यत्रोक्तं स्मारयति *अज्ञातेति ॥ तत्र दृष्टान्तमाह *नीलीकृतमिति ॥ ४३२ ॥ चक्षुरयोग्यस्य नभसः कथं चाक्षुषत्वं तत्राह *योग्येति । अविद्याव्यवहारेषु योग्यायोग्यविभागापेक्षा नास्तीत्यत्र हेतुमाह *कल्पनेति । अज्ञानभूमयो विभ्रमास्तेषु न योग्यायोग्यविभागापेक्षा तेषां प्रतिभा-

कल्पनामात्रनिष्पत्तेर्नापेक्षाऽज्ञानभूमिषु ॥ ४३३ ॥
इहेत्यनेन सूत्रादिस्थाणुपर्यन्तविग्रहाः ॥
उच्यन्ते, तेषु जीवोऽयं विस्पष्टमुपलभ्यते ॥ ४३४ ॥
प्रविष्ट इति शब्देन चिदाभासतमोन्विता ॥
जीवत्वेनोपलब्धिर्या चितः सैषाऽभिधीयते ॥४३५॥
चिदाभासप्रवेशस्तु प्रत्यङ्मोहे स्वतो भवेत् ॥
तत्कार्येष्वनुवृत्तः स उपाधिश्चित्प्रवेशने ॥ ४३६ ॥
जपाकुसुमरक्तत्वं स्फटिके कल्प्यते यथा ॥
चिदाभासप्रवेशोऽयं चित्यध्यारोप्यते तथा ॥४३७॥
सूत्रादिस्थाणुपर्यन्तं जगत्सृष्ट्वा स्वमायया ॥
स्वाभासैकसहायेन स एव प्राविशत्परः ॥ ४३८ ॥
आनखाग्रेभ्य इत्युक्त्या मर्यादाऽस्य प्रवेशने ॥

---

समात्रदेहत्वादित्यर्थः ॥ ४३३ ॥ इहेतिपदस्यार्थमाह *इहेति । उक्तेऽर्थे हेतुमाह *तेष्विति ॥ ४३४ ॥ प्रविष्टपदार्थमाह *प्रविष्टेति । चैतन्यस्याविद्याद्वारा बुद्ध्युपाधौ प्रतिबिम्ब एव प्रवेश इति भावः ॥ ४३५ ॥ साभासतमःसहितस्य चैतन्यस्यैव जीवत्वेनोपलब्धिः प्रवेश इत्युक्तमुपपादयति *चिदाभासेति । मोहकार्येषु बुद्ध्यादिषु चित्प्रतिबिम्बे उपाधिभूतो यः साभासमोहः सोऽप्युपादानत्वात्तेष्वन्वेतीति बुद्धिस्थजीवस्य तमःसाहित्यमुपपन्नमिति भावः ॥ ४३६ ॥ तर्हि चिदाभासस्य प्रवेशो न चित इति परस्य प्रवेशकथनमयुक्तमिति तत्राह *जपाकुसुमेति ॥ ४३७ ॥ प्रवेशवाक्यार्थमुपसंहरति *सूत्रादिति ॥ स्वाभासैकसहायेन तद्द्वारेति यावत् ॥ ४३८ ॥ आनखाग्रेभ्य

उक्ता, स्पर्शेन चैतन्यं नखाग्रावधि लभ्यते ॥४३९॥
श्रुतिः—यथा क्षुरः क्षुरधानेऽवाहितः स्याद्विश्वम्भ-
रो वा विश्वम्भरकुलाये ॥
वा० सामान्येन विशेषाच्च चित् देहं व्याप्य वर्तते ॥
दृष्टान्ताभ्यां द्वयी वृत्तिर्द्विविधाभ्यामिहोच्यते॥४४०॥
दारु कृत्स्नमभिव्याप्य यथाऽग्निर्दारुणि स्थितः ॥
संव्याप्य तद्वदखिलं देहमात्मा व्यवस्थितः ॥ ४४१ ॥
तस्थावसंव्याप्य यथा क्षुरपात्रं क्षुरस्तथा ॥
श्रोत्रादिनाडीमध्यस्थस्तनुमव्याप्य संस्थितः॥४४२॥
क्षुरपात्रे स्थानभेदाद्भिद्यन्ते यथा क्षुराः ॥
चैतन्यानि विभिद्यन्ते तथा नाडीविभेदतः ॥ ४४३ ॥
प्राप्नोति वृत्ती द्वे जीवः स्वप्नजाग्रदवस्थयोः ॥
सामान्यवृत्तिमेवैकां सुषुप्तेः प्रतिपद्यते ॥ ४४४ ॥

---

त्यस्यार्थमाह *आनखेति। तत्रोपपत्तिमाह *स्पर्शेनेति ॥४३९॥
उक्तमर्थमुदाहरणेन स्पष्टयति श्रुतिः *यथेति। यथा लोके
ुरधाने क्षुरो धीयतेऽस्मिन्निति क्षुरधानं तस्मिन्नापितोपस्करण-
ात्रे क्षुरोऽवहितः प्रवेशितः स्यात्। यथा वा विश्वम्भरो जाठरा-
ग्निरूपेण विश्वस्य भरणाद्विश्वम्भरः कुलाये नीडे काष्ठादाववृ-
हेतः स्यादित्यनुवर्त्तते ॥
दृष्टान्तद्वयकथनस्य तात्पर्यमाह *सामान्येति॥४४०॥उक्त-
ार्थं श्रुतिव्याख्यानेन स्पष्टयति *दार्विति ॥४४१॥४४२॥ क्षुर-
ात्रस्थक्षुरवच्चैतन्यस्य शरीरैकदेशस्थत्वमनुपपन्नम् आनखाग्रमु-
लम्भादित्याशङ्क्य तस्यार्थान्तरमाह*क्षुरपात्रेति॥४४३॥सामा-
येन विशेषेण च जीवचैतन्यस्य देहे सर्वदाऽभिव्यक्तौ सुप्तावपि
पर्शोपलम्भः स्यादिति तत्राह *प्राप्नोतीति ॥४४४॥ वृत्तिद्वय-

सामान्यवृत्तिर्या साऽत्र जीवनायोपयुज्यते ॥
विशेषवृत्तयो देहे शब्दाद्या लोचनोद्यताः॥ ४४५ ॥
प्रवेशवाक्यं पदशस्तात्पर्याच्च स्फुटीकृतम् ॥
तदनुग्राहको न्याय इदानीं प्रविचार्यते ॥ ४४६ ॥
किं देवदत्तगृहवत्प्रवेशो ऽथोपलादिवत् ॥
जलार्कबिम्बवत्किंवा यद्वा द्रव्यगुणादिवत् ॥ ४४७ ॥
फलबीजवदाहोस्वित्, नाद्यः सर्वगतत्वतः ॥
देवदत्तः परिच्छिन्नः सांशश्चात्मा तु नो तथा॥४४८॥
अव्यावृत्ताननुगतयाथात्म्यादात्मवस्तुनः ॥
परिच्छेदाद्यसम्भाव्यं नेतिनेतीति वारणात् ॥४४९॥
नातोऽनवच्छिन्नतनोर्निर्विभागात्मवस्तुनः ॥
पूर्वस्थानवियोगेन नृवत्स्थानान्तरागमः ॥ ४५० ॥
न द्वितीयोऽपरिणतेरश्मान्तः सर्परूपतः ॥
भूतानि परिणम्यन्ते न त्वात्मा परिणामवान् ॥४५१॥

---

स्याप्यावश्यकतामाह *सामान्येति ॥४४५॥४४६॥ *किमिति। देवदत्तस्य बहिःस्थितस्य गृहे प्रवेशवदित्यर्थः। *उपलादिवदिति। पाषाणस्य सर्पाद्याकारेण परिणामवत्परस्य जीवरूपेण परिणामः प्रवेश इत्यर्थः ॥ जलेऽर्कप्रातिबिम्बवत्, द्रव्ये गुणादेः प्रवेशवत्, फले बीजानां प्रवेशवच्चेत्यर्थः ॥ ४४७ ॥ ४४८ ॥ ॥ ४४९ ॥ ४५० ॥ *न द्वितीय इति। अपरिणतेः, आत्मन इत्यनुषङ्गः । अश्मादिरूपेण स्थितभूतपञ्चकस्याश्मान्तः सर्पाद्याकारेण परिणामवन्नात्मनः परिणामः सम्भवतीत्यर्थः ॥ तदेव व्यतिरेकेणाह *न त्विति । निर्विकारत्वश्रुतेरिति भावः

न तृतीयोऽर्कजलयोरिव देहचिदात्मनोः ॥
न संयोगविभागौ स्तो येन तद्वत्प्रवेशनम् ॥४५२ ॥
न चतुर्थो ऽपारतन्त्र्यात्, द्रव्यतन्त्रा गुणादयः ॥
न त्वात्मा देहतन्त्रोऽयं सर्वेश्वर इति श्रुतेः ॥४५३॥
न पञ्चमो ऽविक्रियत्वाद्बीजं विक्रयया युतम् ॥
षड्भावविक्रियाहीन आत्मा शास्त्रेषु सम्मतः ॥४५४॥
आधाराधेयता सर्पशिलयोः फलबीजयोः ॥
अंशांशितेति वैषम्यान्न तत्र पुनरुक्तता ॥ ४५५ ॥
परिच्छिन्नो जीव एव देहेषु प्रविशत्वतः ॥
न दोष इति चेन्नैवं स्रष्टुरेव प्रवेशनात् ॥ ४५६ ॥
तत्सृष्ट्वाऽथ तदेवानु प्राविशत्स इति श्रुतेः ॥
स्रष्टप्रवेष्ट्रोरेकत्वं स्याद् भुक्त्वा व्रजतीतिवत् ॥४५७॥
ततः केनाप्युपायेन प्रवेशो घटते नहि ॥
इति प्राप्ते पूर्वपक्षे प्रवेश उपपाद्यते ॥ ४५५८ ॥
अप्रविष्टस्वभावोऽयं दिग्देशाद्यनभिप्लुतेः ॥
कल्पितोऽस्य प्रवेशः स्याज्जलपात्रार्कबिम्बवत् ॥४५९॥

---

॥ ४५१ ॥ ४५२ ॥ न चतुर्थ इति । आत्मन इत्यनुषङ्गः । अपारतन्त्र्यमेव व्यनक्ति *न त्विति । अविक्रियत्वादात्मन इत्यनुषङ्गः ॥ ४५३ ॥ ४५४ ॥ ४५५ ॥ अस्तु तर्हि जीवस्यैव प्रवेशः उक्तदोषाभावादित्याशङ्क्य निराकरोति *परिच्छिन्न इत्यादिना ॥ ४५६ ॥ ४५७ ॥ ४५८ ॥ किं परस्य वास्तवप्रवेशो निषिध्यते काल्पनिको वा ? तत्राद्यमङ्गीकृत्य द्वितीयं प्रत्याह *कल्पित इति ॥ ४५९ ॥ यदुक्तमुपाधिबिम्बयोः संयोगाद्यभावे तत्र न प्रतिबिम्ब-

विभागाद्यंशवैषम्येऽप्यस्ति साम्यं विवक्षितम् ॥
उपाधिस्थोपलब्ध्यादि साम्यं केन निवार्यते॥ ४६० ॥
उपाधावुपलभ्यत्वमन्यथात्वेन भासनम् ॥
बहुत्वभानमित्येतत् दृष्टदार्ष्टान्तयोः समम् ॥ ४६१ ॥
तेजोऽधिकं रवेर्बिम्बमशक्यं द्रष्टुमञ्जसा ॥
तथापि जलमध्ये तद्बिम्बं सम्यगवेक्ष्यते ॥ ४६२ ॥
स्वयम्प्रकाश आत्मैवं नोपलभ्योऽनुपाधिकः ॥
जडदेहाद्युपाधौ तु विस्पष्टमुपलभ्यते ॥ ४६३ ॥
दर्पणाभिहता दृष्टिः पराग्वृत्य स्वमाननम् ॥
प्राप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम् ॥४६४
देहाद्युपप्लुतैवं धीरात्मानं व्याप्नुवत्यसौ ॥
अविक्रियं विक्रियाभिर्युक्त इत्येव भासयेत् ॥ ४६५॥
एकोऽप्यनेकधा भाति तरणिः पात्रभेदतः ॥

---

सम्भव इति, तत्राह *विभागादीति ॥ ४६० ॥ विवक्षितां-शसाम्यमेवोपपादयति *उपाधाविति । *दृष्टेति । दृष्टान्तदार्ष्टा-न्तिकयोरित्यर्थः ॥ ४६१ ॥ ४६२ ॥ ४६३ ॥ उपाधावुपल-भ्यमानत्वमात्मनो दृष्टान्तपूर्वकमुपपाद्यान्यथात्वेन भासनं दर्शयितुं दृष्टान्ते तदुपपादयति *दर्पणेति । बाह्यार्थग्रहणाय प्रवृत्ता दृष्टिः सन्निकृष्टदर्पणेन स्वच्छद्रव्येण प्रतिहता व्यावृत्य ग्रीवास्थमेव मुखं व्याप्नुवती तदेव मुखं दर्पणस्थत्वेन साभि-मुखत्वेन च दर्शयेदित्यर्थः ॥ ४६४ ॥ दार्ष्टान्तिके विपरीतभानं दर्शयति *देहादीति । शुद्धात्मानं ग्रहीतुं प्रवृत्ता धीरज्ञानारो-पितदेहद्वयप्रतिबद्धा सती उपहितमात्मानं व्याप्नुवती तं विप-रीततया दर्शयेदित्यर्थः ॥ ४६५ ॥ बहुत्वभानं सदृष्टान्तमुपपा-

एवं नानादेहभेदाद् भ्रान्त्याऽऽत्मैकोऽप्यनेकधा॥४६६॥
निर्धूताशेषनानात्वतद्धेतुरविभागवान् ॥
अनन्यसाक्षिकोऽपीदृक् स्यात्प्रवेशभ्रमादयम् ॥४६७॥
द्रष्ट्रादिरूपरहितः प्रत्यगात्माऽभवत्पुरा ॥
नामरूपजनौ सत्यां द्रष्टृत्वादियुतो भवेत ॥ ४६८ ॥
द्रष्टृश्रोत्रादिरूपो यो यश्च द्रष्ट्रादिवर्जितः ॥
बुद्धितत्कारणोपाधी क्षेत्रज्ञेश्वरसंज्ञकौ ॥ ४६९ ॥
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः ॥
स सर्वसाक्षी पूर्वाभ्यामुपलक्षणमर्हति ॥ ४७० ॥

---

दयति *एक इति । ॥४६६॥ उक्तमेव स्पष्टयति *निर्धूतेति । तस्य नानात्वस्य हेतुर्धर्मिग्रहादिः । निर्धूतम् अशेषं नानात्वं तद्धेतुश्च यत्र स यथा । केवलभेदाभावेऽप्यभेदसहितस्य भेदस्य सत्त्वमाशङ्क्याह *अविभागवानिति । प्रकाश्यप्रकाशकत्वेनापि न भेद इत्याह *अनन्येति ॥ ४६७ ॥ उक्तमर्थमनुवदन् "ईदृक् स्यात्" इत्युक्तं व्याचष्टे *द्रष्ट्रादीति । सर्गात्पूर्वमेकरसमेव ब्रह्म उत्तरकालं बुद्ध्यादिसम्बन्धाज्जीवत्वं प्राप्नोतीत्यर्थः ॥ ४६८ ॥ तर्हि नामभेदात्तयोर्वस्तुतः भेदः स्याद् घटपटवदित्यत आह *द्रष्ट्रिति । बुद्ध्युपाधिकस्य प्रमातुः कारणोपाधिकस्य च परस्यौपाधिकभेदादेव संज्ञाभेदा इत्यर्थः ॥ ४६९ ॥ ननु कार्यकारणोपाधिविशिष्टयोर्जीवेश्वरत्वे तयोर्जडत्वेन बुद्ध्यादिभासकत्वं न स्यात्तत्राह *जिघ्राणीति । अहं जिघ्राणीति गन्धधीकर्तृत्वेन स्थितमात्मानम् अविक्रियः सन् यो वेत्ति स एव बुद्ध्यादिसाक्षी, विशिष्टस्याप्रकाशकत्वेऽपि पूर्वोक्तोपाधिद्वयोपलक्षितं चैतन्यं बुद्ध्यादिभासकमित्यर्थः ॥४७०॥ विशिष्टादुपलक्षितो भिन्न इत्ये-

अप्पात्रोत्थापिताद्भानोर्दिवि भानुर्यथेक्ष्यते ॥
सर्वसाक्षी तथा धीस्थात्कर्तृभोक्त्रादिलक्षणात्॥४७१॥
प्रकाशात्मा यथा चन्द्रः शाखाग्रादतथाविधात् ॥
लक्ष्यस्तथा चिदात्मापि कारणोपाधितो जडात्॥४७२
जीवत्वभ्रान्तिरेषैवं प्रत्यग्बोधोपयोगतः ॥
जलपात्रार्कसाम्येन प्रवेश इति कल्प्यते ॥ ४७३ ॥
दिग्देशकालशून्यस्य प्रवेशो बिलसर्पवत् ॥
न त्वजस्य परस्यास्ति तेनाविद्याप्रकल्पितः ॥ ४७४॥
अविद्यया तु साक्ष्येष केवलोऽप्यविवेकतः ॥
बुद्ध्यादिकार्यगैर्धर्मैः प्रतिबिम्बवदिष्यते ॥ ४७५ ॥
अग्निः सूर्यो मरुच्चेति दृष्टान्ताः श्रुत्युदीरिताः ॥
अप्रविष्टस्वभावोक्ताः कार्यमात्माऽऽविशज्जगत् ॥४७६
अग्निर्यथैको भुवनं काष्ठलोष्टादिरूपकम् ॥
प्रविष्टः प्रतिरूपोऽभूदप्रविष्टोऽपि सन्स्वतः ॥ ४७७॥

---

तद् दृष्टान्तमुखेन दर्शयति *अप्पात्रेति । भानोः, भिन्नत्वेनेति शेषः ॥ ४७१ ॥ नन्वीश्वरसाक्षिणोर्भेदे जगत्कारणत्वादिकं न साक्षिलक्षणं स्यात्, तथा चाद्वितीयब्रह्मलक्षकजन्मादिसूत्रमसङ्गतं स्यात्तत्राह *प्रकाशेति ॥ ४७२ ॥ उक्तमर्थमुपसंहरति *जीवत्वेति ॥ ४७३ ॥ प्रवेशः किमर्थमाविद्यकः कल्प्यते ? तत्राह *दिग्देशेति ॥ ४७४ ॥ तस्य आविद्यत्वेऽनवद्यतामाह *अविद्ययेति । यथा मुखं स्वतः श्यामत्वादिहीनम् उपाधियोगात्प्रतिबिम्बद्वारा श्यामतादिशालिवत् दृश्यते; तथा शुद्धोऽप्यात्माऽविद्यया बुद्ध्यादितादात्म्यापन्नः कर्त्रादिमान् दृश्यते इत्यर्थः॥४७५

आत्मनः कल्पितप्रतिबिम्बाख्यप्रवेशे दृष्टान्तत्वेनोक्तकठवल्लीवाक्यान्युदाहरति *अग्निरित्यादिना ॥ ४७६ ॥ ४७७ ॥

वायुर्यथैको भुवनं नानाव्यजनरूपकम् ॥
प्रविष्टो बहुरूपोऽभूदप्रविष्टोऽपि सन्स्वतः ॥ ४७८ ॥
सूर्यो यथोदपात्रेषु प्रविष्टो बहिरेव सन् ॥
तथाऽऽत्माप्यप्रविष्टः सन्प्रविष्ट इति कल्प्यते ॥४७९॥
यथा सृष्ट्यादयः क्लृप्ताः प्रवेशोऽपि तथेक्ष्यताम् ॥
युक्त्या नैवोपपद्यन्ते सृष्ट्याद्याः कल्पिताः स्वतः॥४८०॥
नासतो जन्मना योगः सतः सत्त्वं न चेष्यते ॥
कूटस्थे विक्रिया नास्ति दस्मादज्ञानतो जनिः ॥४८१॥
रूपं रूपमितीयं तु स्पष्टमृक्प्रत्यगात्मनः ॥
याथात्म्यदर्शनायैव सृष्ट्यादीन्यभ्यभाषत ॥ ४८२ ॥
क्षुरपात्राख्यदृष्टान्ताद्विशेषेण प्रवेशनम् ॥
इन्द्रियेष्वतिविस्पष्टमुपलभ्यत्वमात्मनः ॥ ४८३ ॥
यदग्निकाष्ठदृष्टान्तात्सामान्येन प्रवेशनम् ॥
तदधिष्ठानरूपेण कार्यव्यापित्वमुच्यते ॥ ४८४ ॥
अधिष्ठानारोप्यभावमन्तरेण न कुत्रचित् ॥

---

॥४७८॥४७९॥ किञ्च प्रवेशः कल्पितः अविक्रियब्रह्मकर्तृत्वात् सृष्ट्यादिवदित्याह *यथेति । साध्यवैकल्यपरिहाराय दृष्टान्ते कल्पितत्वं साधयति *युक्त्येति ॥ ४८० ॥ ४८१ ॥ किमर्थं तर्हि श्रुतौ सृष्ट्यादिकथनमित्याशङ्क्य श्रुत्यैव तत्प्रयोजनं चोक्तमित्याह *रूपमिति । अस्या ऋचोऽर्थश्चतुर्थे वक्ष्यते ॥४८२॥ पूर्वं क्षुरपात्रदृष्टान्तेनाग्निकाष्ठदृष्टान्तेन च जीवचैतन्यस्यानखाग्रं त्वगिन्द्रियादौ विशेषतः उपलभ्यमानत्वं विशेषेण प्रवेशनं, सामान्यतो देहं व्याप्य वर्त्तमानत्वं सामान्यप्रवेशः, इति यदुक्तं तत्र द्वितीयदृष्टान्ते चैतन्यस्य देहव्यापित्वमुपपादयितुमुक्तार्थमनु-

व्याप्यव्यापकयोः कृत्स्नस्वरूपव्याप्तिरीक्ष्यते ॥४८५॥
अत्यन्ताभिन्नयोर्व्याप्तिर्नहि दृष्टा गवाश्वयोः ॥
नाप्यत्यन्तमभिन्नस्य, व्याप्यव्यापकवर्जनात् ॥४८६॥
भेदाभेदौ वास्तवौ तु दुर्लभौ तेन शिष्यते ॥
अधिष्ठानारोपितयोरेव व्याप्तिर्बलादियम् ॥ ४८७ ॥
तमसैव यथा सर्पं स्रक् प्रविष्टा नतु स्वतः ॥
प्रत्यगज्ञानकार्याणि स्वात्मैवं मायया ऽऽविशत्॥४८८॥
व्यापित्वमुपलभ्यत्वमिति द्वेधा प्रवेशनम् ॥
सिद्धं, प्राविष्टात् ये दोषास्तान्निराचक्ष्महेऽधुना ॥४८९॥
पर एव प्रविष्टश्चेत् प्रविष्टानामनेकतः ॥
तदनन्यत्वतः प्रापन्महेशस्याप्यनेकता ॥ ४९० ॥
नैष दोषोऽस्य चोद्यस्य विपरीतत्वसम्भवात् ॥
बहूनामेकतादात्म्यादेकत्वं किं न चोद्यते ॥ ४९१ ॥
नियामकस्त्वागमोऽत्र स च भेदं निवारयेत् ॥

---

वदति *क्षुरेत्यादिना ॥ ४८३ ॥ ४८४ ॥ ४८५ ॥ ४८६ ॥ अधिष्ठानस्यारोप्येण संयोगाद्यसम्भवात्कथं तद्व्यापित्वमित्याशङ्क्य कल्पिततादात्म्येनाधिष्ठानस्यैवारोप्यव्यापित्वं नान्यस्येत्याह *अधिष्ठानेति ॥ ४८७ ॥ दृष्टान्तावष्टम्भेन प्रवेशविचारमुपसंहरति *तमसेति । स्वाज्ञानादेव स्रजो भुजङ्गे प्रवेशवत्प्रतीचोऽपि स्वाज्ञानोत्थे जगत्यज्ञानादेव प्रवेशो न परमार्थत इत्यर्थः ॥४८८॥ प्रविष्टाद्धेतोः, प्रविष्टं परमुपजीव्य तस्मिन्नज्ञानात्बदुःखित्वादिदोषा ये वादिभिरापाद्यन्ते ते निराक्रियन्त इत्यर्थः ॥४८९॥४९०॥४९१॥ एकस्य बहुभिरभेदादनेकत्वं बहूनामेकस्मादभेदादेकत्वं वेति विशये श्रुतियुक्तिभ्यामैक्यः

कल्प्यैः सर्पादिभिर्भेदैर्नतु रज्जुर्विभिद्यते ॥ ४९२ ॥
एको देवो निविष्टोऽत्र बहुधेति श्रुतीरणात् ॥
वियद्वदेक एवैष ईश्वरोऽभ्युपगम्यताम् ॥ ४९३ ॥
संसारित्वात्प्रविष्टानां परस्य तदभेदतः ॥
संसारित्वं प्रसक्तं चेत्, न, क्षुधाद्यत्ययश्रुतेः ॥४९४॥
सुखदुःखविमोहादिदर्शनान्नेति चेत्, न तत् ॥
न लिप्यते लोकदुःखैर्लोकबाह्य इति श्रुतेः ॥ ४९५ ॥
उपाधिजनितो योऽयं चिदाभासोऽवभासते ॥
दुःखाद्यनुभवस्तत्र सावकाशो भविष्यति ॥४९६ ॥
दुःखी यदि भवेदात्मा कः साक्षी दुःखिनो भवेत् ॥
दुःखिनः साक्षिता नैव साक्षिणो दुःखिता तथा॥४९७॥
नर्ते स्यात् विक्रियां दुःखी साक्षिता का विकारिणः॥
धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥४९८॥

---

नेवेति निश्चय इत्याह *नियामक इत्यादिना ॥ ४९२ ॥ ४९३ ॥
*न क्षुधेति। "अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति"
इति श्रुतेरित्यर्थः ॥ ४९४ ॥ अनुभवमनुसृत्य शङ्कते *सुखे-
ति। न, क्षुधादिवैधुर्यमिति शेषः ॥ ४९५ ॥ का तर्ह्यनुभवस्य
गतिस्तत्राह *उपाधीति ॥ ४९६ ॥ ननु साक्षिण्येव दुःखित्वं
किन्न स्यादित्यत आह *दुःखीति। दुःख्येव कश्चित् दुःखिनः
साक्षीत्याशङ्क्याह *दुःखिन इति। तथा इत्युक्तेति यावत्॥४९७॥
दुःखित्वसाक्षित्वयोरेकत्रायोगे हेतुमाह *नेति । परिणामित्वं
विना न दुःखितेत्यर्थः। परिणामित्वेऽपि साक्षित्वमित्याशङ्क्याह
*साक्षितेति। तस्य जाड्यादसाक्षितेत्यर्थः । विकारिणोऽसा-
क्षित्वे फलितमाह * धीविक्रियेति ॥ ४९८ ॥ दुःखादेः सा-

शरीरेन्द्रियसङ्घाते आत्मत्वेनाभिमानिनीम् ॥
चिदाभासयुतां बुद्धिं विशिंषन्ति सुखादयः ॥४९९॥
उदासीनो यथा पश्येद्दण्डिनं कलहोदितम् ॥
सुखदुःखादिमद्बुद्धिं साक्षी तद्वदसंहतः ॥ ५०० ॥
एवंसति पराच्येव दुःखं प्रत्यक्षमिष्यताम् ॥
प्रतीच्यात्मनि वेदोऽयमक्षादीनि निषेधति ॥ ५०१ ॥
विज्ञातारमरे केन विजानीयादिति श्रुतिः ॥
विदिताविदिताभ्यां तदन्यदेवेति च श्रुतेः ॥ ५०२ ॥
अहं सुखीति विज्ञानमात्मच्छायैककर्मकम् ॥
आत्मन्यारोप्यते भ्रान्तैर्विद्वद्भिश्चोपचर्यते ॥ ५०३ ॥
नासिकाग्रे महद्दुःखं पादाङ्गुष्ठाग्र इत्यपि ॥
देहावयवगं दुःखं दृष्टमात्मनि तत्कथम् ॥ ५०४ ॥

---

भासबुद्धिनिष्ठत्वमुक्तमेव प्रपञ्चयति *शरीरेति ॥ ४९९ ॥ किञ्चोदासीनस्यैव साक्षित्वात्तस्य कर्तृनिष्ठदुःखादिना न सम्बन्ध इति सदृष्टान्तमाह *उदासीन इति ॥५००॥ आत्मनो दुःखित्वाभावे सिद्धेऽहं सुखीति सुखविशिष्टत्वेनानुभवादात्मन इन्द्रियाद्यगोचरत्वश्रुतिरुपचरितार्थेति कैश्चिदुक्तमपास्तं; तयोर्भिन्नविषयत्वेनाविरोधादित्याह *एवं सतीति ॥ ५०१ ॥ आत्मनः प्रत्यक्षाद्यविषयत्वबोधकश्रुतिमुदाहरति *विज्ञातारमिति । तत्रैव श्रुत्यन्तरमाह *विदितेति । श्रुतेः, नाक्षगोचर आत्मेति शेषः ॥ ५०२ ॥ कथं तस्याविशेषेणाविदुषां विदुषां चाहं सुखीत्यात्मनिष्ठतया सुखित्वव्यवहारस्तत्राह *अहमिति ॥ ५०३ ॥ आत्मनो दुःखित्वाभावे हेत्वन्तरमाह *नासिकेति ॥ ५०४ ॥ किञ्च दुःखमात्मनि व्याप्यवृत्ति न

प्रतीचि चेद्धवेद् दुःखं व्याप्नुयाद्बोधवद्वपुः ॥
चिद्वद् द्रष्टृस्वरूपत्वात्प्रतिकूलं च नो भवेत्॥५०५॥
आत्मनस्त्वेव भोगाय सर्वं प्रियमिति श्रुतेः ॥
सुखमात्मैकविषयमिति चेत्, तन्न युज्यते ॥ ५०६ ॥
यत्र वाऽन्यस्य क्लृप्तिः स्यात्तत्रान्योऽन्यत्प्रपश्यति ॥
इति भ्रान्तात्मविषयं श्रुतं द्वैतं सुखात्मकम् ॥ ५०७॥
यत्र त्वात्मैव सर्वं स्यात्तत्र कं केन पश्यति ॥
इति बुद्धात्मनि द्वैतं सुखदुःखादि वारितम् ॥५०८॥
तुभ्यं न रोचते पापात् मया त्वित्यनुभूयते ॥
प्रत्यक्प्रवणया दृष्ट्या संसारः कोऽपि नात्मनि॥५०९॥
इच्छाद्वेषादिमानात्मेत्येवं समयबन्धनम् ॥
तार्किकैः क्रियतां, तत्तु नैव युक्त्योपपद्यते ॥ ५१० ॥

---

॥ ? आद्ये देहाद्बहिरपि तद्धीः स्यादित्याह *प्रतीचीति । अन्त्ये आत्मनः प्रदेशाभावात्, कल्पितप्रदेशाश्रयत्वे दुःखमपि तथा स्यादिति भावः । अपिच दुःखस्यात्मधर्मत्वे ज्ञानवत्प्रतिकूलवेदनीयत्वं न स्यादित्याह *चिद्वदिति ॥ ५०५ ॥ श्रुतिवशात्सुखस्य तावदात्माश्रयत्वं वक्तव्यम्, अतस्तदविनाभूतदुःखमपि तत्रैव स्यादित्याशङ्कते *आत्मन इति । आत्मन्याविद्यकसंसारानुवादेन परमानन्दत्वप्रतिपादकम् "आत्मनस्तु कामाय" इति वाक्यं, नतु तस्य सुखित्वप्रतिपादकमिति मत्वा समाधत्ते *तन्नेति ॥५०६॥ तत्र गमकमाह *यत्रेति ॥५०७॥५०८॥ विद्वत्प्रत्यक्षविरोधाच्च नात्मनः संसारितेत्याह *तुभ्यमिति ॥ ५०९ ॥ आत्मनोऽसंसारित्वं तार्किकसमयविरुद्धमित्याशङ्क्य श्रुतियुक्तिविरुद्धत्वात्समय एवानुपपन्न इत्याह *इच्छेति॥५१०॥

नित्यानुमेय आत्मा चेत् मनसा तस्य दुःखिता ॥
न भायात्,दृश्य आत्मा चेद् द्रष्टृभावः प्रसज्यते॥५११॥
द्रष्टृत्वं दृश्यता चास्य निरंशत्वान्न युज्यते ॥
सांशत्वे स्यादनित्यत्वं नातो दुःखित्वमात्मनः॥५१२॥
अदुःखित्वे परस्येष्टे तदन्यस्याप्यभावतः ॥
कस्य दुःखनिवृत्त्यर्थमारब्धोपनिषत्त्वया ॥ ५१३ ॥
प्रत्यगज्ञानहेतूत्थदुःखित्वादिभ्रमो ऽत्र यः ॥
तद्ध्वंसमात्रसिद्ध्यर्थमारब्धोपनिषन्मया ॥ ५१४ ॥
नवसङ्ख्येयमात्रेक्षी दशमं विभ्रमाद्यथा ॥
न वेत्ति दशमोऽस्मीति स्वीक्षमाणोऽपि तान्नव॥५१५॥
निःशेषानात्मदृक्तद्वदनिर्ज्ञातात्मतत्त्वकः ॥

---

संसार्येवात्मा नित्यानुमेयश्चेति केचित्, तन्मतमनूद्य विकल्प्य निराह *नित्येति ॥ ५११ ॥ जडाजडत्वादात्मनो दृश्यत्वं द्रष्टृत्वं चोपपद्यत इत्याशङ्क्य, किमात्मा निरंशः सांशो वा ? नाद्यः इत्याह *द्रष्टृत्वमिति । अन्त्यं निराह *सांशत्व इति । स्वपक्षं निगमयति *नात इति ॥ ५१२ ॥ आत्मनो निर्दुःखत्वे तद्व्यतिरिक्तस्य दुःखिनोऽप्यभावाद् दुःखोच्छेदाय त्वन्मते शास्त्रारम्भो वृथेति शङ्कते *अदुःखित्व इति ॥५१३॥ आत्मन्यारोपितदुखोच्छेदार्थमस्मन्मते शास्त्रारम्भः, इति परिहरति *प्रत्यगिति ॥ ५१४ ॥ आत्मनो ऽविद्यासंसारनिवृत्त्यर्थं शास्त्रमित्येतत् दृष्टान्तेन साधयिष्यन्नादौ तस्याविद्यावत्त्वे दृष्टान्तमाह *नवेति । *स्वीक्षमाणोऽपीति । स्वातिरिक्तान्नव पुरुषान्पश्यन् स्वज्ञानं प्राप्तमपि न लभते ऽज्ञानसामर्थ्यादित्यर्थः ॥५१५॥ दार्ष्टान्तिकमाह *निःशेषेति । स्वातिरिक्तानहङ्कारादीनात्मना

न वेत्त्यैकात्म्यमस्मीति स्वीक्षमाणोऽप्यनात्मनः॥५१६॥
दशमोऽस्मीति वाक्योत्थसम्यग्ज्ञानानलार्चिषा ॥
प्लुष्ट्वाऽऽत्मदशमाज्ञानं दशमोऽस्मीति वीक्षते॥५१७॥
तथा तत्त्वमसीत्यादिवाक्योत्थज्ञानवह्निना ॥
प्लुष्ट्वाऽत्रात्मतमस्तज्जं चैकात्म्यं प्रतिपद्यते ॥ ५१८ ॥
प्रत्यगज्ञानहेतूत्थशास्त्राचार्यादिसाधनः ॥
तद्विरुद्धं निजैकात्म्यं प्रत्यपद्यत मायया ॥ ५१९ ॥
प्रविष्टमुपजीव्यापि दोषः कोऽपि न वादिभिः ॥
इहापादयितुं शक्यः प्रवेशस्तेन सुस्थिरः ॥ ५२० ॥
श्रुतिः—तं न पश्यन्ति ॥
वा० नन्वेवं पर एवात्र प्रविष्टश्चेत्तदा जनाः ॥
पश्यन्ति तं विना शास्त्रमिति शास्त्रं वृथा भवेत् ॥५२१॥
अहं प्राणिम्यहं वच्मि पश्याम्येतच्छृणोमि तत् ॥
मन्येऽहमित्यहम्बुद्ध्या दृष्ट एवाखिलैः परः ॥ ५२२॥

---

सह साक्षात्कुर्वन्नपि ब्रह्माहमस्मीत्यनेन प्रकारेण न वेत्तीत्यर्थः ॥ ५१६ ॥ परस्याविद्यां दृष्टान्तेनोक्त्वा तद्विद्यया तद्ध्वंसमपि दृष्टान्तपूर्वकमाह *दशम इत्यादिना । प्लुष्ट्वा दग्ध्वा ॥५१७॥५१८॥ उक्तमर्थं सोपस्करमुपसंहरति *प्रत्यगिति । अज्ञानकृतशास्त्राचार्यादिद्वारोत्पन्नया मायया ब्रह्मविद्यया मायातत्कार्यविरुद्धमैक्यं यदा पुमान्प्रतिपन्नवान्, तदा तस्य सर्वानर्थध्वस्तिरिति शेषः ॥ ५१९ ॥ ५२० ॥ तं न पश्यन्तीति श्रुतिं व्याचिकीर्षुस्तत्रावत्यां शङ्कामाह *नन्विति । इतिशब्दो हेतौ । यस्माज्जनाः परं शास्त्रं विना पश्यन्ति तस्मात्तद् वृथा स्यादित्यर्थः ॥५२१॥ परदर्शनमभिनयति *अहमिति ॥ ५२२ ॥ शङ्कोत्त-

उच्यते तं न पश्यन्ति प्रविविक्षुं स्वतो जनाः ॥
नोच्छ्वासभाषणे दृष्टिश्रुती वा स्तोऽस्य नो मतिः ॥५२३
प्रविष्टस्यास्ति चेच्छ्वासभाषणाद्यस्तु तावता ॥
प्रवेष्टरि किमायातं शास्त्रबोध्यः स एव हि ॥५२४॥
प्रविष्टस्य प्रवेष्टुश्च रूपाभेदेऽपि भिन्नताम् ॥
प्रविष्टत्वाप्रविष्टत्वधर्माभ्यां को निवारयेत् ॥५२५॥
प्रविष्टं ये प्रपश्यन्ति नाप्रविष्टममी विदुः ॥
व्याधत्वेन प्रपश्यन्तो न विदू राजपुत्रताम् ॥ ५२६ ॥
व्याधोऽयमित्यसावुक्तिर्योजयेत्प्राणसङ्कटे ॥
राजदेवादिकोक्तिस्तु भवेद्बहुफलप्रदा ॥ ५२७ ॥

---

रत्वेन श्रुतिमवतारयति *उच्यत इति। तं परं प्रविविक्षुं प्रवेष्टुमिच्छन्तं बिम्बात्मानमित्यर्थः। पूर्वोक्तानुभवस्य परमात्मविषयत्वे हेतुमाह *नोच्छ्वासेति। दृष्टिश्रुती वा न स्तो, न भवत इत्यर्थः। नो मतिरस्य, मतिरपि नास्तीत्यर्थः ॥ ५२३ ॥ परस्यैव प्रविष्टत्वात्प्रविष्टे चोच्छ्वासादिप्रतीतेः कथं परस्मिन् तदसम्भव इति शङ्कते *प्रविष्टस्येति। जीवपरयोर्वास्तवाभेदेऽपि प्रविष्टत्वप्रवेष्टृत्वरूपोपाधिकभेदसत्त्वान्न परस्मिन् प्राणनादिव्यापारः इति गूढाभिसन्धिः परिहरति *अस्त्विति। प्रवेष्टरि बिम्बात्मनि ॥ ५२४ ॥ आशयमजानानस्य चोद्यमनूद्य तदुद्घाटयति *प्रविष्टस्येति ॥ ५२५ ॥ परमपि जीवत्वेन पश्यन्तो न परदर्शिन इति सदृष्टान्तमाह *प्रविष्टमिति। जीवत्वेनेति शेषः ॥ ५२६ ॥ किञ्चात्मन एकत्वेऽपि तस्य जीवत्वेन दर्शनमनर्थहेतुः, परत्वेन ज्ञानं पुमर्थहेतुरित्यत्रापि स एव दृष्टान्त इत्याह *व्याधोऽयमिति ॥ ५२७ ॥ दार्ष्टान्तिकमाह *तद्वदिति

तद्वत्प्रविष्टदृष्टिर्या सा संसारे नियोजयेत् ॥
अप्रविष्टात्मदृष्टिस्तु मोचयेत्सर्वसङ्कटात् ॥ ५२८ ॥
अतोऽप्रविष्टदृष्ट्यर्थं निन्द्यतेऽत्र प्रविष्टदृक् ॥
प्रविष्टदर्शनं यत्स्यान्न तद्दर्शनमात्मनः ॥ ५२९ ॥
अव्यावृत्ताननुगतं प्रत्यग्वस्तु स्वतो मितेः ॥
तद्विरुद्धेह या दृष्टिर्मिथ्यारूपैव सा मता ॥ ५३० ॥
अयं मेयः प्रमाताऽहं मानमेतदितीक्षणे ॥
मिथ्याज्ञाने जनस्तुष्टः स्वप्नमायेन्द्रजालवत् ॥५३१॥
नन्वत्र तं न पश्यन्तीत्यनेन वचसोच्यते ॥
प्रविष्टदर्शनाभावः प्रविष्टस्यैव सन्निधेः ॥ ५३२ ॥
परात्मदर्शनाभावपरत्वेन कथं त्वया ॥
व्याख्यातमिति चेदत्र तच्छब्देनेति विद्धि भोः ॥५३३॥
स एष इति पूर्वत्र तदेतच्छब्दयोः क्रमात् ॥

---

॥ ५२८ ॥ तं न पश्यन्तीति श्रुतितात्पर्यमुपसंहरति *अत इति । *न तद्दर्शनमिति । किन्तु मिथ्याज्ञानमेवेत्यर्थः ॥५२९॥ तस्य मिथ्याज्ञानत्वं वक्तुमात्मनो वास्तवं रूपमाह *अव्यावृत्तेति । प्रतीचः स्वत एकरसत्वे हेतुः *मितेरिति । विद्वदनुभवादित्यर्थः । उक्तस्वरूपाविपरीतविषयत्वात्प्रविष्टदृष्टिर्मिथ्येत्याह *तदिति ॥५३०॥ मात्रादिप्रपञ्चस्य तुष्टिहेतुत्वदृष्टेर्न तस्य मिथ्यात्वमित्याशङ्क्य, मिथ्याधियोऽपि तुष्टिहेतुत्वं दृष्टमिति सदृष्टान्तमाह *अयमिति ॥ ५३१ ॥ एवमपि तच्छब्दस्य सन्निहितजीवपरामर्शित्वान्न पश्यन्तीति श्रुतिरयुक्तेति शङ्कते *नन्वित्यादिना ॥५३२॥ स एष इतिवाक्ये तच्छब्दोपस्थापितपरस्यापि प्रकृतत्वेन तत्परामर्शसम्भवान्नोक्तदोष इति

अप्रविष्टप्रविष्टौ द्वौ वाक्यार्थावुपवर्णितौ ॥ ५३४ ॥
एतच्छब्दं परित्यज्य तच्छब्देनात्र वर्णनात् ॥
अप्रविष्टं परात्मानं प्रत्यभिज्ञापयेच्छ्रुतिः ॥ ५३५ ॥
प्रविष्टदर्शनाभावोऽनुभूत्या च विरुध्यते ॥
अप्रविष्टादर्शनं तु प्राकृतैरनुभूयते ॥ ५३६ ॥
नन्वेकस्य परस्यैव प्रविष्टत्वं दशान्तरम् ॥
ततः प्रविष्टदृष्टौ स्यात्परस्यैवात्र दर्शनम् ॥ ५३७॥
राजानं भूषितं दृष्ट्वा न दृष्ट इति लौकिकाः ॥
न मन्यन्ते, परस्तेन दृष्ट एवात्र पामरैः ॥ ५३८ ॥
दृष्टान्तो विषमोऽन्ये तु दृष्टान्ताः प्रकृतोचिताः ॥
श्रूयन्तां दोषदुष्टार्था इहोदाहरणोचिताः ॥५३९ ॥
गङ्गोदकं पूतमपि श्वदृतौ धारितं पुनः ॥
अगङ्गोदकमित्याहुर्न हि तस्यास्ति पूतता ॥ ५४० ॥

---

समाधत्ते *अत्र तच्छब्देनेति ॥ ५३३ ॥ ५३४ ॥ ५३५ ॥ किञ्च जीवपरामर्शे न पश्यन्तीति श्रुतेर्बाधितविषयत्वेनाप्रामाण्यप्रसङ्गाद्योग्यतया व्यवहितोऽपि परः परामृश्यत इत्याह *प्रविष्टेति ॥ ५३६ ॥ समाहितमपि चोद्यं दृष्टान्तावष्टम्भेन पुनरुत्थापयति *नन्विति ॥ ५३७ ॥ *दृष्ट इति । राजेति शेषः ॥ ५३८ ॥ भूषितस्यापि राज्ञो निर्दुष्टत्वात् जीवस्य पुनरज्ञानारोपितकर्तृत्वादिमलैर्दुष्टत्वान्न दृष्टान्तसाम्यम्, इति परिहरति । *दृष्टान्त इति । के तर्हि प्रकृतोचिता दृष्टान्तास्तत्राह *श्रूयन्तामिति ॥ ५३९ ॥ ५४० ॥ *पूरयेदिति । आशीर्वादेन कथनमिति शेषः । शुद्धोऽप्यग्निः श्मशानसम्बन्धाद्यथाऽशुद्धः, यथा हीनवेषधरो राजा ऽराजेत्येवमाद्युदाहार्यमित्याह *अ-

नमस्कृतोऽशुचिर्विप्रो नमस्कारवतां नहि ॥
पूरयेदेवमेवाऽन्ये ऽप्युदाहार्या दिशाऽनया ॥५४१ ॥
श्रुतिः–अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति
वदन्वाक् पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः ॥
वा० स्वतः परोऽपि देहादौ प्रविष्टोऽकात्स्न्र्यदोषतः ॥
दूषितो दर्शनं तस्य न भवेत्परदर्शनम् ॥ ५४२ ॥
अकृत्स्नत्वं यथाऽस्य स्याद्व्यवहारे तथोच्यते ॥
श्वासयोगात्प्राणिता स्याद्वक्ता वदनयोगतः ॥५४३॥
द्रष्टा दर्शनयोगेन श्रोता श्रवणयोगतः ॥
मन्ता मननयोगेन स्प्रष्ट्रादौ योजयेत्तथा ॥ ५४४ ॥
एवं चाहं प्राणितेति ज्ञाते वक्त्राद्यसङ्ग्रहः ॥
वक्ताऽहमित्यपि ज्ञाते प्राणित्रादेरसङ्ग्रहः ॥ ५४५ ॥
यतिदीक्षितचोरादिभूमिका धारयेन्नरः ॥

---

न्येऽपीति ॥५४१॥ तं न पश्यन्तीत्यनेन प्रविष्टदर्शनस्य आरोपितविषयत्वान्न परविषयत्वं, तत्र श्रुत्या हेतुः उक्तः *अकृत्स्नो हीति ॥ तद्व्याचष्टे *स्वत इति ॥५४२॥ प्रविष्टस्याकृत्स्नत्वं च स प्राणन्नेवेत्यादिश्रुत्योक्तं, तद्व्याचष्टे *अकृत्स्नत्वमिति ॥ ५४३ ॥ वदनादिशब्दोऽनुक्तेन्द्रियव्यापारोपलक्षणमित्याह *स्प्रष्ट्रेति ॥ ५४४ ॥ नन्वात्मनः प्राणनादिक्रियाकर्तृत्वेन लावकपाचकादिवत्प्राणनादिसंज्ञाऽस्तु, तथापि कथम् अकृत्स्नत्वं ? तत्राह *एवं चेति ॥५४५॥ प्राणनादिक्रियाविशिष्टात्मदृष्टेर्वदनक्रियाविशिष्टात्माविषयत्वादेकैकक्रियाविशिष्टस्य अकृत्स्नत्वमित्येतत् दृष्टान्तेनाह *यतीति । कश्चिच्छैलूषो भिक्षुदीक्षितादिवेषान् क्रमेण धत्ते, तत्र दीक्षितदर्शनस्य यत्यादिविषयत्वं यथा

तत्र दृष्टे दीक्षितेऽन्ये दृष्टा यत्यादयो नहि ॥५४६ ॥
यस्मिन्दृष्टे ह्यदृष्टोऽन्यो द्रष्टव्यः शिष्यते तथा ॥
अदृष्टेऽप्यन्यदृष्टिः स्यादकृत्स्नस्तादृगुच्यते ॥५४७॥
प्रत्येकं दीक्षिताद्याश्च प्राणित्राद्याश्च तादृशाः ॥
अतोऽकृत्स्ना इमे ज्ञेयास्तद्दृष्टिस्तेन नात्मदृक्॥५४८॥
अत्र केचिन्महात्मानोऽकृत्स्नत्वेन विनिन्दनात् ॥
अशेषोपाधिसंयुक्तः परात्मेति प्रचक्षते ॥ ५४९ ॥
मृत्योः स मृत्युमाप्नोति योऽत्र नानेव पश्यति ॥
इत्यादिना विरुद्धं तन्महतामेव शोभते ॥ ५५० ॥
कर्त्राद्युपाधयः कृत्स्नाः परस्परविभेदिनः ॥
निरुपाधिक आभान्ति ह्यागमापायसाक्षिणि ॥५५१॥

---

नास्ति तद्वद् इत्यर्थः ॥ ५४६ ॥ अकृत्स्नो हीत्यादेः स योऽत इत्यस्मात्प्राक्तनसन्दर्भस्य तात्पर्यमुक्त्वाऽकृत्स्नपदार्थमाह *यस्मिन्निति । यस्मिन्भगवत्पादपद्मे दृष्टेऽदृष्टोऽन्यो मुखेन्दुर्द्रष्टव्यत्वेन शिष्यते, तथाऽन्यदृष्टिरपि । यस्तु द्रष्टव्यत्वेन शिष्टो मुखेन्दुः पूर्वदृष्टादन्यस्तज्ज्ञानमप्यदृष्टे स्याददृष्टविषयं स्यात्, मुखमात्रगोचरं स्यादिति यावत् । तादृशः पादपद्मो मुखेन्दुश्च प्रत्येकमकृत्स्न इत्यर्थः ॥ ५४७ ॥ उक्तमकृत्स्नत्वं पूर्वोक्तदृष्टान्तदार्ष्टान्तिकयोर्योजयति *प्रत्येकमिति । फलितमाह *अत इति । प्राणित्रादेरकृत्स्नत्वे तद्दृष्टिर्यथा भूतात्मगोचरा न भवतीत्यर्थः ॥ ५४८ ॥ अकृत्स्नो हीत्यादिश्रुतेः स्वाभिमतमर्थमभिधाय परोक्तमर्थमनुभाष्य दूषयति *अत्रेत्यादिना ॥ ५४९ ॥ ५५० ॥ तस्मात्कर्तृत्वादेः कल्पितत्वमेव युक्तमित्याह *कर्त्रादीति । अकृत्स्नत्वे हेतुः *परस्परेति ॥ ५५१ ॥

साक्षिरूपं स्वतःसिद्धं सर्वेष्वव्यभिचारतः ॥
कर्त्रादयः स्वतोऽसिद्धाः बहुधा व्यभिचारतः ॥५५२॥
देशतः कालतो रूपादवस्थातोऽर्थधर्मतः ॥
सदा व्यभिचरन्त्यन्ये कर्त्राद्याः प्रत्यगात्मनि॥५५३॥
अज्ञातायां यथा रज्ज्वां तदध्यस्तैकरूपिणाम् ॥
व्यभिचारः स्रगादीनां प्रतीच्येवमनात्मनाम् ॥५५४॥
श्रुतिः—तान्यस्यैतानि कर्मनामान्येव ॥
वा० संयुक्तो नामरूपाभ्यां प्राणनादिषु कर्मसु ॥
लक्ष्यते मोहतः प्रत्यग्रज्जुः सर्पादिभिर्यथा ॥ ५५५ ॥
प्राणादिकं तस्य नाम, रूपं श्वासादिधारणम् ॥

---

न केवलं मृत्योः स मृत्युमित्यादिश्रुत्या द्वैतस्य कल्पितत्वं किन्तु युक्तेरपीत्याह *साक्षीति ॥ ५५२ ॥ बहुधा व्यभिचारमेवाह *देशत इति । यस्मिन्देशे काले च यत्सत्तदन्यत्र नास्ति, यदेकस्य स्वरूपं तन्नान्यस्य भवति, यदेकस्य जन्मावस्था तदन्यस्य नाशावस्था, एकस्यार्थस्य धर्मो नान्यस्यास्तीत्येवं व्यभिचरन्तीत्यर्थः । न च तत्र मानाभावः, उक्तव्यभिचारस्य साक्षिसिद्धत्वादिति मत्वाऽऽह *प्रत्यगात्मनीति ॥ ५५३ ॥ उक्तमर्थं दृष्टान्तेनापि साधयति *अज्ञातायामिति ॥ ५५४ ॥ तान्यस्यैतानीत्यादेरर्थमाह *संयुक्त इति । प्राणनादिकर्मसु सत्सु आत्मा नामरूपाभ्यां संयुक्तो लक्ष्यत इत्यर्थः । आत्मनो नामरूपत्वस्य श्रौतत्वे ब्रह्मवद्वस्तुत्वमिति, नेत्याह *मोहत इति । यथा सर्पादिहीनाऽपि रज्जुर्मोहतः सर्पादियुक्तेव लक्ष्यते, एवं मोहतो नामरूपाभ्यां संयुक्तैव लक्ष्यत इत्यनुषङ्गः । न च तस्य श्रौतत्वेन सत्यत्वं, श्रुतेरनुवादकत्वादिति भावः ॥ ५५५॥ उक्तना-

व्योम्नीव तरवो नैते सम्भाव्यन्ते चिदात्मनि॥५५६॥
अनन्यमेयतन्मानमातृ वस्त्वविभागवत् ॥
अमेयमानमात्रैकं तदात्मेति प्रचक्ष्महे ॥ ५५७ ॥
यत एवमविद्योत्थं प्राणाद्यस्यातदात्मनः ॥
नामरूपमतस्ताभ्यां पश्यन्नपि न पश्यति ॥ ५५८॥
श्रुतिः—स यो ऽत एकैकमुपास्ते ॥
वार्त्ति०॥ प्राणनादिकृतां मध्ये एकैकं यः समीक्षते॥
न स जानात्यकृत्स्नत्वादेतदीक्षितृवस्तुनः ॥ ५५९ ॥
सर्वेषां मेलनं त्वत्र दूषितं महतां मतम् ॥

---

मरूपे अनुवदन्नात्मस्वरूपपर्यालोचनयाऽपि तयोस्तत्र कल्पितत्वमिति सदृष्टान्तमाह *प्राणादिकमिति ॥ ५५६ ॥ विद्वज्जनप्रसिद्धमात्मस्वरूपमेव दर्शयति *अनन्येति। अन्यन्मेयमस्य नास्तीत्यनन्यमेयं तदेव स्वरूपं मानं मातृ चेति तन्मानमातृ, अनन्यमेयं च तन्मानमातृ चेति विग्रहः। तस्य सत्यतामाह *वस्त्विति। एकरसत्वमाह *अविभागवदिति। उक्तमेव पुनः सङ्गृह्य दर्शयति *अमेयेति ॥ ५५७ ॥ नामरूपस्य कल्पितत्वे फलितमाह *यत इति। एवं व्यभिचारादात्मस्वरूपपर्यालोचनया चातदात्मनो नामरूपरहितस्य यतः प्राणादिनामरूपमविद्योत्थमित्यन्वयः। इत्थम्भावे तृतीया। पश्यन्नपि, आत्मानमिति शेषः॥५५८॥स योऽत इत्यादेरर्थमाह *प्राणनादीति। प्राणनादिकृतां मध्य इति श्रुतिगतातःशब्दव्याख्या। *एतदीक्षितृवस्तुनः इति। उपासकविदितात्मन इत्यर्थः ॥ ५५९ ॥ अस्तु तर्हि कृत्स्नस्यैवोपास्यत्वमिति, नेत्याह *सर्वेषामिति। किञ्चात्मनः कृत्स्नत्वं स्वाभाविकं चेत् युगपदेव प्राणनादिसर्वव्यापारः स्या-

न चाशेषं मेलयित्वा व्यवहर्तुं क्षमो नरः ॥ ५६० ॥
अतो यः प्राणिमीत्यादि स्वरूपं यावदीक्षते ॥
अक्रियाकारकं वस्तु न तावद्वेद तत्त्वतः ॥ ५६१ ॥
यत्नात्प्रवेशः श्रुत्युक्तः पुनः श्रुत्या स निन्द्यते ॥
इत्यत्राभिप्रायभेदः कोऽसाविति स ईर्यते ॥५६२॥
ब्रह्मबोधद्वारतया प्रवेशः प्रतिपादितः ॥
द्वारं ब्रह्मतया भ्रान्त्या ये विदुस्तान्विनिन्दति॥५६३॥
चिद्याभासोऽपोदितः स्यात्कर्तृदर्शननिन्दनात् ॥
इत्युक्तं व्याकृतं सर्वं जडाजडविभागवत् ॥ ५६४ ॥
श्रुतिः–न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवति ॥

---

तच्चानिष्टमित्याह *न चेति ॥५६०॥ उपास्तेर्ज्ञातत्वात् य एकै-कमुपास्ते न स वेदेति श्रुतौ व्याघातं परिहरन्नुक्तमुपसंहरति *अत इति । अयं जनो यावत्प्राणनादिकर्तारमात्मानं वेद न तावत्तत्त्वतो वेत्ति, यतो वस्तु अक्रियाकारकमिति योजना॥५६१॥ ं न पश्यन्तीत्यादिश्रुत्या प्रविष्टदर्शनं चेन्निन्द्यते तर्हि प्रवेश-कथनं मुधा स्यात् "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायादित्याशङ्कते *यत्नादिति ॥ ५६२ ॥ प्रवेशश्रुति-तात्पर्यमाह *ब्रह्मेति । निन्दाश्रुतितात्पर्यमाह *द्वारमिति । चिदाभासद्वारा ब्रह्म ज्ञेयमिति प्रवेशश्रुतितात्पर्यमज्ञात्वा द्वारमेव ब्रह्मत्वेन ये भ्रमन्ति तान् निन्दतीत्यर्थः ॥ ५६३ ॥ निन्दायाः फलमाह *विद्येति ।परमप्रकृतमुपसंहरति *इतीति ॥ ५६४ ॥

श्रुतौ स वेदेत्यत्र हेतुः*अकृत्स्न इति । तत्र हेतुः *ह्येष इति । एष प्राणनादिनां मध्ये हि यस्मादेकैकेन विशेषण विशिष्टो भवति तस्मादकृत्स्न इति पूर्वेण सम्बन्धः ॥

वार्त्ति०प्रमेयं प्रमितिद्वारं प्रमाभासविनिन्दनम् ॥
त्रयमुक्त्वा प्रमित्यर्थं विद्यासूत्रमथोच्यते ॥ ५६५ ॥
प्रायेणारोप एवात्र तृतीयेऽध्याय ईर्यते ॥
तथापि तदमुख्यत्वज्ञप्त्यै विद्या च सूचिता ॥५६६॥
अन्यथाऽऽरोप एवात्र प्रतिपाद्य इति भ्रमः ॥
प्राप्नुयात्, तद्व्युदासार्थं विद्यां मुख्यामसूत्रयत्॥५६७।
श्रुतिः–आत्मेत्येवोपासीत ॥
वार्त्ति०आत्मेत्येवमुपासीतेत्येतत्सूत्रमुदाहृतम् ॥
अपरेऽत्र विकल्पेन चतुर्धा सूत्रमूचिरे ॥ ५६८ ॥
आत्मेत्येकमिदं सूत्रं कण्डिकाद्वयमेव वा ॥
अध्यायो वा समस्तोऽयमध्यायद्वयमेव वा ॥ ५६९ ॥
अव्याकृतप्रवेशात्मपदनीयप्रियोक्तयः ॥
पञ्चसूत्राणि गीतानि कैश्चित्तान्यपि सन्तु वा ॥५७०॥
यथोक्तानां तु सूत्राणामाशास्त्रार्थसमापनात् ॥
वृत्तिः स्यादुत्तरो ग्रन्थस्तत्र चैषां समापनात् ॥५७१।
सर्वथाऽप्यात्मसूत्रेऽस्मिन्विवादो नास्ति कुत्रचित् ॥
तत्सूत्रेण निवर्त्या या शङ्का सा तावदुच्यते ॥५७२॥

---

विद्यासूत्रस्य पूर्वेण वाक्येन सम्बन्धमाह *प्रमेयमिति । अव्याकृतं प्रमेयम् । प्रविष्टः परः प्रमाद्वारम् । प्रविष्टः प्रमाभासः । प्रमित्यर्थं, परस्येति शेषः ॥ ५६५ ॥ विद्यायाः विस्तरतो वक्ष्यमाणत्वादध्यारोपकथनमध्ये सूत्ररूपेण तस्याः कथनं किमर्थमित्याशङ्क्याह *प्रायेणत्यादिना ॥ ५६६ ॥ ॥ ५६७ ॥ ५६८ ॥ ५६९ ॥ मतान्तरमाह *अव्याकृतेति ॥ ५७० ॥ ५७१ ॥ परमतोपन्यासफलमाह *सर्वथाऽपीति ॥५७२॥ ननु प्रतिपादितमात्मतत्त्वं जागरादौ न स्फुर-

व्याकृते हेतुकार्याभ्यामव्यक्ते कारणेन तत् ॥
तिरोहितं वस्तुतत्त्वं कथं तत्त्वं विबुध्यताम् ॥ ५७३॥
कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ॥
प्राज्ञः कारणबद्धः स्यादिति नैगमिकं वचः ॥ ५७४ ॥
तुरीये तूक्तबन्धौ तौ न सिद्ध्यत इतीरणात् ॥
तुरीयत्वेन बोद्धव्यमिति चेत्तत्कदा वद ॥ ५७५ ॥
विस्फारिताक्षो जानाति शब्दाद्येव न तत्परम् ॥
आपीतकरणग्रामः शब्दाद्यपि न वेत्ति हि ॥५७६ ॥
एतच्छङ्कानिवृत्त्यर्थमात्मेत्येवेति सूत्रणम् ॥
उक्त्वा पदार्थं शङ्काया उत्तरं योजयिष्यते ॥ ५७७ ॥
यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ॥
यच्चास्य सन्ततो भावस्तस्मादात्मेति कथ्यते॥५७८॥
व्याप्नोत्यनवशेषेण सर्पादीन्स्रगिवाखिलान् ॥

---

ति अतः कथं सिद्धिरिति शङ्कामेवाह *व्याकृत इति । व्याकृते जाग्रत्स्वप्नयोरज्ञानतत्कार्याभ्याम्,अव्यक्ते सुप्तेऽज्ञानेन च तिरोहितं वस्तुतत्त्वं यस्मात् अतस्तत्तत्त्वं कथं बुध्यतामित्यर्थः॥५७३॥ जागरादावज्ञानतत्कार्याभ्यां, स्वापेऽज्ञानेन प्रतिबद्धं तत्त्वमित्यत्र मानमाह *कार्येति ॥५७४॥ "द्वौ तु तुर्ये न सिध्यतः" इत्युक्तवाक्यबलात्तुर्ये तत्त्वबोधं शङ्कते *तुरीय इति । तुर्यावस्थाया एव दुर्लभत्वान्न तत्र तत्त्वधीरिति समाधत्ते *तत्कदेति ॥ ५७५ ॥ तत्र हेतुमाह *विस्फारितेति । जागरादौ तत्त्वविरुद्धशब्दादिज्ञानात्स्वापे च ज्ञानस्यैवाभावात् दुर्लभा तत्त्वधीरिति भावः ॥ ५७६ ॥ ५७७ ॥ आत्मपदार्थमाह *यच्चेति । यच्छब्दचतुष्टयं यस्मादर्थे । चशब्दाः समुच्चये ॥ ५७८ ॥ इम-

कल्पनाधिष्ठानतया प्रत्यङ्ङात्मा भवेत्ततः ॥५७९॥
सर्वाधिष्ठानसन्मात्र इत्यशेषजगत्प्रति ॥
अधिष्ठानतया व्याप्तिं श्रुतिर्ब्रूते सदाऽऽत्मनः ॥५८०॥
स्वचिदाभासमोहेन तदुत्थानखिलान्यतः ॥
आदत्ते ऽनात्मनः प्राज्ञस्ततश्चात्मेति तं विदुः॥५८१॥
पर आत्मनि सर्वेऽपि सम्प्रतिष्ठन्त एकले ॥
पृथिव्याद्या अनात्मान इति चाथर्वणे वचः ॥ ५८२॥
आत्माभासाः पराचीना धीवृत्तीर्विषयोन्मुखाः ॥
प्रत्यङ्ङत्ति यतोऽतो ऽसावात्मेत्युक्तो मनीषिभिः५८३
विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ॥
आनन्दभुक् तथा प्राज्ञ इति चागमशासनम् ॥५८४॥

---

मेवार्थं विवृण्वन् यस्मादाप्नोति तस्मादात्मेत्येतस्यार्थमाह *व्याप्नोतीति ॥ ५७९ ॥ उक्तेऽर्थे मानमाह *सर्वेति ॥ ५८० ॥ यदादत्ते इत्यस्यार्थमाह *स्वेति । स्वकीयचिदाभासवता मोहेन तस्मादेव मोहादुत्पन्नानशेषाननात्मनो यस्मादादत्ते तस्मात्तमात्मेति विदुरिति योजना । आदत्ते स्वात्मन्येव संहरतीति यावत् । प्राज्ञः स्वापादावित्यर्थः ॥ ५८१ ॥ अत्रापि प्रश्नोपनिषदं प्रमाणयति *पर इति । सम्प्रतिष्ठन्ते लीयन्ते ॥ ५८२ ॥ यच्चात्तीत्यादेरर्थमाह *आत्मेति । आत्मन आभासो यासु तास्तथोक्ताः । पराचीनाः इत्यस्य व्याख्या विषयोन्मुखा इति । अत्ति साक्षात्करोतीति यावत् ॥ ५८३ ॥ अत्र माण्डूक्यश्रुतिं पठति *विश्व इति । बाह्येन्द्रियोपनीतत्वं विषयाणां स्थौल्यं, वासनामात्रोपस्थापितत्वं प्रविविक्तत्वमिति भेदः । आनन्दशब्देन कारणकोशो गृह्यते, तं भुङ्क्ते पश्यतीत्यानन्दभुगुच्यते सौषुप्तः पुरुषः ॥ ५८४ ॥ यच्चास्येत्यादेरर्थमाह

अव्यावृत्ताननुगतः पूर्णः स्वात्मन्यवस्थितः ॥
यतोऽस्य सन्ततो भावस्तस्मादात्मेति पठ्यते॥५८५॥
तद्विष्णोरिति मन्त्रोऽपि विष्णुस्तत्परमं पदम् ॥
चक्षुर्वदाततं व्योम्नि व्याचष्टे प्रत्यगात्मनि ॥ ५८६॥
चतुर्विधानिरुक्त्याऽत्र चत्वारोऽर्थाः प्रकीर्तिताः ॥
अधिष्ठानं कारणत्वं जीवभावो विमुक्तता ॥ ५८७॥
यन्मुक्तरूपं साक्षित्वाद्व्याकृतेऽव्याकृतेऽपि तत् ॥
अतिरोहितमत्रात्मशब्देनैतद्धि सूत्रितम् ॥ ५८८ ॥
प्रत्यक्तया यः प्रथते स्वयञ्ज्योतिःस्वभावकः ॥
तिरोधीयेत यद्येष जगदान्ध्यं तदा भवेत् ॥ ५८९ ॥
जिघ्राणीममहं गन्धमिति यो वेत्त्यविक्रियः ॥
स आत्मा तत्परं ज्योतिरिति वेदशिरो वचः ॥५९०॥

---

ःअव्यावृत्तेति ॥ ५८५ ॥ तद्विष्णोः परमं पदमिति मन्त्रं प्रमा-
ायति *तदिति । परमं कार्यकारणमिति यावत् । *दिवीव
क्षुराततमित्येतदर्थतः पठति *चक्षुर्वदिति । आकाशे यथा
र्वतो विप्रसृतं तथा परस्य स्वरूपं प्रतीच्येव व्याप्तमप्रत्यग-
भावात्वादिति मन्त्रो वदतीत्यर्थः ॥ ५८६ ॥ उक्तमर्थं सङ्-
ह्य दर्शयति *चतुर्विधेति ॥ ५८७ ॥ एवमात्मपदार्थमुक्त्वा,
दुक्तमात्मनो ऽवस्थात्रयेऽपि मानायोगात्कथं तस्य सिद्धिरिति,
त्रोत्तरत्वेनात्मशब्दं योजयति *यन्मुक्तेति ॥ ५८८ ॥ व्य-
ाव्यक्तजगति साक्षित्वेन स्वप्रकाशात्मभानानङ्गीकारे बाध-
माह *प्रत्यक्तयेति ॥ ५८९ ॥ यो वेदेदं जिघ्राणि स आ-
त्यादिवाक्यमपि साक्षिण्यात्मनि मानमित्याह *जिघ्राणीति
त्वात्मा जगत्साक्षी ब्रह्मणस्तु किमायातम्? इत्याशङ्क्य तस्य
ह्मत्वं श्रुत्यैकगम्यमिति मत्वाह *तत्परमिति ॥ ५९० ॥

आत्मशब्दधियो रात्मा विषयो नेति भावितुम् ॥
सूत्रेऽस्मिन्नितिशब्दोऽयं यथैतत्स्यात्तथोच्यते ॥५९१॥
व्यवहर्त्तुं शक्य एष न च माण्डूक्यवाक्यतः ॥
अमात्रो यश्चतुर्थः सोऽव्यवहार्य इतीदृशात् ॥ ५९२॥
अभिज्ञा चाभिवदनमुपादानमिति त्रिधा ॥
व्यवहार उपादानं सर्वगे सम्भवेन्न हि ॥ ५९३
यतो वाचो निवर्त्तन्ते ह्यप्राप्य मनसा सह ॥
स ब्रह्मानन्द इत्युक्ते व्यवहारान्तरं च न ॥ ५९४ ॥
अथापि बोधसिद्ध्यर्थं यदि व्यवाजिहीर्षितः ॥
प्रत्यक्तदा मनोवाग्भ्यामात्मेत्युपचरेदमुम् ॥ ५९५ ॥
यत्रेति परशब्दः स्यात्तत्रोपचरितं वचः ॥
ज्येष्ठं पितेति पश्यन्तीत्यादावेवमवेक्षणात् ॥ ५९६ ॥
अवाङ्मनसगम्यत्वमितिशब्देन सूचितम् ॥

---

इतिशब्दार्थमाह *आत्मशब्देति । ननु विरुद्धमिदमुच्यते, तत्राह *यथैतदिति ॥ ५९१ ॥ *अमात्र इति । कार्यकारणान्यतरोपहितस्यैव शास्त्रधीगम्यत्वं न निरुपाधिकस्य चिद्धातोरिति भावः ॥ ५९२ ॥ व्यवहारासम्भवमेव तद्भेदप्रदर्शनपूर्वकमाह * अभिज्ञा चेत्यादिना ॥ ५९३ ॥ ५९४ ॥ आत्मनः शब्दागम्यत्वे आत्मानमुपदिशेत्यादिव्यवहारायोगात्तद्बोधो न स्यादित्याशङ्क्य लक्षणया शब्दगम्यत्वाङ्गीकृतेर्मैवमित्याह *अथेति । बोधाय प्रत्यग् व्यवहर्तुमिष्टश्चेदहमात्मादिशब्दैर्लक्षणया व्यवहरेदित्यर्थः । इतिशब्दशिरस्कं पदं लक्षणयैव प्रयुज्यते॥५९५॥प्रयुज्यत इति दृष्टान्तमाह *ज्येष्ठमिति ॥५९६। उक्तमर्थं द्रढयितुमाक्षिपति *अवागिति। इतिशब्देनात्मेतीत्यत्रस्थे

अन्यत्र च श्रुतं साक्षात्तथाऽप्येतन्न युज्यते ॥ ५९७ ॥
का वाचोऽतो निवर्तन्ते न तावल्लौकिकोक्तयः ॥
अप्रसक्तेः, वेदवाचां निवृत्तौ तद्वचो वृथा॥ ५९८ ॥
यतो वाचो निवर्तन्ते इत्येतद्वैदिकं वचः ॥
ब्रह्मणो विनिवृत्तं सत्किमन्यत्प्रतिपादयेत् ॥ ५९९ ॥
शृण्वात्मनि वचस्त्वेतद्वाच्यत्वं प्रतिषेधति ॥
नात्मानं वक्त्यतश्चैतदात्मनो विनिवर्त्यते ॥ ६०० ॥
तथैवाशब्दमस्पर्शमिति शब्दाद्यपह्नुतिः ॥
यथा चास्थूलमित्यादि तथा वाच्यत्ववारणम्॥६०१॥
अस्थूलादिवचो यद्वत् स्थूलत्वादिनिषेधतः ॥
पर्यवस्येद्ब्रह्मतत्त्वे तथा वाच्यत्वनुद्वचः ॥ ६०२ ॥
निषेध्यविषयत्वेन निषेधवचनैर्नहि ॥
ब्रह्मवाच्यमपि त्वेतल्लक्ष्यते विषभुक्तिवत् ॥ ६०३ ॥
विषं भुङ्क्ष्वेति वाक्येन नोच्यते भुक्तिवारणम् ॥

---

। अन्यत्र यतो वाच इत्यादिश्रुतौ ॥ ५९७ ॥ कथं न युज्यते
त्याशङ्क्य किं लौकिकस्य वैदिकस्य वा वचसो ब्रह्मबोधकत्व-
ति विकल्प्य दूषयति *का वाच इत्यादिना॥ ५९८॥५९९॥
त इत्यादिश्रुतेर्ब्रह्मणि वाच्यत्वमात्रनिषेधेन तत्र पर्यवसानं,
तद्वैयर्थ्यमिति समाधत्ते *शृण्विति ॥ ६०० ॥ उक्तमर्थं दृ-
न्तेन स्पष्टयति *यथेति ॥ ६०१ ॥ यथा चास्थूलमित्युक्तं
वृणोति *अस्थूलादीति ॥ ६०२ ॥ अस्थूलादिवचसामपि
ह्मवाचकत्वमेवेत्याशङ्क्य, नेति, सदृष्टान्तमाह *निषेध्येति॥६०३॥
षभुक्तिवदित्येतद्व्याचष्टे *विषमिति । शत्रुगृहे भोजननिवृत्ति-
रत्वेन प्रयुक्तं विषं भुङ्क्ष्वेत्यादिवाक्यं न मुख्यवृत्त्या तद्बोधकं

पदार्थासङ्गतेः किन्तु तत्तात्पर्येण लक्ष्यते ॥ ६०४ ॥
अवाच्यब्रह्मणो वाक्यं निवृत्तमपि सार्थकम् ॥
यतो लक्षणयाऽप्यत्र वाक्येन ब्रह्म बोध्यते ॥ ६०५ ॥
निषिद्धे सति वाच्यत्वे सत्यज्ञानादिकान्यपि ॥
लक्षयन्त्येव नो तत्त्वं ब्रुवते तदसम्भवात् ॥ ६०६ ॥
स्थूलत्वादि यथा नास्ति निषेध्यत्वात्तथाऽऽत्मनि ॥
सत्यत्वाद्या वाच्यधर्मा न सन्त्येषां निषेधतः ॥६०७॥
कल्प्यस्थौल्यनिषेधस्य वाच्यस्य द्वारता तथा ॥
कल्प्यधर्मविधिर्वाच्यो द्वारं ब्रह्मोपलक्षणे ॥ ६०८ ॥
आरोप्याधिष्ठानभावः सम्बन्धो द्वारलक्ष्ययोः ॥
यः सर्पो रज्जुरेषेति यथा तद्वदितीष्यताम् ॥ ६०९ ॥

---

तत्र तद्बोधकपदाभावात् किन्तु तात्पर्यानुपपत्त्या तल्लक्षकमित्यर्थः ॥६०४॥ नन्वेवमपि कथमस्थूलादिश्रुतिवैयर्थ्याभावस्तत्राह *अवाच्येति ॥६०५॥ अस्थूलादिवाक्यानां स्थूलत्वाद्यभावाभिधायिनां तदुपलक्षितब्रह्मलक्षकत्वमुक्त्वा सत्यादिवाक्यानामपि तल्लक्षकत्वमाह*निषिद्ध इति ॥६०६॥ ब्रह्मणः सत्यादिपदवाच्यत्वासम्भवमेवोपपादयति *स्थूलत्वेति ॥६०७॥ वाच्यसम्बन्धस्यैव लक्ष्यत्वात्तत्सत्यादिपदवाच्यसत्यत्वादेर्ब्रह्मण्यभावे तस्य लक्ष्यत्वमेव न स्यादित्याशङ्क्य वास्तवधर्माभावेऽपि तत्र कल्पितधर्माङ्गीकारान्नैवमिति सदृष्टान्तमाह *कल्प्येति । कल्पितं यत्स्थूलत्वादि तदभावस्येत्यर्थः ॥ द्वारता, यथेति शेषः । *कल्प्यधर्मविधिरिति । आरोपितभावधर्म इति यावत् ॥६०८॥ तर्हि वाच्यलक्ष्ययोः कः सम्बन्धस्तत्राह *आरोप्येति ॥ ६०९ ॥ एवमपि वाच्यपदवाच्यत्वाद् ब्रह्मणः सर्वपदलक्ष्यत्वप्रसिद्धमिति

कथं लक्ष्यत्वमत्यन्तावाच्यस्येति न चोद्यताम् ॥
अत्यन्तावाच्यशब्देन लक्ष्यस्यैवात्र सम्भवात् ॥ ६१० ॥
अत्यन्तावाच्यशब्दोऽयं निरर्थश्चेत्त्वयेरितः ॥
सुप्तोन्मत्तप्रलापः स्यात्सार्थत्वेऽर्थः स कीदृशः ॥ ६११ ॥
वाच्यत्वे व्याहतिः स्पष्टा लक्ष्यत्वे स्यात्समीहितम् ॥
सिद्धं भवत्यवाच्यस्य लक्ष्यत्वाङ्गीकृतेरिह ॥ ६१२ ॥
प्रतिवादिभ्रमस्यायमनुवाद इति त्वया ॥
न मन्तव्यं यतोऽत्यन्तावाच्यशब्दस्तु लौकिकः ॥ ६१३ ॥
कौ तर्हि मुख्यलक्ष्यार्थौ लौकिकाविति चेच्छृणु ॥
मुख्यो वाच्यत्वधर्मस्य निषेधः शब्दसङ्गतेः ॥ ६१४ ॥
इक्षुक्षीरादिमाधुर्यविशेषो लक्ष्यतिष्यते ॥
तत्रात्यन्तावाच्यशब्दस्तात्पर्यात्पर्यवस्यति ॥ ६१५ ॥
इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ॥

---

शङ्कते *कथमिति । असिद्ध्या दूषयति *न चोद्यतामिति ॥ ६१० ॥ किञ्चात्यन्तावाच्यशब्दः किं निरर्थकः सार्थको वा ?। आद्येऽवाच्यमिति त्वदुक्तानुवादो न घटेत। द्वितीये यथाऽस्थूलादिशब्दस्य स्थूलार्थत्वे व्याघातः एवमवाच्यपदस्य वाच्यार्थकत्वे व्याघातात्तस्य लक्ष्यार्थकत्वमनिच्छताऽपि त्वयाऽङ्गीकार्यमित्याह *अत्यन्तेति ॥ ६११ ॥ ६१२ ॥ ननु निरर्थक एवावाच्यशब्दः, न चानुवादायोगः, निरर्थकस्याप्यसदेवेदमितिवदनुवादसम्भवादिति शङ्कते *प्रतिवादीति । अस्थूलादिशब्दवत्प्रसिद्धार्थत्वादवाच्यशब्दस्य न भ्रमसिद्धत्वमिति परिहरति *नेति ॥ ६१३ ॥ उक्तमेवार्थमाकाङ्क्षापूर्वकमुपपादयति*कौ तर्हीत्यादिना । *शब्दसङ्गतेरिति । अवाच्यशब्दस्य वाच्यत्वाभावेन सह वाच्यवाचकत्वसम्बन्धसत्त्वादित्यर्थः

तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥६१६॥
युक्तं माधुर्यभेदस्य लक्ष्यत्वं यदि भासनात् ॥
ब्रह्मापि तर्हि भातत्वाच्छास्त्रेणात्रोपलक्ष्यताम्॥६१७॥
लक्ष्यत्वधर्मस्तत्र स्यादिति चेदस्त्वदैर्घ्यवत् ॥
अदीर्घमित्यपह्नुत्यामन्यन्नेति व्यपोद्यते ॥ ६१८ ॥

॥ ६१४ ॥ ६१५ ॥ ६१६ ॥ मानसिद्धस्यैव लक्ष्यत्वनियमादनुभवसिद्धमाधुर्यविशेषस्य लक्ष्यत्वेऽपि मानासिद्धत्वाद्ब्रह्मणः कथं लक्ष्यत्वमिति शङ्कते*युक्तमिति । असिद्ध्या दूषयति *ब्रह्मेति । शबलबोधकसत्यादिवाक्यैरेव शुद्धब्रह्मणोऽपि विशेष्यतया भातत्वादिति भावः । अत्र कश्चिदाह—विशिष्टवाचकतत्त्वमादिपदैरेव शुद्धब्रह्मणोऽपि विशेष्यतया भाने योग्यतया विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयसम्भवान्न तदर्थं लक्षणा कल्प्या, यथा "गेहे घटः" इति वाक्ये वाच्यैकदेशघटगेहव्यक्त्योरेव योग्यतावशादाधाराधेयभावान्वयस्तद्वदिति, तदसत् । घटगेहव्यक्त्योराधाराधेयभावान्वयेऽपि यथा घटत्वगेहत्वयोस्तदवच्छेदकतया*ऽन्वयस्तथा तत्त्वम्पदवाच्ययोर्विशेषणयोरप्यन्वयो वाच्यः, पदोपस्थितानां पदार्थानां साक्षादवच्छेदकतया वाऽन्वयनियमात्, तथा चाद्वैतहानिरिति शुद्धोपस्थित्यर्थं लक्षणाया आवश्यकत्वादिति दिक् ॥ ६१७ ॥ ब्रह्मणि लक्ष्यत्वाङ्गीकारेऽप्यद्वैतहानिमाशङ्क्य परिहरति*लक्ष्यत्वेति । अदीर्घमित्यादिवाक्ये दीर्घत्वाद्यपह्नुतौ यथाऽदीर्घत्वादिधर्मा अभ्युपगतास्तद्वल्लक्ष्यत्वाङ्गीकारेऽपि न दोषस्तेषां कल्पितत्वादिति भावः । तेषां कल्पितत्वे मानमाह *अन्यन्नेति । न ह्येतस्मादिति नेत्यन्यत्परमस्तीत्यत्र सर्वधर्मनिषेधात्ते तत्र कल्पिता इत्यर्थः॥६१८॥

* तदवच्छेदकतया—आधेयत्वाधारत्वावच्छेदकतयेत्यर्थः ।

नाभावोऽपि प्रसज्येत नेतिनेतीति वीप्सया ॥
भावाभावोभयान्यादिसर्वदृश्यनिषेधनात् ॥६१९॥
सर्वदृश्यनिषेधे तु कीदृग्ब्रह्मेति चेच्छृणु ॥
पृच्छयते वा ऽऽक्षिप्यते वा प्रश्ने तावदिदं वद॥६२०॥
ब्रह्मानुभववाञ्छा किं यद्वा दृष्टान्तकामना ॥
आद्ये त्वमेव ब्रह्मासिं दृष्टान्तस्तु न तत्समः ॥६२१॥
मयि देहादयो वाच्या दृश्यन्त इति चेत्तदा ॥
हित्वा वाच्यानवाच्यं त्वं द्रष्टारं ब्रह्म विद्धि भोः॥६२२॥
आक्षेपेऽनुपपत्तिः का यदि बुद्ध्यप्रवेशनम् ॥
तन्नात्राक्षेप्तुकामस्य तव बुद्धेः प्रवेशनात् ॥ ६२३ ॥
आक्षेपाय विशेद्धीर्मे पुरुषार्थाय नेति चेत् ॥
अहो बत महत्पुण्यं फलितं जन्मकोटिभिः ॥ ६२४ ॥
तस्माद्ब्रह्माभिधानानि प्रयुक्तान्युपलब्धये ॥
सर्वाण्यनभिधायैव निवर्त्तन्ते विबोध्य च ॥ ६२५ ॥

---

तर्हि कल्पिताभावस्य परमार्थत्वात्कथं नाद्वैतक्षतिरित्याशङ्क्य अधिष्ठानातिरिक्ताभावानभ्युपगमान्मैवमित्यभिप्रायेणाह *नेति ।६१९॥६२०॥६२१॥ मम ब्रह्मत्वमनुपपन्नम्, अहम्पदवाच्यैक-देशाहङ्कारादेर्जडत्वेन ब्रह्माभेदाभावादित्याशङ्क्य भागत्यागलक्ष-णया त्वम्पदलक्ष्यं ब्रह्मत्वेन जानीहीत्याह*मयीति॥६२२॥६२३॥ *अहो बतेति। मलिनधियस्तत्राप्रवेशोऽपि पुमर्थाय शुद्धधियस्तत्र प्रविशन्तीति भावः ॥६२४॥ यतो वाच इत्यादिवाक्यार्थं निग-मयति*तस्मादिति ॥ ६२५ ॥ ननु धर्मिसमानसत्ताकधर्मव-त एव लक्ष्यत्वदृष्टेरतथाविधब्रह्मणः कथं लक्ष्यत्वमित्याशङ्क्य मायाया दुर्घटकारित्वान्मैवमित्याह*इन्द्रजालमित्यादिना। अल-

इन्द्रजालमिदं शब्दा अवाच्यं वक्तुमुद्यताः ॥
अलक्ष्यं लक्षयन्तीति वक्षि चेत्त्वमबुध्यथाः ॥ ६२६ ॥
जगन्मायेन्द्रजालस्य हेतुं मायां पुरा श्रुताम् ॥
चोद्यव्याजेनाधुना त्वं युक्तिधीभ्यामपेक्षसे ॥ ६२७ ॥
माहात्म्यमेतच्छब्दस्य यदबुद्धप्रबोधनम् ॥
लोके सार्वजनीनं तत्सुप्तनरबोधने ॥ ६२८ ॥
अगृहीत्वैव सम्बन्धमभिधानाभिधेययोः ॥
हित्वा निद्रां प्रबुध्यन्ते सुप्ते बोधिताः परैः ॥६२९॥
न शृणोति नरः सुप्तौ जाग्रतीवाक्षराण्यपि ॥
भेरीध्वन्यादिभिर्बोधात्सम्बन्धग्रहणं कुतः ॥ ६३० ॥
दुर्बलत्वादविद्याया आत्मत्वाद्बोध्यवस्तुनः ॥

---

क्ष्यं वस्तुतो लक्ष्यत्वधर्मशून्यम् ॥ ६२६ ॥ ६२७ ॥ ननु ब्रह्मणि शब्दो गृहीतसम्बन्धो न वा । आद्ये वागविषयत्वानुपपत्तिर्द्वितीये तस्य शब्दप्रमाणकत्वायोगेन तज्ज्ञानाभावान्न तदज्ञानध्वस्तिस्तत्राह*माहात्म्यमिति । यथा सुप्तबोधकशब्दः सम्बन्धज्ञानानपेक्षस्तस्य बोधमादधाति, तथा तत्त्वमादिशब्दस्य शबले ज्ञातशक्तेः प्रतिपाद्येऽर्थे शक्तिधीनिरपेक्षस्यैव लक्षणया ज्ञानं जनयत एष महिमा यदज्ञाननिरासित्वम्। अतो युक्तमनभिधेयस्य ब्रह्मणः शब्दप्रमाणकत्वमिति भावः ॥ ६२८ ॥ सार्वजनीनमित्युक्तं व्यनक्ति*अगृहीत्वेत्यादिना ॥ ६२९ ॥ ॥ ६३० ॥ ब्रह्मणि वाक्याज्ज्ञातेऽपि कथं तद्ज्ञानमज्ञानं निवर्तयति वैपरीत्यं कुतो न? अत आह*दुर्बलत्वादिति। अविद्यादौर्बल्यं शुक्त्यादौ दृष्टमिति भावः। स्फुरणरूपस्यात्मनो वृत्त्युपारूढस्य तद्दाहकत्वसम्भवाच्चेत्याह*आत्मत्वादिति । शब्दशक्ते-

शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तन्मोहहानतः ॥ ६३१ ॥
लक्षकत्वेऽपि वेदान्तशब्दा एवात्मलक्षकाः ॥
लक्ष्यं गङ्गेत्येव तीरं वालुकेति तु न क्वचित् ॥ ६३२ ॥
प्रचुरव्यवहारश्चेद्गङ्गादौ विनियामकः ॥
वेदान्तव्यवहारस्य प्राचुर्यं ब्रह्मणीक्ष्यताम् ॥ ६३३ ॥
एवञ्च प्रकृतेऽप्यात्मशब्दोऽयं वस्तुलक्षकः ॥
न वाचको वाचकत्वहेतोरात्मन्यसम्भवात् ॥ ६३४ ॥
षष्ठीगुणक्रियाजातिरूढयः शब्दहेतवः ॥
नात्मन्यन्यतमोऽमीषां तेनात्मा नाभिधीयते ॥६३५॥
आप्नोतीत्यादिधात्वर्थाश्चत्वारो व्यावहारिकाः ॥
आत्मशब्दस्य वाच्यार्थाः प्रतीचि परिकल्पिताः॥६३६॥

---

मन्त्रादिशक्तिवद् दुर्ज्ञानत्वादित्याह*शब्देति । उक्तहेतुभिस्तं प्रत्यञ्चं मोहशब्दितविरुद्धांशनिरासद्वारा लक्षणया शब्दादेव विद्म इत्यर्थः ॥ ६३१ ॥ आत्मनो वाचकपदाभावेऽपि यत्किञ्चित्पदं तल्लक्षकमस्तु, नेत्याह *लक्षकत्वेऽपीति ॥ ६३२ ॥ सिकतायां घोष इति वृद्धप्रयोगाभावान्न तस्य तीरलक्षकत्वमिति शङ्कते*प्रचुरेति । औपनिषदत्वश्रुतेर्वेदान्तानामेव ब्रह्मलक्षकत्वमित्याह*वेदान्तेति ॥ ६३३ ॥ फलितमाह*एवं चेति ॥ ६३४ ॥ हेत्वभावं स्पष्टयति *षष्ठीति । रूढिः अनादिव्यवहारसिद्धसम्बन्धविशेषः । गोमान्नीलोत्पलं पाचको घटः आकाश इत्यादिशब्दानां तत्तदर्थप्रवृत्तौ क्रमेण षष्ठ्यादयो हेतवः तेऽसङ्ग आत्मनि न सम्भवन्तीति न निर्विशेषस्य वाच्यतेत्यर्थः ॥६३५॥ किं तर्ह्यात्मपदस्य वाच्यमात्मतत्त्वस्य लक्षणाद्वारमित्याशङ्क्य पूर्वोक्तं स्मारयति*आप्नोतीत्यादिना ॥ ६३६ ॥

तैर्द्वारैरात्मनस्तत्त्वं यथावदुपलभ्यते ॥
तदेतद्वागगम्यत्वमितिशब्देन सूत्रितम् ॥ ६३७ ॥
मनोऽपि दृश्यविषयं न दृशं मन्तुमर्हति ॥
दृशा मनो दृश्यतेऽतस्तेन दृग् दृश्यते कथम् ॥६३८॥
मनुते यन्न मनसा येन त्वाहुर्मनो मतम् ॥
ब्रह्म विद्धि तदेव त्वमित्युवाचापरा श्रुतिः ॥ ६३९ ॥
ब्रह्म मन्तुं प्रवृत्तं सन्मनो ऽप्राप्य निवर्तते ॥
वेदनं चामतत्वं च द्वयं तेनोपपद्यते ॥ ६४० ॥
वेदान्तोत्थमनोवृत्त्या ब्रह्मविद्याभिधानया ॥
विद्धीत्यनेन यत्प्रोक्तं वेदनं तत्प्रसिद्ध्यति ॥ ६४१ ॥
यदि मन्तव्यताधर्मो ब्रह्मणि स्यात्तदा मनः ॥
ब्रह्माप्नोत्येष न त्वस्ति तस्माद्ब्रह्मामतं च तत् ॥६४२
यथा वाच्यत्वलक्ष्यत्वे विना वाग्ब्रह्म बोधयेत् ॥

---

निर्विशेषस्य वागगम्यत्वमुक्तं निगमयति*तदिति ॥ ६३७ ॥ मनोऽगम्यत्वमाह*मन इति । स्वभावतो दृश्यविषयत्वान्म-नसो दृग्गोचरतेत्युक्त्वा दृश्यत्वाच्च रूपादिवन्न दृग्विषयते-त्याह*दृशेति ॥ ६३८ ॥ उक्तेऽर्थे श्रुतिमाह*मनुत इति॥६३९॥ ब्रह्म विद्धीति ब्रह्मणो वेदनविषयत्वोक्तेर्न मनुत इत्यमतत्वो-क्तिरयुक्तेति, नेत्याह*ब्रह्मेति ॥ ६४० ॥ उपपद्यत इत्युक्तं व्यनक्ति* वेदान्तेति । न मनुत इति ब्रह्मणि मन्तव्यत्वधर्मो वास्तवो निषिध्यतेऽतो न वृत्तिविषयत्वविरोध इति भावः ॥ ६४१ ॥ ६४२ ॥ ननु सप्रकारकधिय एवाज्ञाननिवर्त्तकत्वात्कथं निष्प्रकारकधिया तन्निवृत्तिरित्याशङ्क्यान्यत्र तथा दृष्टत्वेऽपि श्रुतिवशान्निर्धर्मकधियोऽपि तन्निवर्त्तकत्वमविरुद्धमिति स-

मन्तव्यत्वं विना तद्वदज्ञानं तु निरस्यति ॥ ६४३ ॥
अन्यत्रैव मनोवाचौ व्याप्रियेते यथायथम् ॥
निर्धर्मकं तु ब्रह्मातो न वाङ्मनसगम्यता ॥ ६४४ ॥
एतत्सर्वं द्योतयितुमितिशब्दमसूत्रयत् ॥
व्यावृत्तिरेवकारेण व्याकृताव्याकृतात्मनोः ॥ ६४५ ॥
विदिताविदिताभ्यां तदन्यदेवेति शास्त्रगीः ॥
व्याकृताव्याकृतात्मभ्यां तत्त्वं व्यावर्तयत्यसौ॥६४६॥
न व्याकृताव्याकृतयोः सम्भवेत्तत्त्वरूपता ॥
मृषात्वमेवानात्मत्वाद्विचारे शिष्यते तयोः ॥६४७॥
आत्मनो भिद्यतेऽनात्मा यदि वा नैव भिद्यते ॥
भिन्नत्वे निःस्वरूपस्य नैव सिद्धिः खपुष्पवत्॥६४८॥
स्वरूपमात्मशब्दोक्तं ततो यदि विभिद्यते ॥
निःस्वरूपः कथं न स्यादभेदे त्वात्ममात्रता ॥६४९॥
अनात्मा सत्स्वरूपत्वमिच्छंश्चेल्लीन आत्मनि ॥

---

ष्टान्तमाह*यथेति। अतः, तस्येति शेषः ॥६४३॥६४४॥ इतिश-
ब्दार्थमुपसंहरति*एतदिति । अवधारणपदस्यार्थमाह*व्यावृत्ति
रेति ॥ ६४५ ॥ अकार्यकारणतत्त्वमित्यत्र श्रुत्यन्तरं संवा-
दयति*विदितेति । उक्तमेव व्यनक्ति*व्याकृतेति। असौ—एव-
कारः ॥ ६४६ ॥ उपपन्नं चैतदित्याह *नेति । जडाजडयोरै-
क्यायोगादिति भावः । तयोरेकत्वाभावे फलितमाह *मृषात्वमि
ते ॥ ६४७ ॥ विचारमेव दर्शयति *आत्मन इति ॥ ६४८ ॥
जडस्यात्मभिन्नत्वेऽपि कथं निःस्वरूपत्वमित्याशङ्क्यात्मस्वरूप-
शब्दयोः पर्यायत्वादित्याह*स्वरूपमिति । न भिद्यते इति पक्षं
दूषयति*अभेदेति ॥६४९॥ तदेव व्यनक्ति*अनात्मेति। *अस्य

तदात्मनाऽस्य जग्धत्वात्त्वनात्मा सिध्यतां कथम्६५
आत्मन्यन्तर्भवन्नेष सिद्ध्यतीति मतं यदि ॥
कथं विरुद्धयोरात्मानात्मनोः सहवासिता ॥ ६५१ ॥
यद्यनात्मैव शिष्येत सर्वं शून्यं भवेत्तदा ॥
आत्मैकशेषेऽनात्मा ऽयं भवेद्दत्तजलाञ्जलिः ॥६५२॥
आत्मैषोऽनात्मतां नैव सहते तं परित्यजेत् ॥
स्वयं सेद्धुमशक्तोऽयमनात्माऽतो मृषा भवेत् ॥६५३
शक्नोति सर्वः संसेद्धुं स्वरूपमवलम्ब्य हि ॥
यः स्वरूपेऽपि निर्भाग्यः कथं सोऽन्यत्र सिद्ध्यति॥६५४
व्यक्ताव्यक्तविभागोऽतः सिद्ध्येदात्मन्यतद्वति ॥
अहोरात्रविभागोऽयं भानौ तद्रहिते यथा ॥ ६५५ ॥

---

जग्धत्वादिति । आत्ममात्रतया परिशिष्टत्वादित्यर्थः ॥६५०॥ आत्मतादात्म्यादनात्मसिद्धिं शङ्कते*आत्मनीति । किं भिन्नयोस्तादात्म्यमभिन्नयोर्वा । नाद्यः, अश्वमहिषयोरिव तदयोगादित्याह*कथमिति ॥ ६५१ ॥ द्वितीये आत्मनो ऽनात्मन्यन्तर्भावो वैपरीत्यं वा ?, नोभयथाऽपीत्याह *यदीति । द्वितीयं निराह । आत्मेति ॥६५२॥६५३॥ स्वयं सेद्धुमशक्त इत्येतद्व्याचष्टे *शक्नोतीति । यः स्वरूपभागशून्यः स खपुष्पवन्न सिद्ध्यतीत्यर्थः ॥६५४॥कथं तर्हि कार्यकारणविभागः इत्याशङ्क्याज्ञानकल्पित एवेति दृष्टान्तेनाह*व्यक्तेति । यथाऽऽदित्ये प्रकाशैकस्वभावे दर्शनादर्शनाभ्यामहोरात्रविभागस्तद्धीने कल्प्यते एवं कार्यकारणशून्ये चिति तद्विभाग आविद्यक इत्यर्थः॥६५५॥ आत्मानात्मविभागवत्कार्यकारणविभागः सत्योऽस्त्विति चेत्, न दृष्टान्तासम्मतेरित्याह*आत्मेति । आत्मास्पर्शित्वे दृश्यत्वं हे

आत्मानात्मविभागोऽपि नायमात्मस्पृगिष्यते ॥
अज्ञातात्मैकसाक्षित्वादज्ञानोत्थं न वस्तुगम् ॥६५६॥
तस्मान्नानात्मनोऽस्त्यात्मा नाप्यनात्माऽऽत्मनः स्वतः॥
आत्मनस्तु स्वतःसिद्धिर्भ्रान्तेः सिद्धिरनात्मनः॥६५७॥
श्रुतिगुर्वाद्यनात्मानमपेक्ष्यात्मा प्रसिद्ध्यति ॥
इति चेत् तदपेक्षाऽपि न स्वरूपस्य सिद्ध्यति ॥ ६५८ ॥
गुरुशास्त्रादयो भ्रान्तिं वारयन्त्येव केवलम् ॥
न त्वात्मानं साधयन्ति स्वयं तेनात्मवत्त्वतः ॥ ६५९ ॥
गुर्वादयो हि सात्मान आत्मनैव भवन्ति हि ॥
विनाऽऽत्मानं निःस्वरूपाः कथं ते साधयन्ति तम्॥६६०॥
साध्यसाधनभावस्ते यदीष्टस्तर्ह्यनात्मनः ॥
प्रापय्य सात्मतामात्मा साधयेदिति युज्यते ॥६६१॥

---

तुमाह*अज्ञातेति। आत्मसाक्षिकत्वादिति यावत्॥६५६॥अतस्तयोः परस्परसम्बन्धोऽपि वस्तुतो नास्तीत्याह *तस्मादिति । कथं तर्हि जडभानमित्याशङ्क्य स्वप्रकाशात्मना कल्पितसम्बन्धादित्याह *आत्मन इति ॥ ६५७ ॥ अनात्माधीनसिद्धिकत्वादात्मनः स्वतःसिद्धत्वमसिद्धमिति शङ्कित्वा परिहरति *श्रुतीत्यादिना ॥ ६५८ ॥ गुर्वादीनामात्मासाधकत्वे हेतुमाह *तेनात्मवत्त्वत इति । आत्मना स्वस्वरूपत्वादित्यर्थः ॥६५९॥ उक्तमेव स्पष्टयति *गुर्वादय इति ॥ ६६० ॥ तर्हि तेषामुपलब्धिसाधनत्वं तस्यास्तत्साध्यत्वं वा कथमित्याशङ्क्य आत्मैव तान् स्वसत्तया सत्तावतः कृत्वा साध्यसाधनभावयोग्यान् करोतीत्याह *साध्येति ॥ ६६१ ॥ आत्मनस्तु स्वतः

बुद्ध्यादेर्विषयान्तस्य स्वसामर्थ्यादसिध्यतः ॥
आत्मना सह सम्बन्ध आत्मात्मीयत्वलक्षणः॥६६२॥
अबाध्यत्वात्स्वरूपत्वाद्बाध्येनानात्मना सह ॥
अव्यावृत्ताननुगतं सङ्गतं रज्जुसर्पवत् ॥ ६६३ ॥
व्याकृताव्याकृते इत्थं कल्पिते हि विचारतः ॥
एते दारयितुं सूत्रे एवकारमसूत्रयत् ॥ ६६४ ॥
उपेति सामीप्यवाची तन्निष्ठा प्रत्यगात्मनि ॥
कार्यकारणरूपाभ्यां प्रत्यङ् नेदीय ईक्ष्यते ॥ ६६५ ॥
व्याकृताव्याकृतात्मभ्यां भ्रान्तः प्रत्यङ् विभिद्यते ॥
प्रत्यक्तत्त्वधिया हत्वा तावुपैत्यात्मतन्त्रताम् ॥६६६॥
बोधादूर्ध्वं यथा प्रत्यग्ब्रह्मणोरेकता तथा ॥
पुराऽपि ब्रह्म, सामीप्यं तेन विश्रान्तमात्मनि॥६६७॥

---

सिद्धिरित्यादिनाऽऽत्मानात्मनोः कल्पिततादात्म्यसम्बन्ध इति सङ्ग्रहेणोक्तं प्रपञ्चयति *बुद्ध्यादेरिति । *स्वसामर्थ्यादिति । जडस्य प्रकाशनशक्तिविधुरत्वादिति भावः ॥ ६६२ ॥ अननुगतम्, आत्मतत्त्वमिति शेषः । रज्जुसर्पेणेवेत्यर्थः ॥ ६६३ ॥ उपसंहरति *व्याकृतेति ॥ ६६४ ॥ उपेत्युपसर्गस्य वाच्यार्थमाह *उपेतीति । तस्य लक्ष्यार्थमाह *तदिति । सामीप्यं प्रतीचि पर्यवसितमित्यर्थः। तत्र हेतुः *कार्येति । प्रतीचो नेदीयस्त्वमत्यन्तसन्निकृष्टत्वम् । तत्र मानमाह *ईक्ष्यत इति॥६६५॥ कार्यकारणाभ्यां पृथक्करणात्प्रतीचः सद्वयत्वमाशङ्क्याह *व्याकृतेति । भ्रान्तः अज्ञः । उपैति प्राप्नोति ॥६६६॥ सामीप्यं न प्रतीचि पर्यवस्यति, तस्य ब्रह्माभेदात्पूर्वं जीवसाक्षिब्रह्मण एवातिसन्निहितत्वादिति, तत्राह *बोधादिति । ब्रह्म प्रत्यगेवेति शेषः । उपसर्गार्थमुपसंहरति *सामीप्यमिति ॥६६७॥ जीवस्य

वाक्यं तत्त्वमसीत्यादि प्रसिद्धं निखिलागमे ॥
आसीतेति तुशब्देन कूटस्थत्वमसूत्रयत् ॥ ६६८ ॥
व्युत्थाय कारणात्कार्यात्तत्त्वज्ञानवर्त्मना ॥
उपेत्य कूटस्थमजमासीतापरिणामवान् ॥ ६६९ ॥
मातृत्वकञ्चुको यद्वदात्माऽनात्मानमीक्षते ॥
दृष्टिमात्रैकरूपत्वान्न तथाऽऽत्मानमीक्षते ॥ ६७० ॥
कर्तृत्वप्रतिषेधार्थं द्रष्टुर्दृष्टेरितिश्रुतिः ॥
दृष्टिरेव तु यो द्रष्टेत्याह दृष्टिविशेषणम् ॥ ६७१ ॥
इत्यात्मसूत्रवाक्येऽस्मिन्पदार्थः प्रविवेचितः ॥
वाक्यार्थोऽप्यत्र निष्पन्नः सङ्क्षेपेण प्रदर्श्यते ॥ ६७२ ॥
वाच्यमन्तव्यताहीनो व्यक्ताव्यक्तविलक्षणः ॥
अभिन्न आत्मा कूटस्थ इति वाक्यार्थ इष्यते ॥ ६७३ ॥

---

सर्वदा ब्रह्मरूपत्वे मानमाह *वाक्यमिति । आसीतेत्यस्यार्थमाह *आसीतेति । आसनादिव्यवहारव्यावृत्त्यर्थं तुशब्दः शब्देनेत्यनेन सम्बध्यते ॥ ६६८ ॥ उक्तं विवृणोति *व्युत्थायेति । कार्यकारणस्वरूपभूतप्रत्यग्याथात्म्यधिया ताभ्यां व्युत्थाय ते शिथिलीकृत्याऽकार्यकारणमात्मानमुपेत्याविकारः सन्नासीतेत्यर्थः ॥ ६६९॥ आत्मनो निर्विकारत्वमसिद्धं मुक्तावपि स्वविषयज्ञानहेतुत्वात् अन्यथा स्वस्यासिद्धिरत आह *मातृत्वकञ्चुक इति । मातृत्वोपहित इत्यर्थः ॥ ६७० ॥ अनुपहितस्य द्रष्टृत्वाभावे मानमाह * कर्तृत्वेति । न हि द्रष्टुरित्यादिश्रुतेर्यो द्रष्टा स दृष्टिरेवेति समानाधिकरणषष्ठ्या दृष्टिर्द्रष्टुर्विशेषणं दर्शनकर्तृत्वनिषेधार्थमाहेति योजना । न चात्मासिद्धिः, स्वमहिम्नैव तत्सिद्धेरिति भावः ॥ ६७१ ॥ ६७२ ॥ ६७३ ॥ वाङ्मनसा-

व्याकृताव्याकृताभ्यां तद्वस्तुतत्त्वं तिरोहितम् ॥
इति यच्छङ्कितं तन्न स्वरूपस्यातिरोहितेः ॥६७४॥
स्वस्वरूपं तिरोधातुं नहि केनापि शक्यते ॥
विस्फार्यतामिहाक्षाणि किमक्षैरपराध्यते ॥ ६७५ ॥
आपादयेयुः शब्दादीन्यद्यक्षाणि तथापि ते ॥
का हानिस्तस्य शब्दादेरेव तत्त्वं विबुध्यताम्॥६७६॥
तैः शब्दादितया भाति तत्त्वरूपतया नतु ॥
इति चेदत एवैतद्वेदवाक्येन बुध्यताम् ॥ ६७७ ॥
न परोक्षत्वमाशङ्क्यं स्वस्वरूपत्वहेतुतः ॥
शब्दादितत्त्वं यद्बोद्धुः स्वरूपं तन्न चेतरत् ॥ ६७८ ॥
एकस्याप्यत्र चित्तस्य सहकारिविभेदतः ॥

---

तीतः प्रपञ्चविलक्षण एकरस आत्मा वाक्यगम्यश्चेत्तर्ह्यनेन पूर्वोक्तशङ्कायाः कथं परिहार इत्याशङ्क्य तत्प्रकारं वक्तुं शङ्कामनुवदति *व्याकृतेति । जाग्रदादौ चिन्मात्रं तिरोहितं तस्य ब्रह्मत्वं वा ? नाद्य इत्याह *तन्नेति ॥ ६७४ ॥ यदुक्तं विस्फारिताक्षो जानातीत्यादिना जागरादौ तत्त्वविरुद्धशब्दादिज्ञानान्न तत्त्वबोध इति, तत्राह *विस्फार्यतामिति ॥ ६७५ ॥ *तत्त्वं विबुध्यतामिति ।शब्दः सन्निति सद्रूपात्मनोऽपि सहैव प्रतीतेरित्यर्थः ॥ ६७६ ॥ द्वितीयमनूद्य प्रत्याह *तैरिति ॥ ६७७ ॥ ब्रह्मणः परोक्षत्वात्कथं शब्दादिसत्ताया ब्रह्मस्वरूपत्वमित्याशङ्क्याह *नेति ॥ ६७८ ॥ नन्वेवमपि शब्दाद्याकारेण परिणतमनसः कथं तत्सत्तायां ब्रह्मधीहेतुत्वम्, एकस्योभयाकारत्वविरोधात्तत्राह *एकस्येति । अक्षादिसहकृतं मनः शब्दादि गृहीत्वाऽनन्तरक्षणे तत्सत्तायां ब्रह्मत्वं श्रुत्या निश्चिनोतीत्यर्थः

क्रमेण ग्रहणं तत्त्वे शब्दादौ च कुतो नहि ॥ ६७९ ॥
इति शङ्कोत्तरं प्रोक्तमेतत्सूत्रेण सूचितम् ॥
स्वरूपवाच्यात्मशब्दादतिरोधानभासनात् ॥ ६८० ॥
यद्वोपासीतेतिशब्दो न कूटस्थं ब्रवीत्ययम् ॥
किन्तु जानातिधात्वर्थं विवक्षित्वा प्रयुज्यते ॥६८१॥
ततो वाक्यार्थ एवं स्यादात्मशब्दोपलक्षितम् ॥
वस्त्वित्थेव विजानीयादुपेक्ष्य प्राणनादिकम् ॥६८२॥
रसगन्धादियुक्तेऽपि द्रव्ये दृष्ट्या विविच्यते ॥
रूपमेव यथा तद्वद् बुद्ध्या तत्त्वं विविच्यताम् ॥६८३॥
एवं सत्युक्तशङ्कायाः साक्षादुक्तमिहोत्तरम् ॥
व्याकृते सूक्ष्ममनसा तुरीयं बुध्यतामिति ॥ ६८४ ॥
इति सूत्रस्य तात्पर्यं यथावत्प्रतिपादितम् ॥
अथ पक्षान्निराकुर्वे वाक्येऽस्मिन्प्रतिवादिनाम्॥६८५॥
उपासीतेति वचनं श्रुत्वा केचिदुपासनम् ॥

---

। ६७९ ॥ वाक्यार्थमुपसंहरति *इतीति । अस्मिन्सूत्रे केन
देन तत्सूचितं तत्राह *स्वरूपेति। तत्र हेतुः *अतिरोधानेति।
वरूपस्येत्यनुषङ्गः ॥ ६८० ॥ अथात्मपदेनैवालं तावता शङ्का-
याः परिहारात्किमवशिष्टसूत्रस्थपदेनेत्यरुच्या पक्षान्तरमाह
*यद्वेति ॥ ६८१ ॥ उपास्तेर्ज्ञानार्थत्वविवक्षायां वाक्यार्थनिष्प-
त्तिप्रकारं दर्शयति *तत इति। आत्मशब्देन लक्षणया प्रति-
पादितं यदखण्डैकरसं वस्तु तदेव तत्त्वं, न पूर्वोक्तप्राणनादीति
विविच्य जानीयादित्यर्थः ॥ ६८२ ॥ अनात्मसहितमपि तत्त्वं
सूक्ष्मबुद्ध्या विवेक्तुं शक्यत इति दृष्टान्तेनाह *रसेति ॥६८३॥
व्याकृते जाग्रदादौ॥६८४॥६८५॥चिन्तात्रैविध्यमेवाह*किमिति

विधीयत इति प्राहुश्चिन्ता तत्र त्रिधा मता ॥६८६॥
किमुपास्यं किं विधेयं को विधिश्चेति सा त्रिधा ॥
आत्मोपास्योऽथवाऽनात्मेत्युपास्यस्यात्र संशयः॥६८७
इतिशब्दो विरूपत्वं निषेधश्चेति हेतवः ॥
अनात्मन उपास्यत्वं साधयन्ति प्रियादिवत् ॥६८८॥
प्रियमित्येवमित्यत्र प्रियदृष्ट्या प्रियेतरः ॥
उपास्यते यथा प्राणस्तथाऽनात्माऽऽत्मदृष्टितः॥६८९॥
इतिशब्दशिरस्कत्वं प्रियवाक्ये यथा श्रुतम् ॥
आत्मेत्येवेति वाक्येऽपि तथैव श्रूयते स्फुटम् ॥६९०॥
आत्मानमेव लोकं त्वित्यात्मोपास्तिर्द्वितीयया ॥
श्रुताऽन्यत्रेह न तथा विरूपत्वमिदं मतम् ॥ ६९१ ॥
तं न पश्यन्तीति वाक्ये निषिद्धा प्रकृतात्मदृक् ॥
अनात्माऽत उपास्यः स्यादिति चेन्नैवमिष्यते॥६९२॥
आत्मोपासनमेवेदं वाक्यशेषावलोकने ॥

---

॥६८६॥६८७॥ आत्मेत्येवोपासीतेत्यत्रात्मशब्दादात्मा उपास्यः
तस्येतिशब्दशिरस्कत्वादनात्मा वेत्युपास्यसंशयं प्रदर्श्य तत्र पूर्व
पक्षमाह *इतीति ॥६८८॥ प्रियादिवदित्युक्तं व्यनक्ति *प्रिय
मित्यादिना । यथा प्रियमित्येतदुपासीतेत्यत्रानात्मत्वेनाप्रिये
ऽपि प्राणे प्रियदृष्टिर्विधीयते तद्वदत्रात्मदृष्टिर्विधीयत इत्यर्थः
॥६८९॥६९०॥वैरूप्यं प्रकटयति*आत्मानमिति । आत्मन उ
पास्यत्वे तद्वदत्रापि द्वितीया स्यादिति भावः ॥ ६९१ ॥ निषे
स्फुटयति *तन्नेति ॥ ६९२ ॥ अनन्यथासिद्धवाक्यशेषबला
दात्मैवोपास्य इति सिद्धान्तयति * आत्मेति । तदेतत्पदनीय
सर्वस्मादन्तरमात्मानमेव प्रियमुपासीतेति वाक्यशेषस्यानात्म

पदनीयान्तरतराप्रियात्मोपासनोक्तितः ॥ ६९३ ॥
अवाङ्मनसगम्यत्वमितिशब्देन वर्णितम ॥
वाक्यशेषोऽयमात्मानमेवेति न पृथग्वचः ॥ ६९४ ॥
निषेधोऽकृत्स्नविषयो ननु कृत्स्नात्मगोचरः ॥
तस्मादुपास्य आत्मा स्याद्विधेयं चिन्त्यतेऽधुना॥६९५॥
शाब्दज्ञानं विधेयं किं निरोधो वाऽथ सन्ततिः ॥
इति त्रिधा संशये सत्याद्यः पक्षोऽभिधीयते ॥६९६॥
विद्युपास्त्योरिहैकार्थ्यात्क्रियात्वात्त्र्यंशसम्भवात् ॥
शेषित्वान्मुक्तिहेतुत्वाच्छाब्दज्ञानं विधीयते ॥६९७॥
यद्यप्युपास्तिरावृत्तिस्तथाऽप्यत्र तु वेदनम् ॥
भवेद्विद्याप्रकरणात्ततो ज्ञानविधिर्मतः ॥ ६९८ ॥

---

रत्वेन नेतुमशक्यत्वादिति भावः ॥ ६९३ ॥ अनात्मन
पास्यत्वे उक्तहेतूनन्यथयति *अवागित्यादिना । *न पृथ-
गिति । तथा च न वैरूप्यमिति भावः ॥ ६९४ ॥ ६९५ ॥
नरोधो, मनस इति शेषः । सन्ततिर्ज्ञानसन्तानम् । *आद्य
ति । शाब्दधीर्विधेयेति प्रथमः पूर्वपक्ष उपपाद्यत इत्यर्थः॥६९६॥
त्र ज्ञानवाचकपदाभावात्क्रियाविलक्षणत्वेन ज्ञानस्य विध्ययो-
त्वाद्विध्यपेक्षितांशत्रयाभावाच्च न धीविधिसम्भव इत्याशङ्क्य
वेत्रासिद्धिमाह *विद्युपास्त्योरिति । इह विद्याप्रकरणे ।
ानोपासनशब्दयोरिहैकार्थत्वादित्यर्थः । अपि च विध्यभावे
दान्तानामानर्थक्यप्रसङ्गात्सिद्धार्थवाक्यशेषित्वेन धीविधिरे-
ष्य इत्याह *शेषित्वादिति । यागादिवत्पुमर्थहेतुत्वाच्च ज्ञानं
धेयमित्याह *मुक्तीति ॥ ६९७ ॥ आद्यहेतुं विवृणोति *य-
पीति ॥ ६९८ ॥ क्रियात्वादिति हेतुं व्याचष्टे*वपडिति

वषट्करिष्यंस्तां ध्यायेदिति ध्यानं यथा तथा ॥
क्रियैव मानसी विद्या तथाऽस्ति विधियोग्यता॥६९९
किं केन कथमित्यंशा आत्मचित्तशमादयः ॥
अतोऽत्र भावना त्र्यंशा शाब्दज्ञानेऽपि सम्भवेत्॥७००
ये तु सिद्धार्थवेदान्तास्ते शेषाः शेष्ययं विधिः ॥
अतः सिद्धार्थवेदान्तैर्वेदार्थत्वं विधेर्नहि ॥ ७०१ ॥
स्वातन्त्र्ये सिद्धवाक्यानां भवेदपुरुषार्थता ॥
अत्रोच्यते ऽननुष्ठानादकार्यत्वादकर्तृतः ॥
विध्यानन्त्यान्नैरपेक्ष्यादशक्तेर्नात्र धीविधिः ॥७०२॥
जीवब्रह्मैक्यविज्ञानं वाक्यश्रवणमात्रतः ॥
सिद्ध्यत्येवेत्यनुष्ठानं न तदर्थमपेक्षते ॥ ७०३ ॥
यथाऽग्निहोत्रयाथात्म्यविज्ञानव्यतिरेकतः ॥

---

॥ ६९९ ॥ तृतीयहेतुं विभजते*किमिति । आत्मनो मुक्तिरूपेण साध्यत्वमुपेत्य किमंशशब्दितफलांशत्वं द्रष्टव्यम् । भावनापेक्षितमंशत्रयं सम्भवत्येवातो भावनाख्यो विधिरप्यत्र सम्भवतीत्यर्थः ॥ ७०० ॥ शेषित्वादित्युक्तं हेतुं व्यनक्ति*ये त्विति । विधेः शेषित्वादेव विधेयधियः पुमर्थहेतुत्वमपि सिध्यतीत्याह*अत इति । वेदार्थत्वं पुमर्थहेतुत्वम् । विधेर्ज्ञाननियोगस्यैव मुक्तिहेतुत्वं, न सिद्धार्थवेदान्तैः, मुक्तिरिति शेषः॥७०१॥ कार्यानन्वितसिद्धवाक्यानामपुमर्थत्वं लौकिकवाक्येऽपि दृष्टमित्याह*स्वातन्त्र्य इति । विधिविधुरत्वं स्वातन्त्र्यम् । सप्तद्वीपा वसुमतीत्यादिवाक्यस्य प्रवृत्त्याद्यज्ञापकत्वेनापुमर्थत्वं दृष्टमिति भावः ॥ उक्तहेतूनामुत्तरत्र दूषणं वक्ष्यामीत्यभिप्रेत्यधीविध्यभावसाधकहेतून्सङ्गृह्णाति *अत्रेति ॥ ७०२ ॥ आद्यहेतुं विभजते *जीवेति द्वाभ्याम् । ज्ञानं न विधेयं स्वविषया-

तदनुष्ठानमस्त्येवं नात्मबोधेऽस्ति किञ्चन ॥ ७०४ ॥
मुमुक्षुपुरुषार्थस्य मोहमात्रान्तरायतः ॥
ज्ञानात्तन्मोहविध्वस्तौ किं वा कार्यं विधीयते॥७०५॥
यदुत्पत्त्यादियोग्यं सद्धेतुं कश्चिदपेक्षते ॥
तत्रानुष्ठानसाफल्यं नानुत्पाद्ये त्विमोक्षणे ॥७०६॥
सम्भावितात्मकर्तृत्वो ब्राह्मण्याद्यधिकारवान् ॥
विधिश्रुतेः प्रवर्त्तेत नतु कर्तृत्ववर्जितः ॥ ७०७ ॥
अपूर्वानपराबाह्यं ब्रह्मास्मीति विजानतः ॥
कर्तृत्वं नैव सम्भाव्यं तद्धेत्वज्ञानहानतः ॥ ७०८ ॥
आत्मनो ब्रह्मता सिद्धा ब्रह्मणोऽप्यात्मता स्वतः ॥
तत्त्वमस्यादिवाक्योत्थबोधाच्चेत्किमिलीहते ॥७०९॥
अन्तरेण विधिं वाक्यं श्रवणाद्यपि नेहते ॥

---

नुष्ठानं विना जायमानत्वात् व्यतिरेकेणाग्निहोत्रवदित्यर्थः॥७०४॥
अकार्यत्वादिति हेतुं विवृणोति *मुमुक्षिवति । ज्ञानस्य वि-
धेयत्वे तत्साध्यं फलं किञ्चिद्वक्तव्यम् । अज्ञाननिवृत्तेर्ज्ञानमात्र-
फलत्वाद्ब्रह्मात्मैक्यस्य नित्यसिद्धत्वान्नात्र विधेयक्रियाजन्यफ-
लमस्तीति न ज्ञाने विधिरित्यर्थः । कार्यं, साध्यमुद्दिश्येति शेषः
। ७०५ ॥ अत्र व्यतिरेकदृष्टान्तमाह *यदिति । ज्ञानं न वि-
धेयं साध्यफलविधुरत्वात् उत्पत्त्याप्तिविकृतिसंस्काराणामन्यत-
मफलकक्रियावदित्यर्थः ॥ ७०६ ॥ तृतीयहेतुं व्याचष्टे *सं-
भावितेति ॥ ७०७ ॥ विदुषः कर्तृत्वाभावे हेतुमाह *अपू-
र्वेति ॥ ७०८ ॥ विदुषो भिक्षाटनादिप्रवृत्तिवद्वैधी प्रवृत्तिरप्य-
स्त्वित्याशङ्क्य, तद्वदत्र दृष्टफलाभावान्नैवमित्याह *आत्मन
इति । चेच्छब्दो निश्चयार्थः ॥ ७०९ ॥ ज्ञानोत्पत्तिरेव ज्ञान-

इति ब्रुवाणं प्रब्रूयादनिष्टं श्रूयते कुतः ॥ ७१० ॥
अधिक्षेपं शृणोत्येव विनाऽपि विधिना पुमान् ॥
तत्त्वमस्यादिवाक्यानां श्रवणं न तथा कुतः ॥७११॥
वैदिकत्वाद्विध्यपेक्षा यदि तर्हि विधेरपि ॥
श्रवणे विध्यपेक्षायां विध्यानन्त्यं प्रसज्ज्यते ॥७१२॥
उत्पन्नस्यापि बोधस्य विध्यपेक्षामुदीरयन् ॥
किं वा प्रयोजनं ब्रूयात्तद्विचार्य प्रयत्नतः ॥ ७१३ ॥
प्रयोगार्थं बोधनार्थं मात्वार्थं मेयसिद्धये ॥
आत्मत्वायातिरोहित्यै निरुपाध्यनुभूतये ॥ ७१४ ॥
सम्भवार्थं तमोनुत्यै ज्ञानवृत्तिनिवृत्तये ॥
तमोहानिनिवृत्त्यै वा, सर्वथाऽपि न युज्यते ॥७१५॥
स्वरूपलाभमात्रेण हन्ति विद्या तमस्ततः ॥
नापेक्षते प्रयोगं तु लब्धरूपा कुठारवत् ॥ ७१६ ॥

---

विधिफलं यागाद्यनुष्ठानाय विध्यतिरेकेणाप्रवृत्तिवज्ज्ञानोत्पादकवाक्यश्रवणाय तं विना प्रवृत्त्ययोगादिति शङ्कते *अन्तरेणेति । शब्दस्य श्रवणमात्रे विध्यपेक्षा उत वैदिकशब्दश्रवणे ? नाद्यः, इत्याह *इतीति ॥७१०॥७११॥ द्वितीयमनूद्य चतुर्थहेतुं विवृण्वन्दूषयति *वैदिकत्वादिति ॥७१२॥ पञ्चमं हेतुं प्रपञ्चयति *उत्पन्नस्येत्यादिना ॥७१३॥७१४॥७१५॥ यथोत्पन्नोऽपि बोधः कुठाराद्यनुष्ठानं विना काष्ठादौ द्वैधीभावादिसिद्धये नालं; तथा ज्ञानमप्यननुष्ठितं न मोक्षाय पर्याप्तमिति तदनुष्ठानाय विधिरिति प्रथमकल्पं दृष्टान्तवैषम्येण दूषयति *स्वरूपेति । लब्धस्वरूपा विद्या फलाय कुठारवन्न व्यापारमपेक्षते किन्तूत्पद्यमानैव ब्रह्मावाप्तिहेतुरित्यर्थः ॥ ७१६ ॥ यथा रत्नज्ञानमुत्पन्नमपि

स्वप्रकाशात्मनस्तत्त्वे तमोनाशातिरेकतः ॥
बोधनं नैव सम्भाव्यं घटादौ तज्जडे भवेत् ॥ ७१७॥
नद्यास्तीरे फलानीति नृवचोऽन्यदपेक्षते ॥
प्रामाण्याय, तथा वेदवाक्यं नान्यदपेक्षते ॥ ७१८ ॥
प्रमाणमप्रमाणं च प्रमेयो निश्चितिस्तथा ॥
यत्सान्निध्यात्प्रसिध्यन्ति तत्सिद्धौ किमपेक्षते॥७१९॥
इदमेवमिदं नैवमिति बुद्धिरनात्मिका ॥
येनात्मवत्येष आत्मा स्वत एव न चान्यतः ॥७२०॥
जाग्रत्स्वप्नसुषुप्तेषु तद्भावाभावसाक्षिणः ॥

---

ादवान्तरविशेषज्ञानाय सामग्र्यन्तरमपेक्षते, एवमात्मधीरपि-
वेशेषज्ञानाय विधिमपेक्षते इति द्वितीयं पक्षं प्रतिक्षिपति *स्वप्र-
ाकाशेति । आत्मनो निःसामान्यविशेषत्वादिति भावः ॥७१७॥
ाथा पौरुषेयवाक्यजन्यज्ञानं प्रमात्वाय मूलप्रमाणमपेक्षते, एवं
ादान्तधीरपि तदर्थं विधिमपेक्षत इति तृतीयं निराह *नद्या-
ति । अपौरुषेयवाक्यस्य स्वतःप्रमाणत्वादिति भावः ॥ ७१८॥
ानभ्यासदशापन्नदूरस्थजलज्ञानं यथा स्वविषयसंशयादिनि-
ात्तयेऽन्यदपेक्षते तद्वदिति चतुर्थं प्रत्याह *प्रमाणमिति । प्रती-
ोऽतिसन्निहितत्वेन तत्र पुंसः संशयायोगादिति भावः ॥७१९॥
ाथा घटादिज्ञानं परमते स्वविषयसत्यत्वाय गुणजन्यत्वमपेक्षते,
ाद्वदिति पञ्चममपवदति *इदमिति । घटादि पृथुबुध्नोदराकार-
वादिमद्युक्तं न तथा पटादीति या बुद्धिः सा स्वतःसत्ताशून्या-
ापि येनात्मना सत्तावती लक्ष्यते । एषः स्वत एव सत्यस्वरूप
ात्यर्थः ॥ ७२० ॥ षष्ठेऽपीदं वाच्यं चिदंशस्थावरणनिवृत्तये
ानं विधिमपेक्षते उत आनन्दांशस्थावरणनिवृत्तये? नाद्यः,तत्रा-

नास्ति तस्य तिरोधानमन्यथा जगदन्धता ॥ ७२१ ॥
कत्रादिव्याप्तेः पूर्वमसंकीर्णमुपाधिभिः ॥
अविक्षिप्तमसंसुप्तं स्वानुभूत्यैव गम्यते ॥ ७२२ ॥
प्रमाणमप्रमाणं च प्रमाभासस्तथैव च ॥
कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥ ७२३ ॥
शैत्यापनोदने वह्निर्यथा नान्यदपेक्षते ॥
विरोधित्वात्तथा विद्या निरपेक्षा तमोहृतौ ॥ ७२४ ॥
या तमोघातिनी विद्यावृत्तिः सा स्वयमेव हि ॥
नश्यत्यविद्यया सार्द्धं हत्वा रोगमिवौषधम् ॥ ७२५
प्रत्यङ्मात्रावशेषो यः स तमोहानिरुच्यते ॥

---

वरणस्यैवाभावादित्याह *जाग्रदिति । द्वितीये दीपादिवदुत्पद्यमानमेव ज्ञानं तन्निवर्तयतीति भावः ॥ ७२१ ॥ अन्तःकरणाद्युपाधिनिवृत्तये विध्यपेक्षेति सप्तमपक्षेऽपि किं तन्निवृत्तिरनात्यन्तिकी आत्यन्तिकी वा विवक्षिता ? नाद्यः, सुप्त्यादौ तस्य स्वतःसिद्धत्वादित्याह *कत्रादीति । द्वितीये अज्ञाननिवृत्त्यैव तन्निवृत्तेर्नान्यापेक्षेति ध्येयम् ॥ ७२२ ॥ विपयासम्भावनानिवृत्त्यर्थं विधिमपेक्षते इत्यष्टमं निराचष्टे *प्रमाणमिति । प्रमाभासः संशयः । एतानि दृश्यत्वेन द्रष्टरि प्रमां कुर्वन्ति दृश्यस्य द्रष्टारमन्तरेणायोगात्तत्र नासम्भावनेत्यर्थः ॥ ७२३ ॥ नवमं प्रत्याख्याति *शैत्येति । शुक्त्यज्ञाननिवृत्तौ विध्यपेक्षाऽदृष्टेश्चेति भावः ॥ ७२४ ॥ अविद्यानिवर्तकं ज्ञानं स्वनाशाय विधिमपेक्षते इति दशमं निरस्यति *या तम इति ॥ ७२५ ॥ अविद्याध्वंसनिवृत्तये विध्यपेक्षेत्यन्त्यः पक्षोऽपि न साधुरित्याह *प्रत्यगिति । अविद्यानिवृत्तेरधिष्ठानमात्रत्वात्तस्य च नित्यत्वात्त-

अनश्वरी तमोहानिर्नात्रातो विध्यपेक्षिता ॥ ७२६ ॥
पश्येदात्मानमित्येष विधिरत्र निरर्थकः ॥
अशक्यत्वाद्वस्तुतन्त्रं नेच्छया कर्तुमीश्महे ॥ ७२७ ॥
दर्शनं वस्तुतन्त्रं स्यात्कर्तृतन्त्रं नहि क्वचित् ॥
कर्तृतन्त्रधियोपास्यं यत्स्यात्तद्ब्रह्म नैव हि ॥ ७२८ ॥
मनुते यं न मनसा मतं येन मनः सदा ॥
ब्रह्म विद्धि तदेव त्वं न त्विदं यदुपासते ॥ ७२९ ॥
इति श्रुत्याहिकया श्रुत्योपास्यस्य वारिता ॥
ब्रह्मता, साक्षिणस्त्वस्य ब्रह्मत्वं स्फुटमीरितम् ॥ ७३० ॥
हेतवः पूर्वपक्षस्य ये प्रोक्तास्तेषु सम्मतम् ॥

---

स्मिन्नपि पक्षे विध्यपेक्षा नेत्यर्थः ॥ ७२६ ॥ अशक्तेरित्युक्तं हेतुं व्याख्याति *पश्येदिति । अशक्यत्वमुपपादयति *वस्त्विति । वस्तुतन्त्रं यद्वस्तु तत् इच्छया कर्तुमकर्तुं वा न प्रभवामेत्यर्थः ॥ ७२७ ॥ *कर्तृतन्त्रमिति । अनिच्छतोऽपि दुर्गन्धाद्युपलम्भादिति भावः । तर्ह्युपास्तिरूपज्ञानस्य कर्तृतन्त्रत्वादेव विधेयत्वमित्याशङ्क्य ब्रह्मणोऽनुपास्यत्वान्नैवमिति आह *कर्तृतन्त्रेति ॥ ७२८ ॥ उक्तेऽर्थे मानमाह *मनुत इति ॥ ७२९ ॥ ब्रह्मणोऽनुपास्यत्वेऽपि साक्षिणि किमायातं ? तत्राह *साक्षिण इति । तत्त्वमादिवाक्यैरिति शेषः ॥ ७३० ॥ एवं शब्दादुत्पन्नब्रह्मात्मैक्यज्ञानस्य पुंव्यापारानपेक्षत्वाद्विधेयव्यापारसाध्यादर्शनादनुष्ठातुरभावाद्विध्यानन्त्याज्ज्ञानाधीनप्रयोजनस्य विध्यनपेक्षत्वादपुंतन्त्रत्वेन विधातुमशक्यत्वाच्च न तत्र विधिरित्युक्तम् । इदानीं ज्ञाने विधिरस्तीत्यत्र पूर्वोक्तहेतून् क्रमेण दूषयति *हेतव इति । *सम्मतमिति । तयोरेकार्थत्वे ह्युक्तहेतुभ्यो

विद्युपास्त्योरिहैकार्थ्यं क्रियात्वं नतु सम्मतम् ॥७३१॥
यागे यद्देवताध्यानं नृतन्त्रत्वात्क्रियाऽस्तु सा ॥
प्रमाणमेयतन्त्रत्वाद्धिर्यैवा स्यात्कथं क्रिया ॥७३२॥
सर्वाकाङ्क्षामूलहेतोरज्ञानस्यैव बाधनात् ॥
अंशत्रयमनाकाङ्क्षं कथं सा भावनोदियात् ॥ ७३३ ॥
स्वतन्त्रा ब्रह्म वेदान्ता बोधयित्वा विमुक्तिदाः ॥
अतः शाब्दज्ञानविधिर्न कथञ्चन युज्यते ॥ ७३४ ॥
न योगशास्त्रसंसिद्धो निरोधोऽपि विधीयते ॥
विमुक्तिसाधनत्वेन तस्यानधिगमाच्छ्रुतेः ॥ ७३५ ॥
अनुष्ठातुमशक्यश्च प्रत्यग्बोधं विना न सः ॥
प्रत्यग्ज्ञाने निरुध्यन्ते चित्ततद्वृत्तयोऽखिलाः ॥७३६॥
वस्तुतस्तु निरोधोऽस्तु मा वाऽस्त्वेतेन किं तव ॥
प्रत्यग्बोधमृते नान्यन्मुक्तेरस्तीह साधनम् ॥ ७३७ ॥
विधेयस्तर्हि सन्तान इति चेत्, तत्र को विधिः ॥
अपूर्वो नियमो वा स्यात्परिसङ्ख्याऽथवोच्यताम् ॥७३८॥

---

न ज्ञानविधिसम्भव इत्यर्थः । क्रियात्वादित्येतदसिद्ध्या दूषयति *क्रियात्वमिति ॥ ७३१ ॥ ७३२ ॥ त्र्यंशसंभवादित्युक्तं धुनीते *सर्वेति ॥ ७३३ ॥ शेषित्वं मुक्तिहेतुत्वं च सिद्धब्रह्मबोधिवाक्यानामप्यस्तीत्याह *स्वतन्त्रा इति । न च सिद्धबोधिवाक्यानामपुमर्थता; नायं सर्प इत्याप्तवाक्ये तद्दर्शनादिति भावः ॥ ७३४ ॥ चित्तनिरोधो विधेय इति द्वितीयं पक्षमनूद्य निराकरोति *न योगेत्यादिना ॥ तमेव विदित्वेत्यादिश्रुतेर्ज्ञानमेव मुक्तिहेतुः, श्रुतिविरोधे योगशास्त्रस्यान्यपरत्वादिति भावः ॥७३५॥७३६॥७३७॥ धीसन्ततिरूपा क्रिया विधीयते इति पक्षमनूद्य विकल्पयति *विधेय इति ॥ ७३८ ॥ अस्य विधेर-

अपूर्वोऽत्यन्तमप्राप्तौ नियमः पाक्षिके सति ॥
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्याविधीयते॥ ७३९ ॥
अत्र त्वन्त्यन्तमप्राप्तमात्मोपासनमन्यतः ॥
अपूर्वविधिरेवातो यथैतत्स्यात्तथोच्यते ॥ ७४० ॥
एकार्थोल्लेखिवृत्तीनामातादात्म्याभिमानतः ॥
आवर्तनं हि शब्दार्थः सर्वत्रोपासनश्रुतेः ॥ ७४१ ॥
विद्युपास्तेरिहैकत्वं यदि तर्हि विदेरपि ॥
अर्थ आवृत्तिरेवास्तु पूर्वब्राह्मणवाक्यवत् ॥ ७४२ ॥
पूर्वत्रैतत्साम वेदेत्येवं वेदेति शब्दतः ॥
उपासनं व्यवहृतं तथा श्रुत्यन्तरेष्वपि ॥ ७४३ ॥
विद्याप्रकरणं चात्र न विरुद्धमुपास्तितः ॥

---

[पू]र्वत्वं वक्तुं विधित्रयस्यापि लक्षणमाह *अपूर्व इति ॥७३९॥ *यथैतदिति । यथा ज्ञानसन्ततिविधेरपूर्वत्वं स्यात्तथा सा-[ध्]यत इत्यर्थः ॥ ७४० ॥ तत्साधनायोपासनशब्दार्थमाह *ए-[के]ति । विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरणम् [उ]पास्यसाक्षात्कारावसानं, सर्ववेदेषूपासीतेति श्रुतेः । श-[ब्द]ार्थः वाक्यार्थ इति यावत् । तथा चाप्तं तदेव विधीयत [इ]ति भावः ॥ ७४१ ॥ न स वेदेति पूर्ववाक्ये ज्ञानस्य प्र-[कृ]तत्वादुपासीतेत्यस्यापि समानार्थत्वादत्रावृत्तिविधिरनुपपन्न [इ]ति शङ्कते *विद्युपास्त्योरिति । ज्ञानस्य प्रकृतत्वमसिद्धं न स [वे]देत्यत्राप्यावृत्तेरभिधानाद्यत्स एवमेतत्साम वेदेत्यत्र वेदनश-[ब्द]स्यावृत्त्यर्थत्वेन प्रकृतत्वादित्याह *तर्हीति ॥७४२॥७४३॥ [न]नु वेदनशब्दस्यावृत्त्यर्थत्वे प्रकरणविरोधः स्यादिति, नेत्याह

अपरोक्षब्रह्मविद्याजन्मनः सुलभत्वतः ॥ ७४४ ॥
नहि सिद्धार्थवाक्योत्थज्ञानमात्रेण कश्चन ॥
ब्रह्मानुभवितुं शक्तस्तस्यावाक्यार्थरूपतः ॥ ७४५ ॥
नानापदार्थसंसृष्टरूपं वाक्यात्प्रतीयते ॥
ब्रह्मासंसृष्टरूपत्वान्न वाक्येनानुभूयते ॥ ७४६ ॥
न चावेदार्थता शङ्क्या वेदोक्तोपासनोत्थितात् ॥
साक्षात्काराद्ब्रह्म भाति तस्माद्वेदार्थतैव हि ॥ ७४७॥
देवो भूत्वा देवमेतीत्यादिश्रुत्यनुरोधतः ॥
साक्षात्कारं ध्यानजन्यमन्तरेण न मुच्यते ॥ ७४८॥
शब्दाद् ज्ञाने समुत्पन्ने आसाक्षात्कृतिभावना ॥
प्रत्ययावृत्तिरूपा या न प्राप्तैवाऽन्यमानतः ॥ ७४९ ॥
सिद्धार्थशब्दात्स्वाध्यायविधितो वाऽन्यतोऽथवा ॥
तत्प्राप्तिः शङ्क्यते तत्र सिद्धार्थो न विधायकः ॥७५०॥
अक्षरार्थज्ञानमात्रावसाय्यध्ययने विधिः ॥
न चान्यदत्र सम्भाव्यमप्राप्तोपासना ततः ॥ ७५१ ॥
अपूर्वविधिरेवातः स्मृतिसन्तानगोचरः ॥

---

*विद्येति ॥ ७४४ ॥ ७४५ ॥ ब्रह्मणो वाक्यार्थत्वाभावमाह *नानेति ॥ ७४६ ॥ तर्ह्यौपनिषदत्वविरोध इत्याशङ्क्योपनिषदर्थज्ञानजन्यसाक्षात्कारविषयत्वाद्ब्रह्मणस्तन्न विरुध्यते इत्याह *न चेति ॥ ७४७ ॥ ध्यानसाक्षात्कारस्य मुक्तिहेतुत्वे श्रुतिमप्यनुकूलयति *देवो भूत्वेति ॥ ७४८ ॥ ननु ज्ञानसन्ततिः प्राप्तत्वान्न विधेयेति, नेत्याह *शब्देति ॥७४९॥ अप्राप्तत्वमसिद्धमिति वदन्तं प्रति तत्प्राप्तिः केनेति विकल्प्य दूषयति *सिद्धार्थेत्यादि ॥ ७५० ॥ अक्षरग्रहणमर्थावबोधमात्रं वाऽव-

इति प्रथमपक्षो यस्तस्य दूषणमुच्यते ॥ ७५२ ॥
नापूर्वविधिरेष स्यात्प्राप्तत्वात् स्मृतिसन्ततेः ॥
अनुभूते हि विषये स्मृतिः प्राप्ता विधिं विना॥७५३॥
स्मर्यन्त एव पित्राद्याः श्राद्धाद्यर्थं तदा तदा ॥
अनुभूतो निजात्माऽयं कुतो न स्मर्यते वद ॥ ७५४ ॥
न शाब्दज्ञानमात्रेणानुभूतं ब्रह्म तद्भवेत् ॥
अवाक्यार्थात्मकत्वेनेत्येतदत्र न सङ्गतम् ॥ ७५५ ॥
अवाक्यार्थात्मकं ब्रह्मेत्येतद्वाक्येन गम्यते ॥
अन्येन वा,यदा वाक्यात्तदा वाक्यार्थता भवेत्॥७५६॥
अथान्येनानुभूतं तदवाक्यार्थात्मकं तदा ॥
तावतैव कृतार्थत्वाद् व्यर्थं ध्यानादिचेष्टितम् ॥७५७॥
ब्रह्म संसृष्टरूपं चेद्वाक्यादध्यवसीयते ॥
संसृष्टरूपं तन्नेति गीर्वाणैरपि दुर्लभम् ॥ ७५८ ॥
घटाकाशो महाकाश इति वाक्ये यथा तथा ॥
तत्त्वमस्यादिवाक्येषु कुतोऽखण्डार्थधीर्न ते ॥ ७५९ ॥
साक्षात्कारो ध्यानजन्य इत्युक्तं यत्तदप्यसत् ॥

---

सानं यस्य स तथोक्तः ॥ ७५१ ॥ ७५२ ॥ ७५३ ॥ ७५४ ॥ यदुक्तं शब्दाद्ब्रह्मानुभवितुमशक्यमिति तदनूद्य निराह *न शाब्दज्ञानेति॥७५५॥कथमसङ्गतमित्याशङ्क्य ब्रह्म वाक्यार्थरूपं नेति वदता न तज्ज्ञातमिति वक्तव्यम् । न ज्ञातं केनेति विकल्प्य दूषयति *अवाक्येत्यादिना ॥ ७५६ ॥ ७५७ ॥ वाक्यादेव परोक्षतया ज्ञाते ब्रह्मण्यापरोक्ष्यार्थं ध्यानादिकमर्थवदित्याशङ्क्य वाक्यस्य संसृष्टार्थबोधकत्वे ब्रह्मणोऽखण्डत्वमेव न सिद्ध्येदिति वाक्यस्यै[illegible] तद्बोधकत्वं वाच्यमित्याह *ब्रह्मेति ॥ ७५८ ॥ वाक्यस्या-

ध्यानं क्रिया न प्रमाणं कानुभूतिरमानतः ॥ ७६० ॥
यथा वस्तु तथा बुद्धिरनुभूतिरतो भवेत् ॥
भ्रान्तैव ध्यानजन्या धीर्मृतपुत्रापरोक्षवत् ॥ ७६१ ॥
किं च वाक्येन यद्बुद्धं तद्भ्रान्तं ते मते ततः ॥
तद्ध्यानं कोपयुज्येत स्रक्सर्पध्यानसाम्यतः ॥ ७६२ ॥
अथ सिद्धार्थवाक्येन ब्रह्मानुभव इष्यते ॥
अनुभूतिध्वस्तमोहः कुतः स्मृतिमपेक्षते ॥ ७६३ ॥
मानोत्थानुभवेनात्ममोहो यदि न नश्यति ॥
तर्ह्येष स्मृतिमात्रेण सर्वथा नैव नश्यति ॥ ७६४ ॥
अपि पाशुपतास्त्रेण विद्धश्चेन्न ममार यः ॥
स निष्फलेषुतुन्नाङ्गो नश्यतीत्यतिदुष्करम् ॥ ७६५ ॥

---

खण्डार्थबोधकत्वं दृष्टान्तेन साधयति *घटेति ॥ ७५९ ॥ ७६० ॥ मानाजन्यस्याप्रमात्वं दर्शयितुं प्रमालक्षणमाह *यथेति । अनुभूतिः प्रमा । ध्यानजन्यधीर्भ्रान्तिरेवेति सदृष्टान्तमाह *मृतेति ॥ ७६१ ॥ ध्यानजन्यधियोऽपि विषयाबाधात्प्रमात्वमाशङ्क्य दूषणान्तरमाह *किञ्चेति ॥ ७६२ ॥ यद्यपि तत्त्वमादिवाक्यमेवाखण्डार्थबोधकं तथापि तत्साक्षात्काराय तत्सन्ततिर्विधीयत इति शङ्कते *अथेति । यत्साक्षादित्यपरोक्षैकरसे ब्रह्मणि वाक्येनापि वस्तुवृत्तमनुसृत्य साक्षाद्बोधसम्भवादात्मनि स्मृतेरफलत्वान्न तत्सन्ततिर्विधेयेत्यभिमेत्याह *अनुभूतीति ॥ ७६३ ॥ ७६४ ॥ मानजन्यधिया मोहानिवृत्तावुक्तं बाधकं दृष्टान्तेन स्पष्टयति *अपीति । चेदित्यवधारणे । क्रियापदादुपरि सम्बध्यते । तुन्नत्वं पीडितत्वम् । निष्फलत्वं नैशित्यराहित्यम् ॥ ७६५ ॥ साक्षात्कारे जाते स्मृतेरफलत्वान्न सन्तति-

आत्मन्यवगते साक्षात्प्रमाणार्थसमाप्तितः ॥
किमन्यत्स्मृतिसन्तानात्प्रार्थ्यते भवता फलम् ॥७६६॥
भविष्यत्कालसम्बन्धि फलं स्यान्नहि नाकवत् ॥
धीजन्मन्येव तत्सिद्ध्येदग्निजन्मनि दाहवत् ॥ ७६७ ॥
किञ्चानुभव एवात्र नित्यं सन्निहितत्वतः ॥
सम्भवेत्सर्वदा तस्मान्न स्मृत्याऽस्ति प्रयोजनम् ॥७६८॥
आस्तां दूषणमालेयं स्मृतिर्वाऽनुभवोऽपि वा ॥
स्वतः प्राप्नोति नापूर्वविधिस्तेनात्र सन्ततेः ॥ ७६९ ॥
नन्वेवं तर्हि सन्ताने भवेन्नैयमिको विधिः ॥
आत्मोपासनमप्राप्तं पक्षे तेन नियम्यते ॥ ७७० ॥
अनुभूतेऽपि पित्रादौ नियमेन स्मृतिर्नहि ॥
दृष्टा, तथाऽऽत्मतत्त्वेऽपि नैरन्तर्येण तत्स्मृतिः ॥७७१॥
यद्यप्यव्यवधानेन स्मृतेर्विघ्नो न कश्चन ॥

---

विधेयेत्युक्तमेव प्रपञ्चयति *आत्मनीति ॥ ७६६ ॥ दृष्टफला-भावेऽप्यदृष्टफलाय विधिरित्याशङ्क्याह *भविष्यदिति । ना-कवदिति व्यतिरेकदृष्टान्तः । तत्र हेतुः *धीजन्मनीति । यथाऽग्निजन्मसमकालमेवैधसां भस्मीभावः, एवं ज्ञानोदयसमका-लमेव सर्वकामावाप्तिरूपकैवल्यसिद्धिरित्यर्थः ॥ ७६७ ॥ स-न्ततेरविधेयत्वे हेत्वन्तरमाह *किञ्चेति । ब्रह्मविदो विषयान्त-राभावेन प्रत्यग्बोधस्य सदा प्राप्तत्वात्स्मृतिसन्तानविधिर्व्य-र्थ इत्यर्थः ॥ ७६८ ॥ अपूर्वविधिनिराकरणमुपसंहरति *आ-स्तामिति ॥ ७६९ ॥ द्वितीयमुत्थापयति *नन्विति ॥ ७७० ॥ पाक्षिकप्राप्तिमाह *अनुभूत इति ॥ ७७१ ॥ विदुषो विषया-

तथाऽऽरब्धारब्धदोषेण बलाद्विस्मर्यते पुमान् ॥ ७७२ ॥
मोचकात्प्रबलैर्मुक्तो बाणस्तु न निवार्यते ॥
प्रवृत्तत्वात्तथाऽऽरब्धं कर्म ज्ञानान्न नश्यति ॥ ७७३ ॥
वाङ्मनःकायचेष्टानामभावे कर्मणः फलम् ॥
भोक्तुं न शक्यते तेन मनो विक्षिप्यते बलात् ॥ ७७४ ॥
विक्षिप्तचित्तः पुरुषस्तत्त्वं संस्मृतिवर्जितः ॥
अविद्वानिव संसारदुःखैरेषोऽभिभूयते ॥ ७७५ ॥
अविक्षेपे स्मृतिः प्राप्ता विक्षेपे न तु सा ततः ॥
पाक्षिक्यां स्मृतिसम्प्राप्तौ तत्सन्तानो नियम्यते ॥ ७७६ ॥
उपस्थितं यदा दुःखं तदा तस्योपशान्तये ॥
आनन्दात्मकमद्वैतं स्मरेद्ब्रह्म पुनः पुनः ॥ ७७७ ॥
इत्येवं मृदुचित्तानां मतं भाष्यकृतस्तथा ॥
अङ्गीकृत्य भरं चक्रुरपूर्वविधिवारणे ॥ ७७८ ॥
अद्यैव मृतिरायातु कल्पान्तानिचयेन वा ॥

---

न्तराभावादात्मबोधो नित्यं स्वतःप्राप्त एवेत्युक्तमनूद्य परिहरति *यद्यपीति ॥ ७७२ ॥ आरब्धं कर्मात्मज्ञानापेक्षया प्रबलमित्येतद् दृष्टान्तमुखेनाह *मोचकादिति ॥ ७७३ ॥ ॥७७४॥७७५॥७७६॥७७७॥ किमयं नियमविधिः सर्वनरसाधारण इत्याशङ्क्य नेति व्यवस्थामाह * इत्येवमिति । मृदुचित्तानाम्—अवशीकृतमानसानाम् । कथं तर्ह्यविशेषेण भाष्यकृन्नियमविधिमङ्गीचकारेत्याशङ्क्य तद्वचनस्यापूर्वविधिनिराकरणपरत्वान्न दोष इत्याह *अङ्गीकृत्येति । भरं चक्रुः यत्नं कृतवन्तः ॥ ७७८ ॥ वशीकृतचित्तानां त्वात्मधियो नित्यप्राप्तत्वान्न नैयमिकोऽपि विधिरित्याह *अद्यैवेत्यादिना । ननु

इत्यादिधीराचित्तानां नित्यप्राप्तिरथोच्यते ॥ ७७९ ॥
यत्साक्षादितिवाक्योत्थप्रत्यग्याथात्म्यलोहिना ॥
ज्ञानेन तमसो दाहान्नित्यप्राप्तैव तत्स्मृतिः ॥ ७८० ॥
देहादिभावनालिङ्गादहम्बुद्धेश्च यं पुरा ॥
सदेक्षते तमेवाद्य श्रुत्या ब्रह्मतयेक्षते ॥ ७८१ ॥

---

सर्वेषामपि विदुषामात्मनो नित्यप्राप्तिः किं न स्यादविशेषादविद्यानिवृत्तेरिति चेत्, अयं भावः—यस्तूपास्यदेवतासाक्षात्कारपर्यन्तं सगुणोपासनं विधाय विद्यायां प्रवृत्तः तस्य विचारेण ज्ञानोत्पत्तौ विक्षेपाभावादात्मधीर्नित्यप्राप्तैव। यः पुनरुपासनमकृत्वा श्रवणाद्यनुष्ठाय तत्त्वं निश्चिनोति तस्य चित्तवशीकरणाभावे विक्षेपसम्भवात्तं प्रति नियमविधिः। न च तत्त्वज्ञानेनाज्ञानस्य नष्टत्वाद्विधिवैयर्थ्यं, चित्तवशीकरणाभावे शास्त्रेण नश्येत्परमार्थरूपमित्यज्ञाने परमार्थत्वांशनाशेऽपि जन्महेत्वज्ञाननाशायोगात्। अन्यथा वेदान्तेषूपास्तिविधीनामैकाग्र्यद्वाराऽद्वितीयब्रह्मपरत्वं न स्यात् अतस्तेषां श्रुत्यन्तरप्रसिद्धप्रणवोच्चारणपूर्वकमप्रतिबद्धसाक्षात्काराय निरन्तरं निर्गुणब्रह्मभावनं कार्यम्। अत एवाधस्तनग्रन्थेषु विदुषो विधिर्नास्तीत्युक्त्वा पुनर्विद्वानज्ञवद्विधिमर्हति, ब्रह्मनिष्ठा विधीयत इत्याद्युक्तिर्न विरुध्यते। सर्वत्राधिकारिभेदेन व्यवस्थासम्भवादिति ॥ ७७९ ॥ ७८० ॥ किञ्च तत्त्वधियः पूर्वमप्यात्मानुभवो नित्यप्राप्त एवेत्याह *देहादीति। भावनाशब्दो ज्ञानपरः। देहः स्वातिरिक्तद्रष्टृकः दृश्यत्वादित्यनुमानेनाहमित्यध्यक्षेण च सदेक्षत इत्यर्थः। इयांस्तु विशेषः—यं पूर्वं कर्तृत्वेनापश्यत्तमेवाकर्तृत्वेन पश्यतीत्याह *तमेवेति ॥ ७८१ ॥ अ-

ततश्च प्राकृतो यद्वत्कर्त्रात्मानं सदा स्मरन् ॥
अस्ति विद्वांस्तथा ब्रह्म स्मरत्वेनं विधिं विना॥७८२॥
दुःखात्मनि चिदाभासे सत्यायातं किमात्मनि ॥
चिदाभासे भोजते स्यादारब्धचरितार्थता ॥ ७८३ ॥
नष्टो मोहस्त्वात्मतत्त्वे भोगं मन्येत न क्वचित् ॥
नहि नाम विनिद्रोऽपि सुप्तवत्स्वप्नमीक्षते ॥ ७८४ ॥
बलाद्विक्षिप्यते चित्तमित्यादि यदुदीरितम् ॥
अस्त्वेवैतत्तावताऽत्र नित्यप्राप्तिर्न वार्यते ॥ ७८५ ॥
विक्षिप्तमपि तच्चितमनात्मग्रहणोद्यतम् ॥
प्रत्यगर्थमनालिङ्ग्य न पराग्बोधनक्षमम् ॥ ७८६ ॥
आत्मानं सर्वदोपास्ते तत्प्रत्ययसमन्वयात् ॥
निःशेषानात्मबुद्धीनां यथैतत्स्यात्तथोच्यते ॥७८७॥
प्रत्यङ्मोहः सर्वदैव भास्वच्चैतन्यबिम्बितः ॥

---

नुभवात्स्मृतेरपि नित्यप्राप्तिमाह *तत इति। उक्तानुभवादित्यर्थः ॥ ७८२ ॥ आत्मनि स्मृत्यनुभवयोरन्यतरस्य नित्यप्राप्तत्वे प्रारब्धप्रापितभोगो न स्यादित्याशङ्क्याह *दुःखात्मनीति । दुःखभोक्तरीत्यर्थः ॥७८३॥७८४॥ चित्तविक्षेपे सत्यात्मस्मृत्यसम्भवान्न तस्य नित्यप्राप्तिरिति यदुक्तं तदनूद्य प्रत्याह *बलादिति ॥७८५॥७८६॥ उक्तमेव विशदयति *आत्मेति । तत्र हेतुः *तत्प्रत्ययेति । सर्वानात्मवृत्तीनामात्मचैतन्यव्याप्तत्वादित्यर्थः । उक्तहेतुं साधयितुं प्रतिजानीते *यथेति ॥ ७८७ ॥ प्रत्यगाश्रयमज्ञानं तावत्सदैवापरोक्षचैतन्यव्याप्तम् अतस्तत्कार्यवृत्तयोऽपि तद्वच्चैतन्यव्याप्ता एवेत्याह *प्रत्यगिति । द्वयो-

बुद्धितद्वृत्तयश्चैव तप्तायोविस्फुलिङ्गवत् ॥ ७८८ ॥
प्रागप्यनात्मसम्बन्धाज्जन्मप्रभृतिवृत्तयः ॥
आत्मना पूरिताः सत्यः सम्बद्धाः स्युरनात्मनि॥७८९॥
खपूर्ण एव सन्कुम्भो द्रव्यैर्नानाविधैर्युतम् ॥
वियोगं वा यथा गच्छेच्चैतन्येद्धास्तथा धियः ॥७९०॥
एवं सत्यर्थतः प्राप्ता सदात्मस्मृतिसन्ततिः ॥
विमूढस्यापि तुल्या चेदस्तु नः किं विनङ्क्ष्यति ॥७९१॥
यदि मोहाविनाशेन सत्यप्येषाऽतिनिष्फला ॥
विदुषस्तर्ह्यमूढस्य सफलेत्यभ्युपेयताम् ॥ ७९२ ॥
यः किं फलमिति प्रश्नो विधिपक्षेऽप्यसौ समः ॥
विधावदृष्टमिति चेदविधावपि तत्समम् ॥ ७९३ ॥

---

श्चैतन्यव्याप्तौ दृष्टान्तः *तप्ताय इति ॥ ७८८ ॥ उक्तमेव व्यनक्ति *प्रागिति ॥ ७८९ ॥ विषयसम्बन्धात्पूर्वं वृत्तीनां चैतन्यव्याप्तावपि नोर्ध्वं तद्व्याप्तिः विषयसम्बन्धेनैवानाकाङ्क्षत्वादित्याशङ्क्याह *खेति । यथा कुम्भो नभोव्याप्त एव दध्यादिभिः संयोगविभागावनुभवति, तथा बुद्धिवृत्तयोऽपि चिद्व्याप्ता एव विषयैः संयोगादि प्रतिपद्यन्ते । नहि कदाचिदपि चिदव्याप्तं किञ्चिदस्तीति भावः ॥ ७९० ॥ फलितमाह *एवमिति । यद्यपीयं स्मृतिर्मूढानामप्यस्ति तथापि चितिव्याप्ता वृत्तिरितिबुद्ध्यभावात्तेषां निष्फला, विदुषस्तु तद्धीसम्भवात्साफल्यमाह *विमूढस्येत्यादिना ॥७९१॥७९२॥ आत्मस्मृतेर्वस्तुस्वाभाव्याद्धर्मजनकत्वस्य सर्वैर्वक्तव्यत्वात्तत्फलचिन्ता न कार्येत्याह *यः किमित्यादिना ॥ ज्ञानसन्ततेर्विधेयत्वपक्षेऽपि साक्षात्कारानन्तरमात्मस्मृतिजन्यादृष्टस्य वैफल्यं तुल्यमिति भावः ॥७९३॥

प्रासङ्गिकनदीस्नानान्नादृष्टं नहि जन्यते ॥
अथ सिद्धब्रह्मचिन्ताऽप्येवं पुण्यं प्रदापयेत् ॥ ७९४ ॥
जन्महीनस्य किं पुण्यैरिति चोद्यं समं द्वयोः ॥
अनिर्वाच्या वस्तुशक्तिरिति तुल्यं तदुत्तरम् ॥७९५॥
देहात्मचिन्ता मूढानां नित्यप्राप्ता यथा तथा ॥
विदुषां ब्रह्मचिन्ताऽपि नातो नैयमिको विधिः॥७९६॥
नन्वेषा परिसङ्ख्या स्यादुभयत्र प्रसङ्गतः ॥
यथाऽऽत्मनि स्मृतिः प्राप्ता प्राप्ताऽनात्मनि सा तथा७९७
श्रुत्याऽनुभूतमद्वैतं द्वैतमक्षादिमानतः ॥
उभयोरविशेषेण प्राप्यते स्मृतिसन्ततिः ॥ ७९८ ॥
द्वैतस्मृतिनिवृत्त्यर्थमद्वैतस्मृतिसन्ततिः ॥
विधीयते, विधेर्द्वैतस्मृतिनिरोधः फलिष्यति ॥ ७९९ ॥
मैवं किं वास्तवद्वैतस्मृतिः प्राप्तोत बाधिता ॥
नाद्यो वेदान्तवाक्योत्थज्ञानेन द्वैतबाधनात् ॥८००॥
सम्यग्ज्ञानाग्निनिर्दग्धे प्रत्यङ्मोहे सबान्धवे ॥

---

७९४॥७९५॥ उक्तमर्थं दृष्टान्तमुखेनोपसंहरति *देहेति ॥७९६॥ तृतीयमुत्थापयति *नन्विति ॥ ७९७ ॥ उभयत्र स्मृतौ सामग्रीसद्भावं दर्शयति *श्रुत्येति । आत्मानात्मनोः स्मृतिप्राप्तिमभिधाय तत्र विधेयं तत्फलं चाह *द्वैतेति ॥७९८॥ विकल्पासहत्वान्नायं पक्षः साधुरिति दूषयति *मैवमिति॥७९९॥ब्रह्मधीबाधितद्वैते वास्तवधीर्नोदेत्येतत्स्पष्टयति *सम्यगिति । सकार्येमोहे नष्टेऽन्यत्रानात्मनि वस्तुत्वेन स्मृतिर्नोदेतीत्यर्थः ॥८००॥ ननु द्वैतज्ञानमेवाद्वैतज्ञानबाधकं किं न स्यादिति तत्राह *मानेति । अज्ञानं तत्कार्यं च मानापेक्षाया दुर्वारत्वात्तेन बाध्यं

मुक्त्वा ब्रह्मस्मृतिं नान्यद्वस्तुस्मृतिरुदेति हि ॥८०१॥
मानाननुविधानेन स्मृतिरन्या न बाधिका ॥
प्रमाणानुविधायिन्या तत्त्वस्मृत्या तु बाध्यते ॥८०२॥
लौकिकानुभवो बाध्यो वैदिको बाधको यथा ॥
तज्जन्ययोरपि स्मृत्योर्बाध्यबाधकता तथा ॥ ८०३ ॥
स्वास्थ्यास्वास्थ्यप्रदे यस्माद्ब्रह्मानात्मस्मृती ततः ॥
मुक्त्वाऽनात्मस्मृतिं ब्रह्मस्मृतिमेवाश्रयेत्ततः ॥८०४॥
ब्रह्मधीप्रचुरत्वेऽपि बाधितद्वैतधीः क्वचित् ॥
कदाचिज्जायते सैषा निरोद्धव्येत्यसङ्गतम् ॥ ८०५ ॥
जीवनार्थं द्वैतभानं निरोधे जीवनं कथम् ॥
अतो ऽशक्यतया नात्र परिसङ्ख्याविधिर्भवेत्॥८०६॥
तव श्रद्धाजडत्वं यत्तन्निवृत्त्यै प्रवर्त्तिता ॥
विधिचिन्ता, वस्तुतत्त्वस्थितिं संक्षेपतः शृणु ॥८०७॥

---

मानं पुनर्बलवत्त्वेन बाधकमिति रज्ज्वादिज्ञानेन निर्धारितं, तेन प्रमाजन्यसंस्कारजस्मृतेरपीतरस्मृतिबाधकत्वमिति भावः ॥८०१॥ ॥ ८०२ ॥ तत्रैव दृष्टान्तान्तरमाह *लौकिकेति । देहात्मबुद्धेस्तदतिरिक्तात्मज्ञानबाध्यत्वं सर्वसम्मतमिति भावः॥८०३॥अपि च ब्रह्मस्मृतिसन्ततिर्न विधेया तस्याः सुखविषयत्वेन तत्र स्वत एव प्रवृत्तिसम्भवादित्याह *स्वास्थ्येति ॥ ८०४ ॥ बाधितद्वैतस्मृतिनिवृत्त्यर्थं ब्रह्मधीसन्ततिर्विधेयेति द्वितीयं पक्षमनुभाष्य दूषयति *ब्रह्मेत्यादिना ॥ ८०५ ॥ ८०६ ॥ एवमात्मस्मृतिमङ्गीकृत्य तत्र विधिर्निराकृतः । वस्तुतस्त्वात्मस्मृतिरेव न सम्भवतीत्याह *तव श्रद्धेति ॥ ८०७ ॥ वस्तुस्थितिमेवाह *सकृदिति । आत्मनि स्फुरणविस्मरणयोः सम्भावना नेत्यत्र

सकृद्विभाते चित्तत्त्वे रवौ रात्र्यहनी यथा ॥
स्मृतिर्वा विस्मृतिर्वैते सम्भाव्येते तथा नहि ॥८०८॥
उपासीतेतिवाक्योक्ताविध्यर्थं यदि पृच्छसि ॥
तर्ह्यर्थं द्विविधं विद्धि शब्दलक्षणलक्षितम् ॥ ८०९ ॥
अज्ञातज्ञापनं तद्वदप्रवृत्तप्रवर्त्तनम् ॥
विध्यर्थं द्वयमेतत्तु वाक्येऽस्मिन्योजयिष्यति ॥८१०॥
अज्ञाता ज्ञाप्यते तत्त्वे प्रत्यक्कूटस्थरूपता ॥
उपासीतेतिशब्देन, तथा प्राक्प्रतिपादितम् ॥८११॥
कोऽहं कस्य कुतोऽभूवं कथं वेति विचारकम् ॥
प्रवर्त्तयेदप्रवृत्तमुपासीतेति गीरियम् ॥ ८१२ ॥
तथोत्पत्तिस्थितिध्वंसो जगतोऽस्य कुतो न्विति ॥
विचारोऽत्र विधेयः स्यादुपासीतेति शब्दतः ॥८१३॥
विजिज्ञासस्व तपसा ब्रह्मेत्यन्यत्र च श्रुतम् ॥

---

हेतुः *सकृद्विभात इति । स्वप्रकाश इत्यर्थः । तत्रैव दृष्टान्तमाह *रवाविति । नोदेता नास्तमेतेति श्रुतेर्न दृष्टान्तासिद्धिः ॥८०८॥ एवमुपासनशब्दस्य परोक्तमर्थं निरस्य स्वोक्तमर्थं सोपपत्तिकमुपसंहर्त्तुं प्रश्नपूर्वकं विधायकशब्दस्य सम्मतमर्थमाह *उपासीतेत्यादिना ॥ ८०९ ॥ *अज्ञातेति ॥ आत्मनः प्रसिद्धत्वेऽपि तस्याद्वितीयकूटस्थत्वमज्ञातमुपासनशब्दितमुक्तमित्यर्थः ॥८१०॥ ॥ ८११ ॥ अप्रवृत्तप्रवर्त्तनार्थत्वं तस्य दर्शयति *कोऽहमिति । विचारकं मुमुक्षुम् ॥ ८१२ ॥ ८१३ ॥ उपासीतेत्यस्य जीवजगत्परमात्मविचारविधायकत्वे श्रुत्यन्तरं संवादयति *विजिज्ञासस्वेति । श्रुतं विचारविधानमित्यनुषङ्गः । ननु न तत्र विचारविधिः तपस एव ब्रह्मप्राप्तिहेतुत्वश्रवणात्, तत्राह *अन्वयेति

अन्वयव्यतिरेकाख्यो व्यापारोऽत्र तपो मतम्॥८१४॥
पर्यालोचनवाच्येष तपःशब्दः श्रुतौ मतः ॥
सन्तापार्थे वृथैव स्याद्ब्रह्मलक्षणवर्णनम् ॥ ८१५ ॥
यतो भूतानि जायन्ते तद्ब्रह्मेति समीरितम् ॥
लक्षणं च विचारार्थश्चैव तत्रोपयुज्यते ॥ ८१६ ॥
एवं चोपास्तिरत्रात्मविचारः स विधीयते ॥
सूत्रानुग्राहको न्याय इत्युक्तोऽन्यव्युदासतः ॥८१७॥
ननु प्राणाद्यपूर्णात्मबोधोऽकात्स्न्र्येन दूषितः ॥
सोऽकात्स्न्र्यदोषः शुद्धात्मबोधे कस्मान्न सम्भवेत्८१८॥
इत्याशङ्कापनुत्त्यर्थमत्रेदं श्रूयते स्फुटम् ॥
अत्र ह्येते सर्व एकंभवन्तीति श्रुतेर्वचः ॥ ८१९ ॥
प्राणाद्युपाध्युपहिताः सर्वे ऽप्यात्मान ईश्वरे ॥
शुद्धात्मन्येकतां यान्ति पुत्रभ्रात्रादयो यथा ॥८२० ॥

---

॥ ८१४ ॥ उक्तमेव व्यनक्ति *पर्यालोचनेति । तत्र तपःशब्दस्य प्रसिद्धार्थं विहाय विचारार्थकत्वकल्पने को हेतुरित्याशङ्क्याह *सन्तापेति । तपस एव ब्रह्मधीहेतुत्वे अन्नं प्राणश्चक्षुरित्यादिना ब्रह्मोपलब्धिद्वारकथनमनन्तरं यतो वेत्यादिना ब्रह्मलक्षणवर्णनं च व्यर्थं स्यादित्यर्थः ॥ ८१५ ॥ ८१६ ॥ तस्य विचारार्थत्वे फलितमाह *एवं चेति । प्रकृतमुपसंहरति *सूत्रेति ॥ ८१७ ॥ उत्तरसूत्रव्यावर्त्यामाशङ्कामाह *नन्विति । प्राणाद्यपूर्णत्वं तदुपाहितत्वम् । *कस्मादिति । शुद्धस्यापि पराव्यावृत्तत्वादिति भावः ॥८१८॥८१९॥ तात्पर्यमुक्त्वा श्रुत्यक्षराणि योजयति *प्राणादीति ॥ ८२० ॥ दृष्टान्तं विवृणोति *पुत्र इति । यथैक एव नरो ज्येष्ठापेक्षया कनिष्ठः,

पुत्रो भ्राता पितेत्येको भिद्यते प्रतियोगिभिः ॥
पुत्रादयस्तु एकस्मिंस्तस्मिन्यान्त्येकतां स्वतः॥८२१॥
आत्मनो ऽनवशेषेण सम्बन्धोऽनात्मवस्तुनः ॥
रज्जुसर्पादिवज्ज्ञातः प्रतीचः शिष्यते पराङ् ॥ ८२२ ॥
सर्वमज्ञातमेव स्याद्यस्मिन्नज्ञातआत्मनि ॥
ज्ञाते ज्ञातं च कृत्स्नोऽसौ तावत्त्वात्सर्ववस्तुनः॥८२३॥
युक्त्या निरूप्यमाणस्य ह्यात्मा तत्त्वमनात्मनः ॥
प्रत्याख्यातः स चेत्तेन त्वनात्मा शिष्यतां कथम्॥८२४॥
अनात्मनोऽस्य यत्तत्त्वमात्मनाऽपह्नुतं च तत् ॥

---

पुत्रापेक्षया पिता, पित्राद्यपेक्षया पुत्रः, इति बहुधा भिन्नोऽपि ज्येष्ठादिप्रतियोग्यविवक्षायां स्वत एक एव, तद्वदित्यर्थः ॥८२१॥ एवमपि कथं नात्मनोऽकृत्स्नत्वं घटादिपराग्व्यावृत्तत्वादत आह *आत्मन इति । यथा रज्जुः सर्पतादात्म्यमनुभवति तस्य पृथगवशेषं न मृष्यते, तथैवात्मनो ऽनात्मना सम्बन्धो निरवशेषेणैवेष्यते । तथाच प्रतीचः सकाशादवशिष्टस्य पराचोऽभावात्तस्य कृत्स्नतेत्यर्थः ॥ ८२२ ॥ किञ्च येनाश्रुतमित्यादिवाक्यप्रामाण्यादात्मनोऽद्वयत्वसिद्धिरित्याह *सर्वमिति । तत्र युक्तिमाह *तावत्त्वादिति । आत्मनः सर्वोपादानत्वात्तावन्मात्रत्वं सर्वस्येत्यात्मज्ञानेन सर्वज्ञानसिद्धिरित्यर्थः ॥ ८२३ ॥ अपि च दृश्यत्वादियुक्त्या विविच्यमानस्यानात्मनः सर्पादेः रज्जुवदात्मैव तत्त्वमिति वक्तव्यम् । अतो युक्तं तस्याद्वयत्वमित्याह *युक्त्येति । विपक्षे दोषमाह *प्रत्याख्यात इति ॥ ८२४ ॥ एतदेव स्पष्टयति *अनात्मन इति

निस्तत्त्वोऽयमनात्माऽतः कथं सिद्ध्यतु कुत्र वा॥८२५॥
स्वरूपप्रदमात्मानं सेवित्वा सेद्धुमर्हति ॥
तदकारुण्यरोगस्य किमन्यद्भेषजं भवेत् ॥ ८२६ ॥
ज्ञातायां स्रजि तन्मोहकल्पितानां यथैकता ॥
प्रतीच्येवं तदज्ञानक्षिप्तानामेकतेष्यते ॥ ८२७ ॥
एवं व्यवस्थितं वाक्यं केचिद्व्याचक्षतेऽन्यथा ॥
समस्तव्यस्तरूपेण कृत्स्नात्मा प्रोच्यते किल॥८२८ ॥
विशेषसामान्यरूपो व्यक्तिजात्यात्मधेनुवत् ॥
आत्मावस्था इमे भेदा बाल्याद्या वपुषो यथा॥८२९॥

॥ ८२५ ॥ तस्मादात्मप्रसादादेवानात्मसिद्धिरित्याह *स्वरूपेति । नन्वन्यदेव अनात्मसाधकमस्तु, अत आह *तदिति । आत्मानात्मभ्यामर्थान्तराभावादात्माऽपि चेत्कृपया स्वरूपं न दद्यात्तदाऽनात्मसिद्धिरेव न स्यादित्यर्थः ॥ ८२६ ॥ श्रुतियुक्तिभ्यामात्मनोऽद्वयत्वमभिधाय अत्र हीत्यादिवाक्यं सदृष्टान्तमुपसंहरति *ज्ञातायामिति ॥८२७॥ भर्तृप्रपञ्चमतमुत्थापयति *एवमिति । अत्रात्मशब्दाभिधेये एते पूर्वोक्तप्राणनादिव्यापाराः सर्वे एकीभवन्तीति व्याचक्षत इत्यर्थः । कथं तर्हि ब्रह्मणः कृत्स्नता ? तत्राह *समस्तेति । स्वाभाविकानामपि दृष्टत्वादिविशेषाणामात्मन्यन्तर्भूतत्वात्तदन्तर्णीतविशेष आत्मनि या बुद्धिः सा कृत्स्नग्राहिणीत्यर्थः ॥ ८२८ ॥ नन्वेकस्योभयात्मकत्वं विरुद्धं ? न, दृष्टान्तेषु दृष्टत्वादित्याह *विशेषेति । यथा गोशब्दवाच्यं वस्तु गोत्वेन सामान्यरूपं, खण्डमुण्डत्वादिना विशेषरूपम्, एवं ब्रह्मापि प्रत्यक्त्वेन सामान्यरूपं,द्रष्टृत्वादिभिर्विशेषरूपमित्यर्थः। परमात्मा अवस्थावान् द्रष्टृत्वादयोऽवस्था इति वा कृत्स्नत्वमिति सदृष्टान्तमाह *आत्मेति ॥८२९॥

भूम्याद्या आत्मनः कार्या मृदो यद्वद्घटादयः ॥
नाभिनेम्यरवच्चक्रस्यात्मनोंशा इमे मताः ॥ ८३० ॥
एवं वृक्षादिदृष्टान्तैः समस्तव्यस्तताऽऽत्मनः ॥
वास्तव्येव श्रुतेत्याहुस्तदेतन्नैव युज्यते ॥ ८३१ ॥
समस्तव्यस्तता किन्ते ज्ञेयत्वेनोपदिश्यते ॥
उपास्यत्वेन वा द्वेधाऽप्यशक्यानुष्ठितिर्भवेत् ॥ ८३२ ॥
अनन्तत्वात्पदार्थानां क्रमशो ऽक्रमशोऽथ वा ॥
ज्ञानोपास्ती अशेषेण कर्तुं शक्ये न केनचित् ॥ ८३३ ॥
नचैकदेशविज्ञाने कृत्स्नत्वं लभ्यते क्वचित् ॥
तस्मादशेषवेदान्ता निर्विशेषात्मनि स्थिताः ॥ ८३४ ॥
न समस्तं न च व्यस्तं नोभयं प्रत्यगात्मनि ॥
प्रत्यक्प्रवणया दृष्टया ईक्ष्यतां यदि शक्यते ॥ ८३५ ॥
विशेषाणां कल्पितत्वान्निर्विशेषस्य वस्तुता ॥

---

ब्रह्म कारणं जगत्कार्यमिति वा तस्य कार्त्स्न्यमिति सदृष्टान्तमाह *भूम्याद्या इति । यथा रथचक्रस्यावयविनो नाभिर्नेमिरराश्च अवयवाः, यथा वा एक एव वृक्षः शाखादिना नानाविधः एवमेकस्यात्मनः समस्तव्यस्तरूपत्वमविरुद्धमित्याह *नाभीत्यादिना ॥ ८३०।८३१ ॥ अयुक्तत्वमेव दर्शयितुं विकल्पयति *समस्तेति ॥ ८३२ ॥ ज्ञानोपास्त्योरशक्यत्वमाह *अनन्तत्वादिति । सामान्यादीनामसङ्ख्यत्वात्पुरुषायुषस्य च परिमितत्वात्तद्ध्यानं दुःशकमित्यर्थः ॥ ८३३ ॥ *न चेति । एकदेशध्यानेन पूर्णब्रह्मसाक्षात्कारायोगादित्यर्थः ॥ ८३४ ॥ ब्रह्मणो नानारसत्वं विद्वदनुभवविरुद्धं चेत्याह *नेति । उभयं वा नेत्यनुषज्यते ॥ ८३५ ॥ तस्मादेकरसं ब्रह्मैव कृत्स्नमित्युपसं-

अतोऽकात्स्न्यमनाशङ्क्यं विशुद्धात्मविबोधने ॥८३६॥
प्रमाभासत्वमेतेन वाक्येनास्य निवारितम् ॥
मात्वं सम्भाव्यते तस्य पदनीयत्ववाक्यतः ॥८३७॥
श्रुतिः-तदेतत्पदनीयमस्य सर्वस्य यदयमात्मा ॥
वार्त्ति०अस्य सर्वस्य जगत आत्मेति यदुदीरितम् ॥
तदेतत्पदनीयं स्यादिति वाक्यस्य योजनम् ॥८३८॥
पदनीयेतिशब्देन प्रमातुं योग्यतोच्यते ॥
अज्ञातत्वात्पुमर्थत्वात्प्रमातुं योग्यताऽऽत्मनः ॥८३९॥
अव्याकृतव्याकृतयोरज्ञानात्मकता यतः ॥
अत आत्मातिरेकेण नाज्ञातार्थोऽस्ति कश्चन ॥८४०॥
ज्ञेयार्थानर्थयोर्यस्मात्समाप्तिः प्रत्यगात्मनि ॥
परमः पुरुषार्थोऽत आत्मा भवति नेतरः ॥ ८४१ ॥
अज्ञातत्वं पुरा प्रोक्तमव्याकृतगिरा यथा ॥
ज्ञेयार्थस्य समाप्तिं तां वक्ष्यनेनेति वाक्यतः ॥ ८४२ ॥

---

रति *विशेषाणामिति ॥ ८३६ ॥ उक्तानुवादपूर्वकमुत्तर-
ाक्यतात्पर्यमाह *प्रमेति ॥ ८३७ ॥ तात्पर्यमुक्त्वाऽक्षराणि
ोजयति *अस्येति ॥ ८३८ ॥ अन्वयमुक्त्वा पदनीयपदार्थ-
ाह * पदनीयेति ॥ ८३९ ॥ अज्ञातत्वमाह *अव्याकृतेति ।
ज्ञानतत्कार्ययोरज्ञानाश्रयविषयत्वलक्षणाज्ञातताया असम्भवा-
त्मैवाज्ञातार्थ इत्यर्थः ॥ ८४० ॥ पुमर्थत्वमुपपादयति । *ज्ञेये-
। ॥ ८४१ ॥ आत्मनः पुमर्थत्वासिद्धये आत्मनि ज्ञाते ज्ञा-
व्यान्तराभावो निरतिशयानन्दत्वं चेत्युक्तहेतुद्वयपरतयोत्तर-
ाक्यं योजयिष्यन्नात्मनः पदनीयसाधकत्वेनोक्तमज्ञातत्वं स्मा-
यति *अज्ञातत्वमिति । तत्राद्यहेतुपरम् अनेन ह्येतत्सर्वं वेदेति

श्रुतिः-अनेन ह्येतत्सर्वं वेद ॥
वार्त्ति० अनेन तद्वेद सर्वमित्यात्मज्ञानमात्रतः ॥
सार्वज्ञ्यमुक्तमानन्दसमाप्तिस्तु प्रवक्ष्यते ॥ ८४३ ॥
अन्यज्ञानेन नान्यस्य क्वचिदस्त्यवबुद्धता ॥
आत्मज्ञानेन सर्वस्य ज्ञानं कथमुदीर्यते ॥ ८४४ ॥
सत्यमेवं भवेदेतद्यद्यात्माऽप्यन्य इष्यते ॥
आत्माऽसावन्य इति च नानुन्मत्तस्य गीरियम् ॥८४
अनन्यत्वे तृतीयेयमनेनेति कथं भवेत् ॥
साधनार्थेति चेदस्तु तर्हीत्थम्भूतलक्षणा ॥ ८४६ ॥
आत्माख्यं यज्जगद्रूपं तेन रूपेण तज्जगत् ॥
ज्ञातं तत्त्वविदा तस्य प्रत्यङ्मात्रसतत्त्वतः ॥ ८४७
उपलब्धौ जगत्सर्वमुपलभ्यं प्रकल्पितम् ॥

---

वाक्यमित्याह *यथेति ॥ ८४२ ॥ वाक्यं योजयन्नुक्तम
स्पष्टयति *अनेनेति ॥८४३॥ आत्मनि ज्ञाते सर्वं ज्ञातं भवति
त्युक्तमाक्षिपति *अन्येति ॥ ८४४ ॥ अन्यज्ञानेनान्यत् नावबुद्ध
मित्यङ्गीकरोति *सत्यमिति । यद्यात्मा ऽनात्मनो वस्तुतो भिन्न
तदाऽऽत्मज्ञानादनात्मा न ज्ञायेत । नचैवमस्ति, आत्मत्वे
ऽन्यत्वायोगादित्याह *यदीति ॥ ८४५ ॥ एवं तर्ह्यनेनेति क
रणार्था तृतीया कथमिति शङ्कते । *अनन्यत्व इति । तस्य
इत्थम्भावार्थत्वान्न दोष इत्याह *अस्त्विति ॥ ८४६ ॥ तृती
याया इत्थम्भावार्थत्वे वाक्यार्थनिष्पत्तिप्रकारमाह *आत्माख्य
मिति । तत्र हेतुमाह *तस्येति ॥ ८४७ ॥ जगतः प्रत्यक्त
मात्रत्वं कथमिति तत्राह *उपलब्धौ इति । तत्र हेतुः *प्रतीय
इति । अयं सर्प इत्यधिष्ठानरज्जुधीपूर्वं प्रतीयमानभुजङ्गवत्

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः। (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि मीमांसादर्शनम्। महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः। पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः। (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम्। महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम्। १३

(२०) ब्रह्मसूत्रभाष्यम्। श्रीभास्कराचार्यविरचितं असंपूर्णम् (वेदान्तः) २

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम्। आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम्। (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम्। ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २

(२५) क्रोडपत्रसंग्रहः। अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्यां व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम्। श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः। बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः। मणिभद्रकृतटीकया सहितः। हरिभद्रसूरिकृतः। ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः। प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका। १३

(३०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः। सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः। ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा। श्रीभगवत्पुरुषोत्तमाचार्यकृता। ... ... ... २

(३४) प्रस्थानरत्नाकरः। गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम्। १

(३६) योगदर्शनम्। परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम्। २

(३७) वेदान्तदर्शनम्। परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम्। ४

(३८) विश्वप्रकाशः। कोशः। विद्वद्वरश्रीमहेश्वरसूरिविरचितः। ... ... २

(३९) श्रीसुबोधिनी। श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता। २

(४०) वीरमित्रोदयः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः। ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः। श्रुतिसिद्धान्तापरनामकः। श्रीब्रह्मचारिवनमालिमिश्रविरचितः। द्वैताद्वैतदर्शनानुगतः। ३

(४२) स्वानुभवादर्शः। श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः। स्वकृतटीकाविभूषितश्च। १

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता। व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी। श्रीगदाधरभट्टाचार्यचक्रद-

र्तिकृता। श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। २

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणिता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्ययातथासोमनाथकृतया मयुखमालिकया च व्याख्यया समलङ्कृता। ३

(४६) वैयाकरणसिद्धान्तमञ्जूषा । श्रीमदुपाध्यायोपनामक श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्यविरचितकुञ्जिकाटीका-श्रीमद्वालम्भट्टविरचितकलाटीका—

टीकाद्वयसंवलिता। ...

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वती

विश्वेश्वरसूरिविरचितः।

(४८) विरमित्रोदयः। लक्षणप्रकाशः।

महामहोपाध्यायश्रीमित्रमिश्रविरचितः

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्य

मिविरचितः । महेश्वरतीर्थकृतयालघु

ग्रहाख्यया टीकया समलंकृतः।

पत्त्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी।

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 243.

# बृहदारण्यकवार्त्तिकसार ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS V-६

PUBLISHED & SOLD BY THE SECRETARY,
CHOWKHAMBA SANSKRIT SERIES OFFICE BENARES.
AGENTS:—
OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.
*Price Rupee one.*

॥ श्रीः ॥

—*—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२४३

१ अस्या चौखम्बा—संस्कृतग्रन्थमालाया प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षैरुत्त
पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एव
सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो वि
एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः ७ आनक
अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ "

५ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता
खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम्
पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-
व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टा-
द्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्र-
णीतम् । श्रीनारायणतीर्थविरचितभाट्ट-
भाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्री-
गागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविर-
चिता संपूर्णा ( मीमांसा ) ... २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्त-
सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृत
ख्यानम् । सम्पूर्णम् । ( वेदान्तः )

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पू

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपण
श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीया
मुनिभिर्विरचितम् । सम्पूर्णम् वेदान्त

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभ
रकाचार्यसंगृहीतः । आचार्यचित्सु
मुनिविरचितव्याख्योपेतः ( वेदान्तः

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथम
सप्तविभक्तिविस्तृतविचाररूपः म०
श्रीगिरिधरोपाध्यायविरचितः । सम्
( न्यायः ) ... ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षित
म् । सम्पूर्णम् ( मीमांसा ) ...

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका )
सोमेश्वरविरचिता । ( मीमांसा )

प्रतीयते जगत्तस्मादधिष्ठानपुरःसरम् ॥ ८४८ ॥
उपलब्धोऽस्ति सन् कुम्भो लम्बोष्ठो देशकालवान् ॥
पूर्वपूर्वातिरेकेण नोत्तरार्थोऽनुभूयते ॥ ८४९ ॥
मात्रादिव्याप्तेः पूर्वं संवित्स्वात्मन्यवस्थिता ॥
अकस्मादुदिता बुद्धिः कुम्भादींस्तत्र कल्पयेत् ॥८५०॥
अक्रियेऽपि यथा व्योम्नि ह्युद्भूतिस्थितिहानिभिः ॥
जगन्नर्नर्ति मय्येवं सदसद्विश्वरूपधृक् ॥ ८५१ ॥

श्रुतिः--यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद ॥ ७ ॥

वार्ति०प्रत्यक्तत्त्वे परिज्ञाते जगत्तत्त्वं प्रबुध्यते ॥
इत्यत्र पददृष्टान्तो यथावत्स विविच्यते ॥ ८५२ ॥
एकं पदं यथाऽश्वस्य दृष्ट्वाऽश्वत्वमशेषतः ॥
दृष्टवानेव भवति दृष्टोऽश्व इति वर्णनात् ॥ ८५३ ॥

---

तत्स्फूर्तिपुरःसरं प्रतीयमानं जगदपि तत्र कल्पितमित्यर्थः॥८४८॥ जगतः सत्तादिपूर्वकप्रतीतिमभिनीय दर्शयति *उपलब्धेति ॥ ८४९ ॥ चितोऽधिष्ठानत्वसिद्ध्यर्थं प्रमात्राद्यारोपात्प्रागप्यवस्थानं दर्शयति *मात्रादीति । पूर्वं स्वापादौ । अकस्मात् अविद्यातिरिक्तहेतुं विना ॥ ८५० ॥ सक्रियस्यैव शुक्त्यादेरधिष्ठानत्वदृष्टेरक्रियस्य प्रतीचो नाधिष्ठानतेत्याशङ्क्य व्यभिचारमाह *अक्रिये इति । जगत् गन्धर्वनगरमिति यावत् । नर्नर्त्ति नृत्यति ॥ ८५१ ॥ यथा ह वै पदेनानुविन्देदित्यस्य तात्पर्यमाह *प्रत्यगिति । प्रतिज्ञापूर्वकमक्षराणि योजयति *यथावदित्यादिना ॥ ८५२ ॥ उक्तेऽर्थे गमकमाह *दृष्टोऽश्व इति ॥ ८५३ ॥

एवं स्वदेहमात्रस्थे साक्षितत्त्वेऽवलोकिते ॥
अशेषजगतस्तत्त्वं लभ्येतैव न संशयः ॥ ८५४ ॥
ज्ञानार्थे प्रकृतेऽप्यत्र लाभार्थेनोपसंहृतिः ॥
युक्ता ब्रह्मात्मतत्त्वेऽस्मिन्नैकार्थ्याद् ज्ञानलाभयोः ८५५
नित्यलब्धस्वरूपस्याप्यज्ञानात्स्यादलब्धता ॥
ज्ञानमात्रं तस्य लाभः कण्ठचामीकरादिवत् ॥८५६॥
कीर्त्तिं च शिष्यसङ्घं च लभते ब्रह्मवेदनात् ॥
नित्यानुवादोऽप्येषोऽत्र प्रवृत्त्यर्थमुदीर्यते ॥ ८५७ ॥
आनन्दस्य समाप्तिर्या प्रत्यगात्मनि सूत्रिता ॥
सा वर्ण्यतेऽनुभूत्याऽत्र स्पष्टं सार्वजनीनया ॥ ८५८ ॥
वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियम् ॥
इन्द्रियेभ्यः प्रियः प्राण आत्मा प्रियतरस्ततः ॥८५९॥

---

श्रुत्युक्तं दृष्टान्तं दार्ष्टान्तिके योजयति *एवमिति ॥८५४॥ अनेन ह्येतदित्यत्र वेदेति ज्ञानोपक्रमाद् ज्ञानार्थे प्रकृतेऽनुविन्देदिति श्रुतौ लाभार्थत्वोक्तिरयुक्तेत्यत्राह *ज्ञानार्थ इति ॥ ८५५ ॥ ज्ञानलाभयोरैक्यमाह *नित्येति ॥ ८५६ ॥ एवं कीर्तिमित्यादेरर्थमाह *कीर्तिं चेति । सर्वकामस्यात्मज्ञानफलेऽन्तर्भूतत्वेनास्यापि प्राप्ते नेदं फलं वक्तव्यमिति तत्राह *नित्येति ॥ ८५७॥ यदुक्तमात्मनः पदनीयत्वोक्त्या पुमर्थत्वं सूचितं तस्यानतिशयानन्दरूपत्वादिति, तदेवानन्दत्वं सर्वजनानुभवसिद्धत्वेन साधयत्युत्तरा श्रुतिरित्याह *आनन्दस्येति ॥ ८५८ ॥ आत्माऽऽनन्दरूपः प्रियतमत्वादित्यभिप्रेत्य परिशेषानुभवाभ्यां प्रियतमत्वं साधयति *वित्तात्पुत्र इति ॥ ८५९ ॥ आत्मनि प्राणादौ च प्रीतेः समत्वात्कथमात्मनः प्रियतमत्वं तत्राह

स्वात्मभोगस्य हेतुत्वात्प्राणादौ प्रीतिरिष्यते ॥
न स्वतोऽतो न सा मुख्या ह्यात्मप्रीतिर्यथा तथा॥८६०॥
प्रतीचि निर्निमित्तैव सर्वावस्थासु वीक्ष्यते ॥
प्रीतिरग्न्यौष्ण्यवत्तस्मान्मुख्याऽसाविति गम्यताम्८६१
सर्वान्तरतरत्वेन युज्यते निर्निमित्तता ॥
बाह्येषु सनिमित्तत्वं प्रीतेः स्पष्टं गवादिषु ॥ ८६२ ॥
व्याध्याद्युपद्रुतो लोके मृतिमप्यभिवाञ्छति ॥
निर्निमित्तप्रियत्वे तु देहादेस्तन्न युज्यते ॥ ८६३ ॥
अनात्मा प्रिय इत्येवं यो विमुह्यति पामरः ॥
विनाशित्वमुदाहृत्य मूढं तं बोधयेद् बुधः ॥ ८६४ ॥
अनात्मा भोगकालेऽस्य सुखं यावत्प्रयच्छति ॥
तत्सहस्रगुणं दुःखं नाशकाले ददाति हि ॥ ८६५ ॥
या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥
व्युत्थाप्य विषयेभ्यस्तां प्रतीच्येव निवेशयेत् ॥८६६॥
विषया इव न प्रत्यक्कदाचिदपि नश्यति ॥

---

*स्वात्मेत्यादिना॥८६०॥८६१॥आत्मप्रीतेर्निर्निमित्तत्वं साधयति *सर्वान्तरेति । आत्मा निर्निमित्तप्रीतिविषयः सर्वान्तरत्वाद्व्यतिरेकेण गवादिवदित्यर्थः ॥ स्वभोगसाधने गवादौ प्रीतिरन्यत्र नेति सनिमित्तत्वं स्पष्टमित्याह *बाह्येष्विति ॥ ८६२ ॥ प्राणादिषु प्रीतेरमुख्यत्वे हेत्वन्तरमाह *व्याध्यादीति ॥८६३॥ स योऽन्यमात्मन इत्यादेरर्थमाह *अनात्मेत्यादिना ॥ ८६४ ॥ ॥ ८६५ ॥ आत्मानमेव प्रियमित्यादेरर्थमाह *या प्रीतिरिति ॥ ८६६ ॥ न हास्य प्रियमित्यादेरर्थमाह *विषया

अतो दुःखप्रदत्वं तु शङ्कितुं न च शक्यते ॥ ८६७ ॥
इत्यानन्दज्ञेयवस्तुसमाप्तिर्भ्यां पुमर्थना ॥
सिद्धा प्रतीचः, स प्रत्यकादनीयो भवेदतः ॥ ८६८ ॥
कृत्स्नं च पदनीयं च स्वात्मतत्त्वं यतस्ततः ॥
यदात्मविद्यासूत्रं तद्व्याख्यातुं योग्यतामियात् ॥८६९

---

इति ॥ ८६७ ॥ विद्यासूत्रमारभ्य भवतीत्यन्तमुत्तरोत्तरहेतुत्वेन व्याख्यातमर्थमुपसंहरति *इत्यानन्देत्यादिना ।

तदेतदित्यादेरयमक्षरार्थः—तदेतदात्मतत्त्वं प्रेयः प्रियतरमन्यस्मादिति । यद्यल्लोके प्रियत्वेन प्रसिद्धं तस्पात्सर्वस्मादित्यर्थः ॥ आत्मनः प्रियतरत्वे सर्वान्तरत्वं हेतुमाह *अन्तरतरमिति । अन्तरतमत्वेऽप्यात्मत्वं हेतुरित्याह *यदयमात्मेति । यदेतदात्मतत्त्वमित्यर्थः । एवमात्मनः प्रियतरत्वे सिद्धे सर्वो यः कश्चिदात्मप्रियवादी आत्मनोऽन्यं प्रियं ब्रुवाणमनात्मा प्रीतिविषय इति भ्रान्त्या वदन्तम् इत्थं ब्रूयात् हे अनात्मप्रियवादिन् तवाभिमतं प्रियं रोत्स्यति नङ्क्ष्यतीति यावन् । आत्मप्रियवादिनोऽन्यं प्रत्येवंवदने हेतुमाह *ईश्वर इति । समर्थः अतोऽन्यदार्त्तमित्यादिश्रुत्यर्थाभिज्ञ इति यावत् । अतस्तदुक्तं सर्वं तथैव स्यात्सत्यं भवेदित्यर्थः । एवमनात्मनः प्रियत्वाभावे प्रियमुपासीत य एवमुपास्ते विषयेषु स्वरसतो विद्यमानं प्रीतिं तत आकृष्यात्मन्येव निवेशयति अस्य प्रियं प्रमायुकं मरणशीलं न भवति, आत्मनो नित्यत्वादिति ।

ननु विद्यासूत्रस्योत्तरग्रन्थो वृत्तिरित्युक्तं, तथाच सूत्रस्थपदानामर्थ एवोत्तरग्रन्थेन वक्तव्यः, किमिदमुच्यते तदाहुरित्यनेनेत्याशङ्क्य अस्यापि प्रकृतत्वं दर्शयितुं व्याख्यानलक्षणमाह

श्रुतिः—तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात् प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैव स्यात् आत्मानमेव प्रियमुपासीत स य आत्मानमेवं प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ॥ ८ ॥

वार्त्ति०पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥
आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥८७०॥
पदच्छेदादयः सूत्रे विस्पष्टत्वादुपेक्षिताः ॥
तत्राक्षेपसमाधाने क्रियेते बुद्धिशुद्धये ॥ ८७१ ॥

श्रुतिः–तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् ।

वार्त्ति०सूत्रार्थज्ञमनुष्याणां मतिं विज्ञाय केचन ॥
मुमुक्षवो गुरुं प्राप्य चोदयन्त्यतिसम्भ्रमात् ॥८७२॥
यद् ब्रह्मविद्यया सर्वभावाप्तिं मन्वते नराः ॥
तद् ब्रह्म किं विदित्वाऽभूत्सर्वमित्येतदीर्यताम्॥८७३॥
एवं मुमुक्षुभिश्चोद्ये कृते करुणया गुरुः ॥

---

*पदच्छेद इति ॥८७०॥ क्रियेते, श्रुत्येति शेषः ॥८७१॥ एवं प्रकृतत्वमुपपाद्य तदाहुरित्यस्यार्थमाह *सूत्रेति ॥ ८७२ ॥ आक्षेपवाक्यतात्पर्यं सङ्ग्रहेणाह *यदिति । विद्यासूत्रे ब्रह्मणः कृत्स्नत्वाभिधानाद्ब्रह्मविद्यायाः कृत्स्नभावाप्तिर्भवतीति केचिन्मनुष्या यन्मन्यन्ते तन्मतं विरुद्धं, कर्तृकर्मणोर्दुर्निरूपत्वेन

अनायासेन तच्चोद्यं परिहर्तुं वचोऽब्रवीत् ॥ ८७४ ॥
ब्रह्मैव बोधात्प्राग्जीवो भूत्वाऽत्मानमवेत्पुनः ॥
अहं ब्रह्मेति तद्बोधात्सर्वात्मकमभूत्तदा ॥ ८७५ ॥
न्यायेनैते विचार्येते शिष्यचोद्यगुरूत्तरे ॥
तद्विचारेण सूत्रार्थो व्याख्यातो विशदीभवेत् ॥८७६॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यते ॥
मुख्यो बृहतिधात्वर्थ एवं सत्युपपद्यते ॥ ८७७ ॥
तद्यया वेद्यते बुद्ध्या वेदवाक्येन जन्यया ॥
ब्रह्मविद्येति तां साक्षाच्छेमुर्षीं प्रतिजानते ॥ ८७८ ॥
विद्यायाः कृत्स्नभावाप्तौ साधनत्वं तृतीयया ॥
श्रुतं, तस्मादकृत्स्नत्वमविद्याकल्पितं मतम् ॥ ८७९ ॥

---

ब्रह्मज्ञानस्यैवासम्भावितत्वादिति भावः। ब्रह्मेत्यत्र तद् अनुपपन्नमिति शेषः ॥८७३॥८७४॥ अनुपपत्तिं वक्ष्यति । उक्ताक्षेपपरिहारपरस्य "ब्रह्म वा" इत्यादिवाक्यस्य तात्पर्यं संक्षिप्य दर्शयति *ब्रह्मैवेति ॥ ८७५ ॥ एवं सङ्क्षेपेणोक्तमर्थं प्रपञ्चयितुं प्रतिजानीते *न्यायेनेत्यादिना । न्यायतः प्रतिपादने फलमाह *तदिति ॥ ८७६ ॥ यद्ब्रह्मविद्ययेत्यत्र यच्छब्दस्य मन्यन्त इत्यनेनान्वयमभिप्रेत्य ब्रह्मपदस्यार्थमाह *अव्यावृत्तेति। ब्रह्मशब्दस्य कमलासनादिबोधकत्वं किन्न स्यात्,तत्राह *मुख्यः इति । मुख्यः सन्नुपपद्यत इत्यन्वयः ॥ ८७७ ॥ विद्यापदस्य प्रातिपदिकार्थमाह *तदिति । उक्तलक्षणं ब्रह्मेत्यर्थः । शेमुर्षीं बुद्धिं ब्रह्मधीवृत्तिम् ॥ ८७८ ॥ तस्य प्रत्ययार्थमाह *विद्याया इति । तस्या मुक्तिहेतुत्वोक्तेरार्थिकमर्थमाह *तस्मादिति॥८७९॥ विद्याया मुक्तिहेतुत्वेऽपि कथमकृत्स्नत्वस्य विकल्पितत्वं त-

द्योतिकैव भवेद्विद्या कारिका न यतस्ततः ॥
सर्वात्मभावः सर्वेषां सिद्धः प्रागपि बोधतः ॥८८०॥
दृष्टार्थत्वात्तु विद्याया नाग्निहोत्राधिकारवत् ॥
अधिकारो वैधहेतुरपेक्ष्यः कश्चिदिष्यते ॥ ८८१ ॥
विहिताः शान्तिदान्त्याद्या दृष्टादृष्टोपकारिणः ॥
स्त्रीशूद्रा अपि शान्त्यादियुक्ताश्चेदधिकारिणः ॥८८२॥
अग्निहोत्रमिवैतेषां नैव विद्या निषिध्यते ॥
वेदाधिकृत्यभावेऽपि पुराणेष्वधिकारतः ॥ ८८३ ॥
मनुष्यमात्रो विद्यायामधिकारी भवेद् ध्रुवम् ॥
यतोऽतः सर्वभावाप्तिं मनुष्या इत्युदीरितम् ॥८८४॥
कर्मभ्य इव विज्ञानात्फलप्राप्तिं सुनिश्चिताम् ॥

---

त्राह *द्योतिकेति । सिद्धस्यैव द्योतकत्वं दीपादौ दृष्टमिति भावः । तस्मात्सर्वं भविष्यन्त इति वाक्यस्य अविद्यापिहितं विद्यमानमेव कृत्स्नत्वं कामयमाना इत्यर्थः फलतीत्याह *सर्वेति ॥ ८८० ॥ मनुष्यग्रहणस्य तात्पर्यमाह *दृष्टेत्यादिना । विद्यायाः शोकादिनाशाख्यदृष्टफलत्वात्तत्कामो विवेकादिसाधनसम्पन्नः सर्वोऽप्यत्र विद्यायामधिकारी, न त्वग्निहोत्राद्यधिकारवदत्र तन्नियमोऽस्ति इत्यर्थः ॥ ८८१ ॥ ॥ ८८२ ॥ नन्वेवमपि शूद्रादीनां वेदाध्ययनाभावादुपायाभावेन न ब्रह्मविद्याधिकारस्तत्राह *वेदेति । *पुराणेष्विति । श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत इत्यादीति भावः॥८८३॥ एवं च सर्वभावाप्तिं त्रैवर्णिका इच्छन्तीति वक्तव्ये उक्ताभिप्रायेण मनुष्यग्रहणमुपपन्नमित्याह *यतोऽत इति । सर्वभावाप्तिम्, इच्छन्त इति शेषः ॥८८४॥ मन्यन्त इत्यस्य तात्पर्यमाह *कर्मभ्य इवे-

मन्यन्त उभयत्रापि श्रुतिमानाविशेषतः ॥ ८८५ ॥
मनुष्यवेद्यं यद् ब्रह्म तदकृत्स्नं मतं यदि ॥
बृहत्यर्थविहीनत्वादमुख्यार्थः प्रसज्ज्यते ॥ ८८६ ॥
मुख्यं ब्रह्मैव चेन्न स्याद्गौणं ब्रह्माप्यसम्भवि ॥
गौणस्य मुख्यपूर्वत्वान्निरर्था ब्रह्मगीर्भवेत् ॥ ८८७ ॥
अथ कृत्स्नं ब्रह्म तर्हि स्वतो वा परतोऽथवा ॥
तत्कृत्स्नत्वं, स्वतस्त्वे तु ब्रह्मविद्या निरर्थिका॥८८८॥
परतोऽपि च कृत्स्नत्वे ब्रह्मत्वं दुःस्थसिद्धिकम् ॥
क्रियातो ज्ञानतो वा तद्यदि वोभयसंश्रयात्॥८८९ ॥
न क्रियातो ब्रह्मता स्यादुत्पत्त्यादिप्रसङ्गतः ॥

---

ति । कर्मफले स्वर्गादौ यथा संदेहो नास्ति एवं ज्ञानफलेऽपीत्यत्र हेतुमाह *उभयत्रेति ॥ ८८५ ॥ किमु तद् ब्रह्मेत्यत्र यन्मुमुक्षुभिर्वेद्यं तत्किं परिच्छिन्नमुत नेति विकल्प्याद्यमनूद्य प्रत्याह * मनुष्येति ॥ ८८६ ॥ ब्रह्मशब्दस्य मुख्यार्थाभावात्परिच्छिन्नं ब्रह्मोपेयमिति शङ्कामनूद्य दूषयति *मुख्यमिति । *निरर्थेति । अतो ब्रह्मशब्दस्य मुख्यार्थो वक्तव्य इति स एव ब्रह्मपदेन ग्रहणमर्हतीति भावः ॥८८७॥ द्वितीयमनूद्य विकल्पयति *अथेति । आद्यं दूषयति *स्वतस्त्व इति । ब्रह्मातिरिक्तचेतनस्य ब्रह्मविद्याकर्तृत्वे ब्रह्मणः परिच्छिन्नत्वेन ब्रह्मत्वायोगात् ब्रह्मैव विद्याकर्त्रिति वाच्यम् । तथाच विद्याफलस्य कृत्स्नत्वस्य स्वतःसिद्धत्वे विद्यावैफल्यं स्फुटमिति भावः ॥८८८॥ द्वितीयं निरस्यति *परत इति । ब्रह्मणः सर्वात्मकत्वरूपस्यान्याधीनत्वे तदव्यवस्थितं स्वर्गादिवदनित्यं स्यादित्यर्थः । उक्तमेव स्पष्टयितुं विकल्पयति *क्रियात इति ॥ ८८९ ॥

नाद्यन्तौ ब्रह्मणो युक्तावपूर्वाजादिशास्त्रतः ॥८९०॥
परस्परविरोधेन ज्ञानकर्मसमुच्चयः ॥
पुरैव दूषितः पश्चादप्यसौ दूषयिष्यते ॥ ८९१ ॥
अथ ज्ञानात्कृत्स्नता स्यात्तदा ज्ञेयं तु कीदृशम् ॥
किं स्वस्वरूपमन्यद्वा, स्वरूपत्वं विरुध्यते ॥ ८९२ ॥
स्वयं ज्ञाता स्वयं ज्ञेयमित्येकस्मिन्कथं भवेत् ॥
नहि स्वस्कन्धमारोढुं निपुणोऽपीह शक्नुयात् ॥८९३॥
ब्रह्मणो ज्ञेयमन्यच्चेत्तत्किं ब्रह्मान्तरं भवेत् ॥
अब्रह्म वा,ऽग्रिमे कल्पे ह्यनवस्था प्रसज्यते ॥ ८९४ ॥
द्वितीये ब्रह्मणः कात्स्न्यं भवेद्ब्रह्माविद्यया ॥

---

आद्यं प्रत्याह *नेति ॥ अस्तु तर्हि ब्रह्मणो जन्मादिमत्त्वं तत्रा-
ह *नाद्यन्ताविति ॥ ८९० ॥ ज्ञानकर्मभ्यां ब्रह्मत्वं साध्यमि-
ति कल्पं दूषयति *परस्परेति ॥ ८९१ ॥ मध्यमं कल्पमनुव-
दति *अथेति । ब्रह्मत्वस्य ज्ञानसाध्यत्वे ज्ञानात्पूर्वं तस्यैव
संसारित्वं वक्तव्यं, तथाच ब्रह्मणो नित्यमुक्तत्वादिबहुश्रुति-
विरोध इति भावः । किञ्च ब्रह्मण एव ज्ञानत्वेऽपि तज्ज्ञानस्य
विषयो दुर्निरूप इत्याह *तदा ज्ञेयमिति । दुर्निरूपत्वं द-
र्शयितुं विकल्पयति *किमिति । आद्यं निराचष्टे *स्वरूपत्व-
मिति ॥ ८९२ ॥ विरोधमेवाह *स्वयमिति ॥ ८९३ ॥
द्वितीयमनूद्य विकल्पयति *ब्रह्मण इति । ब्रह्मान्तरस्य ज्ञेय-
त्वे तस्य च ब्रह्मणो ब्रह्मान्तरज्ञानादेव ब्रह्मत्वं वाच्यमित्ये-
वं ब्रह्मानवस्था स्यादिति दूषयति *अग्रिम इति ॥ ८९४ ॥
चरमे दोषमाह *द्वितीय इति । ब्रह्मज्ञेयमब्रह्मेति पक्षे त-
स्य कृत्स्नत्वमप्यब्रह्मज्ञानादेवेति वाच्यम्, इत्थं चास्मदादीना-

तथा सत्यस्मदादेश्च ब्रह्मविद्या निरर्थिका ॥ ८९५ ॥
इत्यादिखण्डनैरेव चोदयन्ति मुमुक्षवः ॥
एतावता च विद्याया आक्षिप्ते कर्तृकर्मणी ॥ ८९६ ॥
कृत्स्नाकृत्स्नविकल्पाभ्यां विद्यायाः कर्म दूषितम् ॥
स्वरूपान्यविकल्पाभ्यां विद्याकर्त्तापि दूषितः॥८९७॥
श्रुतौ किंशब्दमावर्त्य चोद्यद्वयमुदीरयेत् ॥
किं तद्ब्रह्मेत्येवमेकं किमवेदिति चापरम् ॥ ८९८ ॥
शिष्यचोद्यस्य तात्पर्यमेवं तावद्व्यवस्थितम् ॥
गुरूत्तरस्य तात्पर्यं यथावत्प्रतिपाद्यते ॥ ८९९ ॥
यो गुरूत्तरवाक्यादौ ब्रह्मशब्दोऽस्त्यनेन कः ॥
उक्तोऽर्थः किं विराट् किंवा मर्त्यो वा परमेश्वरः॥९००
विराट् स्यात्स परब्रह्मविद्याकर्त्तेति युज्यते ॥
यतो ऽपरब्रह्मविद्याफलं सर्वमवाप्तवान् ॥ ९०१ ॥
मैवं न पराविद्यार्थं शास्त्राद्यधिकृतिर्भवेत् ॥

---

मपि ब्रह्मत्वप्राप्त्यर्थं ब्रह्मविद्या न प्रार्थनीयेत्यर्थः ॥ ८९५ ॥ उक्तं चोद्यं संक्षिप्याह *एतावतेति ॥ ८९६ ॥ ८९७ ॥ उक्ताक्षेपपरत्वेन श्रुत्यक्षराणि योजयति *श्रुताविति ॥ ८९८ ॥ ॥ ८९९ ॥ ब्रह्म वा इदमितिवाक्यस्थब्रह्मपदस्य स्वाभिमतमर्थं विवक्षुः सम्भावितानर्थान्विमृशति *य इति ॥ ९०० ॥ पूर्वपक्षमाह *विराडिति । तत्र हेतुमाह *यत इति । फलपर्यन्तयाऽपरब्रह्मोपासनया निरस्तकामकर्मादिबन्धत्वाद्विराजः परब्रह्मविद्याकर्तृत्वं युक्तमिति भावः ॥ ९०१ ॥ प्रकरणविरोधेनाद्यपूर्वपक्षं प्रतिक्षिप्य द्वितीयं परिशेषयति *मैवमिति । ब्रह्म वा इदमित्यादिवाक्यस्य विद्यासूत्रविवरण-

विराजः किं त्वनायासात्परविद्योदिता सतः ॥१०२॥
उपासीतेतिसूत्रस्य व्याख्यानत्वाद्विचारणा ॥
प्रस्तुताऽधिकृतिस्तत्र मनुष्यस्य भविष्यति ॥ १०३ ॥
चोद्यवाक्ये मनुष्याणां विचाराधिकृतिः श्रुता ॥
तस्मान्मर्त्यो ब्रह्मभावी ब्रह्मशब्देन भण्यते ॥ १०४ ॥
भाविनीं वृत्तिमाश्रित्य प्रयोगो दृश्यते यथा ॥
ओदनं पचतेत्यादिस्तथेहापि भविष्यति ॥ १०५ ॥
इति व्याचक्षते केचित्तदप्यत्र न युज्यते ॥
अब्रह्मत्वं स्वतः किंवा कल्पितं ब्रह्मभाविनः ॥१०६॥
स्वतस्त्वे विद्यया नैतन्निवर्त्तेत कदाचन ॥
ब्रह्मत्वं चेत्तयोत्पाद्यं मुक्त्यनित्यत्वमापतेत् ॥ १०७ ॥
अब्रह्मत्वं कल्पितं चेत्स्वतः स्याद्ब्रह्मता तदा ॥

---

त्वात्तत्र चोपासीतेति विचाराधिकारिण एव प्रकृतत्वान्न सह-सिद्धज्ञानस्य विराजः परविद्याकर्तृत्वमित्यर्थः ॥ १०२ ॥ १०३ ॥ अत्र मनुष्य एव ब्रह्मशब्दवाच्य इत्यत्र हेत्वन्तरमाह *चोद्येति । कथं तर्हि ब्रह्मपदवाच्यता मर्त्यस्येति शङ्कां निरस्यन्नुपसंहरति *तस्मादिति ॥१०४॥ भाविनीं वृत्तिमाश्रित्यापि शब्दप्रयोगोऽस्तीत्येतद् दृष्टान्तेन साधयति *भाविनीमिति ॥१०५॥ अयुक्तिमेव स्फुटयितुं विकल्पयति *अब्रह्मत्वमिति ॥१०६॥ आद्यं निराह *स्वतस्त्व इति । स्वाभाविकधर्मस्याग्न्यौष्ण्यवन्निवृत्त्ययोगादित्यर्थः । किञ्चाब्रह्मत्वस्य स्वाभाविकत्वे ब्रह्मभावस्यागन्तुकत्वमुक्तं स्यात् तथा च तस्यापुमर्थता स्यादित्याह *ब्रह्मत्वमिति ॥ १०७ ॥ द्वितीयमनूद्य प्रत्याह *अब्रह्मत्वमित्यादिना । ब्रह्मभाविजीवो ब्रह्मेति या कल्पना

कल्पनैवं वृथैव स्याद्ब्रह्मभावीति या कृता ॥ १०८ ॥
बोधात्पूर्वमपि ब्रह्म सर्वो जन्तुः स्वभावतः ॥
अब्रह्मत्वमविद्योत्थं विद्यया तन्निवर्तते ॥ १०९ ॥
अतः सन्त्यज्य मुख्यार्थं ब्रह्मभावीति कल्पने ॥
श्रुतार्थहानिरत्र स्यादश्रुतार्थस्य कल्पना ॥ ११० ॥
अनुत्पन्नाविनाश्येकभास्वद्विज्ञानमात्रके ॥
ब्रह्मण्यतो द्विधाऽविद्या न सम्भाव्येति चेन्न तत् ॥ १११ ॥
अविद्याविषयत्वं किमसम्भाव्यमुतात्मनः ॥
अविद्याकर्तृता, तत्र नाद्यो विद्याविधानतः ॥ ११२ ॥
अविद्यारहितत्वे तु ज्ञातं ब्रह्म सदा ततः ॥
विद्याविधानं विज्ञाते पिष्टपेषणवद्भवेत् ॥ ११३ ॥
न वेद्मीत्यनुभूतिश्च सर्वेषां स्वात्मसाक्षिका ॥

---

कृता सा व्यर्था स्यान्मुख्यस्यैव ब्रह्मणो ग्रहणसम्भवादित्यर्थः ॥ १०८ ॥ सर्वस्यापि ब्रह्मत्वं स्वतःसिद्धं चेदकृत्स्नत्वानुभवविरोधो विद्यावैयर्थ्यं चेति तत्राह *अब्रह्मत्वमिति॥१०९॥ तस्माद्ब्रह्मभाविकल्पनं ब्रह्मशब्दस्य मुख्यार्थत्यागादयुक्तमिति निगमयति *अत इति ॥ ११० ॥ ब्रह्मण्याविद्याध्वास्तिर्विद्याफलमित्यत्र चोदयति *अनुत्पन्नेति । कूटस्थस्वप्रकाशज्ञप्तिमात्रत्वाद्ब्रह्मणस्तत्राज्ञानमयुक्तं, ज्ञानाज्ञानयोर्विरुद्धत्वादित्यर्थः । तत्त्वमसीति ब्रह्मणि विद्याविधानान्यथानुपपत्त्या ब्रह्मण्यज्ञातत्वं सिध्यतीति समाधत्ते *न तदिति ॥ १११ ॥ उक्तमेव विकल्पपूर्वकमुपपादयति *अविद्येति ॥ ११२ ॥ विद्याविधानेऽपि कथं तत्राज्ञानासिद्धिस्तत्राह *अविद्येति । अज्ञातार्थगन्तृत्वात्प्रमाणानामिति भावः ॥ ११३ ॥ किञ्चानुभव-

कुम्भानुभूतिवत्तस्मान्नैवाविद्याऽपलप्यताम् ॥११४॥
द्वितीये ब्रह्मकर्तृत्वं वार्यते वाऽन्यकर्तृता ॥
आपाद्यते चेष्टमेव ब्रह्मकर्तृत्ववारणम् ॥ ११५ ॥
अकार्याया अविद्यायाः कर्त्रपेक्षा कुतो भवेत् ॥
अन्यकर्तृत्वमप्यत्र तदन्यासम्भवान्नहि ॥ ११६ ॥
नहि ब्रह्मातिरेकेण कश्चिच्चेतन इष्यते ॥
नान्योऽतोऽस्तीति शास्त्रेण द्रष्ट्राद्यन्तरवारणात्॥११७॥
ननु शास्त्रोपदेशोऽयमेवं सत्यफलो भवेत् ॥
नासौ ब्रह्मणि साफल्यं नाप्यन्यस्मिन्समश्नुते॥११८॥
उपदेशानपेक्षं तद्ब्रह्मत्वं परमात्मनः ॥
असम्भवात्तदन्यस्य ह्युपदेशो ऽफलो भवेत् ॥ ११९ ॥
ज्ञाते ब्रह्मण्युताज्ञाते शास्त्रवैफल्यमुच्यते ॥
आद्य इष्टो, द्वितीये तु बोधः शास्त्रात्फलिष्यति॥१२०॥

---

विरोधाच्च न ते युक्तिरुल्लसेदित्याह *नेति ॥ ११४ ॥ अज्ञानकर्तृत्वमसम्भाव्यमित्यत्रापि किं ब्रह्मणो ज्ञानकर्तृत्वमात्रं निराचिकीर्षितमुत तदन्यस्य तत्कर्तृत्वं सिषाधयिषितमिति विकल्प्य क्रमेण दूषयति *द्वितीय इत्यादिना ॥ ११५ ॥ ॥ ११६ ॥ ११७ ॥ ब्रह्मणोऽन्यस्य चेतनस्याभावे शास्त्रारम्भानर्थक्यमिति शङ्कते *नन्विति । कथमित्याशङ्क्य स ब्रह्मण्यन्यत्र वा फलवानिति विकल्प्य क्रमेण निरस्यति *नेति । ११८ ॥ उभयत्र वैफल्यमुपपादयति *उपदेशेति । ब्रह्मणोऽन्यस्यासम्भवः सिद्धो मानयुक्तिभ्यामिति वक्तुं हिशब्दः । अतः शास्त्रारम्भवैयर्थ्यमिति फलितमाह *उपदेश इति॥११९॥ सिद्धान्ती ब्रह्मणि तत्साफल्यं विकल्पपूर्वकमुपपादयति *ज्ञात

नच बोधस्य वैयर्थ्यं तेनाबोधनिवर्त्तनात् ॥
तन्निवृत्तिस्तु दृष्टत्वान्नाद्वैतेऽपि विरुध्यते ॥ ९२१ ॥
न दृष्टेऽनुपपन्नत्वं शङ्काया अवसानतः ॥
आशङ्क्यते तावदेव यावत्स्वानुभवो नहि ॥ ९२२ ॥
अबुद्धत्वं विबोधात्प्रागनुभूतं यथा तथा ॥
बोधादूर्ध्वमबोधस्य निवृत्तिरनुभूयते ॥ ९२३ ॥
ननु जीवेशवाक्याभ्यां कर्त्रकर्त्रोर्विबोधनात् ॥
तर्कशास्त्रप्रसिद्धेश्च स्याज्जीवो ब्रह्मणः पृथक् ॥९२४॥
दुःखापनयनार्थत्वाच्छास्त्रेऽधिक्रियते हि सः ॥
तथाच ब्रह्मभावीति युक्तैवैषाऽत्र कल्पना ॥ ९२५ ॥
मैवं ब्रह्मोपदेशार्थशास्त्रानर्थक्यसक्तितः ॥

---

इत्यादिना ॥ ९२० ॥ अध्यस्तसंसारित्वस्याद्वितीयवस्तुस्वरूपेणाविरोधाच्छास्त्रजन्यज्ञानस्य च जडत्वात्कथमबोधनिवृत्तिरित्याशङ्क्य स्वानुभवसिद्धेऽर्थे न चोद्यावतार इत्यनुभवमवलम्ब्य परिहारमाह *तन्निवृत्तिरित्यादिना । वृत्त्युपारूढं चैतन्यमविद्यादाहकमिति प्रागुक्तपरिहारोऽप्यनुसन्धेयः ॥९२१॥९२२॥९२३॥ ब्रह्मभाविपुरुषो ब्रह्मेति पक्षं निरस्तमपि पुनर्युक्त्यन्तरोपजीवनेनोत्थापयति *नन्विति । एष हि द्रष्टा स्प्रष्टा श्रोतेत्यादिना जीवस्य कर्तृत्वं, स एष नेति नेत्येष आत्माऽपहतपाप्मेत्यादिना चेश्वरस्याकर्तृत्वं बोध्यत इत्यर्थः । जीवपरयोर्भेदे सर्ववादिप्रसिद्धमप्यनुकूलयति *तर्केति ॥ ९२४ ॥ तत्रोपपत्तिमाह *दुःखापनयनेति । दुःखनिवृत्तिकामः शास्त्राधिकारी, नेश्वरस्य दुःखमस्त्यतस्तयोर्भेद इत्यर्थः ॥ ९२५ ॥ ब्रह्मभाविनो जीवस्य ब्रह्मशब्दत्वे ब्रह्मोपदेशानर्थक्यमिति दूषयति

संसारिविद्ययैवास्य पुरुषार्थसमापनात् ॥ ९२६ ॥
ब्रह्मभाविनिजात्मानमेवावेद्धि धिया तया ॥
अभूत्सर्वमिति प्राप्तः पुमर्थो जीवविद्यया ॥ ९२७ ॥
ततश्च सत्यज्ञानादिवाक्येन ब्रह्मबोधनम् ॥
ऽव्यर्थं स्याद्ब्रह्मविद्यायाः फलान्तरविवर्जनात् ॥९२८॥
अथ ब्रह्मण्यविज्ञाते ब्रह्मास्मीत्यात्मनीदृशी ॥
सम्पत्कर्त्तुमशक्या स्यात्तस्मिन्ज्ञाते तु शक्यते ॥९२९॥
ब्रह्मविज्ञानमात्रेण न कस्यापि कृतार्थता ॥
पारार्थ्येनैव सर्वत्र विज्ञानं फलवन्मतम् ॥ ९३० ॥
नैतदेवं भट्टपादैर्ब्रह्मज्ञानातिरेकिणः ॥

---

ःमैवमिति । तदुपपादयति *संसारीत्यादिना । यदत्र ब्रह्म-
ाब्दं तज्ज्ञानादेव मुक्तिरिहेष्टा, तदात्मानमित्यादिश्रुतेः ।
मतो जीवो ब्रह्मशब्दश्चेज्जीवज्ञानादेव तत्सिद्धेः सत्यज्ञानादि-
ाह्मोपदेशो वृथा स्यादित्यर्थः ॥९२६॥९२७॥ *फलान्तरेति ।
ह्मविदाप्नोति परमित्यादिना श्रुतं ब्रह्मप्राप्तिफलं विहाया-
ान्यफलकल्पने मानाभावादिति भावः ॥ ९२८ ॥ उपास्ति-
वेधिशेषतया ब्रह्मोपदेशस्यार्थवत्त्वं शङ्कते *अथेति । अहं
ह्मेत्युपास्तेरपि तज्ज्ञानापेक्षत्वे व्यतिरेकमुक्त्वा तत्रैवान्वयमाह
तस्मिन्निति ॥ ९२९ ॥ ननु तत्त्वमादिवाक्याज्ज्ञानं चेदुत्पन्नं
र्हि तेनैव कृतार्थस्य किं सम्पदा, तत्राह *ब्रह्मेति । ब्रह्मधीर्न
ातन्त्रा पुमर्थहेतुः ज्ञानत्वादाज्यादिज्ञानवदित्यर्थः ॥ ९३० ॥
ानत्वहेतो रज्ज्वादिज्ञाने व्यभिचारात् भट्टाचार्यवचनविरोधा-
ात्मज्ञानस्य नान्यशेषताऽतो न सम्पच्छेषत्वेन ब्रह्मोपदेशः इति
माधत्ते *नैतदिति । सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।

ज्ञानस्यैव परार्थत्वमिति स्पष्टमुदीरितम् ॥ ९३१ ॥
सर्वत्रैव हि विज्ञानं संस्कारत्वेन निश्चितम् ॥
पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥ ९३२ ॥
अतो ब्रह्मणि विज्ञाते तावतैव कृतार्थता ॥
सम्पत्पक्षे त्वहं ब्रह्मेत्येतद्गौणं प्रसज्यते ॥ ९३३ ॥
सामानाधिकरण्योक्तिर्वस्त्वैक्ये मुख्यतां व्रजेत् ॥
खं छिद्रमुत्पलं नीलमित्यादौ तदवेक्षणात् ॥ ९३४ ॥
अन्यस्यान्यत्र सम्पत्स्यात्सिंहस्य पुरुषे यथा ॥
सामानाधिकरण्यं च गौणं सिंहः पुमानपि ॥९३५॥
ब्रह्मैव भवतीत्यादि ब्रह्मभावफलं च यत् ॥
सम्पत्तौ तन्न युज्येत नान्यदन्यद्भवेत्क्वचित् ॥ ९३६ ॥
सम्पदाऽपि ब्रह्मभावः स्याद्वाक्यादिति चेन्मतम् ॥
न मानसक्रियामात्रादमानाद्वस्त्वसिद्धितः ॥ ९३७॥

---

पराङ्गं चात्मविज्ञानादन्यत्रेति स्पष्टमुक्तत्वादित्यर्थः॥९३१॥९३२॥ आत्मधियः स्वतन्त्रत्वे फलितमाह *अत इति। अहं ब्रह्मास्मीति सम्पदमङ्गीकृत्य तच्छेषत्वं ब्रह्मोपदेशस्य निरस्य सम्पदमेव निरस्यति *सम्पदिति ॥९३३॥ एकवस्तुबोधिपदयोरेव मुख्यं सामानाधिकरण्यमित्यत्रोदाहरणमाह *खमिति ॥९३४॥ सम्पत्पक्षे तस्य गौणत्वमुदाहरणमुखेनाह *अन्यस्येति । अन्यत्र, आरोप इति शेषः ॥ ९३५ ॥ किञ्च सम्पत्पक्षे ब्रह्म वेद ब्रह्मैव-भवतीत्यादिफलवचनविरोधः स्यादित्याह *ब्रह्मैवेति ॥९३६॥ ब्रह्मोपास्तेरपि तद्भावः फलं स्याद्वचनबलादिति शङ्कते *सम्प-दाऽपीति । सम्पत्तेरमानत्वान्न तद्बलादन्यस्यान्यत्वसिद्धिरिति दूषयति *नेति । अमानत्वे हेतुः *मानसेति ॥९३७॥ अमाना-

अन्यथा योषितोऽग्नित्वं सिद्धं स्याद् ध्यानमात्रतः ॥
ब्रह्मत्वं ध्यानजन्यं चेदनित्यं स्वर्गवद्भवेत् ॥ १३८ ॥
तमोमात्रान्तरायत्वादाप्तमप्याप्यते तु तत् ॥
नच सम्पत् तमो हन्ति मिथ्याज्ञानात्मकत्वतः॥१३९॥
नच सम्पत्तिमात्रेण दुःखिनो दुःखसंक्षयः ॥
आनन्दरूपता वाऽतः फलशास्त्रस्य बाधनम् ॥१४०॥
अहं ब्रह्मेत्यतो नैव सम्पत्तिः किन्तु तादृशम् ॥
ब्रह्मात्माखण्डवस्त्वत्र शास्त्रेण प्रतिपाद्यते ॥१४१॥
कौटस्थ्यान्मम देहादौ ब्रह्मता न मदन्यता ॥
साक्षित्वाद् ब्रह्मतत्त्वस्य तस्मात्प्रत्यङ् न भिद्यते॥१४२॥
कौटस्थ्यं ब्रह्मणो रूपं साक्षित्वं प्रत्यगात्मनः ॥

---

दपि वस्तुसिद्धावतिप्रसङ्गमाह *अन्यथेति । यद्यपि माना-
दपि न वस्तुसिद्धिस्तथापि नान्यदन्यद्भवति इत्यत्र तात्पर्यम् ।
त्रैव दोषान्तरमाह *ब्रह्मत्वमिति ॥ १३८ ॥ ब्रह्मत्वस्य स्वतः-
सिद्धत्वेऽप्यसम्मते विस्मृतसुवर्णवज्ञानात्तदाप्तिर्न विरुद्धेत्या-
ह *तम इति । तर्हि तमोनिवृत्तिहेतुः सम्पदेष्टव्या, तत्राह *न
वेति ॥ १३९ ॥ किञ्च सम्पदो मिथ्याज्ञानत्वेन दुःखनि-
त्त्याद्यहेतुत्वात्तरति शोकमित्यादिफलवचनबाधः स्यादि-
त्याह *न च सम्पत्तीति ॥ १४० ॥ १४१ ॥ अखण्डस्यैव
शास्त्रगम्यत्वमुक्तं द्रढयितुं जीवब्रह्मणोरन्योन्यात्मत्वमुपपादय-
ते *कौटस्थ्यादिति । देहादिष्वागमापायिषु सत्सु निर्वि-
कारब्रह्मधर्मस्य कौटस्थ्यस्य देहद्वयाधिष्ठाने आत्मनि दृष्टेरा-
त्मा ब्रह्म, तद्धर्मस्यापरोक्षत्वस्य यत्साक्षादिति ब्रह्मणः श्रु-
र्ब्रह्म आत्मेत्यर्थः ॥१४२॥ एतदेव विशदयति * कौटस्थ्यमि-

अन्योऽन्यव्यत्ययेनैतद् दृष्टं तेनैकता तयोः ॥ ९४३ ॥
अव्यावृत्तानुगतमखण्डं ब्रह्म चेत्तदा ॥
तद्विद्यायां समाख्यैषा ब्रह्मविद्येति निश्चिता ॥९४४॥
सम्पत्तौ ब्रह्मविद्यैषा जीवविद्याऽथ वेत्ययम् ॥
सन्देह एव पुंसः स्यात्संशयात्मा विनश्यति ॥९४५॥
सर्वथा ब्रह्मभावीति कल्पना नैव युज्यते ॥
परब्रह्मैव विद्यायामधिकार्यत्र वर्णितम् ॥ ९४६ ॥
परब्रह्मण्ययुक्तैषा साधकत्वप्रकल्पना ॥
इति चेत्, श्रुतिमेवैवं त्वमुपालभसे न माम् ॥९४७॥
विद्याधिकारिणि ब्रह्मशब्दं प्रायुङ्क्त वेदवाक् ॥
उपालम्भस्त्वदीयोऽत आगमे पर्यवस्यति ॥ ९४८ ॥
अक्षमा भवतः केयं साधकत्वप्रकल्पने ॥
किं न पश्यति संसारं तत्रैवाज्ञानकल्पितम् ॥९४९॥

---

ति ॥ ९४३ ॥ किञ्चाहं ब्रह्मास्मीत्यस्याखण्डवस्तुबोधकत्वे तद्विद्यायां ब्रह्मविद्येति संज्ञा निर्णीता स्यात्, सम्पत्पक्षे तु नैवमित्याह *अव्यावृत्तेत्यादिना ॥ ९४४ ॥ ९४५ ॥ फलितमाह *परब्रह्मेति ॥ ९४६ ॥ परस्याज्ञातृत्वमयुक्तं तस्य ज्ञानमूर्त्तित्वादिति शङ्कते *परेति । शास्त्रं ब्रह्मणि साधकत्वादि दर्शयति, तच्चापौरुषेयमदोषं नोपालम्भार्हम् अतस्तस्मिन्नविद्यासाधकत्वादि स्वीकार्यमित्याह *श्रुतिमेवेत्यादिना । ॥ ९४७ ॥ ९४८ ॥ सर्वस्यापि ब्रह्मण्यध्यस्तत्वात्तदन्तर्भूतसाधकत्वं तत्राध्यस्तमित्यभ्युपगमे नानुपपत्तिरित्याह *अक्षमेति ॥ ९४९ ॥ ननु संसारस्य जीवनिष्ठत्वानुभवान्न ब्रह्मनिष्ठतेति, नेत्याह *अनात्मेति । न तावज्जीवपदवाच्यः संसारी संसारान्त-

अनात्मवस्तु यत्किञ्चित्तद् ब्रह्मानवबोधतः ॥
ब्रह्मण्येव समध्यस्तं शुक्तिकारजतादिवत् ॥ ९५० ॥
यच्चोद्यं वादिभिः प्रोक्तं कृत्स्नाकृत्स्नादिखण्डनम् ॥
तत्र ग्राह्यः कृत्स्नपक्षो न दोषोऽत्र मनागपि ॥९५१॥
न कात्स्न्र्यग्राहिमानेन द्वैतापत्तावकृत्स्नता ॥
शङ्कनीया, यतो मानं मेयस्पर्द्धि न कुत्रचित् ॥९५२॥
ऐकात्म्यस्यैव मेयत्वात्तत्थैवावबोधनात् ॥
अन्यथा स्यादमानत्वमयथावस्तुबोधिनः ॥ ९५३ ॥
अवास्तवत्वान्मानस्य द्वैतं नैतत्प्रसज्यते ॥
अवस्तुनोऽपि मानत्वं वस्तुतत्त्वावबोधनात् ॥९५४॥
प्राग्बोधान्मानमात्रादेर्वस्तुत्वमवभासताम् ॥
ऊर्ध्वं नैव तु वस्तुत्वं भासते बाधितत्वतः ॥ ९५५ ॥
स्वतो वा परतो वेति कृत्स्नत्वे यद्विकल्पनम् ॥

---

र्भावाज्जीवपदलक्ष्यो ब्रह्मैवेति तत्रैव स्वाज्ञानादनात्मवस्त्वध्यस्त-
म् अनात्मत्वात्सम्मतवदित्यर्थः ॥ ९५० ॥ पूर्वपक्षोक्तचोद्यमनू-
द्य परिहरति *यदिति ॥ ९५१ ॥ ननु कृत्स्नत्वग्राहिमानमस्ति
न वा ? अन्त्ये तदसिद्धिरिति मत्वाऽऽद्ये दोषमाह *नेति । न
कारस्य शङ्कनीयेत्यनेन सम्बन्धः । मानस्याद्वितीयवस्तुबोधक-
त्वान्न द्वैतप्रसक्तिरिति परिहरति *यत इति ॥ ९५२ ॥ उक्तमेव
व्यनक्ति *ऐकात्म्यस्येति ॥ ९५३ ॥ एवमपि मानस्य व-
स्तुपरिच्छेदकत्वात्कृत्स्नत्वासिद्धिरिति, नेत्याह *अवास्तवत्वा-
दिति । अवस्तुत्वे बाध्यवदमानत्वमाशङ्क्याह *अवस्तुन इति
॥ ९५४ ॥ बाधानुपलम्भात्प्रमात्रादेर्वस्तुत्वमाशङ्क्यासिद्धिमा-
ह *प्रागिति ॥ ९५५ ॥ चोद्यान्तरमनूद्य समाधत्ते *स्वत इ-

तत्र स्वतस्त्वमादेयं न च विद्या निरर्थिका ॥ ९५६ ॥
स्वतः कृत्स्नमपि ब्रह्म स्यादकृत्स्नमविद्यया ॥
तदविद्यापनुत्त्यर्थं ब्रह्मविद्योपयुज्यते ॥ ९५७ ॥
अहमेव परब्रह्मेत्यस्यार्थस्याप्रवुद्धता ॥
अविद्येति वयं ब्रूमो येह नास्ति सदात्मनि ॥ ९५८ ॥
परात्मनि च चैतन्यं नित्यं स्याच्छशिशैत्यवत् ॥
अविद्या न तथा तत्र युक्ता चन्द्रे यथोष्णता ॥९५९॥
अविद्यमानैवाविद्या वस्तुनस्त्वविचारिणाम् ॥
अविचारेण मूढानां वज्रादपि दृढायते ॥ ९६० ॥
बुद्धतत्त्वस्य लोकोऽयं जडोन्मत्तपिशाचवत् ॥
बुद्धतत्त्वोऽपि लोकस्य जडोन्मत्तपिशाचवत् ॥९६१॥
बुद्धतत्त्वो हि संसारिलोकचेष्टाविडम्बकः ॥
संसारिलोकोऽप्येतस्य बोधभाषाविडम्बकः ॥९६२॥

---

त्यादिना ॥ ९५६ ॥ ९५७ ॥ अविद्यायाः विद्याऽपनोद्यत्वयोग्यतां वक्तुं तत्स्वरूपमाह *अहमेवेति । तस्याः विद्यया निवृत्तिं विद्वदनुभवेन साधयति *येह नास्तीति ॥ ९५८ ॥ प्रकाशाप्रकाशयोर्विरुद्धत्वेनात्मन्यविद्याया एवायोगान्न तन्निवर्तकत्वेन ब्रह्मविद्याया अर्थवत्त्वमिति शङ्कते *परात्मनीति ॥ ९५९ ॥ किमात्मनि वास्तव्यविद्याऽनुपपन्ना उत कल्पिताऽपि, नाद्यः, इष्टत्वादित्याह *अविद्यमानेति । द्वितीयं प्रत्याह *अविचारेणेति । युक्त्यसहत्वेऽप्यविचारदशायां न जानामीत्यनुभवसिद्धत्वात्कल्पिता सा दुरपह्नवेति भावः ॥ ९६० ॥ विद्वद्दृष्ट्याऽविद्यमानाऽप्यविद्याऽज्ञानां वस्तुवद्भासत इत्यत्र गमकमाह *बुद्धेति ॥ ९६१ ॥ तद्व्याचष्टे*बुद्धतत्त्व इति ॥ ९६२ ॥

तस्मादुत्पन्नतत्त्वस्य माऽस्त्वविद्या चिदात्मनि ॥
अत्युत्पन्नस्य दृष्ट्यैषा न वेद्मीत्यनुभूयते ॥ ९६३ ॥
नालुप्तचित्यविद्येति यो ब्रवीति दुराग्रहात् ॥
सोऽलुप्तचित्त्वं वेत्त्यस्य केनेति तदुदीर्यताम् ॥९६४॥
मानेन चेत्, तदा मानमज्ञातार्थं विना नहि ॥
ततो बलादविद्येयमङ्गीकार्या चिदात्मनि ॥ ९६५ ॥
अङ्गीकृताऽप्यवस्तुत्वाद्बाधिका नेति चेन्न तत् ॥
अवस्तुतामजानानां बाधतैवाहिवस्तुवत् ॥ ९६६ ॥
रज्जुसर्पोऽप्यप्रबुद्धं भीषयेत्तात्त्विकाहिवत् ॥
विद्यावैयर्थ्यदोषोऽतो नैवास्मान्प्रति ढौकते ॥९६७॥
अनादेरपि बाधोऽस्ति तमसो विद्ययाऽन्यथा ॥
प्रमाणानां प्रमाणत्वं न कचिद्वः प्रसिद्ध्यति ॥ ९६८ ॥
अज्ञातज्ञापकं मानमनाद्यज्ञानबाधया ॥
घटादावपि मानत्वं लभते किमुतात्मनि ॥ ९६९ ॥

---

उक्तमर्थमुपसंहरति *तस्मादिति ॥९६३॥ किञ्च चिद्रूपे ब्रह्मण्यविद्याऽनुपपन्नेति वदता मानेन तज्ज्ञातमिति वक्तव्यं, मानं विना मेयासिद्धेः । मानं चाज्ञातवस्तुबोधीति तत्रानिच्छताऽप्यज्ञानं स्वीकार्यमित्याह *नेत्यादिना ॥९६४॥९६५॥९६६॥ कल्पिताऽप्यविद्या यावदधिष्ठानसाक्षात्कारं भासत एवेत्यत्र दृष्टान्तमाह *रज्जुसर्प इति । विद्ययाऽविद्यानिवृत्तौ फलितमाह *विद्येति । न ढौकते न स्पृशति ॥ ९६७ ॥ अनाद्यज्ञानस्यात्मवदनिवृत्तिमाशङ्क्यातिप्रसङ्गेन प्रत्याह *अनादेरिति । लौकिकवैदिकसर्वप्रमाणानां स्वविषयाज्ञाननिवर्तकत्वेनैव प्रामाण्यादिति भावः ॥ ९६८ ॥ तदेव स्पष्टयति *अज्ञातेति ॥ ९६९ ॥ उक्तमर्थं बुद्धिसौकर्याय पुनः स-

एतावता मुमुक्षूणां चोद्ये यत्कर्तृदूषणम् ॥
तन्निराकृत्य विद्यायाः कर्तृ ब्रह्मेति साधितम् ९७०॥
ब्रह्मणो ज्ञानकर्तृत्वं यदुक्तं नदिहाधुना ॥
ब्रह्म वा इदमग्रेऽभूदिति वाक्येऽपि योज्यते ॥९७१॥
निर्णीतो ब्रह्मशब्दार्थो वैशब्दोऽवधृतौ भवेत् ॥
दृश्यमानं जीवरूपमिदंशब्देन कथ्यते ॥ ९७२ ॥
विद्यायाः प्राक्तनः काल उक्तोऽग्रइति शब्दतः ॥
अभूतभवनं चैवमासीदिनिपदोदितम् ॥ ९७३ ॥
मुख्यब्रह्मैव बोधात्प्राङ्नामरूपप्रवेशनात् ॥
जीवरूपमभूत्तेन विद्यायाः कर्तृ तद्भवेत् ॥ ९७४ ॥
एवं स्थितेऽत्र वाक्यार्थे वैशब्देनावधारणात् ॥
सूचितं जीवमिथ्यात्वं यत्तत्स्पष्टमुदीर्यते ॥ ९७५ ॥
जीवभावदशायां च ब्रह्मैव न तदन्यथा ॥

---

क्षिप्य दर्शयति *एतावतेति ॥ ९७० ॥ एवं ब्रह्मपदार्थक-थनप्रसङ्गाद्ब्रह्म वा इदमग्र आसीदिति वाक्यार्थं सङ्क्षेपतोऽभि-धाय उक्तार्थपरत्वेन वाक्यं योजयितुं प्रतिजानीते *ब्रह्मण इति । परकीयचोद्यनिरासानन्तरं वाक्ययोजनावसरं दर्शयति *अ-धुनेति ॥ ९७१ ॥ वाक्यस्थपदानि क्रमेण विभजते *निर्णीत-इत्यादिना ॥९७२॥९७३॥ पदार्थमुक्त्वा वाक्यार्थमाह *मुख्ये-ति ॥ फलितमाह *तेनेति। येनापरिच्छिन्नं ब्रह्मैवाविद्यातत्कार्य-योः प्रतिबिम्बरूपेण प्रविश्य तद्धर्मानात्मन्यारोप्य स्वस्वरूपभू-तबिम्बाज्ञानान्मुह्यति तेनेत्यर्थः ॥९७४॥ उक्तार्थस्य ब्रह्मेदमिति सामानाधिकरण्येनैव सिद्धे किमवधारणवाचिना वैशब्देनेति, तत्राह *एवमित्यादिना ॥ ९७५ ॥ *अनिर्ज्ञातेति । एवं च

अनिर्ज्ञातात्मतत्त्वं सदब्रह्मेव विभाति तत् ॥१७६॥
अज्ञानतज्जजीवत्वसङ्गतिर्ब्रह्मणोऽत्र का ॥
कार्यकारणताऽहो स्विदात्मात्मीयत्वलक्षणा ॥१७७॥
ब्रह्माकार्यमनादित्वादविकारादकारणम् ॥
आत्मात्मीयत्वसम्बन्धो ब्रह्मणेतरवस्तुनः ॥ १७८ ॥
स्वतो निरात्मनोर्ब्रह्म भवेदज्ञानकार्ययोः ॥
स्वरूपं तेन सम्बन्ध आत्मात्मीयत्वलक्षणः ॥१७९॥
निरात्मा सात्मकत्वाय स्वात्मप्रदमपेक्षते ॥
तेनाविद्या स्वयं सेद्धुं ब्रह्मतत्त्वमपेक्षते ॥ १८० ॥
कूटस्थत्वादसङ्गत्वान्मोहतत्कार्यसङ्गतिम् ॥
ब्रह्म नापेक्षते नापि ताभ्यां युज्येत कर्हिचित् ॥१८१॥

---

जीवपरभेदो वास्तव एव विद्यया निवर्त्तत इति मतमवधारणेन निरस्तमिति भावः ॥ १७६ ॥ अज्ञानतत्कार्यप्रतिबिम्बितं ब्रह्मैव मोहाज्जीवत्वमापन्नमित्यनुपपन्नं तस्यासङ्गतस्य जडेन सम्बन्धायोगादित्याक्षिपति *अज्ञानेति । सम्बन्धायोगं प्रकटयितुं विकल्पयति *कार्येति ॥ १७७ ॥ आद्यं प्रत्याह *ब्रह्मेति । द्वितीये जडस्य चेतनसम्बन्धापेक्षत्वेऽपि ब्रह्मणस्तत्सम्बन्धानपेक्षत्वान्न तेन सम्बन्धसिद्धिरित्याह *आत्मेति ॥१७८॥ अनात्मनो ब्रह्मसम्बन्धापेक्षामुपदर्शयति *स्वत इत्यादिना । जडस्य ब्रह्माधीनसत्ताकत्वात्तत्सम्बन्धाभावे शून्यत्वापातात्स्वसिद्ध्यर्थमेव जडं ब्रह्मसम्बन्धमपेक्षत इत्यर्थः ॥ १७९ ॥ १८० ॥ ब्रह्मणो जडसम्बन्धानपेक्षत्वे हेतुमाह *कूटस्थत्वादिति । अनन्याधीनसिद्धिकत्वादित्यर्थः । न केवलं सम्बन्धानपेक्षा ऽसङ्गस्यान्यसम्बन्धोऽपि न घटत इत्याह *नापीति ॥ १८१ ॥

नीलत्वेन वियद्योगः स्वबुद्ध्यपेक्षया न सन् ॥
आत्मनैवं तमोयोगो नात्मविद्यानुरोधतः ॥ ९८२ ॥
अविद्यावृत्तवीक्षायामन्यसङ्गतिरात्मनि ॥
भात्यात्मात्मीयरूपेण स्याज्जगत्सात्मकं ततः ॥९८३॥
प्रत्यग्रूपातिरेकेण नान्यद्रूपमनात्मनः ॥
वादिभिर्युक्तिभिः शक्यं क्वचित्साधयितुं सदा॥९८४॥
स्वरूपशब्दवाच्योऽयं सर्वत्रात्मैव नेतरः ॥
तथा चात्मातिरेकेण स्वरूपं कस्य सम्भवेत् ॥९८५॥
अतोऽविद्यामहानिद्रासंवीतमनसामसौ ॥
जन्मादिविक्रियाषट्कस्वप्नदर्शनविभ्रमः ॥ ९८६ ॥

---

आत्मनो वास्तवतादात्म्याभावेऽपि काल्पनिकं तदुपपद्यत इति दृष्टान्तमुखेन परिहरति *नीलत्वेनेत्यादिना । यथा वियतो वास्तवसम्बन्धाभावेऽपि नीलं नभ इति तादात्म्यानुभवात्तयोर्योगः कल्प्यते, एवमात्मनो जडतादात्म्यानुभवादविद्यासम्बन्धो वक्तव्य इत्यर्थः ॥ ९८२ ॥ चिज्जडयोरितरेतरतादात्म्ये फलितमाह *जगदिति । अन्यथा सन् घट इति सामानाधिकरण्यबुद्धिर्न स्यादिति भावः ॥ ९८३ ॥ आत्मातिरेकेणानात्मनो न निरात्मत्वं, वादिभिस्तस्य वस्तुत्वाङ्गीकारादिति, तत्राह *प्रत्यगिति ॥ ९८४ ॥ अशक्तिमेवोपपादयति *स्वरूपेति ॥ ९८५ ॥ जगतो जन्मादिदृष्टेर्ब्रह्मणोऽर्थान्तरत्वसिद्धिरित्याशङ्क्य तस्य ब्रह्माव्यतिरेकत्वेन सत्त्वस्य सदेव सोम्येत्यादिश्रुतिसिद्धत्वाज्जन्मादिधीः स्वप्नधीवद् भ्रान्तिरित्याह *अत इति । जगज्जन्मादिरूपविक्रियाषट्कमधिकृत्य स्वप्नदर्शनवद्विभ्रमो जगत्यविवेकिनामिति योजना ॥९८६॥

ब्रह्मैव सत्स्वतः साक्षात्तदबोधैकहेतुनः ॥
इदंरूपं समापेदे रशनेवाहिरूपताम् ॥ ९८७ ॥
अविद्याफलकारूढं वस्तु विद्याधिकारिताम् ॥
वेद्यवेदितृरूपेण द्वैविध्यात्प्रतिपद्यते ॥ ९८८ ॥
स्वतो मुक्तं ब्रह्म यस्मात्तस्माद्वेद्यत्वमर्हति ॥
संसारित्वमविद्यातो मुमुक्षुत्वं ततोऽर्हति ॥ ९८९ ॥
ब्रह्म वा इदमग्रेऽभूदिति वाक्ये गुरूत्तरे ॥
श्रुतं विद्याधिकारित्वं यत्तद् ब्रह्मणि सुस्थितम्॥९९०॥
किमवेदिति वेद्यस्य य आक्षेप उदीरितः ॥
तं समाधित्सुराहैतत्तदात्मानमवेदिति ॥ ९९१ ॥
स्वरूपस्यैव वेद्यत्वे स्वस्कन्धारोहदूषणम् ॥
यदुक्तं तदसत्, तस्मात्सोपाधिर्वेदिता ततः ॥९९२॥
अवेत्सोपाधिरात्माऽयमात्मानं निरुपाधिकम् ॥
ज्ञातृज्ञानज्ञेयभेदान्न दोषोऽत्र मनागपि ॥ ९९३ ॥
अविविक्तस्तु देहाद्यैरात्मा भवति वेदिता ॥

---

एवमवधारणार्थमुपपाद्य वाक्यार्थमुपसंहरति *ब्रह्मैवेति । कथमबोधादपि विरुद्धाकारता तत्राह *रशनेति ॥ ९८७ ॥ एवं वाक्यार्थनिष्पत्तौ फलितमाह *अविद्येत्यादिना । परं हि ब्रह्मानाद्यविद्याख्यं फलकमधिरोहति । तदेव पुनर्बुद्ध्याद्युपहितं सत् अनुपहितब्रह्मविद्यायामधिकारित्वमधिगच्छतीत्यर्थः ॥ ९८८ ॥ ९८९ ॥ उक्तवाक्यार्थस्य निरवद्यतामाह *ब्रह्मेति ॥ ९९० ॥ उत्तरवाक्यतात्पर्यमाह *किमिति ॥ ९९१ ॥ आत्मन एव ज्ञेयत्वे यद् दूषणमुक्तं तदनूद्य निराचष्टे * स्वरूपस्येति ॥ ९९२ ॥ उक्तमेव व्यनक्ति *अवेदि-

विविक्तात्मा वेदितव्यो धीवृत्तिर्वेदनं भवेत् ॥९९४॥
यो वेदिता घटादीनामात्मनोऽप्येष वेदिता ॥
घटादीनामात्मनश्च बुद्धिरेव हि वेदनम् ॥ ९९५ ॥
वेद्यं वेदनसामग्रीत्युभयं तु विशिष्यते ॥
प्रत्यक्षादीनि सामग्री घटादौ श्रुतिरात्मनि ॥९९६॥
यद्गोचरा स्यात्सामग्री ज्ञानं तद्गोचरं यथा ॥
रूपगोचरदृग्जन्यवेदनं रूपगोचरम् ॥ ९९७ ॥
तथाऽऽत्मगोचरश्रुत्या जन्या धीरात्मगोचरा ॥
स्वाभाविकात्मा वेद्योऽत्र सर्वोपाधिविवर्जितः॥९९८॥
प्राणित्यपानिति व्यानित्युदानिति समानिति ॥
प्रविश्य देहं यः सोऽयमात्मा स्वाभाविको मतः ॥९९९॥
प्राणनादिक्रियैवात्र विस्पष्टाऽऽत्मा तु न स्फुटः ॥

---

ति ॥ ९९३ ॥ ज्ञात्रादिभेदमाह *अविविक्त इति ॥ ९९४ ॥ किञ्चानात्मद्रष्टुरेव ब्रह्मविद्याकर्तृत्वान्न ज्ञेयाभेदशङ्केत्याह *य इति । तत्र हेतुमाह *घटादीनामिति । घटादिज्ञानवदात्मधियोऽपि बुद्धिपरिणामत्वादुभयोरेव कर्तृत्वमिति भावः ॥ ९९५ ॥ एवं ज्ञातृज्ञेययोरविशेषेऽप्यात्मानात्मधियोर्न साङ्कर्यमित्याह *वेद्यमिति । सामग्रीभेदं दर्शयति *प्रत्यक्षादीनीति ॥ ९९६ ॥ ज्ञानस्य स्वतो विशेषाभावे नियतविषयत्वं न स्यादिति, नेत्याह *यदिति । उक्तमर्थमुदाहरणेन स्फुटयति *यथेति ॥ ९९७ ॥ श्रुतिजन्यधीविषय आत्मा कीदृशस्तत्राह *स्वाभाविकेति । आत्मतत्त्वस्यासकृदुक्तत्वेऽपि तस्य दुर्बोधत्वात्पुनः प्रसङ्गं सम्पाद्य बोध्यत इति बोध्यम् ॥ ९९८ ॥ कोऽसावात्मा स्वाभाविकस्तत्राह *प्राणितीति ॥ ९९९ ॥

इति चेत्, तर्ह्यसौ द्रष्टा श्रोता मन्तेति निश्चिनु ॥१०००॥
ज्ञानशक्तिषु चैतन्यमाविर्भवति यद्यपि ॥
तथापि तदुपाधित्वान्न शुद्ध इति चेच्छृणु ॥ १००१ ॥
स्पृष्टेर्द्रष्टा श्रुतेः श्रोता मतेर्मन्तेति गम्यताम् ॥
अनित्यदृग्घटद्रष्टा दृष्टेर्द्रष्टा तु नित्यदृक् ॥ १००२ ॥
घटः कालविभेदेन दृश्यते च न दृश्यते ॥
न कदाचिन्न दृश्यन्ते दृष्टिश्रुत्यादिवृत्तयः ॥ १००३ ॥
स्पृश्यमाने घटे रूपं नेक्षते पिहितेक्षणः ॥
अपश्यतो रूपदृष्टिरनित्येत्यवगम्यते ॥ १००४ ॥
दृष्टिश्रुत्यादिविषया या दृष्टिः सा त्वनाशिनी ॥
विषयव्यभिचारेऽपि नैव व्यभिचरत्यसौ ॥ १००५ ॥

---

प्राणनादिक्रियाव्यतिरिक्तत्वेनात्मा स्पष्टं न स्फुरतीति शङ्कित्वा प्रकारान्तरेण बोधयति *प्राणनेति ॥ १००० ॥ दर्शनादिक्रियाशक्तिमत्स्वरूपोक्तिमात्रेण जिज्ञासा न शाम्यतीति शङ्कते *ज्ञानेति ॥ १००१ ॥ तर्हि दृष्ट्यादिसाक्षित्वेन आत्मानं बुध्वा तुष्यतु भवानित्याह *दृष्टेरिति । ननु घटादिद्रष्ट्रपेक्षया तद्‌ज्ञानद्रष्टरि को विशेषस्तत्राह *अनित्यदृगिति ॥ १००२ ॥ घटद्रष्टुरनित्यत्वमुपपादयति *घट इति । घटादेः स्वसत्तायां ज्ञायमानत्वनियमाभावात् न तद्‌द्रष्टा नित्यदृग्रूप इत्यर्थः ॥ दृष्टिद्रष्टरि ततो विशेषं दर्शयति *नेति । बुद्धिवृत्तयो विद्यमानदशायां सदा दृश्यन्त एवेत्यर्थः ॥ १००३ ॥ अमुमेव श्लोकं व्याकरोति *स्पृश्यमान इत्यादिना ॥१००४॥ *विषयेति ॥ विमता दृष्टिर्नित्या अव्यभिचारित्वात्परेषामात्मवदिति प्रयोगोपपत्तेरिति भावः ॥ १००५ ॥ स्वप्नसाक्षित्वेना-

घटाद्याभासदृष्टिस्तु स्वप्नेऽन्धस्यापि विद्यते ॥
चक्षुर्दृष्टिविनाशेऽपि या दृष्टिः सा चिदात्मदृक् ॥१००६॥
वासनाप्रत्ययौ दृष्टौ स्वप्नजाग्रदवस्थयोः ॥
यथाऽसौ नित्यदृष्टिः स्यात्सा सुप्तौ च न नश्यति१००७
द्रष्टुर्दृष्टेर्न लोपोऽस्ति मुग्धानां लोपविभ्रमः ॥
दृश्यलोपकृनो नो चेत्सुप्तिः केन प्रसिद्ध्यति ॥१००८॥
सुप्त्यादिसाधिका दृष्टिरेव रूपं चिदात्मनः ॥
वह्नेरिवौष्ण्यमात्मानमेतमेवाधिकार्यवेत् ॥ १००९ ॥
अधिकारित्वमापन्नं ब्रह्म सोपाधिरूपधृक् ॥
नित्यदृग्रूपमात्मानमेवावेन्निरुपाधिकम् ॥ १०१० ॥
विज्ञातारं न विज्ञातेर्विजानीया इति श्रुतेः ॥

---

ऽपि तस्य नित्यत्वमाह *घटादीति ॥ अपिशब्दादनन्धो गृह्यते । या स्वप्नकल्पितघटाद्युपलब्धिः सैव स्वप्रकाशात्मचैतन्यमित्यर्थः । कथं तर्हि स्वप्नघटादौ चाक्षुषत्वानुभवस्तत्राह *चक्षुरिति । तदेन्द्रियाणामुपरतत्वात्सोऽपि भ्रम एवेति भावः ॥ १००६ ॥ जाग्रत्स्वप्नकालिकसाक्षिणः सुप्त्यवस्थायामप्यवस्थानमाह *वासनेति ॥ १००७ ॥ तत्र मानमाह *द्रष्टुरिति । कथं तर्हि सुप्तौ ज्ञानं नास्तीत्यनुभवस्तत्राह *मुग्धानामिति। सुप्तौ चैतन्यानङ्गीकारे दण्डमाह *नो चेदिति ॥१००८॥ चैतन्यस्य नित्यत्वेऽपि मुमुक्षुवेद्यं ब्रह्म किंरूपं ? तत्राह *सुप्त्यादीति ॥ १००९ ॥ उक्तमेव विवृणोति *अधिकारित्वमिति ॥ १०१० ॥ वाक्यशेषविरोधं चोदयति *विज्ञातारमिति । किमात्मनो वृत्तिविषयत्वं विरुध्यते किंवा चिद्विषयत्वं ? नाद्य इत्याह *न तथेत्यादिना । बुद्धिवृत्तिसाक्षिचैत-

नैवात्मा वेदितुं शक्य इति चेत्, न, तथेक्षणात्॥१०११॥
विज्ञातेरपि विज्ञाता न विज्ञेयः कदाचन ॥
इत्येवं वेदने ब्रूहि स्यादशक्तिस्तवात्र का ॥ १०१२ ॥
नैतावता स्फुरत्यात्मा स्फोरकज्ञानवर्जनात् ॥
इति चोद्यमचोद्यं स्यादन्यज्ञानानपेक्षणात् ॥१०१३॥
नित्यदृग्रूप आत्मेति धीवृत्तिः शास्त्रतो यदि ॥
असन्दिग्धा समुत्पन्ना तदाऽस्य स्फोरकेण किम्॥१०१४॥
निश्चिनोति यदा शास्त्रादात्मनोऽस्फोर्यरूपताम् ॥
तदा स्फोरकमाकाङ्क्षन्नुन्मत्तः कथं भवेत् ॥ १०१५ ॥
नाविद्यमाने विषये स्यादाकाङ्क्षाऽत्र धीमतः ॥
दृगात्मस्फोरिका दृष्टिर्न सम्भवति कुत्रचित् ॥१०१६॥
द्वे एव दृष्टी धीवृत्तिरात्मा चैतयनयोर्न धीः ॥
शक्ताऽऽत्मानं स्फोरयितुमात्मना स्फोर्यते यतः॥१०१७॥
आत्मदृष्टिश्च नात्मानं स्फोरयेदविकारतः ॥
स्फोरकासम्भवाद्धीमान्न स्फोरकमपेक्षते ॥ १०१८ ॥

---

न्याविषयब्रह्मैवाहमित्येवमाकारवृत्त्यङ्गीकृतौ विरोधाभावात्, चिद्विषयत्वं तु नाङ्गीकृतमिति भावः। तर्हि वृत्तेर्जडत्वादात्मस्फोरकं ज्ञानान्तरमपेक्षितव्यमिति कुतो न विरोध इति शङ्कित्वा परिहरति *नेति॥१०११॥१०१२॥ १०१३ ॥ उक्तहेतुं विवृणोति *नित्येति ॥ १०१४ ॥ अपि चात्मनः स्फुरणविषयत्वाभावे शास्त्रान्निश्चिते तद्विषयस्फुरणाकाङ्क्षा व्याघातादेव नोदेतीत्याह *निश्चिनोतीति ॥ १०१५ ॥ आत्मस्फोरकज्ञानस्य असम्भावितत्वादपि न तद्विषयाकाङ्क्षेत्याह *नेति ॥ १०१६ ॥ दृष्टिविभागपूर्वकं तस्यासम्भावितत्वमेव विशदयति। *द्वे एवेति ॥ १०१७ ॥ १०१८ ॥ आत्मनो

अविद्यारोपनिह्नुत्यै तमात्मानमवेदिति ॥
आत्माभिमुखधीवृत्तिरात्मवेदनमुच्यते ॥ १०१९ ॥
आत्मानमेव तदवेदित्युक्तादेवकारतः ॥
निर्माल्यवत्परित्याज्यं देहादीत्यवगम्यते ॥ १०२० ॥
त्यज्यमाने तु देहादावात्मैवैकोऽवशिष्यते ॥
परित्यक्तुमशक्यत्वादात्मानं निह्नुतेऽत्र कः ॥१०२१॥
अन्योऽन्यं विवदन्ते ये वादिनस्तेऽस्मदात्मनि ॥
संवदन्ते हि सर्वेऽपि तस्यानुभवरूपतः ॥ १०२२ ॥
साधनं दूषणं सर्वमनुभूतिबलाश्रयात् ॥
सिद्धायते वादिनां साऽनुभूतिस्तेन सम्मता ॥१०२३॥
अभावो येन भावेन ज्ञायते शून्यवादिना ॥
तस्य भावस्य सद्भावो वद केन निवार्यते ॥ १०२४ ॥
व्यभिचारि न यत्रास्ति प्रमाणं सर्ववादिनाम् ॥

---

वृत्तिव्याप्यत्वेऽपि फलव्याप्यत्वानङ्गीकृतेर्न वाक्यशेषविरोध इत्युपसंहरति *अविद्येति ॥ १०१९ ॥ १०२० ॥ इदं नेदं नेति देहादेरनात्मत्वनिश्चये फलमाह *त्यज्यमान इति ॥ ॥ १०२१ ॥ सर्ववादिसम्मतत्वाच्चास्मदभिमतात्मा दुरपह्नव इत्याह *अन्योऽन्यमिति ॥ १०२२ ॥ भवदभिमतात्मनोऽनुभवरूपत्वेऽपि कथं तत्र वादिनां सम्मतिस्तत्राह *साधनमिति । स्वमतसाधनार्थं परमतदूषणार्थं च योऽनुभवः सर्ववादिभिरुपन्यस्यते तस्यैवास्माभिरात्मत्वेनाङ्गीकारादिति भावः ॥ १०२३ ॥ शून्यवादिनाऽनुभवस्याप्यनङ्गीकारात्कथं तत्सम्मतिस्तत्राह *अभाव इति । अनुभवानङ्गीकारे तदभिमतशून्यस्याप्यसिद्धिः स्यादिति भावः ॥ १०२४ ॥ सर्वप्रत्यय-

स्वमहिम्ना च यत्सिद्धं तदपह्नूयते कथम् ॥ १०२५ ॥
अनुभूत्यवसानानि सर्वमानानि मानताम् ॥
लभन्ते, नान्यथा, नातो व्यभिचारः कथञ्चन ॥१०२६॥
सिद्ध्यन्ति सर्वमानानि यत्प्रसादात्तदन्यतः ॥
कस्मात्सिद्ध्येदतस्तत्तु स्वमहिम्नैव सिध्यति ॥१०२७॥
अप्राप्तः प्राप्यते योऽयमत्यक्तस्त्यज्यते तथा ॥
जानीयात्तमनात्मानं बुद्ध्यन्तं वपुरादिकम् ॥ १०२८ ॥
त्यज्यमानेऽपि न त्यक्तः प्राप्यमाणेऽपि नाप्यते ॥
आगमापायसाक्षी यः स आत्माऽनुभवात्मकः ॥१०२९॥

---

साक्षित्वाच्चात्मानुभवो दुरपह्नव इत्याह *व्यभिचारीति । आगमापायशीलं वादिनां सम्मतं प्रत्यक्षादि यद्विषये नास्ति यत्साधकं न भवतीति यावत् । तस्य प्रमित्युत्पत्तिसाक्षित्वेन पूर्वमेव सिद्धत्वादिति भावः । केन तर्हि तत्सिद्धिस्तत्राह * स्वेति । चोऽवधारणे ॥ १०२५ ॥ प्रमित्युत्पत्तिसाक्षिणोऽप्यनन्तरं विनाशात्कथं दुरपह्नवत्वं तत्राह *अनुभूतीति । प्रमितिस्थितिकालेऽपि तत्साधकानित्यसाक्ष्यनभ्युपगमे तस्याः प्रमात्वमेव न सिद्ध्येत्, साधकान्तराभावादिति भावः । फलितमाह *नात इति । व्यभिचारो नाशः, साक्षिण इति शेषः ॥१०२६॥ उक्तमेव व्यनक्ति*सिध्यन्तीति ॥ १०२७ ॥ किञ्चात्मनो यथा प्राप्तत्वं नास्ति तथा त्याज्यत्वमपि नेति वक्तुं तयोरनात्मविषयत्वमाह *अप्राप्त इति । यः प्रलयादावनाप्तः सन्पश्चात्प्राप्यते योऽयं विवेकादिदं नेदं नेति पृथक् क्रियते तद्देहादिबुद्धिपर्यन्तं पञ्चकोशमप्यनात्मानं विद्यादित्यर्थः ॥ १०२८ ॥ आत्मनि तद्वैलक्षण्यमाह *त्यज्यमान इति । आत्मन आप्तित्यागाभावे हेतुमाह *आगमेति ॥ १०२९ ॥ एवकारार्थमुक्त

उत्सार्यानात्मनः सर्वानन्वयव्यतिरेकतः ॥
प्रत्यक्प्रधानया दृष्ट्या निजात्मानमवेत्परम् ॥१०३०॥
अहं ब्रह्मास्मि नो जीव इत्यवेद्ब्रह्मरूपताम् ॥
शोधितस्याहमर्थस्य युज्यते ब्रह्मरूपता ॥१०३१॥
ब्रह्मता नात्मनोऽन्यत्र नात्मता ब्रह्मणोऽन्यतः ॥
तद्याथात्म्याप्रबोधात्तु तयोरेष विपर्ययः ॥ १०३२ ॥
अब्रह्मानात्मताहेतौ प्रत्यग्ध्वान्ते निवर्त्तिते ॥
आत्मानमेव ब्रह्मेति निर्विघ्नं प्रतिपद्यते ॥ १०३३ ॥
अविश्वासोऽत्र विघ्नश्चेन्न तस्याविषयत्वतः ॥
सर्वविश्वासहेतुत्वादविश्वासः क आत्मनि ॥१०३४॥
सर्वोऽप्यात्मनि विश्वस्य ततोऽनात्मनि तद्वशात् ॥
आविद्वदङ्गनाबालं विश्वसित्यनपेक्षतः ॥ १०३५ ॥
चैतन्यमात्ररूपोऽयं सदाऽनस्तमयोदयः ॥

---

मुपसंहरति *उत्सार्येति ॥ १०३० ॥ आत्मवेदनमभिनीय दर्शयन्नहं ब्रह्मास्मीत्यस्यार्थमाह *अहमिति । परिच्छिन्नस्य जीवस्य कथं ब्रह्माभेदः ? तत्राह *शोधितेति ॥ १०३१ ॥ आत्मन्यब्रह्मतायाः ब्रह्मणि चानात्मतायास्तर्हि कथं प्रथा तत्राह *तद्याथात्मेति ॥१०३२॥ विपर्ययबीजमुक्त्वा तस्य तन्निवृत्तौ निवृत्तिमाह *अब्रह्मेति॥१०३३॥वाक्यबोधितमप्यात्मनो न ब्रह्मत्वं निश्चेतुं शक्यतेऽविश्वासप्रतिबन्धादिति शङ्कते *अविश्वास इति । आत्मनि स्वत एव प्रकाशमाने नाविश्वाससम्भव इति परिहरति *नेति ॥ १०३४ ॥ *सर्वोऽपीति । आत्मन्यादौ विश्वासं कृत्वा तद्वशादनात्मनि सर्वलोको विश्वासं करोति, कुतस्तस्याविश्वासाविषयतेत्यर्थः ॥ १०३५ ॥ आत्मन्यब्रह्मत्वारोपहेत्वावि-

अविद्यामस्पृशन्नास्ते निष्क्रियो ऽकारकोऽफलः॥१०३६॥
आत्मस्थामप्यविद्यां तामसङ्गो न स्पृशत्यसौ ॥
वृष्ट्यातपौ वियन्निष्ठावस्पृष्टौ वियता यथा ॥ १०३७ ॥
न वृष्ट्या क्लिद्यते व्योम नातपेनापि शुष्यते ॥
अविद्यया विद्यया वा नात्मन्यतिशयस्तथा ॥ १०३८ ॥
प्रत्याख्याताऽप्यात्मनेयमाश्रयान्तरवर्जनात् ॥
अविद्या सिध्यतीवात्मन्यज्ञैरेव प्रकल्पिता ॥ १०३९ ॥
कल्पिताया अविद्याया हानिः कल्पितविद्यया ॥
यादृग्यक्षो बलिस्तादृगिति न्यायविदो विदुः ॥१०४०॥
विद्याया अप्यविद्यायाः कल्पितत्वे समे सति ॥
आत्मनो ब्रह्मता तुल्या भवेत्संसारमोक्षयोः ॥१०४१॥
निवर्त्यभेदाद्भिन्नोऽर्थो ब्रह्माहम्पदयोर्भवेत् ॥

---

द्याङ्गीकृतौ तत्सम्बन्धस्यानादेः कथं ज्ञानान्निवृत्तिरित्याशङ्क्याविद्यातत्कार्याभ्यामात्मनः स्वाभाविकसम्बन्धाभावात्कल्पितस्याविद्यावन्निवृत्त्युपपत्तिरित्यभिप्रेत्याह *चैतन्येति । अविद्यास्पर्शवत्तत्कार्येणापि स्पर्शो नास्तीत्याह *निष्क्रिय इति ॥१०३६॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति *आत्मस्थामिति॥१०३७॥१०३८॥ आत्मनोऽविद्यया सम्बन्धाभावे साविद्यजगदसिद्धेर्बन्धासिद्धिरित्याशङ्क्याह *प्रत्याख्यातेति । आत्मनि अविद्यासम्बन्धोऽप्यविद्यानिमित्त इति इवशब्दार्थः ॥ १०३९ ॥ सर्वस्याप्यात्मनि कल्पितत्वे शास्त्रजन्यतत्त्वज्ञानस्यापि तथात्वान्न तेनाज्ञानहानिः स्यादिति तत्राह *कल्पिताया इति ॥ १०४० ॥ अविद्यादेरवास्तवत्वे फलितमाह *विद्याया इति ॥ १०४१ ॥ नन्वेवं सत्येकेनैव पदेनैकरसार्थे सिद्धेऽलं पदान्तरेणेत्यत्रा-

अब्रह्मानात्मते वार्ये एकस्मिन्नपि वस्तुनि ॥ १०४२ ॥
स्वानुभूत्यवसेयेऽस्मिन्प्रतीच्यब्रह्मतां जनः ॥
आरोप्य शास्त्रगम्येऽस्मिन्ननात्मत्वमकल्पयत् ॥१०४३॥
अनुभूत्यवसेयोऽहं ब्रह्म शास्त्रसमर्पितम् ॥
अस्मीति बोधादारोपद्वयमत्र निवर्त्तते ॥ १०४४ ॥
त्यक्त्वाऽऽरोपद्वयं वस्तु ब्रह्माहम्पदलक्षितम् ॥
अद्वयप्रत्यगात्मत्वरूपेण व्यवतिष्ठते ॥ १०४५ ॥
अनन्यापेक्षमात्मत्वमहंशब्देन लक्ष्यते ॥
तथैव ब्रह्मशब्देन प्रतीचोऽस्याद्वयात्मता ॥ १०४६ ॥
अस्मीति वर्त्तमानोक्तेर्विद्याकालैव मुक्तता ॥
सिद्धाऽतोऽसौ न साध्या स्यादग्निहोत्रादिकार्यवत्१०४७
तस्मात्तत्सर्वमभवदिति वाक्येन वेदनात् ॥

---

ह *निवर्त्येति। निवर्त्यभेदमेव स्फुटयति *अब्रह्मेति। वार्ये निवर्तनीये ॥ १०४२ ॥ एकस्मिन्वस्तुनि विरुद्धोभयारोपः कथमित्याशङ्क्य विम्वप्रतिविम्वभावेन द्विधा भिन्ने एकस्मिंश्चैतन्ये उभयारोप उपपद्यत इत्याह *स्वेति ॥ १०४३ ॥ आरोपमुक्त्वा तन्निवृत्तिप्रकारमाह *अनुभूत्यवसेय इति। अहम्प्रत्ययविषय इत्यर्थः ॥ १०४४ ॥ निवृत्तस्याप्यब्रह्मत्वादेः पुनरारोपादनिर्मोक्षप्रसङ्ग इत्याशङ्क्य तद्धेत्वविद्याऽभावान्नैवमित्यभिप्रायेणाह *त्यक्त्वेति ॥१०४५॥ ब्रह्माहम्पदयोर्लक्ष्यार्थमाह *अनन्यापेक्षमिति। निष्कृष्टाहंकारादिरूपमित्यर्थः॥१०४६॥ अस्मीतिपदेन मुक्तेर्ज्ञानेन तुल्यकालत्वासिद्धौ फलितमाह *अत इति। तत्र वैधर्म्यदृष्टान्तमाह *अग्निहोत्रेति ॥ १०४७ ॥

उच्यते सर्वभावाप्तिरसर्वत्वापवादतः ॥ १०४८ ॥
स्वतः सर्वात्मकं ब्रह्म भात्यसर्वमिव भ्रमात् ॥
विद्यया भ्रान्तिबाधेऽस्य सर्वत्वमवशिष्यते ॥ १०४९ ॥
विद्यायां सर्वभावाप्तिहेतौ ये कर्तृकर्मणी ॥
मुमुक्षुभिरिहाक्षिप्ते गुरुणा ते समाहिते ॥ १०५० ॥
नन्वसौ सर्वभावाप्तिर्न विद्यामात्रतो भवेत् ॥
विनोत्तमत्वानुष्ठानकालदेवाद्यनुग्रहम् ॥ १०५१ ॥
विप्रस्य फलदो वेदो न शूद्रस्याधमत्वतः ॥
देवादेरुत्तमस्यैव तथा विद्या फलप्रदा ॥ १०५२ ॥
यागज्ञानमनुष्ठानाद्विना न स्वर्गदं यथा ॥
ब्रह्मज्ञानमनुष्ठानाद्विना सर्वाप्तिदं कथम् ॥ १०५३ ॥
गर्भाधानमृतावेव नान्यकाले तथोत्तमे ॥
विद्या कृतयुगे सर्वभावं यच्छति नान्यथा ॥ १०५४ ॥
राज्ञा कृषिफलं यद्वत्करार्थं प्रतिबध्यते ॥
सर्वभावस्तथा देवैर्यागभुग्भिर्निवार्यते ॥ १०५५ ॥
तस्मादनुत्तमे जन्मन्यननुष्ठायिनः कलौ ॥

---

॥ १०४८ ॥ १०४९ ॥ १०५० ॥ तयो य इत्याद्युत्तरवाक्यव्यावर्त्यामाशङ्कामाह *नन्विति ॥ १०५१ ॥ उत्तमत्वं देवादि । अनुष्ठानम् अहं ब्रह्मेति भावना । कालः कृतयुगादिः । देवादेरेव विद्या फलति नान्यस्येत्येतद् दृष्टान्तेन उपपादयति *विप्रस्येत्यादिना ॥ १०५२ ॥ १०५३ ॥ १०५४ ॥ देवाद्यनुग्रहस्याप्यावश्यकतां निदर्शनपूर्वकमुपपादयति *राज्ञा कृषिफलमिति ॥ १०५५ ॥ उक्तं चोद्यमुपसंहरति *तस्मादिति । अनुत्तमे अधमे । *देवाद्यृणवत इति । जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा

युगे देवाहृणवतो न विद्या सर्वभावदा ॥ १०५६ ॥
इति चोदयितुर्येऽत्र चत्वारश्चोद्यहेतवः ॥
तद्यो य इत्यादिवाक्यैश्चतुर्भिस्तान्निरस्यति ॥१०५७॥
न तावदुत्तमं जन्म सर्वभावप्रयोजकम् ॥
उत्तमस्यापि देवादेः सर्वत्वं ब्रह्मबोधतः ॥ १०५८ ॥
श्रुतिः ॥ तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति ।
वार्त्ति०॥यो यो देवेष्वृषीणां वा मध्ये ब्रह्म व्यबुध्यत ॥
असावसावेव सर्वमभून्नान्यस्तु कश्चन ॥ १०५९ ॥
मनुष्याणां तथा मध्ये ब्रह्मवित्सर्वभावभाक् ॥
विद्याविद्ये एव तस्मात्सर्वत्वान्यत्वकारणे ॥ १०६० ॥
ब्रह्म वा इदमग्रेऽभूदिति विद्याधिकारिता ॥
श्रूयते ब्रह्मणो ब्रह्म सर्वजातिषु तत्समम् ॥ १०६१ ॥

---

जायत इति श्रुतेः ब्राह्मणा देवाहृणवन्त इत्यर्थः ॥ १०५६ ॥ उक्तचोद्यपरिहारपरः उत्तरवाक्यसंदर्भ इत्याह*इतीति॥१०५७॥ किं सर्वभावाप्तौ देवत्वादिजातिरेव हेतुरुत ब्रह्मविद्याऽपि? नाद्यः, मानाभावात् । द्वितीये ब्रह्मविद्यैव सर्वत्वहेतुरस्तु किं जात्या । तथाच मनुष्याणामपि विद्यया तद्भावो न विरुद्ध इति मत्वाऽऽह *नेति ॥१०५८॥ श्रुत्यक्षराणि योजयन्नुक्तमेवार्थं विशदयति *य इति द्वाभ्याम् ॥ १०५९ ॥ *सर्वत्वेति । सर्वत्वासर्वत्वकारणे इत्यर्थः ॥ १०६० ॥ उपक्रमपर्यालोचनयाऽपि सर्वाधिकारकं ब्रह्मज्ञानमित्याह *ब्रह्मेति । बुद्ध्याद्युपहितं ब्रह्मैव विद्याधिकारीत्युक्तं, तच्च सर्वजन्तुषु सममित्यर्थः ॥ १०६१ ॥

न पश्चादेः सर्वभावप्रसङ्गो बोधवर्जनात् ॥
शूद्रजातिस्तु विदुरः सति बोधे त्वमुच्यत ॥ १०६२ ॥
यागविद्येवात्मविद्या नानुष्ठानमपेक्षते ॥
फलदान इति ज्ञेयं वामदेवनिदर्शनात् ॥ १०६३ ॥
ब्रह्मात्मत्वं वामदेवः पश्यन्मन्वादिरूपताम् ॥
प्रतिपेदे ह्यनुष्ठानावसरस्तस्य को वद ॥ १०६४ ॥
प्रयोजनं च विद्याया अनुष्ठानेन किं भवेत् ॥
किमन्तरायापगमः किंवा जन्मनिरोधनम् ॥ १०६५ ॥
पुमर्थावसितिः किंवा यद्वा बाह्यार्थबाधनम् ॥
अन्यद्वा किञ्चिदत्र स्यात्सर्वमेतदसम्भवि ॥ १०६६ ॥
ब्रह्मप्राप्त्यन्तरायस्य प्रत्यक्संमोहरूपिणः ॥
प्रत्यग्विज्ञानतो ध्वस्तौ कोऽन्तरायोऽन्य उच्यताम् १०६७

---

सर्वभावाप्तेः सर्वाधिकारत्वेऽतिप्रसङ्गादाह *नेति ॥ १०६२ ॥ यदुक्तं यागज्ञानवद्ब्रह्मज्ञानमप्यनुष्ठानं विना न फलप्रदमिति, तन्निराचष्टे *यागविद्येति । यागज्ञानमित्यर्थः । उक्तेऽर्थे हेतुः *वामदेवेति ॥ १०६३ ॥ तद्धैतदित्यादिवाक्यं व्याकुर्वन्नुक्तहेतुं स्पष्टयति *ब्रह्मेति ॥ १०६४ ॥ किञ्च विद्योत्पत्त्यनन्तरं तदनुष्ठानप्रयुक्तप्रयोजनाभावादपि न तदपेक्षेत्याह *प्रयोजनमिति । अत्र विदुषि प्रयोजनाभावं स्फुटयितुं विकल्पयति *किमित्यादिना ॥ १०६५ ॥ १०६६ ॥ आद्यं प्रत्याह *ब्रह्मेति । ब्रह्मप्राप्तावज्ञानातिरिक्तव्यवधानाभावात्तस्य च ज्ञानादेव नष्टत्वात्तदर्थमनुष्ठानं व्यर्थमित्यर्थः ॥ १०६७ ॥ द्वितीयं प्रत्याह * सकृदिति । आत्मप्रसूत्या आत्माभिमुख्येनानात्मविपर्यीकरणेनेति यावत् । विद्ययैव सविलासाविद्यानि-

सकृदात्मप्रसूत्यैव निरुणद्ध्यखिलं भवम् ॥
विद्या मोहनिरासेन रोद्धव्यं जन्म किं ततः ॥१०६८॥
अविद्याध्वंसमात्रेण पुमर्थश्च समाप्यते ॥
आनन्दस्य स्वरूपत्वादर्थनीयान्तरं नहि ॥ १०६९ ॥
नाबाधित्वेह बाध्यार्थं बाधको बाधकात्मताम् ॥
लभतेऽतः स्वलब्ध्यैव विद्या बाध्यं प्रबाधते ॥१०७०॥
सम्यग्ज्ञानशिखिप्लुष्टमोहतत्कार्यरूपिणः ॥
अपेक्ष्यं शिष्यते नान्यदतः स्यादननुष्ठितिः ॥ १०७१॥
अनात्मबुद्धिसत्यत्वनिवारणमपेक्षते ॥
अनुष्ठित्येति चेन्मैवं सत्यत्वस्याप्रसक्तितः ॥ १०७२ ॥
ध्वान्तादिघस्मरे प्रत्यगद्वैतात्मावबोधने ॥
प्रत्यर्थिनि स्थितेऽनात्मधियां स्यात्सत्यता कुतः॥१०७३॥
तस्मात्पश्यन्वामदेवः प्रतिपेदे इतीरणात् ॥
विद्याकालैव सर्वाप्तिर्न विलम्बादितीक्ष्यताम्॥१०७४॥
वामदेवस्य मन्वादिरूपाप्तिर्न विरुध्यते ॥

---

वृत्तौ कुतो जन्मप्रसक्तिरिति भावः ॥ १०६८ ॥ तृतीयं प्रत्याह *अविद्येति ॥ १०६९ ॥ चतुर्थं प्रत्याह *नेति ॥ यदि विद्याऽविद्यामबाधित्वोत्पद्येत तर्ह्यविद्यायाः बाधिकैव न स्याद-तोऽन्धकारमिव प्रदीप उत्पत्तिमात्रेण तां बाधत इत्यर्थः॥१०७० पञ्चमं प्रत्याह *सम्यगिति । निवृत्ताविद्यस्यापेक्षाऽभावे फलितमाह *अतः स्यादिति ॥ १०७१ ॥ प्रकारान्तरेण प्रयोजनं शङ्कते *अनात्मेति ॥ १०७२ अप्रसक्तिमेव व्यनक्ति *ध्वान्तादिघस्मर इति । अविद्यातत्कार्यनिवर्त्तके इत्यर्थः ॥१०७३॥ *तद्वैतदिति । वाक्यार्थमुपसंहरति *तस्मादिति ॥ १०७४ ॥

उपाधिमात्रभेदेन वस्तुतत्त्वैक्यसम्भवात् ॥ १०७५ ॥
वामदेवो मनुः सूर्य इति शब्दैरुपाधयः ॥
मूढव्यवहृतौ भान्ति विद्वद्व्यवहृतौ तु चित् ॥१०७६ ॥
न चितो वामदेवे वा मनौ वाऽन्येषु वा भिदा ॥
तेन मन्वादिचिद्वामदेवेन प्रत्यपद्यत ॥ १०७७ ॥
यत्तु पुण्ययुगे सर्वभावो न तु कलाविति ॥
तदसत्, बोधसाध्यस्य पुण्यकालानपेक्षणात् ॥१०७८॥
न सूर्यग्रहणापेक्षो बोधान्निद्राक्षयः क्वचित् ॥
तथा न सर्वभावोऽयं कालभेदमपेक्षते ॥ १०७९ ॥
श्रुतिः ॥ तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति ॥
वार्त्ति० ॥ य एतर्ह्यपि वेदाहं ब्रह्मास्मीति सदैव सः॥
इदं सर्वं भवत्येव यदिदं जगदीक्ष्यते ॥ १०८० ॥
अविचारितरम्यस्य नामरूपात्मकस्य यत् ॥

---

वामदेवस्य विद्यया निरुपाधिकचैतन्यात्मत्वेऽपि मन्वादिस्वरूपप्राप्तिः कथमत आह *वामदेवस्येति। मन्वाद्युपाधेः कल्पितत्वेन तदुपहितचैतन्यस्य वास्तवभेदाभावाच्छास्त्रदृष्ट्या तद्रूपप्राप्तिर्न विरुद्धेति भावः ॥१०७५॥१०७६॥१०७७॥ यदुक्तं कृतयुगादावेव ब्रह्मविद्या फलवती, तदनुभाष्य दूषयति *यत्त्विति। ज्ञानफलस्यान्वयव्यतिरेकासिद्धत्वान्न पुण्यकालापेक्षेत्यर्थः॥१०७८॥ एतदेवोदाहरणेन स्पष्टयति *नेति ॥ १०७९ ॥ तदिदमित्यादेरर्थमाह *य इति । श्रुतौ तदिदंशब्दाभ्यां प्रकृतं ब्रह्म निर्दिश्यत इति ध्येयम् । एतर्ह्यस्मिन् काले इदं सर्वमिहात्र, इदंपदार्थं विवृणोति *यदिदमिति ॥ १०८० ॥ जडप्रपञ्चात्मत्वे

जगतो वास्तवं रूपं सत्तत्त्वं ब्रह्म तद्भवेत् ॥ १०८१ ॥
तादृग्ब्रह्माहमस्मीति साक्षात्कृतवतः कथम् ॥
सर्वभावे विवादः स्यात्सर्वाख्यं ब्रह्म नेतरत् ॥१०८२॥
नामरूपे तु नो सर्वे तयोर्मायामयत्वतः ॥
ब्रह्मैव वास्तवं सर्वं ज्ञानेनैव तदाप्यते ॥ १०८३ ॥
ब्रह्मैव निखिलो जन्तुर्बोधात्प्रागपि वस्तुतः ॥
अब्रह्मत्वमबोधात्स्याद्बोधात्तु ब्रह्मता ततः ॥ १०८४ ॥
ब्रह्मबोधात्सर्वभावो भवेत्कृतयुगेन किम् ॥
न निवारयितुं शक्यः सर्वभावः कलावपि ॥ १०८५ ॥
नराणामधमर्णित्वात्सर्वभावं दिवौकसः ॥
वारयन्ति हविर्भोक्तुं तैर्दत्तमिति चेन्न तत् ॥ १०८६ ॥
श्रुतिः । तस्य ह न देवाश्चनाभूत्या ईशत आत्मा ह्येषां स भवति ॥

---

विदुषो जाड्यं स्यादित्याशङ्क्य अविद्याकल्पितनामरूपात्मकप्रपञ्चस्याधिष्ठानव्यतिरेकेणाभावात्कल्पितप्रपञ्चाधिष्ठानचिदात्मत्वमेव सर्वभावाप्तिरतो नोक्तदोष इत्येतदुपपादयति *अविचारितेति ॥१०८१॥१०८२॥१०८३॥ अपिच सर्वत्वस्य स्वतःसिद्धत्वात्तद्व्यवधायकाज्ञाननिवृत्तौ पुण्यकालापेक्षाशङ्कैव नेत्याह *ब्रह्मेत्यादिना ॥ १०८४ ॥ १०८५ ॥ मर्त्यानां देवादीन् प्रति ऋणित्वान्न तदनुग्रहं विना सर्वभावाप्तिरिति यदुक्तं तदनूद्य निराचष्टे *नराणामिति ॥ १०८६ ॥ तस्य हेत्यादिवाक्यमुक्तशङ्कानिरासपरतया योजयति *तस्येति । ज्ञानयोग्यमधिकारिणमाह *यतेरिति । श्रुतिगतस्य चनेत्यस्य व्याख्या *अपीति । देवाः चन इति च्छेदः । अभूत्या इति

वार्त्ति० तस्य ज्ञातात्मतत्त्वस्य प्रध्वस्ततमसो यतेः ॥
इन्द्रादयोऽपि नैवालं सर्वभावाप्तिवारणे ॥ १०८७ ॥
यद्यपीशा नृणां देवास्तथापि ब्रह्मवेदिनः ॥
अनीशाः प्रत्युतैतेषामात्मा भवति तत्त्ववित् ॥१०८८॥
ईशोशितव्यसम्बन्धः प्रत्यगज्ञानहेतुजः ॥
ज्ञानी ज्ञानात्तमोध्वस्तावीश्वराणामपीश्वरः ॥१०८९॥
अधमर्णो भवेदज्ञो देवादेर्नतु तत्त्ववित् ॥
देवाद्यैश्वर्यविषयव्यतिक्रान्तत्वहेतुनः ॥ १०९० ॥
नन्वज्ञस्य न विस्रम्भः कर्मानुष्ठान आपतेत् ॥
देवपित्राद्युत्तमर्णैः फलवारणसम्भवात् ॥ १०९१ ॥
नैवं, देवेशकालादीनपेक्ष्यैव कृतत्वतः ॥

---

पदव्याख्या *सर्वभावेति ॥ १०८७ ॥ अभूत्यै देवा न समर्था इत्यनुपपन्नं, तेषां स्वतन्त्रत्वादिति शङ्कते *यद्यपीति । अज्ञान् प्रति तेषामीश्वरत्वेऽपि ते विदुषो नेशा इत्याह *तथाऽपीति । उक्तेऽर्थे आत्मा ह्येषां स भवतीति श्रुत्युक्तं हेतुमाह *प्रत्युतेति ॥१०८८॥ एतदेव विवृणोति *ईशेति । *ईश्वराणामिति । सर्वात्मत्वे परतन्त्रो न भवतीत्यर्थः ॥ १०८९ ॥ देवादीनामैश्वर्यप्रतिपादकवाक्यविरोधमाशङ्क्य तस्यान्यत्र सावकाशत्वान्न विरोध इत्याह *अधमर्ण इति । विदुषो विद्याफलावाप्तौ विघ्नकरणे देवादीनां न शक्तिरित्यत्र हेत्वन्तरमाह *देवादीति ॥१०९०॥ अज्ञान्प्रति देवादीनामीशत्वेऽतिप्रसङ्गं शङ्कते *नन्विति । विस्रम्भो विश्वासः। उत्तमर्णैः ऋणदातृभिः । तथाच कर्मकाण्डाप्रामाण्यादुपनिषदामपि तद्वदप्रामाण्यमिति भावः॥१०९१॥ देवादीनां कर्मस्वरूपसिद्धिहेतुत्वेन तत्फलप्राप्तावनुकूलत्वान्न

कर्मणः फलदानायानुकूला ईश्वरादयः ॥ १०९२ ॥
प्रतिबध्नन्ति यत्रैते फलं तत्रान्यकर्मणः ॥
प्रबलस्य फलं दातुमेवैतदवजानते ॥ १०९३ ॥
अतः कर्मप्रधानत्वं श्रुतिस्मृतिषु सम्मतम् ॥
तत्तच्छास्त्रेषु कालादेरपि प्राधान्यमीरितम् ॥ १०९४॥
कर्मकालेश्वरादीनां फलदानविवक्षया ॥
प्राधान्यं, वस्तुतः सर्वं सर्वत्रापि ह्यपेक्ष्यते ॥ १०९५ ॥
सत्यप्यृणित्वे देवाद्या नाज्ञानां कर्मणः फलम् ॥
प्रतिबध्नन्ति, वक्तव्यमनृणज्ञानिनां किमु ॥ १०९६ ॥
न चेहाविदुषोऽपि स्यादृणित्वं हेत्वसम्भवात् ॥

---

विघ्नकरत्वमिति समाधत्ते *नैवमिति ॥ १०९२ ॥ ननु तेषामप्रतिबन्धकत्वे कारीर्याद्यनुष्ठानानन्तरमपि नियमेन फलोत्पत्तिः कुतो न स्यात्तत्राह *प्रतिबध्नन्तीति । यत्र फलप्रतिबन्धो दृश्यते तत्र पूर्वकृतप्रबलकर्मफलदानाय तदुपेक्षन्ते, न तु घ्नन्तीत्यर्थः ॥ १०९३ ॥ तस्मात्कर्मोत्पत्तिहेतूनां तेषां न तत्फलविघातकत्वमित्युपसंहरति *अत इति । कर्म हैवेत्यादिश्रुतयः । कर्मणा बध्यते जन्तुरित्याद्याः स्मृतयः । एवं कर्मणः प्रधानत्वे सिद्धे क्वचित्कालादेः प्राधान्यकथनं तेषामपि फलोत्पत्तौ सहकारित्वमस्तीत्येवम्परमित्याह *तत्तदिति सार्धेन । कर्मादीनां मध्ये एकैकस्य क्वचिद्यत्प्राधान्यमीरितं तत्सर्वं सर्वत्रापेक्ष्यत इत्येतावन्मात्रविवक्षयोक्तमिति योजना ॥१०९४॥१०९५॥ एवं सति विदुषां विद्याफले विघ्नाभावः कैमुतिकन्यायेन सिद्ध्यतीत्याह *सत्यपीति ॥ १०९६ ॥ वस्तुतस्त्वज्ञानामप्यृणित्वं नेत्याह *नचेति । हेत्वसम्भवः क-

न किञ्चिन्नः सुरैः प्रत्तमृणित्वं येन नो भवेत् ॥१०९७॥
शास्त्रादृणित्वमिति चेत्, न, शास्त्रस्यार्थवादतः ॥
अवदानविधेरर्थवादो ह्यृणिवचः श्रुतौ ॥ १०९८ ॥
पूर्वमप्यनृणः पश्चाद्देवानामन्तरात्मताम् ॥
गतो बोधादस्य देवाः कथं स्युः प्रतिबन्धकाः ॥१०९९॥
इत्थं ये सर्वभावस्य वारकाश्चोद्यहेतवः ॥
उन्मूलितास्ते निर्विघ्नः सर्वभावो भवेत्ततः ॥११००॥
अत्र केचित्सर्वभावो जीवतो नेति मन्वते ॥
विद्यासन्तत्यभावाच्च रागादिप्रत्ययोत्थितेः ॥ ११०१ ॥
जीवतो यद्यविद्येयं निवर्तेत तदाऽऽनिशम् ॥

---

थमित्याशङ्क्य, किं देवादिभ्यो धनग्रहणान्मर्त्यानामृणित्वम् उत शास्त्रप्रामाण्यात्, नाद्य इत्याह*नेति । प्रत्तं दत्तम् ॥ १०९७ ॥ द्वितीयमनूद्य प्रत्याह *शास्त्रादिति । जायमानो वै ब्राह्मण इत्यादिशास्त्रादित्यर्थः । हृदयस्याग्रेऽवद्यतीत्याद्यवदानविधिशेषत्वेनास्य स्वार्थपरत्वाभावादिति भावः ॥ १०९८ ॥ ऋणवचसोऽतत्परत्वे फलितमाह *पूर्वमिति ॥ १०९९॥ उक्तार्थमनुवदन्फलवचनस्य निरवद्यतामाह *इत्थमिति ॥११००॥ फलवचनस्य परोक्तमर्थं दूषयितुं तन्मतमनुभाषते *अत्रेति । तत्र हेतुः *विद्येति । सन्तत्यभावे हेतुः *रागादीति । विमतो न निवृत्ताविद्यः रागादिमत्त्वादज्ञवदिति भावः ॥ ११०१ ॥ उक्तसाध्यानङ्गीकारे हेतूच्छित्तिर्बाधकस्तर्क *इत्याह *जीवत

---

* निवृत्ताविद्यत्वाभावरूपसाध्यस्यानङ्गीकारे हेतोः रागादिमत्त्वस्योच्छित्तिः अभावः बाधकस्तर्कः, यदि निवृत्ताविद्यः स्यात् तर्हि रागादिमान् न स्यात् इत्येवंरूपस्तर्कः निवृत्ताविद्यत्वाभाव—रागादिमत्त्वयोर्व्याप्तिसाधक इत्यर्थः ॥

विद्यां सन्तनुयात्तेन रागाद्यवसरो नहि ॥ ११०२ ॥
दृश्यन्त एवामरणं रागाद्या विदुषामपि ॥
अतोऽन्त्य एव बोधोऽयमविद्याविनिवर्त्तकः ॥११०३॥
नचानिवृत्ताविद्यस्य सर्वभावोऽस्ति जीवतः ॥
तस्मान्मरणकालीनाविद्यया सर्वतो भवेत् ॥ ११०४ ॥
मैवं, बोधः किमन्त्यत्वादविद्याया निवर्तकः ॥
ब्रह्मैकविषयत्वाद्वा किंवाऽन्त्यब्रह्मधीत्वतः ॥११०५॥
अनैकान्तिकमन्त्यत्वमज्ञानिमृतिबोधने ॥
ब्रह्मैकविषयत्वं च प्रथमे ब्रह्मबोधने ॥ ११०६ ॥
अन्त्यब्रह्ममतित्वस्य न दृष्टान्तोऽस्ति कश्चन ॥
केवलव्यतिरेकित्वं न, सपक्षस्य सत्त्वतः ॥ ११०७ ॥

---

इति ॥ ११०२ ॥ वाक्यजन्यधियोऽविद्यानिवर्तकत्वाभावे फलितमाह *अत इति । *अन्त्य एवेति । चरमकालीनसाक्षात्कार इत्यर्थः ॥ ११०३ ॥ नन्वेवमपि सर्वभावप्राप्त्यभावे किमायातं तत्राह *नचेति । तथात्वेऽश्रुतवेदान्तस्यापि तत्प्रसङ्गादिति भावः । पूर्वपक्षमुपसंहरति *तस्मादिति ॥११०४॥ विकल्पासहत्वान्नायं पक्षः साधुरिति दूषयति *मैवमिति । अज्ञस्य मरणकालीनज्ञानेऽन्त्यप्रत्ययत्वमस्ति, न तस्याविद्यानिवर्तकत्वमिति प्रथमहेतोस्तत्र व्यभिचार इत्यर्थः ॥ ११०५॥ द्वितीयहेतोरहं ब्रह्मेति प्राथमिकसाक्षात्कारे व्यभिचारमाह *ब्रह्मैकेति ॥ ११०६ ॥ तृतीयं निराह *अन्त्येति । तथाच पक्षमात्रवृत्तित्वादस्य हेतोरसाधारणानैकान्तिकतेति भावः ॥ सति सपक्षे पक्षमात्रवृत्तिरसाधारणः । अस्य हेतोः सपक्षाभावात्केवलव्यतिरेकित्वमाशङ्क्य सपक्षाभावोऽसिद्ध इत्याह *केवलेति ॥ ११०७ ॥ हेतोरनैकान्तिकत्वमुपसंहरति *अनध्यवसित

अविद्याघातिनी शुक्तिधीः सपक्षो भवेदिह ॥
अनध्यवासितो हेतुः सपक्षावर्त्तनाद्भवेत् ॥ ११०८ ॥
यद्येकैकोऽन्त्य आद्यो वा बोधोऽविद्यां न नाशयेत् ॥
विद्यासन्ततिरेवास्तु तर्ह्यविद्यानिवर्त्तिका ॥ ११०९ ॥
अविच्छिन्नैवामरणं सन्ततिः किं निवर्त्तिका ॥
विच्छिन्ना वा तत्र तावदविच्छिन्ना न सम्भवेत्॥१११०॥
सति भोजनसुप्त्यादावविच्छेदः कथं भवेत् ॥
भोजनादिनिरोधेऽपि धीग्लान्या नास्ति सन्ततिः॥११११
यदि विच्छिन्नसन्तानः स्यादविद्यानिवर्तकः ॥
तदा मरणकालीनः प्राचीनो वेति कथ्यताम् ॥१११२॥
मरणे तु न विश्वासो हिक्किकावशवर्त्तिनः ॥
ज्ञानसन्ततिनिष्पत्तौ तमोमात्रसमाप्तितः ॥ १११३ ॥
प्राचीनोऽप्येष सन्तानो निश्चितः किमियत्तया ॥
उतानिश्चित आद्ये तु नास्ति निश्चयकारणम्॥१११४॥

---

इति । अनैकान्तिक इत्यर्थः॥११०८॥उक्तविधयाऽन्त्यप्रत्ययस्य तमोनिवर्तकत्वाभावे ब्रह्मधीसन्ततिस्तन्निवर्त्तिकेति शङ्कते *यदीति । आद्यो वेति दृष्टान्तार्थमुक्तम् ॥ ११०९ ॥ अविद्यानिवर्त्तकत्वेनाभिमतां धीसन्ततिं विकल्प्य दूषयति *अविच्छिन्नेत्यादिना॥१११०॥११११॥सुप्तिभोजनातिरिक्तकालीना सन्ततिस्तमोनिवर्तिकेति द्वितीयमनूद्य विकल्पयति *यदीति॥१११२॥ आद्यं प्रत्याह *मरणेति । हिक्कादिमरणाव्यभिचारिचिह्नविशेषेण परवशस्य निबिडे तमोमात्रे मग्नत्वादात्मधीसन्तत्युत्पत्तौ न विश्वास इत्यर्थः ॥ १११३ ॥ द्वितीयं विकल्पयति *प्राचीन इति । प्रथमे दोषमाह *आद्य इति ॥ १११४॥ निश्चयहेत्वभावे

सन्तत्यारम्भकधियामियत्तानवधारणात् ॥
इयता मुक्तिरित्येव न स्याच्छास्त्रार्थनिर्णयः ॥१११५॥
अस्त्वनिश्चितसन्तानो मोक्षोऽप्यत्रास्त्वपाक्षिकः ॥
ततः कृत्वा कर्म कार्या कर्मच्छिद्रेण सन्ततिः॥१११६॥
इति मत्वा कुर्वते ये कर्मच्छिद्रेषु सन्ततिम् ॥
नूनं ते नासिकाग्रेण वीक्षन्ते सूर्यमण्डलम् ॥ १११७ ॥
वस्तुतन्त्रा तत्त्वविद्या नृतन्त्रा नैव तेन सा ॥
नृभिः कर्त्तुमकर्तुं वा स्वेच्छया नैव शक्यते ॥ १११८ ॥
यत एवमतो यो नः प्रत्यक्संमोहहानिकृत् ॥
आद्योऽन्त्यः सन्ततोऽन्यो वा स बोधः सर्वभावदः॥१११९
नचानिवर्त्तको बोधो मोहस्येत्यपि शङ्क्यताम् ॥

---

किं बाधकं तत्राह *सन्ततीति । एतावज्ज्ञानारब्धा सन्ततिरज्ञानध्वंसिनीति शास्त्रार्थानिर्णये शास्त्राप्रामाण्यापत्तिरित्यर्थः । ॥ १११५ ॥ द्वितीयमनुवदति *अस्त्विति । नच शास्त्रार्थानिर्णये तदप्रामाण्यापत्तिः, आत्मेत्येवोपासीतेतिश्रुत्या तद्धीसन्ततिमात्रसद्भावे ततो विद्याद्वाराऽविद्याध्वस्तिसम्भवादित्याह *मोक्ष इति । एवंच प्रत्यहं नित्यकर्म समाप्यान्तराले धीसन्ततिः कार्येत्याह *तत इति ॥ १११६ ॥ ज्ञानस्येच्छया कर्तुमशक्यत्वान्नेयं कल्पना शोभत इति दूषयति *इतीति ॥ १११७ ॥ ज्ञानस्यापुंतन्त्रत्वमेवोपपादयति *वस्तुतन्त्रेति ॥ १११८ ॥ यस्माद्धीसन्ततेर्नाविद्यानिवर्त्तकत्वं तस्मादप्रतिबन्धः प्रत्यक्तत्त्वसाक्षात्कार एवाविद्यानिवर्त्तनद्वारा सर्वभावाप्तिहेतुरित्युपसंहरति *यत इति ॥ १११९ ॥ ज्ञानस्यापि मोहानिवर्तकत्वं न सम्भवति तत्कार्यरागाद्यनुवृत्तिदर्शि-

तोऽनुभूयते मोहनिवृत्तिस्तत्त्ववेदिभिः ॥ ११२० ॥
विद्यासन्तत्यभावो यो जीवतः पूर्ववादिना ॥
ागुक्तस्तत्र सन्तानमात्रं तावदवारणम् ॥ ११२१ ॥
मेयमानसम्बन्धे धारावाहिकसन्ततिः ॥
न वारयितुं शक्या सर्वमेयेषु दर्शनात् ॥ ११२२ ॥
ावज्जीवमविच्छिन्ना सन्ततिश्चेन्न शक्यते ॥
ा शक्यतामविच्छिन्नसन्तत्या किं फलं तव ॥११२३॥
ादृक्सन्ततिहीनस्य पुनर्भ्रान्त्युदये सति ॥
ागद्वेषानिरोधेन न मुक्तिरिति चेच्छृणु ॥ ११२४ ॥
ुक्तिरायुःक्षयात्पूर्वं पश्चाद्वा तव सम्मता ॥
ाद्यः, प्रारब्धभोगस्य देवैरप्यनिवारणात् ॥ ११२५ ॥
श्चात्तनी तु या मुक्तिः सा केनापि न वार्यते ॥
ागादिभिर्वार्यते सेत्येतत्स्याद्बालभाषितम् ॥११२६॥

---

ादिति चोद्यं विद्वदनुभवविरोधेन प्रत्याह *नचेति ॥११२०॥ दुक्तं विद्यासन्तत्यभावान्नाविद्यानिवृत्तिरिति तदनुवदति *विद्येति । तत्र किं धीसन्ततिमात्रं नास्तीत्युच्यते उताविच्छि- सन्ततिः? नाद्यः, तत्सामग्रीसद्भावादित्याह *तत्रेत्यादिना । ११२१ ॥ ११२२ ॥ द्वितीयमनूद्य प्रत्याह *यावदिति । ११२३ ॥ अविच्छिन्नसन्तत्यभावे बाधकं शङ्कते *तादृ- गेति ॥ ११२४ ॥ किं रागाद्यनिरोधे ज्ञानानन्तरमेव शरीर- ातलक्षणा मुक्तिः प्रतिबध्यते उत प्रारब्धक्षयानन्तरमिति ृच्छति *मुक्तिरिति । आद्ये नानिष्टं किञ्चिदित्याह *नाद्य ाति ॥११२५॥ द्वितीयं प्रत्याह *पश्चादिति । *बालेति । प्रार- ब्धनाशेन नष्टस्य रागादेरप्रतिबन्धकत्वादिति भावः ॥११२६॥

सञ्चितारब्धयोर्ज्ञानभोगाभ्यां कर्मणोः क्षये ॥
जन्महेतोरसद्भावान्मुक्तिरेवावशिष्यते ॥ ११२७ ॥
रागादिजन्येनागामिकर्मणा श्लिष्यते नहि ॥
प्रियाप्रिये ज्ञातयोऽस्य जगृहुः पुण्यपातके ॥ ११२८ ॥
ब्रह्मात्मबोधमात्रेण शास्त्रार्थस्य समाप्तितः ॥
रागादयः सन्तु कामं न तद्भावोऽपराध्यते ॥ ११२९ ॥
रागादिरोधाद्ये मुक्तिमाहुस्ते प्रलये कुतः ॥
न मुक्तास्तत्र रागादेर्निरोधोऽभूदशेषतः ॥ ११३० ॥

---

मुक्तिः केनापि न निवार्यत इत्युक्तमेव विशदयति *सञ्चितेति ॥ ११२७ ॥ रागाद्यनिवृत्तौ तत्प्रयुक्तकर्मभिः पुनर्बन्धः स्यादित्याशङ्क्याश्लेषवचनान्नैवमित्याह *रागादीति । *आगामीति ॥ ज्ञानोत्तरभाविकर्मणेत्यर्थः ॥ तस्य पुत्रा दायमित्यादिश्रुतेश्च विदुषः कर्माश्लेप इत्याह *प्रियेति ॥ ११२८ ॥ एवं सत्यप्रतिबद्धसाक्षात्कारवतो रागाभासानुवृत्त्या न किञ्चिद् बाधकमित्याह *ब्रह्मेति । नचैतावता विदुषो यथेष्टचेष्टा, तत्प्रापककर्मारब्धे फलपर्यन्तज्ञानानुत्पत्तेः । न नियामकाभावः, यथेष्टचेष्टोपनायकाधर्मारब्धे देहे तथाविधचेष्टासंस्कारविशिष्टस्याशुद्धबुद्धेस्तद्विरुद्धज्ञानहेतुशमाद्युत्पत्त्यनुपपत्त्या तदयोगस्यैव नियामकत्वात् । श्रुतिस्मृत्युपदर्शितविद्वल्लक्षणस्य यथेष्टचेष्टाप्रतिस्पर्द्धित्वात् । ज्ञानादूर्ध्वं तत्प्रापकस्य दुर्वचनत्वात् । यथेष्टचेष्टया तद्धेत्वारब्धकर्मकल्पने तद्वतोऽप्रतिबद्धसाक्षात्कारवत्त्वस्यासम्मतत्वात् पापाश्लेषवाक्यस्याज्ञानकृतहिंसादिजन्यपापविषयत्वेनोपपत्तिरिति दिक् ॥ ११२९ ॥ रागादिनिरोधो मुक्तिहेतुरिति केचित् । तत्र तन्निरोधमात्रं हेतुरुत ब्रह्मबो-

तावानपि न पर्याप्तो निरोधो मुक्तये, कथम् ॥
अल्पीयोऽहःसमभ्यस्तो निरोधो ऽलं विमुक्तये॥११३१॥
बोधाभावादमुक्तिश्चेत्प्रलये तर्हि बोधतः ॥
मुक्तिरित्येव वक्तव्यं कोऽर्थो रागादिरोधतः ॥११३२॥
रागादिष्वनिरुद्धेषु बोध एव न सम्भवेत् ॥
यदि तर्हि निरुध्यन्तामाबोधं ते बुभुत्सुभिः॥ ११३३ ॥
पश्चात्तु यदि बोधेन बाध्यन्तेऽस्तु तथैव तत् ॥
अथारब्धेन जन्येरन्जन्यन्तां भोगसिद्धये ॥ ११३४ ॥
निरोद्धुं नहि शक्यन्ते रागाद्या भोगहेतवः ॥
बुभुत्सुबुद्धमूढानां मध्ये केनापि धीमता ॥ ११३५ ॥
अभोगहेतवो ये स्युरविचारैकनिर्मिताः ॥
ते तु बुद्धबुभुत्सुभ्यां निरुध्यन्ते विचारतः ॥ ११३६ ॥
ये भोगहेतवस्तेऽपि प्रबुद्धे भ्रष्टबीजवत् ॥

---

धोऽपीति विकल्पाद्यमनूद्य प्रत्याह *रागादीत्यादिना ॥ ११३० ॥ ११३१ ॥ द्वितीयमनुभाष्य दूषयति *बोधाभावादिति । आवश्यकबोधादेव मुक्तिसम्भवे रागादिनिरोधस्यापि तद्धेतुत्वकल्पने मानाभावादिति भावः ॥ ११३२ ॥ बोधोत्पत्तिपर्यन्तं तद्धेतुत्वेन रागादिनिरोधमङ्गीकरोति *यदीति । ते रागादयः ॥ ११३३ ॥ बुद्धस्यापि बोधबाधितत्वान्न रागाद्युत्पत्तिरित्याशङ्क्य तदप्यङ्गीकरोति *पश्चादिति। किमर्थं तर्हि "रागादयः सन्तु कामम्" इति तदङ्गीकारस्तत्राह *अथेति ॥ ११३४ ॥ ११३५ ॥ प्रबलारब्धकर्मप्रापितरागादेर्दुर्निरोधत्वेऽप्यविवेकप्रापिताः विवेकिभिः निरोद्धुं शक्या इत्याह *अभोगेति ॥ ११३६ ॥ प्रारब्धप्रापितरागाद्याश्च विदुषि दग्धबीजत्वादविद्यमानसमा एवेति शङ्कते *य इति ।

दृश्यन्ते बोधदग्धाश्चेन्नीरागादिः सुखी भवेत् ॥११३७॥
आगमाद्वेद चेद्ब्रह्म ब्रह्मैव भवति स्वयम् ॥
फलावस्थस्य च सतः क्वाऽतो रागादिसम्प्लुतिः॥११३८॥
ज्ञाततत्त्वस्य न पुनर्भ्रान्त्युत्पत्तिरहेतुतः ॥
विशेषाज्ञानजा भ्रान्तिर्विशेषज्ञानिनः कुतः ॥११३९॥
यः सामान्यग्रहो यच्च विशेषाग्रहणं तथा ॥
आरोप्यस्यैव संस्कारस्तत्त्रयं भ्रान्तिकारणम् ॥११४०॥
चिदात्मत्वं तु सामान्यं विशेषो ब्रह्मरूपता ॥
भवेदारोप्यसंस्कारो ह्यनादिर्द्वैतवासना ॥ ११४१ ॥
तत्र ब्रह्मात्मविज्ञाने निर्हेतुर्विभ्रमः कथम् ॥
उदेति, द्वैतधीस्तेषां बाधितैवानुवर्त्तते ॥ ११४२ ॥

---

इष्टापत्तिमाह *नीरागादिरिति । अयं भावः—बोधोत्पत्त्यनन्तरं रागादि न सम्भवतीति वदन्तं प्रति जीवन्मुक्तिप्रतिपादकशास्त्रान्यथानुपपत्त्या विदुषोऽपि रागानिवृत्तिरस्तीत्येतावत्साधितं, तद्रागस्य गात्रयात्रामात्रनिमित्तप्रवृत्तिहेतुत्वेऽपि निषिद्धप्रवृत्तिजननासमर्थत्वादाभासत्वमिष्टमेवेति ॥ ११३७ ॥ प्रारब्धप्रापितस्यापि विद्वद्रागादेराभासत्वे युक्तिमाह *आगमादिति । ब्रह्मास्मीति ज्ञानाद्ब्रह्मीभूतस्य रागाद्यसंसर्गान्न तस्य यथापूर्वं प्रवृत्तिजनकत्वमित्यर्थः॥११३८॥यदुक्तं रागाद्यनुवृत्तौ भ्रमोऽपि पुनर्भवेदिति तत्राह *ज्ञातेति । अहेतुत्वं विवृणोति *विशेषेति॥१२३९॥न केवलं विशेषाज्ञानाभावः किन्तु हेत्वन्तरमपि नेति वक्तुं सर्वसम्मतां भ्रमसामग्रीं दर्शयति *य इति ॥११४०॥ ब्रह्मणि प्रपञ्चारोपेऽप्युक्तहेतुत्रयसद्भावमाह *चिदिति॥११४१॥ ज्ञाततत्त्वस्य हेतुनिवृत्त्या द्वैतभ्रमानुत्पत्तेर्न यथापूर्वं तदनुवृत्तिरित्याह *तत्रेति ॥ ११४२ ॥ द्वैतानुवृत्तौ विदुषः सर्वभावाप्तिः

तयाऽनुवृत्त्याऽऽरब्धस्य शेषोऽप्यत्रोपभुज्यते ॥
विद्यया सर्वभावश्च भुञ्जानेनानुभूयते ॥ ११४३ ॥
देहादिरेव भोगस्य हेतुर्न त्वस्य वस्तुता ॥
अनृतेनापि भोगोऽस्ति स्वप्ने देहादिना यतः॥ ११४४॥
वस्तुत्वमेव विद्येयं बाधते नानृतात्मताम् ॥
नादर्शस्थमुखं बाध्यं स्वमुखैकत्वविद्यया ॥ ११४५ ॥
वास्तवांशस्य दग्धत्वात्प्रतीत्या भोगसम्भवात् ॥
जीवन्मुक्तिकथा प्रोक्ता प्रारब्धान्तमनिन्दिता॥११४६॥
तस्मान्न जीवतः सर्वभावः क्वापि विरुध्यते ॥
अहं ब्रह्मेति यो वेत्ति सद्यः सर्वं भवत्यसौ ॥ ११४७॥
आत्मेत्येवेति विद्यायाः सूत्रं यत्सूत्रितं पुरा ॥
तद्व्याख्यानमिदं श्रुत्या सङ्क्षेपेण समापितम् ॥११४८॥
इत्थमादेयविद्यायाः सूत्रवृत्ती उदाहृते ॥
हेयाविद्यां स्वकार्येण युक्तां सूत्रयति श्रुतिः ॥११४९॥
श्रुतिः–अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽह-
मस्मीति न स वेद ॥

---

कथं स्यादित्याशङ्क्य सर्वत्वविरोधिद्वैतसत्यत्वांशस्य विद्यया बाधितत्वादसत्यत्वांशानुवृत्तिमात्रेण प्रारब्धभोगसम्भवान्न विरोध इत्याह *तयाऽनुवृत्त्येति ॥११४३॥ उक्तमर्थं सदृष्टान्तमुपपादयति *देहादिरिति ॥ ११४४ ॥ ११४५ ॥ ११४६ ॥ परमतनिराकरणमुपसंहरति *तस्मादिति ॥ ११४७ ॥ तदाहुरित्यादिश्रुतितात्पर्यं निगमयति *आत्मेति ॥ ११४८ ॥ वृत्तानुद्रवणपुरःसरम् अथ योऽन्यामित्याद्यविद्यासूत्रमवतारयति *इत्थमिति ॥११४९॥ अथशब्दस्य विद्यासूत्रानन्तर्यं स्पष्टं मत्वा

वार्त्ति० स्वस्मादन्यां देवतां य उपास्ते स्वं न वेद सः ॥
इति सूत्रमविद्यायाः सकार्यायाः श्रुतीरितम् ॥११५०॥
स्वब्रह्मत्वापरिज्ञानमविद्याऽनर्थकारिणी ॥
अन्योपास्त्या पारतन्त्र्यमिहानर्थ इतीर्यते ॥ ११५१ ॥
नन्वव्याकृतमज्ञानं व्याकृतं कार्यमीरितम् ॥
तदेव द्वयमत्रापि भूयः कस्मादुदीर्यते ॥ ११५२ ॥
शृणु विद्याफले पुंसां विसंवादभ्रमोदयम् ॥
विनिवारयितुं बोधविनिवर्त्यं विविच्यते ॥ ११५३ ॥
अध्यात्ममधिदैवं च जीवत्वेशत्वकल्पिका ॥
द्विधा शक्तिरविद्याया द्वैविध्यं तद्विविच्यते ॥११५४॥
स्वाश्रयं मोहयेद्या ऽसौ शक्तिर्जीवत्वकल्पिका ॥
साऽस्य ब्रह्मत्वमावृत्य जनयेज्जीवताभ्रमम् ॥ ११५५ ॥
जीवोऽहमिति मूढोऽन्यामुपास्ते देवतामयम् ॥

---

ऽवशिष्टाक्षराणि योजयति *स्वस्मादिति । स्वम्—आत्मत-त्वम् ॥ ११५० ॥ अविद्याया उक्तहेयत्वसिद्धये तत्स्वरूपक-थनपूर्वकं तत्कार्यं प्रकटयति *स्वेति । स्वस्य ब्रह्मत्वाज्ञान-मेवाविद्या सा चानर्थहेतुस्तत्कृतानर्थश्च पारतन्त्र्यमेवेत्यर्थः । ॥ ११५१ ॥ तद्वेदं तर्हीत्यादिवाक्येनाविद्यासूत्रस्य पौनरु-क्त्यमाशङ्क्य परिहरति *नन्वित्यादिना ॥ ११५२ ॥ *विसं-वादेति । अव्याकृतशब्दितमायातत्कार्ययोर्ब्रह्मबोधानन्तरम-प्यनुवृत्त्या तयोरनिवर्त्यत्वेन वैयर्थ्यशङ्कायां बोधनिवर्त्यस्व-रूपविवेचनेनेदं वाक्यमर्थवदित्यर्थः ॥ ११५३ ॥ निवर्त्यस्वरूपं विवेचयितुं शक्तिद्वैविध्यमाह *अध्यात्ममिति ॥ ११५४ ॥ त-त्र तावज्जीवत्वापादकशक्तिं तत्कार्यं च दर्शयन्विद्यया तन्नि-

सेयं मोहकरी शक्तिर्विद्ययैव निवर्त्तते ॥ ११५६ ॥
न मोहयति या शक्तिः स्वाश्रयं साधिदैविकी ॥
आविर्भावतिरोभावौ व्याकृताव्याकृताभिधौ ॥ ११५७॥
प्रतिभासत एवैषा विदुषोऽप्यत्र जीवतः ॥
तस्याः प्रारब्धभोगान्ते प्रतिभासो निवर्त्तते ॥११५८॥
तामाधिदैविकीं शक्तिमाहुर्मायेति केचन ॥
आध्यात्मिकीं मोहकरीमविद्येति प्रचक्षते ॥ ११५९ ॥

---

वृत्तिमाह *स्वाश्रयमित्यादिना ॥ ११५५ ॥ ११५६ ॥ ईशत्वापादिकां शक्तिमाह *नेति । पूर्वोक्ताव्याकृतेनैव प्रपञ्चोत्पत्त्युपपत्तेः किमाधिदैविकशक्तिकल्पनयेत्याशङ्क्यास्या एव सृष्टिप्रलययोर्व्याकृताव्याकृताभिधत्वान्नातिरिक्तं किञ्चित्कल्प्यत इत्याह *आविर्भावेति ॥ ११५७ ॥ अस्याः शक्तेर्ब्रह्मधीनिवर्त्यत्वाभावाद्विदुषोऽप्येतद्भानमविरुद्धमित्याह *प्रतीति । तद्भानावधिमाह *तस्या इति । अयं भावः—मूलप्रकृतिरेव विक्षेपशक्तिप्राधान्यादाधिदैविकशक्तिर्मायेति चाभिधीयते, सैवावरणशक्तिप्राधान्यादध्यात्मशक्तिरविद्येति च कथ्यते। आवरणशक्तयश्च प्रतिजीवं भिन्नाः, तथाच एकस्मिञ्जीवे विद्योत्पत्तौ तदावरणनिवृत्त्या तत्र प्रकृतौ जीवत्वापादकाविद्यात्वनिवृत्तावपि जीवान्तरसंसारहेतुमायास्वरूपं न निवर्त्तते, तत्प्रारब्धप्रतिबद्धत्वात्। तथापि विदुषो देहपातानन्तरमसङ्गशुद्धचैतन्येनैकीभूतस्य सम्बन्धाभावान्न मायातत्कार्यप्रतिभास इति॥११५८॥ एकदेशिनस्तु—मायाऽविद्ययोरात्यन्तिकभेदमाहुः, तन्मतमनुवदति *तामिति ॥११५९॥ "माया चाविद्या च स्वयमेव भवति"

अविद्यामाययोर्भेदमात्यन्तिकमपाकरोत् ॥
यत्नाद्विवरणाचार्य ऊचे त्वाकारभिन्नताम् ॥ ११६० ॥
सृष्टिप्रकरणे तत्र मायाकारः पुरोदितः ॥
अव्याकृतगिरा तस्य कार्यं व्याकृतमीरितम् ॥११६१॥
कर्मप्रकरणे त्वस्मिन्नविद्याकार ईर्यते ॥
स्वस्माद्भिन्ना देवतेति धीरविद्याविजृम्भिता ॥११६२॥
श्रुतिः–यथा पशुरेवं स देवानां, यथा ह वै बहवः प-

---

"मायैवाज्ञानशब्देन पठ्यते मुनिसत्तम"इत्यादिश्रुतिस्मृतिविरोधात्, मायाऽविद्याभेदव्यवहारस्योक्तविधयाऽऽकारभेदमात्रेणाप्युपपत्तेर्न तयोरात्यन्तिकभेद इति श्रीप्रकाशात्मचरणैरेव तन्मतस्य निराकृतत्वान्नास्माभिरत्र यत्यत इत्याह *अविद्येति ॥ ११६० ॥ एवं प्रकृतेर्द्वैविध्यमुपपाद्य पौनरुक्त्यं परिहर्तुमव्याकृतवाक्योक्तमर्थमनुवदति *सृष्टीति ॥ ११६१ ॥ अविद्यासूत्रार्थमाह *कर्मेति । तथा चानेन वाक्येन ज्ञाननिवर्त्याज्ञानशब्दिताविद्यात्वांशनिरूपणान्न पौनरुक्त्यमिति भावः । अस्मिन्वाक्ये न स वेदेत्यनेनाविद्यात्वांशः कथितः, अवशिष्टेन तत्कार्यमिति विवेकः ॥ ११६२ ॥

यथा पशुरित्यादिश्रुतेरयमर्थः—यथा गवादि वहनदोहनाद्युपकारैरुपभुज्यते एवमविद्वानिज्याद्यनेकोपकारैरुपभोग्यत्वाद्देवानां पशुतुल्य इत्यर्थः । उक्तमेव व्यनक्ति *यथा ह वा इति । यथा लोके बहवो गवादयो मनुष्यमात्मनोऽधिष्ठातारं भुज्युः पालयेयुरेवं पशुस्थानीय एकैकोऽविद्वान् देवानिति पित्राद्युपलक्षणार्थं स्तुतिनमस्कारेज्यादिना भुनक्ति पालयति ।

शवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्ति ॥
वार्त्ति० ॥ स्वस्य तत्त्वमविज्ञाय यागदानादिकर्मभिः ॥
स्वतोऽन्यदेवताः पाति ह्यनड्वान्वाणिजं यथा ॥११६३॥
श्रुतिः ॥ एकस्मिन्नेव पशावादीयमाने ऽप्रियं भवति
किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः॥१०॥
वार्त्ति०अपि भूरिपशोः पुंस एकस्मिन्नपि तस्करैः ॥
ह्रियमाणे पशोर्दुःखं किमु सर्वापहारतः ॥ ११६४ ॥
सर्वस्वतुल्ये नृपशौ ब्रह्मधीपरिमोषिणा ॥
ह्रियमाणे महद्दुःखं स्यात्सर्वेषां दिवौकसाम्॥११६५॥
तस्मादेषां तन्न प्रियं यन्मनुष्या विजानते ॥
ब्रह्मात्मत्वमतो देवाः प्रतिबध्नन्ति बोधजम् ॥ ११६६॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः ॥
संन्यासिनोऽपि दृश्यन्ते देवसंदूषिताशयाः ॥ ११६७ ॥
मुमुक्षुः कर्मभिर्देवानाराध्यैषामनुग्रहात् ॥

---

एतत्सर्वमभिप्रेत्याह *स्वस्येति। स्वतः स्वस्मात्॥११६३॥ एकस्मिन्नित्यादिवाक्यं व्याचष्टे *अपीति ॥ ११६४ ॥ तस्मादेषामित्यादेरर्थमाह *सर्वस्वेत्यादिना । परिमोषिणा तस्करेण। ब्रह्मज्ञाने जाते कर्माधिकारहेत्वभिमानस्य प्रत्यङ्मात्रत्वेनावसानात्परिमोषित्वं ब्रह्मधियः स्फुटमित्यर्थः ॥ ११६५ ॥ देवानामप्रीतौ को दोषस्तत्राह *ब्रह्मेति ॥ ११६६ ॥ तत्र लिङ्गमाह *प्रमादिन इति । श्रवणादिषु मनःसमाधानवैधुर्यं प्रमादः, स च चेतसो बाह्यार्थप्रावण्ये हेतुस्तच्च परोत्कर्षासहिष्णुत्वे कारणं, तच्च कलहकुतूहलित्वे निदानं, प्रमादे च हेतुर्देवादिभिरनाराधितैरवज्ञातैर्दूषितत्वमिति विभागः ॥ ११६७ ॥

अन्तःस्थितो वेत्ति चेत्स्वं पारतन्त्र्यान्निवर्तते ॥११६८॥
यो देवपारतन्त्र्यस्य हेतुर्मोहश्चिदात्मनः ॥
ब्रह्मत्वबुध्या हेयो ऽसावित्येनदिह वर्ण्यते ॥ ११६९ ॥
प्रामाण्यं कर्मकाण्डस्य देवानां प्रभुता तथा ॥
पशुकल्पेषु मूढेषु भवेन्न तु विवेकिनि ॥ ११७० ॥
इत्थमाध्यात्मिकाज्ञानं कर्माधिकृतिकारणम् ॥
बोधहेयं जगद्धेतोरव्यक्तात्प्रविवेचितम् ॥ ११७१ ॥
नन्वब्रह्मत्वधीर्यद्वदहं ब्रह्मेति बोधतः ॥
निवर्तते, तथा द्वैतधीरप्यद्वैतबोधतः ॥ ११७२ ॥
ततश्च जीवतो बोधहेयं किञ्चिदथेतरत् ॥
भुक्तभोगस्य देहान्ते नङ्क्ष्यतीत्यसदीरितम् ॥ ११७३ ॥
नैषदोषो यतो बोधः कृत्स्नाज्ञानं दहन्नपि ॥

---

देवादीनां मनुष्येषु ब्रह्मज्ञानस्याप्रियत्वे तन्मुमुक्षा विफलेत्याशङ्क्य देवाप्रियवाक्येन ध्वनितं दर्शयति *मुमुक्षुरिति । चित्तशुद्धिपर्यन्तं देवादीन् स्वकर्मभिराराध्यान्तर्मुखो भूत्वा स्वस्वरूपं पश्यतः फलमाह *पारतन्त्र्यादिति ॥ ११६८ ॥ देवादिपशुत्वेनाज्ञनिन्दावचनस्य तात्पर्यमाह *य इत्यादिना ॥११६९॥ ॥११७०॥ अविद्यासूत्रार्थमुपसंहरति *इत्थमिति ॥ ११७१ ॥ उक्तमेवार्थं द्रढयितुमाक्षिपति *नन्विति । अद्वितीयब्रह्मज्ञानादब्रह्मत्ववत्सर्वद्वैतमपि बाध्येत विरोधित्वाविशेषादित्यर्थः ॥ ११७२ ॥ अस्तु ते किमायातं तत्राह *ततश्चेति । सर्वद्वैतनिवृत्त्युपगमेऽविद्यात्वांशो बोधनिवर्त्यः, मायाकार्यं तु यावत्प्रारब्धं प्रतिभासत इति त्वदुक्तमनुपपन्नमित्यर्थः ॥ ११७३ ॥ अद्वैतब्रह्मज्ञानं विरोधित्वाविशेषेऽप्यब्रह्मत्वमेव दहति न प्रार-

न दहेद्भोगहेतुत्वमारब्धप्रतिबन्धतः ॥ ११७४ ॥
मण्यादयो यथा वह्नेः प्रतिबध्नन्ति दग्धृताम् ॥
न तु प्रकाशसामर्थ्यं तथांशप्रतिबन्धनम् ॥ ११७५ ॥
भोगोपयुक्तं देहादि यावत्तावन्न बाध्यते ॥
विद्ययाऽनुपयुक्तस्तु बाध्यते जीवताभ्रमः ॥ ११७६ ॥
ननु देहाभिमानेन विना भोगो न दृश्यते ॥
सुप्तौ, तेनात्र भोगाय जीवभ्रान्तिरपेक्षिता ॥११७७॥
मैवं, देहाभिमानस्य जीवभ्रान्तेः पृथक्त्वतः ॥
कर्मजन्योऽभिमानः स्याद् भ्रान्तिस्त्वज्ञानमात्रजा ११७८
कर्मक्षयेऽभिमानोऽयं सुषुप्तौ प्रविलीयते ॥
पुनः कर्मोद्भवे सोऽयमुदेत्येव हि जागरे ॥ ११७९ ॥
लिङ्गदेहस्थूलदेहसम्बन्धो लिङ्गकर्मजः ॥
कर्माभावाद्ब्रह्मणस्तु जीवता नैव कर्मजा ॥ ११८० ॥

---

ब्धभोगसाधनं द्वैतं तेनैव प्रतिबद्धत्वादिति परिहरति *नेति। दहन्नपि दग्धुं समर्थोऽपीत्यर्थः ॥ ११७४ ॥ उक्तमर्थं दृष्टान्तपूर्वकमुपपादयति *मणीत्यादिना ॥११७५॥११७६॥ जीवत्वभ्रमस्य भोगानुपयुक्तत्वमसिद्धमिति शङ्कते *नन्विति ॥११७७॥ आरब्धभोगहेतुदेहाभिमाने सत्यप्यविद्याप्रयुक्तजीवत्वभ्रमनिवृत्तौ न किञ्चिद्बाधकं तयोरैक्यासिद्धेरिति परिहरति *मैवमिति ॥ ११७८ ॥ अभिमानस्य कर्मजन्यत्वमुपपादयति *कर्मेति ॥ ११७९ ॥ एवं जीवस्य देहद्वयाभिमानः कर्मजन्यो, ब्रह्मणि जीवत्वारोपो न कर्मजन्य इत्याह *लिङ्गेति । *लिङ्गकर्मज इति । लिङ्गोपहितात्मककर्मजन्य इत्यर्थः ॥ ११८० ॥ ननु किमिदं जीवत्वं को

लिङ्गदेहस्य सान्निध्यादविवेकेन जीवता ॥
प्राणधारणरूपैषा भ्रमाद्ब्रह्मणि कल्पिता ॥ ११८१ ॥
अविवेककृतं यत्तद्विवेकेन विलीयते ॥
कर्मापादितसम्बन्धो लीनः स्यात्कर्मणः क्षये ॥११८२॥
अज्ञानजत्वात्कर्मापि बाध्यं यद्यपि विद्यया ॥
तथाऽप्यतीतकर्मैतद्बाध्यते विद्यया कथम् ॥ ११८३ ॥
फलं नारभते यावत्तावत्कर्म स्वरूपतः ॥
वर्तते, फलमुत्पाद्य निवर्त्तेतैव बीजवत् ॥ ११८४ ॥
यथोत्पाद्याङ्कुरं बीजं जहात्येव हि बीजताम् ॥
सोऽङ्कुरो वृक्षरूपेण वर्द्धते न विनश्यति ॥ ११८५ ॥
तथा देहादिमुत्पाद्य युक्तं कतिपयायुषा ॥
कर्म त्यजति कर्मत्वं देहादिरनुवर्त्तते ॥ ११८६ ॥
मुक्तो बाणो यथा वेगक्षये पतति नान्यथा ॥
असौ देहस्तथैवायुःक्षये शाम्यति नान्यथा ॥ ११८७ ॥

---

वा ब्रह्मणि तदारोपहेतुस्तत्राह *लिङ्गेति ॥ भ्रमशब्दस्तद्धेत्वनादिवासनावचनः ॥ ११८१ ॥ एवं जीवत्वदेहाभिमानयोर्भेदे सिद्धे फलितमाह *अविवेकेति ॥ ११८२ ॥ अज्ञाननिवृत्तौ तत्कार्यकर्मणः स्थित्ययोगात्कथं तदधीनदेहाभिमानानुवृत्तिरिति शङ्कते *अज्ञानेति । प्रारब्धकर्मणो ज्ञानोत्पत्तिकालेऽभावान्न तन्निवर्त्यत्वमिति परिहरति *तथाऽपीति ॥ ११८३ ॥ कर्मणोऽतीतत्वमुपपादयति *फलमिति ॥११८४॥ बीजदृष्टान्तं विवृणोति *यथेति । कतिपयायुषा युक्तं देहादिकमित्यन्वयः॥११८५॥११८६॥कथं तर्हि देहनाश इत्याशङ्क्य सदृष्टान्तमाह *मुक्त इति। असौ देहः,इदं प्रारब्धशरीरम्॥११८७॥

यावदायुस्तावदेष भुङ्क्ते भ्रमविवर्जितः ॥
अन्तरेणापि जीवत्वभ्रमं भोगोऽत्र सम्भवेत् ॥११८८॥
सुखदुःखविकाराढ्यधियः साक्ष्यवभासता ॥
भोगः प्रोक्तः, स भोगश्च समानो मूढबुद्धयोः ॥११८९॥
भोक्तृत्वमपि कर्तृत्वं चिदाभासगतं चिति ॥
मूढ आरोपयेद् बुद्धो नेति वैषम्यमेतयोः ॥ ११९० ॥
इत्युक्तयुक्तितस्तस्य तावदेव चिरं त्विति ॥
श्रुतेर्ज्ञान्यनुभूतेश्च भोगो बाध्यो न बोधतः ॥ ११९१ ॥
कर्माधिकारिजीवस्य भ्रान्तिकृद्यदवेदनम् ॥
तद्बोधबाध्यं तद्बाधे याति देवाद्यधीनता ॥ ११९२ ॥
ननु बोधात्पुराऽप्यात्मा न देवादिवशं गतः ॥
देहादि तूर्ध्वमप्यस्ति यद्देवादिवशानुगम् ॥ ११९३ ॥

---

जीवत्वभ्रमशून्यस्यापि भोगसम्भवमुक्तं निगमयति *याव-दिति ॥ ११८८ ॥ भोगस्वरूपपर्यालोचनयाऽपि विदुषस्त-त्सम्भवमाह *सुखेति ॥ ११८९ ॥ कस्तर्हि मूढाद् बुद्धस्य विशेषस्तत्राह *भोक्तृत्वमिति ॥ ११९० ॥ विदुषो यावत्प्रार-ब्धभोगोऽस्ति इत्यत्र युक्त्यनुग्राह्यं मानमाह *इतीति॥११९१ ॥ एवं सति ब्रह्मज्ञानं भोगानुपयुक्तकर्तृत्वादिभ्रान्तितत्साधनमात्रं बाधत इत्युक्तमित्याह *कर्मेति । कर्तृत्वादिभ्रमनिवृत्तेः फलमाह *यातीति । निवर्त्तत इत्यर्थः ॥११९२॥ विदुषो देवादिपारत-न्त्र्यं नेत्युक्तमयुक्तं विद्वत्पदाभिधेयदेहद्वयस्य देवाद्यधीनत्वादा-त्मनस्तदभिधेयत्वे तस्य सर्वदा स्वतन्त्रत्वादिति शङ्कते *न-न्वित्यादिना ॥ ११९३ ॥ विदुषो ब्रह्मीभूतस्य भाविजन्माभा-वनिश्चयान्न कर्मणि प्रवृत्तिः, मूढस्तु वस्तुतः स्वतन्त्रोऽप्यात्मनि

तथाच सत्यबुद्धस्य कर्मित्वं न विवेकिनः ॥
इति व्यवस्थापयितुं न शक्यमिति चेत्, न तत् ॥११९४॥
मुक्तोऽहमात्मा देहादिरारब्धान्ते विलीयते ॥
भाविजन्म न कस्यापीत्येवं ज्ञाने कुतः क्रिया ॥११९५॥
अवाप्स्याम्युत्तमं देहमित्यध्यस्यात्ममोहतः ॥
तद्देहसाधने पुण्ये यथाशास्त्रं प्रवर्त्तते ॥ ११९६ ॥
अतः कर्मप्रकरणे कर्महेतुमवेदनम् ॥
सूत्रयित्वाऽथ तत्कार्यं पारतन्त्र्यादि वर्ण्यते ॥ ११९७॥
स्पष्टीकृतं पारतन्त्र्यं पशुदृष्टान्ततो नृणाम्—॥
श्रुतिः ॥ ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्न व्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्त्रं यान्येतानि देव-

---

पारतन्त्र्यमारोप्योत्तमजन्मप्रेप्सया कर्म करोतीत्युक्तव्यवस्था सम्भवतीति समाधत्ते *न तदित्यादिना ॥ ११९४ ॥११९५॥ ॥ ११९६ ॥ तस्मादविद्यासूत्रार्थः पूर्वोक्तो निरवद्य इत्युपसंहरति *अत इति ॥ ११९७॥ कस्मिन्वाक्ये पारतन्त्र्यवर्णनमिति तत्राह *स्पष्टीकृतमिति— ।

ब्रह्म वा इदमित्यादिश्रुतेरयमर्थः—योऽन्यां देवतामित्यादिना सह कार्येणाविद्या सूत्रिता तामेव प्रपञ्चयिष्यन्नव्यवहितोक्तकर्माधिकारिसिद्धये अविद्याविवर्तचातुर्वर्ण्यसृष्टिं तावदाह । अत्र यद्यपि अथेत्यभ्यमन्थदित्यत्र प्रजापतिसृष्टिपरिपूर्तये सकलदेवसर्गोपलक्षणत्वेन प्रधानभूताग्निसृष्टेरुक्तत्वान्न पुनरिन्द्रादिसर्गो वक्तव्यस्तथापि तस्याप्यविद्यात्वासिद्ध्यर्थं पुनर्वचनमिति ध्येयम्। ब्रह्म वा इदमग्र आसीद् यदग्निं सृष्ट्वाऽग्निरूपापन्नं ब्राह्मणजात्यभिमानवद् ब्रह्मेत्युच्यते । अग्नेरपि देव-

त्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति। तस्मात्क्षत्रात्परं नास्ति, तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये, क्षत्र एव तद्यशो दधाति, सैषा क्षत्रस्य योनिर्यद् ब्रह्म । तस्माद्यद्यपि

---

ब्राह्मणत्वादिदं क्षत्रियादिजातमग्रे क्षत्रादिसृष्टेः पूर्वं ब्रह्ममात्रं संवृत्तमित्यर्थः । एकमेव–क्षत्रादिभेदो नास्तीति । तद्ब्रह्म एकं क्षत्रादिपरिपालयितृशून्यं सन्न व्यभवत् कर्मणे नालमासीत्, चातुर्वर्ण्यसाध्यत्वात्कर्मण इति भावः। तद्ब्रह्म आत्मनः कर्मकर्तृत्वविभूत्यै श्रेयोरूपं प्रशस्तरूपं क्षत्रं क्षत्रियजातिमतिशयेनासृजत सृष्टवत् । तामेव व्यक्तिभेदेन प्रदर्शयति–यान्येतानि प्रसिद्धानि लोके देवत्रा देवेषु क्षत्राणि । तत्राप्यभिषिक्तान्विशेषतो निर्दिशति *इन्द्र इत्यादिना ॥ इन्द्रो देवानां राजा, वरुणो यादसां, सोमो ब्राह्मणानां, रुद्रः पशूनां, पर्जन्यो विद्युदादीनां, यमः पितॄणां मृत्युरोगादीनाम्, ईशानो भासामित्येवमादीनि देवक्षत्राणि सृष्ट्वाऽनन्तरं मनुष्यक्षत्राणि पुरूरवः प्रभृतीनि सृष्टवदेवेति द्रष्टव्यानि । तदर्थ एव देवक्षत्रसर्गः प्रस्तुतः । यस्मादतिशयेन सृष्टं क्षत्रं तस्मात् तस्मात्परं नास्ति, ब्राह्मणजातेरपि नियन्तृत्वादिति भावः ॥ क्षत्रस्योत्कर्षे हेत्वन्तरमाह *तस्मादिति । राजसूयाभिषिक्तेन मञ्चिकायां स्थितेन राज्ञा ब्रह्मन्नित्यामन्त्रित ऋत्विक् तं प्रतिवदति त्वं राजन्ब्रह्मासीति, तदेतदाह *क्षत्र एव तदिति । तद् ब्राह्मण्याख्यं यशः क्षत्रिये स्थापयतीत्यर्थः ॥ एवं ब्राह्मणस्य क्षत्रं प्रति नीचत्वोपगमेऽपि एषा प्रकृता यद्ब्रह्म ब्राह्मणजातिः सा क्षत्रस्य योनिरेव, पुरोहितं विना क्षत्रासम्भवादिति भावः । त-

राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ योनिमृच्छति स पापीयान्भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ ११ ॥ स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥ १२ ॥ स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेयꣳ हीदꣳ सर्वं पुष्यति यदिदं किञ्च ॥ १३ ॥ स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्ति।

---

स्मात् क्षत्रस्य ब्राह्मणाधीनत्वाद्यद्यपि राजा परमतां राजसूयाभिषिक्तगुणं प्राप्नोति ब्रह्मैव ब्राह्मणजातिमेवान्ततः कर्मसमाप्तावुपनिश्रयति, पुरोहितं पुरतः सन्निधत्त इत्यर्थः। यः पुनर्बलाभिमानात्स्वां योनिं ब्राह्मणम् उ एनं हिनस्ति न्यग्भावेन पश्यति स स्वां योनिमृच्छति प्रसवं विनाशयति, स एतत्कृत्वा पापीयान्भवति पापतरो भवति यथा लोके श्रेयांसं हिंसित्वा परिभूय पापतरो भवति, तद्वदित्यर्थः ॥ ११ ॥ क्षत्रे सृष्टेऽपि स ब्राह्मणोऽस्मीति अभिमानी पुरुषः पूर्ववन्न व्यभवत्, कर्मसाधनवित्तोपार्जयितुरभावात्। विशं वैश्यम्। कः पुनरसौ विट्? यान्येतानि देवजातानि य एते देवजातिभेदा इत्यर्थः। गणशः गणं गणं कथ्यन्ते वसवोऽष्टसङ्ख्यो गणः एकादश रुद्राः, द्वादशादित्याः, त्रयोदश विश्वेदेवाः, मरुतः सगणाः॥१२॥ स परिचारकाभावात्पुनरपि न व्यभवत्। शूद्र एव शौद्रः स्वार्थेऽण् वृद्धिः। कः पुनरसौ पूषा? शूद्रवर्ण इति निर्दिशति *इयमिति। पृथिवीत्यर्थः॥ स्वयमेव निर्वचनमाह *इयं हीति ॥१३॥ स

अथो अबलीयान्बलीयाᳬसमाशᳬसते धर्मेण यथा रा-
ज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्त-
माहुर्धर्मं वदतीति धर्मं वा वदन्तᳬ सत्यं वदतीत्येत-
द्ध्येवैतदुभयं भवति ॥ १४॥ तदेतद्ब्रह्म क्षत्रं विट् शूद्र-
स्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रि-

---

चतुरो वर्णान् सृष्ट्वाऽपि न व्यभवत् । क्षत्रस्य नियन्तृत्वेऽपि क्रूर-
त्वात्तस्यापि नियन्तुरभावे कर्मानुष्ठानासम्भवादिति भावः। त-
च्छ्रेयोरूपमित्यत्र स्रष्टृ ब्रह्म तच्छब्दार्थः। तदेतच्छ्रेयोरूपं सृष्टं
क्षत्रस्य क्षत्रं नियन्तृ यो धर्मस्तस्मादुग्रक्षत्रस्यापि नियन्तृत्वाद्ध-
र्मस्य वैशिष्ट्यसिद्ध्यर्थं लोकप्रसिद्धिं दर्शयति *अथो इति ।
आशंसते कामयते, जेतुमिति शेषः। धर्मेण धर्मबलेन । यथा
राज्ञा स्पर्द्धमानः कुटुम्बिको दुर्बलोऽपि भूपं जेतुमुत्सहते
एवमित्यर्थः ॥ सत्याभिन्नत्वादपि धर्मः सर्वनियन्तेत्यभिप्रे-
त्य तदभेदमाह *यो वा इति । तत्र लोकप्रसिद्धिं प्रमाण-
यति *तस्मादिति । यथाशास्त्रं निर्णेतुं व्यवाह्रियमाणोऽग्नि-
होत्रादिः सत्यमित्युच्यते, स एवानुष्ठीयमानो धर्म इति ॥
ज्ञानानुष्ठानयोश्च कार्यकारणरूपत्वान्मृद्घटवत्सत्यधर्मयोरैक्य-
मित्याह *एतद्ध्येव तादिति ॥ उभयमप्यभिन्नमित्यर्थः। तथाच
सत्यलक्षणो धर्मः शास्त्रज्ञानमपि नियमयति इति भवति सर्वनि-
यन्तेति भावः॥ १४ ॥ उक्तां सृष्टिमुपसंहरति *तदेतद्ब्रह्मेत्या-
दिना॥ देवेषु क्षत्रादिवद्ब्राह्मणं मनुष्येषु क्षत्रादिकं च दर्शयति *त
दग्निनेत्यादिना ॥ यत्स्रष्टृ ब्रह्म देवेष्वग्निं सृष्ट्वा तदात्मनाऽभ-
वत्तदेव मनुष्येषु च ब्राह्मणात्मनाऽऽसीत, तदेवोभयरूपेण
विकृतात्मना इन्द्रादिदेवक्षत्राद्यधिष्ठितमानुष्यक्षत्राद्यात्मनाऽप्य

येण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्या ँ हि रूपाभ्यां ब्रह्माभवत् ॥

वार्त्ति०॥ वर्णाश्रमादितद्धर्मसृष्टिः कर्मार्थमारिता ११९८
नन्वेवं तर्हि मुक्तिश्च स्यादेवात्मधियं विना ॥
अज्ञानकर्मणो श्रुत्या चादरेणोपवर्णनात् ॥ ११९९ ॥
नैवमात्मा किमज्ञातो मुक्तिदः कर्म वा वृहत् ॥

भूदिति ब्रह्मैव सर्वात्मकं जातमित्यर्थः ॥ एवमविकृतस्य ब्रह्मणोऽग्न्यादिना विकृतस्येन्द्रादिनाऽवस्थानमुक्तम्, इदानीमविकृतब्रह्मणोऽग्न्यादिरूपेणावस्थानफलमाह *तस्मादित्यादिना ॥ यस्मादाकाशाद्यात्मना विकृतमपि ब्रह्म क्षत्रादिरूपेणाविकृतमेवाग्न्यात्मना मनुष्यब्राह्मणात्मना चाभवत्तस्माद्देवेषु देवानां मध्ये ऽग्नौ अग्निसम्बद्धमेव कर्म कृत्वा मनुष्याणां मध्ये ब्राह्मण्यप्रयुक्तजप्यादिमात्रं कृत्वा लोके कर्मफलमिच्छन्ते कामिन इति योजना ॥ तदुक्तम्—जप्येनैव तु संसिद्ध्येद्ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते इति। मैत्रः सर्वभूताभयप्रदः। अथ यो ह वे त्यादिवाक्यमवतारयितुं सृष्टिश्रुतितात्पर्यमाह *वर्णेति ॥ ११९८ ॥ उत्तरग्रन्थव्यावर्त्यां शङ्कामाह *नन्विति। अविद्याया वर्णाश्रमादिसृष्टेश्च कर्मार्थत्वेनाभिधाने श्रुतितात्पर्यगम्यत्वेन तयोरेव मुक्तावपि हेतुत्वसम्भवात्कृतं ज्ञानेनेत्यर्थः ॥ ११९९ ॥ तयोर्मुक्तिहेतुत्वमनुपपन्नमिति दूषयति *नैवमिति। कुतोऽनुपपत्तिरित्याशङ्क्य किमविदितोऽपि परमात्मा वस्तुतः पुरुषार्थत्वात्स्वरूपत्वाच्च जीवस्य पुमर्थहेतुरिति तद्विशेषणीभूतावेदनमपि पुमर्थहेतुरित्युच्यते उताश्वमेधादि कर्मैवेति विकल्पमाह *आत्मा

आम्नायकृषिवन्नायमज्ञातात्मा फलप्रदः ॥ १२०० ॥
अनधीतो यथा वेदो नार्थज्ञानेन पालयेत् ॥
अकृता वा कृषिः पाति नाकर्त्तारं फलार्थिनम् ॥१२०१॥
श्रुतिः ॥ अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा
प्रैति स एनमविदितो न भुनक्ति यथा वेदो वा ऽननू-
क्तोऽन्यद्वा कर्माकृतम् ॥
वार्त्ति० ॥ तथा स्वात्माऽप्यविज्ञातो मुमुक्षुं मोक्षदानतः॥
न पालयत्यतो मुक्तिरज्ञस्य न हि कस्यचित् ॥१२०२॥
स्वात्माख्यलोकमज्ञात्वा यो देहादस्वलोकतः ॥
प्रैत्यसौ पुनरप्यन्यं देहलोकं व्रजेद् दृढम् ॥ १२०३ ॥
श्रुतिः ॥ यदिह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति
तद्धास्यान्ततः क्षीयत एव ॥
वार्त्ति० ॥ अनात्मविन्महत्पुण्यमश्वमेधादिकं यदि ॥
कुर्यान्नित्यपदायैतदथाप्यन्ते विनश्यति ॥ १२०४ ॥

---

किमिति ॥ अज्ञातात्मनो मुक्तिहेतुत्वं न सम्भवति सर्वस्यापि नित्यमुक्तत्वप्रसङ्गादिति मत्वा पाठक्रममनादृत्य तत्रैव यथा वेदो वेत्यादिना श्रुत्युक्तदृष्टान्तद्वयं व्याचष्टे *आम्नायेत्यादिना ॥ १२०० ॥ १२०१ ॥ स एनमित्यादिदार्ष्टान्तिकश्रुतिं व्याचष्टे *तथेति । फलितमाह *अत इति ॥ १२०२ ॥ अज्ञस्य न मोक्ष इत्ययमेवाथ यो ह वेत्यत्र निपातत्रयार्थ इति मत्वा ऽव-शिष्टाक्षराणि योजयति *स्वात्माख्येति । *अस्वलोकत इति । अनात्मभूतादित्यर्थः । अपेक्षितं पूरयति *असौ पुनरिति ॥ १२०३ ॥ यदिह वेत्यादिवाक्यं व्याकुर्वन्कर्मैव मुक्तिहेतु-रिति द्वितीयकल्पं प्रत्याह* अनात्मविदित्यादिना । नित्यपदाय

कृतस्य हि क्षयोऽवश्यं गोष्ठागारादिवद्भवेत् ॥
न मोक्षायादरस्तस्माच्छ्रुतावज्ञानकर्मणोः ॥ १२०५ ॥
किन्तु जीवन्मुक्तिकाले बोधहेयं विवेचितम् ॥
मुक्तिस्तु विद्यासूत्रेण सूत्रिता स्याद्विचारतः ॥१२०६॥
श्रुतिः ॥ आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥ १५ ॥
वार्त्ति० ॥ आत्मानमेव निर्द्वैतं स्वप्रभं प्रविचारयेत् ॥
विचारयति यस्तस्य फलं न क्षीयते क्वचित् ॥१२०७॥
कामी कामयते यद्यत्सुखं स्वर्गादिजं पुमान् ॥
अस्मादेवात्मनस्तत्तत्सृजते कर्मपूजितात् ॥ १२०८ ॥

---

मोक्षाय ॥ १२०४ ॥ कर्मफलस्यानित्यत्वे फलितमाह *नेति । यस्मात्कर्मजन्यत्वे मुक्तेरनित्यत्वं दुर्वारं तस्माच्छ्रुतौ मोक्षहेतुत्वेनाज्ञानकर्मणोस्तात्पर्येण प्रतिपादनं नास्तीत्यर्थः ॥ १२०५ ॥ किम्परं तर्ह्यविद्यातत्कार्यबोधिवचनमित्याशङ्क्य पूर्वोक्तं स्मारयति *किन्त्विति । कस्तर्हि मुक्तिहेतुरित्याशङ्क्य विचारतो ज्ञानद्वारा मुक्तिरित्युक्तमेवेत्याह *मुक्तिरिति ॥ १२०६ ॥ विद्यासूत्रविवरणरूपमात्मानमेवेत्यादिवाक्यं व्याख्याति *आत्मानमिति । य आत्मानमित्यादेरर्थमाह *विचारयतीति । कर्मपदव्याख्या *फलमिति। विचारवाचिकर्मशब्दस्तत्प्रयोज्ये विद्याफले लक्षणया वर्तत इति भावः ॥१२०७॥ अस्माद्ध्येवेत्यादेरर्थमाह *कामीति । सृजते प्राप्नोति । प्रत्यक्त्वस्य परमानन्दरूपत्वात्तदेव तत्कर्मानुसारेण जायमानं विषयानन्दरूपमित्यर्थः ॥ १२०८ ॥

अविनाशोऽखिलानन्दहेतुत्वं चेत्यदो द्वयम् ॥
न कर्मणां फले युक्तं, युक्तं विद्याफले तु तत् ॥१२०९॥
सिद्धस्य व्यञ्जिका विद्या व्यक्तात्मा फलमुच्यते ॥
न ह्यात्मनो विनाशोऽस्ति नित्यं विद्याफलं ततः॥१२१०॥
सार्वभौमादिकाः प्रोक्ता उत्तरोत्तरवृद्धितः ॥
हिरण्यगर्भपर्यन्ता आनन्दा आत्मबिन्दवः ॥ १२११ ॥
ब्रह्मानन्दस्य भूतानि मात्रां यान्तीत्युदीरणात् ॥
तत्तत्कर्मानुसारेण ब्रह्मानन्दः स्फुरेन्नृणाम् ॥१२१२॥
तत्तद्विषयकामेन चित्तेऽस्मिन् व्याकुलीकृते ॥
आनन्दः स्वात्मभूतोऽपि स तिरोधीयते नृणाम्॥१२१३॥
पुण्येन विषये लब्धे चित्ते स्वास्थ्यमुपागते ॥
आत्मानन्दः स्फुरेत्तावद्यावद् व्याकुलतान्तरम्॥१२१४॥

---

एवं न हास्य कर्म क्षीयत इत्यादिनाऽक्षयत्वविषयानन्दहेतुत्ववचनात्कर्मशब्दो विद्याफलपर इत्युक्तम् । केचित्तु कर्मशब्दः कर्मफलपर इत्याहुः तदयुक्तं, वाक्यशेषविरोधादित्याह *अविनाश इति । अदो द्वयम् इदं द्वयम् । अमुत्र पुण्यचितो लोकः क्षीयते इत्यादिश्रुतेः कर्मफलस्यानित्यत्वावगमात्तस्य विषयानन्दाहेतुत्वाच्च न कर्मशब्दस्य कर्मफलपरत्वं युक्तमित्यर्थः । स्वमते उक्तहेतुद्वयोपपत्तिमाह *युक्तमिति ॥ १२०९ ॥ तत्र विद्याफलस्य नित्यत्वमुपपादयति *सिद्धस्येति ॥१२१०॥ तस्य विषयानन्दहेतुत्वमाह *सार्वभौमेति ॥ १२११ ॥ एतस्यैवानन्दस्येत्यादिश्रुतिं तत्र प्रमाणयति *ब्रह्मेति। ननु ब्रह्मणोऽस्मत्स्वरूपत्वात्तदानन्दः सर्वदा किमिति न स्फुरेत्? तदाह *तत्तदित्यादिना ॥१२१२॥१२१३॥१२१४॥ उपसंहरति *इत्यत इति ।

एवं च विषयानन्दा ब्रह्मानन्दस्य बिन्दवः ॥
सर्वानन्दनिधिर्विद्याफलमित्यत ईरितम् ॥ १२१५ ॥
आनन्दबिन्द्वभिव्यक्तिहेतुकर्मप्रसिद्धये ॥
ब्रह्मक्षत्रादिवर्णानां सृष्टिर्यत्नेन वर्णिता ॥ १२१६ ॥
श्रुतिः ॥ अथो अयं वा आत्मा सर्वेषां भूतानां लोकः ॥
वार्त्ति०॥ वर्णाश्रमाभिमानी सन्नतत्त्वज्ञः पराङ्मतिः ॥
देवादीनामाश्रयः स्यात्सर्वेषामापिपीलिकम् ॥१२१७॥
श्रुतिः ॥ स यज्जुहोति यद्यजते तेन देवानां लोको-ऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्य-स्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः।

---

यस्माच्छ्रुत्युक्तहेतुद्वयं विद्याफले सङ्गच्छतेऽतः कर्मपदं विद्याफ-लपरमित्युक्तमित्यर्थः ॥ १२१५ ॥विद्याफलमेवं चेदत्र विवक्षितं किमर्थं तर्हि श्रुत्या कर्माधिकारसिद्धये चातुर्वर्ण्यसृष्टिरुक्ता तत्राह *आनन्देति ॥ १२१६ ॥ उत्तरकण्डिकातात्पर्यमाह *वर्णेति ॥ १२१७ ॥

श्रुतावथो इत्ययं वाक्यारम्भार्थः । अयं प्रकृतकर्माधि-कारी शरीरेन्द्रियादिविशिष्टात्मेत्युच्यते । सर्वेषां भूतानां लोको भोग्य इत्यर्थः ॥

कैः पुनः कर्मविशेषैरुपकुर्वन्केषां भूतविशेषाणां लोक इत्याशङ्क्य तद्विभागप्रदर्शनपरं स यज्जुहोतीत्यादिकं व्या-चष्टे *देवानामित्यादिना । देवतोद्देशेन द्रव्यत्यागो यागः,

वार्त्ति० ॥ देवानां यागहोमाभ्यामृषीणां वेदपाठतः ॥
पितृणां श्राद्धतो नृणां वस्त्रान्नगृहदानतः ॥ १२१८ ॥
कर्मणाऽनार्जितो यस्मान्न कश्चिदुपकारकृत् ॥
गृही देवादिभिस्तस्मादर्जितोऽभूत्स्वकर्मभिः ॥१२१९॥
पशूनां तृणनीराभ्यामुच्छिष्टकणधान्यतः ॥
श्वाऽऽखुटिट्टिभमुख्यानामेवं सर्वाश्रयो गृही ॥१२२०॥
स्वस्वकर्मार्जितत्वेन देवाद्याः स्वस्वदेहवत् ॥
अविनाशं सदेच्छन्ति गृहिणः स्वोपकारिणः॥१२२१॥
तत्त्वं बुध्वाऽननुष्ठानं नाशोऽयं गृहिणो महान् ॥
एष देवादिभिः सर्वैर्नहि शक्यश्चिकित्सितुम् ॥१२२२॥
कर्मणामननुष्ठानं मृतिरोगादिना तु यत् ॥
नासावात्यन्तिको नाशो यस्मात्पश्चात्करिष्यति॥१२२३॥
मा भूत्सर्वस्वहानिर्नो ब्रह्मयाथात्म्यविद्यया ॥

---

स एव देशविशेषप्रक्षेपात्त्वधिको होमः ॥ १२१८ ॥ श्रुतौ निपृणाति इत्यस्य प्रयच्छतीत्यर्थः । विन्दति लम्भयतीत्यर्थः ॥ यथोक्तहोमादिभिर्देवादीन्प्रत्युपकुर्वतो गृहिणोऽपि विद्यायां सत्यां तया प्रतिबन्धसम्भवात्तदुपकारित्वव्यावृत्तिरित्याशङ्क्य गृहस्थशरीरस्य स्वशरीरवत्स्वकर्मार्जितत्वात्तान्निवर्तकब्रह्मविद्यां प्रतिबध्नन्तीत्यभिप्रेत्य तस्य स्वकर्मार्जितत्वं साधयति *कर्मणेति ॥ १२१९ ॥ १२२० ॥ तस्य कर्मार्जितत्वे फलितं दर्शयन् यथाहेत्यादिवाक्यतात्पर्यमाह *स्वस्वेति ॥ १२२१ ॥ गृहस्थस्य विनाशमनिच्छतां देवादीनां तद्रोगादिप्रतिबन्धकत्वमेवोचितं नतु विद्याप्रतिबन्धकत्वमित्याशङ्क्य गृहिणा स्वस्य बोधेन कर्मत्याग एव दुश्चिकित्स-

इति देवादयो ह्येनां प्रतिबध्नन्ति यत्नतः ॥ १२२४ ॥
श्रुतिः ॥ यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेव९ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमा९सितम् ॥ १६ ॥
आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति ॥
वार्त्ति० ॥ नन्वनर्थकरे केन गृही त्वेवं प्रवर्त्तितः ॥
पारतन्त्र्यमृते नैव धीमानत्र प्रवर्तते ॥ १२२५ ॥

---

सर्वस्वविनाशो देवानां नतु तस्य शरीरप्राणवियोगादित्याह *तत्त्वमित्यादिना ॥ १२२२ ॥ १२२३ ॥ १२२४ ॥

यथा हेत्यादिश्रुतेरयमर्थः–स्वाय लोकाय स्वस्मै देहाय। अरिष्टं शुभम्। एवंविदे कर्तृत्वाभिमानिने। यथोक्तं कर्म कुर्वन् यद्यपि देवादीन्प्रत्युपकरोति तथापि न तत्कर्तव्यत्वमावश्यकं मानाभावादित्याशङ्क्याह *तद्वा एतदिति। तदेतत्कर्मकर्तव्यत्वं पञ्च वा एते महायज्ञाः अहरहर्भूतेभ्यो बलिं हरेत् अहरहर्दद्यादित्यादिश्रुतिस्मृतिषु विदितमित्यर्थः। श्रुतमपि विचारं विना नानुष्ठेयम्। नहि रुद्ररोदनादि श्रुतमित्येवानुष्ठीयत इत्याशङ्क्याह *मीमांसितमिति। विचारेणाप्याधिकारिणा कर्मावश्यं कार्यमिति निर्णीतम्। ऋणवाँ जायते जायमानो योऽस्तीत्याद्यर्थवादेनेत्यर्थः।

आत्मैवेत्याद्युत्तरग्रन्थस्य पातनिकां करोति *नन्विति। उभयत्र त्रैवर्णिकस्य सामर्थ्ये तुल्ये निवृत्तिमार्गं त्यक्त्वा प्रवृत्तिमार्गे सर्वानर्थमूले केन प्रवर्त्यत इत्यर्थः। हेतुं विना तर्हि पुरुषस्य प्रवृत्तिर्नेत्याह *पारतन्त्र्यमृत इति। बलात्कृत्य प्रवर्त्तकं विनेत्यर्थः ॥ १२२५ ॥ कर्मणो ऽनर्थहेतुत्वं प्रदर्शय-

देवादिपारतन्त्र्यं तु गृहिणामधिकारिणाम् ॥
मिथ्याधीमात्रहेतुत्वान्नाप्यविद्या प्रवर्त्तिका ॥१२२६ ॥
तर्हि प्रवर्त्तकं ब्रूमः काम एव प्रवर्त्तकः ॥
काम एष क्रोध एष इत्यादिस्मृतिवाक्यतः ॥ १२२७॥
अकामतः क्रिया काचिद् दृश्यते नेह कस्यचित् ॥
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ १२२८॥
तस्मात्कामयते पूर्वं ब्रह्मचारी चतुष्टयम् ॥
जाया मे स्यादथापत्यमथ वित्तमथ क्रिया ॥ १२२९ ॥
श्रुतिः ॥ एतावान्वै कामो नेच्छंश्चनातो भूयो विन्दे-

---

न्तदधिकारिणां परतन्त्रत्वं साधयति *देवादीति । पारतन्त्र्यं, स्फुटमिति शेषः । अकरणे प्रत्यवायश्रवणादिति भावः । प्रत्यगविद्या यथोक्ताधिकारिणो नियमेन प्रवृत्त्यनुरागे हेतुः, तत्राह *मिथ्येति । अविद्याया वस्त्वावरणमात्रत्वाद्वस्तुनि मिथ्याधीजनकत्वमेव, न स्वरूपेण प्रवर्त्तकत्वं, स्वापादावदर्शनादित्यर्थः ॥ १२२६ ॥ कर्मण्येव नियमेन प्रवृत्तौ काम एव हेतुरिति श्रुत्यभिप्रायं सप्रमाणमाह *तर्हीति ॥ १२२७ ॥ मनुवचनमपि तत्र प्रमाणयति *अकामत इति ॥ १२२८ ॥ उक्तेऽर्थे श्रुतिं गतयति *तस्मादिति ॥ १२२९ ॥

दारसम्बन्धात्पूर्वं कार्यकरणसङ्घातलक्षणो ब्रह्मचारी श्रुतावात्मपदेनोच्यते । इदं जायादिभेदरूपं तस्मादात्मनः पृथग्भूतं नासीत्किन्तु स एक एवासीत्प्रजापतिः । जायाया हेतुत्वख्यापकोऽथशब्दः । प्रजाया मनुष्यवित्तान्तर्भावमभ्युपेत्य द्वितीयोऽथशब्दः, तृतीयस्तु वित्तस्य कर्मानुष्ठानहेतुत्वविवक्षयेति विभागः ॥

त्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते ॥

वार्त्ति० एतावानेव संसारे कामो नातोऽधिकः क्वचित् ॥
लोकान्तरं कर्मफलं कर्मोक्त्यैवेरितं भवेत् ॥ १२३० ॥
असम्भवे तु जायादेर्मनोवागादिषु क्रमात् ॥
आत्मा जायादि सङ्कल्प्य ध्यायेज्जायादिसिद्धये॥१२३१॥

श्रुतिः ॥ तस्यो कृत्स्नता मन एवास्यात्मा वाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवं श्रोत्रेणैव तच्छृणोत्यात्मैवास्य कर्म आत्मना हि

---

एतावान्वै काम इत्यादेरर्थमाह *एतावानिति । कामानामेतावन्मात्रत्वमसिद्धम् उक्तव्यतिरिक्तस्वर्गादिकामनाया विद्यमानत्वादित्याशङ्क्य कर्मकामनाया अर्थतस्तत्फलविषयत्वान्मैवमित्याह *लोकान्तरमिति ॥ १२३० ॥

एतदभिप्रायेणैवाह श्रुतिः *नेच्छन्निति । चन अपि । यस्मादिच्छन्नपि अत उक्तकामाद् भूयोऽधिकतरं न विन्देन्न लभेत तस्मादेतावानेव काम इति पूर्वेण सम्बन्धः । उक्ते ऽर्थे लिङ्गमाह श्रुतिः *तस्मादिति । यस्मादविद्वान्पूर्वमेवं कामयामास तस्मादेतर्हि एतस्मिन्काले । *स यावदिति । स एवं कामयमानो यथोक्तजायादीनां मध्ये एकैकमपि यत्किञ्चिदपि यावन्न प्राप्नोति तावदकृत्स्नोऽसम्पूर्णोऽस्मीत्यात्मानं मन्यते पारिशेष्यात्समस्तानेवैतान्यदा सम्पादयति तदाऽस्य कृत्स्नता परिपूर्णता भवति ॥

उत्तरश्रुतितात्पर्यार्थमाह *असम्भवे त्विति ॥ १२३१ ॥

कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किञ्च तदिदं सर्वमाप्नोति य एवं वेद ॥ १७ ॥

इत्युपनिषदि तृतीयाध्यायस्य चतुर्थब्राह्मणं समाप्तम् ।

वा० एवं कामप्रेरितः सन् याति कर्माधिकारिताम् ॥
अवरुन्धन्ति गृहिणं देवाद्या अधिकारिणम् ॥ १२३२ ॥
इत्यविद्यासूत्र उक्तोऽनर्थो यत्नेन विस्तृतः ॥
अयं निवर्त्यो विदुषा जीवतेति श्रुतेर्मतिः ॥ १२३३ ॥

इति वार्त्तिकसारे प्रथमाध्यायस्य चतुर्थं पुरुषविधब्राह्मणं समाप्तम् ॥

---

श्रुतौ तस्य उ इति छेदः । तस्याकृत्स्नत्वाभिमानिनः कृत्स्नता वक्ष्यमाणसम्पदुपासनेन भवतीत्यर्थः । सम्पत्तिप्रकारं विशदयति श्रुतिः—मन एवास्यात्मा, स्वस्य मनसि यजमानदृष्टिः कार्येत्यर्थः । एवं वाचि जायादृष्टिः, प्राणे पुत्रदृष्टिश्च कार्या । वित्तं द्विविधं मानुषं दैवं च, तदुभयदृष्टिः क्रमेण चक्षुःश्रोत्रयोः कार्या । तत्र हेतुमाह *चक्षुषेति । हि यस्मात्तत् मानुषं वित्तं गोहिरण्यादि चक्षुषा विन्दते उपलभते, यस्माच्च दैववित्तं देवाप्तिसाधनविज्ञानं शब्दद्वारा श्रोत्राधीनं तस्मादुभयत्र तद्दृष्टिः कार्येत्यर्थः । आत्मशब्दितशरीरे उक्तसाधननिर्वर्त्यकर्मदृष्टिः कार्येत्यत्र देहस्य कर्मनिर्वर्तकत्वं हेतुमाह *आत्मना हीति । स एष आध्यात्मिको ध्यानयज्ञः यश्च पशुपुरुषसाध्यो बाह्ययज्ञश्च पाङ्क्तः पञ्चभिर्निर्वर्त्यः, एवं बाह्ययज्ञसाधनपशुः पुरुषश्च पाङ्क्त एव, पूर्वोक्तमनआदिपञ्चयोगित्वात् । किम्बहुना यच्च किञ्चिच्चराचरं

जीवतः कर्मकर्तृत्वलक्षणोऽनर्थ ईरितः ॥
मृतस्याविदुषः कर्मफलानर्थ इहोच्यते ॥ १ ॥
पूर्वजन्मन्यनुष्ठाय कर्मोपास्ती अनात्मवित् ॥
जगत्सप्तान्नरूपेण सृजत्युत्तरजन्मनि ॥ २ ॥
चतुर्थब्राह्मणप्रोक्तं यद्यपि ज्ञानकर्मणोः ॥
फलं तथापि वैषम्यमस्ति जीवेशरूपतः ॥ ३ ॥
उत्कृष्टज्ञानकर्मभ्यां वैराजं पदमाप्य यत् ॥

---

तत्सर्वं पञ्चभूतकार्यत्वात्पाङ्क्तम् । एवं साध्यं साधनं च पाङ्क्तं सूत्रात्मनः ज्ञात्वा तच्च पाङ्क्तं सूत्रमात्मत्वेनानुसन्धेयं, यतस्तदाप्तिरेव फलं तक्रतुन्यायादित्यर्थः ॥१७॥ अविद्यातत्कार्यमुपसंहरन् तत्प्रतिपादकश्रुतितात्पर्यमाह *एवमित्यादिना ॥१२३२॥१२३३॥

इति वार्त्तिकसारव्याख्याने प्रथमाध्यायस्य चतुर्थं
पुरुषविधब्राह्मणं समाप्तम् ।

वृत्तानुवादपूर्वकं सप्तान्नब्राह्मणतात्पर्यमाह *जीवत इति । *कर्मफलेति वक्ष्यमाणज्ञानफलस्याप्युपलक्षणम् ॥ १ ॥ अस्मिन्ब्राह्मणे प्रथमकण्डिकोक्तमन्त्रान् द्वितीयकण्डिकामारभ्य श्रुतिरेव व्याकरोति । तत्र प्रथममन्त्रब्राह्मणे मेधया हीत्यत्र हिशब्दसूचितं यत्सप्तान्नानीत्यादिमन्त्रार्थं स्फुटयति *पूर्वेति । श्रुतौ मेधातपःशब्दौ ज्ञानकर्मपरौ प्रकरणात्तदाह *कर्मोपास्ती इति । ताभ्यां च लौकिकं वैदिकं देवतादर्शननग्नस्त्रीदर्शनरूपं ज्ञानं यागकलञ्जभक्षणादि कर्म च गृह्यते । पितृशब्दो जीववचनः तस्य जगज्जनकत्वात्, तथाच जीवः पूर्वजन्मकृतकामकर्मभ्यां सप्तान्नात्मकं जगद्यदजनयत्तस्य पितृत्वाद्युक्तमिति श्रुत्यभिप्रेतोऽर्थः ॥ २ ॥ उक्तार्थस्य पौनरुक्त्यं परिहरति *चतुर्थे-

जगत्सृजति तत्प्रोक्तं चतुर्थब्राह्मणे पुरा ॥ ४ ॥
निकृष्टज्ञानकर्मभ्यां मनुष्यादिपदं गतः ॥
स्वभोग्यं सृजते यत्तत्पञ्चमेऽस्मिन्नुदीर्यते ॥ ५ ॥
सृष्ट्या क्रीडत्यविभ्रान्त ऐन्द्रजालिकवद्विराट् ॥
स्वप्नदृष्ट्येव विभ्रान्तः सृष्ट्या क्लिश्नाति मानवः ॥ ६ ॥
येन यद् दृश्यते तत्तु तेन सृष्टं स्वकर्मणा ॥
दृश्यस्य भ्रान्तिरूपत्वाद्दर्शनं सृष्टिरुच्यते ॥ ७ ॥
सृष्टं जगद्विराजेदं सदेवपशुमानुषम् ॥
मर्त्येनापि जगत्सृष्टं सविराण्नरदेवतम् ॥ ८ ॥
तेन तेनेक्षितः स्वप्नस्तत्तत्कर्मानुसारतः ॥

---

ति ॥३॥ वैषम्यमेवाह *उत्कृष्टेति ॥४॥ स्वभोग्यं भोग्यत्वाकारम् ॥ ५ ॥ साधनवैषम्यमुक्त्वा फलवैषम्यमाह *सृष्ट्येति ॥ ६ ॥ ईश्वरेण साक्षाद् विराड्द्वारा च सर्वप्रपञ्चस्य सृष्टत्वात्तद्व्यतिरिक्तजीवसृज्यप्रपञ्चानुपलब्धेः कथं तस्य सृष्टिकर्तृत्वमित्याशङ्क्य स्वभोग्यं सृजत इत्युक्तं व्यक्तीकुर्वन्नाह *येनेति । भ्रान्तिरूपत्वं प्रतिभासमात्रत्वम् । अयं भावः—प्रपञ्चस्वरूपस्येश्वरसृष्टत्वेऽपि तत्र हेयोपादेयत्वादेः स्वप्नप्रपञ्चवत्प्रातिभासिकत्वेन जीवकर्तृत्वात्तद्विशिष्टेनाकारेण वियदादेरपि जीवकर्तृकत्वमिति । एतच्च द्वैतविवेके प्रमाणयुक्तिभ्यां प्रपाञ्चितमिति नात्र प्रयत्यते ॥ ७ ॥ अमुमेवार्थं स्फोरयति *सृष्टमिति । प्रपञ्चस्वरूपमात्रस्य विराट्कर्तृकत्वेऽपि भोग्याकारविशिष्टः कार्यकारणात्मकः सर्वोऽपि प्रपञ्चो जीवकर्तृक इत्यर्थः ॥ ८ ॥ एवं जीवस्य सृष्टिकर्तृत्वमुक्त्वा तत्सृष्टजगतो दुःखादिहेतुत्वं सनिदर्शनं दर्शयति *तेनेति । जीवसृष्टप्रपञ्चस्य प्रतिभास-

सुखदुःखे तस्य तस्य यथा दत्ते तथा जगत् ॥ ९ ॥
ब्रह्मादिस्तम्बपर्यन्तं जीवानां स्रष्टृता समा॥
सप्तान्नान्यत्र मूढोऽतः सृजतीत्यभिधीयते ॥ १० ॥
एकं व्रीहियवाद्यन्नं सर्वसाधारणं तु तत् ॥
द्वे दर्शपूर्णमासाख्ये देवानामेव ते मते ॥ ११ ॥
क्षीरमेकं पशूनां तत्, मनोवाक्प्राणरूपकम् ॥
अन्नत्रयं चिदात्मार्थं तेन व्यवहरत्ययम् ॥ १२ ॥
नन्वन्नान्यत्र भुज्यन्ते कुसूलस्थितधान्यवत् ॥
कस्मात्तेषां क्षयो न स्यादिति चेत्तदुदीर्यते ॥ १३ ॥
भुञ्जानः पुरुषो भूयः करोति ज्ञानकर्मणी ॥
शास्त्रीये अप्यशास्त्रीये अनुच्छिन्नं ततो जगत् ॥ १४ ॥
एवं प्रबन्धरूपेण साध्यसाधनलक्षणम् ॥
अविद्यावृतदृष्टीनां जगन्नित्यमिवेक्ष्यते ॥ १५ ॥
इह जन्मनि कर्तृत्वं भाविजन्मनि भोक्तृता ॥
पुनस्तत्रापि कर्तृत्वं तत ऊर्ध्वं च भोक्तृता ॥ १६ ॥
तत्र कर्तृत्वविस्तारः पूर्वब्राह्मण ईरितः ॥

---

मात्रशरीरत्वेन रज्जुसर्पवत्प्रतिजीवं सिद्धत्वात्तत्तत्कर्मानुसारेण दुःखादिहेतुत्वं युक्तमित्यर्थः ॥ ९ ॥ अस्यां सृष्टावविशेषेण सर्वजीवानामपि कर्तृत्वमाह *ब्रह्मेति । प्रथममन्त्रार्थमुपसंहरति *सप्तेति ॥ १० ॥ एकमस्येत्यादिवाक्यं विभजते *एकमित्यादिना ॥ ११ ॥ १२ ॥ कस्मात्तानीत्यादेरर्थमाह *नन्विति ॥ १३ ॥ पुरुषो वा अक्षितिरित्यादेस्तात्पर्यमाह *भुञ्जान इति ॥ १४ ॥ एवं प्रवाहानादित्वेन जगतो विच्छित्त्यभावादेव तत्र मूढानां नित्यत्वभ्रम इत्याह *एवमिति

इह भोक्तृत्वविस्तार इत्यविद्या द्विधोदिता ॥ १७ ॥
श्रुतिः । यत्सप्तान्नानि मेधया तपसा ऽजनयत्पिता ।
एकमस्य साधारणं, द्वे देवानभाजयत्, त्रीण्यात्मने ऽकुरुत, पशुभ्य एकं प्रायच्छत्। तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा । यो वै तामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन। स देवानपिगच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥
यत्सप्तान्नानि मेधया तपसा ऽजनयत्पितेति मेधया हि तपसा ऽजनयत्पिता एकमस्य साधारणमिति । इदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रंᳪ ह्येतत् । द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति ।तस्मान्नेष्टियाजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वै वाऽग्रे प्रतिलेहयन्ति स्तनं वाऽनु धापयन्त्यथ वत्सं जातमाहुरतृणाद इति । त-

---

। १५ ॥ प्रबन्धरूपेणेत्युक्तं व्यनक्ति *इहेति ॥ १६ ॥ १७ ॥
अक्षरार्थस्तु–एकमस्य साधारणमिति मन्त्रपदं व्याचष्टे *इदमेवेति । यदिदमद्यते सर्वप्राणिभिरहरहर्भुज्यते तदिदमन्नमस्य भोक्तृवर्गस्य साधारणमकल्पयत् पितेति योजना। यो–यः कश्चित्सर्वप्राणिस्थितिकारणमन्नमुपास्ते । अत्रोपासनं नाम तत्परत्वं, केवलं स्वोदरपोषणमात्रप्रधानो भवतीत्यर्थः । स एवम्भूतः पाप्मनः न व्यावर्तते न मुच्यते। तत्र हेतुः *मिश्रं ह्येतदिति। हिशब्देन “केव-

लाघो भवति केवलादी" "नात्मार्थं पाचयेदन्नम्" इत्याद्यन्नसाधारणत्वप्रतिपादकश्रुतिस्मृती सूचयति । द्वे देवानभाजयदिति मन्त्रपदं व्याचष्टे *हुतं चेति । हुतमित्यग्नौ हवनं, प्रहुतं हुत्वा बलिहरणम् । तयोर्देवान्नत्वे लिङ्गमाह *तस्मादिति । यस्माद्धुतप्रहुते अन्ने पिता देवानभाजयत्तस्मादेतस्मिन्नपि काले गृहिणो देवेभ्यो जुह्वति प्रजुह्वति च हुत्वा बलिहरणं च कुर्वत इत्यर्थः । पूर्वत्रास्वरसात् मतान्तरमाह *अथो अपि अन्ये आहुः, देवेभ्यो दत्ते अन्ने न हुतप्रहुते, किं तर्हि ? दर्शपूर्णमासाविति । द्वित्वश्रवणाविशेषेऽपि दर्शपूर्णमासयोः श्रौतत्वेन स्मार्तहुतप्रहुतापेक्षया प्रधानत्वात्तयोरेव ग्रहणं युक्तमित्यर्थः । *तस्मान्नेष्टियाजुकः स्यादिति । यस्माद्दर्शपूर्णमासयोः प्रधानत्वं तस्मात्तद्विघातककाम्येष्टिप्रधानो न भवेदिति भावः । त्रीण्यात्मनेऽकुरुतेत्यस्य विस्तीर्णविषयत्वात्पाठक्रममुल्लङ्घ्याल्पविषयं पशुभ्यएकमित्यादिमन्त्रपदं व्याचष्टे *तत्पय इत्यादिना । हि यस्मादग्रे जन्मोत्तरकालं पय एव पशव उपजीवन्ति तस्मात्पयोरूपमन्नं तेभ्यः पित्रा दत्तमित्यर्थः । पशवो द्विपादश्चतुष्पाद इति श्रुतेः मनुष्याणामपि पशुभ्य एकमिति पशुशब्देन सङ्ग्रहः कृत इति मत्वाऽऽह *यस्मादिति । यस्मात्पश्वन्नं पयस्तस्माल्लोके कुमारं जातं जातकर्माणि स्वर्णसहितं पयोविकारं घृतमग्रे प्रलिलेहयन्ति प्राशयन्ति स्तनं वा ऽनु घृतासम्भवे धापयन्ति पाययन्ति । अथ वत्समिति द्विपात्पश्वधिकारविच्छेदार्थोऽथशब्दः । जातं वत्सं "कियत्प्रमाणस्ते वत्सः" इत्यन्येन पृष्टा "अतृणाद" इत्याहुः, तृणं नात्ति पयसैवाद्यापि वर्त्तते इत्यर्थः । तस्मिन्नित्यादिमन्त्रं व्याचष्टे *पयसीति । स्थावरजङ्गमात्मकं सकलं जगत्कथं पयसि प्रतिष्ठितमिति शङ्कां हिशब्देन

स्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि
हीदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमा-
हुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न त-
था विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं
विद्वान्त्सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि
न क्षीयन्तेऽद्यमानानि सर्वदेति पुरुषो वा अक्षितिः।

---

व्यावर्तयति। अयमर्थः—अग्निहोत्रे हूयमानं पयोऽपूर्वमयं
तेजोद्वाराऽऽदित्यमुपसर्पति ततो वृष्टिरूपेण जायते ततो
व्रीह्यादिरूपेण परिणतं सद् रेतोद्वारा प्रजाभावमापद्यते।
तदुक्तं मनुना—अग्नौ प्रास्ता ऽऽहुतिः सम्यगादित्यमुपतिष्ठते।

आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥ इति।

यथाच पयःपरिणामत्वाज्जगतः "तस्मिन्निदं जगन्मग्नम्" इति
सर्वं पयसि प्रतिष्ठितमिति विधित्सितदर्शनस्तुतये शाखान्तरीयमतं
निन्दितुमनुवदति *यदिदमिति। नच संवत्सरं पयसाऽग्नि-
होत्रमात्रेण कथं मृत्युजय इति शङ्क्यम्। संवत्सरावधिकेऽग्नि-
होत्रे सायम्प्रातराहुतिभेदेन प्रयोगभावाद्विंशत्युत्तरसप्तशतस-
ङ्ख्याः सन्ति ताश्चाहुतीश्चित्यग्न्यवयवभूतयाजुष्मतीसञ्ज्ञकेष्ट-
काः तद्रूपेणाहुतीर्ध्यायन् सङ्ख्यासामान्यात्पुरुषनाडीस्थसङ्ख्या-
सामान्येन तन्नाडीस्तान्येवाहोरात्राणि सम्पाद्य नाड्यहो-
रात्रयाजुष्मतीनां परस्पराभेदसम्पादनद्वारा पुरुषसंवत्सरचि-
त्यानां समत्वमापाद्य "अहमग्निः संवत्सरात्मा प्रजापतिरेव"
इति ध्यायतो विद्यासहितहोमवशान्मृत्युजयस्य विवक्षितत्वादि-
ति। एकीयमतनिन्दापूर्वकं मतान्तरमाह *न तथेति। तथा न
द्रष्टव्यं किन्तु हूयमाने पयसि मग्नं जगदिति पयो ध्यायन्नग्निहोत्रं

स हीदमन्नं पुनः पुनर्जनयते यो वै तामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत्,स देवानपिगच्छति स ऊर्जमुपजीवतीति प्रशंसा ॥ २ ॥

---

तेन जुह्वदेकयैवाहुत्या जगद्रूपं प्रजापतिं प्राप्य मृत्युमपजयति सकृन् मृत्वा पुनः परिच्छिन्नं शरीरं न गृह्णातीत्यर्थः । तत्र हेतुमाह *सर्वं हीति । पयो जगदात्मकं पश्यन्पयसा जुह्वदेकयैवाहुत्या सर्वं जगद्देवेभ्योऽन्नाद्यं प्रयच्छन् देवानां तृप्तिमापाद्य तदनुग्रहवशात् मृत्युं जयतीति भावः । विदुषो भावनासामर्थ्यादेकयैवाहुत्या देवेभ्यो जगदर्पणसामर्थ्यमस्तीति वक्तुं हिशब्दः । कस्मादित्यादिप्रश्नमन्त्रपदं व्याचष्टे *पुरुष इति पुरुषस्याक्षयत्वेऽप्यन्नस्याक्षयत्वे किमायातं ? तत्राह *स हीदमिति । स जीवो यस्मादिदं भुज्यमानं सप्तविधान्नं ज्ञानकर्मभ्यां भूयो भूयो जनयते तस्मादक्षीणेन पुरुषेण सृज्यमानान्नस्याप्यक्षयत्वमित्यर्थः । अक्षयहेतुत्वगुणकसप्तान्नात्मकप्रजापतिरूपपुरुषोपासकस्य फलं वक्तुं यो वै तामित्यादिमन्त्रमवतार्य फलोक्तेः पूर्वं पुरुषो वा अक्षितिरित्यादिनोक्तमर्थं पुनरुपपाद्योक्तोपासकस्य फलप्रतिपादकं सोऽन्नमत्तीति मन्त्रं व्याचष्टे *मुखमिति । मुखेन मुख्येन प्राधान्येनान्नमत्ति विद्वानन्नात्मभूतो भोक्तैव न भोज्यतामापाद्यत इत्यर्थः । स देवानपिगच्छत्यूर्जममृतत्वं चोपजीवतीति । यदुक्तं सा प्रशंसामात्रं सोऽन्नमत्तीत्यत्रैव देवभावादेः सिद्धेरपूर्वार्थाभावाद्विद्यास्तुतिरेवेति भावः ॥ २ ॥ त्रीण्यात्मनेऽकुरुतेति मन्त्रब्राह्मणतात्प-

वार्त्ति० एवमाध्यात्मिकाविद्यामन्नस्याप्याधिदैवतम्॥
विराट्त्वं वाञ्छतः पुंसस्त्र्यन्नात्मोपास्तिरीर्यते ॥१८॥
सृष्टो यद्यपि मर्त्येन वर्तमानो विराट् स्वयम् ॥
तथाऽप्यस्येश्वरो भूत्वा भाति तादृशकर्मणा ॥१९॥
स्वस्वप्नकल्पितो राजा गुरुर्वा स्वनियामकः ॥
यथा तथा विराडेष स्वस्रष्टारं नियच्छति ॥ २० ॥
स्वप्नेऽहमेव राजेति द्रष्टा सर्वं नियच्छति ॥
न त्वन्येन नियम्यः स्यात्स्वविराट्त्वे तथा भवेत्॥२१॥
विनोपास्तिं विराडेष स्वाभिन्नत्वेन कल्प्यते ॥
उपासकस्य स्वत्वेनेत्येषा कल्पकयोर्भिदा ॥ २२ ॥
कर्मोत्कर्षापकर्षौ च स्वत्वभिन्नत्वकारणम् ॥
तस्मादुपासनोत्कृष्टा वर्ण्यते स्वत्वसिद्धये ॥ २३ ॥
अश्वाद्युपासनं पूर्वं स्वत्वार्थं यद्यपीरितम् ॥
तथाऽप्यविद्याकार्यत्वसिद्धयेऽत्राप्युदीर्यते ॥ २४ ॥

---

र्यमाह *एवमिति ॥ १८ ॥ विराजो भोग्यत्वाकारविशिष्टत्वेन जीवकल्पितत्वोक्तेस्तस्य शुक्तिरजतादिवदनुपास्यत्वं स्यादिति शङ्कते *सृष्ट इति । कल्पितस्यापि स्वामित्वेन प्रतीयमानस्योपास्यत्वमविरुद्धम्, इति समाधत्ते *तथाऽपीति ॥ १९ ॥ उक्तमर्थं सदृष्टान्तमुपपादयति *स्वप्नेत्यादिना ॥ २० ॥ २१ ॥ एवं कल्पितस्याप्युपास्यत्वमभिधाय तदुपास्तेरपि कल्पनाभेदेन फलवत्त्वमाह *विनेत्यादिना ॥ २२ ॥ कर्मोत्कर्षः फलपर्यन्तोपासनम् ॥ २३ ॥ उक्तोपास्तेः पुनरुक्तिमाशङ्क्याह *अश्वेति ॥ २४ ॥ एवमन्नत्रयात्मोपासनोक्तेः प्रकृतत्वमभिधाय तदुपासनाप्रकारं वक्तुं तस्य सर्वव्यापित्वमाह *अ-

अध्यात्ममधिभूतं च विज्ञेयमधिदैवतम् ॥
उपासनाय व्यापित्वं विराजोऽन्नत्रयात्मनः ॥ २५ ॥
अन्नत्रयस्य संव्याप्तिरध्यात्मं स्वानुभूतितः ॥
शास्त्रैकगम्यमन्यत्र तत्राध्यात्मं प्रदर्श्यते ॥ २६ ॥
अनुमेयं मनोरूपं साक्षिवेद्यास्तु वृत्तयः ॥
कादाचित्कार्थविज्ञानं लिङ्गं तद्वद्विशेषधीः ॥ २७ ॥
आत्मेन्द्रियार्थसान्निध्ये सन्ततेऽप्यर्थवेदनम् ॥
क्षणिकं दृश्यतेऽतस्तदन्तःकरणपूर्वकम् ॥२८ ॥
लोचनागोचरे पृष्ठे त्वचाऽस्य स्पर्शवेदनम् ॥
पादस्य स्पर्श इत्येष विशेषो ज्ञायते धिया ॥ २९ ॥
लिङ्गद्वयानुमेयेऽस्मिन् चित्ते कामादिवृत्तयः ॥

---

ध्यात्ममिति । मनोवाक्प्राणात्मकविराजो यदध्यात्मादित्रयं वक्ष्यमाणमस्ति तेषु व्यापित्वं विज्ञेयमित्यर्थः ॥ २५ ॥ अन्नत्रयात्मकविराजः सर्वव्यापित्वज्ञापकमानमाह *अन्नेति ॥२६॥ प्रतिज्ञातमर्थमाह *अनुमेयमिति । विशेषधीरपि, लिङ्गमित्यनुषङ्गः ॥ २७ ॥ कादाचित्कार्थविज्ञानं लिङ्गमित्युक्तं विवृणोति *आत्मेति । विमतमर्थवेदनम् आत्मादित्रयातिरिक्तासाधारणकारणापेक्षं तस्मिन्सत्यपि कादाचित्कत्वात् घटवदिति प्रयोगो द्रष्टव्यः ॥ २८ ॥ विशेषधीर्लिङ्गमित्युक्तं स्पष्टयति *लोचनेति । विमतम् असाधारणकारणजन्यं विशेषज्ञानत्वाद्रूपज्ञानवदित्यर्थः । नच त्वगिन्द्रियेणार्थान्तरत्वं तस्य, स्पर्शसामान्यग्रहोपक्षीणत्वात्, विशेषस्य स्पर्शस्य चेतसोऽवधानाभावेऽनुपलम्भात्तत्सिद्धिरिति भावः ॥ २९ ॥ साक्षिभा-

भास्यन्ते साक्षिणा रूपं नेत्रेणेवापरोक्ष्यतः ॥ ०३ ॥
अनेन मनसा रूपप्रपञ्चोऽत्रोपलक्ष्यते ॥
वागिन्द्रियेण निष्पाद्यं नाम वागिह गीयते ॥ ३१ ॥
पञ्चवृत्त्यात्मकात्प्राणादिह कर्मोपलक्ष्यते ॥
नामरूपक्रिया एवमध्यात्मं सूपवर्णिताः ॥ ३२ ॥
देहेन्द्रियादिसङ्घातरूपा एतास्त्रिदण्डवत् ॥
एकीभूता इहाध्यात्मं चिन्तनीया उपासकैः ॥ ३३ ॥
श्रुतिः ॥ त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृ-

---

स्यास्तु वृत्तय इत्युक्तं प्रकटयति *लिङ्गेति ॥ ३० ॥ अन्नत्रयस्याध्यात्मव्यापित्वे मानमुक्त्वा मनो वाचं प्राणमित्यत्र मनोवाक्प्राणशब्दैर्विवक्षितमाह *अनेनेत्यादिना । मनसा मनःशब्देनेत्यर्थः। वाग्, इतीति शेषः ॥३१॥ *पञ्चेति । पञ्चवृत्त्यात्मकप्राणवाचकशब्दादित्यर्थः । इहेति पुनः पुनः कथनं वाङ्मनःप्राणशब्दानां नामरूपक्रियालक्षकत्वमवश्यं प्रकृतब्राह्मणे वक्तव्यमिति सूचनार्थं, मुख्यार्थग्रहे वक्ष्यमाणग्रन्थेन विरोधप्रसङ्गादिति ध्येयम् । उक्तमर्थमुपसंहरन्नध्यात्ममन्नत्रयोपासनप्रकारमाह *नामेत्यादिना ॥३२॥३३॥ त्रीण्यात्मन इत्यादेरयमक्षरार्थः-जीवः सप्तान्नानि सृष्ट्वा चत्वारि भोक्तृभ्यो विभज्य त्रीण्यात्मार्थं कृतवानिति मन्त्रार्थमभिप्रेत्यान्नत्रयं विभजते श्रुतिः *मनो वाचं प्राणमिति ॥ *आत्मने–उपासनद्वारा स्वस्य विराट्त्वप्राप्तये । मनःसद्भावेऽनुमानमाह *अन्यत्रेति । प्रयोगस्तु प्रागेव दर्शितः । किञ्च सर्वोऽपि लोको मनसैव

णोति। कामः सङ्कल्पो विचिकित्सा श्रद्धा ऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सा एषा ह्यन्तमायत्तैषा हि न प्राणो ऽपानो व्यान उदानः समानः।

---

पश्यति मनसा शृणोति तद्व्यग्रत्वेन तददर्शनात्, तस्मादन्वयव्यतिरेकाभ्यां मनो नाम किञ्चिदस्तीत्यर्थः॥ एवं मनसो ऽस्तित्वं प्रसाध्य तत्स्वरूपमाह *काम इत्यादिना। विषयाभिलाषः कामः, सामान्यतो दृष्टे शोभनत्वाध्यवसायः कामहेतुः सङ्कल्पः, विचिकित्सा संशयः, अदृष्टार्थे कर्मादिष्वास्तिक्यबुद्धिः श्रद्धा, तद्विपरीतबुद्धिरश्रद्धा, धृतिर्धारणं देहाद्युत्तम्भनम्, तद्विपर्ययोऽधृतिः, ह्रीर्लज्जा, धीः प्रज्ञा, भीर्भयमित्येवमादिकं सर्वं मन एव, मनोवृत्तित्वात्तद्रूपमेवेत्यर्थः॥ मनसोऽस्तित्वे पृष्ठलग्नकरादिस्पर्शविशेषधीरपि लिङ्गमित्याह *तस्मादपीति। मनःसद्भावादेवेत्यर्थः। इत्थं च मनो निरूप्य क्रमप्राप्तां वाचं निरूपयति *य इति। यः कश्चिल्लोके शब्दो ध्वन्यात्मको वर्णात्मकश्च सर्वोऽपि वागेव। एवं वाचः स्वरूपमुक्त्वा तत्कार्यमाह। एषा वाग् यस्मादन्तमभिधेयनिर्णयमायत्ताऽभिधेयप्रकाशिकेति यावत्। प्रकाशिकाऽपि वाग् अन्यप्रकाश्या चेदनवस्थेति शङ्कां परिहरति श्रुतिः *एषा हि न इति॥ एषा वाक् दीपवत्सजातीयप्रकाशमनपेक्ष्य प्रकाशकत्वान्नान्यप्रकाश्या, तथाच प्रकाशकत्वमेव वाचः कार्यमित्यर्थः॥ अथ प्राणं निरूपयति। मुखनासिकासञ्चरणयोग्यो हृदयादिवर्त्युच्छ्वासहेतुः प्राणः, नाभ्यादिस्थानोऽधोवृत्तिर्मूत्रा-

**अन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥**

**वार्ति०॥ अधिभूतं तथोपास्या वाङ्मनःप्राणशब्दिताः। नामरूपक्रियाः—**

---

व्यपनयनहेतुरपानः, सर्वशरीरव्यापिवीर्यवत्कर्महेतुर्व्यानः, उत्साहपूर्वकक्रियाहेतुः कण्ठादिस्थान उदानः, अशितपीतसमीकरणहेतुः कोष्ठादिस्थानः समानः। एवं प्राणादिपञ्चवृत्तीरभिधाय वृत्तिमद्वायुस्वरूपमाह *अन इति। एतत्सर्वं प्राणादिवृत्तिपञ्चकं प्राण एव, अत्रत्यप्राणशब्दोऽनन्तरोक्तानविषयः, प्राणवृत्तेः सर्वात्मत्वानुपपत्तेरिति बोध्यम्। अन्नत्रयात्मकविराज उपासनायाध्यात्मादिव्यापित्वं वक्तुमुपक्रम्य प्रसङ्गान्मनआदिस्वरूपं तत्कार्यं च वर्णितम्। इदानीमध्यात्मशब्दिते शरीरेऽन्नत्रयव्याप्तिं दर्शयति *एतन्मयो वा अयमात्मेति। आत्मा शरीरम्। एतन्मय इत्युक्तं विवृणोति *वाङ्मय इत्यादिना॥ नच शरीरस्य कथं वागादित्रयविकारित्वमिति वाच्यम्। एतद्विरोधपरिहारायैव वागादीनां नामरूपक्रियालक्षकत्वस्योक्तत्वात्। नन्वेवमपि शरीरस्य कथं नामविकारित्वमिति चेदुच्यते। अत्र नामशब्देन प्रकाशकमात्रं विवक्षितं रूपशब्देन च प्रकाश्यमात्रं, तथा च यद्यत्प्रकाशकमिन्द्रियादि तत्सर्वं नामैव यद्यत्प्रकाश्यं शरीरादि तत्सर्वं रूपमेव। प्राणशब्दितक्रियायाः प्रकाश्यत्वेऽप्युपासनार्थं पृथग्ग्रहणम्॥ ३॥

एवमाधिदैविकनामादिकार्ये शरीरेन्द्रियादावनुगता नामरूपक्रियाः सम्पिण्डितात्रिदण्डवदेकीभूता इति ध्यातव्या इत्युक्तम्। इदानीं त्रयो लोका इत्यादिकण्डिकासप्तकस्य तात्पर्यं सङ्गृह्णाति

श्रुतिः । त्रयो लोका एत, एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥४॥ त्रयो वेदा एत एव, वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः॥५॥ देवाः पितरो मनुष्या एत एव, वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजैत एव, मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव, यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद् भूत्वाऽवति ॥८ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद् भूत्वाऽवति॥९॥यत्किञ्चाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति॥१०॥

---

*अधिभूतमिति ॥

त्रयो लोकाः भूर्भुवःसुवआख्याः । एते वागादय एवेत्युक्तं स्वयमेव विभजते श्रुतिः *वागेवेत्यादिना । एवमुत्तरत्रापि द्रष्टव्यम् । यत्किञ्च विज्ञातं वाचस्तद्रूपमित्यत्र हेतुं स्वयमेवाह *वाग्घीति । प्रकाशकत्वादित्यर्थः ॥ वाग्विभूतिविदः फलमाह *वागेनमिति । यथोक्तवाग्विदं तद्विज्ञातं भूत्वाऽवति विज्ञातरूपेणैवास्य भोज्यतामापद्यत इत्यर्थः। *मनो हीति। मनःसङ्कल्पात्मकत्वाज्ज्ञातुमिष्टं सर्वं मनोरूपमित्यर्थः। *प्राणो हीति। निरुक्तं चानिरुक्तं चेत्यादौ प्राणेऽनिरुक्तपर्यायाविज्ञातत्वस्य श्रुतिसिद्धत्वादित्यर्थः। न च लोके विज्ञातस्यैव भोज्यत्वोपलम्भान्मन एनं तद् भूत्वाऽवतीत्यादौ मनःप्राणयोः सन्दिह्यमानत्वेनाविज्ञातरूपत्वेन च भोज्यत्वकथनमयुक्तमिति वाच्यम् । यथा शिष्यैरविवेकतः स-

वार्त्तिकं ॥ शास्त्रप्रोक्तलोकादिरूपतः ॥ ३४ ॥
अधिदैवं तु पृथिवी वागाधिष्ठानगोलकम् ॥
अग्निर्वाचः स्वरूपं स्यान्मनो रविरिहेष्यते ॥ ३५ ॥
श्रुतिः ॥ तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमय-मग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयम-

---

न्द्रियमाना अपि गुरवस्तेषां भोगहेतुतामापद्यमाना दृश्यन्ते, यथा वा बालैरविज्ञातोपकाराः पित्रादयस्तेषां भोज्यत्वमापद्यन्ते, तथा मनःप्राणयोरपि भोज्यत्वसम्भवादिति । यद्यपि भूरादिष्वेकैकत्र विज्ञातादित्रयं सम्भवति तथापि वागादिषु वचनबलादेव विज्ञातादिदृष्टिर्लोकदृष्टिश्च व्यवस्थिततया कर्तव्येति ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

एतदभिप्रेत्याह *शास्त्रेति ॥ ३४॥ एवमन्नत्रयोपासकस्याध्यात्मशब्दितस्वदेहे ध्यानप्रकारमुक्त्वाऽधिभूतशब्दितेषु स्वातिरिक्तस्थावरजङ्गमात्मकसर्वशरीरेषु वागादिशब्दलक्षिता या नामरूपक्रियाः सन्ति तासु लोकादिदृष्टिं विधायाधिदैविकवागादिविभूतिप्रदर्शनपरा तस्यै वाच इत्याद्युत्तरश्रुतिरित्याह *अधिदैवमिति ॥ ३५ ॥

श्रुत्यक्षरार्थस्तु—तस्या अनन्तत्वेन प्रस्तुताया अधिदैवशब्दितस्य प्रजापतेर्वाचः वाक्पदाभिधेयवागिन्द्रियतदधिष्ठानगोलकयोर्मध्ये इयं पृथिवी शरीरं वागिन्द्रियाधिष्ठानगोलकमित्यर्थः ॥ अयं प्रसिद्धोऽग्निर्ज्योतीरूपं प्रकाशात्मकं गोलकाधेयमिन्द्रियमित्यर्थः । एवं वाक्पदवाच्यार्थमुक्त्वा तस्या आधिदैविकवाचः स्वकार्येष्वध्यात्माधिभूतेषु व्यापित्वं दर्शयति *तद्यावत्येवेति । तत्राध्यात्माधिभूतभेदभिन्ना वाक् यावती यत्परिमाणा

ग्निः ॥ ११ ॥ अथैतस्य मनसो द्यौः शरीरं ज्योती-रूपमसावादित्यस्तद्यावदेव मनः तावती द्यौस्तावानसावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥

रव्यग्नियोगादुत्पन्नो वायुरेषोऽन्तरिक्षगः ।
इन्द्रो ऽसपत्न इत्येवं ध्यातुर्वैरी न सम्भवेत् ॥३६॥

---

भवति तावती पृथिवी तावानयमग्निः यदध्यात्मादिषु वागिन्द्रियं तद्गोलकं चास्ति तत्र प्रजापतेर्वागिन्द्रियरूपोऽग्निस्तदक्षाधिगोलकरूपा पृथिवी च व्याप्य वर्तत इत्यर्थः ॥ ११ ॥ आधिदैविकवाङ्निरूपणानन्तरं मनो निरूप्यत इत्याह *अथेति । अर्थस्तु पूर्ववद्बोध्यः । अत्र यद्यपि चन्द्रस्तत्राधिदैवतमित्यादिश्रुतौ मनसश्चन्द्राधिष्ठितत्वश्रवणाच्चन्द्ररूपत्वं वक्तुमुचितं न आदित्यरूपत्वं तेन सम्बन्धाभावात्, तथापि सविता बुद्धिदेवतेति गायत्रीविदां मर्यादामङ्गीकृत्य बुद्धिमनसोरैक्यं विवक्षित्वा मनस आदित्यरूपत्वमुक्तमिति ध्येयम् ।

तौ मिथुनꣳसमेतामित्यादिश्रुतेस्तात्पर्यमाह*रव्यग्नीति॥३६॥ अयमर्थः। अध्यात्मं मन एवास्यात्मा वाग्जाया प्राणःप्रजेत्युक्तम्। तथाऽधिभूते च मन एव पिता वाङ्माता प्राणः प्रजेत्युक्तम् । तथाऽधिदैवमुपासनार्थं प्राणशब्दितस्य कस्यचिद्वायोः प्रजात्वं दर्शयति श्रुतिः *तौ मिथुनमिति । तौ वाङ्मनसत्वेन निर्दिष्टावग्न्यादित्यौ मिथुनमन्योन्यसंसर्गं समैतां प्राप्तौ, ततः सर्वोत्पत्तिनिमित्तयोस्तयोर्योगात्प्रकृतान्नातिरिक्तः प्राणशब्दि-

श्रुतिः ॥ अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः ।

वार्त्ति०॥ चन्द्रोऽधिदैवं प्राणस्य त एतेऽत्राधिदैविकाः ॥
अध्यात्ममधिभूतं च सर्वं व्याप्य व्यवस्थिताः ॥३७॥

---

तोऽन्तरिक्षगो वायुरजायत । ननु कालपरिपाकहेतोरादित्यस्य कालात्मत्वेन सर्वोत्पत्तिहेतुत्वेऽपि कथमग्नेस्तद्धेतुत्वमिति चेत्, उच्यते। उत्पत्तिर्नाम सत एव वस्तुनोऽभिव्यक्तिः, सा च प्रकाशव्याप्तिः, प्रकाशश्चाग्निः इत्येतावताऽस्यापि हेतुत्वमस्तीति श्रुत्यभिप्रायः । तं वायुमिन्द्रत्वासपत्नत्वगुणविशिष्टत्वेन य उपास्ते तस्यासपत्नत्वं फलमित्याह *स इन्द्र इति । असपत्नशब्दार्थं स्पष्टयितुं सपत्नशब्दार्थमाह *द्वितीय इति । प्रतिपक्षभूत इत्यर्थः ॥ १२ ॥ एतत्सर्वमभिप्रेत्याथैतस्येत्यादेस्तात्पर्यमाह *चन्द्र इति ।

एवं प्रासङ्गिकमुपासनमुक्त्वाऽन्नत्वेन प्रस्तुताधिदैविकप्राणविभूतिमाह श्रुतिः* अथेति। वाङ्मनसोर्विभूतिवर्णनानन्तरमेतस्य प्रजापतेः प्राणस्यापः शरीरमधिष्ठानम् असौ चन्द्रः ज्योतीरूपं ध्येयं प्राणस्वरूपमित्यर्थः । प्राणस्य तदधिष्ठानस्य च पूर्ववत्सर्वव्याप्तिमाह *तद्येति । त एत इत्यादेरर्थमाह *त एत इति । आधिदैविकवागादीनामनन्तत्वे श्रुतौ हेतुरुक्तः *समा इति ।

तत्र समशब्दार्थमाह *अध्यात्ममिति । सर्वव्यापित्वं यस्मात्तस्मादधिदैवतप्रजापतिसम्बन्धिवागादीनामनन्तत्वमित्यर्थः ॥ ३७ ॥ अस्मिन्प्रकरणे पूर्ववद्वागादिशब्दा नामाद्युपलक्षका

नामरूपक्रियास्तस्मादनन्ता अधिदैवतम् ॥
विराड्रूपा इति ध्यात्वा ध्यायेत्कालात्मतां पुनः॥३८॥
श्रुतिः॥ स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥ १३ ॥

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवा च पूर्यतेऽप च क्षीयते सोऽमावास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥
वार्त्ति०॥ कालात्मको विराडेष चन्द्रः षोडश तत्कलाः॥

---

इति मत्वोक्तं *नामरूपेति ।

परिच्छिन्नोपास्तिनिन्दापूर्वकं तेषामनन्तत्वेनोपास्तिमाह श्रुतिः*स य इत्यादिना । अपरिच्छिन्ननामरूपक्रियात्मकोऽहमिति ध्यायेदित्यर्थः ॥ १३ ॥ एतदभिप्रायेणैवाह *विराड्रूपा इति । स एष संवत्सर इत्याद्युत्तरखण्डतात्पर्यमाह *ध्यायेदिति । अत्र पाठक्रममुल्लङ्घ्य सफलोपास्तिरुक्तेति न पुनर्ध्यानकथनमनुपपन्नमिति ध्येयम् । स एष त्र्यन्नात्मत्वेन प्रकृतप्रजापतिः संवत्सरकालात्मक इत्यर्थः ॥ ३८ ॥ एवं विराजं कालात्मत्वेन ध्यात्वा पुनस्तमेव चन्द्रत्वेन ध्यायेदिति मत्वाऽऽह श्रुतिः *षोडशकल इति । तस्य रात्रय एवेत्यादेरर्थमाह *तिथय इति । रात्रिपदं तिथि-

तिथयः प्रतिपन्मुख्याः कलाः पञ्चदशेरिताः ॥ ३९ ॥
आगमापायरूपास्ता ध्रुवैका षोडशी कला ॥
तया सर्वं प्राणजातं दर्शे विशति चन्द्रमाः ॥ ४० ॥

श्रुतिः ॥ यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते। तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः ॥ १५ ॥

---

लक्षकमिति भावः ॥ ३९ ॥ सोऽमावास्यामित्यादेरर्थमाह *तयेति ॥४०॥ सोमस्य प्राणभृत्सु प्रविष्टत्वादेव प्राणिनां प्राणविच्छेदं न कुर्यादिति प्रसङ्गादाह श्रुतिः* तस्मादिति। कृकलासो दृष्टोऽप्यमङ्गलहेतुरिति कृत्वा प्राणिभिः स्वभावेनैव हिंस्यते तस्मिन्दिने तस्यापि हिंसा न कार्या इत्याह *अपि कृकलासस्येति। एतस्याः सोमदेवतायाः अपचित्यै पूजायै। यद्यपि न हिंस्यादिति शास्त्रेण सामान्यतो हिंसा निषिद्धा तथापि सोमदेवतापूजार्थममावास्यायां ब्रह्महत्यादिवद्विशेषतः परिहरेद्धिंसामात्रमिति भावः ॥१४॥ यो वै स संवत्सर इत्यादेरर्थमाह *इति ध्यात्वेति। यः प्रजापतिः संवत्सरात्मत्वेन पुनश्चन्द्रत्वेन च ध्यातः सोऽयमेवेति श्रुतियोजना। *अयमेवेति। सामान्येनोक्तं विशिष्य दर्शयति श्रुतिः *योऽयमेवंविदिति। अनेन प्रकृतत्र्यन्नात्मकोपासक उच्यते। चन्द्रत्वेन सम्पादितो यः प्रजापतिः सोऽहमिति भावयेदिति वाक्यार्थः। तस्य वित्तमेवेत्यादेरर्थमाह *देह इति। चन्द्रत्वेन सम्पादितस्य प्रजा-

वा० इति ध्यात्वाऽथ चन्द्रत्वं स्वास्मिन्सम्पादयेद्बुधः ॥
देहो ध्रुवा कला वित्तं कलाः पञ्चदशेरिताः ॥ ४१ ॥
आपूर्यते क्षीयते च क्रमाद्वित्तेन विग्रहः ॥
स्वामी देहोऽस्य तद्वित्तं भृत्या इत्यत्र चिन्तयेत् ॥४२॥

श्रुतिः ॥ अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा, कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति ॥ १६ ॥

---

पतेर्याः पञ्चदश कलास्ता एव गवादिवित्तमेवोपचयापचयवत्त्वादिति स्ववित्ते पञ्चदशकलादृष्टिं कृत्वा ध्रुवां षोडशीं कलां स्वदेहं कल्पयित्वा षोडशकलः प्रजापतिरहमेवेत्युपासीतेत्यर्थः ॥ ४१ ॥ तदेतन्नभ्यमित्यादेरर्थमाह *स्वामी देह इति ॥ ४२ ॥ देहस्य स्वामित्वं वित्तस्य परिवारत्वं चक्रदृष्टान्तेन स्पष्टयति श्रुतिः *यदयं योऽयमात्मा शरीरं तदेतल्लोकप्रसिद्धं नभ्यं नाभ्यमिति यावत्। चक्रपिण्डिकानाभिस्थानीयं शरीरमिति वाक्यार्थः। प्रधिर्वित्तमिव परिवारस्थानीयं वित्तं चक्रस्येवारनेम्यादिरित्यर्थः॥ तस्माच्छरीरस्य रथचक्रपिण्डिकास्थानीयत्वाद्यद्यपि सर्वज्यानिं जीयते सर्वस्वापहरणं प्राप्नोति तथाऽप्यात्मना शरीरेण चेज्जीवति प्रधिना परिवारेणागात्क्षीणोऽभूत् यथा चक्रमरनेमिवियुक्त इत्येव वदन्ति। तथाच शरीरवित्तयोः स्वामिभृत्यदृष्टिकरणमुपपन्नमिति भावः ॥ १५ ॥ वृत्तानुवादपूर्वकमुत्तरखण्डतात्पर्यमाह *त्र्यन्नेति। पुत्रश्चाग्निहोत्रादि कर्म च विराडाद्युपासनं च पुत्रकर्मोपासनानि तेषामि-

वार्त्ति०॥त्र्यन्नात्मोपासनं प्रोक्तं तत्फलोक्तिप्रसङ्गतः॥
पुत्रकर्मोपासनानां फलं वक्ति यथायथम् ॥ ४३॥
पुत्रेण जय्यो लोकोऽयं पितृलोकस्तु कर्मणा ॥
विद्यया देवलोकोऽतो द्वाभ्यां विद्या प्रशस्यते ॥४४॥
क्रियात्वाल्लोकहेतुत्वं युज्यते कर्मविद्ययोः ॥
द्रव्यात्मनस्तु पुत्रस्य कथमित्युच्यते शृणु ॥ ४५ ॥
प्रव्रजिष्यन्मरिष्यन्वा पिता कर्तव्यमात्मनः ॥
पुत्रेऽध्ययनयागादि सर्वमप्यर्पयत्यसौ ॥ ४६ ॥

श्रुतिः ॥ अथातः सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्र-माह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याह ब्रह्मा-हं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता ये वै केच यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता ये वै के च लोकाः तेषां सर्वेषां लोक

---

त्यर्थः ॥ ४३ ॥ भावमुक्त्वाऽक्षरार्थमाह *पुत्रेणेति । द्वाभ्यां पुत्रकर्मभ्याम् । श्रुतावथेति प्रारम्भार्थः ॥ त्रयो वावेत्यवधा-रणार्थः ॥ १६ ॥ कर्मविद्ययोरुक्तं फलमङ्गीकुर्वन्मनुष्यलोकः पुत्रेणैव जय्यो नान्येनेत्युक्तमाक्षिपति *क्रियात्वादिति । कथं लोकहेतुत्वमित्यनुषङ्गः । पुत्रस्य लोकहेतुत्वाभावे हेतुः* द्रव्येति। फलस्य क्रियासाध्यत्वादिति भावः ॥ ४५ ॥ उक्ताक्षेपप-रिहारत्वेनोत्तरखण्डतात्पर्यमाह *प्रव्रजिष्यन्निति ॥ ४६ ॥

अक्षरार्थस्तु—अथ कर्मोपासनयोरनुष्ठानानन्तरम् अतः वक्ष्य-माणविधया पुत्रस्य मनुष्यलोकहेतुत्वात्सम्प्रत्तिसंज्ञकं स्नात-गुरुपवत्संस्काररूपं कर्म विधीयते इत्यर्थः । तत् कस्मिन्काले कर्तव्यं? तत्राह *स पिता यदा प्रैष्यन्मरिष्यन् प्रव्रजिष्यन्वा म-

इत्येकतैतावद्वा इदं सर्वमेतन्मा सर्वं सन्नयमितो ऽभु-
नजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेन-
मनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव
प्राणैः सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णया
कृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मा-
त्पुत्रो नाम, स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते
दैवाः प्राणा अमृता आविशन्ति ॥ १७ ॥

---

न्यते मरणं च ज्योतिःशास्त्रेण निश्चेतुं शक्यत इति भावः ॥
अथ तदा पुत्रमाहूयाह त्वं ब्रह्मेत्यादि । स पुत्रः पूर्वमेवानु-
शिष्टो जानामि त्वयैतत्कर्त्तव्यमिति प्रत्याह *अहं ब्रह्मेति ॥

उक्तवाक्यत्रयं स्वयमेव व्याकरोति श्रुतिः *यद्वै कि-
ञ्चानूक्तमित्यादिना ॥ यत्किञ्चानूक्तमधीतमनधीतं चावशि-
ष्टं तस्य सर्वस्यैव ब्रह्मेत्येतस्मिन्पद एकत्वं, यो वेदविषयो-
ऽध्ययनव्यापार एतावन्तं कालं मम कर्त्तव्यः आसीत्स इत
ऊर्ध्वं ब्रह्म त्वत्कर्तृकोऽस्तु इत्यर्थः ॥ एवं मत्कर्तृकयज्ञविष-
यव्यापारः सर्वोऽपि त्वत्कर्तृकोऽस्तु, लोकस्त्वया जेतव्य इ-
त्यर्थः ॥ पदार्थस्तु पूर्ववत् । पदार्थमुक्त्वा वाक्यार्थमाह श्रु-
तिः *एतावद्वा इदं सर्वमिति ॥ इदं गृहिणा कर्तव्यम्—अध्येत-
व्या वेदा, यष्टव्या यज्ञा, जेतव्या लोका इत्येतावदेवेत्यर्थः ।
न च यज्ञे गृहीते तत्फलस्यापि ग्रहणाद्ये वै के च लोका इति
पुनरुक्तिरिति वाच्यम् । लोकानामुपसर्जनत्वेन काम्यकर्म-
णोऽविवक्षितत्वंनुत्यर्थं पृथग्ग्रहणादिति । *एतन्मा सर्वमिति ।
अत्र चिकीर्षुरिति पदमध्याहार्यम् । अयं पुत्र एतन्मदुक्तं सर्वं
चिकीर्षुस्सन्नितो ऽस्मान्मनुष्यदेहतो मा माम् अभुनजत्पालयि-

वार्त्ति० ॥यागाध्ययनकाम्यानि कुर्वन्पुत्रः पितुर्गृहे॥
वसत्येतावता पुत्राजितोऽयं लोक उच्यते ॥ ४७ ॥
पुत्रकर्मोपासनानां प्रसङ्गात्फलमीरितम् ॥

---

ष्यतीति मत्वा पुत्रमाह पितेत्यन्वयः । यस्मादनुशिष्टः स-
न्नादिष्टमध्ययनादि चिकीर्षति पुत्रस्तस्मादनुशिष्टं पुत्रं लोक्यं
लोकहितं पितुराहुः ब्राह्मणाः तस्मादेनं पुत्रमनुशासति लो-
क्योऽयं स्यादिति पितरः । स कृतसम्प्रत्तिक एवंविद्विरा-
डुपासको यदा प्रैति म्रियतेऽथ मरणानन्तरमेव हि प्रजापति-
रस्मीति संस्कृतैर्यागादिभिः सर्वत्र प्रविशद्भिः सह पिता पुत्र-
माविशति । ननु कोऽयं प्रवेशः? नहि विशिष्टस्य केवलस्य वा
सर्पादेर्बिलादाविव प्रवेशः सम्भवति । उच्यते । पिता पूर्वम-
ध्येतव्या वेदा इत्यादियादृशसङ्कल्पवानासीत्तादृशसङ्कल्प-
स्तस्मिन्प्रवेश्यमानः स्वसुते विदुषः प्रवेश इत्युपचर्यत इति । इ-
दानीं पुत्रनिर्वचनमाह *स यदि कदाचिदनेन पित्रा कर्त-
व्यमक्ष्णया छिद्रितं कृतं भवति तस्मात्कर्मच्छिद्रान्मुञ्चति मो-
चयति । यस्मात्पूरणेन पितरं त्रायति तस्मात्पुत्रो नाम, य-
द्यत्पित्रा पूर्वमध्ययनादि प्रमादान्न कृतं तस्य सर्वस्याहं ब्रह्मा-
हं यज्ञ इत्यनुशासनग्रहणेन पूरणात्पुत्रस्य पुत्रतेत्यर्थः । स पिता
एवंविधपुत्रेणास्मिन्लोके प्रतितिष्ठति। एवमप्यक्रियारूपस्य पुत्र-
स्य मनुष्यलोकप्राप्तिहेतुत्वं कथमिति शङ्कायाः कः परि-
हार इत्याशङ्क्य खण्डसमुदायतात्पर्यं स्फुटयति *यागाध्ययने-
ति । यागशब्दो नित्यनैमित्तिककर्ममात्रपरः । पित्रनुशासनग्र-
हणेन तत्कर्मच्छिद्रं पूरयित्वा पित्राऽर्जितगृहे वसतः पुत्रस्य पि-
तुरस्मिन्लोके प्रीतिहेतुत्वमात्रेणतल्लोकजयहेतुत्वमिति भावः

ऽयन्नात्मोपासकस्याथ विराट्प्राप्तिरुदीर्यते ॥ ४८ ॥
पूर्वसिद्धविराजो वाक् पृथिव्यग्न्यात्मिका सती ॥
उपासिता तत्प्रसादाद्दैवी वागाविशत्यमुम् ॥ ४९ ॥
मनःप्राणौ तथा दैवौ विशतो ऽत उपासकः ॥
सर्वेषामपि भूतानां भवत्यात्मा विराडिव ॥ ५० ॥

श्रुतिः ॥ पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥१८॥

दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥१९॥ अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति स एष एवंवित्सर्वेषां भूतानामात्मा भवति ॥

---

॥४७॥४८॥ अथैनमित्यादेस्तात्पर्यमाह *पूर्वेत्यादिना ॥ पूर्वसिद्धविराजो या वागस्ति सा पृथिव्यग्न्यात्मत्वेनोपासिता सती दैवी वाग्भूत्वाऽमुमुपासकमाविशतीत्यर्थः ॥४९॥५०॥ एनं कृतसम्प्रत्तिकम्। श्रुतावथशब्दः पुत्रप्रकरणविच्छेदार्थः। दैवा देवात्मकाः अमृता अजन्याः प्राणाः वागादय आविशन्ति, सूत्रेषु प्राणेषु आत्मभावनाकरणात्तेषु परिच्छिन्नाभिमानो निवर्त्तत इत्यर्थः। एवं सामान्यत उक्तमर्थं विशिष्य दर्शयति श्रुतिः *पृथिव्यै चेति। पृथिव्या इत्यर्थः। दैव्या वाचः स्वरूपमाह *सा वा इति। अमोघेत्यर्थः ॥ आनन्द्येव सुख्येव भवति। अथो अपि न शोचति सञ्चरन्जङ्गमेषु असञ्चरन् स्थावरेषु न व्यथते दुःखनिमित्तेन भयेन न युज्यते न रिष्यति न हिंसामापद्यते स यथोक्तऽयन्नात्मदर्शी सर्वभूतात्मा भवति। सर्वभूतात्मत्वे फलितमाह

वार्त्ति० ॥ सर्वभूतात्मभूतोऽसौ सर्वानन्यत्ववेदनः ॥
जगदुत्पत्तिसंहारैः क्रीडन्निव विचेष्टते ॥ ५१ ॥
ननु पूर्वविराज्येष विशाद्विन्दुरिवोदधौ ॥
विराडन्तररूपेण जायते वोभयं न तत् ॥ ५२ ॥
नोपास्तिकार्यता त्वाद्ये विराजः पूर्वसिद्धितः ॥
द्वितीये द्विगुणीभूतो विराट् दृश्येत जन्तुभिः ॥५३॥
नैषदोषः कल्पनायां द्वैगुण्यस्याप्रसङ्गतः ॥
न रज्जुसर्पो द्विगुणो भाति द्वाभ्यां प्रकल्पितः ॥५४॥
विराट् स्वेभ्यो ऽन्य इत्येवं कल्पयन्त्यनुपासकाः ॥
उपासकाः कल्पयन्ति स्वयमेव विराडिति ॥ ५५ ॥
तद्यथा कल्प्यते येन तत्तथा तेन वीक्ष्यते ॥
अन्येन कल्पितं त्वन्यो न कश्चिद्वीक्षितुं क्षमः ॥५६॥
कल्पितस्य फलत्वं च युज्यते स्वप्नभोगवत् ॥
कल्पितं निखिलं दृश्यमिति वेदान्तडिण्डिमः ॥५७॥
तस्मादुपास्तिजन्योऽयं विराट् तस्योपमा श्रुतौ ॥

---

*सर्वभूतेति ॥ ५१ ॥ उपासकस्य सर्वात्मभावापत्तिं निर्णेतुमाक्षिपति *नन्विति ॥५२॥५३॥ द्वितीयं पक्षमादाय समाधत्ते *नैषदोष इति । तत्रोक्तं दोषं धुनीते *कल्पनायामिति ॥ उक्तं तावदधस्तात्भोग्यत्वाकाराविशिष्टत्वेन तत्तज्जीवकल्पितप्रपञ्चो नानेति । तथा चोपासकेनोपासनमहिम्ना स्वाभिन्नत्वेन कल्पितः स्वस्वप्नकल्पितराजत्ववत्स्वस्यैव प्रतीयते नान्यस्येति न कस्यापि द्वैगुण्यभानप्रसक्तिरिति भावः ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ विराट्प्राप्तेः उपास्तिफलकत्वमुक्तमुपसंहरति *तस्मादिति । यथेत्यादिश्रुतेस्ता-

श्रुतिः ॥ यथैषा देवतैवं स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्यवन्ति ॥
पूर्वसिद्धाविराट्प्रोक्ता यथैषा देवतेति हि ॥ ५८ ॥
सर्वभूतैर्यथा पूज्यो विराट् पूर्वस्तथा विराट् ॥
पूज्यते नूतनोऽप्येष सर्वभूतात्मकत्वतः ॥ ५९ ॥
न च सर्वप्रजादुःखप्रसङ्गोऽस्मिन्नुपासके ॥
कृत्स्नाभिमानिनस्तस्य प्रजामात्रेऽनहम्मतेः ॥ ६० ॥
कुक्षिस्थकृमिदुःखैर्नो न मनागपि सङ्गतिः ॥
तथाऽस्मदादिगैर्दुःखैर्न विराजोऽस्ति सङ्गतिः ॥ ६१ ॥
ईश्वरत्वाच्च तस्यान्यदुःखैर्न स्यात्समागमः ॥

---

त्पर्यमाह *तस्योपमेति । श्रुतौ, कथ्यत इति शेषः । यथैषेत्यत्रैतच्छब्दार्थमाह *पूर्वसिद्धविराट् इति । कल्पादौ वैराजपदं प्राप्तो यथा सर्वात्मभूतो बभूव एवं स नवीनोऽपि विराट् सर्वात्मतां प्राप्नोतीत्यर्थः ॥५८॥ यथैतामित्यादेरर्थमाह *सर्वभूतैरिति । श्रुतावंवन्तीत्यस्य पूजार्थत्वमाह *पूज्यत इति ॥ ५९ ॥ यदु किञ्चेत्यादिवाक्यनिरस्यां शङ्कामनूद्य तद्वाक्यतात्पर्यकथनेन निरस्यति *नचेति । विदुषः सर्वभूतात्मतोत्पत्तौ सर्वदुःखैरपि सम्बन्धप्रसङ्गादनर्थकारिविराट्प्राप्तिरिति शङ्का न कार्या, विदुषो दुःखहेतुपरिच्छेदाभिमानाभावादित्यर्थः ॥ ६० ॥ स्वसम्बन्धिनामपि दुःखं स्वस्य न स्फुरतीत्यत्र दृष्टान्तमाह *कुक्षिस्थेति ॥ ६१ ॥ ननु विषमो दृष्टान्तः, कुक्षिस्थकृमिष्वभिमानाभावाद्विदुषोऽपरिच्छिन्नधीत्वेऽपि सूत्रात्मतामापन्नस्य स्वांशसर्वभूताभिमानित्वाद् दुःखयोगो दुर्वार इत्यरुचेः परिहारान्तर-

अस्माकं दुःखसम्प्राप्तिरनैश्वर्यकृतैव हि ॥ ६२ ॥
सत्यसङ्कल्पयुक्तस्य यदिष्टं तद्भवेत्तथा ॥
अनिष्टं न भवत्येव कुतो दुःखं प्रसज्यते ॥ ६३ ॥
उपास्त्याऽखिलपापस्य दग्धत्वाद् दुःखकारणम् ॥
नास्ति, पुण्यैकसाध्यत्वात्सुखमेव विराट्पदे ॥ ६४ ॥
श्रुतिः । यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छाति न ह वै देवान्पापं गच्छति॥२०॥
वार्त्ति० इत्थं प्रोक्ता विराट्प्राप्तिर्मृतस्य त्र्यन्नदर्शिनः ॥
त्र्यन्नात्मदर्शी जीवेच्चेत्तदा कर्त्तव्यमुच्यते ॥ ६५ ॥
सर्वकर्माणि सन्न्यस्य प्राणापानावनुस्मरन् ॥
सर्वव्यापारकालेषु नान्यत्किञ्चिद्विचिन्तयेत् ॥ ६६ ॥
श्रुतिः ॥ अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्द्धन्त वदिष्याम्य-

---

माह *ईश्वरत्वादित्यादिना ॥६२॥६३॥६४॥ यदु किञ्चेत्यादेरयमर्थः—यदु प्रजाः आध्यात्मिकादितापैर्यत्किञ्चिच्छोचन्ति तदासां प्रजानाम् अमैव सहैव भवति प्रजाभिरेव दुःखं भोक्तव्यमित्यर्थः । देवताभावमापन्नस्येतरेभ्यो विशेषमाह *पुण्यमिति । पुण्यफलमित्यर्थः ॥२०॥ वृत्तानुद्रवणपूर्वकमुत्तरकण्डिकातात्पर्यमाह *इत्थमिति । प्रैष्यन्नित्यत्र प्रव्रजिष्यन्मरिष्यन्वेत्यर्थद्वयस्याभिहितत्वादिति भावः ॥ ६५ ॥ कर्त्तव्यमेवाह *सर्वेति ॥ ६६ ॥ श्रुतौ—अथ संन्यासानन्तरमतः कर्त्तव्यजिज्ञासायाः सत्त्वाद् व्रतमीमांसा व्रतशब्देनावश्यकर्त्तव्यतोच्यते तद्विचारः प्रवर्त्तते इत्यर्थः । तदर्थमाख्यायिकामाह *प्रजापतिर्ह किल प्रजाः सृष्ट्वा कर्माणि करणानि वागादीनि ससृजे ॥

हमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यह-मिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म, तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत् ॥

तान्याप्त्वा मृत्युरवारुन्धत्, तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्यो ऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे यं वै नः श्रेष्ठो यः सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति ह-न्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपम-भवंस्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह

---

स्पर्द्धाप्रकारमेवाह *वदिष्यामि स्वव्यापाराद्वदनरूपादनुपरतै-वाहं स्यामिति वाग्दध्रे धृतवती । *यथाकर्मेति । यद्यस्य कर्म तत्करोमीति सर्वाणि करणानि व्रतं दध्रिर इत्यर्थः । तानि करणानि मृत्युर्मारकः श्रमरूपी भूत्वोपयेमे उपसञ्जग्राह । उक्तमेव प्रपञ्चयति *तानि करणानि मृत्युराप्नोच्छ्रमरूपेणा-त्मानं दर्शितवान्, आप्त्वा च तान्यवारुन्धत् स्वकर्मभ्यः प्रच्या-वितवानित्यर्थः । प्रजापतेर्वागादिषु श्रमद्वारा स्वकर्मप्रच्युति-रासीदित्यत्र तत्कार्यप्रजास्वपि तद्दर्शनं लिङ्गमित्याह *तस्मा-दिति । अथ वागादीनां निर्धारणानन्तरमिममेव मुख्यं प्राणं श्रमरूपी मृत्युर्नाप्नोन्न प्राप्तवान् । अत्रापि कार्यलिङ्गकानुमानमाह *योऽयं प्राणिषु मध्यमः प्राण इदानीमपि न श्राम्यतीत्यर्थः । यानि करणानि मुख्यप्राणं ज्ञातुं मनो दध्रिरे । ज्ञानार्थमनुस-न्धानप्रकारमेवाह *अयं वै मुख्यप्राण एव नोऽस्माकं मध्ये श्रेष्ठः। श्रेष्ठत्वे हेतुः *य इति । तस्य श्रेष्ठत्वे फलितमाह *हन्त इदानीमस्यैव प्राणस्य सर्वे रूपमसाम प्राणमात्मत्वेन प्रपद्ये-

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) १

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ( वेदान्तः ) ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्योः व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । ११

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... ३

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्रीपुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविर[illegible] प्रकाश ४

(४१) वेदान्तसिद्ध[illegible] । श्रुतिसिद्धान्ताप-रनामकः । [illegible] मिश्रविरचितः । वेदा[illegible] श्रीपुरुषोत्तमप्रसाद शर्म[illegible]समुपा[illegible]व्याख्यटीक[illegible] ३

(४२) स्वानुभवादर्श । श्री[illegible]महंसपरिव्राजकाचार्यनाराय[illegible]विर-चितः । स्वकृ[illegible] । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाख्टीकाद्वयसंवलिता । १०

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वेश्वरसूरिविरचितः । ६

(४८) विरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलंकृतः । ५

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम १

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्याय श्रीमित्रमिश्रविरचितः । ४

पत्त्राद्रिप्रेषणस्थानम् } **हरिदासगुप्तः,**
**चौखम्बा बनारस सिटी**

1918.

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 244.

# बृहदारण्यकवार्तिकसार

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

# BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SASTRI VAJHE.

FASCICULUS VI-६

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—:o:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२४४

१ अस्यां चौखम्बा- संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतकं सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रे[illegible]
एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्र[illegible]
एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वां[illegible]
एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्–मुद्राः ७ आनक[illegible]

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ "

६ आपणव्ययः पृथग् नास्ति । ... ... ... ... ... ...

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) १

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमांसा ) १

(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्या[illegible]ख्यानम् । सम्पूर्ण । ( वेदान्तः ) [illegible]

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा [illegible]

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपर[illegible] श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामु[illegible]नमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्तः )[illegible]

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टार[illegible]काचार्यसंगृहीतः । आचार्यचित्सुखमुनि[illegible]विरचितव्याख्योपेतः ( वेदान्तः ) [illegible]

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि[illegible]सप्तविभक्तिविस्तृतविचाररूपः म० म[illegible] श्रीगिरिधरोपाध्यायविरचितः सम्पूर्ण[illegible] ( न्यायः ) ... ... ...

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् सम्पूर्णम् ( मीमांसा ) ... ...

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसो[illegible]मेश्वरविरचिता । ( मीमांसा ) १

वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्द्धते ऽनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादेवतं स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः, म्लोचन्ति ह्यन्या देवता न वायुः, सैषाऽनस्तमिता देवता यद्वायुः ॥ २२ ॥

अथैष श्लोको भवति–यतश्चोदेति सूर्योऽस्तं यत्र

---

महि । एवं निश्चित्य तथैवाभवन्, तस्मादेते वागादय एतेन प्राणनाम्ना प्राणा इत्याभिधीयन्ते । य एवं सर्वकरणानां प्राणात्मतां प्राणशब्दाभिधेयत्वं च वेत्ति तेन ह वाव तेनैव विदुषा तत्कुलमाचक्षते यस्मिन्कुले विद्वान्जातस्तद्विद्वन्नाम्नैव प्रथितं भवति । य इह यस्तु एवंविदा स्पर्द्धते सोऽस्मिन्नेव शरीरे शोषं गत्वाऽन्ते म्रियते । तथा च प्राणविदा सह स्पर्द्धा न कार्येति भावः । इत्यध्यात्ममित्युक्तोपसंहारः ॥ २१ ॥ अथाध्यात्मदर्शननिर्णयानन्तरमधिदैवतं देवेषु कस्य देवताविशेषस्य व्रतधारणे श्रेय इति विचार्यत इत्यर्थः । तदर्थं पूर्ववदाख्यायिकामाह *ज्वलिष्यामीत्यादिना । *एवमेतासामिति । एतासां मध्ये वायुः स्वेन वायुव्रतेनाभग्नव्रतोऽभूदिति शेषः । उक्तमेव व्यनक्ति *म्लोचन्तीति । स्वकर्मभ्य उपरमन्ते ऽग्न्यादिदेवताः न वायुः, कुतः ? सैषा ऽनस्तमिता देवता यद्वायुर्यो वायुः ॥२२॥ अथास्मिन्नर्थे एष श्लोको मन्त्रो भवति । यतश्चेत्यादिप्रश्नः तस्योत्तरमाह *प्राणाद्वा एष उदेति । यथा पुरुषस्य स्वापसमये वागादयः प्राणे विली-

च गच्छन्तीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्व इति यद्वा एते ऽमुर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवादिति यद्युचरेत्समापिपयिषेत्तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति ॥ २३ ॥

यन्ते प्रबोधसमये च पुनर्जायन्ते तथा भानुरपि वायावेवो-दयास्तमयौ प्राप्नोति, सूर्य इत्यग्न्यादीनामुपलक्षणम् । तथाच श्रुतिः यदा सूर्योऽस्तमेति वायुमेवाप्येतीत्यादि । तथाचाध्या-त्ममधिदैवतं च प्राणवाय्वोर्व्रतं धार्यमिति भावः । मन्त्रस्य पूर्वार्द्धं व्याख्याय तं देवा इत्याद्युत्तरार्द्धं व्याचष्टे श्रुतिः *यद्वा इति । यत्प्राणादिव्रतमस्ति तदेते वागादयः अमुर्हि अमुष्मिन्नपि काले अध्रियन्त व्रतमद्यापि कुर्वन्ति । अयमर्थः तं प्राणवायुव्रतलक्षणं धर्मं देवा वागादयोऽग्न्यादयश्चक्रिरेऽद्या-पि स धर्मः क्रियते श्वो भविष्यत्कालेऽपि करिष्यते नहि वागादयोऽग्न्यादयो वा परिस्पन्दरहिताः स्थातुमर्हन्ति ते, ते-न प्राणादिव्रतं तैः सदाऽनुवर्त्यत इति । यस्मादेवं तस्माद-न्योऽप्येकमेव व्रतं चरेत्तदेवाह *प्राण्यादपान्याच्च प्राणनापान-नव्यापारं कुर्यात्, अग्न्यादयो वागादयश्च मदात्मका अहं प्राण-वाय्वात्मा सर्वपरिस्पन्दकृदिति ध्यायेदित्यर्थः । नेच्छब्दः प-रिभवे । यद्यस्माद्व्रतादहं प्रच्युतः स्यां तदा पाप्मा मृत्युः श्रमरूपी मामाप्नुवदाप्नुयादिति सन्त्रस्तो भूत्वा प्राणव्रतमाम-रणमनुतिष्ठेदिति भावः । यदि कदाचिदिदं व्रतमुच्चरेत्प्रारभेत तर्हि समापयितुमिच्छेत्तेन उ इति छेदः तेनामरणं व्रतधार-णेन उ एव एतस्या एव प्राणदेवतायाः ॥ २३ ॥ एतत्सर्वं

इत्युपनिषदि तृतीयाध्यायस्य पञ्चमब्राह्मणं समाप्तम् ॥

वार्त्ति०॥ वागादयः श्रमग्रस्ता न प्राणस्तेन तेऽखिलाः॥
प्राणरूपमनुप्राप्य प्राणनाम्ना प्रकीर्तिताः ॥ ६७ ॥
इन्द्रियेषु परिस्पन्दः प्राणांशोऽर्थगृहीतयः ॥
इन्द्रियार्थस्ततः प्राणः सर्वरूपः प्रशस्यते ॥ ६८ ॥
प्राणोऽध्यात्मं यथा तद्वद्वायुः श्रेष्ठोऽधिदैवतम् ॥
प्राणवायुस्वरूपोऽहं प्राणिमीत्येव चिन्तयेत् ॥ ६९ ॥
आमृत्यनन्यव्यापारश्चिन्तयन्प्राणदेवताम् ॥
याति सायुज्यसालोक्यं ध्यानोत्कर्षानुसारतः ॥७०॥
पूर्वोक्ताया विराट्प्राप्तेरनुवादोऽयमिष्यते ॥
उपासनान्तरं चेदं भवेत्पृथगुपक्रमात् ॥ ७१ ॥
इत्यनात्मविदां भावी संसारः सर्व ईरितः ॥
पञ्चमे ब्राह्मणे तेन हेयोऽसौ तत्त्वविद्यया ॥ ७२ ॥

इति वार्त्तिकसारे प्रथमाध्यायस्य पञ्चमं सप्तान्न-
ब्राह्मणं समाप्तम् ॥

---

सङ्ग्रहेण वर्णयन्वादिष्यामीत्याद्याख्यायिकायाः तात्पर्यमाह *वागादय इति ॥६७॥ इन्द्रियाणां प्राणात्मत्वप्राप्तौ लिङ्गमाह *इन्द्रियेष्विति । अर्थगृहीतिरर्थप्रकाशकत्वम् । इन्द्रियाणां प्राणात्मकत्वे फलितमाह *ततः प्राण इत्यादिना ॥ ६८ ॥ ॥ ६९ ॥ ७० ॥ प्राणोपास्तेरुक्तानुवादकत्वे अस्वरसं दर्शयन् पक्षान्तरमाह *उपासनेति ॥७१॥ एतद्ब्राह्मणतात्पर्यमुपसंहरति *इत्यनात्मविदामिति ॥ ७२ ॥

इति वार्त्तिकसारटीकायां प्रथमाध्यायस्य पञ्चमं सप्ता-
न्नब्राह्मणं समाप्तम् ॥

अविद्यासूत्रमारभ्यसार्द्धब्राह्मणवर्णितम् ॥
विद्यासूत्रात्पुरोक्तं च जगत्सङ्क्षिप्य वर्ण्यते ॥ १ ॥
अल्पत्वे सति तत्त्यागं सम्भावयति धीर्नृणाम् ॥
षष्ठेऽस्मिन्ब्राह्मणे तेन जगत्सङ्क्षिपति श्रुतिः ॥ २ ॥
श्रुतिः ॥ त्रयं वा इदं नाम रूपं कर्म ॥
वार्त्ति० ॥ ब्रह्मादिस्थावरान्तं यज्जगत्तत्त्रयमेव हि ॥
नाम रूपं कर्म चेति नास्ति वस्त्वन्तरं क्वचित् ॥ ३ ॥
श्रुतिः ॥ तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्त्येतदेषाꣳ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्त्ति ॥ १ ॥
वार्त्ति० ॥ नामानि नामसामान्ये सर्वाण्यन्तर्भवन्ति हि ॥
उद्भूतिस्थितिनाशेषु न विशेषाः पृथक्स्थिताः ॥ ४ ॥
सामान्याच्चेत्पृथग्भूता लुप्येरन्नेव ते सदा ॥
ततो नामविशेषाणां तत्सामान्येन सङ्ग्रहः ॥ ५ ॥
रूपकर्मविशेषाणां सङ्ग्रहं योजयेत्तथा ॥

---

ननु कृतसम्प्रत्तिकस्य प्राणविदो ब्रह्मविद्यायां मुख्याधिकारिणः संन्यासानन्तरमुपास्तिविधानं किमर्थमिति चेत्, उच्यते । नात्र मुमुक्षोरुपासनं विधीयते किन्तु ब्रह्मलोककामस्य कुटीचकादेस्तस्य च देवो भूत्वेत्यादिवचनादामरणमुपासनं विना तदसिद्धेस्तं प्रति तद्विधानमुपपन्नमित्युत्तरब्राह्मणतात्पर्यमाह *अविद्येति *सार्द्धेति । चतुर्थशेषेण पञ्चमब्राह्मणेन चेत्यर्थः ॥ १ ॥ सङ्क्षिप्य पुनर्जगतो वर्णनस्य प्रयोजनमाह *अल्पत्व इति ॥ २ ॥ अक्षरार्थमाह *ब्रह्मेति ॥ ३ ॥ त्रयं वा इदमिति

श्रुतिः—अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषां सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्त्ति॥२॥ अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि

---

इदं व्याकृताव्याकृतात्मकं विश्वं नाम रूपं कर्मेति त्रितयमेवेत्यर्थः। तेषां नाम्नामित्यादेरर्थमाह *नामानीत्यादिना ॥४॥५॥ श्रुतौ वागित्येतदित्यनेन नामसामान्यमुच्यते । तेषां नाम्नां सामान्यविशेषात्मकानां मध्ये एतत् नामसामान्यमेषां नामविशेषाणामुक्थमुपादानमिति योजना । तत्र हेतुः *अतो हीति । नामसामान्याद्धि सर्वाणि विशेषनामानि चैत्रो मैत्र इत्यादीन्युत्तिष्ठन्त्युत्पद्यन्ते । तथाच कार्याणामुपादानाव्यतिरेकान्नामविशेषाणां नामसामान्येऽन्तर्भाव इति भावः । तत्रैव हेत्वन्तरमाह *एतदिति । एतन्नामसामान्यमेषां नामविशेषाणां साम सामान्यं कल्पनाधिष्ठानमिति यावत् । तथाच नामविशेषाणां तत्सामान्ये कल्पितत्वेन तन्मात्रतेत्यर्थः । तत्रैव हेत्वन्तरमाह *एतदेषां ब्रह्मेति । एतन्नामसामान्यमेषां नामविशेषाणां ब्रह्म आत्मा स्वरूपमिति यावत् । तन्नामसामान्यं हि यस्माद्विशेषनामानि बिभर्त्ति स्वरूपवन्ति करोति । सामान्यापृथक्कृतस्य विशेषस्य स्वरूपान्तराभावादिति भावः । एवं कार्यकारणत्वोपपत्तेः सामान्यविशेषत्वोपपत्तेरात्मप्रदानोपपत्तेश्च नामविशेषाणां नामसामान्यमात्रता सिद्धा; एवमुत्तरयोरपि सर्वं योज्यम् ॥१॥ अथ नामव्याकरणानन्तरं रूपाणां रूपविशेषाणां प्रकाश्यविशेषाणामिति यावत् । चक्षुःशब्देनापि प्रकाश्यसामान्यं लक्ष्यते । एषां रूपाणामेतच्चक्षुरुक्थमित्यन्वयः ॥२॥ अथ कर्मणा-

कर्माण्युत्तिष्ठन्त्येतदेषां सौमतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि विभर्ति ॥
वा० शब्दस्पर्शादयः सर्वे रूपात्मानो निरूपणात् ॥६॥
नामादित्रितयस्यापि स्यात्सङ्घातेन सङ्ग्रहः ॥
त्रिदण्डविष्टम्भ इव वपुष्येकीभवेत्त्रयम् ॥ ७ ॥
श्रुतिः-तदेतत्त्रयꣳ सदेकमयमात्माऽऽत्मो वा एकः सन्नेतत्त्रयं तदेतदमृतꣳ सत्येन च्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥
इत्युपनिषदि तृतीयाध्याये षष्ठं ब्राह्मणं समाप्तम् ॥
इति तृतीयोऽध्यायः ॥ ३ ॥

---

मित्यत्राप्यात्मशब्देन शरीरवाचिना लक्षितं क्रियासामान्यं तद्विशेषाणां कारणमित्यर्थः । एतत्सर्वमाभिप्रेत्योक्तन्यायमन्यत्र । *रूपकर्मेति । रूपशब्दः प्रकाश्यमात्रपर इत्याभिसन्धायाह *शब्दस्पर्शादय इति ॥ ६ ॥ अत्र त्वन्नात्मप्रक्रियोक्तं सर्वमनुसन्धेयम् । तदेतत्त्रयमित्याद्यवतारयति *नामादीति । सङ्ग्रहोक्तस्यापि नामादित्रयस्य पुनः सङ्ग्रह उच्यत इत्यर्थः । एवं वाक्यमवतार्य तदर्थमाह *त्रिदण्डेति ॥ ७ ॥

तदेतत्त्रितयं संहतं सदेकं भवतीति श्रुत्यक्षरार्थः । केनात्मना एकत्वमिति तत्राह श्रुतिः *अयमात्मेति । अयं पिण्डः कार्यकरणसङ्घातो नामादित्रयविकारः तदात्मक इत्यर्थः । नामादित्रयस्य देहमात्रत्वे कथं व्यवहारासाङ्कर्यमित्याशङ्क्याह श्रुतिः *आत्मो वा एकः सन्नेतत्त्रयमिति । आत्मा उ वै इति पदच्छेदः । आत्मा देहः एकः सन् देहत्वेनाकारेण एकोऽप्येतत्त्रयं नामादित्रयात्मको-

वार्त्ति० अध्यात्मं देह उद्दिष्टोऽधिदैवं तु विराडिति ॥
वपुष्यन्तःस्थितः प्राणश्छन्नोऽध्यात्माधिदैवयोः ॥८॥
नित्यः प्राणो लिङ्गरूप आसंसारविमोक्षणात् ॥
सोऽनित्यपिण्डस्याधारो गृहस्तम्भवदान्तरः ॥९॥
सोऽयं देहादिसङ्घातो नामादित्रयसङ्ग्रहः ॥
सङ्घाते दृश्यते नामरूपकर्मत्रयं जनैः ॥ १० ॥
एतद्दृष्टान्ततः केचिद्भेदाभेदौ परात्मनि ॥
आहुः, तत्तु न युक्तं स्यात्परस्परविरोधतः ॥ ११ ॥

---

ऽपि भवतीति न व्यवहारसाङ्कर्यमित्यर्थः । तदेतदमृतमित्यादेरर्थं वक्तुमध्यात्माधिदैवशब्दयोरर्थमाह *अध्यात्ममिति । तदेतदित्यादिवाक्यतात्पर्यमाह *वपुषीति ॥ ८ ॥ श्रुतौ सत्येन च्छन्नममृतमित्यस्य व्याख्या प्राणो वा अमृतमिति ॥३॥ तत्र प्राणशब्दार्थं वदन् तस्यामृतत्वे हेतुमाह *नित्यः प्राण इति ॥९॥ नामरूपे इत्यादेरयं भावः—पञ्चीकृतपञ्चमहाभूततत्कार्यात्मकं सर्वं वैराजशरीरं सत्यं, सच्च त्यच्चेति व्युत्पत्तेः । तच्च वैराजशरीरम् अपञ्चीकृतपञ्चमहाभूततत्कार्यात्मककरणभूतसप्तदशलिङ्गस्य सूत्राख्यस्याच्छादकं तत् खल्वनात्माऽपि स्थूलदेहच्छन्नत्वाद् दुर्ज्ञानं, तेनापि च्छन्नं प्रत्यग्वस्तु सुतरामिति तज्ज्ञानेऽवहितैर्भाव्यमिति ।

प्रकृतमुपसंहरति *सोऽयमिति । देहस्य त्रयात्मत्वं न केवलं वाक्यीयं, प्रत्यक्षमपीत्याह *सङ्घात इति ॥ १० ॥ केचित्तु—ब्रह्म जगतो भिन्नाभिन्नं वस्तुत्वात् तथा देहो देहत्वेनाभिन्नोऽपि नामादिना भिन्न इति वदन्ति, तन्मतमनूद्य वैषम्येन दूषयति *एतदित्यादिना ॥११॥ ब्राह्मणार्थमुपसंहरति *तदि-

दृश्यस्य मायिकत्वेन न विरोधोऽस्ति कश्चन ॥
तदेवं ब्राह्मणे षष्ठे जगत्सङ्ग्रह ईरितः ॥ १२ ॥
ब्रह्मण्यध्यारोप एवं तृतीयेऽध्याय ईरितः ॥
मुमुक्षुभिर्निवर्त्योऽयं तत्त्वगोचरविद्यया ॥ १३ ॥
द्वेसहस्रे तथा सप्त शतान्यथ तु षोडश ॥
सङ्ख्याताः सङ्ख्यया श्लोकास्तृतीयाध्यायसङ्ग्रहे॥१४॥

इति वार्तिकसारे प्रथमाध्यायस्य षष्ठं ब्राह्मणं समाप्तम्॥
प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

ति ॥१२॥ अध्यायतात्पर्यं निगमयति *ब्रह्मणीति ॥१३॥१४॥

इति वार्तिकसारव्याख्याने प्रथमाध्यायस्य षष्ठं ब्राह्मणं समाप्तम् ।
प्रथमोऽध्यायः समाप्तः ॥ १ ॥

# द्वितीयोऽध्यायः।

योऽध्यारोपस्तृतीयोक्तश्चतुर्थेऽसावपोद्यते ॥
विद्यासूत्रस्य तात्पर्यमथ वाऽत्र निरूप्यते ॥ १ ॥
सन्ति षड् ब्राह्मणान्यत्र प्रथमं ब्राह्मणत्रयम् ॥
अपवादप्रधानं सद्ब्रह्मतत्त्वनिरूपकम् ॥ २ ॥
चतुर्थे त्वात्मसूत्रस्य साक्षात्तात्पर्यविस्तृतिः ॥
फलानुसारी सर्वात्म्यविस्तारः पञ्चमे स्मृतः ॥ ३ ॥
विद्यावंशस्य विस्तारो जपार्थं षष्ठ ईरितः ॥
जपाद् गुरूननुस्मृत्य विद्यां प्राप्नोति सुस्थिराम् ॥४॥
अपवादप्रधानं यद्ब्राह्मणत्रयमीरितम् ॥
तत्राद्येनात्मता तावत्प्राणादीनामपोद्यते ॥ ५ ॥
अतः प्राणात्मवाद्यत्र बालाकिः पूर्वपक्ष्यभूत् ॥
ब्रह्मात्मतत्त्वविद्राजा सिद्धान्ती प्रतिवक्ति तम् ॥६॥

---

॥ श्रीगणेशाय नमः ॥

साष्टाङ्गनत्यैव वरानभीष्टानष्टाङ्गसाध्यान्स्वपदं च दास्ये ॥
इतीव सन्दर्शितबोधमुद्रो दयासमुद्रोऽवतु रामभद्रः ॥ १ ॥

चतुर्थाध्यायप्रतिपाद्यमर्थं सङ्गृह्णाति *योऽध्यारोप इति ॥ १ ॥ ब्राह्मणानामपि सङ्ख्याकथनपूर्वकं क्रमेण तात्पर्यमाह *सन्तीत्यादिना ॥२॥३॥४॥५॥ आद्यब्राह्मणेन प्राणादेरात्मत्वं निरस्यते इत्यत्र लिङ्गमाह *अतः प्राणेति ॥ ६ ॥ आख्यायिका-

सुखावबुद्धये यद्वा श्रद्धाचारादिसिद्धये ॥
आख्यायिका, सुखाद्बोध उक्तिप्रत्युक्तितो भवेत्॥७॥
अपृष्टोऽपि ब्रह्म तेऽहं ब्रवाणीति यदुक्तवान् ॥
गार्ग्यस्तेनाजातशत्रोः श्रद्धालुत्वं प्रतीयते ॥ ८ ॥
श्रद्धालुरधिकारी यो जिज्ञासुर्विनयान्वितः ॥
अपृष्टेनापि वक्तव्या तस्मै विद्येति शास्त्रतः ॥ ९ ॥
विप्रोपसत्तिं यद्राजा निषिषेध ततोऽधमः ॥
उत्तमश्चैवमाचार इति विज्ञापितं भवेत् ॥ १० ॥
प्रश्नोत्तरे स्वयं राजा यदुवाच ततो गुरुः ॥
अबुद्धमपि सच्छिष्यं नोपेक्षेतेति गम्यते ॥ ११ ॥
श्रुतिः—दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचा-

---

रूपेण प्रवृत्तायाः श्रुतेस्तात्पर्यमाह *सुखेति । तस्याः सुखाववोधहेतुत्वं श्रद्धाहेतुत्वं च क्रमेणोपपादयति *सुखादित्यादिना ॥७॥८॥९॥ आचारविशेषप्रदर्शनार्थत्वं दर्शयति *विप्रेति । उप त्वा यानीति बालाकिकृतमुपगमनं निषिध्य राज्ञा केवलमुपदेशात्—उत्तमादधमेन प्रणिपातोपसदनद्वारा विद्या ग्राह्या, अधमादुत्तमेन तद्व्यतिरेकेण श्रद्धादिमात्रेण सा लभ्येति ज्ञापनार्थं चायमारम्भः॥१०॥तूष्णीम्भूतं गार्ग्यं प्रति राज्ञा एव प्रश्नप्रतिवचनोक्तेरर्थान्तरमपि प्रतीयत इत्याह *प्रश्नेति ॥ ११ ॥

श्रुतौ *दृप्तेति। दृप्तो गर्वितः । असम्यग्ब्रह्मवित्त्वात्। बलाकाया अपत्यं बालाकिः, दृप्तश्चासौ बालाकिश्चेति तथा । अनूचानो वाग्मी । गार्ग्यो गोत्रतः । आस बभूव । स कदाचिदजातशत्रुनामानं काशिराजमधिगम्य ब्रह्म तुभ्यं ब्रवाणीत्यु-

जातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्द्धा राजेति वा

---

वाच स एवमुक्तो राजा एतस्यां वाचि निमित्ते गवां सहस्रं ददे इत्युवाच । ब्रह्म ते ब्रवाणीति वाङ्मात्रं निमित्तीकृत्य गोसहस्रप्रदाने राज्ञोऽभिप्रायं श्रुतिरेवाह *जनक इति। जनको दाता, जनकः श्रोता वक्तेति च ब्रह्मशुश्रूषवो विवक्षवः प्रतिजिघृक्षवश्च जना धावन्ति तत्सर्वमयं मय्यपि सम्भावितवानिति प्रागुक्तवागेव सहस्रदाने निमित्तम् ॥ १ ॥ एवं राजानं शुश्रूषुं स गार्ग्य उवाच—य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति । अयमर्थः—आदित्ये चक्षुषि च एकोऽभिमानी स चक्षुर्द्वारा हृदि प्रविष्टोऽस्मिन्देहे कर्त्ता भोक्ता चेति व्यवस्थितः । एतमादित्यं चक्षुर्बुद्धिनिष्ठं च पुरुषमेकीकृत्याहं ब्रह्मेत्युपासे त्वमप्येवमुपास्वेत्येवमुक्तो राजा मा मेति हस्तेन निवारयन्प्रत्युवाच । एतस्मिन्ब्रह्मणि मा संवदिष्ठाः संवादं माकार्षीः । मयाऽप्येतज्ज्ञातमन्यदेव वाच्यमिति भावः । ब्रह्ममात्रं त्वं जानीषे न तद्विशेषणोपासनफलानीति च न मन्तव्यम् । एतदपि मया ज्ञायत एवेत्याह । अतीत्य सर्वाणि भूतानि तिष्ठतीत्यतिष्ठाः, सर्वेषां भूतानां मूर्द्धा शिरः, राजा दीप्तिगुणोपेतत्वात् एतैर्विशेषणैर्विशिष्टमादित्याख्यं ब्रह्माहमेत्येतं पुरुषमुपास इति । एवं त्रिभिर्गुणैर्विशिष्टं ब्रह्म जानामीत्युक्त्वा तदुपासकस्य फलमपि दर्शयति *स य एतमित्या-

अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्द्धा राजा भवति ॥ २ ॥

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनोहास्य प्रजा भवति ॥ ४ ॥

---

दिना। यथागुणोपासनमेव फलं, तं यथायथोपासते तदेव भवतीति श्रुतेः ॥२॥ संवाददोषेणादित्यब्रह्मणि प्रत्याख्याते ब्रह्मान्तरमाह गार्ग्यः । य एवासौ चन्द्रे मनसि बुद्धौ च एकः पुरुषः, शेषं पूर्ववत्। बृहद् भानुमण्डलाद् द्विगुणं चन्द्रमण्डलमिति प्रसिद्धेः। पाण्डुरं शुक्लं वासो यस्य सः चन्द्राभिमानी प्राणः, आपो वासः प्राणस्येति श्रुतेः। सोमशब्देन सोमलताऽपि गृह्यते, चन्द्रलता मनोबुद्धिनिष्ठं च पुरुषमेकीकृत्याहमुपासे, य एवमुपास्ते तस्याहरहः सोमो ऽभिषुतः प्रकृतौ, प्रसूतश्च विकृतौ। यथोक्तोपासकस्य प्रकृतिविकृत्यात्मकयागानुष्ठानसामर्थ्यं लीलालभ्यमित्यर्थः ॥३॥ विद्युति त्वाचि हृदये चैका देवता तस्यास्तेजस्वीति विशेषणं, तत्फलं तेजस्वी ह भवति, अस्य प्रजा च तेजस्विनी भवति ॥ ४ ॥ आकाशे हृद्याकाशे चैका देवता।

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

---

पूर्णमप्रवर्तीति विशेषणद्वयम् । अप्रवर्तित्वमक्रियत्वम् । पूर्णत्वविशेषणफलं *पूर्यत इत्यादि । अक्रियत्वविशेषणफलं *नेत्यादि । प्रजासन्तानविच्छित्तिर्नेत्यर्थः ॥ ५ ॥ वायौ प्राणे हृदि चैका । इन्द्रः परमेश्वरः वैकुण्ठो अप्रसह्यः न परैर्जितपूर्वा सेना मरुतां गणत्वप्रसिद्धेः सेनात्वम् । जिष्णुर्जयनशीलो, अपराजिष्णुः न परैर्जितस्वभावः, अन्यतस्त्यानां सपत्नानां जयनशीलो भवतीति विशेषणत्रयस्य क्रमेण फलत्रयमिति ध्येयम् ॥ ६ ॥ अग्नौ वाचि हृदि चैका । विषासहिः परेषां मर्षयिता ॥ ७ ॥ अप्सु रेतसि हृदये चैका । प्रतिरूपोऽनुरूपः, श्रुतिस्मृत्यप्रतिकूल इत्यर्थः । प्रतिरूपं श्रुतिस्मृतिशास-

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥

स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः सन्निगच्छति सर्वांस्तानतिरोचते ॥९॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वं हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात्प्राणो जहाति ॥ १० ॥

---

नानुरूपमेवैनमुपगच्छति न विपरीतम् । अस्माद् उपासितुस्तथाविध एव जायते॥८॥आदर्शे हार्दे सत्त्वशुद्धिस्वाभाव्ये चैका । रोचिष्णुर्दीप्तिस्वभावः ॥ ९ ॥ यन्तं गच्छन्तं य एवायं शब्दः पृष्ठतोऽनूदेति, अध्यात्मं च जीवनहेतुः प्राणस्तमेकीकृत्याह *एतमेवाहमित्यादिना। तस्य गुणः असुः प्राणो जीवनहेतुरिति। तस्य फलं सर्वमायुरस्मिल्लोके एतीति। तस्यैव व्याख्यानम्—एनं रोगादिभिः पीड्यमानमपि प्रारब्धकालात्प्राक् प्राणो न जहातीति॥१०॥दिक्षु कर्णयोः हृदि चैका देवताऽवियुक्तस्वभावावश्विनौ। गुणस्तु द्वितीयवत्त्वम् अनपगत्वमन्योन्यमवियुक्तत्वं, दि-

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान्ह भवति नास्माद्गणाश्छिद्यते ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुषः एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स तूष्णीमास गार्ग्यः ॥ १३ ॥

---

शमाश्विनोश्चैवंधर्मत्वात्। गणाविच्छेदः साधुभृत्ययुक्तत्वम्॥११॥ छायायां बाह्यतमसि अध्यात्मं चावरणात्मकाज्ञाने हृदि चैका। मृत्योरनागमने रोगाद्यभावः शब्दब्रह्मोपासकादस्य विशेषः ॥१२॥ व्यष्ट्युपास्तिमुक्त्वा समष्ट्युपास्तिमाह—प्रजापतौ बुद्धौ हृदि चैका देवता। आत्मन्वीति विशेषणम्। फलं तु आत्मन्वी आत्मवान्वश्यात्मा भवतीति यावत्। अस्य प्रजा च तादृशी भवति स्वयं परिज्ञातत्वेन। एवं क्रमेण प्रत्याख्यातेषु ब्रह्मसु गार्ग्यः क्षीणब्रह्मविज्ञानस्तूष्णीमवाक्शिरा आस ॥१३॥ तथाभूतं गार्ग्यमालक्ष्य राजोवाच *एतावन्नू३ इति। विचारार्थे-

स होवाचाजातशत्रुरेतावन्नू३इत्येतावद्धीति ॥

वार्त्ति० अध्यात्ममधिदैवं च ब्रह्म स्यात्प्राणदेवता ॥
समष्टिव्यष्टिरूपाऽसाविति गार्ग्यस्य निश्चयः ॥१२॥
रव्याद्या व्यष्टयः प्रोक्ताः समष्टिस्तु विराड् भवेत् ॥
न मुख्यब्रह्मतैतेषामिति राज्ञो विनिर्णयः ॥ १३ ॥
अज्ञाते जगदज्ञातं ज्ञाते ज्ञातं तु यत्र तत् ॥
तदेव ब्रह्म पूर्णत्वान्न रव्याद्या अकृत्स्नतः ॥ १४ ॥
अव्यावृत्ताननुगते स्वतःसिद्धात्मवस्तुनि ॥
मुख्यार्थो ब्रह्मशब्दोऽतो वेदितव्यं तदेव हि ॥ १५ ॥
प्रतीचि साक्षाद्विज्ञाते ज्ञेयं सर्वं समाप्यते ॥
निःशेषतस्तमोध्वस्तेः पुमर्थश्च समाप्यते ॥ १६ ॥
ब्रह्म विद्धि तदेव त्वं नेदं यदुपासते ॥
इति श्रुतिरुपास्यस्य मुख्यब्रह्मत्ववारिका ॥ १७ ॥

---

प्लुतिः। किमेतावद् ब्रह्म विज्ञातम् आहोस्विदधिकमप्यस्ति ? इति। गार्ग्य आह *एतावद्धीति। अजातशत्रुः 'एतावता विदितेन न ब्रह्म विदितं भवति'इत्याह ।

एतत्सर्वमभिप्रेत्य एवमुक्तवतोर्गार्ग्यराज्ञोराशयं स्फुटयति *अध्यात्ममित्यादिना ॥ १२ ॥ १३ ॥ गार्ग्योक्तब्रह्मणाममुख्यत्वं राज्ञा निश्चीयते चेत्, किं तर्हि तदभिप्रेतं ब्रह्म? तदाह *अज्ञात इति ॥ १४ ॥ पूर्णमेव ब्रह्मेत्यत्र निमित्तमाह *अव्यावृत्तेति। एवंविधब्रह्मणो मुख्यत्वे फलितमाह *अतो वेदितव्यमिति॥१५॥ब्रह्मणि ज्ञाते कथं जगद् ज्ञातं भवति, न ह्यन्यस्मिन् ज्ञातेऽन्यज्ञानमुपलभामहे इत्याशङ्क्य तद्वाक्यतात्पर्यमाह *प्रतीचीति। उक्तेऽर्थे हेतुमाह *निःशेषेति ॥१६॥

**तस्मादुपासको गार्ग्यो न मुख्यं ब्रह्मवेत्त्यतः ॥**
**अन्वयव्यतिरेकाभ्यां बोधयामास तं नृपः ॥ १८ ॥**

**श्रुतिः–नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ॥ १४ ॥**

**स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयाञ्चक्रे बृहन् पाण्डरवासः सोम राजन्निति स नोत्तस्थौ तं पाणिनाऽऽपेषं बोधयाञ्चकार स होत्तस्थौ ॥ १५ ॥**

---

गार्ग्योक्तब्रह्मणाममुख्यत्वे श्रुतिमपि संवादयति *ब्रह्मेति ॥१७॥ उक्तमर्थमुपसंहरति *तस्मादिति ।

श्रुतौ–नैतावता विदितं भवतीति वदता राज्ञा 'अधिकं ब्रह्म ज्ञातव्यमस्ति' इति दर्शितं भवति । तच्चानुपसन्नाय न वक्तव्यमित्याचारविधिज्ञो गार्ग्यः स्वयमेवाह*उप त्वा यानि,त्वामुपगच्छामीत्यर्थः॥१४॥प्रतिलोमं विपरीतं यद् ब्राह्मणः क्षत्रियमुपगच्छेच्छिष्यवृत्त्या'ब्रह्म मे वक्ष्यति'इत्येतद् आचारविधिशास्त्रविरुद्धम्।शास्त्रे क्वचिद्विप्रस्यापि राज्ञोपगमनविधानम्-आपदि योगक्षेमार्थमिति द्रष्टव्यम्।तस्मात्तिष्ठ त्वमाचार्य एव सन्,विज्ञापयिष्याम्येव त्वामहम्। ततः सलज्जं गार्ग्यमालक्ष्य तस्य विश्रम्भजननाय तं हस्ते गृहीत्वा उत्थितवन्तौ विप्रराजौ, क्वचिद्राज्ञः गृहप्रदेशे सुप्तं पुरुषमागतौ, तं च पुरुषं राजा बृहन्नित्यादिनामभिर्बोधितवान् । एवं बोधितोऽपि सुप्तो नोत्तस्थौ । तमप्रबुद्ध्यमानं पाणिना आपिष्य बोधितवान्। तेन स चोत्थितवान् । एतत्सर्वमभिप्रेत्याह *अन्वयेति । बो-

वार्त्ति०—स्याद्विज्ञानमयो भोक्ता न प्राण इति जागरे ॥
विवेको दुःशको यस्मादत्र द्वावपि सुस्थितौ ॥ १९ ॥
यो विज्ञानमयः सुप्तावसावुपरतिं गतः ॥
वर्तते पूर्ववत्प्राणो विवेकः सुशकस्तदा ॥ २० ॥
तस्मात्सुषुप्तं पुरुषमामन्त्र्य प्राणनामभिः ॥
अप्रबोधादभोक्तृत्वं प्राणस्यास्पष्टयन्नृपः ॥ २१ ॥
यदि भोक्ता भवेत्प्राणो जाग्रद्वच्छब्दमागतम् ॥
अश्रोष्यन्नाश्रृणोत्तस्मान्न स्याद्भोक्तोपलादिवत्॥२२॥
न विज्ञानमयोऽप्येतदश्रृणोदिति चेत्तथा ॥
अस्त्वश्रवणमेतस्य प्राणमात्रानहङ्कृतेः ॥ २३ ॥
न वुध्यते देवदत्त आहूतोऽङ्गुलिनामभिः ॥
तावन्मात्रानहम्मानादेवं प्राणस्य नामभिः ॥ २४ ॥

---

धनार्थं प्रयुक्तनामाश्रवणाद् आपेषणाच्चोत्थानाद्गार्ग्यस्य भोक्तृत्वेनाभिमतप्राणव्यतिरिक्तो विज्ञानमयो भोक्तेति बोधितवानित्यर्थः ॥ १८ ॥ उक्तप्रबोधनार्थं सुप्तपुरुषगमने निमित्तमाह *स्यादिति त्रिभिः । अत्र जाग्रदवस्थायाम् ॥ १९ ॥ २० ॥ अस्पष्टयत् स्पष्टीकृतवान् ॥ २१ ॥ *यदीति । विमतो न भोक्ता स्वनामश्रवणासमर्थत्वात् पाषाणवदित्यर्थः ॥ २२ ॥ अत्र जीवे व्यभिचारं शङ्कते *न विज्ञानेति । काश्येष्टात्मनः सर्वकार्यकरणाभिमानित्वादङ्गुलीस्थानीयप्राणनाम्नां स्वनामत्वमेवासिद्धमिति परिहरति *अस्त्वित्यादिना। यथा हस्तः पादोऽङ्गुलिरित्यादिनामोक्तेर्देवदत्तो नोत्तिष्ठति, सर्वदेहाभिमानित्वेन तन्मात्रानभिमानित्वात्, तद्वज्जीवोऽपीत्यर्थः ॥ २३ ॥ २४ ॥ सुप्तौ यथा जीवेन स्वनामान्यपि न गृह्यन्ते एवं प्राणस्यापि संहृत-

स्वनामान्यपि नो जीवः सुप्तो वेत्तीति चेत्तदा ॥
जीवो नामात्र चिन्मात्रः सोपाधिर्वेत्ति गम्यताम्॥२५॥
बोधाबोधौ चितेर्नस्तः कूटस्थज्ञप्तिमात्रतः ॥
उपाधिलोपात्सोपाधिर्न वेत्तीति तु युज्यते ॥ २६ ॥
श्रोत्रादीनामुपाधीनां सुप्तावुपरतत्वतः ॥
यथा जीवो न वेत्त्येवं प्राणोऽपीत्यसदुच्यते ॥ २७ ॥
नेन्द्रियाणां भवेत्स्वापो यदि प्राणप्रधानता ॥
नामात्या शेरते यस्माद्राज्ञि स्वामिनि जाग्रति॥२८॥
स्वापः प्राणस्य नाशङ्क्यो यतः स्वप्नसुषुप्तयोः ॥
कुर्वाणस्तुमुलं शब्दं प्राण आस्ते प्रबोधवत् ॥ २९ ॥
तस्माद्भोक्तृतैवास्य स्वनामाप्रतिबोधने ॥
हेतुर्वाच्यस्तथा प्राणदेवताया अभोक्तृता ॥ ३० ॥
देवताप्रतिषेधार्थं बोध्यते चन्द्रनामभिः ॥

---

करणत्वात्स्वनामाग्रहो, नाभोक्तृत्वादिति मत्वा शङ्कते *स्वनामानीति । विषमो दृष्टान्तः इति वक्तुं जीवशब्दार्थं पृच्छति *जीव इति ॥ २५ ॥ द्वितीये स्वनामाश्रवणमुपपद्यत इत्याह *उपाधीति ॥ २६ ॥ उपाधिलोपादित्युक्तं व्यनक्ति *श्रोत्रेति । संहृतकरणत्वादेव जीववत्प्राणस्यापि स्वनामाग्रहणमिति पराभिमतशङ्कां धुनीते *यथेति ॥ २७ ॥ प्राणस्य भोक्तृत्वे करणोपसंहारासम्भवं दृष्टान्तेन स्फोरयति *नेति ॥ २८ ॥ अस्तु तर्हि प्राणस्याप्युपरतत्वात्सुप्तौ स्वनामाग्रहणमिति चेत्, न । अनुभवविरोधादित्याह *स्वाप इति ॥२९॥ प्राणो यथाऽभोक्ता एवं प्राणाधिष्ठात्री चन्द्रदेवताऽपि नास्मिन्देहे भोक्त्रीत्याह *तथा प्राणेति॥३०॥देवताया अभोक्तृत्वासिद्ध्यर्थ-

तदबोधादभोक्तृत्वं देवतायाः सुनिश्चितम् ॥ ३१ ॥
प्राणस्याभोक्तृतां गार्ग्यो व्यबुध्येत ततो नृपः ॥
विज्ञानमयबोधाय चक्रे यत्नमुपायतः ॥ ३२ ॥
आपिष्यापिष्य बहुशः सुप्तं राजा व्यबोधयत् ॥
आपेषणोत्थसङ्क्षोभात्ततोऽसौ प्रत्यबुध्यत ॥ ३३ ॥
आपेषाल्लीनबुध्यादिसमुत्पत्तौ परात्मनः ॥
घटाकाशवदुत्पत्तिर्या प्रबोधोऽयमिष्यते ॥ ३४ ॥
अत आपेषणाद्योऽसावुत्थितः करणैः सह ॥
राजेव सचिवैः सार्द्धं स भोक्तेत्यवसीयताम् ॥३५ ॥
क्रोधहर्षभयोद्वेगज्ञानधर्मैर्विशेषयन् ॥
शरीरं यः समुत्तस्थौ स भोक्तेत्यवसीयताम् ॥३६॥
मृतकल्पमिमं देहं स्वाचिताऽऽवेशयन्निव ॥

---

मेव बृहन्नित्यादिचन्द्रनामभिः सम्बोधनं कृतमित्याह *देव-तेति । नच–तर्हि प्राणस्य प्राणनामभिरसम्बोधनादेवानुत्थानं नाभोक्तृत्वादिति शङ्क्यम् । प्राणस्यापः शरीरं ज्योती-रूपमसौ चन्द्रमा इत्यत्र चन्द्रप्राणयोरैक्योक्तेस्तन्नाम्न एव तन्नामत्वादिति भावः ॥ ३१ ॥ तं पाणिनाऽऽपेषमित्यादे-स्तात्पर्यमाह *प्राणस्येत्यादिना ॥ ३२ ॥ स होत्तस्थावित्य-स्यार्थमाह *आपेषणेति ॥ ३३ ॥ ननूत्थानं नामात्मनः सुप्तेरुद्बोधः, तस्य स्वरूपत्वेनानुत्पत्तेः किं पाणिपेषणेन ? इत्यत आह *आपेषादिति । स्वापेऽज्ञाते प्रतीचि लीनस्य बुद्ध्यादे-र्जाग्रद्धेतुकर्मादिना परस्मादुत्पत्तौ 'प्रबोधो जातः' इति केवलं व्यवह्रीयते, घटोत्पत्तौ तदाकाशोत्पत्तिवदित्यर्थः॥३४॥तस्मात्पु-रुषस्यैव भोक्तृत्वं सिद्धमित्याह *अत इति त्रिभिः ॥३५॥३६॥

ज्वलन्निव समुत्तस्थौ यः स भोक्तेति गम्यताम्॥३७॥
देह एवास्तु भोक्तेति न वक्तव्यं जडत्वतः॥
स्पर्शपेषणवैषम्यादप्यभोक्तृ भवेद्वपुः॥ ३८॥
ईषत्स्पर्शादबुद्धोऽपि पेषणेन विबुध्यते॥
एतच्च देहादन्यस्य युक्तं सम्बन्धभेदतः॥ ३९॥
देहादन्यस्य देहेऽस्मिन्सम्बन्धः कर्मभिः कृतः॥
अभिमानात्मकः सोऽपि कर्मभेदादनेकधा॥ ४०॥
तीव्राभिमानवेलायामीषत्स्पर्शेन बुध्यते॥
अन्यचित्तत्ववेलायां दृढस्पर्शमपेक्षते॥ ४१॥
स्वप्नान्पश्यन्प्रबोधाय पाणिपेषमपेक्षते॥
सुषुप्तः पेषणाभ्यासाद्बुध्यते ह्युचितं हि तत्॥ ४२॥
देहस्य भोक्तृतायां तु कस्य कुत्राभिमानिता॥
ततो बोधस्य वैषम्यं किंकृतं स्पर्शपेषयोः॥ ४३॥
करणानामभोक्तृत्वं प्रत्येकं स्मृत्यसम्भवात्॥
चक्षुर्दृष्टं नहि स्मर्तुमन्येषां शक्तिरिष्यते॥ ४४॥
सङ्घातस्य परार्थत्वादभोक्तृत्वं गृहादिवत्॥

---

॥ ३७ ॥ प्राणस्याभोक्तृत्वेऽपि पुरुषस्य भोक्तृत्वं न-सिद्ध्यति, देहादेरपि तत्सम्भवादिति शङ्कित्वा परिहरति *देह इति ॥३८॥ स्पर्शपेषणवैषम्यादित्युक्तं व्यनक्ति *ईषदि-ति ॥ ३९ ॥ सम्बन्धभेदत इत्युक्तं व्याचष्टे *देहादिति ॥४०॥ कर्मभेदात्तत्कृतसम्बन्धभेदोऽस्तीत्येतदनुभवेन प्रकटयति *तीव्रे-त्यादिना।*ईषत्स्पर्शेनेति। ईषद्वेदनाजनकमित्यर्थः।स्पर्शतारतम्ये नजायमानबोधस्य देहाभिमानतारतम्यप्रयुक्तत्वसिद्धौ तदतिरि-क्तस्यैव भोक्तृत्वमुचितमित्यर्थः॥४१॥४२॥४३॥४४॥ करणानां

स्याद्विज्ञानमयो भोक्ता प्रोक्तदोषविवर्जनात् ॥ ४५ ॥
सुखदुःखानुसन्धानं भोगश्चिति स उच्यते ॥
न जडेष्विति निर्णीतमन्वयव्यतिरेकतः ॥ ४६ ॥
नान्वयो व्यतिरेको वा यद्यप्यद्वैतवस्तुनि ॥
पुंव्युत्पत्तिरथाप्याभ्यां भवति व्यावहारिकी ॥४७॥
अध्यस्तयाऽपि व्युत्पत्त्या कृत्स्नभ्रान्तिर्निवर्त्तते ॥
स्वप्नताडनदाहादिभीत्या स्वप्ननिवर्तनात् ॥ ४८ ॥
अतोऽन्वयेन विज्ञानमयो भोक्ता ऽत्र वर्ण्यते ॥
चिदन्वयो हि भोग्येषु निखिलेष्वनुभूयते ॥ ४९ ॥

---

प्रत्येकं भोक्तृत्वमिति मतं निरस्य मिलितानां तन्निराकरोति *सङ्घातस्येति । करणानि स्वातिरिक्तभोक्तृभोगसाधनानि संहतत्वाद् गृहादिवदित्यर्थः ॥ ४५ ॥ भोगस्वरूपपर्यालोचनयाऽपि न जडस्य भोक्तृतेत्याह *सुखेति । दुःखादिधिय एव भोग्यत्वात्तस्य च चेतनधर्मत्वेन प्रतीतेश्चित एव भोक्तृत्वं युक्तमित्यर्थः । विज्ञानमयस्यैव भोक्तृत्वमुपसंहराति । *इति निर्णीतमिति ॥ ४६ ॥ अद्वैतवादे प्रत्यग्व्यतिरिक्तवस्तुन एवाभावात् कथमन्वयव्यतिरेकयोर्निर्णायकत्वमिति शङ्कते *नेति । कल्पितभेदमादायान्वयादिप्रवृत्तावपि नाद्वैतक्षतिरिति परिहरति *पुंव्युत्पत्तिरिति । आभ्याम्—अन्वयव्यतिरेकाभ्याम् । यद्यपि व्युत्पत्तिशब्दितज्ञानं वाक्यजन्यं तथाऽप्यनयोरपि प्रतिबन्धनिवर्तकत्वेन तत्रोपयोग इति भावः ॥ ४७ ॥ कथमज्ञानादिनिवर्तकत्वमिति शङ्कित्वा दृष्टान्तेन प्रत्याचष्टे *अध्यस्तयेति ॥ ४८ ॥ कीदृशान्वयव्यतिरेकौ ? तत्राह *चिदिति ॥ ४९ ॥ ननु सर्वानुस्यूतप्रत्यक्चैतन्यस्याविकारित्वात्कथं विज्ञानमयत्वं ? तत्राह

भोग्यानां व्यभिचारेऽपि भोक्ता त्वव्यभिचारवान् ॥
विज्ञानमयता तस्य विज्ञानप्रचुरत्वतः ॥ ५० ॥
विज्ञानमन्तःकरणं तस्मिन्नात्मोपलभ्यते ॥
राहुश्चन्द्रे यथा तद्वद्विज्ञानमयता ततः ॥ ५१ ॥
स्वाभासवदविद्योत्थबुद्ध्यादिव्याप्तिविभ्रमात् ॥
तदात्मत्वाभिमानी सन्नहमित्युपलभ्यते ॥ ५२ ॥
यद्वोपलब्धिमात्रोऽपि विज्ञानाध्यस्तकर्तृताम् ॥
प्राप्योपलब्धा स्यात् तेन विज्ञानमय उच्यते ॥ ५३ ॥
स्फटिको रक्ततां प्राप्य जपाकुसुमकल्पिताम् ॥
पद्मरागायते तद्वदुपलब्धृत्वमात्मनः ॥ ५४ ॥
यद्वोपलभ्यो देहादेर्विज्ञानेन विवेचितः ॥
स्याद्विज्ञानमयस्तेन पुरुषः परिपूरणात् ॥ ५५ ॥
अशेषान्कल्पितानेष विज्ञानादीननात्मनः ॥

---

*विज्ञानेति । तथाच मयटो न विकारार्थतेति भावः ॥ ५० ॥ विज्ञानप्रचुरत्वमुपपादयति *विज्ञानमिति ॥ ५१ ॥ नन्वेवमपि कथमपरिच्छिन्नस्याहमिति परिच्छिन्नत्वधीस्तत्राह *स्वाभासेति । प्रत्यगाभासवती या ऽविद्या तदुत्थबुद्ध्यादिसम्बन्धकृतपरिच्छेदविभ्रमादित्यर्थः । *तदात्मत्वेति । बुद्ध्यादितादात्म्यापन्न इत्यर्थः ॥ ५२ ॥ मयटः प्रायार्थत्वे हेत्वन्तरमाह *यद्वोपलब्धीति ॥ ५३ ॥ शुद्धस्याप्यात्मनोऽन्यसंसर्गादन्यथाप्रतीतिं दृष्टान्तेनोपपादयति *स्फटिक इति ॥ ५४ ॥ देहेन्द्रियादिभ्यो विज्ञानशब्दितबुद्ध्या पृथक्कृतः सन्नात्मा यस्मात्प्रकाशते तेन वा तस्य विज्ञानमयतेत्याह *यद्वेति । विज्ञानमयः पुरुष इत्यत्र पुरुषशब्दार्थमाह *पुरुष इति ॥ ५५ ॥ एतदेव व्याचष्टे

आत्मा पूरयति प्रत्यक् सर्पादीन् रशना यथा ॥५६॥
श्रुतिः—स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥
वा०—यो विज्ञानमयस्तस्य द्वैतधीः स्वप्नजाग्रतोः ॥
अस्ति, सुप्तौ तु सा नास्ति स्वभावोऽस्यात्र को भवेत्५७
तस्य स्वभावं निर्णेतुं सुप्तौ क्वाभूदयं पुनः ॥
कुत आगादिमं देहमित्येतदिह चिन्त्यते ॥ ५८ ॥
विहायैतच्छरीरं किं सुप्तौ देशान्तरं गतः ॥
विनष्टो वाऽथवा ऽत्रास्ते विशेषज्ञानवर्जितः ॥ ५९ ॥
देहप्राणाविह त्यक्त्वा गच्छेन्निःसाधनः कथम् ॥
नाशे बोधः पुनर्न स्यात्, न स्थितौ ज्ञानवर्जनम् ॥६०॥

---

*अशेषानिति ॥ ५६ ॥

इयमत्र श्रुत्यक्षरयोजना—यत्र पाणिपेषात्पूर्वकाले य एष विज्ञानमय एतत्स्वप्नं यथा भवति तथा सुप्तोऽभूत् तदैष पुरुषः क्व कस्मिन्नधिकरणेऽभूत्, कुतश्चापादानादेष आत्मा एतदागमनमागादिति राज्ञा पृष्टो गार्ग्यस्तदुभयं न ज्ञातवान् ॥१६॥

क्वैषेत्यादिप्रश्नवाक्यस्य प्रकृतत्वं दर्शयितुमात्मतत्त्वे संशयं तद्बीजं चाह *यो विज्ञानेति ॥ ५७ ॥ जाग्रदादौ कर्तृत्वादिप्रतीतेरात्मनः संसारित्वं स्वभावः उत सुप्तौ तदप्रतीतेरसंसारितेति विशेषानवधारणात्संशये प्रश्नपूर्वकं निर्णेतुं प्रश्नवाक्यं प्रवृत्तमित्याह *तस्येति ॥ ५८ ॥ तात्पर्यमुक्त्वा क्वैष इत्यत्र सूचितान् विकल्पानाह *विहायेति ॥ ५९ ॥ आद्यं प्रत्याह *देहेति । द्वितीयं निराह *नाश इति । तृतीयं नि-

ज्ञस्वभावोऽत्र तिष्ठेच्चेदभिमन्येत विग्रहम् ॥
औपाधिकोऽभिमानश्चेदुपाधेः क्व गतिस्तदा ॥ ६१ ॥
उच्यते कर्मभिर्जीवः सुखदुःखोपभुक्तये ॥
जाग्रत्स्वप्नाववाप्नोति क्षीणकर्मा सुषुप्सति ॥ ६२ ॥
अक्रियस्याप्यवस्थासु सञ्चारो बुद्ध्युपाधितः ॥
घटोपाधिवशाद्यद्वदाकाशस्य गमागमौ ॥ ६३ ॥
बुद्धेश्चाज्ञानकार्यायाः स्थानं हृदयमिष्यते ॥
तत्रेन्द्रियाणि सर्वाणि बुद्धितन्त्राणि सर्वदा ॥ ६४ ॥
गोलकेष्वेषु धीस्तानि नाडिभिः कर्मणो वशात् ॥
प्रसारयत्यधिष्ठाय मत्स्यजालकवद्बहिः ॥ ६५ ॥
बुद्धावक्षेषु चात्मायं चिद्रूपः प्रतिबिम्बति ॥
तादृग्बुद्धीन्द्रियोपाधिर्जागर्त्यात्मेति गम्यते ॥ ६६ ॥

---

रस्यति *नेति ॥ ६० ॥ सुप्तौ ज्ञानात्मजीवावस्थाने विशेषधीरपि स्यादित्युक्तं विशदयति *ज्ञस्वभाव इति । *क्व गतिरिति । आमोक्षमुपाधेरविनाशादिति भावः ॥ ६१ ॥ उक्तशङ्कापरिहारत्वेनोत्तरश्रुतिं व्याख्यास्यन् जीवस्यावस्थात्रयनिमित्तमाह *उच्यत इति ॥ ६२ ॥ ६३ ॥ एवमुपाधिवशाज्जीवावस्थात्रयसञ्चारमुपपाद्य तत्र जागरितस्य तावल्लक्षणमाह *बुद्धेरित्यादिना । सुप्तिकाले इन्द्रियैः साकं बुद्धिरज्ञाने लीना तिष्ठति, पुनश्च जाग्रद्भोगप्रदकर्मोद्बोधे सतीन्द्रियैः सह हृदये उद्भवति, सा च धीः स्वपरतन्त्राण्यक्षाणि तत्तद्गोलकेषु नाडीद्वारा प्रसारयति, तेषु प्रतिबिम्बितस्यात्मन इन्द्रियैरर्थोपलब्धिर्जागरितामित्यर्थः ॥६४॥६५॥६६॥ सुषुप्तिस्वरूपमाह *कर्मक्षय इति । स्वाश्रयानतु—स्वोपाधिलयानन्तरामित्यर्थः ॥६७॥

कर्मक्षये बुद्धिरक्षैः सहाज्ञाने विलीयते ॥
चैतन्यप्रतिबिम्बाश्च लीयन्ते स्वाश्रयानतु ॥ ६७ ॥
श्रुतिः—स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य
एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन वि-
ज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते ॥
वा०—तदेन्द्रियाणां विज्ञानं धीविज्ञानेन संयुतम् ॥
विज्ञानमय आदत्त इति श्रुत्योपवर्ण्यते ॥ ६८ ॥
धीविज्ञानोपसंहारे विज्ञानमयताक्षतौ ॥
निर्विकारात्मचैतन्यं केवलं परिशिष्यते ॥ ६९ ॥
एतदेव विवक्षित्वा प्रतिपादयति श्रुतिः ॥
एषोऽन्तर्हृदयाकाशस्तस्मिञ्छेत इतीदृशी ॥ ७० ॥
बुद्धिर्हृदयशब्देन हृन्निष्ठत्वाद्विवक्ष्यते ॥
आसमन्तात्काशतेऽयमित्याकाशोऽत्र चिद्वपुः ॥७१॥
बुद्धेरन्तः प्रतीचोऽन्यो नार्थः सम्भाव्यते यतः ॥
तस्मादाकाशशब्देन प्रत्यगात्मेह गृह्यते ॥ ७२ ॥
प्राणादीनां यतो जन्म वक्ष्यते प्रत्यगात्मनः ॥
तस्माच्चाकाशशब्देन ब्रह्मैवात्राभिधीयते ॥ ७३ ॥
अधिष्ठानत्वमन्तस्त्वमपरिच्छिन्नवस्तुनः ॥

---

एवमुपोद्घातत्वेनावस्थाद्वयस्वरूपमुक्त्वा शङ्कोत्तरत्वेनैषां प्राणा-
नामित्यादिश्रुतिं व्याख्याति *तदेति ॥ ६८ ॥ य एषोऽन्त-
रित्यादेस्तात्पर्यमाह *धीविज्ञानेत्यादिना॥६९॥७०॥तत्र हृदया-
काशशब्दयोरर्थमाह *बुद्धिरिति ॥ ७१ ॥ आकाशपदस्य मु-
ख्यार्थं विहाय चिन्मात्रपरत्वे हेतुमाह *बुद्धेरिति द्वाभ्याम्
॥ ७२ ॥ ७३ ॥ उक्तमेव पुनः सङ्क्षिप्याह *अधिष्ठानत्व-

अन्तर्बहिर्विकारोऽयं न मुख्य उपपद्यते ॥ ७४ ॥
पराक्प्रमेयभूमिभ्यो मनसि व्युत्थिते सति ॥
अनन्यबोधप्रात्यक्ष्याद्य एष इति भण्यते ॥ ७५ ॥
स्वतोऽवगमरूपेऽस्मिन् कूटस्थे निर्द्वयात्मनि ॥
कार्त्स्न्येनावस्थितिर्भोक्तुः शेत इत्यभिधीयते ॥७६॥
घटभङ्गे यथाऽऽकाशो महाकाशान्न भिद्यते ॥
विज्ञानलोपे विज्ञानमयस्यैवं परात्मता ॥ ७७ ॥
देहाद्यध्यक्षतां हित्वा सुप्तौ स्वात्मनि वर्त्तते ॥
इत्येतत्साध्यते श्रुत्या समाख्यायाश्च युक्तितः ॥७८॥
स्वप्नस्य स्वपितीत्येषा समाख्या सर्वसम्मता ॥
निरुक्तिमाहुश्छन्दोगाः स्वमपीत इतीदृशीम् ॥७९॥
अतः समाख्यया सुप्तौ स्वाभाविक्यात्मना स्थितिः ॥

---

मिति । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति सर्वान्तरत्वं जीवाधिष्ठानत्वं चोक्तम् । अस्मादात्मनः सर्वे प्राणाः सर्वे लोका इत्यादावन्तर्बहिःकार्यहेतुत्वं वक्ष्यति । एतत्त्रयमाकाशपदस्य मुख्यार्थपरिग्रहे न घटत इत्यर्थः ॥ ७४ ॥ विदुषां स्वप्रकाशत्वेन स्फुरणाद् य एष इति प्रत्यक्षवाचिपदद्वयप्रयोग इत्याह *परागिति ॥ ७५ ॥ शयनशब्दार्थमाह *स्वत इति ॥ ७६ ॥ ७७ ॥ जीवस्य परैक्यप्राप्तौ सुप्तावेव मुक्तिः स्यादित्याशङ्क्य देहद्वयाभिमानराहित्यमात्रमत्राभेदशब्देन विवक्षितमित्याह *देहादीति । उक्तार्थसाधनपरत्वेन तानि यदेत्यादिश्रुतिं व्याचष्टे *इत्येतदिति ॥ ७८ ॥ समाख्यामाह *स्वप्नस्येति ॥ ७९ ॥ तद्गृहीत एवेत्यादेस्तात्पर्यमाह *युक्ति-

युक्तिश्चोपाधिसंहारः संसारित्वनिवृत्तये ॥ ८० ॥
वागाद्युपाधिसम्बन्धात्संसारित्वमिवेक्ष्यते ॥
ते तूपसंहृताः सर्वे ततोऽसंसारिताऽऽत्मनः ॥ ८१ ॥
श्रुतिः—तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति, गृहीता वाग्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥
वा०—सुप्तौ काभूदिति प्रश्नो यः स एवं विचिन्तितः ॥
तेनासंसारितैतस्य स्वभाव इति निश्चितम् ॥ ८२ ॥
सुप्तः प्रबुद्ध इत्येव स्वप्नं पश्यति चेति यः ॥
विकल्प एष भूतानामविद्यारात्रिशायिनाम् ॥ ८३ ॥
चित्तसम्मोहमात्रेऽस्मिँल्लोकोऽयं परिखिद्यते ॥
दिङ्मोहाकुलविज्ञानो नष्टमार्ग इवाध्वगः ॥ ८४ ॥
इति प्रपञ्चमिथ्यात्वं विस्पष्टयितुमञ्जसा ॥
महाराजादयः श्रुत्या लोकाः स्वाप्ना उदाहृताः॥८५॥

---

श्चेति ॥ ८० ॥ ८१ ॥

अक्षरार्थस्तु—तानि वागादिविज्ञानानि यदा गृह्णाति अथ तदा—पुरुष इति षष्ठ्यर्थे प्रथमा, तस्य स्वपितीत्येतन्नाम प्रसिद्धं भवति, तद् तदा स्वापकाले गृहीत एव प्राणो भवति। प्राण इति घ्राणेन्द्रियं, वागादिप्रकरणात्। अन्वयव्यतिरेकाभ्यां वागाद्युपाधिकमात्मनः संसारित्वमिति युक्तितोऽप्यात्मनोऽसंसारित्वमिति भावः ॥ १७ ॥

प्रकृतमुपसंहरति *सुप्ताविति ॥ ८२ ॥ अवस्थात्रयस्यापि मृषात्वसाधनपरा स यत्रेत्यादिश्रुतिरित्याह *सुप्त इत्यादिना ॥ ८३ ॥ ८४ ॥ ८५ ॥ देहातिरिक्तात्मसाधनेनै-

पाणिपेषप्रबोधेन देहादीनामनात्मता ॥
यद्यप्युक्ता, तथाऽप्यात्मविशुद्धिस्तावता नहि ॥८६॥
सिद्धा देहादितादात्म्यमात्रस्यैव मृषात्मता ॥
नतु देहस्य मिथ्यात्वं, तेन सङ्गोऽस्य शङ्क्यते ॥८७॥
स्पष्टं देहात्मनोर्भेदमभ्युपेत्यापि तार्किकाः ॥
रागादिसङ्गमिच्छन्ति तन्निवृत्त्यै प्रयत्यते ॥ ८८ ॥
असङ्गत्वस्वभावोऽस्य सुप्तौ यद्यपि वर्णितः ॥
तथाऽपि स्वप्नमालम्ब्य सोऽसिद्ध इति शङ्क्यते ॥८९ ॥
सर्वेन्द्रियवियोगेऽपि सुखिदुःखित्वमात्मनः ॥
स्वप्ने दृष्टमतः सङ्ग आत्मनस्तात्त्विको भवेत् ॥९०॥
मैवं मृषात्वात्स्वप्नस्य मनोमात्रविजृम्भणात् ॥
बाह्येन्द्रियविलोपेऽपि न मनो लुप्यते तदा ॥ ९१ ॥
महाराजादयः स्वस्य स्वप्नानुभवगोचराः ॥
न वास्तवा इति ज्ञेयाः शयानेभ्यः पृथक्त्वतः ॥९२॥

---

व देहतादात्म्यस्य मिथ्यात्वसिद्ध्याऽऽत्मनो ऽसङ्गत्वसिद्धेः प्रपञ्चमृषात्वसाधनं वृथेति शङ्कित्वा परिहरति *पाणिपेषेत्यादिना ॥ ८६ ॥ ८७ ॥ ८८ ॥ देहातिरिक्तात्मवादिभिरङ्गीकृतकर्तृत्वादिसङ्गस्याप्यात्मनः सुप्तावसंसारित्ववर्णनेनैव निरस्तत्वात्किं प्रपञ्चमृषात्वसाधनेनेति शङ्कते *असङ्गत्वेति स्वप्नावस्थायामात्मनः संसारित्वोपलम्भात्तस्य च मृषात्वासाधने उक्तमप्यसंसारित्वं न सिद्ध्यतीत्याह *तथाऽपीत्यादिना ॥ ८९ ॥ ९० ॥ स्वप्नस्य सत्यत्वसम्भावनयाऽऽत्मनो ऽसंसारित्वाभावचोद्यं पूर्ववादिमुखेनोपपाद्य तत्र समाधिमाह *मैवमिति ॥ ९१ ॥ विमता राजत्वादयो न सत्याः अयोग्यदेशवृत्तित्वाद्रज्जुसर्पवदिति-

गृहे शयाना ये दृष्टास्तं तु स्वप्ने वनं गताः ॥
जाग्रद्दृष्टं मृषा स्वप्ने स्वप्नस्थं जागरे मृषा ॥ ९३ ॥
अन्योऽन्यव्यभिचारित्वात्स्वप्नजाग्रदवस्थयोः ॥
मिथ्यात्वमित्यसावर्थः स्वप्नश्रुत्या विवक्षितः ॥ ९४ ॥
स्वप्ने देहाद्बहिर्गत्वा तत्तद्वस्त्ववलोकनात् ॥
व्यभिचारो नेति चेत्, न, निस्तनोर्गत्यसम्भवात् ॥ ९५ ॥
अन्तः कुतः पर्वताद्या इति चेत्, अत एव हि ॥
आदायाशेषजगतो वासनाः स्वप्नमीक्षते ॥ ९६ ॥
वासनासु च वस्तुत्वधीरविद्याविजृम्भिता ॥
इत्यात्मनो विशुद्धत्वं स्वप्ने श्रुत्योपवर्णितम् ॥ ९७ ॥
श्रुतिः—स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्त-

---

प्रयोगमभिप्रेत्याह *महाराजादय इति ॥९२॥ शयानेभ्यः पृथक्त्वत इत्येतद्विवृणोति *गृह इति । गृहे शयानानां राजादीनां बहिर्निष्ठतया प्रतीतेरित्यर्थः । स्वप्नदृष्टानां जाग्रद्दृष्टादर्थान्तरत्वेन मिथ्यात्वे, जाग्रद्दृष्टानामपि स्वप्नदृष्टादन्यत्वेन मृषात्वं स्यादित्याशङ्क्य तदपि श्रुत्यभिप्रेतत्वादिष्टमेवेत्याह *जाग्रदित्यादिना ॥ ९३ ॥ ९४ ॥ देहाद्बहिरेव स्वप्नदृष्टयङ्गीकारादयोग्यदेशवृत्तित्वमसिद्धमिति शङ्कित्वा परिहरति *स्वप्न इत्यादिना ॥ ९५ ॥ ९६ ॥ ९७ ॥

अक्षरार्थस्तु—सः प्रकृत आत्मा यस्मिन्काले स्वप्नवृत्त्या वर्तते तदाऽस्य ते लोकाः कर्मफलानि । के ते । तत्र उतापि उच्चं देवत्वादि अवचं तिर्यक्त्वादि च निगच्छति । अस्य महाराजत्वादयो लोका मृषैव, इवशब्दप्रयोगात् । यथा महाराजो जनपदे भवान् राजोपकरणभूतान् भृत्यादीन् गृहीत्वा आत्मीयदेशे

दुतेव महाराजो भवत्युतेव महाब्राह्मण उत वोच्चावचं निगच्छति, स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्त्ततैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्त्तते ॥ १८ ॥

अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते॥१९॥

व्यतिरेकं विशुद्धिश्च जागरस्वप्नयोः श्रुतिः ॥
प्रदर्श्याप्यद्वयानन्दरूपं सुप्तौ ब्रवीत्यसौ ॥ ९८ ॥
यद्यपि द्वैतमिथ्यात्वात्सिध्यत्यद्वयताऽऽत्मनः ॥
भात्येवाथाऽपि तद्द्वैतं स्वप्नजाग्रदवस्थयोः ॥ ९९ ॥
द्वैतभावप्रतीत्याऽपि हीनं सुप्तावदर्शयत् ॥
पूर्वं यद्यप्यथाऽप्यत्र विस्पष्टीक्रियते पुनः ॥ १०० ॥

---

स्वेच्छया परिवर्तते । एवमेवैष जीवः एतद् ग्रहणं यथा भवति तथा इन्द्रियाणि गृहीत्वा जागरितस्थानेभ्य उपसंहृत्य स्वशरीर एव वर्तते न बहिरिति ॥ १८ ॥

वृत्तानुवादपूर्वकमुत्तरकण्डिकातात्पर्यमाह *व्यतिरेकमिति ॥ ९८ ॥ द्वैतमिथ्यात्वसाधनेनात्मनः सुप्तौ निष्प्रपञ्चत्वकथनेन च सिद्धस्यैवाद्वयस्य पुनः सम्भावितशङ्कानिराकरणेन स्पष्टीकरणान्न पौनरुक्त्यमित्याह *यद्यपीत्यादिना ॥ ९९ ॥ १०० ॥ *दृश्यमिति । द्रष्टृताया वास्तवत्वे तस्या वास्तवदृश्यसापेक्षत्वात्कथं दृश्यस्य मृषात्वमिति शङ्का अ-

दृश्यं मिथ्याऽस्तु तद्द्रष्टुर्द्रष्टृता वास्तवी ततः ॥
दृश्यं साऽपेक्षतेऽप्येषा शङ्काऽत्र विनिवार्यते॥१०१॥
न किञ्चन यदा वेद तदा सुप्त इतीरणात् ॥
आत्मनो ज्ञानकर्तृत्वं सुप्तौ नास्तीति गम्यते॥१०२॥
साभासबुद्धिर्ज्ञानस्य कर्त्री तत्सन्निधानतः ॥
स्फटिके पद्मरागत्वमिव स्याज्ज्ञातृताऽऽत्मनि ॥१०३
परप्रयुक्तं ज्ञातृत्वं परलोपे विलुप्यते ॥
अतो ऽसंसारिता सुप्तावात्मनः स्वानुभूतितः॥१०४॥
न यथा श्रोत्रविज्ञानं रूपेणैति समागमम् ॥
संसारेण तथैवात्मा कौटस्थ्यान्नेति सङ्गतिम् ॥१०५॥
निःसङ्गस्य ससङ्गेन कूटस्थस्य विनाशिना ॥
आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते॥१०६॥
सुप्तौ केन क्रमेणायमुपाधिः प्रविलीयते ॥
तत्क्रमस्यावबोधाय हृदयादि विविच्यते ॥ १०७ ॥
आनाभितस्तथा कण्ठाद्धृदयं मध्यतः स्थितम् ॥
सनालपद्मकोशाभं पश्चाच्छिद्रमधोमुखम् ॥ १०८ ॥

---

थ यदेत्यादिश्रुत्या निवार्यत इत्यर्थः ॥ १०१ ॥ यदा न कस्य- चन वेदेत्यस्यार्थं वदन्नुक्तशङ्कानिराकरणप्रकारमाह *नेति ॥१०२॥कथं तर्हि जाग्रदादावात्मनः कर्तृत्वादिप्रतीतिः ? तत्राह *साभासेत्यादिना ॥१०३॥१०४॥ आत्मनः कामाद्यसम्बन्धं दृष्टान्तेन स्पष्टयति *न यथेति ॥ १०५ ॥ १०६ ॥ हिता नाम नाड्य इत्यादेराकाङ्क्षापूर्वकं तात्पर्यमाह *सुप्ताविति ॥१०७॥ तत्र हृदयस्य स्थानमाह *आनाभित इति ॥ १०८ ॥ हितसंज्ञ- कानां द्वासप्ततिसहस्रसङ्ख्याकानां नाडीनां स्वरूपमाह

कदम्बकुसुमोद्भूतकेसरा इव सर्वतः ॥
प्रसृता हृदयान्नाड्यो बह्नन्नरसपूरिताः ॥ १०९ ॥
निर्गत्य हृदयाद् बुद्धिस्तासु स्वप्नं प्रपश्यति ॥
ताभिर्देहाद् बहिर्गत्वा जाग्रतीत्यभिधीयते ॥११०॥
पुनः प्रत्यवसृप्यैषा पुरीतद्वेष्टिते हृदि ॥
प्रविश्य लीयते देहं व्याप्य सामान्यवृत्तितः॥१११॥
बुद्धेरव्याकृतावस्था वृत्तिः सामान्यशब्दिता ॥
व्याप्तो देहस्तया सुप्तौ तैलेनेव तिलोऽखिलः ॥११२॥
व्याकृतोपाधिविलये द्वैतभानं निवर्त्तते ॥
स्फुटीभवत्यद्वयत्वं तदानीं प्रत्यगात्मनः ॥ ११३ ॥
सर्वसंसारदुःखानामत्यन्तोपरमात्तदा ॥
आनन्दस्य परा निष्ठा दृष्टान्तैः सोपमीयते ॥ ११४ ॥
इन्द्रियस्याप्ररूढत्वात्स्वेष्टप्राप्तेर्विवेकतः ॥
नीरागाणां बालराजब्राह्मणानां क्रमात्सुखम् ॥११५॥
दुःखं रागद्वेषजन्यं तदभावे सुखं स्वतः ॥
इति व्याप्तिगृहीत्यर्थं बहुदृष्टान्तवर्णनम् ॥ ११६ ॥

---

*कदम्बेति ॥ १०९ ॥ ताभिः प्रत्यवसृप्येत्यादेरर्थमाह *निर्गत्येत्यादिना *पुरीतद्वेष्टित इति । पुरीतच्छब्देन हृदयवेष्टनवाचकेन तद्वेष्टितं हृदयं लक्ष्यत इत्यर्थः ॥ ११० ॥ १११ ॥ सुप्तौ का वा बुद्धेः सामान्यवृत्तिस्तत्राह *बुद्धेरिति । बुद्धेरात्यन्तिकनाशाभावेऽपि सुप्तौ सूक्ष्मत्वान्न विशेषधीरिति न पूर्वोक्तशङ्कावकाश इति ध्येयम् ॥ ११२॥ ११३ ॥ एवं द्वैतप्रतीत्याभावात्सुप्तावात्मनोऽद्वयत्वमुपपाद्य स यथा कुमार इत्यादेरर्थमाह *सर्वेति ॥ ११४ ॥ दृष्टान्तभूतकुमारादीनां सुखित्वे हेतुमाह *इन्द्रियस्येति ॥ ११५ ॥ ११६ ॥

यावद्यावत्प्ररूढत्वं रागादेर्जायते हृदि ॥
तावत्तावत्प्ररूढत्वं दुःखस्याप्यभिजायते ॥ ११७ ॥
यावद्यावत्तनुत्वं स्याद्रागादेः प्रत्यगात्मनि ॥
तावत्तावत्तनुत्वं स्याद् दुःखस्यापि सुखात्मनि॥११८॥
अशेषदुःखहेतूनां विलोपात्सुप्त आत्मनि ॥
दुःखहीने परा निष्ठाऽऽनन्दस्येत्युपपद्यते ॥ ११९ ॥
आनन्दस्यात्मरूपत्वाद्विषयीक्रियते न सः ॥
स्वप्रकाशचिदात्मत्वात्स्वयमेव विभात्यसौ ॥१२०॥
अद्वयानन्दरूपत्वमित्थं सुप्तौ प्रदर्शितम् ॥
एतावता स्वभावोऽस्य निर्णीतः प्रत्यगात्मनः॥१२१॥

श्रुतिः—स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति । तस्योपनिषत्सत्यस्य सत्यमिति, प्राणा वै सत्यं तेषामेष सत्यम् ॥ २० ॥

इत्युपनिषदि चतुर्थाध्याये प्रथमं ब्राह्मणं समाप्तम् ।

---

अतिघ्नीमतिशयेन दुःखहन्त्रीमानन्दस्यावस्थां प्राप्य एतच्छयनं यथा भवति तथा शेत इति श्रुत्यक्षरार्थः ॥ १९ ॥

सुप्तावात्मन आनन्दरूपत्वमुपपत्त्याऽपि साधयति *यावदिति त्रिभिः ॥ ११७ ॥ ११८ ॥ ११९ ॥ आनन्दस्य स्वसत्तायां प्रकाशमानत्वनियमात्सुप्तौ सर्वप्रकाशोपरमान्न स्वरूपस्यानन्दतेत्याशङ्क्य आत्मसुखस्य नित्यप्रकाशाभिन्नत्वेन प्रकाशमानत्वान्मैवमित्याह *आनन्दस्येति ॥ १२० ॥ प्रकृतमुपसंहरति *अद्वयेति ॥ १२१ ॥ स यथोर्णनाभिरित्यादिश्रु-

वा०-क्वाभूदेष इति प्रश्नं निर्णीय कुत आगतः ॥
इति प्रश्नं विनिर्णेतुमूर्णनाभ्यादिका श्रुतिः ॥१२२॥
यत्राभूत्तत एवैष आगच्छेदिति यद्यपि ॥
ज्ञायतेऽर्थात्तथाऽप्यत्र तदुक्तिरुपयुज्यते ॥ १२३ ॥
अवध्यवधिमद्भेद आधाराधेययोर्भिदा ॥
यथा लोके तथा नात्रेत्यसावर्थो विवक्षितः ॥१२४॥
एतदर्थानुकूलौ द्वौ प्रश्नौ तेनोत्तरं पृथक् ॥
उक्तं, तस्योत्तरस्यैष तात्पर्यार्थ उदीर्यते ॥ १२५ ॥
नान्यत्राभूदयं सुप्तौ नान्यस्मादुत्थितः पुनः ॥
सुप्त्युत्थानभ्रमः पूर्णे बुद्ध्युपाधिविजृम्भितः॥१२६॥
अथवा दर्शितं सुप्तावसङ्गत्वं चिदात्मनः ॥
जगद्धेतुतयोत्थाने ब्रह्मता तस्य वर्ण्यते १२७ ॥
अवास्तवत्वाज्जगतो नाद्वयत्वं विहन्यते ॥

---

तेस्तात्पर्यं वृत्तानुवादपूर्वकं सङ्गृह्णाति *क्वाभूदिति ॥ १२२ ॥
१२३ ॥ अर्थसिद्धस्यापि पुनरुक्तेरुपयोगं दर्शयति *अवधीति-
॥ १२४ ॥ लोकसिद्धन्यायेनात्मन्यप्याधाराधेयभेदशङ्का भवती-
त्यत्र प्रश्नवाक्यमनुकूलयति *एतदर्थेति । लोके यस्य य
आधारः स तस्मादाधाराद्भिन्नः, यो यत आगच्छति स च त-
स्मादवधेरन्यो दृष्टः, एवमयमात्माऽपि स्वस्मादन्यस्मात्कुत आगात्
स्वाभ्यस्मिन्कुत्राभूदिति प्रश्नद्वयप्रवृत्तिरित्यर्थः । एवं प्रश्नता-
त्पर्यमुक्त्वा तदुत्तरत्वेन प्रवृत्तश्रुतितात्पर्यं प्रतिज्ञापूर्वकं विशदय-
ति *तेनोत्तरमित्यादिना ॥ १२५॥१२६॥ अवस्थात्रयविलक्ष-
णत्वेन प्रतिपादितशुद्धत्वंपदार्थस्य जगत्कारणत्वोपलक्षितब्रह्मा-
भेदबोधपरा वोक्तश्रुतिरित्याह *अथवेति । उत्थाने जागरे ॥१२७॥

दृश्यमज्ञानजत्वेन न वस्तु स्वप्नदृश्यवत् ॥ १२८ ॥
नासतो जन्मना योगः सतः सत्त्वान्न चेष्यते ॥
कूटस्थे विक्रिया नास्ति तस्मादज्ञानतो जनिः॥१२९॥
वास्तवीं जनिमाहुर्ये तैर्वाच्यं सृष्टिकारणम् ॥
प्रधानं परमाण्वादिः प्रवर्तकमपेक्षते ॥ १३० ॥
तत्प्रवर्तक ईशश्चेत्सोऽपि केन प्रवर्तितः ॥
लीनत्वात्कामकर्म्मादि न प्रवर्तयितुं क्षमम् ॥ १३१ ॥
शक्तिर्नियामिका चेत्सा केनान्येन नियम्यते ॥
अविचारितरम्याऽतः सृष्टिरात्मनि कल्पिता॥१३२॥

---

जीवस्याद्वितीयब्रह्मणाऽभेदसिद्ध्यर्थं साधितं प्रपञ्चमिथ्यात्वं स्मारयति *अवास्तवत्वादिति ।।१२८।। किञ्च द्वैतस्यासतः सतो वा जन्म? नाद्यः,इत्याह *नासत इति। न द्वितीय इत्याह *सत इति। जन्यस्वरूपालोचनया जन्मायोगमुक्त्वा जनकस्वरूपालोचनयाऽपि तदयोगमाह *कूटस्थ इति । भासमानजनेस्तर्हि का गतिस्तत्राह *तस्मादिति ॥ १२९ ॥ उक्तार्थदार्ढ्याय मतान्तरमनूद्य दूषयति *वास्तवीमिति ॥ १३० ॥ अस्तु परमाण्वादिरन्येन प्रवर्त्तितो जगत्सृष्टिहेतुरिति चेत्, किं प्रधानादिप्रवर्तक ईशस्तच्छक्तिरेव वा ? तत्राद्यमनुवदति *तदिति । किमीशोऽपि निरपेक्ष एव प्रवर्त्तकः कर्मादिसापेक्षो वा ? नाद्यः, सृष्टिसान्तत्यप्रसङ्गादिति मत्वाऽऽह *सोऽपीति। द्वितीयं प्रत्याह *लीनत्वादिति । प्रवर्त्तयितुमिति–प्रवर्तकस्येशस्य सहकारिभवितुम् ॥१३१ ॥ आद्यद्वितीयमनुवदति *शक्तिरिति । तस्याः जडत्वेन स्वतो न प्रवर्त्तकतेत्याह *सेति । अतः परिशेषान्मायामयी सृष्टिरित्याह *अविचारितेति ॥ १३२ ॥ सृष्टिरवास्तवी चेत्किमर्थं क-

तथाऽप्यैकात्म्यबोधाय श्रुत्या सृष्टिरुदीर्यते ॥
बुध्यारोहाय मन्दानां सृष्टौ दृष्टान्त उच्यते ॥१३३॥
अचेतनो यथा तन्तुरूर्णनाभेः सचेतनात् ॥
जातश्चिदात्मनस्तद्वत्प्राणलोकाद्यचेतनम् ॥ १३४ ॥
विस्फुलिङ्गा यथा वाऽग्नेर्जायन्ते ऽग्निस्वभावकाः ॥
तथा सुप्तात्मनो जीवा विज्ञानमयनामकाः ॥ १३५ ॥
प्राणाद्युत्पत्तिभिर्जीवाः उत्पन्ना इति विभ्रमः ॥
आकाशोत्पत्तिविभ्रान्तिर्यथा कुम्भादिजन्मभिः१३६॥
प्राणाद्युत्पत्तिरप्यत्र भ्रान्तैवेति मतं यदि ॥
तथाऽप्यस्ति विशेषोऽत्र तयोः प्राणादिजीवयोः॥१३७॥
स्वरूपतो जन्मतश्च प्राणादिर्भ्रान्तिकल्पितः ॥
जीवस्य कल्पितं जन्म स्वरूपं तु न कल्पितम् ॥१३८॥

---

ध्यते तत्राह *तथाऽपीति । सृष्टेरवास्तवत्वे स यथोर्णनाभिरित्यादिदृष्टान्तकथनं किमर्थं ? तत्राह *बुद्धीति ॥१३३॥ एवं स यथेत्यादेस्तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *अचेतन इति । यथा प्रसिद्धो लूताकीटः तन्तून् सृष्ट्वा तेनोद्गच्छेत्, न च तन्तुसर्गे गमिक्रियायां वा तस्य स्वभिन्नसाधनान्तरमस्ति । तथा साधनान्तरशून्यस्य चेतनस्यात्मनो ऽप्यचेतनप्रपञ्चोत्पादकत्वमविरुद्धमिति भावः ॥ १३४ ॥ केवलचेतनाच्चेतनोत्पत्तिः कथमिति शङ्कानिरासनपरां स यथाऽग्नेरित्यादिश्रुतिं व्याकरोति *विस्फुलिङ्गा इति । *सुप्तात्मन इति । अज्ञानोपहितब्रह्मण इत्यर्थः । माध्यन्दिनशाखायां सर्व एवात्मान इति पाठोऽस्ति, तदभिप्रायेण जीवोत्पत्तिरित्थं व्याख्यातेति ध्येयम् ॥ १३५ ॥ जीवस्यापि जनिमत्त्वेऽकृताभ्यागमादिप्रसङ्ग इत्याशङ्क्य तज्जनेर्भ्रममात्रकल्पितत्वान्मैवमित्याह *प्राणादीति॥१३६॥१३७॥१३८॥

उद्भूतिस्थितिनाशाः स्युर्जगतोऽस्य प्रतिक्षणम् ॥
अविद्यामात्रहेतुत्वान्नामीषां विद्यते क्रमः ॥ १३९ ॥
यस्मादविद्ययैवात्मा प्राणक्षेत्रज्ञरूपभाक् ॥
स्वतोऽतः स परं ब्रह्म तस्योपनिषदुच्यते ॥ १४० ॥
यद् गुह्यं ब्रह्मणो नाम बोधायोपासनाय वा ॥
तत्स्यादुपनिषच्छब्दवाच्यं तच्चात्र बुद्धये ॥ १४१ ॥
सत्यस्य सत्यमित्येतन्नाम ब्रह्मावबोधकम् ॥
प्राणा आपाततः सत्याः सत्यं ब्रह्मैव वस्तुतः ॥१४२॥
असत्यो देह उदित एकजन्मन्युपक्षयात् ॥
सत्याः प्राणा लिङ्गरूपा आमोक्षमनुपक्षयात् ॥१४३॥
मोक्षेऽप्यक्षीण आत्मा तु सत्यात्सत्य उदाहृतः ॥
सत्यस्य सत्यं प्रोवाच ब्रह्म बालाकये नृपः ॥ १४४ ॥
एतद्ब्राह्मणतात्पर्यविचारस्य प्रसङ्गतः ॥
कृत्स्नशास्त्रस्य तात्पर्यमिहेदानीं निरूप्यते ॥ १४५ ॥

---

जगज्जन्मादीनां नियतक्रमवत्त्वात्कथमवस्तुत्वमित्याशङ्क्य दृष्टनष्टस्वभावानां तेषां क्रम एवासिद्ध इत्याह *उद्भूतीति ॥१३९ ॥ आत्मनोऽद्वितीयत्वमुक्तमुपसंहरति *यस्मादिति । तस्योपनिषदित्यादेरर्थमाह *तस्येति । श्रुत्यपेक्षितं पूरयति *उच्यत इति ॥ १४० ॥ तत्रोपनिषत्पदार्थमाह *तदिति । प्रकृते बोधार्थमेव ब्रह्मणो गुह्यनामकथनमित्याह *अत्र बुद्धये इति । ॥ १४१ ॥ किन्तद्रहस्यं नाम ? तदाह *सत्यस्येति ।

उक्तमर्थं स्वयमेव श्रुतिर्व्याचष्टे *प्राणा वा इति ।

प्राणानां कल्पितत्वोक्तेः कथं सत्यत्वमित्याशङ्क्य श्रुतितात्पर्यं स्पष्टयति *प्राणा इत्यादिना ॥ १४२ ॥ ॥ १४३ ॥ १४४ ॥ १४५ ॥ कृत्स्नशास्त्रतात्पर्यनिर्णयार्थं

संसार्येव किमात्मा स्यादुतासंसार्यपीश्वरः ॥
स चेशो भिद्यते जीवादथवा नहि भिद्यते ॥ १४६ ॥
नानारसमभेदेऽपि ब्रह्मैकरसमेव वा ॥
सति चैकरसेऽन्योक्तविरोधो ऽत्रास्ति वा नवा॥१४७॥
संसार्येवास्ति नेशोऽन्यो यस्मादत्र श्रुतिः स्वयम् ॥
सुप्तात्संसारिणो जीवात्प्राणाद्युत्पत्तिमब्रवीत् ॥१४८॥
मैत्रेयीब्राह्मणेऽप्येवं भार्यादिप्रीतिसूचितम् ॥
संसारिणमुपक्रम्य द्रष्टव्यः स इतीर्यते ॥ १४९ ॥
नचासौ मुक्त्यवस्थायामसंसारी भविष्यति ॥
स्वभावस्यान्यथाभावो यस्मान्न क्वापि दृश्यते॥१५०॥
साङ्ख्यादयस्तथेशस्य ह्यभावं बहुयुक्तिभिः ॥

---

विचारप्रयोजकसंशयबीजभूता वादिविप्रतिपत्तीर्दर्शयति *संसारीत्यादिना ॥ १४६॥ १४७॥ प्रथमं पूर्वपक्षमाह *संसार्येवास्तीति । अस्मिन्ब्राह्मणे एवमेवास्मादित्यादावागन्तुकज्ञानवतः स्वापावस्थात्प्राणादिसकलजगदुत्पत्तिः श्रूयते अतो नास्ति जीवाद्ब्रह्मान्यदित्यर्थः ॥ १४८ ॥ तत्रैव ब्राह्मणान्तरं संवादयति *मैत्रेयीति । संसारविलक्षणस्य वेद्यस्य सत्त्वे भार्यादिभोगसाधनोपलक्षितस्य भोक्तुर्द्रष्टव्यत्वोपदेशो न स्यादिति भावः ॥ १४९ ॥ संसार्येव जीवो मुक्त्यवस्थायां परो भवत्यतो ब्रह्मभावी जीवदर्शनमपि ब्रह्मदर्शनमेवेति न द्रष्टव्यत्वाद्युपदेशविरोध इति शङ्कित्वा परिहरति *न चेति । *स्वभावस्येति । अन्यथा वह्निरपि कदाचिच्छीतः स्यादिति भावः ॥ १५० ॥ तत्र वादिसम्मतिमप्याह *साङ्ख्यादय इति । ईश्वरस्य देहित्वेऽस्मदादितुल्यत्वाद्, देहाभावे मुक्तवज्ज-

आपादयन्ति यत्नेन तेभ्योऽन्यः कोऽधिको धिया॥१५१॥
एवं प्राप्ते वदामोऽत्र बहुश्रुत्युपजीवनात् ॥
असंसारी परोऽस्तीशो यस्य सर्वमिदं वशे ॥ १५२ ॥
यः सर्वज्ञः सर्वविच्च योऽशनायादिवर्जितः ॥
यः पृथिव्यामिति तथा नेति नेतीति चागमः ॥१५३॥
ब्रह्म ब्रवाणीत्युक्तत्वादत्रापि ब्रह्मणः श्रुतिः ॥
प्राणाद्युत्पत्तिमाचष्टे नतु संसारिजीवतः ॥ १५४ ॥
सता सोम्येत्यादिशास्त्रात्सुप्तौ ब्रह्मावशेषतः ॥
जगत्स्रष्टिर्युज्यतेऽसौ सृष्टिप्राप्त्यात्पुराऽऽत्मनः॥१५५॥
द्रष्टव्यश्च परात्मैव सर्वमात्मेति वर्णनात् ॥

---

गत्कर्तृत्वायोगाज्जीवानामेवादृष्टद्वारा तत्कर्तृत्वसम्भवेन तस्याकिञ्चित्करत्वादित्यादियुक्तिं सूचयति *बहिति ॥१५१॥ आद्यं पक्षमाह *एवमिति ॥ १५२ ॥ ईश्वरविषयश्रुतिमाह *य इति ॥ १५३ ॥ यदुक्तम्—एवमेवास्मादात्मनः इति जीवादेव जगदुत्पत्तिः श्रूयते इति तद्दूषयति *ब्रह्मेति । ब्रह्म ते ब्रवाणीत्युपक्रमे श्रूतस्य य एषोऽतर्हृदय आकाश इति च प्रकृतस्याकाशशब्दवाच्यस्य परस्य एतस्मादिति सर्वनाम्ना परामर्शः, न जीवस्य प्रकरणविरोधादिति भावः ॥ १५४ ॥ किञ्चैतस्मादात्मन इत्यन्यत्रैतच्छब्देन सन्निहितसौषुप्तात्मपरामर्शोऽपि तदा देहद्वयाभिमानशून्यस्य स्वरूपमात्रावशिष्टत्वादज्ञातब्रह्माभेदविवक्षयाऽपि जगद्धतुत्वोक्तिर्युज्यत इति न तावता सर्वश्रुतिसिद्धेश्वरापलाप इत्याह *सतेति । *सृष्टिप्राप्त्यात्पुरेति । अन्तःकरणाद्युपाधिसृष्ट्या विश्वतैजसत्वप्राप्तेः पूर्वमित्यर्थः ॥१५५॥ यदुक्तं वाक्यशेषे भोक्तारमुपक्रम्य तस्यैव द्रष्टव्यत्वोप-

अभेदाभिप्रायतो ऽत्र भवेत्संसार्युपक्रमः ॥ १५६ ॥
जगत्सृष्ट्यादिसामर्थ्यं नेशादन्यस्य तेन ते ॥
साङ्ख्यादयो बुद्धिहीना बुद्धिमन्तश्च तार्किकाः॥१५७॥
जीवेशभेदमाहुस्ते तस्माज्जीवो महेश्वरम् ॥
आराधयेदहं ब्रह्मेत्येवं मत्वा पतत्यसौ ॥ १५८ ॥
नैतदेवं ब्रह्मणोऽत्र मन्त्रब्राह्मणमानतः ॥
प्रवेशः श्रूयते तस्मान्नास्ति जीवेशयोर्भिदा ॥ १५९ ॥
तत्सृष्ट्वा ऽनुप्राविशत्तत्पुरः पुरुष आविशत् ॥
इत्यादीन्यत्र वाक्यानि सन्ति ब्राह्मणमन्त्रयोः॥१६०॥
जीवो ब्रह्मविकारोऽतो ब्रह्म नानारसं ततः ॥

---

देशान्नातिरिक्तेश्वरसिद्धिरिति, तदप्यन्यथयति *द्रष्टव्य इति
। १५६ ॥ युक्तितोऽपि जीवस्य न जगद्धेतुत्वमित्याह *ज-
गदिति । द्वितीयपूर्वपक्षमुत्थापयति *बुद्धिमन्त इति ॥ १५७ ॥
तटस्थेश्वरसाधनफलमाह *तस्मादिति । निकृष्टो जीवः उत्कृ-
ष्टमीशं स्वामीदासभावेन पूजयेन्न तु 'अहं ब्रह्म' इति भावयेदित्य-
र्थः । विपक्षे दोषमाह *अहं ब्रह्मेति । यथाऽमात्यः स्वात्मानं
राजानं भावयन्प्रत्यवैति तथेशमात्मानं पश्यन्जीवः प्रत्यवे-
यादिति भावः ॥ १५८ ॥ तटस्थेश्वरवादिमतमपि निराकरो-
ति *नैतदिति ॥ १५९ ॥ परस्यैव प्रवेशवादिमन्त्रब्राह्मणवा-
दानुदाहरति *तदिति ॥ १६० ॥ सत्यं पर एव स्वसृष्टेषु
प्रविष्टः, किन्तु जीवरूपेणाविकारापन्नः सन्, न तु साक्षादिति
तृतीयपूर्वपक्षमाह *जीव इति । तस्य ब्रह्मविकारत्वे फलितमाह
*अत इति । अयं भावः—ब्रह्मणः साक्षात्प्रवेशे प्रविष्टः संसा-
री न वा ? आद्ये तदभिन्नब्रह्मणोऽपि संसारिता स्यात् । द्विती-

बन्धमोक्षव्यवस्थेति केचित्, तत्तु न युज्यते ॥१६१॥
घटकेशदधीनीव विकारो भवतीति यः ॥
युतसिद्धः पृथिव्यंशो मृत्पिण्डो घटतां व्रजेत्॥१६२॥
केशस्त्वयुतसिद्धांशः पलितत्वं समश्नुते ॥
क्षीरं सर्वं दधि भवेद्भवेद् ब्रह्म न तु त्रिधा ॥१६३॥
कूटस्थत्वान्निरंशत्वाद् ब्रह्मणो नास्ति विक्रिया ॥
दिव्यो ह्यमूर्त्त इत्यादिश्रुतिवाक्यसहस्रतः ॥ १६४ ॥
विस्फुलिङ्गश्रुतेर्जीवो ब्रह्मांशः संसरेद्यदि ॥
तर्ह्यंशस्फुटनाद् ब्रह्म संयुज्येत व्रणेन तत् ॥ १६५ ॥
अकायमव्रणं चेति श्रुतिर्व्रणनिषेधिनी ॥

---

ये उपदेशानर्थक्यं, तथा च समुद्रतरङ्गन्यायेन जीवस्य ब्रह्मणो भिन्नाभिन्नत्वे तत्र भेदांशेन संसारित्वमभेदांशेनैक्यश्रुत्युपपत्तिरिति ब्रह्मणो नानारसत्वे न कोऽपि दोष इति ॥ १६१ ॥ जीवस्य ब्रह्मविकारित्वायोगं दर्शयितुं विकल्पयति *घटेत्यादिना । यथा नानाऽवयवसमुदायभूतायाः पृथिव्याः पृथक्कृतस्तदेकदेशो मृत्पिण्डो घटाकारेण परिणमते, एवं परमात्मचैतन्यैकदेशं ततः पृथग्भूतं सज्जीवाकारेण परिणमते उत शरीरस्थस्यैव केशादेः श्वैत्याद्यापत्तिवद्ब्रह्मैकदेशस्य जीवतापत्तिः, अथवा क्षीरवत्पूर्वरूपपरित्यागेन ब्रह्म जीवतामापद्यत इति विकल्पार्थः ॥ १६२ ॥ पक्षत्रयमप्यनुपपन्नमिति दूषयति *भवेदिति । एतेन समुद्रतरङ्गादिन्यायोऽपि निरस्तो वेदितव्यः ॥ १६३ ॥ निरंशत्वहेतोरसिद्धिमाशङ्क्य परिहरति *कूटस्थ इति ॥ १६४ ॥ ब्रह्मणः सांशत्वेऽपि श्रुतिरस्तीति शङ्कते *विस्फुलिङ्गेति ॥ १६५ ॥ अस्तु

स्वप्नसंसारवत्तस्माज्जीवसंसार इष्यताम् ॥ १६६ ॥
विस्फुलिङ्गाद्युपन्यासः क्षेत्रज्ञपरमात्मनोः ॥
ऐकात्म्यप्रतिपत्त्यर्थो न जीवं भेत्तुमर्हति ॥ १६७ ॥
मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा ॥
उपायः सोऽवतारायेत्याहुरागमवेदिनः ॥ १६८ ॥
विस्फुलिङ्गो यथोत्पत्तेः पूर्वमग्न्यात्मकस्तथा ॥
क्षेत्रज्ञः सृष्टितः पूर्वं परमात्मैव नापरः ॥ १६९ ॥
भ्रान्त्या क्षेत्रज्ञता भाति बोधादेषा निवर्तते ॥
इत्यत्र राजपुत्रस्य व्याधता स्यान्निदर्शनम् ॥ १७० ॥
राजपुत्रो रोगवशादुन्मत्तः सन्वनं गतः ॥
चिरं व्याधगृहे स्थित्वा व्याधोऽस्मीत्यभिमन्यते ॥१७१॥
उन्मादशान्तावप्येष न तां सस्मार राजताम् ॥
अभिज्ञः कश्चिदागत्य स्मारयामास राजताम् ॥१७२॥
ततो राज्येऽभिषिक्तः सन् व्याधतां नैव मन्यते ॥
ब्रह्मण्येवं योजनीयौ बन्धमोक्षौ प्रकल्पितौ ॥ १७३ ॥

---

ब्रह्मणो व्रणयोगोऽपि तत्राह *अकायमिति । कथं तर्हि ब्रह्मण एकरसत्वे तदभिन्नजीवे संसारप्रतीतिस्तत्राह *स्वप्नेति । १६६ ॥ का तर्हि विस्फुलिङ्गदृष्टान्तश्रुतेर्गतिरित्याशङ्क्याका-यमव्रणमित्यादिबहुश्रुतिविरोधादन्यपरा सेत्याह *विस्फुलिङ्गे-ति॥१६७॥उक्तेऽर्थे गौडपादाचार्यसम्मतिमाह *मृदिति॥१६८॥ उक्तश्रुतेस्तात्पर्यान्तरमाह *विस्फुलिङ्गो यथेति॥१६९॥ ननु जीवसंसारो भ्रमकल्पित इत्यनुपपन्नं तत्र श्रुत्यनुग्राहकदृष्टान्ताभावा-देति, नेत्याह *भ्रान्त्येत्यादिना ॥१७०॥१७१॥१७२॥ दृष्टा-न्तोक्तमर्थं दार्ष्टान्तिके योजयति *ब्रह्मणीत्यादिना॥१७३॥ देहं

ब्रह्मैवाविद्यया देहं प्राप्य रागादिदोषतः ॥
सदसत्कर्मजन्मादिबन्धमात्मन्यमन्यत ॥ १७४ ॥
नित्यकर्मविपाकेन रागाद्यपगमे सति ॥
गुरुशास्त्रोपदेशेन ब्रह्मत्वं स्वस्य बुध्यते ॥ १७५ ॥
जीवन्मुक्तिं ततः प्राप्य स्वस्य बन्धं न मन्यते ॥
इत्थं बन्धस्य मिथ्यात्वाद् ब्रह्मैकरसमेव हि ॥१७६॥
अपूर्वानपराद्युक्तेः प्रज्ञानघनशब्दतः ॥
भेददृष्ट्यपवादाच्च ब्रह्मैकरसमिष्यताम् ॥ १७७ ॥
केचिदेकरसे तत्त्वे विरोधं मानमेययोः ॥
बहुधा चोदयन्त्यत्र पण्डितम्मन्यतां गताः ॥ १७८ ॥
सर्वाद्वैतं बोधयेच्चेदधीतोपनिषत्तदा ॥
स्वप्रामाण्यं कर्मकाण्डप्रामाण्यमपि हन्त्यसौ ॥१७९॥
गुरुशास्त्राद्यभावेन स्वप्रामाण्यमसम्भावि ॥
निषेधविध्यभावेन कर्मकाण्डेऽप्यमानता ॥ १८० ॥
मेयं चाद्वैतवस्त्वत्र सर्वमानैर्विरुध्यते ॥
भिन्ना रूपादिविषया मीन्यते चक्षुरादिभिः ॥१८१॥

---

प्राप्येति–अविद्यादौ प्रतिबिम्बभावं प्राप्येत्यर्थः ॥१७४॥१७५॥ ब्रह्मणो एकरसत्वमुपसंहरति *इत्थमिति ॥ १७६ ॥ एवं न्यायासिद्धेऽर्थे श्रुतिमप्याह *अपूर्वेति ॥ १७७ ॥ असकृत्परिहृतमपि चतुर्थं पूर्वपक्षमपि प्रकारान्तरेण परिहर्त्तुमुत्थापयति *केचिदित्यादिना ॥ १७८ ॥ १७९ ॥ उपनिषदामद्वैतवस्तुबोधयतां काण्डद्वयप्रामाण्यविघातकत्वमेवाह *गुर्विति ॥ १८० ॥ किंचाध्यक्षादिविरोधान्नाद्वैतं शास्त्रमेयमित्याह *मेयमिति । तत्र नानापदार्थबोधित्वं प्रत्यक्षादीनां क्रमेणाह

नानाऽऽत्मानोऽनुमीयन्ते सुखदुःखव्यवस्थया ॥
आगमेनापि गम्यास्ते ग्रामकामादिभेदतः ॥ १८२ ॥
प्रत्यक्षेणानुमानेन शास्त्रेणापि विरुद्धताम् ॥
एवमुद्भावयन्त्येते ब्रह्मैकत्वप्रदूषकाः ॥ १८३ ॥
नैष दोषो ऽप्रमाणत्वं कदोपनिषदो वद ॥
बोधात्प्रागथवा पश्चान्न प्राक्तद्धेत्वसम्भवात् ॥ १८४ ॥
गुरुशास्त्रादयः सन्ति बोधात्पूर्वमबाधिताः ॥
अबोधसंशयभ्रान्तिशङ्का नास्त्यप्रमा कुतः ॥१८५॥
बोधादूर्ध्वं च नैष्फल्यादप्रमात्वं किं भवेच्छ्रुतेः ॥
मानान्तरविरोधाद्वा मेयस्यासम्भवादुत ॥ १८६ ॥
संसारानर्थहानाख्ये वेदान्तज्ञानजे फले ॥
प्रत्यक्षेणानुभूते ऽत्र नैष्फल्यं कथमुच्यते ॥ १८७ ॥
किमेकविषयत्वेन किंवा विषयभेदतः ॥

---

*भिन्ना इत्यादिना ॥ १८१ ॥ १८२ ॥ पूर्वपक्षमुपसंहरति *प्रत्यक्षेणेति ॥ १८३ ॥ तत्रोपनिषत्प्रामाण्यं तावत्परिहरति *नैष इति । आद्यं प्रत्याह *नेति ॥ १८४ ॥ अप्रामाण्यहेत्वभावमुपपादयति *गुर्विति । उपनिषदां यावद्व्यवहारमबाधितत्वाङ्गीकारादबोधकत्वादिशङ्कैव नास्ति कुतोऽप्रामाण्यमित्यर्थः ॥ १८५ ॥ द्वितीयपक्षमनुवदति *बोधादिति । तदानीं श्रुतेरप्रमात्वे निमित्तं पृच्छति *नैष्फल्यादिति । *मानान्तरेति । कर्मकाण्डविरोधादित्यर्थः ॥ १८६ ॥ आद्यं प्रत्याह *संसारेति ॥ १८७ ॥ द्वितीयं दूषयितुं विकल्पयति *किमेकेति । कृत्स्नवेदस्यैकार्थ्येनैकवाक्यत्वे विरोधशङ्कैव नास्ती-

विरोधः शङ्क्यते, तत्र नैकार्थ्येऽस्ति विरुद्धता ॥१८८॥
विभिन्नविषयत्वे तु नितरामविरुद्धता ॥
नैवासम्भवशङ्काऽस्ति सर्वार्थेष्ववभासनात् ॥१८९॥
प्रमाणमप्रमाणं च प्रमाभासस्तथैव च ॥
कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ॥ १९० ॥
इष्टः प्रबुध्य ऐकात्म्ये गुरुशास्त्राद्यसम्भवः ॥
मानस्य चरितार्थत्वात् स्वप्रामाण्यं न हन्त्यतः॥१९१॥
कर्मकाण्डस्य मात्वं च हन्यादुपनिषत्कथम् ॥
काण्डयोरेकवाक्यत्वमथवा भिन्नवाक्यता ॥ १९२ ॥
उपायोपेयबोधित्वात्कृत्स्नवेदैकवाक्यता ॥
यदि तर्ह्यविरुद्धत्वात्कुतः प्रामाण्यघातिता ॥ १९३॥
अथात्र भिन्नवाक्यत्वं सिद्धसाध्यार्थभेदतः ॥
तदाऽपि न विरोधोऽस्ति विभिन्नविषयत्वतः॥१९४॥
निषेधति विधत्ते वा नासावुपनिषद् क्रियाम् ॥

---

त्याह *तत्र नैकार्थ्य इति ॥ १८८ ॥ काण्डद्वयं भिन्नविषयमिति पक्षं दूषयति *विभिन्नेति । तृतीयमपवदति *नेति ॥ १८९ ॥ आत्मनः सर्वार्थेषु मानमेवासम्भवीत्याशङ्क्य तार्तीयं परिहारं स्मारयति *प्रमाणमिति ॥ १९० ॥ एवं हेत्वभावाद्बोधानन्तरमप्युपनिषदां नाप्रामाण्यमित्युक्त्वा गुर्वाद्यसम्भवात्तासां मानविघातकत्वमिति यदुक्तं तत्र गुर्वाद्यभावमङ्गीकृत्य मानविघातकत्वं निरस्यति *इष्ट इति ॥ १९१ ॥ कर्मकाण्डप्रामाण्यविघातकत्वमप्यत एव प्रत्युक्तमित्युक्तमेव प्रपञ्चयति *काण्डयोरित्यादिना॥१९२॥१९३॥१९४॥भिन्नविषय-

प्रत्यक्त्त्वैकसम्बोधे तद्वाक्योपक्षयो यतः ॥ १९५ ॥
द्वैतेऽस्मिन्बाधिते बोधात्कर्मकाण्डस्य सर्वथा ॥
अपहीयेत विषय इति शङ्का न युज्यते ॥ १९६ ॥
न द्वैतसत्यता कर्मकाण्डस्य विषयोऽपि तु ॥
साध्यसाधनसम्बन्धो, न त्वसाविह बाध्यते ॥१९७॥
द्वैतसत्यत्वमिथ्यात्वे अविचार्यैव मानवः ॥
इष्टप्राप्तिमनिष्टस्य निवृत्तिमभिवाञ्छति ॥ १९८ ॥
साध्यसाधनसम्बन्धं तादृशः कामिनोऽर्कवत् ॥
कर्मकाण्डो भासयते कामी तत्र प्रवर्तते ॥ १९९ ॥
अकामतः क्रिया काचिद् दृश्यते नेह कस्यचित् ॥
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ २०० ॥
न निवर्तयितुं शक्ता पुरुषान्कामिनः श्रुतिः ॥ ।
नापि प्रेरयितुं शक्ता विरक्तान्कर्मसु क्वचित् ॥२०१॥
यथोचितं बोधयन्ती श्रुतिः कामिविरागिणौ ॥
वर्तते कर्मकाण्डस्य मानत्वं हन्यते कुतः ॥ २०२ ॥

---

त्वेनाविरोधमाह *निषेधतीति ॥ १९५ ॥ तस्याद्वयप्रत्यगात्मो-क्त्युपक्षयेऽपि तद्विरोधान्न कर्मवाक्यं स्वार्थे प्रमां कुर्यादित्याशङ्क्य परिहरति *द्वैत इत्यादिना॥१९६॥१९७॥ननु द्वैतगतसत्यत्वांशस्य बाधितत्वे साध्यसाधनसम्बन्धज्ञानमात्रात्कथं मिथ्याभूतयागादौ प्रवृत्तिस्तत्राह *द्वैतेत्यादिना ॥१९८॥१९९॥ काममात्रादेव सर्वस्यापि प्रवृत्तिरित्यत्र मनुवचनमाह *अकामत इति ॥२००॥२०१॥ कस्तर्हि श्रुतेर्व्यापारस्तत्राह *यथोचितमिति बोधयन्ती वर्तत इति सम्बन्धः । वेदान्तस्य प्रामाण्याविघातकत्वमुपसंहरति *कर्मकाण्डस्येति ॥ २०२ ॥ यदुक्तमद्वयब्रह्म-

नाप्यद्वैतविरोधोऽस्ति रूपादिग्राहकेन्द्रियैः ॥
किं भो ! गवादिभेदेन व्योमैकत्वं विरुध्यते ॥२०३॥
मायाकल्पितरूपादीन्प्राभिन्नांश्चक्षुरादयः ॥
गृह्णन्त्वेव किमायातमद्वैते परमार्थतः ॥ २०४ ॥
नानाऽऽत्मानोऽनुमीयन्त इत्येतदपि दुर्घटम् ॥
किमप्रमेये नानात्वमाहोस्विन्मेय आत्मनि ॥ २०५ ॥
अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन ॥
प्रमेयस्य तु नानात्वाद्भेदोऽस्माभिरपीष्यते ॥ २०६ ॥
ग्रामकामादिवाक्योक्तं भेदं चैवं नयेद् बुधः ॥
इष्टो भेदः प्रमेयाणां काम्यन्तःकरणात्मनाम् ॥२०७॥

---

णः शास्त्रमेयत्वे अध्यक्षादिविरोध इति, तत्र न तावदध्यक्षविरोध इत्याह *नापीति । कथमविरोध इत्याशङ्क्य किं तदेकत्वमध्यक्षविरुद्धं किंवा तदद्वयत्वं ? तत्राद्यं दृष्टान्तेन निराचष्टे *किं भो इति । यथा सर्वभूतस्थमेकमाकाशमित्युक्ते न गवादिभेदग्राहिप्रत्यक्षविरोधो भिन्नविषयत्वात् । तथा सर्वभूतस्थमेकं ब्रह्मेत्युक्तेऽपि न तत्प्रत्यक्षविरोध इत्यर्थः ॥२०३॥ कल्पितस्याधिष्ठानापरिच्छेदकत्वान्न द्वितीयोऽपीत्याह *मायेति॥२०४॥ अनुमानविरोधमुक्तं धुनीते *नानेति । तत्रापि स्वप्रकाशचिदेकरसे नानात्वमनुमीयते उतान्तःकरणविशिष्ट इति विकल्पयति *किमिति ॥२०५॥ आद्यं धर्मिग्राहकमानविरोधेन दूषयति *अप्रमेय इति । द्वितीये त्विष्टापत्तिरित्याह *प्रमेयस्येति॥२०६॥ एवं ग्रामकामादिपदवाच्यानामन्तःकरणविशिष्टानां भेदस्यास्माभिरङ्गीकृतत्वान्न श्रुतिविरोधोऽपीत्याह *ग्रामेति ॥२०७॥

प्रत्यक्षमनुमानं च शास्त्रं च प्रत्युताद्वये ॥
आत्मन्येव प्रसिध्यन्ति सुतरां सुविचारिणाम् ॥२०८॥
आत्मावभासिकाऽहंधीः सा चैकत्रैव जायते ॥
निपुणोऽप्यहमित्येवं नानेकत्राभिमन्यते ॥ २०९ ॥
एकात्मवन्तो देहाः स्युर्विवादो यत्र वर्तते ॥
शरीरत्वाविशेषत्वात्प्रतिवादिशरीरवत् ॥ २१० ॥
वेदान्तेष्वखिलेष्वात्मवस्त्वेकमिति डिण्डिमः ॥
तस्मादेकरसेऽन्योक्तविरोधो नास्ति कश्चन ॥ २११ ॥

इति वार्तिकसारे द्वितीयाध्यायस्य प्रथमं
ब्राह्मणं समाप्तम् ॥

---

एवं प्रत्यक्षादीनां भेदासाधकत्वमुक्त्वाऽभेदसाधकत्वमाह *प्रत्यक्षमिति ॥ २०८ ॥ किं तत्प्रत्यक्षं तदाह *आत्मेति । अन्तःकरणप्रदेशेषु नियमेन सर्वेषामहमहमिति जायमाना धीवृत्तिर्गोत्वादिबुद्धिवत्किञ्चिदनुगतं वस्तु विषयीकरोति । तच्च बुद्धिप्रकाशकात्मस्वरूपमेवेत्यर्थः ॥ २०९ ॥ अनुमानमाह *एकात्मेति ॥ २१० ॥ श्रुतेरैकात्म्यबोधकत्वमतिप्रसिद्धमित्याह *वेदान्तेष्विति ॥ २११ ॥

इति वार्त्तिकसारटीकायां द्वितीयाध्यायस्य प्रथमं
ब्राह्मणं समाप्तम् ॥

—:०:—

पूर्वस्मिन् ब्राह्मणे प्राणादन्य आत्मेति विस्तृतम् ॥
सङ्गृहीतं च तात्पर्यं सत्यसत्येति नामतः ॥ १ ॥
वस्तुसङ्ग्रहवाक्यत्वात्सूत्रप्रायमिति श्रुतिः ॥
सत्यशब्दद्वयस्यार्थौ प्राणात्मानाववोचत ॥ २ ॥
आविष्क्रियेते तावर्थौ क्रमेण ब्राह्मणद्वये ॥
भवत्येतावता स्पष्टं गार्ग्यराजमतद्वयम् ॥ ३ ॥
तत्र प्राण उपाधिः स्यादात्मोत्क्रान्तिप्रवेशयोः ॥
अत आत्मत्वविभ्रान्तिर्बालाकेरभवत्पुरा ॥ ४ ॥
आत्मोपाधितयैवास्य प्राणस्य स्यादुपास्यता ॥
स प्राणस्तदुपाधिश्च ब्राह्मणेऽस्मिन्विविच्यते ॥ ५ ॥

श्रुतिः–यो ह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानमिदꣳ प्रत्याधानं प्राणः स्थूणाऽन्नं दाम ॥ १ ॥

वा०—शिशुवद्विषयासङ्गरहितः प्राण इष्यते ॥

---

वृत्तवर्तिष्यमाणयोः सङ्गतिं वक्तुं वृत्तमनुवदति *पूर्वस्मिन्निति द्वाभ्याम् ॥ तस्योपनिषत्सत्यस्य सत्यमित्युक्त्वा प्राणा वा इत्यादिना श्रुत्यैव सत्यशब्दद्वयस्य सङ्ग्रहेणार्थो वर्णित इत्यर्थः ॥ १ ॥ २ ॥ एवं वृत्तमनूद्य सङ्गतिमाह *आविष्क्रियेते इति । उक्तार्थप्रपञ्चनफलमाह *भवतीति ॥ ३ ॥ ४ ॥ गार्ग्यस्य प्राण आत्मत्वभ्रमे युक्तिमुक्त्वा द्वितीयब्राह्मणप्रतिपाद्यमर्थं सङ्गृह्णाति *आत्मेति ॥ ५ ॥ एवं तात्पर्यमुक्त्वा यो ह वै शिशुमित्यत्र शिशुशब्दार्थमाह *शिशुवदिति । विषयासङ्गराहितत्वात् प्राणः शिशुशब्देनोच्यते इत्यर्थः । हेतो-

वागादीनामिव यतो विषयोऽस्य न दृश्यते ॥ ६ ॥
शरीरमस्याधानं स्याद्देहमापादमस्तकम् ॥
सामान्यवृत्त्या संव्याप्य चेष्टयत्यनिशं यतः ॥ ७ ॥
प्रत्याधानं शिरो ज्ञेयं प्रतिच्छिद्रं व्यवस्थितः ॥
प्रसारयति नेत्रादीन्प्राणो मूर्द्धिन विशेषतः ॥ ८ ॥
प्राणस्य बन्धनस्तम्भः शारीरं बलमिष्यते ॥
दौर्बल्ये सति देहस्य प्राणोत्क्रान्तिर्हि दृश्यते ॥ ९ ॥
बन्धनायास्य दामान्नं वत्सबन्धनरज्जुवत् ॥
अन्ने त्रेधा विभिन्नेऽस्मिन्भागाभ्यां बध्यते द्वयम्॥१०॥
स्थूलभागः पुरीषं स्यान्मध्यमो देहपोषकः ॥
प्राणं तर्पयते सूक्ष्म इति बद्धं वपुर्द्वयम् ॥ ११ ॥
एवं विवेचितं प्राणं य उपास्ते रुणद्धि सः ॥
भ्रातृव्यान्द्विषतः सप्त मूर्द्धिन छिद्रव्यवस्थितान् ॥१२॥

---

रसिद्धिमाशङ्क्याह *वागादीनामिति ॥ ६ ॥ साधानमित्यत्रा-
धानपदमधिष्ठानपरमित्याह *शरीरमिति । तत्र हेतुः *देहमि-
ति ॥ ७ ॥ प्रत्याधानशब्दस्य शिरोवाचकत्वं वदन् तत्र हेतु-
माह *प्रतीति ॥ ८ ॥ स्थूणाशब्दार्थमाह *प्राणस्येति । बलस्य
प्राणबन्धनस्तम्भत्वे हेतुः *दौर्बल्य इति ॥ ९ ॥ दामश-
ब्दार्थमाह *बन्धनायेति ॥ प्राणदामत्वमन्नस्योपपादयितुं दे-
हद्वयमप्यन्नात्मकरज्ज्वा बध्यत इत्याह *अन्न इति ॥ १० ॥
उक्तमेव व्यनक्ति *स्थूलेति ॥ ११ ॥ वेदेत्यस्या-
र्थं वदन् सप्त ह द्विषत इत्यादेरर्थमाह *एवमिति । के ते सप्त
द्विषन्तस्तानाह *मूर्द्ध्नीति ॥१२॥ शिरश्छिद्रव्यवस्थितचक्षुरा-
दिसप्तेन्द्रियाणां शत्रुत्वं कथमिति तत्राह *भ्रातृव्या इति

भ्रातृव्याः स्युः सहोत्पत्तेः शब्दाद्यासङ्गवृत्तयः ॥
द्विषन्ति च मुमुक्षुं ताः प्रत्यग्दृष्ट्यपहारतः ॥ १३ ॥
सेवन्तेऽक्षि स्थितं प्राणं सप्त रुद्रादिदेवताः ॥
अक्षीणा इत्युपास्ते यः सोऽन्नाक्षयमुपाश्नुते ॥ १४ ॥

श्रुतिः—तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनिका तयाऽऽदित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्त्तन्या पृथिव्यन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

---

शब्दाद्यासङ्गवृत्तिहेतुश्रोत्रादीनां सहजत्वेऽपि द्वेषित्वं कथं तत्राह *द्विषन्ति चेति ॥ १३ ॥ तमेताः सप्तेत्यादेस्तात्पर्यमाह *सेवन्त इति ॥ १४ ॥

अक्षरार्थस्तु—यो ह वा इत्यादिरुणद्धीत्यन्तेन सफलामुपास्तिमुक्त्वा फलश्रवणेनाभिमुखीभूताय शिशुत्वादिपदार्थानाह श्रुतिः *अयं वावेत्यादिना । प्राणस्थूणेत्यत्र प्राणशब्दो बलवचनः । उक्तार्थमन्यत् ॥ १ ॥

*तमेता इति । तं प्राणम् एता वक्ष्यमाणाः सप्तसङ्ख्याका अक्षितय उपतिष्ठन्ते । कास्ता अक्षितय इति, उच्यते । तत् तत्र या इमाः प्रसिद्धा अक्षन् आक्षिणि लोहिन्यो लोहिता राजयो रेखास्ताभिर्द्वारभूताभिरेनं मध्यमप्राणं रुद्रोऽन्वायत्तः अनुगतः । अथ रुद्रस्य प्राणवृत्त्यनुगतेरनन्तरं या अक्षिणि आपः धूमादिसंयोगे व्यज्यमानास्ताभिः पर्जन्यो देवतात्माऽनुगत उपतिष्ठते इत्यर्थः । कनीनिका दृक्शक्तिः अधरया वर्तन्या पक्ष्मणेत्यर्थः ॥ २ ॥

तदेष श्लोको भवति—अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम्। तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति, प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति, प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाग्घ्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥

---

तत् तत्र एतस्मिन्नर्थे एष श्लोको भवति *अर्वाग्बिल इत्यादि। इमं मन्त्रमनूद्य श्रुतिरेव व्याकरोति *अर्वागित्यादिना। अस्य शिरसः चमसाकारत्वं कथमित्याशङ्क्याह श्रुतिः *एष हीति। एष शिरप्रदेशोऽर्वाग्बिलो भवति। मुखस्य बिलरूपत्वाच्छिरसो बुध्नाकारत्वादूर्ध्वबुध्नश्च भवति। तस्मिन्नित्यादि पूर्ववन्मन्त्रानुवादः। यथा सोमश्चमसे। एवं तस्मिञ्छिरसि विश्वरूपं नानारूपं यशो निहितं स्थितम्। किं पुनस्तद्यशस्तदाह—प्राणाः श्रोत्रादयः वायवश्च सप्तधा तेषु प्रसृतास्तान् यश इत्याह मन्त्र इत्यर्थः। तस्य शिरस्तीरे समीपे प्राणाः परिस्पन्दात्मकास्त एव ऋषय इति प्राणा वा ऋषय इत्येतदाह मन्त्रः इत्यर्थः। *वागष्टमीति। ब्रह्मणा शब्दराशिना संविदाना संसृष्टा शब्दराशिमुच्चारयन्ती वागष्टमीति यावत्। वाचः सप्तमीत्वेनोक्तत्वात्कथमष्टमीत्वमिति तत्राह *वाग्घ्यष्टमी ब्रह्मणा संवित्तेति। अत्तृत्वेन वाचः सप्तमीत्वेऽपि वक्तृत्वेनाष्टमीत्वमविरुद्धमिति भावः ॥ ३ ॥

इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥

इत्युपनिषदि चतुर्थाध्याये
द्वितीयं ब्राह्मणं समाप्तम् ॥ २ ॥

वा०—कर्णादिसप्तछिद्रेषु गौतमाद्यृषिनामकाः ॥
स्थिताः प्राणा इति ध्यायेद्वाचं च ब्रह्मवादिनीम् ॥ १५ ॥
हिरण्यगर्भरूपेण सर्वभुक् स्यादुपासकः ॥

---

प्राणा वा ऋषय इत्यत्र मुखबिलस्थितेषु प्राणेषु ऋषिदृष्टिः कार्येत्युक्तम् । के ते ऋषयस्तानाह *इमावेवेति । इमौ कर्णौ दक्षिणकर्णो गौतमः, उत्तरश्च भरद्वाजः । अक्षिणि उपदिशन्नुवाच *इमावेव विश्वामित्रजमदग्नी इति । नासिके उपदिशन्नुवाच *इमावेव वसिष्ठकश्यपाविति । अयमेवेति दक्षिणोत्तरनिर्देशः पूर्ववत् । वागेवात्रिः सप्तमः, वाचश्चात्रित्वम् अदनक्रियायोगादित्यभिप्रेत्य हेतुं साधयति *वाचा हीति । अतोऽत्तृत्वादत्तिरिति ह वै प्रसिद्धं नामैतत्तदात्तिरेव सदत्रिरित्युच्यते परोक्षेण ।

एतत्सर्वमभिप्रेत्याह *कर्णादीति । *ब्रह्मवादिनीमिति । शब्दराशिं वदन्तीमित्यर्थः ॥ १५ ॥

एवं प्राणोपासकस्य फलमाह श्रुतिः *सर्वस्येत्यादिना ॥ ४ ॥

इति गार्ग्यमतं ब्रह्म ब्राह्मणेऽस्मिन्प्रपञ्चितम् ॥ १६ ॥

इति वार्तिकसारे द्वितीयाध्यायस्य
द्वितीयं ब्राह्मणं समाप्तम् ॥ २ ॥

गार्ग्योक्तं ब्रह्म विस्तृत्य तन्निरासाय साम्प्रतम् ॥
तृतीयब्राह्मणे प्राह राज्ञोक्तं ब्रह्म विस्तृतम् ॥ १ ॥
प्रथमब्राह्मणे राजा ब्रह्म यद्यप्यशेषतः ॥
उवाचाथापि सत्यस्य सत्यता नहि विस्तृता ॥ २ ॥
सत्यसत्यत्वविस्तारमुखेन प्रतिपाद्यते ॥
निष्प्रपञ्चब्रह्मतत्त्वं तृतीयब्राह्मणे स्फुटम् ॥ ३ ॥

श्रुतिः ॥ द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥ १ ॥

वा०–द्वे एव ब्रह्मणो रूपे प्रपञ्चत्वमुपागते ॥
मूर्तामूर्तात्मके याभ्यामरूपं ब्रह्म रूप्यते ॥ ४ ॥

---

तदुपपादयति *हिरण्येति। ब्राह्मणार्थमुपसंहरति *इतीति॥१६॥

इति वार्तिकसारटीकायां द्वितीयाध्यायस्य
द्वितीयं ब्राह्मणं समाप्तम् ॥ २ ॥

वृत्तमनूद्योत्तरग्रन्थस्य पूर्वेण सङ्गतिमाह *गार्ग्येति ॥ १ ॥ एवं समुदायतात्पर्यमुक्त्वा निष्प्रपञ्चस्वरूपनिरूपणार्थं प्रतियोगिभूतप्रपञ्चसङ्ग्रहपरां द्वे वावेत्यादिश्रुतिं व्याचष्टे *द्वे एवेति। तयोः कथं ब्रह्मरूपत्वं तत्राह *याभ्यामिति। निर्विशेषमपि ब्रह्म अज्ञानावस्थायां याभ्यां निरूप्यते सविशेषमिव व्यवह्रियते इत्यर्थः॥४॥ द्वे ब्रह्मणो रूपे इत्यत्र स्थूलसूक्ष्मप्रपञ्चस्तद्वासना च रूपद्वयशब्देन विवक्षितमित्यर्थान्तरमाह *मूर्तेति। तस्यैवार्थान्तरमाह *सवासनमिति। जडमजडं च रूपद्वयशब्देन विवक्षित·

मूर्त्तामूर्त्तप्रपञ्चश्च वासना चेति वा द्वयम् ॥
सवासनामिदं रूपमनिदं चेति वा द्वयम् ॥ ५ ॥
सन्निवेशो नेत्रदृश्यो यस्य तन्मूर्त्तमुच्यते ॥
क्षित्यम्ब्वग्नित्रयं मूर्त्तममूर्त्तं त्वितरद् द्वयम् ॥ ६ ॥
मूर्त्तामूर्त्तस्वभावत्वमशेषजगतीक्षितुम् ॥
आविष्कृतस्तत्स्वभावो मर्त्यत्वादिविशेषणैः ॥ ७ ॥
मूर्त्तं स्थूलवपुर्मर्त्यं सूक्ष्मात्क्षिप्रं विनाशतः ॥
अमूर्त्तं सूक्ष्ममममृतमामोक्षमविनाशतः ॥ ८ ॥
पाञ्चभौतिकता तुल्या यद्यपि स्थूलसूक्ष्मयोः ॥

---

मिति भावः ॥ ५ ॥ तत्र मूर्त्तस्य लक्षणमाह *सन्निवेश इति । यस्यावयवविन्यासश्चाक्षुषस्तन्मूर्त्तमित्यर्थः । लक्षणमुक्त्वा लक्ष्यं निर्दिशति *क्षित्यम्ब्विति ॥ यस्य सन्निवेशोऽचाक्षुषस्तदमूर्त्तमिति मत्वा लक्ष्यं निर्दिशति *इतरद् द्वयमिति । वायुश्चान्तरिक्षं चेत्यर्थः ॥ ६ ॥ मर्त्यं चेत्यादिविशेषणकथनप्रयोजनमाह *मूर्त्तेति । मूर्त्तामूर्त्तयोर्मर्त्यामृतत्वादिस्वभावानभिधत्ते तदेतन्मूर्त्तमित्याद्युत्तरवाक्येन । मूर्त्तामूर्त्तशब्दयोः पञ्चभूतमात्रवाचित्वोक्त्या भौतिकप्रपञ्चो न सङ्गृहीतः स्यादतस्तत्सङ्ग्रहार्थं तत्स्वभावः कथ्यत इत्यर्थः ॥ ७ ॥ तात्पर्यमुक्त्वा मूर्त्तामूर्त्तशरीरयोर्मर्त्यत्वामृतत्वे उपपादयति *मूर्त्तमिति । चाक्षुषत्वादिलक्षणयोगादाधिदैविकमध्यात्मिकं च स्थूलसूक्ष्मशरीरद्वयं मूर्त्तामूर्त्तशब्दितं भवति । तयोश्चापेक्षिके मर्त्यत्वामृतत्वे उपपद्येते इति भावः ॥ ८ ॥ चाक्षुषत्वादिलक्षणयोगाच्छरीरद्वयस्य मूर्त्तामूर्त्तत्वकथनमनुपपन्नं तयोः पञ्चभूतकार्ययोः पञ्चात्मत्वाविशेषेण चाक्षुषत्वादिव्यवस्थाया एवायोगादित्या-

तथा ऽप्यत्र विशेषोऽस्ति प्रधानगुणभावतः ॥ ९ ॥
स्थूलस्य मूर्त्तप्राधान्याच्चक्षुषा तद्विलोक्यते ॥
अमूर्त्तस्य प्रधानत्वात्सूक्ष्मं नैव विलोक्यते ॥ १० ॥
पाञ्चभौतिकयोः स्थूलसूक्ष्मयोर्मर्त्यतामृते ॥
यथा तद्वत्परिच्छेदव्यापित्वे च विशेषणैः ॥ ११ ॥
सादिति त्यादितिप्रोक्ते प्रत्यक्षत्वपरोक्षते ॥
मूर्त्तामूर्त्ते च तादृक्त्वाद्रूपे द्वे सत्यनामनी ॥ १२ ॥
अध्यात्ममधिदैवं च यथा सत्यं व्यवस्थितम् ॥

---

शङ्कां परिहरति *पाञ्चभौतिकतेत्यादिना ॥ ९ ॥ १० ॥ स्थितं यच्चेति पदद्वयस्यार्थं वदन् तयोरपि पूर्ववन्मूर्त्तामूर्त्तात्मकशरीरद्वयविशेषणतामाह *पाञ्चभौतिकयोरिति । स्थितशब्देन परिच्छिन्नत्वं यच्छब्देन व्यापित्वं चोच्यत इत्यर्थः । यद्यध्यात्मिकसूक्ष्मदेहस्य न विभुत्वं तथापि कारणीभूतहिरण्यगर्भलिङ्गस्य विभुत्वात्कार्यकारणयोरभेदविवक्षया अस्यापि व्यापित्वमुक्तमिति बोद्धव्यम् ॥ ११ ॥ सच्च त्यच्चेति पदद्वयं व्याचष्टे *सदिति । चाक्षुषसन्निवेशवत्त्वं मूर्त्तत्वं, गुणक्रियासाधारणपरोक्षत्वं सत्त्वमिति न पौनरुक्त्यमिति ध्येयम् । उक्तविशेषणविशिष्टत्वात्स्थूलसूक्ष्मप्रपञ्चयोरपि सत्यच्छब्दवाच्यतामाह *मूर्त्तेति ॥ १२ ॥ अत एव देहद्वयमपि सत्यच्छब्दार्थमित्याह *अध्यात्ममिति । तत्तत्स्थूलशरीरावच्छिन्नाधिदैविकलिङ्गव्यतिरेकेणाध्यात्मिकलिङ्गमेव नास्तीति केचित्, तन्मतं प्रत्याह *प्रसिद्धमिति । स्थूलपदं दृष्टान्तार्थम् । लोकान्तरगत्यनुपपत्त्या “अणवश्च” इत्यादिन्यायाच्च स्थूलदे-

प्रसिद्धमुभयस्यापि स्थूलसूक्ष्मवपुर्द्वयम् ॥ १३ ॥

श्रुतिः—तदेतन्मूर्त्तं यदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्य-मेतत्स्थितमेतत्सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥

अथामूर्त्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्त्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष-रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस

---

द्वदाध्यात्मिकसूक्ष्मदेहोऽपि पृथक्प्रसिद्ध इत्यर्थः ॥ १३ ॥

अक्षरार्थस्तु—सङ्ग्रहेणोक्तमर्थं श्रुतिरेव विभजते *तदेत-दिति । तत् तयोर्मध्ये एतन्मूर्त्तं प्रथमं विभज्यत इत्यर्थः । तदे-व विभजते । *यदन्यदिति । क्षित्यादित्रयं मूर्त्तमित्यर्थः । तदेव विशिनष्टि *एतन्मर्त्यमित्यादिना । रसत्वेन वक्ष्यमाण-मण्डलस्य चतुर्विशेषणकभूतत्रयकार्यत्वं न त्वेकैककार्यतेति द्योतयितुमुक्तमेव पुनरनुवदति *तस्यैतस्येत्यादिना ॥ य एष इति । योऽयं मण्डलात्मा सविता तपत्येष चतुष्टयविशेषणक-भूतत्रयस्य रसः सार इत्यर्थः ॥ मण्डलस्य भूतत्रयसारत्वे हेतुः *सतो ह्येष रस इति । इमं च हेतुमुत्तरत्रोपपादयिष्यति । मूर्त्तादीनामुपलक्षणम्॥२॥अथामूर्तमिति। मूर्त्तनिरूपणानन्तरम-मूर्त्तं निरूप्यत इत्यर्थः। य एषः एतस्मिन्निति। योऽयमादित्यम-ण्डले पुरुषः करणात्मा हिरण्यगर्भः स एष भूतद्वयस्यामूर्त्तादिच-तुर्विशेषणविशिष्टस्य रसः। हिण्यगर्भलिङ्गस्य भूतद्वयसारत्वे हे-तुः *त्यस्य ह्येष रस इति । त्यस्येत्यमूर्तादीनामुपलक्षणम् ।

इत्यधिदैवतम् ॥ ३ ॥

अथाध्यात्ममिदमेव मूर्त्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्त्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥

वा०- स्थूलसारतया ज्ञेये चक्षुरादित्यमण्डले ॥
मूर्त्तमर्त्यपरिच्छिन्नप्रत्यक्षत्वविशेषिते ॥ १४ ॥
अमूर्त्तामृतसंव्याप्तपरोक्षत्वैस्तु संयुतम् ॥
उभयत्र स्थितं लिङ्गममूर्त्तरस उच्यते ॥ १५ ॥
हिरण्यगर्भक्षेत्रज्ञममूर्त्तरसमूचिरे ॥
केचिन्मेधाकर्ममुख्याद्वियद्वाय्वादिसर्जनात् ॥ १६ ॥

---

इत्यधिदैवतमित्युक्तोपसंहारः ॥ ३ ॥

अथाधुनाऽध्यात्मं मूर्त्तामूर्त्तयोर्विभाग उच्यत इत्यर्थः । तदेव विभजते *इदमित्यादिना । योऽभ्यन्तराकाशः शरीरस्थश्च प्राणः एतद् द्वयं वर्जयित्वा यदेतच्छरीरारम्भकभूतत्रयमिदमेव मूर्त्तमित्यर्थः । समानमन्यत्पूर्वेण ॥ ४ ॥

एतत्सर्वमभिप्रेत्य एष रस इत्यादिव्याकुर्वन् बुद्धिसौकर्यायोक्तमर्थं सङ्गृह्णाति *स्थूलसारतयेत्यादिना॥१४॥१५॥ स्वमतमुक्त्वा तत्परिशुद्ध्यर्थं परमतं दूषयितुमनुभाषते *हिरण्येति। मण्डलस्थं सूत्रलिङ्गं विहाय सूत्रक्षेत्रज्ञस्यैवामूर्त्तरसत्वं वदतां परेषामाशयमाह *मेधेति । हिरण्यगर्भक्षेत्रज्ञो हि जन्मान्तरकृतज्ञानकर्मद्वारा प्रथमं वियद्वायुं सृजति अतस्तस्य तत्सारत्वं, लिङ्गग्रहणे पुरुषशब्दप्रयोगानुपपत्तिरिति भावः ॥ १६ ॥ एक-

नैवं मूर्त्तरसेनास्य विरूपत्वप्रसङ्गतः ॥
वाक्यप्रयुक्तौ तुल्यार्थां न युक्तार्थविरूपता ॥ १७ ॥
यद्वन्मूर्त्तरसोऽभीष्टश्चतुर्विधविशेषणः ॥
अचेतनस्तथैवायममूर्त्तरस इष्यताम् ॥ १८ ॥
अचेतनोऽप्यन्नमयो देहः पुरुषशब्दितः ॥
श्रुत्यन्तरे तथा चास्तु लिङ्गं पुरुषशब्दभाक् ॥ १९ ॥
ब्रह्मोपास्तिस्थानतया स्व्यक्ष्णोरतिसारता ॥
व्यवहारोपाधितया लिङ्गस्यापि च सारता ॥ २० ॥
सारासारयुते रूपे मूर्त्तामूर्त्ते उदीरिते ॥
अरूपं ब्रह्म रूपाभ्यां व्यवहारे निरूप्यते ॥ २१ ॥
मूर्त्तामूर्त्तव्यस्थेयं यथाश्रुत्युपवर्णिता ॥

---

रूपेण प्रवृत्तवाक्यद्वयस्यार्थवैरूप्यमयुक्तमिति दूषयति *नैव-मिति ॥ १७ ॥ अर्थवैरूप्यमेवाह *यद्वदिति । यथा भूत-त्रयस्य रसो मूर्त्तमेव मण्डलं भूतत्रयसमानजातीयं दृष्टम् एवम-मूर्त्तयोरपि भूतयोस्तत्समानजातीयेनैवामूर्त्तरसेन भवितुं युक्त-म्, अमूर्त्तरसस्य चेतनत्वे रसयोर्वैजात्यं स्यादित्यर्थः ॥ १८ ॥ परमते दोषमुक्त्वा स्वमते तदुक्तदोषं धुनीते *अचेतन इति॥१९॥ सतो ह्येष रस इत्यादिश्रुत्या मण्डलादीनां चतुर्णां सारत्वं हि-शब्देन सूचितमुपपादयति *ब्रह्मोपास्तीति । उपाधिः कारणं सर्वव्यवहारस्यापि लिङ्गाधीनत्वादित्यर्थः ॥ २० ॥ उपसंहर-ति *सारेति । उक्तरूपद्वयस्य न वस्तुतो ब्रह्मधर्मत्वमित्यु-क्तं स्मारयति *अरूपमिति ॥ २१ ॥ *मूर्त्तामूर्त्तव्यवस्थेति । अयं भावः—ब्रह्मणोऽद्वयस्य तत्त्वं निश्चेतुं किल प्रतियोगिद्वैत-स्वरूपं मूर्त्तामूर्त्तरूपेण श्रुत्या सङ्गृह्यते । तच्चाधिदैवाध्यात्मयो-

अथ युक्त्यनुसारेण साऽन्यथाऽप्युपवर्ण्यते ॥ २२ ॥
अमूर्त्तताऽतिसूक्ष्मेऽत्र समाप्ता मूलकारणे ।
मूर्तत्वमप्यतिस्थूले कार्ये ह्यन्ते समाप्यते ॥ २३ ॥
मध्यकारणकार्याणां मूर्तताऽमूर्त्तते इमे ॥
आपेक्षिक्यौ यथायोग्यमुदाहरणमिष्यताम् ॥ २४ ॥
अविद्यामात्रगं ब्रह्म कारणं बुद्ध्युपाधिगम् ॥
ज्ञातृतद्वृत्त्युपाधिस्थं ज्ञायमानं घटादिकम् ॥ २५ ॥
एवं च सत्युपाधीनां ह्रासे ह्रसति मूर्तता ॥
उपाधिवृद्धौ मूर्तत्वं वर्द्धतेत्युदितं भवेत् ॥ २६ ॥
मूर्त्तामूर्त्ते ब्रह्मरूपे इति पक्षो निरूपितः ॥
प्रपञ्चतद्वासने द्वे रूपे इत्येष वर्ण्यते ॥ २७ ॥
प्रपञ्चो नाम पूर्वोक्तमूर्तामूर्त्तद्वयं भवेत् ॥

---

रुक्तविभागमात्रेण न सङ्गृहीतं भवति मूलकारणस्यासङ्गृहीतत्वात् । तदत्र श्रौतं विभागमुल्लङ्घ्य भर्तृप्रपञ्चोक्तयुक्त्या मूर्त्तामूर्त्तविभागः कल्प्यते इति ॥ २२ ॥ तामेव कल्पनां दर्शयति *अमूर्त्तेत्यादिना । अव्याकृते ऽमूर्तत्वं मुख्यम्, अमूर्त्तलक्षणस्य तत्र पूर्णत्वात् । घटादिषु च मुख्यं मूर्तत्वम् । आन्तरालिकेषु मूर्त्तामूर्त्तत्वमापेक्षिकत्वाद्गौणमित्यर्थः ॥२३॥२४॥ उदाहरति *अविद्येत्यादिना । मायोपहितब्रह्मण्यमूर्त्तत्वं मुख्यं,प्रमातुः बुद्धिवृत्तिविषयघटादौ मूर्त्तत्वं पर्यवसितम् । प्रमातुरव्याकृतापेक्षया मूर्त्तत्वं घटाद्यपेक्षया ऽमूर्त्तत्वम् । इत्येवं सर्वत्र मूर्त्तामूर्त्तविभागः कल्प्यत इत्यर्थः॥२५॥२६॥ उपसंहरति *मूर्त्तेति ॥ २७ ॥ तस्य हैतस्येत्यादिवाक्यस्यासाङ्कर्यं परिहर्तुं द्वे वाव ब्रह्मणो रूपे इत्यस्य वाक्यस्यो-

तद्वासना विचित्राः स्युरनन्ता लिङ्गमाश्रिताः॥२८॥
अनेकवासनाचित्रं तल्लिङ्गं पटभित्तिवत् ॥
मायेन्द्रजालसदृशं व्यामोहास्पदमात्मनः ॥ २९ ॥
एतावन्मात्र आत्मेति तत्र भ्रान्ता निरागमाः ॥
बौद्धकाणादसाङ्ख्याद्यास्तर्कमात्रोपजीविनः ॥३०॥
एकैकां वासनां तत्र प्रतिक्षणविनश्वरीम् ॥
आहुः क्षणिकमात्मानं बौद्धा विज्ञानवादिनः ॥३१॥
आत्मनो द्रव्यभूतस्य गुणा बुद्ध्यादयो नव ॥
वासनात्वेन वेदोक्ता इति वैशेषिकादयः ॥ ३२ ॥

---

त्तरमुक्तमनूद्य व्याचष्टे *प्रपञ्चेत्यादिना । मूर्त्तामूर्त्तवासनानां वस्तुतो जीवधर्मत्वं निरस्यति *लिङ्गमाश्रिता इति । अन्तःकरणस्यैव मूर्त्तादिसर्वविषयसम्बन्धात्तन्निमित्तरागादिवासनाः सर्वा अन्तःकरणाश्रिता एवेति वक्तव्यम् । एवं च योऽयं दक्षिणेऽक्षन्पुरुष इति पूर्ववाक्ये पुरुषशब्दितलिङ्गस्य प्रकृतत्वाल्लिङ्गप्रधानमन्तः करणमेव तस्य हैतस्य पुरुषस्य रूपमित्यत्रापि पुरुषशब्देन परामृश्यत इति भावः । वक्ष्यमाणानेकोदाहरणवैयर्थ्यं परिहर्त्तुं विचित्रा आनन्ताश्चेत्युक्तम् ॥ २८॥ अन्तःकरणस्यैव रागादिवासनाश्चेत्कथं पुरुषस्तन्मयो दृश्यते ? इत्याशङ्क्याह *अनेकेति ॥ २९ ॥ आत्मनो भ्रान्तेरास्पदं लिङ्गमित्येतद्व्यक्तीकुर्वन्वादिनां भ्रममाह *एतावदिति॥३०॥ तत्र तावद्विज्ञानवादिभ्रमनिदानमाह *एकैकामिति ॥ वासनां तद्धेतुभूतां बुद्धिवृत्तिमिति यावत् ॥ ३१ ॥ तार्किकाणामपि बौद्धादिवद्भ्रान्तिमाह *आत्मन इति । बुध्यादिधर्मिणमन्तःकरणमेवात्मेति भ्रमित्वा आत्मगुणा एव वासनात्वेन “यथा माहारजनम्” इत्यादिश्रुत्योच्यत इति वदन्तीत्यर्थः ॥ ३२ ॥

त्रिगुणं यत्प्रधानं तत्पुरुषार्थेन हेतुना ॥
प्रवर्तते वासनात्वक्लृप्तिस्तत्रेति कापिलाः ॥३३॥
अप्यौपनिषदम्मन्याः प्राक्रियां कल्पयन्त्यमुम् ॥
वस्तूनां राशयः प्रोक्ता उत्तमाधममध्यमाः ॥ ३४ ॥
उत्तमः परमात्मा स्यान्मूर्तामूर्तात्मकोऽधमः ॥
जीवात्मा मध्यमः साकं वासनाज्ञानकर्मभिः ॥३५॥
कृष्णशक्तिरविद्याख्या परमात्मन उत्थिता ॥
विकृत्य परमात्मांशं जीवभावं नयत्यमुम् ॥ ३६ ॥
यथोषरात्मको दोषो भूमेर्जातो विकृत्य तम् ॥
भूम्यंशमास्ते तद्वत्स्यादविद्येयं परात्मनः ॥ ३७ ॥
अनात्मधर्म एवेयमविद्या भ्रान्तिलक्षणा ॥

---

साङ्ख्यानां भ्रान्तिमाह *त्रिगुणमिति ॥ नान्तःकरणमेवात्मा किं त्वन्यः स्वप्रकाशस्तस्य भोगापवर्गानुगुण्येन हेतुना यत्प्रधानमस्ति तदात्मनैव स्थितमन्तःकरणं तत्सर्वधर्मकं प्रवर्त्तते, तदेव श्रुत्या वासनात्वेनोच्यते इति वदन्तीत्यर्थः ॥३३॥ भर्तृप्रपञ्चप्रक्रियामाह *अपीत्यादिना ॥ ३४ ॥ ३५ ॥ तेषामेव प्रक्रियान्तरमाह *कृष्णेति ॥ भगवतः शक्तिरविद्या नैसर्गिक्यपि तस्मादेव व्यक्ता सती तदेकदेशं विकृत्य तत्र स्थित्वा तमंशं जीवभावं नयतीत्यर्थः ॥ ३६ ॥ परस्मादविद्योत्थिता चेत् तमेवाश्रयेन्न जीवं, कारणमतिक्रम्य कार्यस्यान्यत्रावृत्तेरिति शङ्कां परिहरन्नाह *यथेति । इयं च प्रक्रिया साङ्ख्यमतेऽप्यविरुद्धेत्याह *यथेति द्वाभ्याम् ॥ यथा भूम्या उत्थितोऽप्यूषरो भूम्यैकदेशस्यैव धर्मः न भूधर्मः, एवमविद्या न परस्य धर्म इति विद्याविद्ययोरनात्मधर्मत्वोक्त्या साङ्ख्यमतमनुसृतं

अंशोऽस्मिन्साङ्ख्यसिद्धान्तमनुयन्त्रामहे ततः ॥३८॥
वासनाकामकर्माणि लिङ्गस्थान्येव तान्यपि ॥
लिङ्गादात्मानमायान्ति गन्धः पुष्पपुटं यथा ॥३९॥
गन्धः पुष्पगुणः पुष्पात्पुटमाश्रित्य तिष्ठति ॥
कुसुमापगमेऽप्येवं लिङ्गस्था वासनाऽऽत्मनि ॥ ४० ॥
निर्गुणोऽपि परैकांशो बाह्यादभ्यागतेन ह ॥
कर्मणा सगुणस्तेन कर्त्ता भोक्ता भवत्ययम् ॥ ४१ ॥
वैशेषिकमतं चैवमंशादनुसृतं भवेत् ॥
अपाश्चभौतिकं रूपं चैवमेतत्सवासनम् ॥ ४२ ॥
इत्यौपनिषदम्मन्यैरुक्तं भर्तृप्रपञ्चकैः ॥
लिङ्गस्य वासनारूप एवं मुह्यन्ति वादिनः ॥ ४३ ॥
अश्रौतत्वादुपेक्ष्याः स्युः प्रक्रिया वादिकल्पिताः ॥

---

भवतीत्यर्थः ॥ ३७ ॥ ३८ ॥ तार्किकमतानुसारेणार्थं तैर्विर-
चितं प्रक्रियान्तरमाह *वासनेति । आत्मानमपीत्यन्वयः॥३९॥
दृष्टान्तं स्पष्टयति *गन्ध इति ॥ ४० ॥ आत्मन्यगुणे कथं
वासना स्यादित्याशङ्क्याविद्यया विकृतस्य परमात्मैकदेशस्य
लिङ्गतादात्म्यात्कामाश्रयत्वमविरुद्धमित्याह *निर्गुण इति॥४१॥
उक्तप्रक्रियासिद्धं मध्यमराशिं निगमयति *अपाश्चभौतिकमि-
ति । एवम् उक्तया रीत्याऽविद्याकृतं वक्ष्यमाणवासनायुक्तं
भूतभौतिकभिन्नं जीवस्वरूपं मध्यमराशिरिति शेषः ॥ ४२ ॥
लिङ्गस्थवासनासु वादिनां विविधभ्रान्तिमुक्तामुपसंहरति *लि-
ङ्गस्येति ॥ ४३ ॥ बौद्धादिप्रक्रियाणामनिराकार्यत्वमाह *अ-
श्रौतत्वादिति । भर्तृप्रपञ्चमतं दूषयति *राशीत्यादिना ।
तत्त्वमस्यादिश्रुत्या जीवस्याविकृतब्रह्मात्मत्वात् 'कामः सङ्कल्पः'

राशित्रयस्य गमकं वचो नोपलभामहे ॥ ४४ ॥
जीवो न ब्रह्मणोऽन्योऽस्ति कामसङ्कल्पपूर्विकाः ॥
वासनाश्च मनोधर्मा मध्यमो राशिरत्र कः ॥ ४५ ॥
श्रु०—अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एत-
दमृतमेतद्यदेतत्त्यं तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य
यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरुष-
स्त्यस्य ह्येष रसः ॥ ५ ॥
तस्य हैतस्य पुरुषस्य रूपम् ॥
वा० एतस्य पुरुषस्येति श्रुतेश्चेतनधर्मता ॥
न वासनानामाशङ्क्या लिङ्गस्य पुरुषत्वतः ॥ ४६ ॥
हृदये ह्येव रूपाणि, कामा येऽस्य हृदि श्रिताः ॥
इत्यादिभिर्वासनानां श्रूयते लिङ्गधर्मता ॥ ४७ ॥
न पुष्पगन्धवल्लिङ्गवासना जीवमाश्रयेत् ॥
असङ्गो हीति जीवस्य सर्वसम्बन्धवारणात् ॥ ४८ ॥

---

इत्यादिश्रुत्या वासनानां मनोधर्मत्वात्तदुक्तमध्यमराशौ मानं नास्तीत्यर्थः ॥४४॥४५॥ मानाभावोऽसिद्ध इति शङ्कते *एतस्येति। तस्य हैतस्य पुरुषस्येत्यादिश्रुत्या वासनानां पुरुषनिष्ठत्वाभिधानात्पुरुषशब्दस्य च चेतनवाचित्वादियमेव श्रुतिर्मध्यमराशौ मानमित्यर्थः। स वा एष पुरुषोऽन्नरसमय इत्यादौ शरीरेऽपि पुरुषशब्दप्रयोगस्य दर्शितत्वान्नानया श्रुत्या वासनानां चेतनधर्मत्वसिद्धिरिति दूषयति *नेति ॥ ४६ ॥ वासनानां मनोधर्मत्वे वाक्यान्तरमाह *हृदय इति ॥४७॥ यदुक्तं पुष्पपुटिकान्यायेन मनोधर्मा अपि जीवमाश्रयन्तीति, तत्र तेषां किं जीवेन वास्तवः सम्बन्धः काल्पनिको वा ? आद्यं दृष्टान्तवै-

अविद्यया ससङ्गत्वे त्वविद्या न त्वदीरिता ॥
परात्मनस्तदुत्थाने मुक्तावप्युदियादसौ ॥ ४९ ॥
अविद्या चेदनिर्वाच्या तया लिङ्गस्थवासनाः ॥
आरोप्यन्तां यथाकाममलिङ्गेऽपि चिदात्मनि ॥५०॥
वासना भूरिरूपास्ता लिङ्गस्था लिङ्गसाक्षिणः ॥
कुर्वन्ति बहुरूपत्वं मणेरास्तरणं यथा ॥ ५१ ॥
भौतिकं बहुरूपत्वं भूतवासनया कृतम् ॥
पुष्पवासनया जन्यो गन्धः पौष्पो यथा पुटे ॥ ५२ ॥

---

षम्येण दूषयति *नेति ॥ ४८ ॥ द्वितीयमनुवदति *अविद्ययेति । सापि किं वास्तवी उत कल्पिता । नाद्यः । अनिर्मोक्षप्रसङ्गादित्याह *अविद्या नेति ॥ ४९ ॥ द्वितीयस्त्वस्मदिष्ट एवेत्याह *अविद्या चेदिति ॥ ५० ॥ उक्तमेव सदृष्टान्तमुपपादयति *वासना इति ॥ यथा आस्तरणं चित्रकम्बलादिकं स्वसम्बन्धिस्फटिकादि विचित्ररूपमिव करोति । एवं लिङ्गस्थवासना अपि लिङ्गेन सह साक्षिण्यध्यस्ताः साक्षिणं सवासनमिव कुर्वतीति अस्मिन्पक्षे न विरोध इत्यर्थः ॥ ५१ ॥ यदुक्तं अपाश्चभौतिकं रूपमित्यत्र मध्यमराशित्वेनाभिमतं वासनासहितं जीवरूपं भौतिकाविलक्षणमिति तत्र वासनानां भौतिकत्वं साधयितुं वासनागतनानात्वस्य भौतिकत्वं साधयति *भौतिकमिति । यथा पुष्पवासनया पुष्पैकदेशकेतकीवकुलादिचूर्णचिरसम्बन्धाज्जातो नानागन्धः पुष्पजन्यः, एवं पञ्चभूतकार्यलिङ्गदेहेनानादिसम्बन्धाज्जातात्मनानात्वमपि भूतजन्यमिमित्यर्थः ॥ ५२ ॥ एवं लिङ्गद्वारा भूतप्रयुक्तस्यापि स्वगत-

आत्मनानात्वमप्येतद्यदा स्याद्भौतिकं तदा ॥
भूतलेशस्वरूपाणां वासनानां तु का कथा ॥ ५३ ॥
भूतभौतिकवस्तूनां यदा संयुज्यते मनः ॥
तदेवाधीयते चित्ते तल्लेशात्मकवासनाः ॥ ५४ ॥
हिङ्गुगन्धो यथा लग्नः करण्डं न विमुञ्चति ॥
एवं जगद्वासनाश्च न मुञ्चन्ति धियं सदा ॥ ५५ ॥
कदाचित्काश्चिदुद्बोध्या कर्मणा भोगसिद्धये ॥
*भोगकालेऽनलाश्चान्याः सुप्तास्तिष्ठन्ति मानसे॥५६॥
अनन्तकल्पोपचयादनन्ता एव वासनाः ॥
उदाहरणमात्रं तु दृष्टान्तैरिह वर्ण्यते ॥ ५७ ॥
श्रुतिः—यथा माहारजनं वासो यथा पाण्ड्वाविकं

नानात्वस्य भौतिकत्वे साक्षाद् भूतजन्यानां वासनानां तत् कैमुतिकन्यायसिद्धमित्याह *आत्मनेति ॥ ५३ ॥ वासनानां साक्षाद् भूतजन्यत्वमेवाह *भूतेति । सम्बन्धसामान्ये षष्ठी ॥ ५४ ॥ वासनानामन्यप्रयुक्तत्वेऽपि यावद्द्रव्यभावित्वमविरुद्धमिति सदृष्टान्तमाह *हिङ्गुगन्ध इति ॥ ५५ ॥ उत्पन्नाः वासनाः बुद्धिं न मुञ्चन्ति चेत्तर्हि सर्ववासनाकार्याणि युगपदेव स्युरिति नेत्याह *कदाचिदिति । यथा शिशूनामन्नादिवासना विद्यमानाऽपि तद्भोगप्रापककालस्यानागतत्वान्नाभिव्यज्यते । एवं काचित्कदाचित्कर्मणा व्यज्यत इत्यर्थः ॥ ५६॥ ननु परिमितदृष्टान्तोक्त्या वासनानां परिमितत्वमपि नेत्याह *अनन्तेति । किमर्थं तर्हि परिमितदृष्टान्तोपादानमित्याशङ्क्योपलक्षणत्वेनेत्याह *उदाहरणेति ॥५७॥ एवं तस्य हेत्या-

* भोगकालानलाश्चान्या इति पाठः । अनलाः असमर्थाः इत्यर्थः ।

यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्वि-द्युत्तꣳ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद ॥

वार्ति० हारिद्रं वसनं यद्वत्संसर्गात्पीततां व्रजेत् ॥
तद्वन्नार्यादिसंसर्गाल्लिङ्गं रागादिमद्भवेत् ॥ ५८ ॥
ईषत्पाण्डुश्च परुषः स्यात् स्वतः श्वेतकम्बलः ॥
तथेषच्छ्रद्धया युक्तं स्वतो रागादिभागपि ॥ ५९ ॥
*इन्द्रगोपोऽतिरक्तः स्यात्स्वत एव तथा मनः ॥
विविक्तदेशस्थस्यापि विषयप्रवणं क्वचित् ॥ ६० ॥
अग्नेरार्चिर्यथा भास्वद्दहत्यपि तथा क्वचित् ॥
वेदशास्त्रविदप्यन्यान् बाधेतेर्ष्याद्युपद्रवैः ॥ ६१ ॥
सिताम्भोजं यथा सौम्यं सुगन्धि मृदु च स्वतः ॥
जन्मनैव तथा चित्तं युक्तं शमदमादिभिः ॥ ६२ ॥

---

दि व्याख्याय यथा माहारजनं वास इत्यादिव्याकुर्वन् दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयति *हारिद्रमिति । यथा शुभ्रं वसनं महारजनशब्दितहारिद्रया संसृष्टं सत्तत्संसर्गात्पीतं भवति—तद्वच्चित्तमप्यसत्संसर्गान्मलिनं भवतीत्यर्थः ॥ ५८ ॥ यथा पाण्ड्वाविकमित्यत्र आपाण्डुपदार्थमाह *ईषादिति । अस्यैव व्याख्या *परुष इति । उक्तं ह्यमरसिंहेन—ईषत्पांडुस्तु धूसरः इति। यथा आविकं अविसम्बन्धिकम्बलादि स्वतः शुभ्रमपि परुषं च भवति तद्वच्चित्तमपि कदाचिद्भवतीत्यर्थः॥५९॥ यथेंद्रगोप इत्यस्यार्थमाह *इन्द्रेति ॥६०॥ यथाऽग्न्यर्चिरित्यस्यार्थमाह *अग्नेरिति ॥ ६१ ॥ यथा पुण्डरीकमित्यस्यार्थमाह *सिताम्भोजमिति॥६२॥यथा सकृद्विद्युत्तमिति व्याचष्टे *तीव्रेति। सकृद्विद्युतपद-

---

* इन्द्रगोपः कीटविशेषः ।

तीव्रविद्युद्यथाऽत्यन्तं घनध्वान्तापनोदकृत् ॥
तथा हिरण्यगर्भस्य सर्वज्ञा वासना भवेत् ॥ ६३ ॥
तामुपासीन आप्नोति श्रियमत्यन्तमूर्जिताम् ॥
रजःसत्त्वतमोयोगात् वासनानां विचित्रता ॥ ६४ ॥
प्रपञ्चवासने ब्रह्मरूपे इत्येवमीरितम् ॥
तथेदमनिदंरूपे इति पक्षोऽधुनोच्यते ॥ ६५ ॥
सवासनं जगत्सर्वं तत्रेदंरूपमीरितम् ॥
सच्च त्यच्चेति सत्यं तत् प्रोच्यते पाञ्चभौतिकम् ॥६६॥

श्रुतिः—अथात आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥

इत्युपनिषदि चतुर्थाध्याये तृतीयं ब्राह्मणं समाप्तम्॥३॥

---

स्य व्याख्या *तीव्रविद्युदिति। इयं च वासना हिरण्यगर्भस्यैव भवति नान्यस्येत्याह *तथेति ॥ ६३ ॥ सकृदित्यादिफलोक्तिं व्याकरोति *तामिति। तां वासनाम्। उक्तवासनावैचित्र्ये को हेतुः *रज इति ॥६४॥ द्वितीयं पक्षमुपसंहरति *प्रपञ्चेति। द्वे वाव ब्रह्मणो रूपे इत्यत्रावधारणसामर्थ्याद्द्विरूपशब्देन सोपाधिकं निरुपाधिकं च ब्रह्मस्वरूपमुच्यत इत्युक्तम्, तृतीयपक्षमवतार्य व्याकरोति *तथेति ॥ ६५ ॥ सत्यस्य सत्यमित्यत्र षष्ठ्यन्तनिर्दिष्टसत्यपदाभिधेयप्रपञ्चस्य निष्प्रपञ्चप्रतियोगिनः सङ्ग्रहं वक्तुमुपक्रम्य कथमप्रकृतमिदंरूपमुच्यते इत्याशङ्क्य तस्य सत्यपदवाच्यत्वमुक्तं स्मारयति *सच्चेति ॥ ६६ ॥ एवं वृत्तं सङ्कीर्त्य 'अथात आदेशः' इत्यस्यार्थमाह *सत्यस्येति।

षष्ठ्यन्तसत्यपदाभिधेयप्रपञ्चनिरूपणानन्तरं प्रथमान्तस-

वा० सत्यस्य सत्यमानिदं वक्तव्यं शिष्यते ततः ॥
आदेशोऽनन्तरं तस्य क्रियते ऽनन्यमानिनः ॥ ६७ ॥
आदेशो नेति नेतीति ब्रह्मतत्त्वावबोधकः ॥
यथाऽयमुपपद्येत तथा सम्यङ् निरूप्यते ॥ ६८ ॥
इतिशब्देन चिद्भास्यमनूद्य प्रतिषिध्यते ॥
नकारेण, द्विरुक्तिस्तु वीप्सा कृत्स्ननिषिद्धये ॥ ६९ ॥
मूर्त्तं वा यदि वा ऽमूर्त्तमज्ञानं वासनाऽथवा ॥
अध्यात्ममधिदैवं वा तत्सर्वं प्रतिषिध्यते ॥ ७० ॥
न चेद्वीप्सा तदा द्वाभ्यां द्वयमेव निषिध्यते ॥
ततश्च ब्रह्मताशङ्का दृश्येऽन्यस्मिन्प्रसज्यते ॥ ७१ ॥

---

त्यशब्दितानिदंरूपस्य वक्तव्यत्वेनावशिष्टत्वात्तदुपदेशः क्रियत इति श्रुत्यक्षरार्थः ॥

ब्रह्मणः श्रुत्यैवोपदेष्टव्यत्वे हेतुमाह *अनन्येति ॥ ६७ ॥ ब्रह्म ज्ञापयितुं प्रक्रम्य नेति नेतीति निषेधोऽनुपपन्नः इत्याशङ्क्य निषेधवाक्यस्य ब्रह्मबोधकत्वं प्रतिज्ञापूर्वकमुपपादयति *आदेश इत्यादिना ॥ ६८ ॥ इतिशब्देन दृश्यं सर्वमनूद्य नकारेण निषिध्यते चेत् तर्ह्येकेनैव नञाऽलं किं द्वितीयेनात आह *द्विरुक्तिरिति ॥ ६९ ॥ सर्वप्रपञ्चनिषेधार्थं वीप्सेत्युक्तमेव व्यक्तीकुर्वन्वीप्सया निषिध्यमानप्रपञ्चं सङ्गृह्य दर्शयति *मूर्त्तमिति ॥ ७० ॥ वीप्सापक्षे गुणमुक्त्वा पक्षान्तरे दोषमाह *नेति । अत्र वीप्सा नास्तीति वदता नेति नेतीत्येतद्वाक्यद्वयं वाच्यम्, इत्थंच प्रकृतमूर्तामूर्त्ताज्ञानादिराशिषु मध्ये राशिद्वयमेव वाक्यद्वयेन निषिद्धं स्याद्राश्यन्तरस्य ब्रह्मस्वरूपत्वशङ्कया शुद्धं ब्रह्म न सिद्ध्येदित्यर्थः ॥ ७१ ॥

वीप्सया सर्वदृश्यस्य निषेधे त्ववशिष्यते ॥
अमेयमेकमेवातो यथावद् ब्रह्म बुध्यते ॥ ७२ ॥
न शून्यं शिष्यतेऽस्यापि दृश्यत्वादेव निह्नवात् ॥
भावाभावनिषेधेऽन्यद् ब्रह्मणः शिष्यतेऽत्र किम्॥७३॥
न ब्रह्मणो निषेधः स्यादितिशब्दासमर्पणात् ॥
ब्रह्म चेदितिशब्दार्थः किमन्यदनिदं भवेत् ॥ ७४ ॥
नान्तरेणानिदन्तत्त्वमिदमर्थः प्रसिद्ध्यति ॥
यत्ते स्यादनिदं तत्त्वं तदेव ब्रह्म मे मते ॥ ७५ ॥
निषेधोऽपि ससाक्ष्येव नातः साक्षी निषिध्यते ॥
यन्निषेद्धुमशक्यं तत्साक्षी ब्रह्मेति गम्यताम् ॥७६॥
इतिशब्दनकाराभ्यां वाच्यस्य ब्रह्मता नहि ॥
अतिरिक्तं तु न प्रोक्तं कथं ब्रह्म विबुध्यते ॥ ७७ ॥

---

वीप्सापक्षेतु न दोष इत्याह *वीप्सयेति । अप्रमेयस्य कस्यचिदवशेषे फलितमाह *अत इति ॥ ७२ ॥ ननु सर्वद्वैतनिषेधे तदभावः शिष्येत, नेत्याह *नेति । वीप्सया सर्वदृश्यनिषेधादभावस्यापि दृश्यत्वाद्ब्रह्मव्यतिरिक्तं नावशिष्यत इत्यर्थः ॥७३॥ नन्वेकेन नञा सर्वदृश्यनिषेधोऽपरेण तु ब्रह्मण इति किं न स्यादत आह *नेति द्वाभ्याम् । इदंशब्दपर्यायस्य इतिशब्दस्य दृश्यस्य दृश्यमात्रानुवादकत्वाद्, दृश्यस्य च द्रष्टारं विनाऽसिद्धेस्तद्द्रष्टृत्वेनाभिमतं वस्तु ब्रह्मेत्यर्थः ॥ ७५ ॥ निषेधसाक्षित्वेनापि ब्रह्मसिद्धिमाह *निषेध इति । निषेधावधित्वेनापि तत्सिद्धिमाह *यदिति ॥ ७६ ॥ एवमपि निषेधवाक्यस्य ब्रह्माबोधकत्वाद् ब्रह्मणः श्रौतत्वं न सिद्ध्येदिति शङ्कते *इतिशब्देति ॥ ७७ ॥ परिहरति *स्वत इति । स-

स्वतः प्रत्यक्परागर्थद्वयेनैषाऽनुरञ्जिता ॥
धीर्निषिद्धा परागर्थात्प्रतीचि लभते स्थितिम् ॥७८॥
कीदृक्तत्प्रत्यगिति चेत्ताद्दगीदृगितिद्वयम् ॥
यत्र न प्रसरत्येतत्प्रत्यगित्यवधार्यताम् ॥ ७९ ॥
ज्ञानक्रियाभ्यां व्याप्यं तदित्याकाङ्क्षानिवर्त्तनात् ॥
अप्रमित्सित एकस्मिन्धीस्तिष्ठत्यचिकीर्षिते ॥ ८० ॥
दृश्यत्वादितिशब्दार्थौ प्रमित्सितचिकीर्षितौ ॥

---

र्वस्यापि दृश्यस्य स्वोपादानाचित्संवलितत्वात् बुद्धिवृत्तिरपि स्वभावतश्चिदचिद्विषया भवति, तत्र निषेधवाक्येन सर्वदृश्ये निषिद्धे चिन्मात्रे ब्रह्मणि धीः प्रतिष्ठिता भवतीति परम्परया तस्य श्रौतत्वमिति भावः ॥ ७८ ॥ 'असौ गौरयमश्वः' इतिवद्विशेषेण ब्रह्म न निर्दिष्टं चेत् श्रोतुराकाङ्क्षाशान्तिर्न स्यादिति मत्वा शङ्कते *कीदृगिति ॥ इदं तदिति निर्देष्टुमशक्यं ब्रह्म, इदंशब्दस्य संनिकृष्टवाचित्वात् तच्छब्दस्य परोक्षवाचित्वात् । अतो निर्विशेषापरोक्षत्वेन तत्सिध्यतीति नात्राकाङ्क्षा सम्भवतीति परिहरति *तादृगिति ॥ ७९ ॥ प्रतीचि लभते स्थितिमित्युक्तमेव प्रपञ्चयति *ज्ञानक्रियाभ्यामिति । ज्ञातुं कर्तुं च योग्यत्वात्तज्ज्ञेयं कार्यमिति च येयं दृश्यविषयाऽऽकाङ्क्षा सा ब्रह्मणि सर्वदृश्यनिषेधेनैव निवर्तते, ततश्च ज्ञानक्रिययोरविषये ब्रह्मणि धीः प्रतिष्ठिता भवतीत्यर्थः ॥ ८० ॥ उक्तमेव व्यनक्ति *दृश्यत्वादिति । दर्शनयोग्यत्वादित्यर्थः । कर्तुं योग्यत्वादित्यपि द्रष्टव्यम् । दृष्टुं कर्तुं च योग्यस्य इतिशब्दानूदितसर्वद्वैतस्य ब्रह्मणि निषेधे ज्ञातव्यकर्त्तव्ययोरभा-

तत्त्यागे कृतकृत्यत्वं ज्ञेयकार्यसमाप्तितः ॥ ८१ ॥
आत्मनः स्वप्रकाशत्वाद् बुद्धेस्तत्पक्षपाततः ॥
अन्यापह्नवमात्रे सा पर्यवस्यति शास्त्रगीः ॥ ८२ ॥
सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ॥
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥ ८३ ॥
इति प्राह ब्रह्मसिद्धिकारो वेदरहस्यवित् ॥
अतोऽत्रान्यनिषेधेन ब्रह्मबोधः समाप्यते ॥ ८४ ॥
पटे घटो निषिद्धः सन्पटादन्यत्र तिष्ठति ॥
इदं जगत्तथाऽन्यत्र स्यादित्येतदसङ्गतम् ॥ ८५ ॥
रूपिद्रव्यान्निषिद्धं तद्रूपं नान्यत्र तिष्ठति ॥
रूपं घटस्य भिन्नं सन्नहि क्वाप्युपलभ्यते ॥ ८६॥

---

वात्कृतकृत्यो भवतीत्यर्थः ॥ ८१ ॥ अत्रैव हेत्वन्तरमाह *आत्मन इति । तत्रैवोक्तहेतुमपि समुच्चिनोति *बुद्धेरिति । चिदचिद्विषयस्वभावा धीर्दृश्यनिषेधे चैतन्यपक्षे पतति शान्ताकाङ्क्षा सती तत्रैव स्थिरा भवतीत्यर्थः । अतः सर्वं वेदवाक्यं द्वैतनिषेधमात्रपरमित्याह *अन्येति ॥ ८२ ॥ अत्र मण्डनमिश्रसम्मतिमाह *सर्वेति । वाशब्दोऽवधारणार्थः प्रविलय इत्यनेन सम्बध्यते ॥ ८३ ॥ तन्मतस्यादेयत्वं दर्शयति *वेदेति ॥ ८४ ॥ ब्रह्मणि द्वैतनिषेधेऽपि नाद्वयत्वसिद्धिरित्याशङ्कते *पट इति । विषमो दृष्टान्तः, घटपटयोः परस्परमुपादानोपादेयभावाभावादिति मत्वा परिहरति *एतदिति ॥ ८५ ॥ अत्रानुरूपं दृष्टान्तमाह *रूपीति ॥ ८६ ॥ दार्ष्टान्तिकमाह *रूपिण इति । कार्यस्य स्वोपादानादन्यत्र दृष्टत्वयोगात्तत्रापि निषेधे सत्यप्रपञ्चो न सिध्यतीति नाद्वैतहानिरिति भा-

रूपिणो ब्रह्मणस्तद्वज्जगद्रूपं निराकृतम् ॥
न ब्रह्मणि तथाऽन्यत्र स्थातुमर्हति कुत्रचित् ॥ ८७ ॥
घटवज्जगतो भङ्गो नास्तीति यदि मन्यसे ॥
माऽस्त्वविद्याकल्पितस्य बोधादेव निवृत्तितः ॥ ८८ ॥
जगतोऽस्तित्वमज्ञानं तन्निवृत्तिश्चिदात्मता ॥
जगतस्तन्निवृत्त्या वा कथं द्वैतं प्रसज्यते ॥ ८९ ॥
अयोग्यत्वाद्यथा नीलं रूपं श्रोत्रेण कश्चन ॥
नाग्रहीन्न च गृह्णाति न ग्रहिष्यति शब्दवत् ॥ ९० ॥
तद्वत्सकारणं द्वैतं प्रत्यक्त्वावलोकनात् ॥
प्रतीचि ब्रह्मतत्त्वेऽस्मिन्नाभूदस्ति भविष्यति ॥ ९१ ॥
तदेवं नेति नेतीति वाक्यादेशात्पुमानयम् ॥
निवृत्तसर्वबाह्यार्थः सम्यङ् निर्वात्यथात्मनि ॥ ९२ ॥
अथवा नेति नेतीति य आदेशः स योज्यताम् ॥

---

वः ॥ ८७ ॥ यथा मुद्गरादिना घटः चूर्णीक्रियते एवं बोधेन प्रपञ्चनाशादर्शनात्कथमद्वैतसिद्धिरिति शङ्कते *घटवदिति ॥ एवंविधनाशाभावेऽपि रज्जुसर्पस्योपादानाज्ञानेन सह द्वैतस्याधिष्ठानमात्रतया ज्ञानेन विलयसम्भवान्न द्वैतप्रसक्तिरिति परिहरति *माऽस्त्वित्यादिना ॥ ८८ ॥ ८९ ॥ जगदेकदा निषिद्धमपि पुनः उद्भविष्यति सर्पादौ तथा दृष्टेरित्याशङ्क्य दृष्टान्तेन निराचष्टे *अयोग्यत्वादित्यादिना॥सर्पोपादानाज्ञानस्य तदधिष्ठानधियाऽऽत्यन्तिकलयाभावात् तत्र तदुत्पत्तिरविरुद्धेति भावः ॥९०॥९१॥ उक्तमर्थमुपसंहरति *तदिति । आत्मा निर्वाति सुखात्मना तिष्ठतीत्यर्थः ॥९२॥ निषेधवाक्यं निषेधमात्रपरमित्युक्तम् । इदानीं विधिमुखेन तदैक्यबोधकमिति पक्षान्तरमाह

जीवब्रह्मैक्यसिद्ध्यर्थमहं ब्रह्मेति वाक्यवत् ॥ ९३ ॥
अहंशब्दो बुद्धिवाची साक्षिणं लक्षयेद्यदि ॥
निषेधको नकारोऽपि साक्षिणं लक्षयेत्तथा ॥ ९४ ॥
ब्रह्मशब्दो जगद्धेतुवाची चिन्मात्रलक्षकः ॥
इतिशब्दो जगद्वाची तथा चिन्मात्रलक्षकः ॥ ९५ ॥
अखण्डैकरसे तुल्यो वाक्यार्थौ वाक्ययोर्द्वयोः ॥
उक्तार्थस्यैव दार्ढ्याय द्विर्नेतीति वचः श्रुतम् ॥ ९६ ॥
अथवाऽत्रेति शब्दौ द्वौ जीवेशोपाधिवाचिनौ ॥
नकाराभ्यामुपाधी द्वौ निषिध्य ब्रह्म लक्ष्यते ॥ ९७ ॥
यथा मात्रादिसत्त्वेयं प्रत्यक्संवित्तिसाक्षिका ॥

---

*अथवेति । नेतीतिपदद्वयं कथमैक्यबोधकं तत्राशक्तत्वादित्याशङ्क्य लक्षणया तद्बोधकत्वं वक्तुं तत्र त्वमर्थलक्षकत्वं दृष्टान्तपुरःसरं कथयति *अहमिति ॥ ९३ ॥ ९४ ॥ इममर्थमुत्तरत्र स्फुटीकरिष्यति । इतिशब्दस्य ब्रह्मलक्षकत्वं दृष्टान्तपूर्वकमाह *ब्रह्मेति । यथाऽहंब्रह्मेतिवाक्यस्थब्रह्मपदस्य जगत्कारणत्ववाचिनस्तदुपलक्षितचिन्मात्रलक्षकत्वम्, एवं मूर्त्तामूर्तादिप्रपञ्चवाचकस्येतिशब्दस्य तद्विशेष्यब्रह्मस्वरूपमात्रलक्षकत्वमित्यर्थः ॥ ९५ ॥ एवं सति तत्त्वमादिवाक्यवत् निषेधवाक्येनाप्यैक्यं सिध्यतीत्याह *अखण्डेति ॥ ९६ ॥ नेति नेतीति वाक्यद्वयस्य वैयर्थ्यपरिहाराय पक्षान्तरमाह *अथवेति । ब्रह्मणोपाधिभूतमज्ञानादिकं, जीवोपाधिभूतमन्तःकरणादि च क्रमेण इतिपदाभ्यामनूद्य तदभाववाचकनकारद्वयेन तत्त्वमादिवाक्यवल्लक्षणयाऽखण्डं ब्रह्म बोध्यत इत्यर्थः ॥ ९७ ॥ नञः शुद्धस्वरूपलक्षकत्वमयुक्तं वाच्यार्थसम्बन्धाभावादित्याशङ्क्य

प्रमात्रादेरभावेऽपि तथाऽनस्तेन लक्ष्यते ॥ ९८ ॥
अतिरोहितसंवित्को दृष्टिमात्रात्मकत्वतः ॥
विनैव वाचकं शब्दं बोध्यो लक्षणयाऽप्यतः ॥ ९९ ॥
अनन्यानुभवेनैव भावाभावात्मभूमिषु ॥
प्रत्यक्कूटस्थमात्मानं पश्यन्नास्ते फलात्मतः ॥ १०० ॥
अतो मात्रादिसम्बन्धो यत्र यत्र निवर्तते ॥

---

दृष्टान्तपूर्वकं सम्बन्धमाह *यथेति । यथाऽहं ब्रह्मेत्यत्र वाच्यार्थयोः प्रमातृत्वेश्वरत्वविशिष्टयोः शुद्धचिद्भास्यत्वेन ताभ्यां तत्सम्बन्धिचैतन्यं लक्ष्यते, एवं नञ्वाच्यस्योपाध्यभावस्यापि साक्षिभास्यत्वाद्भास्यभासकभावसम्बन्धस्तुल्य इत्यर्थः । एतदेवाभिप्रेत्य नकारोऽपि साक्षिणं लक्षयोदित्युक्तमिति ध्येयम् । सम्बन्धसिद्धौ फलितमाह *अतस्तेनेति ॥ ९८ ॥ आत्मनः प्रमात्रादिभासकत्वमनुपपन्नम्, प्रमात्राद्यपेक्षासिद्धिकत्वादित्याशङ्क्य तस्य स्वप्रकाशकत्वान्नैवमित्याह *अतिरोहितेति। स्वप्रकाशत्वे चिदेकरसत्वं हेतुमाह *दृष्टीति । वाच्यस्यैव लक्ष्यत्वदृष्टेः कथमवाच्यब्रह्मणो नञ्पदलक्ष्यत्वं तत्राह *विनेति । अतःशब्देन दृष्टिमात्रात्मकत्वादित्युक्तहेतुः परामृश्यते । एकरसत्वेन प्रतीचि शब्दप्रवृत्तिनिमित्तजात्यादेरभावात्स लक्षणयैव बोध्यः । नच वाच्यस्यैव लक्ष्यत्वनियमः क्षीरादिमाधुर्येषु व्यभिचारस्योक्तत्वादिति भावः ॥ ९९ ॥ नन्वात्मनो एकरसत्वे भावाभावसाक्षित्वं कथं स्यादक्षिणकत्तुरेव साक्षित्वादत आह *अनन्येति । आत्मा दृश्यं न पश्यति किन्तु स्वस्वरूपमेवेत्युक्तेऽपि दर्शनकर्तृत्वं स्यादिति तत्राह *फलात्मत इति । चिदेकरसरूपेणेत्यर्थः ॥ १०० ॥ तस्य फलात्मत्वे फलितमाह

तत्र तत्रैकलः प्रत्यक् स्वमहिम्नैव सिद्ध्यति ॥१०१॥
एतद्वस्तु स्वतःसिद्धं प्रमात्राद्यनपेक्षतः ॥
सर्वस्यैव ततः सिद्धेः कथं सिद्ध्येत्तदन्यतः ॥ १०२ ॥
तदित्थं नेति नेतीति वाक्यं ब्रह्मात्मबोधकम् ॥
जीवेशोपाधिनिह्नुत्या लक्ष्याखण्डावसानतः ॥१०३॥
अथात आदेश इति प्रतिज्ञायातिसम्भ्रमात् ॥
निषेधो नेति नेतीति न युक्त इति चेच्छृणु ॥ १०४ ॥
अवाङ्मनसगम्यस्य न निषेधमुखं विना ॥
अस्त्यन्यो मुख्य आदेशो निषेधो युज्यते ततः॥१०५॥
इत्येवमनिर्देरूपं ब्रह्मणः प्रतिपादितम् ॥
निर्नाम्नस्तस्य नामैतत्सत्यसत्यमिति श्रुतम् ॥१०६॥

---

*अत इति । उपाधिसन्निधाने तत्तदुपहितः सन्नुपाधिं पश्यति । निरुपाधिकः सन् स्वयमेव प्रथते। तथा च साक्ष्यसापेक्षस्य साक्षित्वस्यापि कल्पितत्वान्न कौटस्थ्यहानिरिति भावः ॥ १०१ ॥ प्रतीचि स्वप्रकाशत्वं निगमयति *एतदिति । प्रमात्रादेर्जडत्वेन चैतन्यसाधकत्वं न युक्तं चेत्याह *सर्वस्येति ॥ १०२ ॥ निषेधवाक्यार्थमुपसंहरति *तदिति ॥ १०३ ॥ नहीत्याद्यवतारयितुं शङ्कते *अथात इति ॥ अतिसम्भ्रमात् इति तात्पर्येणेति यावत् ॥ १०४ ॥ आदेशवाक्यस्यायुक्ततां प्रत्याह *अवागिति ॥ १०५ ॥

*हि यस्मादिति । नेत्येतस्मान्निषेधरूपान्निर्देशादन्यं निर्देशनं ब्रह्मणः परं न सम्भवति, तस्मादयमेव निर्देशो युक्त इति श्रुत्यक्षरयोजना ॥ ६ ॥

सच्च त्यच्चेति सत्याख्याः प्राणास्ते ब्रह्मणात्मना ॥
आत्मवन्तस्ततो ब्रह्म सत्यसत्यमितीरितम् ॥१०७॥
व्यावहारिकमेवैतन्नामोक्तं न तु वास्तवम् ॥
शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसम्भवात् ॥१०८॥

इति वार्त्तिकसारे द्वितीयाध्यायस्य तृतीयं
ब्राह्मणं समाप्तम् ॥ ३ ॥

---

उक्तमर्थमनुवदन्नथ नामधेयमित्यादि व्याचष्टे इति॥१०६॥ कथं ब्रह्मणः सत्यसत्यत्वमित्याशङ्क्य प्राणशब्दोपलक्षितप्रपञ्चस्य सत्यत्वोपपादनपूर्वकं ब्रह्मणस्तदुपपादयति *सच्चेति ॥ १०७ ॥ १०८ ॥

इति वार्तिकसारटीकायां द्वितीयाध्यायस्य तृतीयं
ब्राह्मणं समाप्तम् ॥



अपोदितः समारोप इत्येवं ब्राह्मणत्रये ॥
ओमित्येवेति सूत्रार्थो ब्राह्मणेऽस्मिन्नुदीर्यते ॥ १ ॥
अपोदितं यदि जगद्ब्रह्मणोऽन्यतया स्थितम् ॥
तदा साङ्ख्यमतप्राप्तिरतः सार्वात्म्यमुच्यते ॥ २ ॥
अथवा ब्रह्म वक्ष्मीति प्रक्रम्य ब्रह्मता पुरा ॥
नेति नेत्यनिदंरूपे प्रतीच्येव समापिता ॥ ३ ॥
इह त्वात्मानमारभ्य सृष्टिस्थित्यन्तकारिणि ॥
ब्रह्मणि प्रत्यगात्मत्वं समापयितुमुद्यमः ॥ ४ ॥
वित्तस्य कर्महेतुत्वात्तत्त्यागो ज्ञानसाधनम् ॥
इति दर्शयितुं प्राह श्रुतिराख्यायिकां शुभाम् ॥५॥
एषणात्रयसंन्यासो वित्तत्यागेन लक्ष्यते ॥
ज्ञानस्य हेतुः संन्यास इति शास्त्रेषु डिण्डिमः ॥ ६ ॥
श्रुतिः–मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा

---

वृत्तमनुवदन्नुत्तरब्राह्मणतात्पर्यमाह *अपोदित इति ॥१॥ ननु दृश्यनिषेधादेव पुमर्थसिद्धेः किं सूत्रार्थप्रतिपादनेन तत्राह *अपोदितमिति ॥ २ ॥ अस्यैव तात्पर्यान्तरं वक्तुं वृत्तं पुनः कीर्त्तयति *अथवेति ॥ ३ ॥ 'तत्त्वमेव त्वमेव तत्' इतिवदुक्तस्यैव जीवेशाभेदस्य व्यतिहारेण दृढीकरणार्थमिदं ब्राह्मणमित्याह *इहेति ॥ ४ ॥ एवं ब्राह्मणतात्पर्यमभिधायाख्यायिकातात्पर्यमाह *वित्तस्येति ॥ ५ ॥ पुत्रेषणात्यागाभावे वित्तत्यागमात्रस्य कथं ज्ञानहेतुत्वमित्याशङ्क्याह *एषणेति। संन्यासस्य ज्ञानाङ्गत्वं "त्यागेनैकेऽमृतत्वमानशुः" 'त्यसजतैव हि तज्ज्ञेयम्' इत्यादिश्रुतिष्वातिप्रसिद्धमित्याह *ज्ञानस्येति ॥ ६ ॥

सच्च त्यच्चेति सत्याख्याः प्राणास्ते ब्रह्मणात्मना ॥
आत्मवन्तस्ततो ब्रह्म सत्यसत्यमितीरितम् ॥१०७॥
व्यावहारिकमेवैतन्नामोक्तं न तु वास्तवम् ॥
शब्दप्रवृत्तिहेतूनां साक्षाद्ब्रह्मण्यसम्भवात् ॥१०८॥

इति वार्त्तिकसारे द्वितीयाध्यायस्य तृतीयं
ब्राह्मणं समाप्तम् ॥ ३ ॥



उक्तमर्थमनुवदन्नथ नामधेयमित्यादि व्याचष्टे इति॥१०६॥ कथं ब्रह्मणः सत्यसत्यत्वमित्याशङ्क्य प्राणशब्दोपलक्षितप्रपञ्चस्य सत्यत्वोपपादनपूर्वकं ब्रह्मणस्तदुपपादयति *सच्चेति ॥ १०७ ॥ १०८ ॥

इति वार्तिकसारटीकायां द्वितीयाध्यायस्य तृतीयं
ब्राह्मणं समाप्तम् ॥

—<>०<>—

अपोदितः समारोप इत्येवं ब्राह्मणत्रये ॥
ओमित्येवेति सूत्रार्थो ब्राह्मणेऽस्मिन्नुदीर्यते ॥ १ ॥
अपोदितं यदि जगद्ब्रह्मणोऽन्यतया स्थितम् ॥
तदा साङ्ख्यमतप्राप्तिरतः सार्वात्म्यमुच्यते ॥ २ ॥
अथवा ब्रह्म वच्मीति प्रक्रम्य ब्रह्मता पुरा ॥
नेति नेत्यनिदंरूपे प्रतीच्येव समापिता ॥ ३ ॥
इह त्वात्मानमारभ्य सृष्टिस्थित्यन्तकारिणि ॥
ब्रह्मणि प्रत्यगात्मत्वं समापयितुमुद्यमः ॥ ४ ॥
वित्तस्य कर्महेतुत्वात्तत्त्यागो ज्ञानसाधनम् ॥
इति दर्शयितुं प्राह श्रुतिराख्यायिकां शुभाम् ॥५॥
एषणात्रयसंन्यासो वित्तत्यागेन लक्ष्यते ॥
ज्ञानस्य हेतुः संन्यास इति शास्त्रेषु डिण्डिमः ॥ ६ ॥
श्रुतिः–मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा

---

वृत्तमनुवदन्नुत्तरब्राह्मणतात्पर्यमाह *अपोदित इति ॥१॥ ननु दृश्यनिषेधादेव पुमर्थसिद्धेः किं सूत्रार्थप्रतिपादनेन तत्राह *अपोदितमिति ॥ २ ॥ अस्यैव तात्पर्यान्तरं वक्तुं वृत्तं पुनः कीर्त्तयति *अथवेति ॥ ३ ॥ 'तत्त्वमेव त्वमेव तत्' इतिवदुक्तस्यैव जीवेशाभेदस्य व्यतिहारेण दृढीकरणार्थमिदं ब्राह्मणमित्याह *इहेति ॥ ४ ॥ एवं ब्राह्मणतात्पर्यमभिधायाख्यायिकातात्पर्यमाह *वित्तस्येति ॥ ५ ॥ पुत्रैषणात्यागाभावे वित्तत्यागमात्रस्य कथं ज्ञानहेतुत्वमित्याशङ्क्याह *एषणेति। संन्यासस्य ज्ञानाङ्गत्वं "त्यागेनैकेऽमृतत्वमानशुः" 'त्यजतैव हि तज्ज्ञेयम्' इत्यादिश्रुतिष्वतिप्रसिद्धमित्याह *ज्ञानस्येति ॥ ६ ॥

अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या-ऽन्तं करवाणीति ॥ १ ॥

सा होवाच मैत्रेयी यन्नु इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति, नेति होवाच याज्ञवल्क्यो, यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ २ ॥

वार्त्ति० ज्ञानादेवामृतत्वं स्यादविद्याध्वंसमात्रतः ॥

---

अक्षरार्थस्तु—याज्ञवल्क्यो नाम ऋषिर्मैत्रेयीति स्वभार्यामामंत्रितवान्, संन्यासो भार्याद्यनुज्ञापूर्वक इति दर्शयितुम् । एवं तामाहूय अरे इति सम्बोध्य अहमस्माद्गार्हस्थ्यात्स्थानादुद्यास्यन्वै उत् ऊर्ध्वं पारिव्राज्याख्यमाश्रमान्तरं यास्यन्नेवास्मि तदर्थं हंत इदानीं ते कात्यायन्या द्वितीयभार्यया सहान्तं परिच्छेदं करवाणि, युवयोर्द्रव्येऽस्वतन्त्रत्वाद् 'वृत्तिभिः संविभज्य स्वान् संन्यसेत्' इत्यादिशास्त्रतश्च विभागं कृत्वा गमिष्यामीत्यर्थः ॥ १ ॥ एवमुक्ता मैत्रेयी ह उवाच 'हे भगो भगवन्! यत् यदि नु इति वितर्के कृत्वाचिन्तया पृच्छामीत्यर्थः । इयं सर्वा सागरपरिक्षिप्ता पृथिवी धनेन पूर्णा स्यात्तेन वित्तेन वित्तसाध्येन कर्मणेति यावत् । त्वदीयसंन्यासेनेवामृता किं स्याम्' ? इति पृष्टः प्रत्युवाच याज्ञवल्क्यो 'नैव स्याः अमृता, किं तर्हि? यथैव लोके उपकरणवतां साधनवतां जीवितं सुखोपभोगसम्पन्नं तथैव तद्वदेव तव जीवितं स्यात्' इति ॥ २ ॥ ३ ॥

एतत्सर्वमभिप्रेत्य "अमृतत्वस्य तु नाशास्ति वित्तेन" इत्येतद्विभजते *ज्ञानादेवेत्यादिना । वित्तपदेन तत्साध्यं कर्म

अमृतत्वस्य तु नाशाऽस्ति वित्तसाध्येन कर्मणा ॥७॥
न कर्म कारणं मुक्तेर्नाग्निस्तापस्य भेषजम् ॥
कर्मभ्यो जन्म नियतं जन्म चेन्निर्वृत्तिः कुतः ॥ ८ ॥
श्रुतिः—सा होवाच मैत्रेयी येनाहं नामृता स्यां कि-
महं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥३॥
वा०–द्विविधः कर्मसंन्यासः फलसाधनभेदतः ।
फलाय ज्ञानिनस्त्यागो जिज्ञासो ज्ञानसिद्धये ॥९॥
ज्ञानित्वाद्याज्ञवल्क्योऽयं जीवन्मुक्तिफलेच्छया ॥
चित्तविक्षेपबहुलं गार्हस्थ्यं त्यक्तुमिच्छति ॥ १० ॥
गृहस्थ एव जनको जीवन्मुक्तोऽस्ति यद्यपि ॥
धीस्वास्थ्यातिशयोऽथापि सर्वकर्मत्यजोऽस्ति हि॥११॥

---

लक्ष्यत इति भावः ॥ ७ ॥ ८ ॥ ननु "सा होवाच"इत्याद्युत्त-रवाक्ये "यद्येव वित्तेनाहममृता न स्यां किं तेन कुर्यां यदेव भगवानमृतत्वसाधनं वेद तदेव मह्यं ब्रूहि"इति सर्वत्यागपूर्वकं मुक्तिहेतुं मैत्रेयी पृच्छति तदनुपपन्नम्, तस्यास्त्यागेऽनधिकारादित्याशङ्क्य तस्य तात्पर्यं वक्तुं संन्यासं विभजते *द्विविध इति ॥ द्वैविध्यमेवाह *फलेति । स्वरूपसुखाविर्भावलक्षणफलार्थत्वेन प्रत्यक्तत्त्वज्ञानार्थत्वेन च कर्मत्यागो द्विधा भिद्यते इत्यर्थः ॥ ९ ॥ *ज्ञानित्वादिति । वक्ष्यमाणोपदेशादिना तस्य ज्ञानित्वे सिद्धे तत्संन्यासः फलायेति निश्चीयत इत्यर्थः ॥ १० ॥ विनाऽपि संन्यासमुक्तफलदृष्टेर्नास्य तद्धेतुत्वमिति शङ्कते *गृहस्थ इति । चित्तविश्रान्तिकाष्ठाप्राप्तेस्त्यागैकसाध्यत्वान्न विद्वत्संन्यासस्य निष्फलत्वेति परिहरति *धीस्वास्थ्येति ॥ ११ ॥ मैत्रेयीसंन्यासस्य

विज्ञानसाधनत्वेन मैत्रेयी वित्तमत्यजत् ॥
तत्त्यागे धीसमाधानाज्ज्ञाने स्यादधिकारिता ॥१२॥
चतुर्थ आश्रमो नार्या नास्ति चेन्माऽस्त्वथाप्यसौ ॥
ज्ञानाङ्गं सर्वसन्त्यागमर्हत्येवानिषेधकात् ॥ १३ ॥

श्रुतिः–स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते, व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥

---

ज्ञानार्थत्वमाह *विज्ञानेति ॥ त्यागस्य दृष्टद्वारा विज्ञानोपकारितामाह *तदिति ॥ १२ ॥ एवमपि संन्यासस्योपवीतादित्यागपूर्वकत्वात्तत्र च स्त्रीणामनधिकरात्मैत्रेय्यास्त्यागप्रतिपादकं वाक्यं कथं घटेतेति शङ्कते *चतुर्थ इति ॥ विविदिषासंन्यासो द्विविधः। दण्डधारणाद्याश्रमरूपः केवलः सर्वकर्मफलत्यागरूपश्चेति। तत्राद्येऽधिकराभावमङ्गीकरोति *माऽस्त्विति। 'अप्रतिषिद्धमनुमतम्'इति न्यायात्। द्वितीये तासामप्यधिकारोऽस्तीत्याह *अथेति ॥ १३ ॥

श्रुत्यर्थस्तु–भार्यापेक्षितं मोक्षोपायं विवक्षुस्तां स्तुवन्नुवाच। बतेत्यनुकम्पायाम्। 'अरे मैत्रयी ! नोऽस्माकं पूर्वं प्रिया सतीदानीमपि प्रियमेव चित्तानुकूलं भाषसेऽत एह्यास्व उपविश व्याख्यास्यामि तवेदममृतत्वसाधनमात्मज्ञानं कथयिष्यामि, व्याचक्षाणस्य व्याख्यानं कुर्वतो मे वाक्यानि अर्थतो ध्यातुमिच्छस्व' ॥ ४ ॥

निदिध्यासनं संन्यासस्यान्वयव्यतिरेकसिद्धं फलमतस्तदत्रानूद्यते न विधीयत इत्याह *निदिध्यासस्वेति। तस्य दृष्टफलत्वं व्यतिरेकमुखेन दृढयति *नही-

वा० ॥ निदिध्यासस्वेति शब्दात्सर्वत्यागफलं जगौ ॥
न ह्यन्यचिन्तामत्यक्त्वा निदिध्यासितुमर्हति ॥१४॥
निरन्तरं विचारो यः श्रुतार्थस्य गुरोर्मुखात् ॥
तन्निदिध्यासनं प्रोक्तं तच्चैकाग्र्येण लभ्यते ॥ १५ ॥
अनात्मन्यरुचिश्चित्ते रुचिश्चात्मनि चेद्भवेत् ॥
पुण्यपुञ्जेन शुद्धं तच्चित्तमैकाग्र्यमर्हति ॥ १६ ॥
शुध्याऽङ्कुरितमैकाग्र्यं विवेकेनाभिवर्द्धयेत् ॥
प्रियाप्रियविवेको ऽतो मैत्रेय्या उपदिश्यते ॥ १७ ॥

श्रुतिः—स होवाच नवा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति । नवा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति आत्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति आत्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति आत्मनस्तु

---

ति ॥ १४ ॥ अत्र निदिध्यासनशब्देन विवक्षितमर्थमाह *निरन्तरमिति । तत्र मुख्यं साधनमाह *तच्चेति ॥ १५ ॥ चित्तैकाग्र्ये को हेतुस्तत्राह *अनात्मनीति । पुण्यपुञ्जसाध्या चित्तशुद्धिरैकाग्र्ये हेतुः । एवंविधशुद्ध्युत्पत्तौ लिङ्गं विषयनैराश्यं तीव्रविविदिषा चेत्यर्थः ॥ १६ ॥ एवं प्रासङ्गिकं समाप्य "न वा अरे" इत्यादिश्रुतेस्तात्पर्यमाह *प्रियेति ॥१७॥ न वा अरे इत्यादिश्रुतौ पतिजायादिषु प्रीतिरौपाधिकी आ-

कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति आत्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्ति आत्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन सर्वमिदं विदितम् ॥ ५ ॥

वा० ॥ पतिजायादिभोग्येषु भोक्तर्यात्मनि चेक्ष्यते ॥
प्रीतिस्तत्र क मुख्येयं क चामुख्येति चिन्त्यताम् ॥१८॥
सदा भूयासमेवाहं मा न भूवं कदाचन ॥
इत्यनौपाधिकीप्रीतिः प्राणिनामात्मनीक्ष्यते ॥१९॥
स्वसम्बन्धोपाधिनैव भोग्ये प्रीतिर्नतु स्वतः ॥
अन्यथा वैरिभोग्येऽपि भोग्यत्वात्प्रीतिरापतेत् ॥२०॥

---

त्मनि तु मुख्येत्युक्तं, तदेवानुभवयुक्तिभ्यां दृढीकर्त्तुमात्मनि पुत्रादौ च प्रीतिविषयत्वं तावत्सर्वानुभवसिद्धमित्याह *पतीति ॥ ततः किमित्याशङ्क्य, किमुभयत्र प्रीतिर्मुख्या उतैकत्र गौणी, अन्तेऽपि कस्या गौणत्वम्? इति विचार्यत इत्याह *तत्रेति ॥ १८ ॥ तत्रात्मप्रीतेर्मुख्यत्वं साधयति *सदेति ॥ १९ ॥ पुत्रादिप्रीतेरौपाधिकत्वमाह *स्वेति । भोग्यत्वादिप्रयुक्तैव तत्रापि प्रीतिरिति वदन्तं प्रति बाधकमाह *अन्यथेति ॥२०॥

**ननु द्वेषो ऽपि वैर्यादावात्मसम्बन्धतो भवेत् ॥**
**वैरिवैरिण्यपि द्वेषः प्रसज्येतान्यथेति चेत् ॥ २१ ॥**
**बाढं, तथाऽप्ययं दोषो नात्मनि द्वेषसाधकः ॥**
**प्रत्युत प्रीतिमेवात्मन्यसौ द्वेषोऽपि साधयेत् ॥२२॥**
**वैरिदुःखप्रदानेन प्रीतेराच्छादकत्वतः ॥**
**द्विष्यते तेन स द्वेषः प्रीतेरात्मनि कल्पकः ॥ २३ ॥**
**एवं विचारतः पुंस आत्मा प्रेयाननात्मनः ॥**

---

आत्मसम्बन्धिभोग्येष्वेव प्रीतिर्जायते इत्येतावताऽऽत्मनः प्रियरूपत्वेऽतिप्रसङ्गं शङ्कते *नन्विति । स्वसम्बन्धिवैरिष्वेव द्वेषदर्शनादुक्तन्यायेनात्मनो द्वेषविषयत्वमपि स्वाभाविकं वक्तव्यम्, तथाचात्मनो दुःखरूपत्वमपि स्यादित्यर्थः । वैरित्वप्रयुक्त एव द्वेष इति वदन्तं प्रति बाधकमाह *वैरीति ॥ २१ ॥ स्वसम्बन्धिवैरिष्वेव द्वेष इत्युक्तमङ्गीकरोति *बाढमिति ॥ तर्ह्यात्मनः स्वतो द्वेषविषयत्वं स्यादिति, नेत्याह *तथाऽपीति । अयं भावः–"एषो ऽस्य परमानन्दः"इत्यादिश्रुत्या परप्रेमास्पदत्वलिङ्गेन, "सुखमस्वाप्सम्" इति परामर्शेन चात्मनः सुखरूपत्वे सिद्धे तद्विरुद्धदुःखरूपत्वायोगात् । स्ववैरिद्वेषः आत्मनः स्वाभाविकद्वेषविषयत्वं साधयितुं नालमिति आत्मनः सुखरूपत्वे एव वैरिद्वेषोऽपि लिङ्गमित्याह *प्रत्युतेति ॥ २२ ॥ वैरिद्वेषस्य स्वात्मनः प्रीतिरूपत्वसाधकत्वमाह *वैरीति ॥ २३ ॥ यद्यपि वैर्युत्पादितदुःखस्य स्वतो दुःसहत्वादेव वैरिणि द्वेषो, न तु स्वतःसिद्धात्मप्रीत्याच्छादकत्वेन, नियामकाभावादिति शक्यते वक्तुं, तथाऽप्युक्तरीत्याऽऽत्मनः सुखरूपत्वान्न द्वेषविषयत्वमित्यत्रैव तात्पर्यमुक्तविचारफलमाह *एवमिति । *प्रे-

मूढस्तु तद्विपर्यासात्प्रेयः पुत्रादि मन्यते ॥ २४ ॥
अविचारेण पुत्रादौ या प्रतीतिस्तां विचारतः ॥
आत्मन्येवोपसंहृत्य चित्तैकाग्र्यं विवर्द्धयेत् ॥ २५ ॥
ऐकाग्र्यमचलं कृत्वा निदिध्यासनकारणम् ॥
आत्मा द्रष्टव्य इत्येतत्सूत्रं व्याख्यातुमाददे ॥ २६ ॥
आहात्मशब्दः प्रत्यञ्चं तथा लोकेऽनुभूतितः ॥
अनेनात्रात्मशब्देन प्रमेयं निर्दिदिक्षितम् ॥ २७ ॥
द्रष्टव्य इति निर्दिष्टा प्रमितिर्दर्शिताऽधुना ॥
अज्ञातज्ञापनं तव्यप्रत्ययेनाभिधीयते ॥ २८ ॥
अज्ञात आत्मा वेदान्तजन्यज्ञानेन मीयते ॥

---

यानिति । प्रेयस्त्वेन प्रतिभातीत्यर्थः । अविवेकिभ्रममनुवदंस्तं विचारेण निवर्तयेदित्याह *मूढ इत्यादिना ॥२४॥२५॥

श्रुतौ पत्युः कामायेत्यादौ कामशब्दः प्रयोजनवचनः । ब्रह्मणः कामायेत्यत्र ब्रह्मशब्दो ब्राह्मणजातिवाची । सर्वस्य कामायेति अत्र सर्वग्रहणमुक्तानुक्तार्थम् ॥ ५ ॥

'आत्मा वा अरे'इत्यादिवाक्यस्य तात्पर्यमाह *ऐकाग्र्यमिति । अनेकजन्मकृतसुकृतैः शुद्धचित्तस्योक्तयुक्त्यनुभवाभ्यामनात्मप्रीतिमुपसंहृत्य आत्मन्येव वक्ष्यमाणविचारसाधनमैकाग्र्यं सम्पादितवतो विद्यासूत्रं विचारितुम् आत्मा वेत्यादिवाक्यं प्रवृत्तमित्यर्थः ॥२६॥ तत्रात्मपदार्थमाह *आहेति । वाच्यार्थमुक्त्वा विवक्षितमाह *अनेनेति ॥२७॥ द्रष्टव्य इत्यत्र प्रकृत्यर्थमाह *द्रष्टव्य इति । 'तथा लोके ऽनुभूतितः'इत्यत्र याऽऽत्मानुभूतिरुक्ता सा द्रष्टव्य इत्यत्र प्रकृत्यंशेनानुदितेत्यर्थमाह *अज्ञात इति ॥ २८ ॥ वाक्यार्थमाह *अज्ञात आत्मेति । अहमिति प्रतीयमान

इत्येवैषोऽत्र वाक्यार्थो नाप्रवृत्तप्रवर्तनम् ॥ २९ ॥
नन्वहम्प्रत्ययेनात्मा वेदान्तश्रवणात्पुरा ॥
विज्ञात इति चेत्, मैवं, सार्वात्म्यानवबोधनात् ॥ ३० ॥
लिङ्गदेहपरिच्छेदरूपग्राहिण्यहम्मतिः ॥
सार्वात्म्यमात्मनस्तत्त्वं तदज्ञातमहंधिया ॥ ३१ ॥
सर्वासूपनिषत्स्वेतत्सार्वात्म्यं प्रतिपाद्यते ॥
कार्यज्ञेयसमाप्तिः स्यात्सार्वात्म्यस्यावबोधतः ॥ ३२ ॥
नाविध्वस्तं तमोऽस्त्यस्ति नच ज्ञानमनुत्थितम ॥
नानिवृत्तस्तथाऽनर्थो नानवाप्तं सुखं तथा ॥ ३३ ॥
इत्यज्ञातज्ञापनाख्यो विधिरत्रोपवर्णितः ॥
अप्रवृत्तप्रवृत्त्याख्यो विधिर्नात्रोपपद्यते ॥ ३४ ॥
विधेयं वा फलं वाऽस्य न सम्भवति किञ्चन ॥
ब्रह्मतद्धीस्तदभ्यास उपायो वा विधीयताम् ॥ ३५ ॥
न ब्रह्म नित्यसिद्धत्वाद्विधातुं शक्यते क्वचित् ॥

---

आत्मा सर्वात्मत्वेनाज्ञातत्वाद्वेदान्तप्रमेय इत्यस्य वाक्यस्य विवक्षितार्थ इत्यर्थः ॥ २९ ॥ इममेवार्थमाक्षेपसमाधानाभ्यां स्फुटयति *नन्वित्यादिना ॥ ३० ॥ ३१ ॥ आत्मनः सर्वात्मत्वस्याहंधीगम्यत्वाभावे फलितमाह *सर्वास्विति । सार्वात्म्यज्ञानफलमाह *कार्येति ॥ ३२ ॥ उक्तमेव प्रपञ्चयति *नेति ॥ ३३ ॥ वाक्यार्थमुपसंहरति *इतीति ॥ एकदेशिमतं निरस्यति *अप्रवृत्तेति ॥ ३४ ॥ तत्र हेतुमाह *विधेयमिति । तत्र विधेयासम्भवमुपपादयितुं विकल्पयति *ब्रह्मेति । ब्रह्म वा तत्साक्षात्कारो वा ब्रह्मधीसन्ततिर्वा तदूध्यानोपायो वा विधेय इत्यर्थः ॥ ३५ ॥ आद्यं प्रत्याह *नेति ।

अभूतभावियागादिर्विधिमर्हति नेतरः ॥ ३६ ॥
नित्यं न भवनं यस्य यस्य वा नित्यभूतता ॥
न तयोर्विधियोग्यत्वं खपुष्पाकाशयोरिव ॥ ३७ ॥
तद्धीर्विधेयेत्यस्मिंश्च पक्षे धीः केतिकथ्यताम् ॥
अन्तःकरणवृत्तिर्वा किंवा तत्फलवेदनम् ॥ ३८ ॥
वृत्तिः प्रत्यक्चिदाकारा किंवा सार्वात्म्यगोचरा ॥
आद्ये विधिरपूर्वो वा नियमो वाऽथवेतरः ॥ ३९ ॥
प्रत्यक्चिदाकारतायाः प्राप्तत्वान्नास्त्यपूर्वता ॥
समाहिता व्युत्थिता वा वृत्तिः सर्वा चिदाकृतिः॥४०॥
न समाहितधीः काश्चित्प्रतीचोऽन्यत्प्रपश्यति ॥
व्युत्थितात्मापि चात्मानं पश्यन्नेवान्यदीक्षते ॥४१॥
एवं च नित्यप्राप्तत्वान्नियमोऽपि न युज्यते ॥

---

ब्रह्मणो विध्ययोग्यतां वक्तुं तदयोग्यं वस्तु दर्शयति *अभूतेति ॥ ३६ ॥ यागादिविलक्षणं तु न विध्यर्हमिति सदृष्टान्तमाह *नित्यमिति । तथा च ब्रह्मणोऽपि नित्यसिद्धत्वाद्विध्ययोग्यत्वं युक्तमिति भावः ॥ ३७ ॥ द्वितीयमनूद्य शाखाचङ्क्रमणव्यावृत्त्यर्थमनेकधा विकल्पयति *तद्धीरित्यादिना ॥ ३८ ॥ ३९ ॥ प्रत्यक्तत्त्वगोचरान्तःकरणवृत्तावपूर्वविधिरिति पक्षं निराह *प्रत्यगिति ॥ नित्यप्राप्तत्वमेवाह *समाहितेति ॥ ४० ॥ तत्र समाहितधियस्तावत्प्रत्यक्चिदाकारत्वमविवादमित्युक्त्वा व्युत्थितधियोऽपि तत्साधयति *व्युत्थितेति॥४१॥बुद्धिवृत्तौ नियमविधिरिति पक्षं दूषयति *एवमिति। व्युत्थानदशायां वृत्तेश्चिदाकारत्वस्याप्राप्तत्वात्तत्र नियमविधिर्युक्त इत्याशङ्क्य व्युत्थितात्माऽपि चात्मानं पश्यन्नेवेत्युक्तं

न काचिद् वृत्तिरस्त्यत्र चिदाकारविवर्जिता ॥ ४२ ॥
नानाद्रव्यैर्यथा योगे वियोगे च सदा घटः ॥
वियत्सम्पूर्ण एवास्ते न वियद्वर्जितः क्वचित् ॥ ४३ ॥
बाह्यशब्दादिभिर्योगे वियोगे च तथा धियः ॥
प्रत्यक्चैतन्यसम्पूर्त्तिर्नित्येत्येतत्स्वसाक्षिकम् ॥ ४४ ॥
अनात्मदृष्टिव्यावृत्त्यै परिसङ्ख्येति चेत्, न तत् ॥
न खल्वनात्मविभ्रान्तिं विधिर्वारयितुं प्रभुः ॥ ४५ ॥
प्रमाणजन्यज्ञानेन विना विधिशतैरपि ॥
रज्जुसर्पादिविभ्रान्तिर्नहि क्वापि निवर्तते ॥ ४६ ॥
सार्वात्म्यगोचरा वृत्तिरप्यत्र न विधीयते ॥
यतो पुरुषतन्त्रा सा तस्मादत्र कथं विधिः ॥ ४७ ॥
कर्तृतन्त्रा यदि भवेत्तदा योषाऽग्निबुद्धिवत् ॥
क्रिया स्यात्, क्रियया नैव काप्यविद्या निवर्तते ॥ ४८ ॥
फलसंवेदनं नापि विधातुमिह शक्यते ॥
संवेदनस्य नित्यत्वात्फलत्वं तूपचारतः ॥ ४९ ॥

---

सदृष्टान्तमुपपादयति *न काचिद् वृत्तिरित्यादिना ॥ ४२ ॥ ॥ ४३ ॥ ४४ ॥ बुद्धिवृत्तौ परिसङ्ख्याविधिरिति पक्षं दूषयति *अनात्मेत्यादिना ॥ ४५ ॥ ४६ ॥ प्रत्यक्चिदाकारबुद्धिवृत्तौ विधित्रयमपि निरस्य सर्वात्मत्वगोचरायां तस्यां विधिरिति पक्षमनूद्य प्रत्याह *सार्वात्म्येति ॥ ४७ ॥ सार्वात्म्यधियोऽपि पुंतन्त्रत्वमाशङ्क्य तथात्वे बाधकमाह *कर्त्रिति ॥ अस्तु तर्हि क्रियैवेति तत्राह *क्रिययेति । रज्जुसर्पस्य घंटाघोषादिना निवृत्त्यदृष्टेरिति भावः ॥ ४८ ॥ वृत्त्यभिव्यक्तं चैतन्यं विधेयमिति पक्षं निरस्यति *फलेति । क-

प्रमाणमप्रमाणं च प्रमाभासश्च सर्वदा ॥
चैतन्याभासितं तच्च चैतन्यं फलमुच्यते ॥ ५० ॥
मानादिव्यभिचारेऽपि संविदव्यभिचारिणी ॥
अतो नित्यतया नैतद्विधेयं फलवेदनम् ॥ ५१ ॥
विधेयोऽभ्यास इति चेन्नाशक्यानुपयोगतः ॥
अविज्ञाते ब्रह्मतत्त्वे तद्बुद्ध्यावर्त्तनं कथम् ॥ ५२ ॥
ज्ञातेऽप्यविषयप्रत्यगनाकारस्य तस्य धीः ॥
नैवावर्तयितुं शक्या देवतामूर्तिबुद्धिवत् ॥ ५३ ॥
अभ्यासस्योपयोगोऽपि किं जीवब्रह्मरूपता ॥
मुक्तौ चेतोऽनुवृत्तिर्वा किंवा ऽविद्यानिवर्त्तनम् ॥५४॥

---

थं तर्हि नित्यस्य प्रमाणफलत्वं तत्राह *फलत्वमिति ॥ ४९ ॥ तस्य मुख्यत्वार्थं कार्यत्वमेव कल्प्यताम्, इत्याशङ्क्य फलसंवेदनस्य नित्यत्वे युक्तिं वक्तुं तत्र स्वरूपमाह *प्रमाणमिति । प्रमाणादि यच्चैतन्येन स्फुरति तदेव चैतन्यं फलशब्देनोच्यत इत्यर्थः ॥ ५० ॥ तस्य नित्यत्वे युक्तिमाह *मानादीति । मातृमानादीनां तदभावानां च साक्षित्वेन फलचैतन्यस्य नित्यत्वे फलितमाह *अत इति ॥ ५१ ॥ ब्रह्मधीसन्ततिर्विधेयेति पक्षमनूद्य निरस्यति *विधेय इति । अशक्यत्वादनुपयुक्तत्वाच्चेत्यर्थः । कथमशक्तिरिति चेत्, किमज्ञाते ब्रह्मणि सा विधेयोत ज्ञाते ? तत्राद्यं प्रत्याह *अविज्ञात इति ॥ ५२ ॥ अन्त्यं निरस्यति *ज्ञातेऽपीति । विषयत्वमङ्गीकृत्याप्याह *अनाकारस्येति ॥ ५३ ॥ अशक्यत्वमुपपाद्य अनुपयुक्तत्वमुपपादयितुं विकल्पयति *अभ्यासस्येति । *जीवस्य ब्रह्मात्मतेति यावत् ॥ ५४ ॥ आद्यं प्रत्याह

न जीवब्रह्मताऽभ्याससापेक्षा किन्तु सा स्वतः ॥
न घटादेर्घटादित्वं बुद्ध्यभ्यासमपेक्षते ॥ ५५ ॥
भावनोपचितं चेतो न कैवल्येऽनुगच्छति ॥
तस्येहैव समुच्छित्तेस्तद्धेत्वज्ञानहानतः ॥ ५६ ॥
भावनाभावितं चेतो यत्र जन्मान्तरप्रदम् ॥
तत्र चेतोऽनुवृत्तिः स्यात्सा कैवल्ये कथं भवेत् ॥५७॥
ब्रह्मात्मैकत्वविज्ञानमविद्यामात्मनि स्थिताम् ॥
सकृज्जातं न चेद्धन्ति ज्ञानमेव न तद्भवेत् ॥ ५८ ॥
एकाश्रयैकविषयौ ज्ञानमोहौ तथा सति ॥
अबाधितं तमोऽत्रास्ते इत्युक्तिर्जडवत्कृता ॥ ५९ ॥
ज्ञानोपायो विधेयश्चेन्नोपायस्याप्रतीतितः ॥

---

*नेति । स्वतःसिद्धस्याभ्यासानपेक्षत्वे दृष्टान्तमाह *न घटादेरिति ॥ ५५ ॥ सगुणेश्वरोपास्त्या तत्तादात्म्यं प्राप्तस्य भोगाय चेतसोऽनुवृत्तिवद्ब्रह्मविदोऽपि विहिताभ्याससहितं चेन्मनो मुक्तावनुवर्तेतेति तदनुवृत्तये ज्ञानाभ्यासे विधिरिति द्वितीयं प्रत्याचष्टे *भावनेति । *इहेति ज्ञानसत्तावस्थोक्तिः ॥ ५६ ॥ सगुणं ब्रह्म प्राप्तस्य त्वज्ञानानिवृत्तेर्मनोऽनुवृत्तावरोधान्न तस्य दृष्टान्ततेत्याह *भावनेति ॥ ५७ ॥ तृतीयमपवदति *ब्रह्मेति ॥ ५८ ॥ जन्ममात्रेणाज्ञानानिवर्तकत्वेऽपि कदाचित्तन्निवर्तकत्वाज्ज्ञानस्य ज्ञानत्वमिति तत्राह *एकेति । न हि यस्मिन्देशे प्रकाशस्तत्रैव तमोऽव्यावृत्तं तद्दृष्टचरमित्यर्थः ॥ ५९ ॥ ब्रह्म तद्धीस्तदभ्यासः ज्ञानोपायो वा विधीयत इति यद्विकल्पचतुष्टयमुक्तं तत्र चतुर्थमनूद्य प्रत्याह *ज्ञानेति । अप्रतीतिमेवाह *आत्मेति । अत्र ज्ञानोपायत्वेनाभिमतश्रव-

आत्मा द्रष्टव्य इत्युक्तौ ज्ञानोपायो न भासते॥६०॥
विधेः फलं च नास्त्येव तत्किं मात्वं पदान्वयः ॥
नैरपेक्ष्यमवच्छेदहानिर्वा ऽज्ञानबाधनम् ॥ ६१ ॥
मात्वं मानान्तराप्राप्तवस्तुतत्त्वावबोधतः ॥
सिध्यत्येवोपनिषदां प्रामाण्ये विधिनाऽत्र किम् ॥६२॥
विधेरपीह मानत्वं साध्यसाधनबोधनात् ॥
न विधित्वात्,अन्यथा स्याद्बाधितोऽपि विधिः प्रमा ६३
आरण्यतिलसम्बन्धियवाग्वा जुहुयादिति ॥
पूर्वपक्षविधिं वेदोऽनूद्य बाधितवानमुम् ॥ ६४ ॥

---

णादिवाचकपदाभावादित्यर्थः ॥ ६० ॥ द्रष्टव्यवाक्यं विधिपरमित्यत्र विधेयाभावमुक्त्वा फलाभावमप्याह *विधेरिति । तमेवोपपादयितुं विकल्पयति *तत्किमिति ॥ ६१ ॥ कर्मकाण्डे सिद्धबोधिवाक्यानां विधिशेषत्वेन प्रामाण्यदृष्टेरुपनिषदामपि सिद्धबोधित्वात्तत्प्रामाण्यार्थं विधिरित्याद्यः पक्षस्तं प्रत्याह *मात्वमिति ॥ ६२ ॥ अज्ञातार्थबोधित्वेनैव विधेरपि प्रामाण्यं वाच्यमित्याह *विधेरिति ॥ ६३ ॥ बाधितमेवोदाहरति *अरण्येति । 'जर्तिलयवाग्वा जुहुयात्' इत्यत्र अजक्षीरेण जुहोतीत्युक्त्वा अजक्षीरस्यैव होमसाधनत्वात् अरण्यतिलसम्बन्धियवाग्वा होमसाधनत्वमविवक्षितमिति न्यायतो(१)निर्णीतम् । विधेरेव प्रमात्वप्रयोजकत्वे तस्यापि स्वार्थे प्रामाण्यं स्यात् इत्यर्थः । *बाधितवानिति । 'अनाहुतयो वा एते जर्तिलाः' इति वाक्येनेत्यर्थः ॥ ६४ ॥

---

(१) आग्निहोत्रे श्रूयते–"जर्तिलयवाग्वा जुहुयात्, गवीधुकयवाग्वा वा, न ग्राम्यान् पशून् हिनस्ति नारण्यान् । अथो

पदान्वयः क्रियामात्रमाकाङ्क्षति विधिं तु न ॥
अस्त्यस्यस्मीत्येवमादि सुलभं तत्क्रियापदम् ॥ ६५ ॥
कर्मवाक्येष्विवैतेषु वेदान्तेष्वनपेक्षता ॥
नान्यत्रापेक्षितुं योग्यं सरित्तीरफलोक्तिवत् ॥ ६६ ॥
फलानि चक्षुर्योग्यानि योग्यं ब्रह्म तु कस्य ते ॥

---

पदान्वयार्थं विधिरिति द्वितीयकल्पं निराह *पदेति ॥ ६५ ॥ तृतीयमनुवदति *कर्मेति । नास्तीत्यत्र सिद्धबोधित्वादिति शेषः । ततः किं ? तत्राह *अन्यत्रेति । तथाच निरपेक्षत्वाय विधिरित्यर्थः ॥ ६६ ॥ वेदान्ताः सापेक्षाः सिद्धबोधित्वात्, नदीतीरफलोक्तिवत्, इत्युक्ते मानान्तरयोग्यार्थत्वमुपाधिरित्याह *फलानीति । उपाधेः साधनव्यापकत्वमाशङ्क्याह *योग्यमिति । किंशब्दसूचितं विकल्पं

---

खल्वाडुः । अनाहुतिर्वै जर्तिला गवीधुकाश्चेत्यजक्षीरेण जुहोतीति । पयसा अग्निहोत्रं जुहुयात्" इति । जर्तिला आरण्यास्तिलाः । गवीधुका आरण्या गोधूमाः । तयोरुभयोर्विकल्पः श्रौत एव ।

"अनाहुतिः"—इति पूर्वयोः दूषितत्वात् होमाभावः तृतीयः पक्षः । न च-अत्र 'जर्तिलगवीधुकयोरनाहुतिः' इत्यनेन पर्युदासः सम्भवति, आहुतिपदान्वितस्य नञ्पदस्य जर्तिलगवीधुकपदान्वयायोगात् ।

पयोविधिः चतुर्थः पक्षः । एतेषां परस्परविरुद्धानां चतुर्णां गत्यन्तराभावात् षोडशीग्रहणाग्रहणवत् विकल्प इति प्राप्ते—

ब्रूमः—पयोविधिना सह जर्तिलादेरेकवाक्यत्वेनार्थवादत्वं युक्तम् । ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोरग्निहोत्रं प्रत्याहुतित्वं नास्ति, पयसस्तु तदस्ति 'इत्थं महाभागं पयः' इति स्तूयते, तस्मात् अर्थवादः ॥

इति पूर्वकाण्डे दशमाष्टमे अधिकरणमालायामुक्तम् ।

प्रत्यक्षस्यानुमादेर्वा ? नाद्यो, रूपादिवर्जनात् ॥६७॥
नेतीत्यस्थूलमित्यादिवाक्याद्योऽर्थोऽवगम्यते ॥
योगिप्रत्यक्षतो वाऽयं कथं गम्येत तद्वद ॥ ६८ ॥
यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ॥
पुरः सूक्ष्मादिदृष्ट्या स्यान्न रूपे श्रोत्रवृत्तिता ॥६९॥
तस्मादिन्द्रियगम्येषु शिल्पं कुर्वन्तु योगिनः ॥
अतीन्द्रियं ब्रह्मतत्त्वं वाक्यादेव विजानते ॥ ७० ॥
व्याप्तिग्रहादिराहित्यान्नानुमानादियोग्यता ॥
नैरपेक्ष्यमतः सिद्धं वेदान्तानां विधेरिव ॥ ७१ ॥
जीवावच्छेदहानिश्च विधिना नैव सिध्यति ॥
अविद्यया कल्पितस्य विद्ययैव निवर्तनात् ॥ ७२ ॥
अज्ञानबाधनं च स्याज्ज्ञानादेव विधेर्न तु ॥

---

स्पष्टयति *प्रत्यक्षस्येति ॥ ६७ ॥ 'प्रत्यक्षयोग्यं ब्रह्म' इत्यत्रापि किमस्मदादिप्रत्यक्षस्य योग्यम् उत योगिप्रत्यक्षस्येति विकल्प्याद्यं निराकुर्वन् योगिप्रत्यक्षस्याप्ययोग्यतां दर्शयितुं ब्रह्मणो निर्विशेषत्वमाह *नेतीत्यस्थूलमिति ॥ ६८ ॥ निर्विशेषमपि योगिप्रत्यक्षयोग्यं स्यात्, तत्प्रत्यक्षस्यातिशयादित्याशङ्क्य तस्याप्ययोग्येऽतिशयशून्यत्वमाह *यत्रेति । धर्मब्रह्मादिविषयेऽपि योगिनामिन्द्रियं प्रवर्तते चेत् तेषां रूपेऽपि श्रोत्रेन्द्रियप्रवृत्तिः स्यादित्यतिप्रसङ्गमाह *नेति ॥ ६९ ॥ ७० ॥ निर्धर्मकत्वादेव ब्रह्म नानुमानादियोग्यमपीत्याह *व्याप्तीति । तस्य मानान्तरायोग्यत्वे फलितमाह *नैरपेक्ष्यमिति । अतस्तदर्थमपि न विधिरित्यर्थः ॥ ७१ ॥ चतुर्थं प्रत्याह *जीवेति ॥ ७२ ॥ पञ्चममपवदति *अज्ञानेति ।

**द्वैविध्यमप्यविद्यायां न युक्तं परकल्पितम् ॥ ७३ ॥**
**अविद्यैका ज्ञानहेया विधिहेया तथेतरा ॥**
**इत्येवं कल्पयन्त्येतत्तच्चाद्वैते कथं भवेत् ॥ ७४ ॥**
**विषयस्य विभेदेन ज्ञानानां स्याद्यथा भिदा ॥**
**अज्ञानस्य तथा वाच्या नाद्वैते विषयेऽस्ति सा ॥७५॥**
**विधेयतत्फलाभावादप्रवृत्तप्रवर्तनम् ॥**
**दुर्घटं, तेन पूर्वोक्तमज्ञातज्ञापनं भवेत् ॥ ७६ ॥**
**ननु चिद्राहिता वृत्तिर्नास्तीति प्रतिपादितम् ॥**
**उत्पन्नैव ततो विद्या किं शास्त्रेणेति चेच्छृणु ॥ ७७ ॥**
**उत्पन्नमपि विज्ञानं प्रमातृत्वाद्युपग्रहात् ॥**
**अनुत्पन्नवदाभाति तद्व्युत्पत्तेः पुरा नृणाम् ॥७८॥**

ज्ञाननिवर्त्याज्ञानव्यतिरेकेण विधिनिरस्याज्ञानमप्यस्ति अतो विधिरर्थवानिति तत्राह *द्वैविध्यमिति ॥ ७३ ॥ अयुक्तत्वमेवोपपादयितुं परपरिकल्पितप्रक्रियामनुवदति *अविद्येति ॥ ७४ ॥ कथंशब्दसूचितामनुपपत्तिं स्फोरयति *विषयस्येति । अज्ञानस्यानादित्वेन कारणकृतभेदाभावात् घटपटज्ञानवद्विषयकृता भिदा वाच्या सा चाद्वैतविषये नास्तीति द्वैविध्यकल्पनमयुक्तमित्यर्थः ॥ ७५ ॥ द्रष्टव्यवाक्यस्य विधिपरत्वनिरसनमुपसंहरति *विधेयेति । तस्य विधिपरत्वाभावे फलितमाह *तेनेति ॥ ७६ ॥ विधिनिराकरणसमये बुद्धिवृत्तेश्चिदाकारता नित्यप्राप्तेत्युक्तं, तदनुवदन् तत्पक्षे शास्त्रवैयर्थ्यं स्यादिति शङ्कते *नन्विति ॥ ७७ ॥ प्रतीचि सदा सिद्धमपि ज्ञानं विहितश्रवणादिना ज्ञानोत्पत्तेः पूर्वं प्रमातृत्वादियोगात्परिच्छेदाभिमानात्सर्वेषामप्यप्राप्तवद्भाति, अतः श्रवणाद्यनुष्ठेयमिति शास्त्रमर्थवदेवेति परिहरति *उत्पन्नमिति ॥ ७८ ॥ उक्त-

व्युत्पाद्यते पुमाञ्छास्त्रादन्वयव्यतिरेकतः ॥
व्युत्पादनमिदं प्रोक्तमज्ञातज्ञापनं बुधैः ॥ ७९ ॥
अविचारितसिद्ध्येतदज्ञातज्ञापनं त्वयि ॥
नाद्वैते वास्तवं युक्तमितरव्यवहारवत् ॥ ८० ॥
अव्युत्पत्तिर्बन्धहेतुर्व्युत्पत्तिर्बन्धमोचनी ॥
आत्मव्युत्पत्तये तस्माद्विधत्ते श्रवणादिकम् ॥ ८१ ॥
आत्मेत्येवेति सूत्रस्य द्विधा व्याख्या पुरोदिता ॥
आत्मतत्त्वपरत्वेन तद्विचारपरत्वतः ॥ ८२ ॥
आत्मा द्रष्टव्य इत्युक्त्या तत्त्वधीरुपदर्शिता ॥
श्रोतव्य इत्यादिना तु विचार उपदिश्यते ॥ ८३ ॥
श्रुत्यर्थाविष्कृतेर्हेतुः शब्दशक्तिर्विवेककृत् ॥

---

मेव व्यनक्ति *व्युत्पाद्यत इति । शास्त्रस्य व्युत्पादनार्थत्वे कथमज्ञातज्ञापनार्थत्वमुक्तमित्याशङ्क्य तदेव तदित्याह *व्युत्पादनमिति ॥ ७९ ॥ व्युत्पादनस्यावश्यकत्वे तस्य सत्यत्वं वक्तव्यम्, असत्यस्य बाष्पादेः सम्यग्धीजनकत्वादृष्टेः तथाचाद्वैतहानिरिति तत्राह *अविचारितेति । *इतरेति । स्वप्नव्यवहारवदित्यर्थः । नच सत्यस्यैव प्रमाजनकत्वनियमः, बाष्पादिजन्यधियोऽपि विषयाबाधप्रमात्वाङ्गीरादिति भावः ॥ ८०॥ शास्त्रावैयर्थ्यमुपसंहरति *अव्युत्पत्तिरिति ॥ ८१ ॥ 'श्रोतव्यः' इति वाक्यं व्याचिख्यासुस्तदुपयोगित्वेन विद्यासूत्रार्थमुक्तं स्मारयति *आत्मेति ॥ ८२ ॥ तत्र प्रथमव्याख्यानुसारेण द्रष्टव्यवाक्यं प्रवृत्तं, द्वितीयव्याख्यानुसारेण श्रोतव्यवाक्यप्रवृत्तिरित्याह *आत्मेति ॥ ८३ ॥ एवं पातनिकामुक्त्वा 'श्रोतव्यः' इत्यस्यार्थमाह* श्रुतीति । ऐ-

श्रुतिलिङ्गादिको न्यायः प्रोक्तः श्रोतव्य इत्यतः ॥८४॥
अर्थासम्भावनोच्छेदी तर्को मननमीरितम् ॥
वेदशास्त्राविरोध्यत्र तर्को ग्राह्यो न चेतरः ॥ ८५ ॥
अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ॥
ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेत्युदीरणात् ॥ ८६ ॥
द्रष्टव्य इति विज्ञानमुद्दिश्य श्रवणं तथा ॥

---

क्यधीसाधनं शक्तितात्पर्यनिर्णायकैः श्रुत्यादिभिर्ब्रह्मात्मनि वेदान्ततात्पर्यनिरूपणं श्रवणं 'श्रोतव्यः' इत्यनेन विधीयत इत्यर्थः ॥ ८४ ॥ 'मन्तव्यः' इत्यत्र मननशब्दार्थमाह *अर्थासंभावनेति ॥ ८५ ॥ 'निदिध्यासितव्यः' इत्यत्र निदिध्यासनशब्दार्थमाह *अपरायत्तेति । शमदमादिसहिते श्रवणमनने कृत्वा स्थितस्य वाक्यार्थज्ञानान्तरायहीनस्यानायासेन वाक्यीयोत्थबोधो निदिध्यासनशब्देनोच्यते इत्यर्थः ॥ तस्य ध्यानवाचित्वं किं न स्यादित्याशङ्क्य वाक्यशेषविरोधान्मैवमित्याह *ध्यानेति । न चोपक्रमानुरोधेन विज्ञानशब्दः करणव्युत्पत्त्या ध्यानार्थ एव किं न स्यादिति शङ्क्यम्, निर्विशेषवस्तुध्यानस्य निदिध्यासनशब्दवाच्यत्वेनाक्लृप्तत्वात्, अत्रैव तत्कल्पने 'संदिग्धे तु वाक्यशेषात्' इति न्यायेन ज्ञानवाचित्वकल्पनस्यैवोचितत्वात् । न च विध्यभावे ध्यानस्य ज्ञानसाधनत्वासिद्धिः, समाहितो भूत्वेत्यादिश्रुतेस्तत्सिद्धेर्निदिध्यासितव्य इति च ध्यानसहितश्रवणादिफलभूतवाक्यार्थज्ञानोक्तेरिति भावः ॥८६॥ निदिध्यासनशब्दस्य ज्ञानार्थत्वेन 'द्रष्टव्यः' इत्यनेन पौनरुक्त्यं स्यादित्याशङ्क्य एतदेव ज्ञानं तत्र साधनविधानायानूदितमित्याह *द्रष्टव्यमिति । निदिध्यासनोक्ति-

मननं च विधायाथ विज्ञानमवधिं जगौ ॥ ८७ ॥
श्रवणादिक्रिया तावत्कर्त्तव्येह प्रयत्नतः ॥
यावद्यथोक्तं विज्ञानमाविर्भवति भास्वरम् ॥ ८८ ॥
अनन्यायत्तविज्ञाने श्रवणादेरुपायतः ॥
ज्ञाने नापेक्षते किञ्चित्प्रतीचोऽनुभवात्परम् ॥ ८९ ॥
ऐकात्म्याज्ञानविध्वंसाव्यतिरेकेण नेष्यते ॥
ऐकात्म्यविज्ञानफलं प्राप्तमेव हि तत्त्वतः ॥ ९० ॥
नन्वनात्मा न विज्ञात आत्मदर्शनमात्रतः ॥

---

फलमाह *अथेति ॥ ८७ ॥ तस्य ध्यानसहितश्रवणाद्यवसानभूमित्वमेव स्फोरयति *श्रवणादीत्यादिना । इहेत्यात्मोक्तिः । प्रयत्नः शमादिसाहित्यम्, तत्रावृत्तिं सूचयति *यावदिति । भास्वरत्वं फलाशिरस्कत्वम् । स्वतःसिद्धात्मज्ञाने लब्धे प्रत्यगानन्दलाभादनन्तरं न किञ्चिद्विद्वानपेक्षतेआत्मलाभस्मृतेरित्यर्थः ॥८८॥ ॥८९॥ आत्मधियो मुक्तिफलत्वे मुक्तेः साधनाधीनत्वादनित्यतेत्याशङ्क्याह *ऐकात्म्येति । अज्ञानध्वंसादन्यज्ञानफलानुपगमे हेतुमाह *प्राप्तमिति । ऐकात्म्यं कैवल्यं नित्यप्राप्तमतस्तदावरकाज्ञानस्य ज्ञानान्निरासान्मुक्तेस्तत्कार्यत्वमौपचारिकमित्यर्थः ॥ ९० ॥ 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदꣳ सर्वं विदितम्' इत्युत्तरवाक्ये श्रवणादिजन्यज्ञानस्य सर्वविषयत्वमुक्तं तद्व्याख्यातुं व्यावर्त्यामाशङ्कामाह *नन्विति । अनात्माज्ञाने फलितमाह *तत इति । विद्यासूत्रे कृत्स्नतायाः विद्याफलत्वमुक्तं विरुद्ध्येत विदुषः सार्वात्म्यज्ञानाभावादित्यर्थः । उत्तरवाक्यतात्पर्यं दर्शयन्फलितमाह *मैवमिति । कल्पितस्याधिष्ठानव्यतिरेकेणाभावात्सर्वाधिष्ठाने ब्रह्मणि ज्ञाते

ततोऽकृत्स्नत्वदोषश्चेन्मैवं सर्वस्य वेदनात् ॥ ९१ ॥
आत्मनो दर्शनेनेदं दृष्टं स्यादखिलं जगत् ॥
प्रत्यङ्मात्रैकयाथात्म्यात्कार्यकारणवस्तुनः ॥ ९२ ॥
कार्यात्मा कारणात्मा च द्वावात्मनौ परात्मनः ॥
प्रत्यग्याथात्म्यमोहोत्थौ मोहे नष्टे विनश्यतः ॥९३॥
मोहतत्कार्ययोर्बाधे प्रत्यक् सर्वमितीर्यते ॥
अतः प्रतीचि विज्ञाते सुलभं सर्ववेदनम् ॥ ९४ ॥
तत्रैवं सति यो मूढः समस्तव्यस्तरूपताम् ॥
ज्ञातव्यां मन्यते तत्तु वेद एव निषेधति ॥ ९५ ॥

श्रुतिः—ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद, लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद, देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद, भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदꣳ सर्वं यदयमात्मा ॥ ६ ॥

वार्ति०–यो विप्रजातिश्चैतन्यादन्यद्ब्रस्त्वभिमन्यते ॥
कैवल्यात्तं पराकुर्याद्विप्रजातिः पराङ्मुखम् ॥ ९६ ॥
ब्राह्मणोऽहमिति भ्रान्त्या बृहस्पतिसवादिषु ॥

---

सर्वं वस्तुनस्तत्त्वं ज्ञातमेवेत्यर्थः ॥ ९१ ॥ ९२ ॥ 'कार्यकारणवस्तुनः' इत्युक्तं विवृणोति *कार्येति । तयोर्मोहजत्वे फलितमाह *मोह इति । वाक्यार्थमुपसंहरति *अत इति॥९३॥९४॥ ब्रह्म तं परादादित्यादिवाक्यमवतारयति *तत्रैवमिति । प्रकृतं ब्रह्म सप्तम्यर्थः ॥ ९५ ॥ अक्षरार्थं योजयति । *य इति ॥९६॥

प्रवृत्तो लभते जन्मेत्येषैवास्य पराक्रिया ॥ ९७ ॥
विप्रत्ववत्क्षत्रलोकदेवभूतादिकं जगत् ॥
स्वस्माद्भेदेन पश्यन्तं क्लेशयेदपराधिनम् ॥ ९८ ॥
यदस्ति तन्न जानाति यन्नेहास्ति तदीक्षते ॥
इत्येवमपराधोऽस्य विद्यते भेददर्शिनः ॥ ९९ ॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ १०० ॥
अपोदितत्वाज्जात्यादिदर्शनस्येह किं पुनः ॥
द्रष्टव्य इत्यतो वक्ति सर्वाखण्डत्वदर्शनम् ॥१०१॥
प्रत्यक्त्वेन य आभाति प्रत्यग्बुद्धिप्रमाणकः ॥
तावन्मात्रैकयाथात्म्यमुक्तं जात्यादि दृश्यताम्॥१०२॥
एवं श्रोतव्य आत्मा ऽयं समाप्तः श्रवणे विधिः ॥
कथं मन्तव्य इत्यत्र दुन्दुभ्यादिनिदर्शनम् ॥ १०३ ॥

---

ब्रह्म ब्राह्मणजातिरात्मनोऽन्यत्र आत्मनो भिन्नेति यो वेद तं सा जातिः कैवल्यात्पराङ्मुखं कुर्यादिति श्रुत्यर्थः ॥ ६ ॥

पराकरणप्रकारमाह *ब्राह्मण इति ॥९७॥ क्षत्रं तं परादादित्यादिवाक्यानामनेन समानार्थतामाह । विप्रत्ववदिति ॥९८॥ अपराधं विवृणोति *यदिति । ब्राह्मणत्वादिः सप्तम्यर्थः ॥ ९९ ॥ यदस्तीत्यात्मत्वं यन्नास्तीत्यनात्मत्वं भेददर्शनमेवापराध इत्यत्र व्यासवचनं प्रमाणयति *य इति ॥१००॥ इदं ब्रह्मेत्यादिवाक्यं प्रश्नपूर्वकमादत्ते *अपोदितत्वादिति ॥१०१॥ अवतारितवाक्यार्थमाह । प्रत्यक्त्वेनेति ॥१०२॥ स यथादुन्दुभेरित्यादिवृत्तानुवादपूर्वकमवतारयति *एवमिति ॥ श्रोतव्यः इति यः श्रवणविधिः स उक्तरीत्या समाप्त इत्यर्थः ॥ १०३ ॥

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि-मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवर-श्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् (वेदान्तः) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्याः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहित-श्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्डः प्रकाशाख्यव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । ११

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भगवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः—प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित १

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । १

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

THE
CHOWKHAMBÂ SANSKṚIT SERIES;
A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
NO. 257.

# बृहदारण्यकवार्तिकसार ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया
टीकाया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या
वझे इत्युपनामकेन भाऊशास्त्रिणा
संशोधितः ।

---

# BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SHASTRI VAJHE.

FASCICULUS VII–७.

---

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: OTTO HARRASSOWITZ, LEIPZIG:
PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1918
*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२५७


१ अस्यां चौखम्बा— संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ...


साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्ड ... ... ... ... २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२
(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैत-दर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाश-सहितं सम्पूर्णम् ( वेदान्तः ) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्री-गागाभट्टविरचिता । तर्कपादः(मीमांसा) २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविर-चिता सम्पूर्णः ( मीमांसा ) २
(८) ब्रह्मसूत्रभाष्यम्- बादरायणप्रणीतवेदान्त-सूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्या-ख्यानम् । सम्पूर्ण । ( वेदान्तः ) ६
(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २
(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामु-नमुनिभिर्विरचितम् । सम्पूर्ण( वेदान्तः )१
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टार-काचार्यसंगृहीतः । आचार्यचित्सुखमुनि-विरचितव्याख्योपेतः ( वेदान्तः ) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादि-सप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५
(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... ... २
(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसो-मेश्वरविरचिता । ( मीमांसा ) १६

श्रुतिः-स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दा-ञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ७ ॥

वा०—स्थितौ जनौ लयेऽप्येतज्जगदात्मातिरेकतः ॥
नास्तीत्येतत्क्रमेणात्र दृष्टान्तैः प्रतिपाद्यते ॥ १०४ ॥
यथा दुन्दुभिशब्दत्वसामान्यादुत्थितात्पृथक् ॥
नादातुं शक्नुयात्कश्चिद्विशेषानसिकोशवत् ॥१०५॥
तद्वदात्मातिरेकेण नात्मीयोऽर्थो मनागपि ॥
यतः समीक्षितुं शक्यस्तेनासौ रज्जुसर्पवत् ॥१०६॥
सामान्यं तद्विशेषाश्च तद्विशेषा इति त्रयः ॥
दुन्दुभिस्तस्य चाघातः शब्दश्चेत्येभिरीरिताः॥१०७॥
सामान्यं दौन्दुभः शब्दो वीरादिरससंयुतः ॥

---

दुन्दुभ्यादिदृष्टान्ततात्पर्यमाह *स्थिताविति। "स यथा दुन्दुभेः, स यथाऽऽर्द्रैधाग्नेः,स यथा सर्वासामपाम्"इति दृष्टान्तत्रयेणेत्यर्थः॥४॥

श्रुतौ स यथेत्यत्र स इति दृष्टान्तार्थः । आत्मनः सर्वात्मत्वे दृष्टान्त उच्यत इत्यर्थः ॥ दुन्दुभिदृष्टान्तं सदार्ष्टान्तिकं व्याचष्टे *यथेति द्वाभ्याम् । दुन्दुभेर्हन्यमानस्येति पदद्वयेन तज्जशब्दसामान्यं लक्ष्यते, ततो जाताः विशेषाः बाह्याः शब्दास्तान्निष्कृष्यासिमिव कोशाद्ग्रहीतुं सुशिक्षितोऽपि नालम् अतस्ते सामान्ये कल्पिताः, सर्पादिरिव रज्ज्वामित्यर्थः॥१०५॥ ॥ १०६ ॥ स यथेत्यादि ग्रहणायेत्यंतं व्याख्याय दुन्दुभ्याघाते-त्यादि व्याचष्टे *सामान्यं तदिति। तद्विशेषाः सामान्यं प्रति विशेषाणामवान्तरं सामान्यानामपि विशेषाः॥१०७॥ त्रिविधमपि शब्दमुदाहरति *सामान्यमिति । *वीरादीति । नवरससामा-

विशेषस्तद्विशेषास्तु नीचोच्चादिविभेदिनः ॥१०८ ॥
नीचादिभेदिनः शब्दा वीरादिरससंयुते ॥
अन्तर्भवन्ति सोऽप्यन्तर्भूतः स्याद्दौन्दुभध्वनौ॥१०९

श्रुतिः—स यथा शङ्खस्य ध्मायमानस्य न बाह्या-ञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्म-स्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छ-क्नुयाद् गृहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

वा.–एवं शङ्खेऽपि वीणायां योजयित्वा ततः पुनः ॥

---

न्ययुक्तःसङ्ग्रामादिगतो भेर्यादिध्वनिरवान्तरविशेष इत्यर्थः॥१०८
तत्रोत्तरोत्तरस्य पूर्वपूर्वस्मिन्नन्तर्भावमाह *नीचेति ॥ १०९ ॥

दुन्दुभिशब्दितशब्दत्वस्य वा घातपदलक्षितावान्तरशब्दसामा-न्यस्य वा ग्रहणेन विशेषशब्दो गृहीतो भवतीति श्रुतियोजना॥७॥

उक्तरीत्योत्तरवाक्यद्वयमपि योज्यमित्याह *एवमिति । तत्रापि शङ्खस्य ध्मायमानस्येति पदद्वयेन शङ्खशब्दसामान्यं लक्षयित्वा ततो निष्कृष्य तद्विशेषाणां दुर्ग्रहत्वाच्छङ्खशब्दत्व-ग्रहणेन तदवान्तरसामान्यग्रहणेन वा सर्वशङ्खशब्दविशेषो गृहीतो भवति, एवमुत्तरवाक्यद्वयमपि योज्यमित्यर्थः। स्थि-तिकाले ब्रह्मव्यतिरेकेण न जगदस्तीत्यस्यैकोदाहरणेन सिद्धेः शङ्खवीणोदाहरणं व्यर्थमित्याशङ्क्य दुन्दुभ्यादिशब्दसामान्या-नामपि केवलशब्दत्वापेक्षया विशेषत्वात्तेषामपि सामान्येऽन्त-र्भावं वक्तुमुदाहरणत्रयमित्याह *ततः पुनरिति । अन्यत्र शब्द-

शङ्खदुन्दुभिवीणाख्यध्वनीनन्यत्र योजयेत् ॥ ११० ॥
ध्वानित्रयं महाशब्दसामान्येऽन्तर्भवेदिति ॥
विवक्षया शङ्खभेरिवीणास्तिस्र उदीरिताः ॥ १११ ॥
यथा विशेषसामान्यतत्सामान्यपरम्पराः ॥
शब्दे स्थिताः, तथा सर्वमुपलब्धिस्थमीक्ष्यते ॥११२॥
उपलब्धोऽस्ति सन्कुम्भो लम्बोष्ठो देशकालवान् ॥
पूर्वपूर्वातिरेकेण नोत्तरार्थोऽनुभूयते ॥ ११३ ॥
एवं चिदन्वयात्सर्वं चित्यध्यस्तं तथासति ॥
चिदात्मैवास्य सर्वस्य तात्त्विकं रूपमिष्यताम्॥११४॥
स्थितिकाले यथैकात्म्यं शक्यते ज्ञातुमञ्जसा ॥
यथोक्तन्यायतस्तद्वदुत्पत्तावपि शक्यते ॥ ११५ ॥
धूमार्चिर्विस्फुलिङ्गादिविभागजननात्पुरा ॥
अग्निरेव न धूमाद्यास्तथैकात्म्यं जनेः पुरा ॥ ११६ ॥
स्वार्थसाधनयत्नादीननपेक्ष्य यथाऽसृजत् ॥

---

त्वसामान्ये ॥ ११० ॥ १११ ॥ दृष्टान्तोक्तमर्थमनूद्य दार्ष्टान्तिके योजयति *यथेति । यथा शब्दत्वसामान्यव्यतिरेकेण तदवान्तरसामान्यं वा तद्विशेषा वा नानुभूयन्ते, एवं सामान्यविशेषात्मकं जगत् महासामान्यस्थानीयब्रह्मव्यतिरेकेण नानुभूयत इत्यर्थः ॥ ११२ ॥ एतदेव स्फुटयति *उपलब्ध इति ॥११३॥ फलितमाह *एवमिति ॥११४॥ स यथाऽऽर्द्रैधाग्नेरित्यादेस्तात्पर्यमाह *स्थितीति। दृष्टान्तत्रयमुक्तन्यायः ॥११५॥ अवतारितवाक्ये दृष्टान्ताक्षराणि व्याकुर्वन्दार्ष्टान्तिके योजयति *धूमार्चिरिति ॥ ११६ ॥ परस्य कारणत्वे फलेन भाव्यं, धीपूर्वकारिणो विफलप्रवृत्त्ययोगात् । न चासहायस्य यत्नादि-

धूमादीन्हुतभुक् तद्वदृगादीत्प्रत्यगीश्वरः ॥ ११७ ॥
नार्थं बुध्वा वेदसृष्टिः कालिदासादिवाक्यवत् ॥
किन्तु श्वास इवायत्नात्स्यादतो ऽपौरुषेयता ॥११८॥
मन्त्राश्चतुर्विधा ज्ञेया ऋग्वेदादिगिरोदिताः ॥

श्रुतिः-स यथा ऽऽर्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनु-

---

शून्यस्य कारणतेति साधनमपि किञ्चिद्वाच्यम्, तथाचाप्तकामत्वहानिरिति केचित्, तान्प्रति एतदेव वाक्यमुत्तरमिति तात्पर्यान्तरमाह *स्वार्थेति । तस्य ताटस्थ्यं व्यावर्तयति *प्रत्यगिति ॥ ११७ ॥ वेदस्येश्वरकृतत्वे कालिदासाद्युक्तिवदनित्यत्वमाशङ्क्य नित्यश्वासितश्रुतिं व्याकुर्वन्परिहरति *नेति ॥ ११८ ॥ ऋग्वेद इत्यादेरर्थमाह *मन्त्रा इति ।

अक्षरार्थस्तु—अत्रापि स इति दृष्टान्तार्थः । उत्पत्तावपि ब्रह्मव्यतिरेकेण जगन्नास्तीत्यत्र दृष्टान्त उच्यत इत्यर्थः । यथा ऽऽर्द्रैधाग्नेरार्द्रैरेधोभिरिद्धोऽग्निरार्द्रैधाग्निस्तस्मादभ्याहितादभितःपुरतो निक्षिप्तात्, इदं च विशेषणमग्नेर्धूमादिहेतुत्वं सर्वानुभवसिद्धमिति प्रदर्शनार्थम् । पृथक् नानाप्रकाराः, धूमशब्दोऽर्चिरादेरुपलक्षणम् । धूमादयो विनिश्चरन्ति, एवमेवारे मैत्रेयि अस्य परमात्मनः प्रकृतस्य महतोऽनवच्छिन्नस्य परमार्थस्य निश्वसितं पुरुषनिःश्वासवदप्रत्नेनैव ततो जातमेतत् । किं तत्? उच्यते यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसश्चतुर्विधं मन्त्रजातमितिहास इति ब्राह्मणमेव उर्वशीपुरूरवसोः संवादादि 'उर्वशी हाप्स-

व्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ॥ १० ॥

ब्राह्मणं चेतिहासादिरूपमष्टाविधं भवेत् ॥ ११९ ॥
प्रसिद्धेर्वेतिहसाद्या ऋग्वेदाद्युपबृंहकाः ॥
निखिलाऽपि जगत्सृष्टिः शब्दसृष्ट्योपलक्ष्यते॥१२०॥
प्रज्ञानव्यतिरेकेण यथैव स्थितिसर्गयोः ॥
वस्त्वन्तरं न सम्भाव्यं प्रलयेऽपि तथोच्यते ॥ १२१॥

श्रुतिः—स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषां रसानां जिह्वैकायनमेवꣳ सर्वेषां रूपाणां चक्षुरेकायनमेवꣳ सर्वेषां शब्दानां

---

राः’ इत्यादि । पुराणम् ‘असद्वा इदमग्रआसीत्’ इत्यादि । विद्या देवजनविद्याद्याः नृत्यगीतादिशास्त्रमिति यावत् । उपनिषदः ‘प्रियमित्येतदुपासीत’ इत्याद्याः । श्लोकाः ब्राह्मणप्रभवा मन्त्राः ‘तदेते श्लोकाः’ इत्याद्याः । सूत्राणि वस्तुसङ्ग्रहवाक्यानि ‘आत्मेत्येवोपासीत’ इत्येवमाद्यानि । अनुव्याख्यानानि वस्तुसङ्ग्रहवाक्यविवरणानि, यथा विद्यासूत्रस्य चतुर्थाध्यायः । व्याख्यानानि मन्त्रविवरणानि ॥ १० ॥

एतत्सर्वमभिप्रेत्याह *ब्राह्मणं चेति। चोऽवधारणे ॥११९॥ इतिहासादिशब्दा भारतादिवाचकाः तत्रैव प्रसिद्धेः, तेषामपि व्यासादिद्वारा ईशजन्यत्वाद्वेदार्थोपबृंहकत्वाच्चेति पक्षान्तरमाह *प्रसिद्धेरिति । नामसृष्ट्याऽनुक्तसर्वसृष्टिरप्युपलक्ष्यत इत्याह—*निखिलेति ॥ १२० ॥ स यथा सर्वासामित्याद्यवतारयति *प्रज्ञानेति ॥ १२१ ॥ तत्र समुदायतात्पर्यं वक्तुम् अ-

श्रोत्रमेकायनमेवꣳसर्वेषां सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानां हृदयमेकायनमेवꣳ सर्वेषां कर्मणां हस्तावेकायनमेवꣳसर्वेषां मानन्दानामुपस्थमेकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳसर्वेषां मध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम्॥११॥

स्वाभाविकात्यन्तिकौ द्वौ प्रलयौ जगतस्तयोः ॥
स्वाभाविकः स्यात् कल्पान्ते बोधादात्यन्तिको मतः १२२
समुद्रखिल्यौ दृष्टान्तौ क्रमात्प्रलययोर्मतौ ॥
लीयतेऽब्धौ जलं यद्वत्तथा ब्रह्मणि तज्जगत् ॥ १२३ ॥
साक्षाद्वाऽथ प्रणाड्या वा जलमब्धौ विलीयते ॥
साक्षाद् गङ्गादिका नद्यस्तत्प्रणाड्या जलान्तरम्॥१२४॥
तथैव कारणं वस्तु साक्षाद्ब्रह्मणि लीयते ॥
कार्यं तु कारणद्वारेत्येतदत्र विवक्षितम् ॥ १२५ ॥
अतश्चरमकार्याणां स्पर्शादीनां स्वकारणे ॥
त्वगादौ विलयस्तद्वत्त्वगादेश्च स्वकारणे ॥ १२६ ॥
त्वग्ग्राह्यं स्पर्शसामान्यं त्वक्शब्देनोपलक्ष्यते ॥

---

यनशब्दार्थप्रलयस्य द्वैविध्यमाह *स्वाभाविक इति ॥ १२२ ॥

समुद्रखिल्याविति स यथा सर्वासामपां समुद्र एकायनं स यथा सैंधवखिल्य इति वाक्यद्वयोक्तावित्यर्थः । एवं प्रलयद्वैविध्यमुक्त्वा वक्तृतात्पर्यमाह *लीयत इति ॥ १२३ ॥ दृष्टान्तमुपपादयति *साक्षाद्वेति ॥ १२४ ॥ दृष्टान्तोक्तप्रणाडीं ब्रह्मण्यप्याह *तथेत्यादिना । सर्वासामपामब्धौ साक्षाल्लयासम्भवेन प्रणाड्याऽपि लयस्य विवक्षितत्वादुत्तरवाक्येषु सामान्यद्वारा स्वकारणे लयोऽपि विवक्षित इत्यर्थः ॥१२५॥१२६॥

सामान्यात्तद्विशेषाणां जातत्वात्तत्र तल्लयः ॥१२७॥
काठिनः पार्थिवः स्पर्शः शीतोष्णौ जलवह्निजौ ॥
मृदुर्वायोरिति स्पर्शविशेषा इह कीर्तिताः ॥ १२८ ॥
लीयन्ते स्पर्शसामान्ये तद्विशेषा यथा तथा ॥
गन्धादीनां च सामान्ये तद्विशेषलयो भवेत् ॥१२९॥
गन्धरूपरसस्पर्शशब्दसामान्यपञ्चकम् ॥
सङ्कल्प्यते तन्मनसा बुध्या निश्चाय्यते तथा ॥१३०॥
सङ्कल्पानां तु पञ्चानां मनःशब्दाभिधे लयः ॥
भवेत्सङ्कल्पसामान्ये निश्चये योजयेत्तथा ॥ १३१ ॥
सङ्कल्पो निश्चयश्चैतौज्ञानशक्तेः समुद्गतौ ॥
ज्ञानशक्त्याख्यसामान्ये लीयेते तावुभावपि ॥ १३२ ॥

---

ननु त्वचः स्पर्शहेतुत्वात्कथं स्पर्शानां त्वचि लय स्तत्राह *त्वग्ग्राह्यमिति। त्वक्शब्दस्य स्पर्शत्वलक्षकत्वे उक्तदोषनिवृत्तिमाह *सामान्यादिति ॥ १२७॥ स्पर्शविशेषान्विभजते *कठिण इति॥१२८॥सर्वेषां रसानां जिव्हैकायनमित्यादिवाक्यचतुष्टयस्य जिव्हादिशब्दैः तद्ग्राह्यरसादिसामान्यं लक्षयित्वा तद्विशेषाणां सामान्यद्वारा मूलकारणे लय इति पूर्ववाक्येन समानार्थतामाह *लीयन्त इति। सर्वेषां सङ्कल्पानामित्यादि व्याचष्टे *गन्धेत्यादिना ॥ १२९ ॥ गन्धादिविषयसङ्कल्पविशेषाणां मनःशब्दवाच्ये सङ्कल्पसामान्ये लयमुक्त्वा गन्धादिविषयनिश्चयविशेषाणां हृदयशब्दवाच्ये निश्चयसामान्ये लय इत्याह *निश्चये योजयेदिति ॥ १३० ॥ १३१ ॥ श्रुतौ सङ्कल्पविद्याशब्दितमनोहृदययोरपि हेतुं दर्शयन् तयोरपि स्वकारणे लयमाह *सङ्कल्प इति ॥ १३२ ॥ एवं सर्वेषां कर्मणामित्यत्रैवंश-

ज्ञानशक्तिविकासानां ज्ञानशक्तौ यथा लयः ॥
क्रियाशक्तिविकासानां क्रिया शक्तौ तथा भवेत्॥१३३॥
आदानत्यागभेदानां कर्मणां हस्तसञ्ज्ञके ॥
आदानत्यागसामान्ये लयोऽन्यत्राप्यसौ नयः॥१३४
विसर्गानन्दगमनभाषणानां लये सति ॥
प्राणे गत्यादिसामान्ये पञ्चकं प्रविलीयते ॥ १३५ ॥
क्रियाशक्त्याख्यसामान्ये लीयते प्राणपञ्चकम् ॥
ज्ञानशक्तिक्रियाशक्त्योर्लयो ब्रह्मणि मायिनि ॥१३६॥
विषयाणां लयः प्रोक्तो नेन्द्रियाणां श्रुताविति ॥

---

दार्थमाह *ज्ञानेति ॥ १३३ ॥ अवशिष्टपदानि योजयति *आदानेति । आदानं ग्रहणं, त्यागो दानम् । एवं हस्तनिर्वर्त्यकर्मविशेषाणां हस्तपदलक्षितकर्मसामान्ये लय इत्यर्थः । उक्तन्यायमानन्दादिवाक्यचतुष्टयेऽप्यतिदिशति *अन्यत्राप्यसौ नय इति । तत्राप्युपस्थादिनिर्वर्त्यक्रियाविशेषाणां उपस्थादिशब्दलक्षिततत्वत्क्रियासामान्ये लय इत्यर्थः ॥ १३४ ॥ पायूपस्थपादवाक्निर्वर्त्यक्रियाविशेषान्दर्शयन्तेषां तत्तत्क्रियासामान्ये लयानतरं क्रियासामान्यानां प्राणाधीनोत्पत्तिस्थितिकत्वात्स्वहेतौ पञ्चवृत्तिप्राणे लयमाह *विसर्गेति ॥ १३५ ॥ पञ्चवृतिप्राणस्यापि स्वकारणे लयमाह *क्रियेति । एवं सङ्कल्पनिश्चयविशेषाणां मनोबुद्ध्योर्लयमुक्त्वा तयोर्ज्ञानशक्तौ लय उक्तः । क्रियासामान्यानां प्राणे लयमुक्त्वा प्राणस्य क्रिया शक्तौ लय उक्तः । इदानीं तयोः शक्त्योर्लयस्थानमाह *ज्ञानेति ॥१३६॥ एवमपि न सर्वजगल्लयसिद्धिः, श्रुतौ चक्षुरादिलयस्यानुक्तत्वादिति शङ्कते *विषयाणामिति । त्वगादीनां स्पर्शादिजातीयत्वात्स्पर्शादिलयोक्त्या त्वगादिलयोऽप्युक्त एवेति श्रुतेरा-

न मन्तव्यं यतोऽक्षाणां ग्राह्यजातीयतेष्यते ॥१३७॥
एवं वाय्वाख्यसामान्यं ग्राह्यग्राहकरूपतः ॥
स्पर्शत्वक्त्वेन भिन्नं स्यादेवं सर्वत्र योज्यताम्॥१३८॥
ग्राहकग्राह्यनियम एकजातित्वसाधकः ॥
ग्राह्यग्राहकयो रूपदीपयोस्तैजसत्वतः ॥ १३९ ॥
सर्वभूतात्मकत्वात्तु सर्वार्थग्रहणं द्वयोः ॥

---

शय इत्याह *नेति ॥ १३७ ॥ करणानां ग्राह्यजातीयत्वमाह *एकमिति । अयमर्थः—अव्याकृतादुत्पन्नानि सूक्ष्मभूतानि शब्दस्पर्शादिगुणविशिष्टस्थूलभूतात्मना श्रोत्रत्वगात्मना च परिणमितानि श्रोत्रादिकरणानां शब्दादिविषयाणां चैकजातीयत्वमिति । अयमेव सूक्ष्मो वायुः पूर्वोक्तस्पर्शसामान्यशब्देनाप्युच्यते इत्याह *वाय्वाख्यसामान्यमिति । *एवमिति । सूक्ष्माकाशः शब्दसामान्यपदवाच्यः शब्दविशेषविशिष्टस्थूलनभोरूपेण शब्दग्राहकरूपेण च विभक्तस्तिष्ठति । एवं तेजोवन्नान्यपि योज्यानीत्यर्थः ॥ १३८ ॥ शब्दादेः श्रोत्रादेश्चैकजातीयत्वे हेत्वन्तरमाह *ग्राहकेति । अयमत्र प्रयोगः—चक्षुः तैजसं रूपादिपञ्चसु मध्ये रूपस्यैवाभिव्यञ्जकत्वाद्दीपवत् । घ्राणं पार्थिवं रूपादिषु गन्धस्यैवाभिव्यञ्जकत्वात् कुङ्कुमगन्धव्यञ्जकघृतवत् । रसनम् आप्यं रसादिषु रसस्यैवाभिव्यञ्जकत्वाल्लालावत् । त्वक् वायवीयं स्पर्शादिषु स्पर्शस्यैवाभिव्यञ्जकत्वाद्व्यजनवायुवत् । श्रोत्रं नाभसं रूपादिषु शब्दस्यैवाभिव्यञ्जकत्वाद्वेणुविवरवदिति सजातीययोरेव ग्राह्यग्राहकभाव इति नियमः ॥ १३९ ॥ अन्नमयं हीत्यादिश्रुत्याऽन्नमात्रकार्ययोर्मनोबुद्ध्योरपि शब्दादिग्राहित्वदृष्टेरित्याशङ्क्य

मनोबुध्योरिति ज्ञेयमन्यथा तदसम्भवात् ॥ १४० ॥
मनोऽन्नमयमित्येषा श्रुतिः पार्थिवरूपताम् ॥
ब्रूते मनसि नैवान्यभूतात्मत्वं निवारयेत् ॥ १४१ ॥
विषयप्रलयेनाक्षप्रलयस्योदितत्वतः ॥
लयः सर्वस्य जगतो ब्रह्मणीत्यत्र सुस्थितम् ॥१४२॥
एवं मन्तव्य आत्माऽयमार्थासम्भवनुत्तये ॥
दुन्दुभ्याद्युक्तदृष्टान्तन्यायमार्गेण यत्नतः ॥ १४३ ॥
अपरायत्तबोधाख्यनिदिध्यासनासिद्धये ॥
आत्यन्तिकलयं वक्तुं खिल्यदृष्टान्त उच्यते ॥१४४॥
श्रुतिः—स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानु विलीयेत न हास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अरे इदं महद्भूतमनन्तमपारं वि-

---

तयोरपि पञ्चभूतकार्यत्वमाह *सर्वेति । विमते मनोबुद्धी भूतपञ्चकसजातीये तद्ग्राहकत्वात् यद्यद्ग्राहकं तत्तत्सजातीयं यथा रूपग्राहको दीपस्तत्सजातीय इत्यर्थः । अनुभवसिद्धहेत्वनुपपत्तिं विपक्षे बाधकत्वेनाह *अन्यथेति ॥ १४० ॥ तर्ह्युक्तश्रुतेः का गतिरित्याशङ्क्य तत्र तन्मात्रकार्यताऽनुक्तेरन्नशब्दोऽनुक्तभूतोपलक्षणमित्याह *मन इति ॥ १४१ ॥ एवं तेजोमयी वागित्यत्र वाक्शब्दोपलक्षितकर्मेन्द्रियपञ्चकस्य तेजःशब्दोपलक्षितपञ्चसूक्ष्मभूतकार्यतोक्तेस्तेषामपि तत्र लय उक्तप्राय इति मत्वा श्रुत्या सर्वलयोऽप्युक्त इत्युपसंहरति *विषयेति ॥ १४२ ॥ उक्तं मननस्वरूपमनुवदंस्तत्फलमाह *एवमिति । यत्नत इत्यावृत्तिं सूचयति ॥ १४३ ॥ स यथेत्याद्यवतारयति *अपरायत्तेति ॥ १४४ ॥ तत्र सैन्धवखि-

ज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

वा० सामुद्रमम्भो लवणक्षेत्रे भानुविपाकतः ॥
लवणोपलतां प्राप्य सैन्धवः खिल्य उच्यते ॥१४५॥
स खिल्य उदधौ क्षिप्तस्तापशान्तौ विलीयते ॥
अशक्यः पुनरुद्धर्तुं खिल्यरूपेण पूर्ववत् ॥ १४६ ॥
खिल्योद्धृत्यै नीरमध्यात्त्वाददीत यतो यतः ॥
तत्र तत्र रसो लभ्यः खिल्यस्त्वेष न कुत्रचित्॥१४७॥
सामुद्रस्याम्भसस्तापात्खिल्यतैवं परात्मनः ॥
आब्रह्मस्तम्बपर्यन्तं जीवता स्यादविद्यया ॥ १४८ ॥
महद्भूतमनन्तं स्यादपारं चिद्घनं स्वतः ॥
देहेन्द्रियाख्यभूतेभ्यो जीवत्वेन समुत्थितिः ॥१४९॥
महत्वं सर्वगत्वं स्याद् भूतत्वं नित्यसिद्धता ॥
अनन्तापारशब्दाभ्यां व्याप्तिनित्यत्वसाधनम्॥१५०॥
कार्यकारणराहित्यं यदि वेहोपलक्ष्यताम् ॥

---

ल्यपदयोरर्थमाह *सामुद्रमिति ॥१४५॥ उदके प्रास्त उदकमेवानु विलीयत इत्यस्यार्थमाह *स खिल्य इति । न हास्योद्ग्रहणायेत्यस्यार्थमाह *अशक्य इति ॥ १४६ ॥ यतो यतस्त्वाददीत लवणमेवेत्यस्यार्थमाह *खिल्योद्धृत्या इति ॥ १४७ ॥ एवं वा अरे इत्यादेस्तात्पर्यमाह *सामुद्रस्येत्यादिना ॥ १४८ ॥ १४९ ॥ तात्पर्यमुक्त्वा पदार्थमाह *महत्वमिति ॥ १५० ॥ अनन्तापारशब्दयोर्व्यापकत्वनित्यत्वसाधकत्वमुक्त्वा वस्तुतः कार्यकारणत्वरहितं तत्त्वमाभ्यां पदा-

अनन्तत्वमकार्यत्वमपारत्वमहेतुता ॥ १५१ ॥
विज्ञानघन एवेति जात्यन्तरनिषेधनम् ॥
तदिदं वस्तुनस्तत्त्वं मायिकी या समुत्थितिः ॥१५२॥
अब्धिस्थानीयमैकात्म्यं जलस्थानं तु साक्षिचित् ॥
क्षेत्रस्थानं शरीरादि तापस्थानं तु विभ्रमः ॥१५३ ॥
खिल्यस्थानं चिदाभासयोगात्कर्तृत्वभोक्तृते ॥
द्रष्टा श्रोता द्विजो गौरो धनी गोमान्भवेत्ततः॥१५४॥
प्रत्यगात्मैव सद् ब्रह्म परोक्षमभवत्तदा ॥
ब्रह्मैव सन्नपश्वात्मा संसारित्वमवाप्तवान् ॥१५५ ॥
इत्येवं परवस्त्वेव पञ्चभूताख्यमायया ॥
जीवत्वेन समुत्थाय ततः शास्त्रेण बुध्यते ॥ १५६ ॥

---

भ्यां लक्ष्यते इत्यर्थान्तरमाह *कार्येति॥१५१॥ प्रतीचो महत्वादि मोक्षदशायामेवेति शङ्कां वारयति *तदिदमिति । कथं तर्ह्येवंविधस्य सर्वजीवरूपेण समुत्थानं तत्राह *मायिकीति ॥१५२॥ सङ्क्षेपतः कथितं दार्ष्टान्तिकश्रुत्यर्थं प्रपञ्चयति* अब्धीत्यादिना॥ स यथा प्रदेशविशेषविशिष्टं जलमब्धिशब्दवाच्यं लवणभूमौ सिक्तं सत् आतपेन पिण्डतां गच्छति, एवं सच्चिदानन्दात्मप्रत्यक्चैतन्यं बुध्यादौ प्रतिबिम्बितं सद् भ्रमात्स्वस्मिन्कर्तृत्वादिकमारोपयतीत्यर्थः । एवं कर्तृत्वाद्यारोपेऽनेकानर्थयोगित्वमाह *द्रष्टेत्यादिना । वस्तुतः स्वरूपे परोक्षतामारोप्य स्वयं तद्विलक्षणः संसारी बभूवेत्यर्थः ॥ १५३ ॥ १५४ ॥ १५५॥ एतेभ्यो भूतेभ्यः समुत्थायेत्यत्र ब्रह्मणो जीवतापत्तौ भूतानां हेतुत्वमुक्तमयुक्तं, तेषां सादित्वेनानादिजीवताहेतुत्वायोगादित्याशङ्क्य अत्र भूतशब्देन तदुपादानाज्ञानस्य विवक्षितत्वान्नैवमित्याह *इतीति । तान्येवानु विनश्यतीत्यस्यार्थमाह *तत इति ॥ १५६ ॥ उक्त-

सर्वमात्मेति सम्यग्धीजन्मनैवाखिले भ्रमे ॥
नष्टे नश्यति जीवत्वं जले प्रक्षिप्तखिल्यवत् ॥१५७॥
क्षेत्रज्ञेश्वरभेदेन पुनः संज्ञा न विद्यते ॥
तद्धेतोस्तमसो ध्वंसात्खिल्यानुद्धरणं यथा ॥१५८॥
दृष्टिमात्रात्म्ययाथात्म्यात्कार्यकारणवस्तुनः ॥
नाज्ञातं किञ्चिदप्यस्ति नानपास्तं तथा तमः॥१५९॥
आत्यन्तिको ऽयं प्रलयः पुनर्जन्मविवर्जनात् ॥
स्वाभाविकलये शक्तिशेषादस्ति पुनर्जनिः ॥१६०॥
श्रुतिः—सा होवाच मैत्रेय्यत्रैव मा भगवानमूमुहन्न प्रेत्य सञ्ज्ञाऽस्तीति स होवाच याज्ञवल्क्यो न वा अरे

---

मेव व्यनक्ति *सर्वमिति ॥ १५७ ॥

तान्यविद्याशब्दितानि भूतानि यदा ब्रह्मधिया नश्यन्ति अनु अनन्तरमेव जीवत्वमपि नश्यतीति श्रुत्यर्थः ॥ १२ ॥

नष्टमपि जीवत्वं पुनरुदेष्यतीति शङ्कां न प्रेत्य संज्ञाऽस्तीति श्रुतिं व्याकुर्वन् दृष्टान्तेन प्रत्याचष्टे *क्षेत्रज्ञेति। प्रेत्य संज्ञा अयमीशो ऽयं जीव इति विशेषसञ्ज्ञा इत्यर्थः ॥१५८॥ अधिष्ठानधिया निवृत्तोऽपि रज्जुसर्पो यथा पुनरुदेति एवं जीवत्वमप्युदेष्यतीत्याशङ्क्याह *दृष्टीति। जीवत्वादिसकलप्रपञ्चस्य मूलाज्ञानकल्पितत्वेन तन्निवृत्त्या निवृत्तेर्न पुनरुद्भवः। दृष्टान्तेऽज्ञानस्यात्यन्तिकानिवृत्त्यभावात्सर्पोत्पत्तिरविरुद्धेतिभावः ॥ १५९ ॥ अज्ञानस्य निरन्वयनाशादेव मुक्तेरात्यन्तिकलयसंज्ञाऽप्युपपन्नेत्याह *आत्यन्तिक इति ॥ १६० ॥

एवं प्रबोधिता मैत्रेय्युवाच अत्रैव ब्रह्मण्येव विरुद्धधर्मवत्त्वमाचक्षाणो भगवान् मामम्मूमुहन्मोहनं कृतवान्। कथं विरोधः?

ऽहं मोहं ब्रवीम्यलं वा अरे इदं विज्ञानाय ॥ १३ ॥

वा० विज्ञानैकघनस्यास्य सञ्ज्ञा नास्तीति यद्वचः ॥
तद्व्याहतिर्न शङ्काऽत्र तयोर्विषयभेदतः ॥ १६१ ॥
विज्ञानैकघनोक्त्याऽस्य कृत्स्नैकात्म्यं पुरोदितम् ॥
सञ्ज्ञा नास्तीति चाविद्याजन्या बुद्धिर्निषिध्यते॥१६२॥
कार्यकारणनाशेऽपि स्वतःसिद्धमनन्यमम् ॥
यद्वस्तु तदलं स्वात्मा संवित्त्यै निरपेक्षतः ॥ १६३ ॥

श्रुतिः–यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति, तदितर इतरं पश्यति, तदितर इतरꣳ शृणोति, तदितर इतरमभिवदति,तदितर इतरं मनुते, तदितर इतरं विजानाति, यत्र वा अस्य सर्वमात्मैवा ऽभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कꣳ शृणुयात्तत्केन

---

इत्युच्यते । पूर्वं विज्ञानघन एवेति प्रतिज्ञाय पुनर्न प्रेत्य सञ्ज्ञाऽस्तीति वदता विरोध उक्तः, अतो मूढाऽस्मीति श्रुत्यर्थः ॥१३॥

उक्तं चोद्यमनूद्य न वाऽरे मोहं ब्रवीमीति परिहारवाक्यतात्पर्यमाह *विज्ञानेति ॥ १६१ ॥ विषयभेदमेव प्रकटयति *विज्ञानैकेति । *अविद्याजन्येति । अयं जीवः अयमीशः इत्येवंरूपा धीर्नास्तीत्यर्थः ॥ १६२ ॥ जीवादिसंज्ञा ध्वस्ता चेत्कथं वस्तुज्ञानं हेत्वभावादित्याशङ्क्य अलमित्यादेस्तात्पर्यमाह *कार्येति । स्वतःसिद्धत्वसिद्ध्यर्थमाह *अनन्यममिति । चैतन्यविषयत्वायोग्यामित्यर्थः ॥ १६३ ॥ यत्र हीत्यादेस्तात्पर्यमाह *ऐकात्म्यमिति । यत्र यस्यामवस्थायामज्ञातमैकात्म्यमस्ति तत्रैव भ्रमात्सद्वितीयमिव भवति,तत्र तस्यामवस्थायामितरो घ्राता घ्रातव्यं घ्राणेन जिघ्रतीति कर्त्रादिभेदधीः

कमभिवदेत्तत्केन कं मन्वीत तत्केन कं विजानीयाद्ये-
नेदꣳ सर्वं विजानाति तं केन विजानीयाद्विज्ञा-
तारमरे केन विजानीयादिति ॥ १४ ॥

इत्युपनिषदि चतुर्थे चतुर्थं ब्राह्मणं समाप्तम् ॥

वा० ऐकात्म्यं यदविज्ञातं तद्द्वैतमिव विभ्रमात् ॥
स्याद्यत्र तत्र पुंसोऽसौ कर्तृकर्मादिभेदधीः ॥ १६४ ॥
ननु द्वैतमिवेत्येतदुपमानं कथं भवेत् ॥
उपमेयद्वैतवस्तुराहित्यादिति चेच्छृणु ॥ १६५ ॥
रामरावणयोर्युद्धं रामरावणयोरिव ॥
इत्यादावुपमा दृष्टा स्वस्य स्वेन तथेष्यताम् ॥१६६॥
यद्वा लोके चन्द्रभेदः कल्पितत्वेन सम्मतः ॥
जगद्भेदोपमाऽसौ स्यान्मिथ्यात्वं तेन सिध्यति॥१६७॥
समस्तव्यस्तरूपत्वं यो वक्तीहात्मनः श्रुतेः ॥
तत्पक्षस्य निषेधाय द्वैतमिथ्यात्ववर्णनम् ॥ १६८ ॥
ज्ञातृज्ञानज्ञेयरूपं प्रायः स्वप्ने मृषा यथा ॥
एको व्यवहरत्येवमज्ञो व्यवहरेन्मृषा ॥ १६९ ॥

---

भवतीत्यर्थः ॥१६४॥ यत्र हि द्वैतमिवेत्यत्रेवशब्दस्योपमार्थत्वम-युक्तमिति शङ्कित्वा परिहरति *नन्वित्यादिना ॥१६५॥१६६॥ नात्रोपमानोपमेयविवक्षा, अनयोर्युद्धमनुपममित्येतस्मिन्नर्थे तात्पर्यादित्याशङ्क्य विधान्तरेणोपमानं समर्थयते *यद्वेति । जगद्भेदस्य जलचन्द्रभेदतुल्यत्वे फलितमाह *मिथ्यात्वमिति ॥ १६७ ॥ यत्र हीत्यादिवाक्यात्पूर्वमेव तत्त्वोपदेशसमाप्तेरस्य वाक्यस्यानुपयोगमाशङ्क्याह *समस्तेति ॥ १६८ ॥ अद्वितीयस्याप्यात्मनः स्वाविद्योत्थभ्रमान्नानात्वव्यवहारः सम्भवतीत्यत्र दृष्टान्तमाह *ज्ञातृज्ञानेति ॥१६९॥ यत्र हीत्यादि-

यस्यामविद्यावस्थायां भेदभ्रान्तिस्तदा पुमान् ॥
घ्रातृघ्राणघ्रेयसंज्ञामाभ्रोत्यन्यां तथा त्रिधाम् ॥ १७० ॥
अविद्यायां विनष्टायां घ्रातृघ्राणादिभेदधीः ॥
विनश्यतीत्यभिप्रेत्य संज्ञा नास्तीति वर्णितम् ॥ १७१ ॥
अभिज्ञोऽप्यज्ञवद्वेदं घ्रातृघ्राणादिलक्षणम् ॥
विजानातीति चेन्नैवं विद्यायां तदसम्भवात् ॥ १७२ ॥
यस्यां तु विद्यावस्थायामात्मैवास्य भवेज्जगत् ॥
तदा कः केन कं जिघ्रेदद्वैतपरवस्तुनि ॥ १७३ ॥
षष्ठगोचरवत्सर्वं कार्यकारणवज्जगत् ॥
ध्वस्तात्मान्ध्यस्य विदुषः सम्यग्ज्ञानोदये भवेत् ॥ १७४ ॥
ग्राहकादिविभागोऽत्र नास्ति तद्धेत्वसम्भवात् ॥
चिन्मात्रस्य स्वतःसिद्धेर्विज्ञानघनतेरिता ॥ १७५ ॥
मुक्तस्य व्यवहारस्तु भ्रान्तिवासनया कृतः ॥
भ्रान्तिनाशेऽपि संस्कारानुवृत्तिर्दृश्यते खलु ॥ १७६ ॥

---

वाक्यार्थमुपसंहरति *यस्यामिति । *पुमानिति । स्वप्नदृष्टवन्मृषा व्यवहरेदित्यनुषङ्गः ॥ १७० ॥ १७१ ॥ १७२ ॥ यत्र वा अस्येत्यादेरर्थमाह *यस्यान्त्विति ॥ १७३ ॥ सर्वस्य जगत आत्ममात्रत्वे तद्वदेव सत्त्वमाशङ्क्य सर्वमात्मैवेत्यादेस्तात्पर्यमुपसंहरति *षष्ठेति । निवृत्तमोहस्य षष्ठेन्द्रियवस्तुतुल्यं जगद्भवतीत्यर्थः ॥ १७४ ॥ ननु बाह्यप्रपञ्चस्यात्ममात्रतया लीनत्वेऽप्यात्मसिद्ध्यर्थं मातृत्वादेरावश्यकत्वात्तस्य विज्ञानघनत्वोक्त्याऽनुपपत्तिरत आह *ग्राहकेति ॥ १७५ ॥ ज्ञानोदयानन्तरं स्वप्रकाशात्ममात्रातिरिक्तवस्त्वस्फुरणे जीवन्मुक्तिशास्त्रविरोधः स्यात् अत आह *मुक्तस्येति ॥ स्वप्नदृष्टे गजादिसंस्कारानुवृत्तेः सर्वानुभवसिद्धत्वं द्योतयति *खल्विति ॥ १७६ ॥ कथं तर्हि न प्रे-

वासनामात्रसंज्ञा तु देहे सति न वार्यते ॥
वस्तुत्वभ्रान्तिसंज्ञैव प्रबुद्धस्यात्र कार्यते ॥ १७७ ॥
ज्ञातृज्ञानज्ञेयरूपा न संज्ञा विद्यते यथा ॥
प्रतीच्यपि तथा संज्ञा प्रबुद्धस्य न विद्यते ॥ १७८ ॥
ज्ञानोत्पत्तौ न संज्ञाऽस्तीत्यास्तां तावदिहात्मनि ॥
अपि सत्यामविद्यायां न संज्ञाऽस्त्यात्मनीदृशी॥१७९॥
ग्राहकादिजगत्सर्वं येन कूटस्थसाक्षिणा ॥
लोकः सर्वं विजानाति जानीयात्केन तं वद ॥१८०॥
बोद्धृत्वालोचनेनापि न संज्ञा प्रत्यगात्मनि ॥
न बोद्धा गृह्यतेऽन्येन बोधेन विषयेण वा ॥ १८१ ॥
व्यावहारिकसंज्ञाऽसौ संसारिण्यपि दुर्लभा ॥

---

स्य संज्ञाऽस्तीति निषेध इत्याशङ्क्य विदुषो द्वैते वस्तुत्वभ्रमो नास्तीत्येवंपरं संज्ञानिषेधवाक्यमित्याह *वासनेति ॥ १७७ ॥ उक्तमेव व्यनक्ति *ज्ञातृज्ञानेति । विदुषो यथा मात्रादिसर्वप्रपञ्चे सत्यत्वाकारधीर्नोदेत्येवं प्रतीचि भेदधीर्न भवतीत्यर्थः ॥ १७८ ॥ येनेत्यादेस्तात्पर्यमाह *ज्ञानेति । ईदृशी ग्राहकादिविभागग्राहिणीत्यर्थः ॥ १७९ ॥ कैमुतिकन्यायपरं वाक्यमित्युक्त्वा तस्मिन्नर्थे तद्योजयति *ग्राहकादीति । अविद्यावस्थायामपि सर्वसाक्षी नान्यापेक्षः किमु विद्यावस्थायामित्यर्थः ॥ १८० ॥ विज्ञातारमित्यादेरर्थमाह *बोद्धृत्वेति । विज्ञातृशब्दितप्रमातृस्वरूपे विचार्यमाणेऽपि तद्ग्राहकविशेषधीर्नोपलभ्यते किमु वक्तव्यं तत्साक्षिणि विशेषसञ्ज्ञा नास्तीत्यर्थः। विज्ञातुर्ग्राहकाभावं व्यतिरेकेणाह *नेति ॥१८१॥ उक्तमेव विशदयति *व्यावहारिकेति । प्रमातृप्रकाशकसा-

किमु विध्वस्तनिःशेषसंसारानर्थकारणे ॥ १८२ ॥
इत्येवमपरायत्तबोधेनात्यन्तिको लयः ॥
निदिध्यासनरूपोऽत्र फलभूतः प्रकीर्तितः ॥ १८३ ॥

इति वार्तिकसारे द्वितीयाध्यायस्य चतुर्थ-
ब्राह्मणं समाप्तम् ॥

---

पञ्चमब्राह्मणे विद्याफलं सार्वात्म्यलक्षणम् ।
अभिव्यञ्जयितुं वस्तुसर्वात्मत्वं प्रपञ्च्यते ॥ १ ॥
यो जन्मस्थितिनाशाख्यो हेतुः सार्वात्म्य ईरितः ॥
तस्यासिद्धिर्वार्यतेऽत्रेत्येवं भाष्यकृतो जगुः २ ॥
प्रतिज्ञायाथ चैकात्म्यं पूर्वमेवोपपादितम् ॥

---

क्षीज्ञानव्यावृत्त्यर्थं व्यावहारिकसंज्ञेत्युक्तम्, साक्षिज्ञानस्य निर्विकाररूपत्वान्न विशेषसञ्ज्ञात्वमिति भावः ॥ १८२ ॥ प्रकृतमुपसंहरति *इतीति ॥ १८३ ॥

इति टीकायां द्वितीयाध्यायस्य चतुर्थब्राह्मणं समाप्तम् ।

---

वृत्तेन सङ्गतिं दर्शयन्मधुब्राह्मणतात्पर्यमाह *पञ्चमेति । चतुर्थब्राह्मणे सर्वात्मत्वप्राप्तिरात्मविद्याफलमित्युक्तं तदेव विद्याविषयवस्तुनः सर्वात्मत्वप्रपञ्चनेनात्र स्पष्टीक्रियत इत्यर्थः ॥ १ ॥ एवं स्वयं सङ्गतिमुक्त्वा आचार्योक्तां सङ्गतिमाह *यो जन्मेति । भाष्यकृत इति वार्तिककृतामप्युपलक्षणम् । इदं सर्वं यदयमात्मेति प्रतिज्ञातात्मसार्वात्म्यसिद्धये दुन्दुभ्यादिदृष्टान्तैरात्मैकस्थित्युत्पत्तिलयत्वाज्जगत इति यो हेतुरुक्तः

निगमायोत्तरो ग्रन्थ इति चाहुरमी पुनः ॥ ३ ॥
फलं निगमनं वास्तु सार्वात्म्यं ब्रह्मणः स्फुटम् ॥
विभाति हेत्वसिद्धिस्तु पुंवाक्य इव नागमे ॥ ४ ॥
तथापि मन्दाः शङ्कन्त आत्मनानात्वदर्शिनः ॥
एकात्मनो जगज्जन्मेत्यादिहेतोरसिद्धताम् ॥ ५ ॥
जगदेकस्य कार्यं स्यादेकमातृजपुत्रवत् ॥
परस्परोपकारित्वादिति हेतुः समर्थ्यते ॥ ६ ॥
निदिध्यासनाविध्यर्थं केचिद्ब्राह्मणमूचिरे ॥

---

तस्यासिद्धिशङ्कानिवारणार्थमेतद् ब्राह्मणमारभ्यत इत्यर्थः । तैरेवोक्तं सङ्गत्यन्तरमाह *प्रतिज्ञायेति । उक्तहेतुनाऽऽत्मनः सर्वात्मत्वे सिद्धे सहेतुप्रतिज्ञाया अत्र निगमनं क्रियते, तस्यापि साधनाङ्गतया वादिभिरिष्टत्वादित्यर्थः ॥ ३ ॥ कस्तर्हि सम्बन्ध आदेय इत्याशङ्क्य श्रुतिप्रतिपाद्यार्थे विमत्यभावात्सर्वे उपपन्ना एवेत्याह *फलमिति । असिद्धिशङ्काऽनेन वार्यत इति पक्षो अनुपपन्नः, वेदोक्तेऽर्थे तच्छङ्काया एवानुदयादिति शङ्कते *हेत्वसिद्धिरिति ॥ ४ ॥ श्रुत्युक्तेऽप्यर्थे मन्दमतीनां 'जगद् अनेकात्मजन्यं विचित्रकार्यत्वात्प्रासादादिवात्' इत्यादि प्रत्यनुमानाभासेनैकात्मजत्वहेयता सम्भाव्यत इति परिहरति *तथाऽपीति ॥ ५ ॥ एवं हेत्वसिद्धिशङ्कामुपपाद्यात्र ब्राह्मणे सर्वस्य मधुत्वोक्त्या सूचितमसिद्धिशङ्कावारकमनुमानमाह *जगदिति ॥ ६ ॥ भर्तृप्रपञ्चस्तु श्रोतव्यादिवाक्येन श्रवणादित्रयं विधाय श्रवणमननस्वरूपं पूर्वव्याख्यातं, निदिध्यासनं व्याख्यातुमिदं ब्राह्मणमित्याह, तान्नि-

असत्तदपरायत्तबोधत्वेनास्य वर्णनात् ॥ ७ ॥
श्रुतिः—इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै-
सर्वाणि भूतानि मधु ॥
परस्परोपकारित्वं पृथिव्याः प्राणिनामपि ॥
यत्तन्मधुत्वं विज्ञेयमुपकारस्तु सर्जने ॥ ८ ॥
जन्तुभिः पृथिवी सृष्टा स्वकर्मफलभुक्तये ॥
पृथिव्याऽप्यात्मभोगार्थं सृष्टाः सर्वेऽपि जन्तवः ॥९॥
पार्थिवानि शरीराणि भुज्यन्ते जन्तुभिस्तथा ॥
पृथिव्याऽपि धरित्रीत्वं भुज्यते जन्तुधारणात् ॥१०॥
श्रुतिः—यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरु-
षो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषो

---

रस्यति *निदिध्यासनेति ॥ ७ ॥ परोक्तसम्बन्धं निरस्य इयं पृथिवीत्यादौ मधुशब्दार्थमाह *परस्परेति । मधुशब्द उपकारिशब्दपर्याय इत्युक्तं, तत्र सर्वप्राणिनां पृथिव्याश्च को वा परस्परोपकारः ? तत्राह *उपकार इति ॥ ९ ॥ परस्परसृष्टिमाह *जन्तुभिरिति । स्वस्वकर्मफलभोगाय सृष्टिरित्युक्तं. तत्रान्योऽन्यभोगसाधनत्वं दर्शयति *पार्थिवानीति । अत्र पृथिव्यादिशब्दे तत्तदभिमानिन्यो देवताः उच्यन्ते । तथाचाचेतनस्थूलशरीरप्रधाना पृथिवी प्राणिनः प्रति भोग्या, चेतनांशप्रधाना भोक्त्री । एवं प्राणिनोऽपि स्थूलशरीरप्राधान्येन तां प्रति भोग्याः, चेतनप्राधान्येन भोक्तारः । यद्यपि प्राणिनां शरीरं पाञ्चभौतिकं तथाऽपि पार्थिवांशाधिक्यात्पार्थिवानीत्युक्तम् ॥ १० ॥ यश्चायमस्यामित्यादेरर्थमाह *अस्यामिति । तेजोमय इत्यस्य व्याख्या *भास्वानिति । भास्वत्वं चा-

ऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ १ ॥

वा० अस्यां पृथिव्यां यो भास्वानामोक्षमाविनश्वरः ॥
लिङ्गात्मा मध्वसौ सर्वभूतानां तानि तस्य च ॥ ११ ॥
अध्यात्मं यश्च शारीरो लिङ्गात्मा पार्थिवांशगः ॥
स चापि मधु सर्वेषां सर्वभूतानि तस्य च ॥ १२ ॥
साध्यात्मं साधिदैवं च साधिभूतमिदं जगत् ॥
एकैकस्यात्मनः कृत्स्नं भोग्यत्वेनावतिष्ठते ॥ १३ ॥
सर्वं सर्वस्य कार्यं स्यात्सर्वः सर्वस्य भोजकः ॥
इत्येषा मधुविद्याऽत्र वैषम्यक्लेशहारिणी ॥ १४ ॥
भूतानि भूमिर्द्वे लिङ्गे इत्युक्तं यच्चतुर्विधम् ॥
मध्वऽविद्याकृतं तस्य वस्तुतत्त्वमथोच्यते ॥ १५ ॥
अयमेव स इत्यत्र मधुरूपश्चतुर्विधः ॥

---

र्थप्रकाशकत्वादिति ध्येयम् । अमृतमय इत्यत्रात्यन्तिकामृतत्व-शङ्कां निरस्यति *आमोक्षमिति । पुरुषशब्दस्य क्षेत्रज्ञपरत्वं व्यावर्तयति *लिङ्गात्मेति । यश्चेत्यत्र चशब्दसूचितमर्थमाह *मध्वसाविति ॥ ११ ॥ यश्चायमध्यात्ममित्यादेरर्थमाह *अ-ध्यात्ममिति । पृथिव्याः प्राणिनां च स्थूलशरीरप्राधान्येन परस्परं भोग्यत्ववल्लिङ्गप्राधान्येनापि परस्परं भोग्यतेत्यर्थः ॥ १२ ॥ कथं चकारस्योक्तार्थसूचकत्वमित्याशङ्क्यानुभवमनुसृ-त्याह *साध्यात्ममिति ॥ १३ ॥ वाक्याभ्यां सिद्धमर्थमुप-संहरति *सर्वमिति । यथा मूलकारणं सर्वात्मकमेवं सर्वं वस्तु सर्वात्मकं सर्वस्य सर्वकारणत्वादतो भेदाभावादात्ममात्रं सर्वमिति मधुपर्यायाणां सर्वेषां तात्पर्यमित्यर्थः ॥ १४ ॥ वृत्तमनूद्यायमेव स इत्याद्यवतारयति *भूतानीति ॥ १५ ॥

प्रपञ्चोऽयमिति प्रोक्तः स इत्यात्मोच्यते परः ॥१६॥
अयमेव स इत्युक्त्या सामानाधिकरण्यतः ॥
प्रत्यङ्मात्रैकयाथात्म्यं प्रपञ्चस्यावबोध्यते ॥ १७ ॥
स इत्यनेन निर्दिष्टमतीतग्रन्थवर्णितः ॥
योऽयमित्यादिभिर्वाक्यैश्चतुर्भिः स्मार्यते परः ॥१८॥
आत्मा द्रष्टव्य इत्युक्तममृतं चेति वर्णितम् ॥

---

तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *अयमिति । अव्यवहितपूर्ववाक्ये प्रकृतत्वात्प्रपञ्चस्यायंशब्देन परामर्शः । अतीतब्राह्मणेषु व्याकृतत्वादात्मनः सशब्देन परामर्श इति भावः ॥ १६ ॥ सामानाधिकरण्यार्थमाह *अयमेवेति ॥१७॥ योऽयमात्मेत्यादेरर्थमाह *स इत्यनेनेति ॥ १८ ॥

इयमत्र अयमित्यादिश्रुतेर्योजना—आत्मा द्रष्टव्य इत्यत्र प्रकृतो योऽयमात्मा स एवाऽयं चतुष्टयमधुभेद इत्यर्थः । *इदममृतमिति । येनाहं नामृता स्यामित्यादिना ऽमृतत्वसाधनं पृष्टवत्यै मैत्रेय्यै तत्साधनत्वेनात्मज्ञानमुपदिशता याज्ञवल्क्येनार्थाय ब्रह्मामृतमित्युक्तं तदेवेदं मधुचतुष्टयमित्यर्थः । इदं ब्रह्मेति । ब्रह्म ते ब्रवाणि व्येव त्वा ज्ञपयिष्यामीत्यध्यायादौ प्रस्तुत्य मूर्तामूर्तब्राह्मणे नेति नेतीति निर्विशेषं यद् ब्रह्मोक्तं तदेवेदं मधुचतुष्टयमित्यर्थः । *इदं सर्वमिति । यत्स्वरूपज्ञानात्सर्वं जगत्पूर्णं ब्रह्माभवदित्युक्तं तृतीये तदेवेदं मधुचतुष्टयमित्यर्थः ॥ १ ॥

एतत्सर्वमभिप्रेत्य वाक्यार्थमाह *आत्मेति द्वाभ्याम् । योऽयं स्थाणुः स पुमानित्यादिवदिदं मधुचतुष्टयं ब्रह्मैवेत्युक्ते तस्य ब्रह्मसत्तातिरिक्तसत्ता नास्तीति वाक्यार्थः पर्यवस्य-

नेति नेत्युदितं ब्रह्म तत्सर्वमभवत्त्विति ॥ १९ ॥
आत्मामृतब्रह्मसर्वशब्दैः प्राक् प्रतिपादितम् ॥
वस्त्वस्य मधुनस्तत्त्वमिति वाक्यार्थ ईरितः ॥ २० ॥
उत्तरेष्वपि वाक्येषु मधुरूपमिदं जगत् ॥
ब्रह्मापि मधुनस्तत्त्वं योजयेदुक्तवर्त्मना ॥ २१ ॥

श्रुतिः—इमा आपः सर्वेषां भूतानां मध्वासामपां सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम्॥२॥
अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चामध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥३॥
अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयो ऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ ४ ॥
अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयो ऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयो-

---

तीत्यर्थः ॥ १९ ॥ २० ॥ इयं पृथिवीत्यत्रोक्तमर्थम् इमा आप इत्यादिपर्यायान्तरेष्वतिदिशति *उत्तरेष्विति ॥ २१ ॥

*अध्यात्मं रैतस इति । श्रुतौ रेतस्यपां विशेषतो-

ऽमृतमयः पुरुषो ऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ ५ ॥

इमा दिशः सर्वेषां भूतानां मध्वसां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳश्रौत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषो ऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ६ ॥

अयं श्चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोयमोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ ७ ॥

इयं विद्युत्सर्वेषांभूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषो ऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम्॥८॥

---

ऽवस्थानमुक्तम् । श्रुत्यन्तरमपि आपो रतो भूत्वा शिश्नं प्राविशन्निति ॥ २ ॥ एवं वाङ्मय इत्यादावपि द्रष्टव्यम् । अग्निर्वाग्भूत्वेति श्रुतेः ॥ ३ ॥ *प्राण इति । वायुः प्राणो भूत्वेति श्रुतेः ॥४॥ *चाक्षुष इति । आदित्यश्चक्षुर्भूत्वेत्यादिश्रुतेः ॥५॥ *श्रोत्र इति । दिशः श्रोत्रं भूत्वेति श्रुतेः । तस्य विशेषणं प्रातिश्रुत्क इति । प्रतिश्रुत्कायां प्रतिश्रवणवेलायां विशेषतः सन्निहितो भवतीत्यर्थः ॥ ६ ॥ *मानस इति । चन्द्रमा मनो भूत्वेति श्रुतेः ॥ ७ ॥ *तैजस इति । तेजसि विशेषतः सन्निहितो भवतीति तैजसस्त्वगित्यर्थः ॥ ८ ॥

अयꣳस्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ*शाब्दः सौवरस्तेजोमयो ऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ९ ॥

अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳहृद्याकाशस्तेजोमयोऽमृतमयः पुरुषो ऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥

*अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ११ ॥

इदꣳसत्यꣳसर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं सात्यस्तेजोमयो-

---

*शाब्दः सौवर इति । शब्दे भवः शाब्दः । स्वरे भवः सौवरः । स्वरविशिष्टे शब्देऽध्यात्मं स्तनयित्नुसन्निहितो भवति अस्मादेव वचनादिति ध्येयम् ॥ ९ ॥ १० ॥ *अयं धर्म इति । यद्यपि धर्मः परोक्षस्तथापि तत्कार्यपृथिव्यादेरपरोक्षत्वात्कार्यकारणयोरभेदोपचारादयमित्युक्तम् ॥ ११ ॥ अस्मिन्पर्याये यश्चायमस्मिन्धर्मे यश्चायमध्यात्मं धार्म इत्युक्तधर्म-

ऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ १२ ॥

इदं मानुषꣳसर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ १३ ॥

अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चामस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥१४॥

स वा अयमात्मा सर्वेषां भूतानामाधिपतिः सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणा सर्वे एत आत्मानः समर्पिताः ॥ १५ ॥

वा० साधारण्यविशेषाभ्यां धर्मो भोगप्रदो द्विधा ॥
अधिदैवं तथा ऽध्यात्ममित्यत्रासौ विभज्यते ॥ २२॥
सत्यमानुषयोरेवं विभागं योजयेद् द्विधा ॥

---

शब्दयोरर्थभेदमाह *साधारण्येति । पृथिव्याद्यारंभको धर्मः साधारणः, शरीरारम्भको विशेष इत्यर्थः ॥ २२ ॥ उक्तन्यायमुत्तरवाक्ययोरतिदिशति *सत्येति ।

यद्यपि तृतीयाध्याये सत्यधर्मयोरभेद उक्तस्तथापि दृष्टादृष्टरूपेण भेदं विवक्षित्वा सत्यस्य पृथङ्निर्देशः । तत्र

पृथिव्याद्या मनुष्यान्ता विराडंशा उदीरिताः ॥२३॥
अयमात्मेति निर्देशो विराजोऽभिमतोंऽशिनः ॥
हिरण्यगर्भस्तत्रत्य उक्तस्तेजोमयोक्तितः ॥ २४ ॥
विराड्ढिरण्यगर्भाख्यः स्थूलसूक्ष्मशरीरगः ॥

---

जगदारम्भकं शरीरारम्भकं चादृष्टं धर्म इत्युक्तम् । अनुष्ठीयमानेन दृष्टेनाचाररूपेण स एव धर्मः सत्यमित्युच्यते । अत्र यश्चायमस्मिन्सत्ये इत्यत्र साधारणव्यवस्थाकारणमुच्यते । यश्चायमध्यात्मं सात्य इत्यत्रासाधारणार्थव्यवस्थाहेतुः सत्यविशेष उच्यते । इदं सत्यं सर्वेषां भूतानामित्यादौ मिलितं गृह्यते इति भेदः । इदं मानुषमिति मानुषशब्दः सर्वजात्युपलक्षणम् । मानुषजातिविशिष्टानामेव परस्परोपकार्योपकारकभावो दृष्टः । मानुषजातिरपि द्विःप्रकारा निर्देष्टुः स्वशरीरनिष्ठा जातिराध्यात्मिकी, शरीरान्तराश्रिता तु बाह्येति । तत्र यश्चायमस्मिन्निति बाह्यजातिरुच्यते, यश्चायमध्यात्ममित्याध्यात्मिकी,इदं मानुषमित्यत्र जातिसामान्यमिति विवेकः॥१२॥१३॥१४॥१५॥अयमात्मेतिपर्यायस्य तात्पर्यमाह *पृथिव्याद्या इति । इयं पृथिवीत्यारभ्य मानुषपर्यायपर्यन्तेन सन्दर्भेण विराट्शब्दाभिधेयावयविनः पृथिव्यंब्वग्न्याद्यायेंऽशा उक्तास्तदंगिन अयमात्मेत्यादिना निर्देशः क्रियत इत्यर्थः ॥ २३ ॥ यश्चायमस्मिन्नित्यादेरर्थमाह *हिरण्येति । उक्तविराडवयविनं सप्तम्यन्तात्मपदेनानूद्य तेजोमय इत्यादिशब्दैर्हिरण्यगर्भशब्दितो विराजोऽभ्यन्तरो लिङ्गात्मा उक्त इत्यर्थः । तेजोमयोक्तित इति तेजोमयादिशब्दैरित्यर्थः ॥ २४ ॥ यश्चायमात्मेत्यादेरर्थमाह *विराडिति । उपाधिप्राधान्येन विराडादिशब्दवाच्यशरीरद्व-

चिदाभासोऽत्र यश्चायमात्मेत्युक्त्याऽभिधीयते ॥२५॥
अपूर्वानपरामध्यप्रत्यग्याथात्म्यवित्तये ॥
स वा इत्यादिको ग्रन्थः सदृष्टान्तोऽभिधीयते ॥२६॥
ननूक्तं मधुनस्तत्त्वमयमेव स इत्यतः ॥
वचनाद्बहुपर्यायैर्भूयोऽप्येतद् दृढीकृतम् ॥ २७ ॥
बाढमेतावता वस्तुसार्वात्म्यं स्यात्प्रपाञ्चितम् ॥
तदेवाभिव्यज्यते ऽथ विदुषः फलरूपतः ॥ २८ ॥
स एव मधुतत्त्वाख्य आत्मायं तत्त्वविन्मतः ॥
आधिपत्यं च राजत्वं विदुष्यविदुषोऽधिकम् ॥ २९ ॥
अत्राधिपतिशब्देन स्वातन्त्र्यमभिधीयते ॥

---

यप्रतिबिम्बितं चैतन्यं जीवसंज्ञितं यश्चायमात्मेत्यत्रात्मशब्देनाभिधीयते । स स्वप्रकाशत्वात्तेजोमयः, नित्यत्वादमृतमयश्चेत्यर्थः ॥ २५ ॥ उत्तरकाण्डिकातात्पर्यमाह *अपूर्वेति ॥ २६ ॥ अत्र पुनरुक्तिं शङ्कते *नन्विति । इयं पृथिवीत्यादिना पृथिव्यादेर्मधुत्वमुक्त्वाऽयमेव स इत्यनेन वाक्येन मध्वात्मकप्रपञ्चस्य प्रत्यक्सत्तातिरेकेण स्वतःसत्ता नास्तीत्यसकृदुक्तम् । अनेनैवादिमध्यावसानशून्यं प्रत्यक्तत्त्वमिति निश्चेतुं शक्यत्वात्किंतत्प्रतिपादकोत्तरग्रन्थेनेत्यर्थः ॥ २७ ॥ ब्रह्मणः सत्त्वं निर्णीतमित्यङ्गीकरोति *बाढमिति ॥ तर्ह्युत्तरग्रन्थवैयर्थ्यं तत्राह *तदिति ॥ ब्रह्मीभूतस्य विदुषः सर्वात्मप्रदर्शनेनाप्युक्त एवार्थो दृढीक्रियत इत्यर्थः॥२८॥ स वा अयमात्मेति पदानामर्थमाह *स एवेति । तत्त्वविदः परमात्ममात्रत्वेऽपि कथं सर्वाधिपत्यं सर्वराजत्वं चेति तत्राह *आधिपत्यमिति । तथा च श्रुतौ भूतानामिति निर्धारणे षष्ठीत्यर्थः ॥ २९ ॥ आधिपत्यादिश-

स्वार्थः प्रत्यक्तदर्थत्वात्सहेतोर्जगदात्मनः ॥ ३० ॥
राजत्वं राजनाद्भास्वदविलुप्तात्मदर्शनात् ॥
ब्रह्मास्मीतिपरिज्ञानध्वस्तध्वान्तत्वकारणात् ॥ ३१ ॥
योऽसावविद्यया देही संसारीवाऽप्यभूत्पुरा ॥
स एव विद्यया ब्रह्मेत्यतोऽस्मिन्जगदर्पितम् ॥ ३२ ॥
चक्रस्यारा यथा सर्वे नाभिनेम्योः समर्पिताः ॥
सजीवा निखिला देहा ब्रह्मविद्यार्पितास्तथा ॥ ३३ ॥
ब्रह्मवित्त्वाद्वामदेवः प्रागहं मनुरीदृशम् ॥
सार्वात्म्यं प्रतिपेदे यत्तदेवात्र निरूपितम् ॥ ३४ ॥
सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते ॥
सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिकः॥३५॥
जक्षन्क्रीडन् रतिं प्राप्त इति सोपाधिकस्य तु ॥
सार्वात्म्यात्सर्वभोगाप्तिश्छान्दोग्ये स्पष्टमीरिता ३६॥
अहमन्नं तथाऽन्नादः श्लोककार्यप्यहो अहम् ॥

---

स्वार्थं वदन्नाधिक्यमेवोपपादयति *अत्रेत्यादिना ॥ ३० ॥ राजने हेतुः *भास्वदिति ॥ तत्रापि हेतुः *ब्रह्मास्मीति॥३१॥ तद्यथेत्याद्युत्तरवाक्ये विदुषः सर्वाधारत्वमुक्तमुपपादयितुं वृत्तमनुवदति *य इति। विद्यया तस्य ब्रह्मत्वे फलितमाह *अत इति ॥ ३२ ॥ उपपत्तिमुक्त्वाऽक्षराणि व्याचष्टे ॥ चक्रस्येति ॥३३॥ उक्तस्य सर्वात्मभावस्य तृतीयेनैकवाक्यत्वं निर्दिशति *ब्रह्मेति ॥ ३४ ॥ सर्वात्मभावे विदुषः सप्रपञ्चत्वं स्यादित्याशङ्क्य विदुषो ब्रह्मीभूतस्य द्वैरूप्यमाह *सोपाधिरिति ॥ निरुपाख्यत्वं शब्दप्रत्ययागोचरत्वम् ॥ ३५ ॥ सोपाधिकस्य सर्वात्मत्वे श्रुत्यन्तरं संवादयति *जक्षदि-

इति तत्त्वविदः सामगाने सर्वात्मता श्रुता ॥ ३७ ॥
अत्रापि चक्रदृष्टान्तात्सोपाधिस्तत्त्ववित्स्तुतः ॥
अपूर्वानपराद्युक्त्या श्रोष्यते निरुपाधिकः ॥ ३८ ॥
भर्तृप्रपञ्च आहात्र समस्तव्यस्तसिद्धये ॥
नाभिरात्मा वपुर्नेमिररा इन्द्रियदेवताः ॥ ३९ ॥
प्रत्येकं प्राणिनां ब्रह्मचक्रमव्यक्तमस्ति हि ॥
तद्व्यक्तये निदिध्यासेत्तद्भावाविष्टधीः सदा ॥ ४० ॥

---

ति॥३६॥तत्रैव तैत्तिरीयकश्रुतिरपि मानमित्याह *अहमिति॥३७॥ अस्तु सोपाधिकस्य सर्वात्मत्वं प्रस्तुते किमायातं तत्राह *अत्रेति । तथा च सर्वेण कल्पितेन द्वैतेन कल्पितमधिष्ठानभूतं ब्रह्म प्रत्यग्भावेन पश्यन्विद्वान्सर्वोपाधिस्तत्तद्रूपेण स्थितः सर्वो भवतीति विदुषोऽविद्वद्दृष्ट्या कल्पितं सप्रपञ्चत्वं इष्टमेवेति भावः । परमार्थतस्तस्य निष्प्रपञ्चत्वे श्रुतिमाह * अपूर्वेति । उपलक्षणमेतत् । अनन्तरमपारं विज्ञानघन एव यत्र वाऽस्य सर्वमात्मैवाभून्नेति नेत्यस्थूलमनण्वित्यादयो ऽप्युदाहार्याः ॥ ३८ ॥ एकदेशिमतं दूषयितुमनुभाषते *भर्तृप्रपञ्च इति । अत्र तद्यथेत्यादिवाक्ये तस्यान्यथाव्याख्यानफलं सूचयति *समस्तेति । तद्व्याख्यानमेव दर्शयति *नाभिरिति । जीवाभिन्नः परमात्मा नाभिस्थानीयः शरीरं पञ्चभूतात्मकं चक्रनेमिस्थानीयं देवतादिजगदरवदात्मनि भूतेषु चार्पितमिति निदिध्यासेदित्युत्तरेणान्वयः ॥ ३९ ॥ किमर्थं तद्ध्यानं तत्राह *प्रत्येकमिति । ब्रह्मणः सर्वप्राणिहृदयसंनिधानं श्रुतिस्मृतिप्रसिद्धमिति हिशब्दार्थः । एवं निरन्तरं ध्यायतो ब्रह्माभिव्यक्तं भवतीत्यर्थः ॥ ४० ॥ तद-

तप्तलोहवदेकत्वं प्राप्य ध्यानादयं पुमान् ॥
अविद्यातिमिरान्धानां ध्येयत्वमुपगच्छति ॥ ४१ ॥
श्रुत्यक्षरबहिष्ठत्वान्न साध्वी चक्रकल्पना ॥
उपास्यं यन्न तद् ब्रह्म तत्त्वमित्येष डिण्डिमः ॥४२॥
समाप्ता ब्रह्मविद्येयं कैवल्यावाप्तयेऽखिला ॥
यथोक्तब्रह्मविद्यायाः स्तुत्यर्थाऽऽख्यायिकोच्यते॥४३॥
दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच द्विविधं मधु ॥

---

भिव्यक्तौ फलमाह *तप्तेति ॥ ४१ ॥ तदेतद् दूषयति *श्रुतीति । ब्रह्मण उपास्यत्वं नेदं यदिदमुपासते इत्यादिश्रुतिविरुद्धं चेत्याह *उपास्यमिति ॥ ४२ ॥ तद्यथेत्यादिवाक्यं विस्तरेणोक्त्वा वृत्तं कीर्तयति *समाप्तेति । किमर्थस्तर्ह्युत्तरग्रन्थस्तत्राह *यथोक्तेति । *उच्यत इति । मन्त्रस्यङ्गत्वेनेति शेषः । प्रवर्ग्यप्रथमाध्याये हि श्रुत्या आख्यायिकोक्ता । दध्यङ्नाम ऋषिरिमां मधुविद्यामश्विभ्यां प्रार्थितो दास्यामीत्युक्त्वा पुनस्तावब्रवीदियं विद्याऽश्विनोर्दत्ता चेत्तव शिरश्छेत्स्यामीतीन्द्रेणोक्तोऽस्मि तद्भयादिमां विद्यां युवयोर्न ब्रवीमीति । तौ तमूचतुरद्यैव तव शिरश्छित्वाऽन्यत्र निःक्षिप्याश्वशिरः सन्धाय श्रोष्यावहे अश्वशिरसा विद्यां ब्रूहीति । तथैव स विद्यामुवाच, तत इन्द्रस्तच्छिरश्चिच्छेद । अथाश्विनौ ऋषिशिरः पुनः संधत्तं, ततः स्वशिरसा विद्याशेषमवोचदिति । सा आख्यायिकाऽत्र विद्यास्तुत्यर्था ॥ ४३ ॥ इदं वै तन्मध्वित्यादेरर्थमाह *दध्यङ्ङिति ॥४४॥ श्रुताविदंशब्देन इयं पृथिवीत्याद्यव्यवहितोक्तमधु परामृश्यते । तदिति व्यवहतं प्रवर्ग्यप्र-

प्रवर्ग्याङ्गं रविध्यानं ब्रह्मध्यानमिति द्वयम् ॥ ४४ ॥
तं वृत्तान्तमृषिः पश्यन्प्राब्रवीदश्विनौ प्रति ॥
वृत्तान्तमब्रवीदृग्भ्यामृग्भ्यां च ब्रह्मवेदनम् ॥ ४५ ॥
अश्विनौ युवयोरुग्रं लाभाय गुरुमारणम् ॥
आविष्करोमि लोकेऽस्मिन्मेघो वृष्टिर्यथा तथा॥४६॥
दध्यङ्ङाथर्वणोऽश्वस्य शिरसा युवयोर्मधु ॥
यत्प्रोवाच तदप्यत्र जानन्नाविष्करोम्यहम् ॥ ४७ ॥
छित्वा गुरोः शिरोऽन्यत्र निक्षिप्याश्वस्य यच्छिरः॥
तदाहृत्य गुरोः कण्ठे प्रतिष्ठापयतो युवाम् ॥ ४८ ॥
श्रुतिः–इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् ।

तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न

---

थमाध्यायमधुब्राह्मणोक्तम् । वैशब्दः स्मरणार्थः । तदेतदृषिः पश्यन्नवोचदिति अस्यार्थमाह *तमिति । श्रुतौ तदेतदिति प्रकृतं शिष्याचार्यसम्बद्धं कर्मोच्यते। तदेवात्र वृत्तान्तशब्देनाप्यभिहितम् । ऋषिर्मन्त्रद्रष्टा धर्मोत्कर्षवशादनयोर्वृत्तान्तं पश्यंस्तद्वामित्यादिमन्त्रेणावोचदित्यर्थः। कियता मन्त्रेण वृत्तान्तमुक्तवांस्तत्राह *वृत्तान्तमिति। ऋग्भ्यां ऋग्द्वयेनेत्यर्थः ॥४५॥ तद्वानित्यादिमन्त्रपदानि व्याचष्टे *अश्विनाविति ॥ ४६ ॥ तस्यैवोत्तरार्धं व्याचष्टे *दध्यङ्ङिति ॥ ४७ ॥ आथर्वणायेति मन्त्रान्तरं व्याचष्टे *छित्वेत्यादिना ॥ ४८ ॥

इयमत्राक्षरयोजना–तद्वानित्यत्र तत्पदस्य दंस इत्यनेन सम्बन्धः । दंस इति कर्मणो नामधेयम् । हे नरा नराकारा अश्विनौ वां युवयोरुग्रं क्रूरं तद्दंसः गुरुमारणरूपं कर्म

वृष्टिं दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाचेति ॥ १६ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । आथर्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायन् त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

---

सनये लाभाय विद्यावाप्त्यर्थं रहसि कृतमप्याविष्कृणोमि प्रकटीकरोमि । तन्यतुः पर्जन्यः । नकार उपमार्थः । यथा पर्जन्यनस्तयित्वादिशब्दैर्वृष्टिं प्रकाशयति तद्वदहं युवयोः क्रूरं कर्माविष्कृणोमीति सम्बन्धः । दध्यङ्नामाथर्वणः ह इति निरर्थको निपातः । यं मध्वात्मज्ञानलक्षणं वामश्वशीर्ष्णा शिरसा प्रयदीमुवाच ईमिति निरर्थको निपातः । यत्प्रोवाच तदप्याविष्कृणोमीत्यन्वयः ॥ १६ ॥ इदं वै तन्मध्वित्यादि पूर्ववत् । हे अश्विनौ दधीचे आथर्वणाय, अथर्वणान्तरव्यावृत्त्यर्थं *दधीच इति । अश्व्यं अश्वसम्बन्धि शिरः प्रत्यैरयतं गमितवन्तौ । गुरोः शिरश्छित्वाऽन्यत्र निक्षिप्य तत्राश्वस्य शिरो युवां स्थापितवन्ताविल्यर्थः । स चाथर्वणो वां युवाभ्यां तद्वक्ष्यामीति प्रतिज्ञातं मधु प्रोवाच । किमर्थमेवं जीवितसंदेहमारुह्य प्रावोचादिति तत्राह *ऋतायन् ऋतं सत्यं पालयितुमिच्छन्, जीविताद‌पि सत्यपरिपालनता गुरुतरेत्यस्य लिङ्गमेतत् । किं तत् मधु प्रोवाचेति तदुच्यते । त्वाष्ट्रं त्वष्टुरादित्यस्य सम्बन्धि प्रवर्ग्यकर्माङ्गभूतं ध्यानं यन्मधु हे दस्रौ रोगाणामुपक्षयितारौ । न केवलं त्वाष्ट्रमध्ववोचत्, अपि कक्ष्यं रहस्यं परमात्मसम्बन्धि विज्ञानं यन्मधुब्राह्मणेनोक्तं तच्च वां प्रावोचादित्यनुषङ्गः ॥ १७ ॥

सत्यप्रतिज्ञः स गुरुः सोढ्वाऽप्येतादृशीं व्यथाम् ॥
मधुद्वयमुवाचेति कथितोऽर्थ ऋचोर्द्वयोः ॥ ४९ ॥
नन्वेतयाऽऽख्यायिकया कथं विद्या स्तुता भवेत् ॥
शृण्वायासेन महता लब्धेति श्रूयते ह्यसौ ॥ ५० ॥
मधुविद्यामिमामिंद्रो गोपायितुमिदं जगौ ॥
अन्यस्मै चेदिमां ब्रूयाः शिरश्छिंद्यामितीदृशम्॥५१॥
तथाऽश्वीयं शिरश्छित्वा छिन्ने तस्मिन्पुनः स्वकम् ॥
शिरः संस्थाप्य विद्याऽसौ लब्धेत्यायास ईरितः॥५२॥
प्रवर्ग्याध्याययोरेवमृग्भ्यां तात्पर्यमीरितम् ॥
उत्तराध्याययोरेवमृग्भ्यां तात्पर्यमीर्यते ॥ ५३ ॥
ऋचां चतसृणां स्तुत्या प्रत्येकमवतारणम् ॥
आदरायेति विज्ञेयमर्थाधिक्यं न किञ्चन ॥ ५४ ॥

श्रुतिः—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच । तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं सर्वासु पूर्षु पुरिशयो नैनेन किञ्चनानावृत्तं नैनेन किञ्चनासंवृतम् ॥ १८ ॥

---

मन्त्रद्वयार्थमुपसंहरति *इति कथित इति ॥ ४९ ॥ आख्यायिकायाः ब्रह्मविद्यास्तुत्यर्थत्वं प्रश्नपूर्वकमुपपादयति *नन्वित्यादिना । *ईदृशमिति । एवमतिरहस्यमिति स्वरूपत इति शेषः ॥ ५० ॥ ५१ ॥ स्तुत्यन्तरमाह *तथेति ॥ ५२ ॥ वृत्तानुवादपूर्वकमुत्तरवाक्यमवतारयति *प्रवर्ग्येति ॥ ५३ ॥ उत्तराध्याययोः तृतीयचतुर्थाध्याययोः इदं वै तन्मधु इत्यादिना पुनः पुनः कथनं किमर्थमित्याशङ्क्याह *ऋचामिति ॥ ५४ ॥ पुरश्चक्रे इत्यादिमन्त्रपदानि व्याकु-

ईशो मनुष्यपश्वादिदेहांश्चक्रे पुरा ततः ॥
स पक्षी लिङ्गरूपेण भूत्वा तान्प्राविशत् पुनः ॥५५॥
योऽयं पुरुषशब्दोऽस्मिन्मन्त्रे तस्य निरुक्तितः ॥
जीवब्रह्मैक्यतात्पर्यं मन्त्रस्यास्योपवर्ण्यते ॥ ५६ ॥
पुरि शेते यतस्तस्मात्पुरुषो जीव उच्यते ॥
सर्वं पूरयतीत्येवं पुरुषो ब्रह्म भण्यते ॥ ५७ ॥
अनेन ब्रह्मणा किञ्चिद्बहिर्नानावृतं क्वचित् ॥
नास्त्यसंवृतमन्तश्च पूरणात्पुरुषस्ततः ॥ ५८ ॥
श्रुतिः—इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवा-

---

रोति *ईशेति ॥ ५५ ॥

द्विपदोपलक्षितानि पुरः मनुष्यपक्षिशरीराणि । चतुष्पादुपलक्षितानि पुरः पशुरशरीराणि चक्रे । एवं कृत्वा पुरः प्रवेशात्पूर्वं पक्षी लिङ्गरूपेण भूत्वा सूक्ष्मभागवान्भूत्वेति यावत् । पुरः शरीराणि प्राविशदित्यर्थः ॥

स वा अयमित्याद्यवतारयति *योऽयमिति । मन्त्रस्थपुरुषशब्दनिरुक्त्याऽस्य मन्त्रस्यैक्यपरत्वं श्रुत्यैव वर्ण्यत इत्यर्थः॥५६॥ तात्पर्यमुक्त्वा पदानि व्याचष्टे *पुरीति । स वा अयं पुरुषः प्रसिद्धो जीवः सर्वासु पूर्षु शरीरेषु वर्त्तमानः पुरि शेते इति व्युत्पत्त्या पुरि शयः सन्पुरुषो भवतीत्यर्थः । नन्वेतावता जीवस्य पुरुषत्वमुक्तं नतु ब्रह्मत्वं तत्राह *सर्वमिति । सर्वं पूरयतीति व्युत्पत्त्या पुरुषशब्दो ब्रह्मणि वर्तते जीवस्यापि पुरुषत्वे तदैक्यासिद्धिरित्यर्थः ॥ ५७ ॥ नैनेनेत्यादि व्याकुर्वन् ब्रह्मणः पुरुषत्वसाधकं पूर्णत्वमुपपादयति । *अनेनेति ॥ ५८ ॥ उत्तरमन्त्रं व्याचष्टे *रूपं रूपमिति । रूपं रूपं प्र-

च । तदेतदृषिः पश्यन्नवोचत् । रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥

इत्युपनिषदि चतुर्थाध्याये पञ्चमं ब्राह्मणं समाप्तम्॥५॥

रूपं रूपं प्रविष्टः सन्प्रतिबिम्बो भवत्ययम् ॥
तदस्य प्रतिबिम्बत्वं प्रत्यग्याथात्म्यवित्तये ॥ ५९ ॥
चैतन्यात्मादयः शब्दा व्युत्पन्नाः प्रतिबिम्बके ॥
लक्षयन्ति चिदात्मानं तेन याथात्म्यवेदनम् ॥ ६० ॥
मिथ्याभिमानैः साभासबुद्ध्यादिपरिकल्पितैः ॥
द्रष्टा श्रोताऽहमित्यादिबहुरूपो विचेष्टते ॥ ६१ ॥
सन्त्यस्य हरयोऽक्षाख्या हरणाद्विषयान्प्रति ॥

---

त्युपाधिवाक्यशेषं पूरयति *प्रविष्टः सन्निति । प्रतिबिम्बात्मनाऽनेकधा जलचन्द्रवद्बभूवेत्याह श्रुतिः *प्रति रूप इति । प्रतिरूपशब्दव्याख्या *प्रतिबिम्ब इति । किमर्थं प्रत्युपाधि आत्मनः प्रतिबिम्बभवनमित्याशङ्क्य तदस्येत्यादेरर्थमाह *तदस्येति । प्रतिचक्षाणायेत्यस्य व्याख्या *प्रत्यगिति ॥ ५९ ॥ प्रतिबिम्बस्य प्रत्यग्याथात्म्यधीहेतुत्वमुपपादयति *चैतन्येति ॥ ६० ॥ एकस्यानेकरूपत्वे किं कारणमित्याशङ्क्य इन्द्र इत्यादेरर्थमाह *मिथ्येति । इन्द्रः परमेश्वरो मायाभिर्मिथ्याभावैः पुरुरूपः बहुरूप ईयते चेष्टते इत्यर्थः ॥ ६१ ॥ ईशस्य पुरुषरूपत्वे निमित्तमुक्तं साधयन् युक्ता हीत्यादेरर्थमाह *स-

प्राणिभेदादनंतास्ते तैस्तु संसरतीश्वरः ॥ ६२ ॥
मन्त्रोक्ता हरयोऽध्यस्तास्तत्संख्या च प्रकल्पिता ॥
एतेषां तत्त्वमात्मैवेत्याह ब्राह्मणमादरात् ॥ ६३ ॥
निःशेषमधुकाण्डस्य तदेतादिति वाक्यतः ॥
सारः संक्षिप्यते साक्षात्करविन्यस्तबिल्ववत् ॥६४॥
अज्ञानं संशयज्ञानं मिथ्याज्ञानमिदं जगत् ॥
तदेतादित्यनूद्यात्र तत्त्वं ब्रह्मेति बोध्यते ॥ ६५ ॥
निष्कारणं तन्निष्कार्यं निश्छिद्रं बाह्यवर्जितम् ॥
पारोक्ष्यप्रतिषेधार्थमात्मा ब्रह्मेति भण्यते ॥६६ ॥
सर्वानुभव एवायं यतः सर्वानुभूस्ततः ॥
कात्स्न्यात्सर्वो भवेदेष चिन्मात्रत्वात्तथाऽनुभूः॥६७॥
कर्त्तव्यमेतद्विज्ञानमिति वेदानुशासनम् ॥

---

न्तीति । यस्य प्रतीचो हरिशब्दतानीन्द्रियाणि युक्तानि प्रज्ञा-नसम्बन्धयुक्तानीत्यर्थः ॥ ६२ ॥ अयं वै हरय इत्यादेरर्थ-माह *मन्त्रोक्त इति । हरयस्तत्संख्या यमेवैति तेषामात्ममात्र-त्वोक्त्या वस्तुतस्तदभाव उक्त इति भावः । तदेतादित्याद्यव-तारयति *एतेषामिति ॥ ६३ ॥ तस्य तात्पर्यमाह *निःशेषेति ॥ ६४ ॥ तदक्षराणि व्याचष्टे *अज्ञानमिति । अ-ज्ञानादिभेदेन त्रिविधं जगद्ब्रह्मेति सामानाधिकरण्याद्यः स्था-णुः स पुमानितिवद्ब्रह्मव्यतिरेकेण वस्तुतो जगन्नास्तीति ब्रह्मण एकरसत्वं द्योत्यत इत्यर्थः ॥ ६५ ॥ अपूर्वमित्यादि-पदानि क्रमेण व्याचष्टे *निष्कारणमिति । वस्तुतः कारणं न भवतीत्यर्थः ॥६६॥ सर्वानुभूरित्यस्यार्थमाह *सर्व इति । कथं रस्य सर्वत्वमनुभवत्वं च तत्राह *कात्स्न्यादिति ॥ ६७ ॥ इत्यनुशासनमित्यस्यार्थमाह *कर्तव्यमिति । ऐक्यज्ञानं श्रवणा-

अस्यातिलङ्घने दोषः संसारानर्थसङ्गतिः ॥ ६८ ॥
कुर्वतस्तु महान्लाभः स्वात्मनः कृतकृत्यता ॥
मधुकाण्डर्षिसर्वस्वमित्थं श्रुत्योपसंहृतम् ॥ ६९ ॥

इति वार्तिकसारे द्वितीयाध्यायस्य
पञ्चमं ब्राह्मणं समाप्तम् ॥

---

श्रुतिः–अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

अग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लातो आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳसैतवप्राचीनयोग्यौ पाराशर्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पाराशर्यात्पाराशर्यो बैजवापायनाद्बैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात्पराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जा-

---

दिद्वारा सम्पाद्यमिति वेदाज्ञातिलङ्घनपालनयोर्गुणदोषौ प्रदृस्य- क्त्वेनाह *अस्येति ॥ ६८ ॥ ६९ ॥

इति वार्तिकसारटीकायां द्वितीयाध्यायस्य
पञ्चमं ब्राह्मणं समाप्तम् ॥

तूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणः त्रैवणेः त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजा-द्भारद्वाज आत्रेयादात्रेयो मान्टेर्मान्टिर्गौतमाद्गौत-मो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्यात् शाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमार-हारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौ-ण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवाद्वत्स-नपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरो ऽयास्या-दाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभू-तिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्वि-भ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वँसनान्मृत्युप्राध्वंसनः प्र-ध्वंसनात्प्रध्वंसन एकऋषेरेकऋषिर्विप्रचित्तेर्विप्रचि-त्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्व-यम्भु ब्रह्मणे नमः ॥ ३ ॥

इत्युपनिषदि चतुर्थाध्याये षष्ठं ब्राह्मणं समाप्तम् ।

---

वंशब्राह्मणतात्पर्यमाह *उच्यते इति ॥१॥ ब्रह्मज्ञानस्य पुरु-षबुध्युत्प्रेक्षितत्वशंकानिवृत्त्यर्थं ब्राह्मणमित्यर्थान्तरमाह *पुं-बुद्धिरिति । अत्र प्रथमान्तः शिष्यः पञ्चम्यन्तो गुरुरिति मन्त-व्यम् । कथमुक्तशङ्कानिवृत्तिस्तत्राह *ब्रह्मेति ॥ तथा चापौरु-षेयत्वेन निर्दुष्टवेदस्येश्वरप्रसादात्प्रजापतौ स्वयमेवाविर्भूतत्वा-त्तन्मूलत्वेनाविद्यायोनात्क्तं शङ्कावकाश इत्यर्थः ॥ २ ॥

उच्यते मधुकाण्डार्थविद्यागुरुपरम्परा ॥
स्तुत्यर्थं ब्रह्मविद्यायाः स्तुत्या च स्यात्प्ररोचना ॥१॥
पुंबुद्धिकल्पनाशंकानुत्यर्थमथवोच्यते ॥
ब्रह्म स्वयंभ्विति प्रोक्ता वेदस्यापौरुषेयता ॥ २ ॥
यस्मादपरतंत्रोऽयं वेदात्मा ब्रह्मशब्दितः ॥
मनोवाक्कर्मभिस्तस्माद्भक्त्या तस्मै नमो नमः ॥ ३ ॥
नमोन्तत्वेन लिङ्गेन जप्योऽयं वंश इष्यते ॥
विद्याप्रकरणे पाठाद्विद्याहेतुर्जपो मतः ॥ ४ ॥
शतानि पञ्चश्लोकानां ततो द्वानवतिस्तथा ॥
चतुर्थाध्यायसारस्य तावद्भिः संग्रहः कृतः ॥ ५ ॥
॥ ५९२ ॥

इति वार्तिकसारे द्वितीयाध्याये षष्ठब्राह्मणं समाप्तम् ।

---

हेतुकथनपूर्वकं त्रिविधं प्रह्वीभावं नमःशब्दार्थं दर्शयन्ब्रह्मणे नम इत्यस्यार्थमाह *यस्मादिति ॥ ३ ॥ ब्राह्मणस्यार्थांतरमाह *नम इति । किमेतज्जपेन ? तत्राह *विद्याप्रकरणेति ॥ ४ ॥ ५ ॥

यत्पादाब्जस्मृतेर्मूढोऽप्यल्पायासात्कृती भवेत् ॥
स्वानन्दतुष्टस्तं राममानन्दघनमाश्रये ॥ १ ॥

इति वार्तिकसारटीकायां द्वितीयाध्यायस्य षष्ठं ब्राह्मणं समाप्तम् ।
द्वितीयोऽध्यायः समाप्तः ॥

शुभम्भवतु ॐ ॥

वा०-समाप्तो मधुकांडोऽयमुपदेशप्रधानकः ॥
उपपत्तिप्रधानोऽथ याज्ञवल्क्याख्य उच्यते ॥ १ ॥
पदार्थविषया युक्तिर्वाक्यार्थे उपदेशगीः ॥
अतो न पुनरुक्तत्वं काण्डयोः शेषशेषिणोः ॥ २ ॥
काण्डोऽयं याज्ञवल्क्याख्यः स्यादध्यायद्वयात्मकः ॥
जल्पवादकथाभेदादध्यायार्थौ व्यवस्थितौ ॥ ३ ॥
तत्र जल्पकथारूपिण्यध्याये पंचमे नव ॥
ब्राह्मणान्यथ एतेषां क्रमेणेहोपवर्ण्यते ॥ ४ ॥
आद्ये मृत्योरतिक्रांतिर्द्वितीये मृत्युनिर्णयः ॥
तृतीये संसृतिव्याप्तिस्तुर्ये प्रत्यग्विनिर्णयः ॥ ५
पञ्चमे ब्रह्मता तस्य षष्ठे तु ब्रह्मकार्यगीः ॥

---

वृत्तानुद्रवणपूर्वकं सङ्गतिं दर्शयन्मुनिकांडस्य पौनरुक्त्यं परिहरति *समाप्त इति ॥ मधुकांडे दुन्दुभ्यादिदृष्टांतैरुपपत्तिरप्युक्ता, याज्ञवल्क्यकांडेऽप्ययमात्मा ब्रह्मेत्युपदिश्यते इत्युभयत्र प्रधानपदम् । उपपत्तिप्रधानत्वादेवास्यानन्तर्यत्वमुपपद्यत इत्याह *अथेति । प्रमाणोक्त्यनन्तरभाविनी हि तदनुग्राहकतर्कोक्तिरिति भावः ॥१॥ आगमस्य युक्त्यपेक्षत्वेऽनपेक्षत्वलक्षणप्रामाण्यक्षतिरित्याशङ्क्य तयोर्विषयभेदान्नैवमित्याह *पदार्थेति। उत्तरकाण्डस्य पूर्वकाण्डशेषत्वादपुनरुक्ततेत्युपसंहरति *अत इति । उभयत्रागमयुक्त्योः प्राधान्यमतःशब्दार्थः ॥ २ ॥ सप्तमाष्टमयोरपि मुनिकाण्डत्वसंज्ञाभ्रमं निरस्यति *काण्ड इति । *जल्पेति । जयपराजयप्रधाना विजिगीषुकथा जल्पः । तत्त्वबुभुत्सोस्तत्त्वनिर्णयप्रधाना कथा वादः इति तयोर्भेदः ॥ ३ ॥ पञ्चमाध्यायब्राह्मणसंख्यां दर्शयन्प्रतिज्ञापूर्वकं शिष्यबुद्धिसौक-

सप्तमे कारणावस्था ब्रह्मतत्त्वमथाष्टमे ॥ ६ ॥
नवमे देवविस्तारः संक्षेपद्वारतः पुनः ॥
सगुणं निर्गुणं चोक्तं ब्रह्म सर्वाधिकारिणाम् ॥ ७ ॥
दानं तत्त्वज्ञसंयोगस्तत्संवाद इति त्रयम् ॥
विद्याप्राप्तेरुपायोऽयमित्याख्यानेन सूच्यते ॥ ८ ॥
उद्गीथप्रमुखा येऽर्था मधुकाण्डे पुरोदिताः ॥
तद्विशेषा विचार्यन्ते तस्मात्तैरेकवाक्यता ॥ ९ ॥

श्रु०-जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य

---

र्याय तदर्थान्संगृह्णाति *तत्रेत्यादिना ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ यथोक्तरीत्या काण्डारम्भेऽपि किमित्याख्यायिका प्रणीयते ? तत्राह *दानमिति ॥ ८ ॥ एवमाख्यायिकातात्पर्यमुक्त्वा प्रथमब्राह्मणस्य सङ्गतिमाह *उद्गीथेति । उद्गीथब्राह्मणोक्तवागादिस्वरूपनिर्णयार्थत्वादस्य ब्राह्मणस्यात्रत्यदर्शनस्य तत्रत्योपास्तिशेषत्वात्तैरेकवाक्यत्वमित्यर्थः ॥ ९ ॥

जनको ह इत्यादिश्रुतेरयमर्थः-जनको ह नामा राजा विदेहेषु भवो वैदेहः स च बहुदाक्षिणेनाश्वमेधेन ईजे अयजत । तस्मिन्यज्ञे निमन्त्रिता अभिसमेताः दर्शनकामाश्च कुरुदेशानां पांचालानां च ब्राह्मणाः सङ्गता बभूवुः । तत्र विद्वत्समाजं दृष्ट्वा तस्य विशेषेण ज्ञातुमिच्छा बभूव । जिज्ञासाप्रकारं दर्शयति-तेषां मध्ये कः स्विदनूचानतमः अतिशयेनानुवचनसमर्थ इति । तद्विज्ञानोपायार्थं गवां सहस्रमवरुरोध गोष्ठेऽवरोधं कारयामास । ता एव गा विशिनष्टि । पलचतुर्थांशः पादः सुवर्णस्य दश दश पादा एकैकस्याः गोरेकैकस्मिञ्शृङ्गे पञ्च पञ्च पादा आबद्धा ब-

ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति । स ह गवां सहस्रमवरुरोध दश दश पादा एकैकस्याः शृंगयोराबद्धा बभूवुः ॥ १ ॥

तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति । ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदज सामश्रवा ३ इति ता होदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेति ॥

---

भूवुः ॥ १ ॥ एवं गा अवरुध्य तानुवाच, हे भगवन्तः ! इत्यामन्त्र्य सर्वे यूयं ब्राह्मणाः वेदाध्ययनसम्पन्नास्तदर्थनिष्ठाश्च वः युष्माकं मध्ये यो ब्रह्मिष्ठः अतिशयेन वेदार्थनिष्ठः स एता गा उदजतादुद्गमयत्विति । एवमुक्तास्ते ब्राह्मणाः ब्रह्मिष्ठत्वमात्मनः प्रतिज्ञातुं न दधृषुर्न प्रगल्भाः संवृताः । अथाप्रगल्भेषु तेषु सत्सु याज्ञवल्क्यः स्वीयं शिष्यमुवाच । हे सोम्य सामश्रवाः ! सामविधिं शृणोतीति सामश्रवाः एता गा उदज उद्गमयास्मद्गृहानिति । अत्र सामश्रवेत्यनेन याज्ञवल्क्यश्चतुर्वेदीति गम्यते, यजुर्वेदिनो मुनेः सकाशात्समविधिश्रवणे ऋक्ष्वध्यारूढं हि साम गीयते अथर्ववेदस्त्रिष्वन्तर्भवतीति । ता गा उदाचकार उद्गमयामासाचार्यगृहं प्रति । ते ह ब्राह्मणाः चुक्रुधुः क्रुद्धवन्तः । तेषामभिप्रायमाह । नोऽस्माकं मध्ये कथमयं ब्रह्मिष्ठोऽस्मीति ब्रवीति, ब्रह्मिष्ठपणस्वीकारात्तथोक्तमिति भावः । अथ क्रोधानन्तरं जनकस्य यजमानस्य होता ऋत्विग् आश्वलोनाम बभूव स एनं याज्ञवल्क्यं राजाश्रयात्धृष्ठः पप्रच्छ, हे याज्ञवल्क्य ! त्वं नु खलु नो ब्रह्मिष्ठोऽसीति । प्लुतिर्भर्त्स-

अथ ह जनकस्य वैदेहस्य होताऽऽश्वलो बभूव सहैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी ३ इति । स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्म इति तं ह तत एव प्रष्टुं दध्रे होताऽऽश्वलः ॥ २ ॥

याज्ञवल्क्येति होवाच यदिदं सर्वं मृत्युनाऽऽप्तं सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति ।

वा०–आसुरासंगमृत्युघ्नं प्राणध्यानं पुरोदितम् ॥
मृत्युघ्नमेवं वागादेर्ध्यानं सोऽपृच्छदाश्वलः ॥ १० ॥

नार्था । याज्ञवल्क्य उवाच नमस्कुर्मो वयं ब्रह्मिष्ठाय इदानीं तु गोकामा स्म वयमिति । अनेनानौद्धत्यं ब्रह्मविदो लिङ्गमिति सूचितम् । तत एव ब्रह्मवित्पणस्वीकरणादेव तं ब्रह्मिष्ठप्रतिज्ञं सन्तं प्रष्टुं दध्रे होताऽऽश्वलः ॥ २ ॥ तत्र प्रथमं मुनेराभिमुख्यमापादयितुं संबोधयति *याज्ञवल्क्येति । यदिदं कर्मणः साधनजातं मन्त्रर्त्विगादि सर्वं मृत्युना व्याप्तं, न केवलं व्याप्तमभिपन्नं च मृत्युना वशीकृतं च, तस्य कर्मणः साधनस्य कर्ता यजमानः केन साधनेन मृत्योराप्तिं मृत्युगोचरत्वमतिक्रम्य मुच्यते मृत्योरवश्यो भवतीत्यर्थः ।

ननु मुख्यप्राणध्यानं मृत्योरत्ययसाधनमित्युद्गीथब्राह्मण एवोक्तत्वादत्र केनेति प्रश्नानुपपत्तिरित्याशङ्क्य तद्विशेषा विचार्यन्ते इत्युक्तमेव व्यक्तीकुर्वन्नाह *आसुरेति । उद्गीथप्रकरणे प्राणध्यानं मृत्युघ्नमित्युक्तं वागादेः परिच्छेदलक्षणमृत्युघ्नमग्न्याद्यात्मत्वध्यानमुपसर्जनत्वेन तत्र वक्तव्यमपि नोक्तमतस्तदर्थोऽयं प्रश्न इत्यर्थः ॥ १० ॥ सर्वं मृत्युनाऽऽप्तमित्यत्र

अध्यात्ममाधिभूतं च यजमानर्त्विगादिषु ॥
स्वाभाविकः परिच्छेदो मृत्युर्मर्त्यफलार्जनात् ॥ ११ ॥
कालोऽपि मृत्युः कर्त्रादिमारणात्स्यात्स च द्विधा ॥
सौरोऽह्नो रात्रिरूपेण चांद्रः पक्षादिरूपतः ॥ १२ ॥
जेतुं मृत्युत्रयं ब्रह्मलोकं प्राप्तुं च साधनम् ॥
प्रश्नैश्चतुर्भिः पप्रच्छ देवध्यानं तदुत्तरम् ॥ १३ ॥
यजमानस्य वागादीन्होत्रादींश्चाधिदैविके ॥
अग्न्यादावेकतां ध्यात्वा मुच्यते चातिमुच्यते ॥ १४ ॥
मुक्तिस्त्यक्त्वाऽऽसुरं भावं देवभावस्य चिन्तनम् ॥
ब्रह्मलोकोऽतिमुक्तिः स्यान्न कैवल्यमुपासनात् ॥१५॥
आधिदैविकरूपेण धीरध्यात्माधिभूतयोः ॥
ऊह्या, सर्वत्र तेनोक्ता प्राणविद्याऽभिपूर्यते ॥ १६ ॥

---

मृत्युशब्दार्थमाह *अध्यात्ममिति ॥ ११ ॥ अर्थक्रमानुरोधेन केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्याद्युत्तरप्रश्नत्रयस्यापि तात्पर्यं वक्तुमहोरात्राद्यात्मककालातिक्रमेणोपायप्रश्नोऽनुपपन्नः, कालस्य पूर्वोक्तलक्षणमृत्युत्वाभावादित्याशङ्क्य कालस्यापि मृत्युत्वं साधयति *काल इति । तथापि कालविषयं प्रश्नद्वयं व्यर्थमित्याशङ्क्य कालद्वैविध्यं दर्शयति *स चेति॥१२॥ एवं कालस्य मृत्युत्वं द्वैविध्यं चोक्त्वा केनेत्यादिप्रश्नचतुष्टयस्य तात्पर्यमाह *जेतुमिति । होत्रर्त्विजेत्यादिप्रतिवचनतात्पर्यमाह *देवेति ॥१३॥ ध्यानप्रकारमेवाह *यजमानस्येति । सा मुक्तिः साऽतिमुक्तिरित्येतद्व्याचष्टे *मुच्यत इति ॥१४॥ तदेव स्पष्टयति *मुक्तिरिति । अतिमुक्तिशब्दस्य मोक्षवाचित्वं किं न स्यात्तत्राह *नेति ॥ १५ ॥ उक्तन्यायमुत्तरवाक्येष्वतिदिशति*अधिदैविकेति । फलितमाह *तेनेति । उद्गीथब्राह्मण इति शेषः ॥१६॥

श्रुतिः—होत्रर्त्विजाऽग्निना वाचा, वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ॥ ३ ॥

याज्ञवल्क्येति होवाच यदिदं सर्वमहोरात्राभ्यामाप्तं सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन, चक्षुर्वै यज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः साऽतिमुक्तिः ॥ ४ ॥

याज्ञवल्क्येति होवाच यदिदं सर्वं पूर्वपक्षापरपक्षाभ्यामाप्तं सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन, प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्तिः ॥ ५ ॥

---

अक्षरार्थस्तु—एवं पृष्टो याज्ञवल्क्य आह *होत्रर्त्विजाऽग्निना वाचेति । एतस्यार्थं श्रुतिरेवाह *वाग्वा इत्यादिना । अत्र यज्ञशब्दो यजमानवचनः, यज्ञो वै यजमान इति श्रुतेः । यज्ञस्य या वाक्सैव होता यदेतद्यज्ञस्य साधनद्वयमध्यात्मं वाक् अधियज्ञं होता ऋत्विगेतत्साधनद्वयमधिदैवतरूपेणाग्न्यात्मनोपास्यमानं यजमानस्य मृत्युरतिमुक्तये भवतीत्यर्थः । एवं चक्षुरध्वर्युश्चादित्यात्मना द्रष्टव्यः । उद्गाता प्राणश्च वाय्वात्मना । एवं परिच्छेदलक्षणस्य सौरचान्द्रकलालक्षणस्य च मृत्योरत्ययोपाये कथिते परलोकप्राप्तिसाधनं प्रष्टुमुपक्रमते—यदिदं प्रसिद्धम् अन्तरिक्षमानारम्बणमनालम्बनम् इवशब्दादस्त्येव तत्रालम्बनं तं

याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारम्बणमिवाथ केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण, मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षः, अथ सम्पदः ॥ ६ ॥

वा०–अथ सम्पद उच्यन्ते स्वल्पे कर्मणि कर्मणः ॥
महतश्चिन्तनं सम्पत्तया प्राप्यं महाफलम् ॥ १७ ॥
एवं सत्यश्वमेधादेः पाठो विप्रैः कृतोऽर्थवान् ॥

---

त्सर्वनाम्ना केनेति पृच्छति, आलम्बनं विना फलप्राप्तेरसम्भवात् । केनाक्रमणेनावष्टम्भेन यजमानः कर्मफलं प्रतिपद्यमानोऽतिमुच्यत इत्यर्थः । ब्रह्मणेत्यादि पूर्ववत् । ब्रह्माणमृत्विजं मनश्चंद्रात्मना ध्यायंश्चन्द्रं मनसाऽऽलम्बनेन स्वर्गलोकं प्राप्नोति अतिमुच्यत इति भावः । उक्तन्यायेनानुक्तत्वगादयोऽपि वाय्वाद्यात्मना ध्यातव्या इत्यभिप्रेत्योपसंहरति श्रुतिः *इत्यतिमोक्ष इति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

अथ सम्पद इत्यत्रापेक्षितं पूरयन्सम्पत्पदार्थमाह *अथेति । दर्शनभेदकथनानन्तरमित्यर्थः । महतोऽश्वमेधादेः कर्मत्वादिकिञ्चित्सादृश्यात्स्वल्पेऽग्निहोत्रादौ सम्पत्तिः सम्पद् यथाशक्त्याऽग्निहोत्रादिनिर्वर्तनेनाश्वमेधादि निर्वर्त्यते मयेति ध्यानं सम्पदित्यर्थः ॥ १७ ॥ अश्वमेधादिफलमप्युक्तध्यानेन लभ्यते इत्यत्र मानमाह *एवमिति । विहिताध्ययनस्यार्थज्ञानानुष्ठानादिपरम्परया फलवत्त्वमिष्टम् । नचाश्वमेधादौ विप्राणामधिकारोऽतस्तेषामध्यायनार्थवत्त्वानुपपत्त्या सम्पदादिफलसिद्धिरेष्टव्येत्यर्थः । ननु महतो फलस्य कथमल्पीयस्या सम्पदाऽऽप्तिस्तत्राह ।

न शास्त्रस्य ह्युपालम्भः सम्पदैवास्तु तत्फलम् ॥ १८॥

श्रुतिः—याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होताऽस्मिन् यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किञ्चेदं प्राणभृदिति॥७॥

वा०—होतृप्रयुक्तऋग्जातित्रये सम्पादयन्नमून् ॥
लोकांस्त्रैलोक्यमाप्नोति समत्वात्त्रित्वसंख्यया ॥१९॥
समिन्मांसादिमुख्यान्नामुज्ज्वलत्वादिसाम्यतः ॥

---

*न शास्त्रस्येति । नास्तिवचनस्यातिभार इति भावः ॥ १८ ॥

कतिभिर्ऋग्भिरित्यादिश्रुतेरयमर्थः—कतिभिर्ऋग्भिः कतिसंख्याभिः ऋग्जातिभिरद्यास्मिन्यज्ञे होता ऋत्विक्करिष्यति शस्त्रं शंसतीत्यर्थः । मुनिराह *तिसृभिरिति । आहेतरः *कतमास्तास्तिस्र इति । संख्येयविषयोऽयं प्रश्नः कतिभिरित्यादिः, पूर्वप्रश्नस्तु संख्याविषयः । मुनिराह *पुरोऽनुवाक्येत्यादिना । तत्र प्राग्यागकालाद् याः प्रयुज्यन्ते ऋचः सा ऋग्जातिः पुरोऽनुवाक्येत्युच्यते । यागार्थं याः प्रयुज्यन्ते ऋचः सा ऋग्जातिर्याज्या । शस्त्रार्थं याः प्रयुज्यन्ते सा शस्या । याः काश्चन ऋचः स्तोत्रिया अन्या वा एतास्वेवतिसृषु ऋग्जातिष्वंतर्भवंति । किं ताभिर्जयतीति प्रश्नः यत्किञ्चेदं प्राणभृदित्युत्तरम्॥७॥ननु संपदुच्यत इति प्रतिज्ञातमत्र कस्यापि कुत्र चित्संपादनं न प्रतीयत इत्याशङ्क्य कण्डिकातात्पर्यमाह *होतृप्रयुक्तेति । त्रिलोक्यन्तर्भूतप्राणभृच्छब्दोपलक्षितलोकत्रयात्मना ऋग्जातित्रयं ध्यायन् त्रिलोकीं जयतीत्यर्थः । त्रिलोक्यां ऋक्त्रयः सम्पादने निमित्तमाह *समत्वादिति॥१९॥उत्तरकण्डिकातात्पर्यमाह *समिदिति ।

देवलोकादिसम्पत्त्या देवलोकादिमाप्नुयात् ॥ २० ॥

श्रुतिः–याज्ञवल्क्येति होवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञ आहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति, या हुता अतिनेदन्ते, या हुता अधिशेरते, किं ताभिर्जयतीति या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको, या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको, या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ॥८॥

---

श्रुतौ कत्याहुतीरिति कत्याहुतिप्रकारा इत्यर्थः। शेषं पूर्ववत्। या हुताः समिदाद्याहुतयः उज्ज्वलंति, या हुता मांसाद्याः अतिनेदंति अतीव शब्दं कुर्वन्ति, या हुताः क्षीरादयः अधिशेरते अधोगत्वा भूमिमधिशेरते। किं ताभिराहुतीभिर्जयतीति या हुता उज्ज्वलंति ताभिर्देवलोकमेव जयति। तत्र हेतुः *दीप्यत इति॥ उज्ज्वलत्वसामान्येन देवलोकः मया निर्वर्त्यत इति समिदाद्याहुतीर्देवलोकत्वेन ध्यायन् तमेवाप्नोतीत्यर्थः। मांसाद्याहुतीनां पितृलोकजयहेतुत्वे हेतुमाह श्रुतिः *अतीव हि पितृलोक इति। अयमर्थः–पितृलोकसंबद्धानां हि संयमिनीपुरे यमेन पीड्यमानानां हा हतोऽस्मि मुंच मुंचेति शब्दो भवति। मांसाद्याहुतयोऽपि कुत्सितं शब्दं कुर्वंति तेन शब्दसामान्यान्मांसाद्याहुतिः पितृलोकत्वेन ध्यायंस्तज्जयतीत्यर्थः। पय आद्याहुतेः मनुष्यलोकजयहेतुत्वे निमित्तमाह श्रुतिः *अध इव हीति। मनुष्यलोकस्य पापप्रचुरस्याधोगमनं प्रसिद्धम्। अस्ति हि पयआद्याहुतीनामधस्ताद्गमनं, तेन सामान्येन क्षीराद्या-

याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

वा०—ब्रह्मणो मनसो वृत्तिष्वनन्तास्वन्तवर्जितान् ।
विश्वान्सम्पादयन्देवाननन्तं लोकमाप्नुयात् ॥ २१ ॥

श्रुतिः—याज्ञवल्क्येति होवाच कत्ययमद्योद्गाताऽस्मिन्यज्ञे स्तोत्रियाः स्तोष्यतीति तिस्र इति कतमास्तास्तिस्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरो-

---

हुतीर्मनुष्यलोकत्वेन भावयन्स्तं जयतीत्यर्थः॥८॥ *याज्ञवल्क्येति होवाचेति पूर्ववत् । अयमृत्विग्ब्रह्माऽऽहवनीयस्य दक्षिणतः स्थित्वा कतिभिर्देवताभिर्यज्ञं गोपायति । अत्र प्रतिवादिबुद्धिव्यामोहार्थं कतिभिरिति बहुवचनम्, जल्पकथायाः प्रस्तुतत्वात् । मुनिराह *एकयेति । कतमा सैकेति । मनसा हि ब्रह्मा व्याप्रियते ध्यानेन तेन मनःपदेन देवता तया, मनसा यज्ञं गोपायतीत्यर्थः । एतत्सर्वमभिप्रेत्यानंतं वै मन इत्यादि व्याचष्टे *ब्रह्मण इति ॥ २१ ॥

श्रुतौ वै प्रसिद्ध्यर्थः । प्रसिद्धं हि मनसो वृत्तिभेदेनानंत्यं विश्वेदेवानामप्यानंत्यम्, अनंता वै विश्वेदेवा इति श्रुत्यंतरेऽपि प्रसिद्धमित्यर्थः ॥ ९ ॥ याज्ञवल्क्येत्यादि पूर्ववत् । *कति स्तोत्रिया इति । कतिपयानामृचां समुदायः स्तोत्रिया नामेत्यर्थः । प्रतिवचनं तु स्तोत्रियाः शस्या वा याः काश्चन ताः सर्वाः तिस्र एवेति । प्रगीतमृग्जातं स्तोत्रम्, अप्रगीतं

ऽनुवाक्याऽपानो याज्या व्यानः शस्या किं ताभिजयतीति पृथिवीलोकमेव पुरोऽनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम ॥ १० ॥

इत्युपनिषदि प्रथमं ब्राह्मणं समाप्तम् ।

उक्तास्वृग्जातिषूद्गात्रा गीयमानासु सम्पदा ॥
लोकत्रयस्य प्राणादेरपि लोकत्रयं व्रजेत् ॥ २२ ॥
कर्मण्यल्पे महाकर्म तत्फलं चानया दिशा ॥
ध्यायेन्महाफलप्राप्त्यै लोकेऽप्येवमुदीर्यते ॥ २३ ॥
गया भूर्ब्राह्मणो विष्णुरन्नं ब्रह्मेति सम्पदा ॥
श्राद्धे फलस्य बाहुल्यं मत्वा सम्पादयन्ति हि ॥२४॥

इति वार्त्तिकसारे तृतीयाध्याये प्रथमं ब्राह्मणं समाप्तम् ।

---

शस्त्रम् । कतमा इत्यादि पूर्ववत् । प्रकारान्तरेण पृच्छति *कतमास्ता या अध्यात्ममिति । याः पुरोऽनुवाक्यादयोऽधियज्ञमुक्ता अध्यात्मं ताः का इत्यर्थः । उत्तरमाह *प्राण एवेत्यादिना ॥ १० ॥

अत्रापि संपदोऽप्रतीतेः संपत्प्रकारं स्पष्टयति *उक्तास्विति । अयं भावः—संख्यासामान्यात्प्राणादित्रयं पुरोऽनुवाक्यादित्रये क्रमेण संपाद्य पुनश्चादित्वमध्यत्वांतत्वसाम्यात्तत्र भूरादिलोकत्रयदृष्टिं कुर्वल्लोकत्रयं जयतीति॥२२॥उक्तां सम्पदमुपसंहरति *कर्मणीति । तस्या एव लक्षणान्तरमाह *तत्फलमिति । फलभूतलोकसम्पादनस्यापि सम्पत्वेन पूर्ववाक्ये उक्तत्वादल्पकर्मणि महत्कर्मसम्पादनवत्तत्फलसम्पादन-

बन्धाख्यमृत्युस्तन्मृत्युर्विदुषोऽनुक्रमस्तथा ॥
प्रयोजकलयो मृत्योः प्रेरकश्चात्र पृच्छयते ॥ १ ॥

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति। अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे त इति ॥ १ ॥

प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन

---

मपि संपदेवेत्यर्थः। उक्तार्थे शिष्टाचारं प्रमाणयति *लोकेऽपीत्यादिना ॥ २३ ॥ २४ ॥

इति टीकायां तृतीयाध्याये प्रथमं ब्राह्मणं समाप्तम्।

आर्तभागप्रश्नान्संगृह्णाति *बन्धेति। द्वितीयब्राह्मणं सप्तम्यर्थः। सर्वं मृत्युनाऽऽप्तमित्यत्र उक्तमृत्युः किं लक्षणः, तस्य च मृत्युरस्ति न वा, विदुष उत्क्रान्तिरस्ति न वा, नेति पक्षे प्राणवत्प्रयोजकस्य कर्मादेरपि लयोऽस्ति न वा, कालकर्मेशानां मध्ये बन्धाख्यमृत्योः प्रेरकं किं वेति पञ्चप्रश्नाः क्रियन्त इत्यर्थः ॥ १ ॥

श्रुत्यर्थस्तु—अथानन्तरं ममायं न गोचर इत्युपरते आश्वले एनं मुनिं जारत्कारवो जरत्कारुगोत्रः ऋतभागस्यापत्यमार्तभागः पप्रच्छ। कति ग्रहाः कत्यतिग्रहाः। इतिशब्दो वाक्यसमाप्त्यर्थः। मुनिराह *अष्टौ ग्रहा इत्यादि। कतमे त इति संख्येयविषयः प्रश्नः ॥ १ ॥

ग्रहादिलक्षणस्य मृत्योर्विशेषात्मतां दर्शयितुं सामान्यलक्षणमाह *अधिभूतेति। अध्यात्मादिपरिच्छेदकरः क्रियाकारकफलात्मको मोहनिमित्तरागाद्यवष्टंभो विषयेन्द्रि-

हि गन्धाञ्जिघ्रति ॥ २ ॥

वाग्वै ग्रहः स नाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥

जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ४ ॥

चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥

श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ॥ ६ ॥

मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥

हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति ॥ ८ ॥

त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

---

यरूपो यथोक्तमृत्युरित्यर्थः ।

श्रुतौ प्राणशब्दो घ्राणवचनः, इन्द्रियप्रकरणात् । अपानशब्दोऽपि तद्ग्राह्यगन्धपरः । विषयाणामेवातिग्रहत्वोक्तेः घ्राणस्य ग्रहत्वसाधकं गन्धग्राहित्वमनुभवेनाह श्रुतिः *अपानेन हीति । अत्रापानशब्दोऽश्वासवचनः, अपश्वासेनोपसृतं गंधं घ्राणेन सर्वलोको जिघ्रतीत्यर्थः ॥ २ ॥ वाग्वै ग्रहः इष्टानिष्टोक्तिप्रकरणात् सा वागाख्यो ग्रहो नाम्ना व्यक्तव्येन विषयेणातिग्राहेण गृहीतः । दीर्घश्छान्दसः । वक्तव्यासङ्गेन प्रयुक्ता वाक्सर्वानर्थैर्युज्यत इत्यर्थः । समानमन्यत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

वा०-अधिभूताधियज्ञादिपरिच्छेदफलात्मकः ॥
मोहासङ्गात्मको मृत्युर्ग्रहातिग्रहबन्धवान् ॥ २ ॥
ग्रहा प्राणादयो ज्ञेया गृह्णन्ति विषयान्यतः ॥
घ्राणादिप्रेरकत्वेन गन्धाद्याः स्युरतिग्रहाः ॥ ३ ॥
पूर्वब्राह्मणसंप्रोक्तध्यानसंयुक्तकर्मभिः ॥
परिच्छेदविनाशेऽपि मृत्योः सर्वस्य न क्षयः ॥ ४ ॥
हिरण्यगर्भरूपेऽपि श्रूयन्ते हि क्षुधादयः ॥
अतो मृत्योरशेषस्य मृत्युरन्योऽत्र पृच्छयते ॥ ५ ॥
निर्णयौ मृत्युतन्मृत्यू बन्धमोक्षावबुद्धये ॥

---

बन्धवान्बन्धात्मकः ॥२॥प्राणो वै ग्रह इत्यादेरर्थमाह *ग्रहा इति। प्राणादीनां ग्रहत्वे हेतुः *गृह्णन्तीति। विषयाणामतिग्रहत्वे हेतुः *घ्राणादीति । गन्धाद्या अनादिवासनया घ्राणादिप्रेरकत्वेन घ्राणादीन्ग्रहानतिक्रम्य स्ववशं नयन्तीत्यतिग्रहाःइत्यर्थः॥३॥

यदिदमित्यादिद्वितीयप्रश्नोऽनुपपन्नः स मुक्तिः सातिमुक्तिरित्यत्र सूत्रप्राप्तेर्मृत्युनिवर्त्तकत्वेनोक्तत्वादित्याशङ्क्याह *पूर्वेति ॥ ४ ॥ सूत्रपदं प्राप्तस्यापि न सर्वमृत्युनिवृत्तिरित्येतदेव स्पष्टयति *हिरण्येति । हिरण्यगर्भप्राप्तेः सर्वमृत्युनिवर्त्तकत्वाभावे फलितमाह *अत इति ॥ ५ ॥ नन्वेवमपि मृत्युतन्मृत्युनिश्चयस्यापुमर्थत्वात्तन्निर्णयाय तद्विषयप्रश्नद्वयमप्यनुपपन्नमिति तत्राह *निर्णयाविति। अयं बन्धोऽयं मोक्ष इति निश्चयाभावे बन्धनिवृत्तिकामस्य तदुपाये प्रवृत्त्ययोगान्मृत्युतन्मृत्युधियोऽपि परम्परया सुखहेतुत्वेन पुमर्थत्वमिति भावः। मृत्युतन्मृत्योः प्रष्टव्यत्वे हेत्वन्तरमाह *दुर्वचाविति । चक्षुरादेर्घटादेश्चेन्द्रियत्वेन विषयत्वेन च प्रसिद्धत्वेऽपि

दुर्वचौ च ग्रहादीनां लोकेऽत्यन्ताप्रसिद्धितः ॥ ६ ॥
ग्रहातिग्रहवद्बन्धो देहोऽप्येष तथाऽप्यसौ ॥
जन्मान्तरेष्वसञ्चारान्नाप्रसिद्धो न दुर्वचः ॥ ७ ॥
एकमेव मनः सर्वजन्मगामीति तार्किकाः ॥
अक्षान्तराण्यपीत्यन्ये तेन सङ्ख्याऽत्र दुर्वचा ॥ ८ ॥
मनोन्यायः समोऽन्येषु तेनाशेषविवक्षया ॥

---

ग्रहातिग्रहबन्धात्मत्वेनाप्रसिद्धत्वादित्यर्थः ॥ ६ ॥ बन्धस्य निर्णेयत्वे देहस्यापि बन्धात्मत्वात्तद्विषयप्रश्नोऽपि स्याद्, विनापि प्रश्नं तन्निर्णये ग्रहादिविषयप्रश्नो ऽपि व्यर्थः स्यादिति मत्वा शङ्कते *ग्रहेति। वैषम्येणोत्तरमाह *तथापीति। देहस्य बन्धात्मत्वेऽपि तत्स्वरूपे तत्संख्यायां वा विप्रतिपत्त्यभावान्न स दुर्वचः, अत एव प्रसिद्ध इत्यर्थः ॥ ७ ॥ ग्रहशब्दितेन्द्रियसंख्यायां विप्रतिपत्तिं दर्शयन्तस्य दुर्वचत्वमुपपादयति *एकमिति ॥ अणुपरिमाणं मन एव लोकान्तरं गच्छति, अन्येन्द्रियाणि तु तत्रैवादृष्टादिना नूतनान्युत्पद्यन्त इति केचिद्वदन्ति, तत्पक्षे आत्मनो मनःसम्बन्धमात्रे यत्नः कार्यः तावतैव मुक्तिसम्भवात्। औपनिषदास्तु सर्वेन्द्रियाणां सह गमनागमनमस्तीत्याहुः। तत्पक्षे सर्वेन्द्रियनिवृत्त्यर्थं यतितव्यमिति ग्रहादिषु संख्याविषयः प्रश्न उपपन्न इति भावः ॥ ८ ॥ प्रतिवचनतात्पर्यमाह *मन इति। विमतानि लोकान्तरं गच्छन्ति इन्द्रियत्वान्मनोवद् विपक्षे तेषां प्रतिभवे उत्पत्त्यादिकल्पनागौरवं बाधकमिति मत्वा शेषेन्द्रियाणां बन्धकत्वविवक्षयाऽष्टौ ग्रहा इत्युक्तमित्यर्थः। तर्ह्येकादश ग्रहा इति वक्तव्ये किमित्यष्टौ ग्रहा इत्युक्तं तत्राह *अन्येष्विति। अन्येषां पाद-

पर्यग्रहीदक्षसंख्यामन्येऽन्तर्भावदर्शिताम् ॥ ९ ॥
यस्येन्द्रियस्य योऽर्थोऽस्मिन् जन्मन्यन्यत्र तत्तथा ॥
उतान्यथेति सन्देहात्सङ्ख्येयं पृच्छयते पुनः ॥ १० ॥
दृष्टानुसार्यदृष्टं तु कल्पनीयमितीदृशात् ॥
न्यायात्प्राह यथादृष्टमिन्द्रियार्थव्यवस्थितिम् ॥ ११ ॥
बन्धत्वं विशदीकर्त्तुं ग्रहातिग्रहकल्पनम् ॥
मोचनीयो ग्रहग्रस्तस्तथैवाज्ञानबन्धनात् ॥ १२ ॥

श्रुतिः–याज्ञवल्क्येति होवाच यदिदꣳ सर्वं मृत्योरन्नं कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥

वा०–ग्रस्तं हिरण्यगर्भान्तं मृत्युना सकलं जगत् ॥

---

पायूपस्थानामत्रैवान्तर्भाव इत्यभिप्रायेण दर्शितमनुक्तोपलक्षणार्थमिति यावत् ॥ ९ ॥ नन्वेवमपि इन्द्रियस्वरूपे कस्यापि विमत्यभावात्कतमे त इति प्रश्नानुपपत्तिरित्याशङ्क्य तत्रापि प्रकारान्तरेण सन्देहं सम्भावयति *यस्येति ॥ १० ॥ प्रत्युक्तितात्पर्यमाह *दृष्टेति ॥ ११ ॥ प्रथमप्रश्नस्यावश्यकतामुपसंहरति *बन्धत्वमिति । अत एव द्वितीयप्रश्नोऽप्यावश्यक इत्याह *मोचनीय इति । ग्रहग्रस्तस्य मुक्तिः सुप्तादौ यद्यपि स्वतःसिद्धा तस्यापि ज्ञानादज्ञाननिरासेनात्यन्तिकमुक्तिः संपाद्येत्याह *तथेति ॥ १२ ॥ एवं प्रश्नवैकल्पं निरस्य यदिदं सर्वमित्यादि व्याचष्टे *ग्रस्तमिति ॥ १३ ॥

यदिदं व्याकृतं जगत्सर्वं मृत्योरन्नं मृत्युना ग्रस्तं कास्वित्का नु स्याद्देवता यस्या देवताया मृत्युरन्नं भवतीति श्रुत्यक्षरार्थः ॥ १० ॥ प्रष्टुरभिप्रायमाह *अस्ती-

ग्रहातिग्रहरूपेण मृत्युस्तस्यास्ति वा न वा ॥ १३ ॥
अस्ति चेदनवस्था स्यादनिर्मोक्षोऽन्यथा भवेत् ॥
इत्यसौ दुर्वचः प्रश्नो दृष्टान्तेनापनुद्यते ॥ १४ ॥
वह्नेः सर्वाशिनो मृत्योर्यथा मृत्युर्जलं महत् ॥
बन्धमृत्योस्तथामृत्युरज्ञानं बन्धहृल्लये ॥ १५ ॥
अज्ञानमृत्योर्विज्ञानं मृत्युस्तस्यापि तत्तथा ॥
तत्कातकरजोन्यायाज्ज्ञानवस्थामिहानयेत् ॥ १६ ॥
प्राक्तनान्यपि जन्मानि सम्यग्ज्ञानमपह्नुते ॥
अपह्नुते स्वमित्यस्मिन्नर्थे ते का चमत्कृतिः ॥ १७ ॥

---

ति । यदि मृत्योर्मृत्युं वक्ष्यति तदा तस्यापि मृत्य्वन्तरेण भाव्यमित्यनवस्था स्याद्, यदि न वक्ष्यति तर्हि ग्रहादिलक्षणमृत्योर्मुक्तिरेव न स्यादतः प्रतिवचनं कष्टमिति भावः । मृत्युरस्तीति पक्षमादाय प्रत्युक्तिश्रुतितात्पर्यमाह *दृष्टान्तेनेति ॥ १४ ॥ अग्निर्वादित्यादिदृष्टान्तश्रुतिं व्याचष्टे *वह्नेरिति । अग्नेर्मृत्युत्वे हेतुः *सर्वाशिन इति ॥ दार्ष्टान्तिकमाह *बन्धेति । लये सुषुप्त्यादावज्ञानस्य मृत्युत्वे हेतुः *बंधहृदिति । कर्तृत्वादिसर्वबन्धस्य प्रलयादावज्ञानमात्रतयाऽवशिष्टत्वात्तस्य मृत्युत्वमित्यर्थः ॥ १५ ॥ अज्ञानस्य तर्हि को वा मृत्युस्तत्राह *अज्ञानेति । ब्रह्मधियोऽपि मृत्य्वन्तरसत्त्वेनानवस्था स्यात्, नेत्याह *मृत्युरिति । ज्ञानस्य स्वपरनिवर्तकत्वे दृष्टान्तमाह *तदिति । तस्मादित्यर्थः ॥ १६ ॥ विचित्रशक्तित्वाच्च ब्रह्मधियः स्वनाशकत्वं नाश्चर्यकरमित्याह *प्राक्तनानीति । ज्ञानं हि 'कालत्रयेऽपि मम जन्म नास्ति' इति विदुषो बुद्धिमुत्पादयति तज्जन्मान्यपि निरस्यतीत्यर्थः ॥ १७ ॥ द-

श्रुतिः-याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३नेति, नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ॥ ११ ॥

वा०—अथ तत्त्वविदः प्राणा उत्क्रामन्त्यथ वा नहि ॥
स्यात्पुनर्जनिरुत्क्रान्तावनुत्क्रान्तौ मृतिः कथम् ॥१८॥
नोत्क्रामन्ति न तिष्ठन्ति किं तु निर्वातदीपवत् ॥
न कारणं शिष्यतेऽत्र तस्य ज्ञानेन निह्नुतेः ॥ १९ ॥
अनारब्धफलं कर्म तदुत्क्रान्तेः प्रयोजकम् ॥
स्थितेर्निमित्तमारब्धं ते नष्टे ज्ञानभोगतः ॥ २० ॥
उपादाननिमित्ताभ्यां हीनानामुत्क्रमः कथम् ॥

---

ष्टान्तकथनेनैव ब्रह्मज्ञानं मृत्योरपि मृत्युरित्यर्थादुक्तमिति मत्वा ज्ञानफलमाह श्रुतिः *अप पुनरिति ॥ १० ॥ यत्रायमित्यादेरर्थं वदन्प्रश्नतात्पर्यमाह *अथेति । बन्धनिवृत्त्यनन्तरं विद्वान्यस्मिन्काले म्रियते तदा उत् ऊर्ध्वमस्माद्ब्रह्मविदः सकाशात्प्राणा उत्क्रामन्ते न वेत्यर्थः ॥ १८ ॥ नेतीत्यादिप्रतिवचनतात्पर्यमाह *नेति । अत्रैव समवनीयन्त इति श्रुतौ विदुष्येव प्राणा लीयन्त इत्युक्तं, तत्रावधारणप्रयोजनमाह *नेति । यथाऽज्ञस्य प्राणाः प्रलयादावज्ञाने लीनाः कारणात्मना तिष्ठन्ति नैवं तत्त्वविदः प्राणा इत्यर्थः । तत्र हेतुमाह *तस्येति । अज्ञानस्येत्यर्थः ॥ १९ ॥ नोत्क्रामन्ति न तिष्ठन्तीत्युक्तमुपपादयति *अनारब्धेत्यादिना ॥ २० ॥ उत्क्रान्तिस्थित्योरभावे फलितमाह *तस्मादिति ॥ २१ ॥

श्रुत्यर्थस्तु-विद्वद्देह उच्छ्वयत्युच्छूनतां प्रतिपद्यते । आध्मा-

कथं वा ऽत्र स्थितिस्तस्माद्युक्त आत्यंतिको लयः॥२१॥
प्राणत्यागेन देहोऽयं म्रियते बाह्यवायुना ॥
आपूर्णः स्थौल्यमापन्नो निश्चेष्टो दृश्यते यतः ॥ २२ ॥
श्रुतिः-याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेति ।
वा०-प्राणा एव विलीयंते किंवा सर्वं प्रयोजकम् ॥
आद्ये प्राणजनिर्भूयो द्वितीये नाम तत्कथम् ॥ २३ ॥
अप्रयोजकनामैव शिष्यते न प्रयोजकम् ॥
अविद्याकामकर्मादि नोक्तदोषद्वयं ततः ॥ २४ ॥
परवाचाऽभिनिष्पत्तेर्विदुषो बन्धनं प्रति ॥
नामाप्रयोजकं युक्तस्तच्छेषः परदेहवत् ॥ २५ ॥

---

यति बाह्यवायुना पूर्यते आध्मातो मृतो निश्चेष्टः शेते, इतिवाक्यं प्रत्यक्षसिद्धदेहमरणानुवादकमिति भावः ॥ ११ ॥ विदुष उत्क्रमणाभावे तस्य मरणप्रतिपादकवाक्यशेषविरोधः स्यादित्याशङ्क्याह *प्राणेति ॥ २२ ॥ किमेनमित्यादि चतुर्थप्रश्नतात्पर्यमाह *प्राणा इति । कस्मिन्सति किं स्यात्तत्राह *आद्य इति । *तत्कथमिति । तस्य विदुषो नाम कथमन्यैरुच्चार्येत, दृश्यते हि शुको मुक्त इति व्यवहार इति भावः ॥ २३ ॥ द्वितीयकल्पमादाय नामेति प्रतिवचनतात्पर्यमाह *अप्रयोजकेति । नाम्नः प्राणाद्यप्रयोजकत्वं दर्शयितुं प्रयोजकस्वरूपमाह *अविद्येति । विदुषो नाममात्रावशेषत्वे फलितमाह *नोक्तेति ॥ २४ ॥ नाम्नोऽप्रयोजकत्वमुपपादयति *परेति । विद्वन्नाम्नः परनरानिर्वर्त्यत्वेनान्यदेहवद्विदुषो बन्धाहेतुत्वात् नामशेषत्वोक्तिर्युक्तेत्यर्थः ॥ २५ ॥ कि-

भर्तृप्रपञ्च आहात्र नाममात्रावशेषिणः ॥
पुंसोऽन्तरालेऽवस्थानं द्वयोः संसारमोक्षयोः ॥ २६ ॥
हिरण्यगर्भपर्यन्तः संसारोऽज्ञानकर्मजः ॥
भोगेन क्षपिते तस्मिन्निवृत्तं स्याद्वपुर्द्वयम् ॥ २७ ॥
अविद्यया परिच्छिन्नो जीव ऊषररूपया ॥
भवेदद्वैतविद्यायामधिकारी विमुक्तये ॥ २८ ॥
नामशेषस्तु तेनैतद्व्याख्यानं नहि युज्यते ॥
यस्मादद्वैतविद्यायां नाधिकारो वपुर्विना ॥ २९ ॥
नचाविद्या परिच्छेत्री तमोरूपा हि सा यतः ॥
न संसारक्षये कृत्यमस्त्यद्वैतात्मविद्यया ॥ ३० ॥

---

मेनमित्यादिप्रश्नप्रतिवचने व्याख्याय तत्र परोक्तमर्थं दूषयितुमनुभाषते *भर्तृप्रपञ्च इति । अवस्थानं किमेनमित्यादिना प्रतिपाद्यत इति शेषः ॥ २६ ॥ उक्तमेव व्यक्तीकर्तुं तत्प्रक्रियामाह *हिरण्येति । सर्वकर्मानुष्ठानेन क्रमेण तत्तत्फलं भुक्त्वा समुच्चयानुष्ठानेन सूत्रपदं प्राप्तस्याप्राप्तभोगाभावात्कामासिद्ध्या कर्मनिवृत्तौ तन्मूलकदेहद्वयं निवर्तत इत्यर्थः ॥२७॥ देहद्वयनाशे तर्हि मुक्तः स्यादिति नेत्याह *अविद्ययेति । क्षितेरूषरवदवस्थितात्माविद्यया परस्मात्परिच्छिन्नो नामावशेषः सन्नन्तरावस्थो भवति तेनायमद्वैतविद्यायामधिकारी न तु मुक्त इत्यर्थः॥२८॥दूषयति *एतदिति । अयुक्तिमेवोपपादयति *यस्मादिति ॥२९॥ यदुक्तमविद्यया परिच्छिन्नो जीव इति तत्राह *नचेति । तमस आच्छादकत्वमेव दृष्टं न परिच्छेदकत्वमित्यर्थः ॥ ३० ॥ सूत्रान्तसर्वभोगेन कामादिनिवृत्त्या देहद्वयनाशमङ्गीकृत्य तावतैव सर्वदुःखनिवृत्तेरद्वैत-

न च भोगेन संसारः क्षीयते किंतु वर्द्धते ॥
सप्तान्नब्राह्मणे भोक्तुरुक्ता ह्यक्षयहेतुता ॥ ३१ ॥
आगामिकर्मणोऽश्लेषाद्विद्भोगो न वृद्धिकृत् ॥
अज्ञस्य भोगकालीनं कर्म संसारकारणम् ॥ ३२ ॥
नांतराले स्थितं तस्मान्नामशेषागिरोच्यते ॥
किन्तु प्रयोजकाशेषलयान्मुक्तिरुदीर्यते ॥ ३३ ॥
श्रुतिः-अनन्तं वै नामानन्ता विश्वेदेवा अनंतमेव स तेन लोकं जयति ॥ १२ ॥
वा०-मुक्तावप्यवशिष्टत्वान्नाम्नोऽनंतत्वसाम्यतः ॥

---

धीर्द्वैथेत्युक्तमङ्गीकारं परित्यजति *न च भोगेनेति । अत्र पुरुषो वा अक्षितिरिति वाक्यं प्रमाणयति *सप्तेति । ज्ञानकर्मभ्यां भोक्ता भोग्यस्य निरन्तरमुत्पादनात्पुरुषो भोग्याक्षयहेतुरित्युक्तमित्यर्थः ॥ ३१ ॥ कथं तर्हि त्वन्मते वा संसारक्षयस्तत्राह *आगामीति । भोगो हि संस्कारद्वारा सजातीयभोगसिध्यर्थं कर्म कारयति कृतमपि तत् कर्म विदुषा न श्लिष्यते तदधिगमन्यायात् । अतः संसारक्षयोऽस्मन्मत उपपद्यते इति भावः । त्वन्मते तु नैवमित्याह *अज्ञस्येति ॥३२॥ परमतनिराकरणमुपसंहरति *नेति । भोगेन कामादिनिवृत्तिद्वारा देहद्वयनिवृत्त्यसम्भवः पञ्चम्यर्थः । त्वदुक्तार्थोऽपि न सम्भवति अप पुनर्मृत्युं जयतीति पूर्ववाक्य एव विदुषो मुक्तेरुक्तत्वादित्याशङ्क्य नेत्याह *किंत्विति । तस्यैव विशदीकरणार्थमिदं परिशेषादिति भावः ॥ ३३ ॥ अनंतं वै नामेत्यादेरर्थमाह *मुक्ताविति । ब्रह्मास्मीति दर्शनेन विश्वान्देवानात्मत्वेनोपगम्यानंतं लोकं जयतीति सिद्धानुवादेन ब्रह्मवि-

विश्वान्तसंवादयन्देवाननंतं लोकमश्नुते ॥ ३४ ॥
ग्रहातिग्रहबंधाख्यमृत्योर्यत्स्यात्प्रयोजकम् ॥
कालकर्मेश्वरादीनां मध्ये तत्किमितीर्यताम् ॥३५॥
अविद्वद्विषयः प्रश्नो विदुषो जन्मसंचयात् ॥
आतत्त्वबोधमज्ञानी बध्यतेऽनंतजन्मभिः ॥ ३६ ॥
श्रुतिः–याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृत-स्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चंद्रं दि-शः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीति ॥

वा०–अनुगृह्णंति वागादीन्स्वांशैरग्न्यादिदेवताः ॥

---

द्या स्तूयत इति भावः ॥ ३४ ॥ यत्रास्येत्यादिप्रश्नतात्पर्य-माह *ग्रहेति ॥ ३५ ॥ अत्र विवक्षितं पुरुषशब्दार्थमाह *अ-विद्वदिति ॥ ३६ ॥

अक्षरार्थस्तु–यत्र यस्मिन्कालेऽस्य पुरुषस्याज्ञस्य मृतस्य वागग्निमप्येति वातं प्राणोऽप्येतीति सर्वत्र सम्बन्धः । आका-शमात्मेत्यत्रात्मशब्देन हृदयाकाश उच्यते । स आकाश-मप्येति लोमानि ओषधीरपियन्ति अप्सु लोहितं रेतश्च स्था-प्यते तदा क्वायं पुरुषो भवतीति ।

पुरुषशब्दस्याज्ञपरत्वे वागप्येतीत्यादिश्रुतिरनुपपन्ना । 'वाङ्-मनसी दर्शनात्' इत्यादिन्यायेनाविदुषो वागादिलयाभावादि-त्याशङ्क्य वागादिशब्देन तत्तत्करणाधिष्ठातृदेवतांशा ल-क्ष्यन्ते तेषामप्ययो नाम मरणकाले करणप्रेरणं विनाऽग्न्या-दिस्वरूपेणावस्थानमतो नानुपपत्तिरित्याह *अनुगृह्णन्ती-

भोगक्षये मृतौ स्वांशान्संहरन्ति यथायथम् ॥ ३७ ॥
पुंसो देहग्रहणे या देहस्थानेषु देवताः ॥
अंशान् निदधति स्वं स्वं न देहग्रहणात्पुरा ॥ ३८ ॥
अधिष्ठातृवियोगेन न्यस्तदात्रोपमैर्युतः ॥
वागादिभिरसौ किंस्वित्प्रयोजकमुपाश्रयेत ॥ ३९ ॥
किं कारणात्मतामेति किं वा केनचिदात्मना ॥
अवतिष्ठत एवायं किंवा कर्मैव संश्रितः ॥ ४० ॥
गुणान्वा यदि वेशानं कालं वा दैवमेव वा ॥

---

ति ॥ ३७ ॥ ननु वर्त्तमानदेहपाते देवतांशानामुपसं-हारश्चेद्देहान्तरग्रहे करणान्यधिष्ठातृशून्यानि भोगसाधनानि न स्युस्तत्राह *पुंस इति ॥ ३८ ॥ स्थूलदेहविगमेऽपि मोक्षाद-र्वाग्जीवस्य लिङ्गाश्रयत्वात् क्वायमिति प्रश्नानुपपत्तिस्तत्राह *अधिष्ठात्रीति । यद्यपि जीवो लिङ्गमाश्रितस्तथापि स्थूलदेहा-भावे भूमौ निक्षिप्तलवित्रवदधिष्ठातृहीनं वागादि न भोगद-मिति सतोऽपि तस्यासत्समत्वाद्भोगहेत्वाश्रयप्रश्नो युक्त इ-त्यर्थः ॥ ३९ ॥ प्रश्नवाक्यं व्याचष्टे *किमिति । स्थूलदेहं हित्वा स्थितो जीवो स्वाभासप्रत्यगविद्यालक्षणकारण-रूपतामेतीति जीवस्यापि कार्यत्वमिच्छन्तः स्वयूथ्या वदन्ति । स्थूलदेहे नष्टे प्रतिबन्धाभावादसाधारणेन स्वेन रूपेण तिष्ठतीत्येके । मीमांसकसांख्यतार्किकमतानि क्रमेणाह *किं वा कर्मेति ॥ ४० ॥ ज्योतिर्विदां मतमाह *काल-मिति । देवताकाण्डाभिप्रायमाह *दैवमिति । लोकायतिकयोगा-चारमाध्यमिकमतानि क्रमेणाह *यदृच्छामिति । प्राक्सतो जीवस्य ध्वंसो विनाशः, तं यातीति जीवकार्यत्ववादिनो

यदृच्छां संततिं शून्यं विनाशं वेति भण्यताम् ॥४१॥
श्रुतिः—आहर सोम्य हस्तमार्तभागावामेतस्य वेदिष्यावो न नावेतत्सजन इति ।
वा०–प्रश्नेन तुष्टः संन्यस्य विजिगीषां स वादिना ॥
निर्गतौ विजिगीषुभ्यो मिथो निश्चयमूचतुः ॥ ४२ ॥
श्रुति– तौ होत्क्रम्य मंत्रयांचक्रात ॥
वा०–संसारभूमिवर्तित्वान्नैवायं कारणाश्रयः ॥

---

मतान्तरमाह *विनाशमिति । प्रश्नं विनिगमयति* भण्यतामिति ॥ ४१ ॥ आहरेत्यादेरर्थमाह *प्रश्नेनेति । तुष्टिश्चान्यासाधारणप्रश्नकरणादिति ध्येयम् । सन्तोषादेव हस्तग्रहणमपि ।

अक्षरार्थस्तु–आवामेवैतस्य त्वत्पृष्टस्य वेदितव्यं यत्तद्वेदिष्यावो निरूपयिष्यावः कस्मान्नौ आवयोरेतद्वस्तु सजने जनसमुदाये निर्णेतुमुचितं न भवति विद्याया गोप्यत्वादिति भावः । तथाच स्मृतिः ।

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तशक्तोऽर्थदः साधुः स्वाध्याप्या दश धर्मतः ॥ १ ॥
विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना ।
आपद्यपि च घोरायां न त्वेनामीरिणे वपेत् ॥
विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तदा स्यां वीर्यवत्तमा ॥ इति ॥४२॥

तौ होत्क्रम्येत्यादिश्रुतिसूचितं विचारप्रकारं दर्शयन्स्वमतशुद्ध्यर्थं परपक्षान्दूषयति *संसारेत्यादिना । जीवस्य कारणमात्रतया लीनत्वे कृतनाशस्तदापीतेरित्यादिन्यायविरोधश्च

कर्मादिपरतन्त्रत्वात्स्वाश्रयोऽयं न चेष्यते ॥ ४३ ॥
जडत्वाद्गुणकालादि न जीवं नेतुमर्हति ॥
हठो यदृच्छा शून्यं तु मानहीनं तथेतरत् ॥ ४४ ॥
देवेश्वरौ स्वतन्त्रौ चेद्विधिशास्त्रमनर्थकम् ॥

श्रुतिः—तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशशंसतुः कर्म हैव तत्प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति, ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

इत्युपनिषदि द्वितीयं ब्राह्मणं समाप्तम् ॥

वा०–अतोऽसाधारणो जन्महेतुः कर्मावशिष्यते॥४५॥
सति कर्मणि वैचित्र्यं देहानामुपपद्यते ॥
देवेशानुगृहीतत्वाज्जाड्यदोषो न कर्मणः ॥ ४६ ॥
इति सर्वं विचार्यैतौ कर्मैव प्रशशंसतुः ॥

---

स्यादिति भावः ॥ ४३ ॥ कालादीत्यादिशब्देन कर्मणः स्वातन्त्र्येण भोक्त्राश्रयत्वनिरासः । हठशब्दः स्वभाववचनो यदृच्छापदपर्यायः तस्य प्रयोजकत्वे नियतं हेत्वपादानं न स्यादिति भावः । *इतरदिति । सन्ततिं विनाशं वेति पक्षद्वयमपि मानहीनमित्यर्थः ॥ ४४ ॥ तौ ह यदूचतुरित्यादेरर्थमाह *अत इति ॥४५॥ जडत्वान्न कर्मापि प्रयोजकमित्युक्तं तत्राह *देवेशेति । देवा अग्न्यादयः, ईशः परमात्मा, ताभ्यामनुगृहीतं सद्विचित्रकार्यहेतुरित्यर्थः ॥ ४६ ॥ अथ यत्प्रशशंसतुरित्यादेरर्थमाह *इतीति । न केवलं कर्मकाण्डमित्यूचतुः कालादिहेतूनां मध्ये कर्मैव प्रधानमिति प्रशशंसतुरित्यर्थः । उक्तं हि 'वैषम्यनैर्घृण्ये न सापेक्षत्वाद्' इति । पुण्यो वै

देहोत्कर्षापकर्षौ तु पुण्यापुण्यविभेदतः ॥ ४७ ॥

इति वार्तिकसारे तृतीयाध्यायस्य द्वितीयं ब्राह्मणं समाप्तम् ॥

वा०–तृतीये ब्राह्मणे पुण्यफलावधिरुदीर्यते ॥
अश्वमेधः परं पुण्यं ब्रह्मलोकः फलावधिः ॥ १ ॥
प्रत्यक्षः स्थावरत्वाख्यः स्पष्टः पापफलावधिः ॥
विज्ञायते द्वयं ज्ञानादियत्ता हेयसंसृतेः ॥ २ ॥
आसक्तिरहितं पुण्यं विद्योपेतं विमुक्तये ॥
अतः फलावधिर्मोक्षः संसारो नेति केचन ॥ ३ ॥

---

पुण्येनेत्यादेरर्थमाह *देहेति ॥ ४७ ॥

इति टीकायां तृतीयाध्याये द्वितीयं ब्राह्मणं समाप्तम् ।

कर्म प्रयोजकमित्युक्तं तत्फलस्यावधिः कः ? इत्यपेक्षायां निरूपणायानन्तरं ब्राह्मणमिति सङ्गतिमाह *तृतीयेति । यद्यप्ययमर्थ उद्गीथब्राह्मणेऽप्युक्तस्तथापि साध्यं सर्वं स्वाविद्योत्थमित्यस्मिन्ब्राह्मणे कथ्यतेऽतोऽर्थभेदादगतार्थतेति भावः । सर्वं कर्मफलमाविद्यमेवेति वक्तुमुत्कृष्टपुण्यतत्फले दर्शयति *अश्वमेध इति ॥१॥ पापफलस्याप्यवधिमाह *प्रत्यक्ष इति । ब्रह्मादिस्थावरान्तस्य कर्मफलत्वज्ञाने फलितमाह *विज्ञायत इति । उभयं कर्मफलमिति ज्ञाते ब्रह्मलोकान्तं संसारमध्यपातित्वाद्धेयत्वेन प्रतिभातीत्यर्थः ॥ २ ॥ उक्तमेव दृढीकर्तुं पूर्वपक्षमाह *आसक्तीति । अयं भावः–यद्यपि केवलकर्मणः फलं संसारस्तथापि विद्यासहितकर्मणो मुक्तिः फलम् । यथा केवलविषदध्यादि मरणज्वरादिकरमपि मन्त्रशर्करादियुक्तं जीवनपुष्ट्याद्यारभते तद्वत् । अतो ब्रह्मलोको न पुण्यफलावधिरिति ॥ ३ ॥

तदयुक्तं यतः कर्म न मोहस्य निवर्तकम् ॥
मोहानिवृत्तौ तत्कार्यात्संसारान्मुच्यते कथम् ॥४॥
प्रत्यग्याथात्म्यसम्मोहः क्रियाकारकरूपवान् ॥
प्रथते ऽपास्तनिःशेषक्रियाकारकवस्तुनि ॥ ५ ॥
प्रत्यग्याथात्म्यविज्ञानं तन्मोहस्य निवर्त्तकम् ॥
भविष्यतीति चेत्तर्हि कर्मणा कृत्यमत्र किम् ॥ ६ ॥
सममज्ञानकार्यत्वं यद्यपि ज्ञानकर्मणोः ॥
मेयैकात्म्यानुरोधित्वं तथाऽप्यतिशयो धियः ॥ ७ ॥
कर्माविद्यानुरोधि स्यान्न त्वैकात्म्यानुरोधि हि ॥
सर्वस्यैकात्म्यमात्रत्वे कः किं केन करिष्यति ॥ ८ ॥
यथा स्वर्गः कर्मसाध्यस्तथा मुक्तिरपीति चेत् ॥

---

किं ज्ञानयुक्तं कर्माविद्यानिवर्त्तनद्वारा मुक्तिहेतुरुत साक्षात् ? तत्राद्यं प्रत्याह *तदिति । द्वितीयं निराह *मोहेति ॥ ४ ॥ ननु कर्मणो मोहनिवर्त्तकत्वे को दोषस्तत्राह *प्रत्यगिति । निर्विशेषे चिदात्मनि तदविद्याकर्माद्यात्मना विजृम्भतेऽतोऽविद्याकार्यत्वात्कर्म नाविद्यानिवर्त्तकमिति भावः ॥ ५ ॥ अस्तु तर्हि कर्मसहितं ज्ञानं तन्निवर्त्तकमिति शङ्कते *प्रत्यगिति । निरपेक्षस्यैव ज्ञानस्य लोकेऽज्ञाननिवर्त्तकत्वदृष्टेः कर्मसाहित्यकल्पनं वृथेति दूषयति *तर्हीति ॥ ६ ॥ ननु कर्म नाविद्यानिवर्त्तकम् अज्ञानजत्वाद्रज्जुसर्पज्ञानवद् इत्युक्तमयुक्तं, ज्ञानेऽपीत्थमनुमानसम्भवादित्याशङ्क्य वस्त्वननुसारित्वमुपाधिरित्याह *सममिति ॥ ७ ॥ अस्तु तर्हि कर्मणोऽपि वस्त्वनुसारित्वम्, नेत्याह *कर्मेति । कर्तृत्वादिभेदसापेक्षं कर्म, ज्ञानं तु तदुपमर्दीति विशेष इति भावः ॥ ८ ॥ स्वर्गकामवाक्यात्स्वर्गस्य

मुक्तिस्वभाववीक्षायां न युक्ता कर्मकार्यता ॥ ९ ॥
उत्पाद्यमाप्यं संस्कार्यं विकार्यं च क्रियाफलम् ॥
नैव मुक्तिर्यतस्तस्मात्कर्म तस्या न साधनम् ॥ १० ॥
कर्मस्वभाववीक्षायामपि कर्म न साधनम् ॥
एकेन वा भवेन्मुक्तिर्यदि वा सर्वकर्मभिः ॥ ११ ॥
सकृत्प्रवृत्तैरथवा यावज्जीवप्रयोगतः ॥
काम्यैर्वा यदि वा नित्यैरुभयैर्वा विमुच्यते ॥ १२ ॥
श्रौतैर्वा यदि वा स्मार्तैर्यदि वोभयकर्मभिः ॥
केवलैर्वाऽथवा ज्ञानसंयुक्तैर्वेति भण्यताम् ॥ १३ ॥
एकस्य मुक्तिदत्वे स्यात्कर्मान्तरमनर्थकम् ॥
सर्वेषां मुक्तिदत्वे तु फलैक्यादेककर्मता ॥ १४ ॥
सर्वेष्वपि विकल्पेषु मानाभावो ह्यतिस्फुटः ॥
नचाश्रौषं श्रुतेर्वाक्यात्कर्म मोक्षफलं क्वचित् ॥१५॥

---

कर्मजन्यत्ववद्विविदिषावाक्यान्मोक्षस्य कर्मजन्यत्वं दुर्वारमिति शङ्कते *यथेति। मोक्षस्वरूपे कर्मस्वरूपे च विचार्यमाणे तयोः साध्यसाधनभावायोगाद्विविदिषावाक्यं शुध्यादिद्वारा ज्ञानहेतुत्वमात्रपरमिति मत्वा मुक्तेः कर्माजन्यत्वमुपपादयति *मुक्तीत्यादिना ॥ ९ ॥ १० ॥ तस्याः साधनत्वमेवोपपादयितुं शाखाचङ्क्रमणव्यावृत्त्यर्थं बहुधा विकल्पयति *एकेन वेत्यादिना ॥ ११ ॥ १२ ॥ १३ ॥ आद्यं प्रत्याह *एकस्येति। द्वितीयं प्रत्याह *सर्वेषामिति । सर्वकर्मणां मुक्तिलक्षणैकफलहेतुत्वे दर्शादिवदेककर्मतापत्तिः । तथाच कर्मभेदप्रतिपादकभेदलक्षणविरोधः स्यादिति भावः ॥ १४ ॥ अवशिष्टपक्षान्दूषयति *सर्वेष्विति ॥ १५ ॥ न केवलं तत्र मानाभावः मा-

न तत्र दाक्षिणा यान्ति नाविद्वांसस्तपस्विनः ॥
न कर्मणेत्यादिवाक्यात्कर्म प्रत्युत निन्द्यते ॥ १६ ॥
निन्द्यतां केवलं कर्म तस्यानित्यफलत्वतः ॥
विद्यासमुच्चितं नित्यं मुक्त्यर्थमिति चेन्न तत् ॥ १७॥
एकदेशे चैककाले स्थितयोरविरुद्धयोः ॥
समुच्चयः फलैक्ये स्यान्न त्वसौ ज्ञानकर्मणोः ॥ १८ ॥
बाध्यबाधकभावेन पञ्चास्योरणयोरिव ॥
एकदेशानवस्थानान्न समुच्चय एतयोः ॥ १९ ॥
साध्यसाधनरूपत्वादेककालानवस्थितिः ॥
हेतुस्वरूपकार्येषु विरोधस्त्वनयोः स्फुटः ॥ २० ॥
अध्यासः कर्मणो हेतुः प्रमाणं बोधकारणम् ॥
न भासकं कर्मरूपं बोधरूपं तु भासकम् ॥ २१ ॥
कर्मकार्यं भाविजन्म तन्निवृत्तिस्तु बोधजा ॥
समुच्चितात्केवलाद्वा नातो मोक्षोऽस्ति कर्मणः॥२२॥
अश्वमेधादि यत्पुण्यं महोपासनया युतम् ॥
तत्फलं संसृतिस्तस्या भुज्युना पृच्छयतेऽवधिः ॥२३॥

---

नविरोधश्चेत्याह *न तत्रेति ॥ १६ ॥ १७ ॥ समुच्चितस्यापि कर्मणो मुक्तिहेतुत्वं नेत्युक्तमुपपादयितुं समुच्चययोग्यं वस्तु दर्शयति *एकेति । प्रकृते तद्वैलक्षण्यमाह *न त्वित्यादिना ॥ १८ ॥ पञ्चास्यः सिंहः । उरणो मेषः ॥ १९ ॥ प्रकारान्तरेणापि तयोर्विरोधमाह *हेत्विति ॥ २० ॥ हेतुविरोधं व्यनक्ति *अध्यास इति । स्वरूपविरोधं स्पष्टयति *नेति ॥ २१ ॥ कार्यविरोधमाह *कर्मेति । परमतनिरसनमुपसंहरति *समुच्चितादिति ॥ २२ ॥ उक्तानुवादपूर्वकमथ हैनमित्यादेस्तात्पर्यमाह *अश्वमेधेति ॥ २३ ॥ प्रश्नतात्पर्यमुक्त्वा प्र-

श्रुतिः-अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच। मद्रेषु चरकाः पर्यव्रजाम ते पतञ्चलस्य काप्यस्य ग्रहानैम तस्यासीद् दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्सुधन्वाऽऽङ्गिरस इति, तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन्, स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ॥१॥

वा०-ब्रह्माण्डाद्बहिरन्तश्च समष्टिव्यष्टिरूपिणः ॥
व्याप्तिर्हिरण्यगर्भस्य संसारस्यावधिर्मतः ॥ २४ ॥

---

तिवचनतात्पर्यं सङ्क्षेपेणाह *ब्रह्माण्डादिति। हिरण्यगर्भपदं प्राप्तस्य या बहिरन्तश्च व्याप्तिः सैव कर्मफलस्यावधिरित्यर्थः ॥२४॥ ब्राह्मणस्यैवंप्रवृत्तावपि किमिति भुज्युः स्वस्य पूर्वनिर्वृत्तकथामाह इत्याशङ्क्य अलौकिकत्वादयमर्थो गुरुमुखत एव ज्ञेय इति प्रदर्शनार्थमित्याह *आगमेति ॥ २५ ॥

अक्षरार्थस्तु-भुज्युरिति नामतः लह्यस्यापत्यं लाह्यः तस्यापत्यं लाह्यायनिः। मद्रानाम जनपदास्तेष्वध्ययनार्थं व्रतचरणाच्चरकाः पर्यव्रजाम पर्यटितवन्तः। पतञ्चलस्य नामतः काप्यस्य कपिगोत्रस्य ग्रहानैम गतवन्तः। तस्य दुहिता गन्धर्वेणामानुषेण केनचिदाविष्टाऽऽसीत् तं सर्वे वयं परिवारिताः सन्तोऽपृच्छाम कोऽसीति किं नामा किं सतत्त्व इति, सोऽब्रवीद्गंधर्वः सुधन्वा नामत आङ्गिरसो गोत्रतः।तं यदा यस्मिन्काले लोकानामन्तानपृच्छामाथ तस्मिन्काले एनं गन्धर्वं भुवनकोशपरिमाणज्ञानायाब्रूम पृष्टवन्तो वयं कथं पारिक्षिता अभवन्निति। स च पृष्टमस्मभ्यमब्रवीत्सोऽहं गन्धर्वाल्लब्धविद्यस्त्वां पृच्छामि क्व पारिक्षिता अभवन्निति॥१॥

आगमैकाधिगम्योऽयमर्थ इत्युपदर्शयन् ॥
गन्धर्वाख्यायिकामाह गन्धर्वस्तद्गुरुस्ततः ॥ २५ ॥
लोकान्तानपि गन्धर्वादश्वमेधकृतां फलम् ॥
श्रुत्वा पारिक्षितोक्त्याऽत्र वादिनं तं व्यमोहयत् ॥२६॥
अश्वमेधकृतो वक्ति भुज्युः पारिक्षिता इति ॥
परितः क्षितिमावेष्ट्य स्थिता इति विवक्षया ॥ २७ ॥
द्विर्याज्ञवल्क्यमुद्दिश्य प्रश्नोक्तिस्त्रासजन्मने ॥
अत्रस्तोऽतीन्द्रियज्ञानं दर्शयन्निदमुक्तवान् ॥ २८ ॥

श्रुतिः—स होवाचोवाच सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति,क्व चाश्वमेधयाजिनो गच्छन्तीति, द्वात्रिꣳशतं वै देवरथाह्न्यान्ययं लोकस्तꣳसमन्तं पृथिवी द्विस्तावत्पर्येति ॥

---

ननु गन्धर्वोपदिष्टाश्वमेधयाजिनां गतिरत्र पृच्छयते चेत् तेषां च प्रसिद्धसंज्ञां हित्वा किमित्यप्रसिद्धसंज्ञोपादानं तत्राह *लोकान्तानिति ॥२६॥ ननु पारिक्षितशब्दः कथमश्वमेधकृद्वचनस्तत्राह *अश्वमेधेति ॥ २७ ॥ व्यामोहार्थमप्रसिद्धसंज्ञाग्रहणेऽपि क्व पारिक्षिता अभवन्निति द्विरुक्तिः किमर्था ? तत्राह *द्विरिति ।इदं दिव्यज्ञानं तव नास्ति अतो निगृहीतोऽसीति भर्त्सनार्था द्विरुक्तिरित्यर्थः ! स होवाचेत्यादेरर्थमाह *अत्रस्त इति ॥ २८ ॥

इयमत्राक्षरयोजना । एवं भर्त्सितोऽपि निर्भीतः स मुनिरुवाच । वैशब्दो गन्धर्वोक्तिस्मरणार्थः । हे भुज्यो स गन्धर्वस्ते तुभ्यमित्थमुवाच पारिक्षितशब्दितास्तत्रागच्छन्यत्राश्वमेधयाजिनो गच्छन्तीति ॥

एतत्सर्वं सङ्क्षेपेण दर्शयन्द्वात्रिꣳशतमित्यादिवाक्यमवतार-

वा०–गन्धर्वेण गतिः प्रोक्ता ह्यश्वमेधकृतामिति ॥
भूयः पृष्टः स्वयं वक्तुं प्राह लोकस्य विस्तृतिम् ॥ २९ ॥
आदित्यरथगत्याऽध्वामितो यावदहर्निशम् ॥
द्वात्रिंशद्गुणितस्तावान्व्याप्तो भानुगभस्तिभिः॥३०
इयानेव प्राणिभोगसिद्धये लोक इष्यते ॥
इतः परस्ताद् द्विगुणा पृथिव्यालोकवर्जिता ॥ ३१ ॥
अन्तरालोकयुक्तः सन्बहिरालोकवर्जितः ॥
लोकालोकगिरिर्मध्ये पृथिव्योरनयोः स्थितः ॥ ३२ ॥
श्रुतिः–ताꣳ समन्तं पृथिवीं द्विस्तावत्समुद्रः पर्येति ॥
वा०– समुद्रो द्विगुणो भूमेर्घनोदाख्यो बहिः स्थितः ॥

---

यति *गन्धर्वेणेति । अश्वमेधकृतां गतिरेव पारिक्षितशब्दितानामपीति तत्र गन्धर्वेणोक्तेत्युक्त्वा क्वन्वश्वमेधयाजिनो गच्छंतीति भुज्युना पुनः पृष्टस्तेषां गतिं वक्तुं भुवनकोशपरिमाणमाहेत्यर्थः ॥ २९ ॥ अवतारितवाक्यं व्याचष्टे *आदित्येति । श्रुतौ देवरथाह्नानीत्यत्र देव आदित्यस्तस्य रथगत्या आह्ना य देशपरिमाणं छिद्यते तदेव रथाह्नं तद् द्वात्रिंशद्गुणितं देवरथाह्नानि अहोरात्रमादित्यरथगत्या यावान्पन्था मितस्तावान्देशो द्वात्रिंशद्गुणितः तत्किरणव्याप्तः पृथिवीत्युच्यते ।

रविचन्द्रमसोर्यावान्मयूखैरवभास्यते ॥
ससमुद्रसरिच्छैलस्तावती पृथिवी मता ॥ १ ॥
इति स्मृतेरिति भावः ॥ ३० ॥

अयं लोक इत्यस्यार्थमाह *इयानिति । तं समन्तमित्यादेरर्थमाह *इत इति ॥ ३१ ॥ लोकपरिमाणाद्द्विगुणपरिमाणा पृथिवी सा ऽऽलोकं परितो व्याप्नोति । न च रविचन्द्रमसोरिति वचनेन विरोधः, तत्र भोगभूमेरुक्तत्वादिति भावः ॥ ३२ ॥

अण्डाद्बहिर्घनोदोऽयमिति पौराणिका जगुः ॥ ३३ ॥
पुराणं बाध्यते श्रुत्या ध्यानार्था वा श्रुतिर्मता ॥
सर्वथाऽप्यण्डरूपोऽयं वैराजो देह इष्यताम् ॥ ३४ ॥
योऽण्डाद्बहिःस्थितो वायुः सूत्रात्मेति श्रुतीरितः ॥
एषोऽश्वमेधकृत्पुण्यपरिपाको न चापरः ॥ ३५ ॥
क्षुरधाराद्युपमितः सन्धिर्योऽण्डकपालयोः ॥
तेन बाह्यं नयत्येतानश्वमेधस्य देवता ॥ ३६ ॥

---

आलोकस्य व्यवधानाभावे कथं तत्राभाववचनं तत्राह *अन्तरिति ॥ ३२ ॥ तामित्यादेरर्थमाह *समुद्र इति । पृथिवीं समन्तात्ततो द्विगुणपरिमाणं जलं तां व्याप्य तिष्ठतीत्यर्थः । ननु घनोदाख्यसमुद्रोऽण्डाद्बहिरेव श्रूयते, 'दशोत्तरेण पयसा मैरेयाण्डं च तद्वृतम्'इत्यादौ, तत्कथं तस्याण्डान्तर्वर्त्तित्वमित्याशङ्क्य प्रत्यक्षश्रुतिविरोधे पुराणवचनं न स्वार्थसाधकमित्याह *अण्डादिति ॥ ३३ ॥ पुराणश्रुत्योरविरोधमाह *ध्यानेति । ननु घनोदस्यांडांतर्वर्तित्वप्रतिपादनपरेत्यर्थः । कीदृग्विधस्तर्हि श्रुत्यभिमतो भुवनकोशः? इत्याशंक्य नात्र भुवनकोशनिर्णयाय श्रुतिः प्रवृत्ता किन्तु ब्रह्माण्डशरीराद्विराजो बहिः सूत्रात्मनो व्याप्तिरस्ति सूत्रात्मत्वं च कर्मफलमेवेत्येतावदिह विवक्षितमित्याह *सर्वथेत्यादिना । सर्वथेत्यनेन घनोदोअण्डांतर्वर्त्ती भवतु वा मा वेति श्रुतेस्तत्रानास्थां दर्शयति । नच तर्हि द्वात्रिंशदित्यादिपरिमाणकथनविरोधः,पृथिव्यादेरुक्तपरिमाणेन सूत्रध्यायिनो ध्यानविवक्षया तदुक्तिरविरुद्धेत्युक्तत्वादिति भावः ॥ ३४ ॥ ३५ ॥ तद्यावतीत्यादेरर्थमाह *क्षुरेति ॥ ३६ ॥

अयमर्थः—लोकादिपरिमाणे एवं स्थिते सति तत्तत्र यावती

श्रुतिः-तद्यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नित्येवमिव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद, ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

इत्युपनिषदि तृतीयं ब्राह्मणं समाप्तम् ।

वा० ते वायुभावमापन्नाः समष्टिव्यष्टिरूपतः ॥
अण्डाद्बहिस्तदन्तश्च तिष्ठन्त्यखिलरूपिणः ॥ ३७ ॥
अध्यात्मादिविभागेन व्याप्तिर्व्यष्टिरितीर्यते ॥

---

यावत्परिमाणा क्षुरस्य धारा यावद्वा सौक्ष्म्येण युक्तं मक्षिकायाः पत्रं तावानंतरेण आण्डकपालयोर्मध्ये आकाशच्छिद्रं, तेन छिद्रेण तानश्वमेधकृतः इन्द्रः अश्वमेधदेवताहिरण्यगर्भः सुपर्णो भूत्वा ज्ञानशक्तिप्रधानः सन् वायवे क्रियाशक्तिप्रधानाय प्रायच्छत् । सुपर्णशब्दस्यात्रौचित्यात्सूत्रवाचित्वम् । सूत्रस्यैव वायुत्वेऽपि उक्तावच्छेदकभेदाद्भेद इति च ध्येयम् । अर्चिरादिमार्गेण ब्रह्मलोकप्राप्त्याऽऽण्डकपालसमीपं प्राप्तानश्वमेधकृतः आंडकपालसंधिना हिरण्यगर्भो बहिर्नयति इत्यर्थः । तान्वायुरित्यादेरर्थमाह *ते वायविति ॥ ३७ ॥

श्रुतौ एवमिव वै एवमेव स गंधर्वो वायुमेव प्रशशंस अण्डाद्बहिर्यतो देवतान्तरस्य न गतिरतो देवतानां मध्ये वायुरेव महानिति प्रशशंसेत्यर्थः ॥२॥ तस्मात् वायुरेवेत्यत्र समष्टिव्यष्टिशब्दार्थमाह *अध्यात्मेति । वायोर्ज्यायस्त्वेन प्रशस्यमानत्वादसावे-

समस्ततत्वेन संव्याप्तिः समष्टिरिति कीर्त्तिता ॥ ३८ ॥
समष्टिव्यष्टिरूपेण उपास्तेऽसौ सकृन्मृतः ॥
हिरण्यगर्भो भूत्वाऽथ मुच्यते म्रियते न तु ॥ ३९ ॥
संसारोत्कर्षसीमेत्थं वर्णिता ज्ञानकर्मजा ॥
इतो विरक्तमालक्ष्य वक्ष्यते स्वात्मनिर्णयः ॥ ४० ॥

इति वार्त्तिकसारे तृतीयाध्यायस्य तृतीयं ब्राह्मणं समाप्तम्

चतुर्थब्राह्मणे मोहयोग्यः कर्तृत्ववर्जितः ॥
विषयो ब्रह्मविद्याया अस्त्यात्मेति निरूप्यते ॥ १ ॥
अहंधीकर्मशास्त्राभ्यां दृष्टेर्द्रष्टा न सिध्यति ॥
किंतु दृष्टयादिसंयुक्तो ब्रह्मताऽस्य विरुध्यते ॥ २ ॥

---

वांतर्व्याप्त्या व्यष्टिर्बहिर्व्याप्त्या समष्टिश्चेत्यर्थः ॥ ३८ ॥ अप पुनरित्यादेरर्थमाह *समष्टीति ॥ ३९ ॥ ब्राह्मणार्थमुपसंहरन्नुत्तरब्राह्मणास्यानेन सम्बन्धमाह *संसारेति ॥ ४० ॥

इति वार्त्तिकसारटीकायां तृतीयाध्याये तृतीयं ब्राह्मणं समाप्तम् ॥

त्वंपदार्थस्वरूपनिरूपणपरमुत्तरब्राह्मणमित्याह *चतुर्थेति । अज्ञानोपहितो वस्तुतः कर्तृत्वादिरहितो ब्रह्माभेदयोग्यः प्रत्यग्धातुः कश्चिद् अस्तीत्यत्र निरूप्यत इत्यर्थः ॥ १ ॥ उक्तार्थस्वरूपस्योपनिषदेकगम्यत्वं वक्तुं प्रत्यक्षादिना तत्सिद्धिशंकां निरस्यति *अहमिति ॥ २ ॥ ब्रह्माभेदयोग्यप्रत्यक्स्वरूपस्य मानांतरागोचरत्वे फलितमाह *अत इति ।

अतो ब्रह्मत्वयोग्यस्य प्रतीचोऽत्र बुभुत्सया ॥
अनूद्य ब्रह्मतामादौ तदर्थं परिपृच्छति ॥ ३ ॥

श्रुतिः—अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वांतरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानिति स त आत्मा सर्वान्तरो यो व्यानेन व्यानिति स त आत्मासर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥ १ ॥

वार्त्ति०–यत्साक्षादपरोक्षं स्याद्ब्रह्म तद्रूपतामयम् ॥
अर्हन् सर्वान्तरस्तादृग्य आत्मा ब्रूहि तं मुने ॥ ४॥
साक्षादिति पदेनात्र व्यवधानं निवार्यते ॥
स्वर्गलोकादिवद्ब्रह्म नातो देशान्तरादिगम् ॥ ५ ॥
अगौणताऽपरोक्षार्था ब्रह्मत्वस्य विवक्षिता ॥

---

*पृच्छतीति । चक्रायणस्यापत्यं चाक्रायणः उषस्तिरिति नामतः सः पप्रच्छेत्यर्थः ॥ ३ ॥

प्रश्नवाक्यं योजयति *यदिति । यद्ब्रह्म उपनिषत्सु प्रसिद्धं तदभेदयोग्यो यस्त्वमर्थस्तं ब्रूहीत्यर्थः ॥ ४ ॥ प्रश्नवाक्यस्थं साक्षादितिपदं व्याचष्टे *साक्षादिति । साक्षात्पदेन व्यवधाने निवारिते अर्थसिद्धमर्थमाह *स्वर्गेति ॥ ५ ॥ अपरोक्षादित्यस्यार्थमाह *अगौणतेति । तेन सिद्धमर्थमाह *नामेति । नाम ब्रह्मेत्यादौ नामादौ ब्रह्मत्वं यथा गौणं नैवं

नामादेरिव नो गौणं ब्रह्मत्वं प्रत्यगात्मनः ॥ ६ ॥
आविर्भावोऽपरोक्षत्वं तच्चास्त्यव्यवधानतः ॥
स्वप्रकाशस्वभावत्वादिति वाऽर्थः पदद्वये ॥ ७ ॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यते ॥
अकारणमकार्यं तदित्यनेनोदितं भवेत् ॥ ८ ॥
अपुमर्थमिदं प्राप्तं न चेदात्मैव तद्भवेत् ॥
यतोऽत आत्मरूपार्थं य आत्मेति विशेष्यते ॥ ९ ॥
सजातीयविजातीयद्वितीयार्थनिवृत्तये ॥
सर्वान्तर इति प्राह सार्वात्म्यं तेन सिध्यति ॥ १०॥
सार्वात्म्यं ब्रह्मणो योग्यं तच्च जीवात्मनीरितम् ॥

---

प्रतीच इत्यर्थः ॥ ६ ॥ अपरोक्षादित्यस्यार्थान्तरमाह *आविर्भाव इति । साक्षादित्यस्याप्यर्थान्तरमाह *अव्यधानत इति । घटादिवदन्तःकरणवृत्तिव्यवधानं विनेत्यर्थः । ब्रह्मणो व्याप्तिं विना स्फुरणमसिद्धम् इत्याशंक्यानुमानेन साधयति *तच्चास्तीति । अत्र हेतुः *स्वप्रकाशेति ॥ ७॥ ब्रह्मपदार्थमाह *अअव्यावृत्तेति । अव्यावृत्तपदेनाकार्यम्, अननुगतपदेन वस्तुतोऽकारणमिति तत्रोक्तं भवतीत्यर्थः ॥ ८ ॥ यच्छब्दोपात्तं विशेष्यं य इत्यनूद्यात्मेति विशेष्यतेऽस्याभिप्रायमाह *अपुमर्थमिति । नहि स्वर्गादेरात्यंतिकपुमर्थत्वमतो यथोक्तब्रह्मात्मेति निश्चयेन तस्यानतिशयपुमर्थत्वनिर्धारणायात्मविशेषणमित्यर्थः ॥ ९॥ विशेषणान्तरव्यावर्त्यमाह *सजातीयेति ॥ सर्वान्तरत्वं सर्वप्रपञ्चाधिष्ठानत्वं कल्पितस्याधिष्ठानापरिच्छेदकत्वाददद्वितीयत्वेन सर्वात्मत्वं सिध्यतीत्यर्थः ॥ १० ॥ उक्तमर्थं

मुख्यापरोक्ष्यं जीवस्य योग्यं ब्रह्मणि वर्णितम् ॥११॥
अभेदो वास्तवो जीवब्रह्मणोर्व्यत्ययादतः ॥
विवक्षितस्तत्प्रसङ्गाद्धादिव्यामोह आर्थिकः ॥ १२ ॥
आत्मनो ब्रह्मता मुख्या ब्रह्मणोऽप्यात्मता तथा ॥
प्रत्यग्दृष्ट्या पराग्दृष्ट्या मिथो ब्रह्मात्मनोर्भिदा ॥१३॥
ब्रह्मत्वमात्मनो रूपं तमसा तत्तिरोहितम् ॥
आत्मत्वं ब्रह्मणोऽप्येवं ततो जीवेशभेदधीः ॥ १४ ॥
तमसो बोधविध्वंसे अब्रह्मानात्मताहृतेः ॥
प्रत्यङ्मात्रावशेषत्वात्स्यामपूर्वादिमानहम् ॥ १५ ॥
अमूढो याज्ञवल्क्योऽत्र प्रत्यग्दृष्ट्या परामृशन् ॥
प्रत्याहैष त आत्मेति तं सर्वान्तरमद्वयम् ॥ १६ ॥
मुख्यापरोक्षोऽयं प्रत्यक् स्वप्रकाशोऽवभासते ॥

---

संक्षिप्याह *सार्वात्म्यमिति ॥ ११ ॥ सार्वात्म्यमापरोक्ष्यं च तत्त्वंपदार्थयोरसाधारणधर्मव्यत्यासेन वदतः कोऽभिप्राय इत्याशंक्य परमतात्पर्यमाह *अभेद इति । आवान्तरतात्पर्यमाह *तदिति ॥ १२ ॥ जीवेशयोः वास्तवाभेदः कथं, भेदधीविरोधादित्याशंक्य ब्रह्मात्मपदयोः सामानाधिकरण्येन वास्तवाभेदे सिद्धे प्रत्यक्षादिधीः कल्पितभेदविषयेत्याह *आत्मन इति ॥ १३ ॥ असतोऽपि भेदस्य प्रतीतौ हेतुमाह *ब्रह्मत्वमिति ॥ १४ ॥ द्वयोरज्ञानमात्रव्यवहितत्वे फलितमाह *तमस इति । अपूर्वादिमान्—कारणादिविलक्षण इति यावत् ॥ १५ ॥ एवं प्रश्नतात्पर्यमुक्त्वा प्रत्युक्तितात्पर्यमाह *अमूढ इति ॥ १६ ॥ तत्र एषपदार्थमाह *मुख्येति । नन्वक्षसन्निकृष्टस्यैवेतत्पदवाच्यत्वात्कथं प्रतीचि तत्प्रयोगस्तत्राह *त्रि-

एतच्छब्देन तं प्राह विस्पष्टत्वविवक्षया ॥ १७॥
अन्तर्मुखस्य विस्पष्टो नायं सन्देहगोचरः॥
इत्यभिप्रेत्य तत्प्रश्ने बहुमानं तु नाकरोत् ॥ १८ ॥
षष्ठयन्तस्य त इत्यस्य युष्मद्बुद्ध्युपलक्षितम् ॥
देहादिसर्वमाव्योम्नो दृश्यमर्थो विवक्षितः ॥ १९ ॥
आत्मेति च प्रमात्रादेः स्वरूपमभिधीयते ॥
प्रमात्राद्यागमापायसाक्षित्वात्तत्स्वरूपता ॥ २० ॥
यद्यस्मिन्व्यभिचार्येत तत्स्वरूपं न कुत्रचित् ॥
कुण्डलित्वं यथा पुंसः, साक्षी त्वव्यभिचारवान् ॥२१॥
व्यभिचारो मिथो यद्वत्प्रमात्रादेः ससाक्षिकः ॥
साक्षिणोऽव्यभिचारस्तु तथा किंसाक्षिको भवेत् ॥२२॥

---

स्पष्टत्वेति ॥ १७ ॥ नन्वतिसूक्ष्मप्रश्ने कृतेऽपि मुनिः किमिति नाभ्यनंदत्तत्राह *अन्तरिति ॥ १८ ॥ एष त इत्यत्र त इतिषष्ठ्यंतपदप्रकृत्यंशे तत्सर्वं दृश्यं लक्ष्यत इत्याह *षष्ठ्यंतस्येति ॥ १९ ॥ आत्मशब्दार्थमाह *आत्मेति । प्रमात्रादेः कल्पनाधिष्ठानं तस्य वास्तवं रूपमात्मेत्यर्थः । तस्य मात्रादिस्वरूपत्वे हेतुमाह *प्रमात्रादीति ॥ २० ॥ मात्राद्यधिष्ठानस्यैवात्मत्वमुक्तं व्यक्तीकुर्वन् मात्रादेरनात्मत्वं दृष्टान्तेन साधयति *यदिति । यस्मिन्नधिष्ठाने सत्येव यद्वस्तु तेन वियुज्यते तत्तस्याधिष्ठानस्य स्वरूपं न भवतीत्यर्थः । साक्षिणोऽपि प्रतिदेहं व्यभिचारादनात्मत्वमाशंक्य हेत्वासिद्धिमाह *साक्षीति ॥ २१ ॥ तदेव व्यनक्ति *व्यभिचार इति । यथा मात्रादिकं तदभावश्च साक्षी पश्यन्नास्ते, तद्वत्साक्षिणो ऽभावं कश्चिन्न पश्यत्यतो न तस्य प्रतिदेहं भेदस्तस्यापि साक्षित्वा-

आत्मात्मवत्त्वसम्बन्धः षष्ठयोक्तो जगदात्मनोः ॥
स्वतो निरात्मकं दृश्यमात्मना सात्मतां व्रजेत् ॥२३॥
आत्मा सर्वस्वरूपत्वात्सर्वान्तरगिरेरितः ॥
सर्पधारादिकल्पेषु रज्जोरान्तरता यथा ॥ २४ ॥
आत्मनोऽनवशेषेण तदन्यार्थाभिसङ्गतेः ॥
प्रत्यज्ञात्वनयैवावबोधादात्मनि लीयते ॥ २५ ॥
अतः सर्वान्तरत्वेन सर्वात्मत्वं विवक्षितम् ॥
न सर्वेष्वन्वयो यस्मादन्वयादि न चात्मनि ॥ २६ ॥
व्यतिरेकान्वयाभावाः कार्यकारणवस्तुनि ॥
अकारणमकार्यं तद्व्यतिरेकादिभाक्कथम् ॥ २७ ॥
अन्वेति सर्वकार्येषु कारणं तन्तवो यथा ॥

---

दिति भावः ॥ २२ ॥ एष त इत्यत्र तच्छब्दार्थः पूर्वमुक्तः, इदानीं षष्ठ्या विवक्षितं सम्बन्धमाह *आत्मेति । यथा जगदात्मनोराध्यासिकः सम्बन्धः षष्ठ्यर्थ इति भावः ॥ २३ ॥ आत्मा सर्वान्तर इत्यत्र सर्वान्तरत्वं सदृष्टान्तमाह *आत्मेति ॥ २४ ॥ सर्वात्मत्वेन चेदात्मा सर्वांतरस्तर्हि सर्वेष्वनुस्यूतत्वं सर्वात्मत्वमिति द्वैतापत्तिरित्याशंक्य विवक्षितं सार्वात्म्यमाह *आत्मन इत्यादिना । कल्पितं सर्वमधिष्ठानेन व्याप्तं सदधिष्ठानज्ञानेन तन्मात्रतया ऽवशिष्यते इति कृत्वाऽऽत्मनः सर्वात्मत्वमुक्तं नतु सर्वान्वयित्वेन, तस्मिन्नन्वयस्य व्यतिरेकस्य वाऽयोगादित्यर्थः ॥ २६ ॥ आत्मन्यन्वयाद्ययोगमेवाह *व्यतिरेकेति । व्यतिरेकोऽन्वयोऽभावश्चेति तथोक्तः। अभावशब्दः प्रागभावादिपरः । एते कार्यकारणसम्बन्धिनस्तद्विलक्षणब्रह्मणि न सम्भवन्तीत्यर्थः ॥ २७ ॥ कारणादीनामेवा-

व्यतिरेकस्तु कार्यस्य स्पष्टः कार्यान्तरात्मनः ॥ २८ ॥
प्रध्वंसप्रागभावौ च कार्याणां सर्वसम्मतौ ॥
आत्मनः सत्स्वभावत्वादभावः शङ्क्यतेऽपि न ॥२९॥
प्रत्यक्तया समाप्तत्वात्प्रतीचोऽन्यस्य वस्तुनः ॥
व्यतिरेकैकरूपस्य व्यतिरेको न लभ्यते ॥ ३० ॥
सर्वस्वरूपभूतस्य कुत्रान्वय इतीर्यताम् ॥
तस्मात्सार्वात्म्यमेवेह वक्ति सर्वान्तरोक्तितः ॥३१॥
इत्थं स्वानुभवाद्याज्ञवल्क्यः सर्वान्तरं जगौ ॥
अन्यः संशयमापद्य जिगीषुः परिपृच्छति ॥ ३२ ॥
तवात्मेत्युत्तरं दत्तं ममात्माऽत्र त्रिधेक्ष्यते ॥
देहो लिङ्गं च साक्षीति तेषु सर्वान्तरोऽत्र कः ॥३३॥
सर्वान्तरत्वं दुःसाध्यमल्पयोर्देहलिङ्गयोः ॥
सद्भावेऽन्यस्य किं मानमप्रमेयस्य साक्षिणः ॥ ३४ ॥

---

न्वयादिमत्त्वमुक्तमुदाहरणेन स्पष्टयति *अन्वेतीत्यादिना । तत्र प्रागभावादेरात्मनि प्रसक्तिरेव नास्तीत्याह *आत्मन-इति ॥ २८ ॥ २९ ॥ प्रपञ्चव्यतिरेकात्मनः प्रतीचो व्यतिरेकोऽपि दुर्लभ इत्याह *प्रत्यक्तयेति ॥ ३० ॥ आत्मव्यतिरिक्तस्य निःस्वरूपत्वात्तत्रात्मनो वास्तवान्वयोऽपि न घटत इत्याह *सर्वेति । आत्मनोऽन्वयाद्ययोगे फलितमाह *तस्मादिति ॥ ३१ ॥ एष इत्यादेरर्थमनुवदन्कतम इत्यादिप्रश्नमवतारयति *इत्थमिति ॥ ३२ ॥ संशयमेव स्फोरयति *तवेति ॥ ३३ ॥ तेषु यः सर्वात्मत्वयोग्यः स सर्वान्तर इत्याशङ्क्य तर्हि परिशेषात्साक्षीति वाच्यः स चासिद्धो मानागोचरत्वादित्याह *सर्वेति ॥ ३४ ॥ यः

एवं पृष्टः स्वानुभूतौ वादिनोऽनधिकारिताम् ॥
मत्वाऽनुमानतः सत्तामात्मनः प्रत्यपादयत् ॥ ३५ ॥
स्वप्रभे मानवैफल्यादप्रमेयत्वमिष्यते ॥
वादिभ्रान्तिनिवृत्त्यर्थं मानोक्तौ हीयतेऽत्र किम्॥३६॥
प्राणादिकरणैश्चेष्टा कर्तृपूर्वा क्रियात्वतः ॥
छिदिक्रियावत्कर्तृत्वं न युक्तं देहलिङ्गयोः ॥ ३७ ॥
करणप्रेरकः कर्त्ता करणैः प्रेर्यते वपुः ॥
लिङ्गं तु करणात्मत्वान्नैवं कर्तृत्वमर्हति ॥ ३८ ॥
मुखसंचारिणा जाग्रद्यः प्राणेनानितीक्षिता ॥
सर्वप्रत्यक्तमः सोऽयमात्मा सर्वान्तरावधिः ॥ ३९ ॥
सुप्तेऽस्मिन्करणग्रामे यो सुप्तो ऽलुप्तदृष्टिकः ॥
सर्वान्सवासनारूपान्पश्यन्प्राणिति वायुना ॥ ४० ॥
स्पष्टेषु बहुलिङ्गेषु मानाभावमचूचुदः ॥
इत्युपालब्धये लिङ्गान्यपानादीन्युदाहरत् ॥ ४१ ॥

---

प्राणेनेत्यादिमत्युक्तिमादत्ते *एवमिति ॥ ३५ ॥ अप्रमेये प्रतीचि कथमनुमानोपन्यासस्तत्राह *स्वप्रभ इति ॥ ३६ ॥ य इत्यादिश्रुतिसूचितानुमानप्रकारमाह *प्राणादीति । पञ्चवृत्तिप्राणेन चक्षुरादिकरणैश्च जायमाना देहचेष्टाऽत्र पक्षः । उक्तानुमानस्य स्थूललिंगदेहाभ्यामर्थान्तरत्वं निरस्यति *कर्तृत्वमित्यादिना ॥ ३७ ॥ ३८ ॥ प्रतिवचनस्याभिप्रायमुक्त्वा प्राणं व्याचष्टे *मुखेति । प्राणितीत्यस्य व्याख्याऽनितीति । यः साक्षी प्राणं व्यापारवन्तं करोतीत्यर्थः ॥३९॥ य इतिपदं जाग्रत्साक्षीपरतया व्याख्याय स्वप्नादिसाक्षीपरत्वेनापि व्याचष्टे *सुप्त इति ॥ ४० ॥ एकेनैव लिङ्गेन विवक्षितसिद्धेः किमपा-

एकादशेन्द्रियोत्पन्नचेष्टानामुपलक्षणम् ॥
प्राणाद्युदाहृतिस्तेन लिङ्गानां बहुना स्फुटा ॥ ४२ ॥
प्राणादिकार्यकरणः स्वनो ऽसंहत एकलः ॥
तच्चेष्टां कुरुतेऽकुर्वन्नयस्कान्तो मणिर्यथा ॥ ४३ ॥
रथादौ नियता चेष्टा चेतनेनानधिष्ठिते ॥
न दृष्टा, चेतनस्तेन प्राणादीनां प्रवर्त्तकः ॥ ४४ ॥
श्रुतिः–स होवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः ॥
वार्त्ति० ससूत्रदारुयन्त्रेण सदृशं लिङ्गयुग्वपुः ॥
यः प्रेरयत्यसावात्मेत्युक्तेऽन्योऽपजहास तम् ॥४५॥
प्रतिज्ञाय पुरा साक्षाद्ब्रामहं दर्शयामि ते ॥

---

नेनेत्याद्यनेकलिङ्गेन ? तत्राह *स्पष्टेष्विति ॥ ४१ ॥ ४२ ॥ ननु प्राणनादिहेतुश्चेदात्मा संहतः, सक्रियश्च स्यात्तत्राह *प्राणादीति । चेष्टां कुरुते, चेष्टाहेतुरित्यर्थः । अकुर्वन्निति छेदः । सन्निधिमात्रेणान्यत्र क्रियाहेतुत्वे दृष्टान्तोऽयस्कान्त इति ॥ ४३ ॥ सङ्घातातिरिक्तचिदात्मैव नास्ति कुतस्तस्याक्रियत्वमित्याशङ्क्याह *रथादाविति । अचेतनप्रवृत्तिश्चेतनाधिष्ठानपूर्विका प्रवृत्तित्वाद्रथादिप्रवृत्तिवदित्यर्थः ॥ ४४ ॥ उक्तमर्थं संक्षिपन् यथेति प्रश्नमवतारयति *ससूत्रेति ॥ ४५ ॥ अपहासे हेतुं दर्शयन्प्रश्नवाक्यं व्याचष्टे *प्रतिज्ञायेति द्वाभ्याम् । तथा कर्तुं प्रत्यक्षयितुमिति यावत् । लिङ्गेन धावनादिनेत्यर्थः । दार्ष्टान्तिके लिङ्गेन

अशक्नुवंस्तथाकर्त्तुं लिङ्गेन प्रतिबोधयेत् ॥ ४६ ॥
यथा कश्चित्तथैव त्वं प्रतिज्ञाय पुराऽऽत्मनः ॥
अपरोक्षमनुक्त्वा तल्लिङ्गेनाविदयस्यहो ॥ ४७ ॥
लिङ्गं वाच्यं परोक्षार्थे न त्वात्मनि परोक्षता ॥
इति मत्वा हैवकारं पारोक्ष्यस्य निवर्त्तकम् ॥ ४८ ॥
मुख्यापरोक्ष्यमुक्तं त इति दर्शयितुं पुनः ॥
प्रत्यग्दृष्टिपरं वाक्यमुत्तरत्वेन वक्त्यसौ ॥ ४९ ॥
विद्वद्भाषामबुद्ध्वाऽन्यः सरूपादिष्विवात्मनि ॥
अक्षजन्यापरोक्षत्वं मत्वाऽपृच्छत्पुरेव तम् ॥ ५० ॥
दृष्टश्रुतमतज्ञातेष्वेषां सर्वान्तरस्तु कः ॥
दृष्ट्याद्यगोचरः प्रत्यागिति प्रश्नमपाकरोत् ॥ ५१ ॥

---

प्राणनादिनेत्यर्थः ॥ ४६ ॥ ४७ ॥

यथा कश्चिदसौ गौरिति प्रत्यक्षेण दर्शयिष्यामीत्युक्त्वा विब्रूयादन्यथैव लिङ्गेन ब्रूयादेवमेतदात्मस्वरूपं त्वया व्यपदिष्टमिति श्रुत्यक्षरार्थः ।

यदेवेत्यत्रावधारणतात्पर्यमाह *लिङ्गमिति । एवकारमाहेत्यर्थः ॥ ४८ ॥ एषत आत्मेति प्रतिवचनतात्पर्यार्थमाह *मुख्येति ॥ ४९ ॥ कतम आत्मेति पुनः प्रश्नस्य तात्पर्यमाह *विद्वदिति । सरूपादिष्विव घटादिष्विव ॥ ५० ॥ प्रश्नमुक्त्वा तदक्षराणि व्याकरोति *दृष्टेति । दृष्टश्रुतादिषु कतमः सर्वान्तरः ? सङ्घातादिवत्प्रत्यक्षतो दर्शयेत्यर्थः । आत्मनो विषयत्वेन प्रदर्शनमशक्यमिति न दृष्टेरित्यादिप्रत्युक्तितात्पर्यमाह *दृष्ट्यादीति ॥ ५१ ॥

दृष्ट्याद्यविषयत्वे कथमात्मसिद्धिस्तत्राह *वेद्मीति । शब्दादिवृत्तयस्तदभावश्च यत्कूटस्थस्य प्रसादात्सिध्यन्ति स्वमहिम्नैव

श्रुतिः—न दृष्टेर्द्रष्टारं पश्येः ॥

वार्ति०—वेद्मीति यद्बलाद्वक्ति न वेद्मीत्यपि यद्बलात् ॥
योगिनोऽनुभवन्त्येतमगोचरतयैव हि ॥ ५२ ॥
उक्तवर्त्मातिरेकेण नात्मवस्तु घटादिवत् ॥
शक्यते प्रतिनिर्देष्टुं प्रमाणागोचरत्वतः ॥ ५३ ॥
द्रष्टृदर्शनदृश्यानां साक्षिणः स्वप्रभस्य तत् ॥
प्रमाणागोचरत्वं तु वस्तुस्वाभाव्यतो भवेत् ॥ ५४ ॥
दृष्टेर्न पश्येर्द्रष्टारमिति प्रत्युत्तरं वचः ॥
वस्त्वगोचरतामेतद्वाक्यं व्याक्रियते स्फुटम् ॥ ५५ ॥
चक्षुर्जन्यमनोवृत्तिश्चिद्युक्ता रूपभासिका ॥
दृष्टिरित्युच्यते, द्रष्टा दृष्टेः कर्त्तेति लौकिकैः ॥ ५६ ॥
अतो दृष्टिद्वयं वाक्ये भाति षष्ठ्यन्तशब्दतः ॥
एका दृष्टिस्तृजन्तेन धातुनाऽन्येति तद्द्वयम् ॥ ५७ ॥

---

प्रथते विशुद्धमनसामित्यर्थः ॥ ५२ ॥ प्रत्यक्त्वेनाविषयतयै-वात्मा ज्ञातव्य इत्युक्तमेवोपपादयति *आत्मेति ॥ ५३ ॥ तस्य प्रमाणागोचरत्वं वा कुतस्तत्राह *द्रष्ट्रिति ॥ ५४ ॥ प्रतिव-चनतात्पर्यमुपसंहरन्नक्षरार्थं वक्तुं प्रतिजानीते *दृष्टेरिति ॥ ५५ ॥ अस्मिन्वाक्ये लौकिकी पारमार्थिकी चेति दृष्टिद्वयं प्रतीयत इ-ति वक्तुं दृष्टिशब्दयोर्लोकसिद्धमर्थमाह *चक्षुरिति । क-र्त्तेत्युच्यते इत्यनुषङ्गः ॥ ५६ ॥ एवं लौकिकप्रसिद्धौ फलित-माह *अत इति । एका वृत्तिरूपेत्यर्थः । द्रष्टारमित्यत्र तृज-न्तेन धातुना, अन्या आत्मरूपा दृष्टिर्भातीत्यर्थः । दृष्टिद्वयसमर्थन-मुपसंहरति *तद्द्वयमिति । तस्माद् द्वयमत्र भातीत्यनुषङ्गः॥५७॥ दृष्टेर्द्रष्टारमित्यत्र दृष्टेः कर्त्तारमित्येवार्थः, अतो नात्र दृष्टिद्वयं प्र-

भर्तृप्रपञ्चो व्याख्याति वाक्यं दृष्टिद्वयं विना ॥
दृष्टिः षष्ठ्यन्तशब्दोक्ता कर्तृमात्रं तृजन्ततः ॥ ५८ ॥
नैवं पदे तृजन्तेऽस्मिन्प्रकृतिप्रत्ययद्वयात् ॥
दृष्टितत्कर्तृसंसिद्धेः षष्ठ्यन्तस्यानपेक्षणात् ॥ ५९ ॥
अतो दृष्टिद्वयं वाच्यं नित्यानित्यविभेदि तत् ॥
मनोवृत्तिरनित्याऽन्या साक्षिचैतन्यरूपिणी ॥ ६० ॥
वृत्तिर्जडाऽप्यसावात्मचैतन्यच्छयया युता ॥
चैतन्यवद्भासकत्वाद् दृष्टिशब्दार्थतां व्रजेत् ॥ ६१ ॥
यत्सर्वव्यापिचैतन्यं तद्दृष्टिं व्याप्नुयात्तया ॥
दृष्ट्यैकतामुपगतमागन्तुकमिवेक्ष्यते ॥ ६२ ॥
व्याप्तत्वमेव द्रष्टृत्वं नाक्रिये द्रष्टृता स्वतः ॥
न धूमाग्न्योरिव व्याप्तिः किन्तु स्रक्सर्पयोरिव॥६३॥

---

तीयत इत्येकदेश्युक्तमनुवदति *भर्तृप्रपञ्च इति ॥ ५८ ॥ अ-स्मिन्पक्षे कर्त्तारमित्यस्य द्रष्टारमिति पदेनैव सिद्धेर्दृष्टेरितिपदं निरर्थकं स्यादिति दूषयति *नैवमिति ॥ ५९ ॥ स्वमतमुपसंहरन्दृष्टिद्वयं विभजते *अतइति ॥ ६० ॥ जडाया वृत्तेः कथं दृष्टिपदवाच्यत्वं ? तत्राह *वृत्तिरिति ॥ ६१ ॥ साक्षिचैतन्यस्य नित्यत्वे "इदानीमीक्षते" इति तत्रागन्तुकत्वधीर्न स्यात्तत्राह *यदिति। दृष्टिं बुद्धिवृत्तिम् ॥ ६२ ॥ नन्वात्मनो नित्यदृष्टिरूपत्वे द्रष्टेति व्यपदेशः कथं सिद्ध्येत्, दर्शनक्रियाकर्त्तुरेव द्रष्टृत्वात्तत्राह *व्याप्तत्वमिति । ननु वृत्तिव्याप्तत्वं चेद् द्रष्टृत्वं तर्हि व्यापकं विना तन्निरूपितव्याप्त्याश्रयस्यात्मनोऽन्वस्थानं न स्यात्तत्राह *नेति ॥६३॥ लोके व्याप्तिर्द्विधा मुख्या गौणी च। तत्राद्या व्याप्यव्यापकयोस्तादात्म्यरूपा । द्वितीया

कात्स्न्येंन यत्र वृत्तिः स्याद्व्याप्यव्यापकवस्तुनोः ॥
व्याप्तिस्तत्रैव मुख्या स्यात्स्रग्जसर्पादिवस्तुवत् ॥६४॥
देशकालादिसम्भेदादसाधारणतत्त्वयोः ॥
व्याप्तिर्न मुख्या धूमाग्न्योर्हिमवद्विन्ध्ययोरिव ॥ ६५ ॥
क्रियाकारकरूपा धीरक्रियाकारकात्मना ॥
व्याप्त्यैव जायते कुंभ आकाशेन यथा तथा ॥ ६६ ॥
व्याप्या दृष्टिर्जन्मवत्त्वादनित्याऽव्यापिका त्वियम् ॥
कूटस्थत्वेन साक्षित्वान्नित्या जन्मादिवर्जनात् ॥६७॥
कूटस्थदृष्टिस्तन्मोहो दृष्ट्याभासं च तत्त्रयम् ॥
साक्षी सर्वजगद्धेतुर्नियन्तेति च भण्यते ॥ ६८ ॥
कूटस्थदृष्टेः साक्षित्वं स्वमोहाभासवर्त्मना ॥
साक्ष्येणार्थेन सम्बन्धात्सिध्यत्येव स्वतो नतु ॥ ६९ ॥

---

स्त्वत्यन्तभिन्नयोर्देशाद्यभेदनिबन्धना । तथाच प्रकृते मुख्यैव सा विवक्षितेति वक्तुं व्याप्तिद्वयं क्रमेणोदाहरति *कात्स्न्येंनेत्यादिना ॥ ६४ ॥ ६५ ॥ तत्राक्रियस्याप्यात्मनो मुख्या व्याप्तिरुपपद्यते इति सदृष्टान्तमाह *क्रियेति ॥ ६६ ॥ एवं दृष्टिद्वयं साक्षिणो द्रष्टृत्वं चोपपाद्य "नित्यानित्याविभेदि तव"इत्युक्तमुपपादयति *व्याप्येति । परिच्छिन्नेत्यर्थः । जन्माभावे हेतुः *साक्षित्वादिति । तस्य विकारित्वं व्यावर्त्तयति *कूटस्थत्वेनेति । तत्र साक्षित्वं कल्पितमिति भावः ॥ ६७ ॥ साक्षित्वमपि कारणत्वादिवद्वास्तवमेवास्तु तत्राह *कूटस्थेति । त्रयं मिथो गुणप्रधानत्वेन त्रिधोच्यते, तथाच कारणत्वादि चाविद्यमिति भावः ॥ ६८ ॥ अविकारिणोऽपि साक्षित्वमाह *कूटस्थेति । सम्बन्धादेवेत्यन्वयः ॥६९॥ अनित्यदृष्टिव्यतिरेकेणोक्तसाक्षिणि

व्यावृत्तत्वेन मात्रादेः सिद्धः साक्षी सुषुप्तगः ॥
नावेदिषं सुषुप्तोऽहमिति धीर्नान्यथा भवेत् ॥ ७० ॥
बुद्ध्यादेः प्रविलीनत्वाद्देहादेश्च जडत्वतः ॥
लोष्ठादेरिव नैव स्यान्नाज्ञासिषमितीक्षणम् ॥ ७१ ॥
प्रत्यक्साक्ष्यतिरेकेण नाभावोऽपि प्रसिध्यति ॥
किमु भावो जगत्यस्मिन्साक्षी चानन्यसिद्धिकः॥७२॥
शून्यस्यापि हि शून्यत्वं तत्साक्षिणि सतीक्ष्यते ॥
असाक्षिकं चेत्तत्सिद्धं साक्षिवत्स्यात्स्वयम्प्रभम्॥७३॥
न देशकालावस्थादेरपेक्षा साक्षिसिद्धये ॥
देशादेः साक्ष्यपेक्षत्वात्स्वतः सिध्यति साक्ष्यतः॥७४॥
जन्मनाशादिसाक्षित्वाज्जन्मनाशादिवर्जिता ॥
साक्षिदृष्टिरियं नित्या मोहजन्या तथेतरा ॥ ७५ ॥

---

मानाभावमाशङ्क्यानुभवेन साधयति *व्यावृत्तत्वेनेति ॥ ७० ॥ उक्तमेव व्यनक्ति *बुद्ध्यादेरिति । न देहद्वयकृतं सौषुप्तज्ञानमित्यत्र हेत्वन्तरमाह *देहादेश्चेति । अतः सौषुप्तिकानुभवाभावे परामर्शासिद्धिरिति फलमाह *नैवेति ॥ ७१ ॥ किञ्च शून्यवादिभिरपि तत्सिद्ध्यै साक्ष्यभ्युपेयः किमु वक्तव्यमितरैरित्याह *प्रत्यगिति । *आभावोऽपीति । शून्यमपीत्यर्थः ॥७२॥ शून्यसिद्धेः साक्ष्यधीनत्वमाह *शून्यस्येति । साक्षिणं विना शून्यासिद्धिस्तस्य स्वप्रकाशत्वे च नाममात्रे विवाद इति भावः ॥७३॥ एवं नित्यानुभवं प्रसाध्य स्वतःसिद्धत्वं साधयति *नेति ॥७४॥ साक्षिनित्यत्वमुपसंहरति *जन्मेति । अनित्यदृष्टिस्वरूपमाह- *मोहेति ॥ ७५ ॥ मोहदृष्ट्युत्पत्तिप्रकारं दर्शयति *अविचारितेति ॥ अनिर्वचनीयं साभासमज्ञानं साक्षिसन्निधिमात्रेण

अविचारितसंसिद्धिर्मोहोऽयं साक्षिसन्निधेः ॥
साभासो मातृमानादिर्भवेद्धर्माद्यपेक्षया ॥ ७६ ॥
स्मृतिनिश्चयसन्देहरागद्वेषादिवृत्तिषु ॥
अहंरूपेण योऽन्वेति स प्रमाताऽस्त्यनित्यचित् ॥७७॥
स्मराम्यहं निश्चिनोमि संशये रागवानिति ॥
अहंरूपान्वयः स्पष्टः कर्त्ता भोक्ताऽप्यसौ भवेत् ॥७८॥
प्रत्यङ्मोहोत्थबुध्यादिर्जडरूपप्रधानतः ॥
कर्त्तृता भोक्तृता त्वस्य चिदाभासप्रधानतः ॥ ७९ ॥
प्रमातुर्जायते वृत्तिश्चक्षुषा रूपरञ्जिता ॥
द्रष्टव्यं तु तया रूपं न साक्षी दृश्यते तया ॥ ८० ॥
दृष्टेर्द्रष्टारमात्मानं दृष्ट्या पश्येन्न दृश्यया ॥
इति वाक्यं मुनिर्वक्ति वर्णितन्यायगर्भितम् ॥८१॥
येन चक्षुरिदं दृष्टं चक्षुषा यं न पश्यति ॥

---

प्रमातृद्वारा ज्ञानाद्याकारेण परिणमत इत्यर्थः । तत्र निमित्तमाह *धर्मेति ॥ ७६ ॥ कोऽसौ माता यद्द्वारा ज्ञानादिपरिणामास्तत्राह *स्मृतीति । वृत्तिमदन्तःकरणावच्छिन्ना चित्प्रमातेत्यर्थः ॥७७॥ वृत्तिष्वहमर्थस्यान्वयेऽनुभवं प्रमाणयति *स्मरामीति । कर्तृत्वादिधर्मोऽपि प्रमातुरेवेत्याह *कर्त्तेति ॥ ७८ ॥ कर्तृत्वादेर्जडधर्मत्वे दुःखादिभोगस्य चेतनधर्मत्वानुभवो न स्यात्तत्राह *प्रत्यङिति । तथाच प्रमातुर्जडाजडस्वरूपत्वात्कर्तृताया जडप्रधानत्वेऽपि भोक्तृत्वस्य चित्प्रधानत्वान्नोक्तदोष इति भावः ॥ ७९ ॥ अनित्यदृष्टिनिरूपणमुपसंहरति *प्रमातुरिति ॥ ८० ॥ वाक्यार्थमाह *दृष्टेरिति ॥ ८१ ॥ द्रष्टुर्दृश्यज्ञानाविषयत्वे श्रुत्यन्तरं संवादयति *येनेति

ब्रह्म विद्धि तदेव त्वमिति श्रुत्यन्तरे स्फुटम् ॥ ८२ ॥

श्रुतिः-न श्रुतेः श्रोतारं शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः । एष त आत्मा सर्वान्तरोऽतोऽन्यदार्त्तं ततो होषस्तश्चाक्रायण उपरराम॥२॥

इत्युपनिषदि चतुर्थं ब्राह्मणं समाप्तम् ॥

वाः-श्रुतिः श्रोतृजधीवृत्तिस्तस्याः श्रोताऽवभासकः ॥
श्रुत्या शब्दावगाहिन्या श्रोतारं शृणुयान्न तम् ॥८३॥
ऊहापोहात्मधीवृत्तिर्मतिस्तस्याः प्रकाशकम् ॥
अनूह्यमनपोह्यं तं न मन्वीथास्त्वमेतया ॥ ८४ ॥
अस्पष्ट ऊह्य आत्मा तु विस्पष्टो भानरूपतः ॥
अनपोह्योऽनुपाधित्वादात्मा नापैति कर्हिचित् ॥८५॥
निश्चयात्मकधीवृत्तिर्विज्ञातिस्तद्विभासकम् ॥
असंदिग्धं तया वृत्त्या न विज्ञातुं त्वमर्हसि ॥ ८६ ॥
दृष्टश्रुतमतज्ञातेष्ववितथमात्मा न कश्चन ॥
किं तर्ह्येष तवात्मेति प्रोक्तः प्रत्यक्तया पुरा ॥ ८७ ॥
यः सर्वं विषयीकुर्वन्विषयी क्रियते नहि ॥

---

॥८२॥ न दृष्टेर्द्रष्टारं पश्येरित्येतद्विस्तरतो व्याख्याय न श्रुतेरित्यादेरर्थमाह *श्रुतिरिति ॥ ८३ ॥ न मतेरित्यादेरर्थमाह *ऊहेति । ॥ ८४ ॥ आत्मनोऽनूह्यत्वमुपपादयति *अस्पष्ट इति । रत्नादिरिति शेषः । आत्मा ऊहात्मकधीवृत्तिगोचरो न भवति स्पष्टत्वादालोकवदित्यर्थः । हेत्वसिद्धिमुद्धरति *भानेति । अनपोह्यत्वं साधयति *अनपोह्येति ॥ ८५ ॥ न विज्ञातेरित्यादेरर्थमाह*निश्चयेति ॥ ८६ ॥ एष त इत्यादिवाक्यस्य व्यावर्त्याशङ्कामाह *दृष्टेति । तदुत्तरत्वेन वाक्यं व्याचष्टे* प्रोक्त

किन्तु भाति स्वयं सोऽयं सर्वान्तर इतीरितः ॥८८॥
सर्वान्तरत्वं सार्वात्म्यमन्यस्मिन् सति तत्कुतः ॥
न चेदन्यत्तदा सर्वशब्दार्थो नेति शङ्किते ॥ ८९ ॥
अतोऽन्यदार्तमित्याह दोषद्वयनिवृत्तये ॥
आरोपितप्रपञ्चस्य तत्त्वज्ञानेन पीडनात् ॥ ९० ॥
सर्पादीनां कल्पितानां रज्जुरात्मा यथा तथा ॥
मायामयस्य सर्वस्य चिद्वस्त्वात्मेति सुस्थितम् ॥९१॥

इति वार्त्तिकसारे तृतीयाध्यायस्य चतुर्थं ब्राह्मणं समाप्तम् ॥ ४ ॥

पञ्चमब्राह्मणे ब्रह्मबोधसंसिद्धिसाधनम् ॥
समुत्पन्ने तत्त्वबोधे मुक्तलक्ष्म च वर्ण्यते ॥ १ ॥
कहोलोषस्तयोः प्रश्ने पौनरुक्त्यं निवर्तयन् ॥
जीवात्मपरमात्मानौ भिन्नावित्याह कश्चन ॥ २ ॥

---

इति ॥ ८७ ॥ उक्तमेव स्मारयति *य इति ॥ ८८ ॥ अतोऽन्यद् इत्यादेः पातनिकामाह* सर्वेति ॥ ८९ ॥ तत्र वाक्यं पातयति *अतोऽन्यदिति । चितोऽन्यद्विनाशीति श्रुत्यर्थः ॥९०॥ ज्ञानानन्तरं द्वैतनिवृत्तावपि तत्पूर्वं तत्सत्त्वात्तदा कथं सर्वात्मत्वं तदाह *सर्पेति । कल्पितस्याधिष्ठानापरिच्छेदकत्वादिति भावः ॥ ९१ ॥

इति वार्त्तिकसारटीकायां चतुर्थब्राह्मणं समाप्तम् ॥

उत्तरब्राह्मणतात्पर्यमाह *पञ्चमेति । ब्रह्म च तद्बोधसिद्धिसाधनं चेत्यर्थः । लक्ष्म लक्षणम् ॥ १ ॥ स्वाभिमेतां सङ्गतिं वक्तुं भर्तृमपञ्चोक्तां तामाह *कहोलेति ॥ २ ॥ प्रश्नयोर्विषयभेदमुक्त्वा पञ्चमाध्यायशेषस्य कहोलप्रकरणे-

कहोलब्राह्मणोक्तोऽयमापञ्चमसमाप्तितः ॥
अशनायादिरहितः परमात्मा प्रपञ्च्यते ॥ ३ ॥
उषस्तब्राह्मणोक्तस्तु जीवात्माऽयं परेण सः ॥
षष्ठाध्यायेन सर्वेण प्रपञ्च्यत इति स्थितिः ॥ ४ ॥
मैवं प्रश्नस्य साम्येन प्रयुक्तेश्च समत्वतः ॥
आत्मद्वयासम्भवाच्च न जीवपरयोर्भिदा ॥ ५ ॥
साक्षादित्यादिकः प्रश्नो द्वयोरेकविधस्तथा ॥
प्रत्युक्तिश्चैव इत्यादिस्तत्रार्थो भिद्यते कुतः ॥ ६ ॥
एकेनैवात्मना देहे सात्मके सति यः पुनः ॥
द्वितीय आत्मा किं तेन तस्मादात्मद्वयं न हि ॥ ७ ॥
पृष्टो देहविभेदेन यद्यात्मा भिद्यते तदा ॥
सर्वान्तरत्ववचनं द्वयोरपि विरुध्यते ॥ ८ ॥
उषस्तपृष्टादन्यत्वं निवर्त्तयितुमात्मनः ॥
य एव साक्षादित्युक्तावेवकारः प्रयुज्यते ॥ ९ ॥
उपदेशस्य विषयस्त्वमर्थः शोधितः पुरा ॥

---

कवाक्यतामाह *कहोलेति ॥ ३ ॥ षष्ठाध्यायस्योषस्तप्रश्ने-नैकवाक्यतामाह* उषस्तेति ॥ ४ ॥ ब्राह्मणद्वये इत्यर्थ-द्वयं विवक्षितमित्येतदयुक्तमिति दूषयति* मैवमिति ॥ ५ ॥ हेतुत्रयं क्रमेणाह *साक्षादिति ॥ ६ ॥ ७ ॥ उषस्तकहो-लयोश्च सङ्घातभेदादात्मभेदं शङ्कित्वा परिहरति* पृष्ट इति । सङ्घातविशिष्टयोः परिच्छिन्नत्वाद्द्वयोः सार्वात्म्यायोगाच्चेति भा-वः ॥ ८ ॥ किंच यदेवेत्येवकारप्रयोगादपि प्रश्नद्वयविषयस्य न भेदशङ्कावकाश इत्याह* उषस्तेति ॥ ९ ॥ परोक्तसङ्गतिं निरस्य स्वाभिमतं तावत्प्रश्नवाक्यमवतारयति* उपदेशस्येति ॥ पू-

न ब्रह्मत्वं सम्यगुक्तमिति पृच्छति तत्पुनः ॥ १० ॥
श्रुतिः—अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः। कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति ॥
वा०-अशनायादिरहितब्रह्मताया अभाषणे ॥
न स्यात्सर्वान्तरत्वादि संसारिणि चिदात्मनि ॥ ११॥
इत्यभिप्रेत्य तेनोक्तं साक्षादित्यादिकं पुनः ॥
अनूद्य सर्वं पप्रच्छ कहोलो ब्रह्मरूपताम् ॥ १२ ॥
त्वमर्थाच्छोधितान्नान्यद्ब्रह्मेत्येतद्विवक्षया ॥
उक्तमेवोत्तरं भूय एष इत्याद्यवोचत ॥ १३ ॥

---

वेत्र त्वमर्थः प्राधान्येनोक्तः, तस्य प्राधान्येन ब्रह्मत्वप्रतिपादनार्थं कहोलप्रश्न आरभ्यत इत्यर्थः ॥ १० ॥

कहोल इति नामतः, कुषीतकस्यापत्यं कौषीतकेयः स पप्रच्छेति श्रुत्यर्थः ॥

आत्मनो ब्रह्मत्वमत्र प्रतिपिपादयिषितं चेत्तदेव प्रश्नपूर्वकं प्रतिपाद्यतां, किं यत्साक्षात्सर्वविशेषणस्य पुनः कथनेनेत्याशङ्क्याह* अशनायेति । अशनायादिरहितं स्वप्रकाशं यत्सर्वात्मकं ब्रह्म तदभेदयोग्यजीवस्वरूपनिर्धारणायोषस्तेनोक्तं साक्षादित्यादिसर्वविशेषणमर्थवदित्युक्तम्, अत्रापि तादृशजीवस्वरूपस्य ब्रह्मत्वनिर्धारणाय सर्वं विशेषणमनूद्यत इत्यर्थः ॥ ११ ॥ १२ ॥ ननु तत्पदार्थे पृष्टे एष त इत्यादिना त्वमर्थमेव तदुत्तरत्वेन वदतः कोऽभिप्रायस्तत्राह *त्वमिति

क्षुत्पिपासे शोकमोहौ जरामृत्यू इतीदृशैः ॥
त्रिभिर्युग्मैर्विशिष्टानां मध्येऽसौ कतमो वद ॥१४॥
यद्यन्यतम एतेषां तस्य न ब्रह्मता तदा ॥
एतेष्वनन्तर्गतस्तु न कोऽप्यात्मा जनैर्मतः ॥ १५ ॥
विद्वज्जनानुभूत्यैष क्षुदादेरवभासकः ॥
प्रसिद्ध इत्यभिप्रेत्य ब्रह्मत्वेन तमुक्तवान् ॥ १६ ॥
अत्येति योऽशनायादीन्विचारेण निरूपणे ॥
क्षुदादिसाक्षी तस्यास्य ब्रह्मत्वं केन बाध्यते ॥१७॥
नन्वेक आत्मा मूढानां विदुषां चेति ते मतम् ॥
उक्तोर्मिषट्कातीतत्वं तद्वन्धश्चास्य तत्कथम् ॥१८॥
अविचाराविचाराभ्यां यथा सर्पत्वरज्जुते ॥
तथाऽत्मन्यपि संसारभावाभावावितीक्ष्यताम् ॥१९॥
क्षुत्पिपासे प्राणधर्मौ शोकमोहौ तु मानसौ ॥

---

॥ १३ ॥ कतम इत्यादिप्रश्नाभिप्रायमाह *क्षुदित्यादिना । अशनायादिधर्मिणां प्राणमनःशरीराणां मध्ये कस्यचिदात्मत्वमुच्यते चेत्, न तस्य ब्रह्माभेदयोग्यता, एतत्त्रयव्यतिरिक्तस्तु लोकाप्रसिद्ध इत्यर्थः ॥ १४ ॥ योऽशनायेत्यादिप्रत्युक्तितात्पर्यमाह* विद्वदिति ॥ १६ ॥ क्षुदादिसाक्षिणः प्रसिद्धत्वेऽपि तस्य ब्रह्मत्वोक्तिः कथमित्याशङ्क्याशनायादिरहितब्रह्मलक्षणलक्षितत्वादित्याह* अत्येतीति । साक्षिणोऽशनायादिमत्त्वप्रतिपत्तेः कथं तद्राहित्यमित्याशङ्क्यारोपितं तदिति मत्वाह *विचारेणेति ॥ क्षुधाद्यागमापायसाक्षित्वात्प्रतीचो न वस्तुतो क्षुधादिमत्त्वमित्याह *क्षुदादीति॥१७॥ उक्तमर्थमाक्षेपसमाधानाभ्यां विशदयति *नन्वित्यादिना ॥ १८ ॥ १९ ॥ नन्वशनायादयो न

जरामृत्यू देहधर्मावात्मधर्मो न कश्चन ॥ २० ॥
प्राणसंचारबाहुल्याद्गमनादिश्रमे सति ॥
क्षुत्पिपासाजनिस्तेन प्राणधर्मत्वमेनयोः ॥ २१ ॥
इष्टस्य वस्तुनोऽसिद्धौ चेतसो याऽनवस्थितिः ॥
स शोको मानसो धर्मो मोहश्च विषयभ्रमः ॥ २२ ॥
जरा देहस्य शैथिल्यं मृत्युः प्राणवियुक्तता ॥
ते सर्वेऽप्यात्मनि भ्रान्त्या कल्पिता व्योमनैल्यवत् ॥ २३ ॥
यः स्वकारणसंसर्गः क्षुदादेरत्ययो मतः ॥
अनात्यन्तिकरूपत्वात्सोऽत्ययोऽत्र न गृह्यते ॥ २४ ॥
तत्कारणनिषेधो यः स्वमहिम्नैव वस्तुनः ॥

---

वस्तुन आत्मधर्माश्चेत्कस्य ते धर्मास्तत्राह *क्षुदिति ॥ २० ॥ तयोः प्राणधर्मत्वे युक्तिमाह *प्राणेति ॥ २१ ॥ शोकमोहशब्दयोरर्थं वदंस्तयोरन्तःकरणधर्मत्वमाह *इष्टस्येति । विषयभ्रमः विषयसत्यत्वभ्रम इत्यर्थः ॥ २२ ॥ जरामृत्युशब्दार्थं वदंस्तयोः स्थूलशरीरधर्मत्वमाह *जरेति ॥ एवं षडूर्मीणामनात्मधर्मत्वेऽप्यात्मनि प्रतीतिरुपपद्यत इति सदृष्टान्तमाह *त इति ॥ २३ ॥ अत्येतीत्यत्रात्ययशब्दार्थं विवक्षुर्नात्र लोकप्रसिद्धार्थो गृह्यत इत्याह *य इति ॥ यः सुप्तिप्रलययोः क्षुधादेर्नाशः स स्वकारणसंसर्ग इति लोकसंमतस्तस्यात्राग्रहणे हेतुमाह *अनात्यन्तिकेति ॥ २४ ॥ तस्य विवक्षितमर्थमाह *तदिति ॥ तच्छब्देनाशनायाद्युच्यते मोक्षविधौ तदतिपादने विवक्षिते सतीत्यर्थः ॥ तद्विद्वांसो मोक्षविदः कारणासंपादने कार्यस्यात्यन्तिकात्ययायोगादशनायादिशब्देन वस्तुमहिम्नैव नित्यनिवृत्तमशनायादिमत्या-

तमस्त्वयं मोक्षविधौ तद्विद्वांसः प्रचक्षते ॥ २५ ॥
प्राणहेतुस्तमः प्राणधर्माभ्यामुपलक्ष्यते ॥
सूत्रात्मा शोकमोहाभ्यां जरया मृत्युना विराट्॥२६॥
तमः सूत्रं विराजं च योऽत्येत्यात्मा स्वयंप्रभः ॥
असङ्गस्तत्परं ब्रह्म साक्षादित्यादिलक्षणम् ॥ २७ ॥
यथा विशुद्धमाकाशं सति वाऽसति वा मले ॥
नीहारादौ तथैवात्मा कार्यकारणवस्तुनि ॥ २८ ॥
परमात्मस्वभावोऽयं कहोलाय प्रपञ्चितः ॥
तद्बोधसाधनं सर्वकर्मत्याग इहोच्यते ॥ २९ ॥
उत्पन्नसम्यग्ज्ञानस्य संन्यासो लक्षणं यतः ॥
साधनं च तदुत्पत्तौ संन्यासस्तत्र गम्यताम् ॥ ३० ॥
श्रुतिः—एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ

---

णकारणमज्ञानं लक्ष्यत इत्यर्थः ॥ २५ ॥ उक्तमेव व्यनक्ति *प्राणेति । नन्वेवमपि सर्वकार्यातीतत्वमात्मनो न सिद्ध्येदित्याशङ्क्य तत्सिद्ध्यर्थं शोकादिपदैः सूत्रविराजौ लक्ष्येते इत्याह *सूत्रेति ॥ २६ ॥ पदार्थमुक्त्वा वाक्यं योजयति *तम इति ॥ २७ ॥ स्वभावादेवात्मनः कालत्रयेऽप्यसङ्गत्वं दृष्टान्तेन प्रतिपादयति* तथेति ॥ २८ ॥ वृत्तानुवादपूर्वकमेतं वैतमित्याद्यवतारयति *परमेति । इहेति प्रकृतब्राह्मणोक्तिः ॥ २९ ॥ अत्र संन्यासो विधीयत इत्यत्र गमकमाह *उत्पन्नेति । अत्र हि विद्यासाधनं विद्वल्लक्षणं च प्रतिपिपादयिषितं, संन्यासस्योभयरूपत्वात्सोऽत्र प्रतिपाद्यत इत्यर्थः ॥ ३० ॥ वाक्यतात्पर्यमु-

भिक्षाचर्यं चरन्ति ॥

वार्ति०-ब्रह्मात्मनोर्यदेकत्वं ब्राह्मणद्वयनिश्चितम् ॥
एतं तमितिशब्दाभ्यां तदैकात्म्यमनूद्यते ॥ ३१ ॥
अत्येति योऽशनायादीन्स आत्मेतिगिरोच्यते ॥
तमात्मानं विदित्वाऽथ व्युत्तिष्ठन्त्येषणात्रयात् ॥३२॥
ब्रह्मप्रश्नेन पृष्टे ते तद्बोधफलसाधने ॥
इति मत्वोत्तरत्वेन व्युत्थानद्वयमुच्यते ॥ ३३ ॥
पूर्वं विदित्वा पश्चात्तु व्युत्थायेत्यन्वयाच्छ्रुतात् ॥
विद्वत्संन्यास आभाति ब्रह्मबोधफलात्मकः ॥ ३४ ॥
व्युत्थायाथ विदित्वेति व्यत्ययेनार्थिकान्वयात् ॥
सिद्धो विविदिषात्यागः स्पष्टः श्रुत्यन्तरेऽप्यसौ ॥३५॥
स्वात्मलोकं स्वमिच्छन्तः प्रव्रजन्तीति वक्ष्यति ॥
त्यागेनैकेऽमृतत्वं तु प्राप्ता इत्यपरा श्रुतिः ॥ ३६ ॥

---

क्त्वाऽक्षराणि व्याचष्टे* ब्रह्मेत्यादिना ॥ ३१ ॥ वाक्यं योजयति* तमिति ॥ ३२ ॥ एवं सामान्यतो वाक्यार्थमुक्त्वा विदित्वा व्युत्थायेत्यत्रार्थभेदं विवक्षुः प्रकृतवाक्यस्यापृष्टोत्तरत्वशङ्कां निरस्यति* ब्रह्मप्रश्नेनेति । अर्थादिति शेषः ॥ ३३ ॥ व्युत्थानद्वयप्रतिपादनपरत्वेन वाक्यं योजयति* पूर्वमित्यादिना ॥ ३४ ॥ *आर्थिकेति । संन्यासस्य ज्ञानसाधनत्वाद्योग्यतामहिम्ना व्युत्थानपदं व्यत्यासेनापि विदित्वेतिपदेनान्वेतीत्यर्थः ॥ ननु त्यागस्य बोधहेतुत्वे सिद्धे व्यवहितयोजनयाऽस्य वाक्यस्य विविदिषात्यागपरत्वकल्पनमुचितं, तदेवासिद्धमिति नेत्याह *स्पष्ट इत्यादिना ॥ ३५ ॥ ३६ ॥ 'ब्राह्मणः' इत्यत्र ब्राह्मणशब्दस्त्रैवर्णिकपर इत्यभिप्रेत्य 'कथं तर्हि भाष्य-

ब्राह्मणग्रहणश्रुत्या विप्राणामेव भाष्यकृत् ॥
संन्यासेऽधिकृतिं प्राह चतुर्थाश्रमरूप्यसौ ॥ ३७ ॥
विद्याङ्गतत्फलात्मानं गार्गीविदुरयोरपि ॥
स्त्रीशूद्रयोर्भाष्यकारः संन्यासमनुमन्यते ॥ ३८ ॥
पुत्रैषणेति पुत्रार्थं दारस्वीकारवाञ्छनम् ॥
कर्मणां साधने वित्ते तृष्णा वित्तैषणा मता ॥ ३९ ॥
लोकैषणेति देवादिलोकार्थोपासनार्थिता ॥
न कश्चिदन्यः संसार उक्तादस्त्येषणात्रयात् ॥ ४० ॥
मनुष्यलोकः पुत्रेण पितृलोकस्तु कर्मणा ॥

---

कुतः संन्यासस्य विप्रमात्राधिकारित्वमूचुः'इत्याशङ्क्य तेषां तात्पर्यमाह *ब्राह्मणेति । चतुर्थाश्रमरूपी दण्डधारणादिलिङ्गसहित इत्यर्थः ॥

"ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा प्रव्रजेद् गृहात्"

इत्यादिस्मृतेः सर्वकर्मत्यागलक्षणस्तत्फलत्यागरूपो वा संन्यासस्त्रैवर्णिकसाधारणः । लिङ्गधारणं तु विप्राणामेवेति भाष्यकृदभिप्राय इत्यर्थः ॥३७॥ तत्र नियामकमाह *विद्येति । अपशूद्राधिकरणे रैक्ववाचक्नवीप्रभृतीनां ब्रह्मविद्यामभ्युपगच्छाद्भिः स्त्रीशूद्राणामपि सर्वकर्मफलत्यागलक्षणः संन्यासोऽभ्युपगतः, संन्यासस्य ज्ञानहेतुत्वाङ्गीकृतेः । तन्न्यायेन क्षत्रियवैश्ययोरापि लिङ्गं विना सर्वकर्मत्यागोऽस्तीति भाष्यकृतामपि सम्मतमिति भावः ॥३८॥ एषणात्रयशब्दार्थमाह *पुत्रेत्यादिना ॥ ३९ ॥ अत्रैव सर्वकामानामन्तर्भावमाह *नेति । अनात्मलोकमात्रस्यैषणात्रयविषयपुत्रादिसाध्यत्वादत्रैव सर्वसंसारहेतवः कामा अन्तर्भवन्तीत्यर्थः ॥ ४० ॥ उक्तेऽर्थे वाक्यान्तरं संवादयति *मनुष्येति

विद्यया देवलोकश्चेत्यब्रवीत्सङ्ग्रहं श्रुतिः ॥ ४१ ॥
न्याय्यां वृत्तिं समुल्लङ्घ्य तद्विरुद्धतया स्थितिः ॥
व्युत्थानमुदितं, राज्ञः सामन्तो व्युत्थितो यथा ॥४२॥
भिक्षया लक्ष्यते चर्या परिग्रहविवर्जिता ॥
किं भोग्यं परिगृह्णीयात्सर्वभोग्येषु दोषदृक् ॥ ४३ ॥
लोकत्रयार्थैषणाभ्यो व्युत्थानं चापरिग्रहः ॥
द्वयं बोधमहिम्नैव विदुषां न तु यत्नतः ॥ ४४ ॥
आनन्दैकस्वभावं स्वमात्मानं पश्यतः कुतः ॥
कामः परिग्रहो वा स्याद्योऽकाम इति वक्ष्यति ॥४५॥
न दुःखहानयेऽप्यस्य साधनानां परिग्रहः ॥
बुभुक्षादिनिषेधेन निर्दुःखात्माऽवबोधनात् ॥ ४६ ॥

---

॥ ४१ ॥ व्युत्थायेत्यत्र व्युत्थानशब्दार्थमाह *न्याय्यामिति । एषणानुगुणतया स्थितिमतिक्रम्य तत्प्रतिकूलत्वेन या स्थितिः सा व्युत्थानमित्युदितं महद्भिरिति शेषः । तत्र लोकप्रसिद्धिं प्रमाणयति *राज्ञ इति ॥ ४२ ॥ 'अथ भिक्षाचर्यम्'इत्यत्र भिक्षाशब्दस्य विवक्षितमर्थमाह *भिक्षयेति । गात्रयात्रामात्रहेतुभिक्षान्नादिव्यतिरिक्तसर्वभोग्यत्यागो भिक्षाशब्देन लक्ष्यत इत्यर्थः । इयं च चर्या विवेकिनामतिसुलभेत्याह *किमिति ॥ ४३ ॥ एवं व्युत्थानमपरिग्रहश्चेति द्वयं विविदिषूणां साधनत्वेनोक्तं तद्विदुषां स्वतःसिद्धमाह *लोकेति ॥ ४४ ॥ अपरिग्रहादि विदुषां स्वतःसिद्धमित्यत्रोपपत्तिमाह *आनन्देति । श्रुतिसिद्धं चैतदित्याह *य इति ॥ ४५ ॥ विदुषः सुखार्थं परिग्रहाभावेऽपि दुःखनिवृत्त्यर्थं परिग्रहः स्यात्तत्राह *नेति । आत्मनः स्वतो निर्दुःखस्य साक्षात्कृतत्वाद् दुःखनिवृत्त्यर्थमपि विदुषो ऽप्रवृत्तिः स्वतःसिद्धैवेति भावः ॥ ४६ ॥ नन्वेवं विदुषो

विदुषः कृतकृत्यत्वात्स्मार्तं संन्यासलिङ्गकम् ॥
भाष्य आश्रममात्रैकशरणानामितीरितम् ॥ ४७ ॥
न यथेष्टाचारशङ्का तस्येष्टानिष्टवर्जनात् ॥
आरब्धक्षपणायैव तस्य देहः प्रवर्त्तते ॥ ४८ ॥
फलात्मकोऽयं संन्यासस्तत्त्वविद्यापुरःसरः ॥

---

दण्डादिपरिग्रहोऽपि न स्यादित्याशंक्य, इष्टापत्तिरित्याह *विदुष इति । 'त्रिदण्डेन यतिश्च'इत्यादिस्मृतेः त्रिदण्डादिलिङ्गाभावे कथं तस्य यतित्वम् ? अत आह *स्मार्तमिति । 'एकं वैणवं दण्डमाददीत'इत्यादिश्रुतिविरोधात्स्मार्तं त्रिदण्डादि मुमुक्षुभिरपि त्याज्यं किमु विद्वद्भिरिति भाष्यकारैरेवोक्तम् । न च दण्डादिलिङ्गाभावे कथं विदुषां यतित्वम् इति वाच्यम् । 'अव्यक्तलिङ्गा अव्यक्ताचाराः' इत्यादिश्रुतेस्तेषां विधिनिषेधातीतत्वाल्लिङ्गराहित्यस्यैव विद्वत्संन्यासलिङ्गत्वाच्चेति भावः ॥ ४७ ॥ विदुषो विध्यभावेऽतिप्रसङ्गं शङ्कित्वा परिहरति *नेति । निषिद्धप्रवृत्तिहेतुकामानां समूलमुन्मूलितत्वादिति भावः । विदुषः कामाभावे भिक्षाचरणादावपि प्रवृत्तिर्न स्यादित्याशङ्क्य प्रारब्धप्रापितकर्मवशात्तत्प्रवृत्तिरविरुद्धेत्याह *आरब्धेति । नच प्रारब्धवशादेव निषिद्धेऽपि प्रवृत्तिरस्त्विति वाच्यम् । निषिद्धकर्मसु बुद्धिपूर्वकप्रवृत्तिहेतुवासनायां सत्यां सम्यग्ज्ञानमेव नोत्पद्येतेत्युक्तत्वादिति ॥ ४८ ॥ एवं विदित्वा व्युत्थायेति विद्वत्संन्यासः, व्युत्थाय विदित्वेतिव्यत्यासयोजनया विविदिषासंन्यासश्चेत्यस्मिन्वाक्ये व्युत्थानद्वयमुच्यत इति व्याख्यातम् । इदानीं विदित्वेत्यत्र वेदनशब्दस्य साक्षात्कारवाचित्वमापातज्ञानवाचकत्वं च विवक्षित्वा संन्यासद्वयप्रतिपादनपरं वाक्यमित्याह

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मज भट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् (वेदान्तः) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्तः) ... ... २

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ३

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १

(२८) शुद्धाद्वैतमार्तण्ड-प्रकाशव्याख्यासहितः प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४

(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्म सुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । २

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता ।
श्रीमद्दुर्बलाचार्य बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाह्वटीकाद्वयसंवलिता । ११

(४७) व्याकरणसिद्धान्तसुधानिधीः । पर्वतीय विश्वेश्वरसूरिविरचितः । ८

(४८) विरमित्रोदयः । लक्षणप्रकाशः ।
महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलंकृतः । ७

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महा-
महोपाध्यायश्रीमित्रमिश्रविरचितः । ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यवीरचिता परिशिष्टाधिकरणनिरूपणपूर्वकं टिप्पण्या परिष्कृत । १

(५२ प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादरहस्यम् । श्रीशंकरमिश्रविरचितम् २

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत २

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महा-
महोपाध्याय श्रीमित्रमिश्रविरचितः । ६

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम्
श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम्
सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेश
विरचितम् । समाससूत्रव्याख्या सर्वोपकारिणी च । १

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ताचार्यप्रसादिता । श्रीनिवासाचार्यविरचित न्यायसारसमाख्यया टीकया युता ।

पत्रादिप्रेषणस्थानम् । } जयकृष्णदास गुप्तः, सेक्रेटरी,
चौखम्बा संस्कृत सीरीज आफिस,
बनारस सिटी ।

THE

# CHOWKHAMBÂ SANSKRIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 258.

# बृहदारण्यकवार्त्तिकसार ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकाया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

---

BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SHASTRI VAJHE.

FASCICULUS VIII–८.

*PUBLISHED & SOLD BY THE SECRETARY*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS:-OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO; BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1918.

*Price Rupee one.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२५८


१ अस्यां चौखम्बा—संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्-मुद्राः७आनकाः८

५ अन्यैर्देयं प्रतिस्तवकं ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ... ... ...



साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... ... ... २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः १२

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया-व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमांसा) २

(७) न्यायरत्नमाला -श्रीपार्थसारथिमिश्रविरचिता संपूर्णा (मीमांसा) ... २

(८) ब्रह्मसूत्रभाष्यम्-बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णम् । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्-विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री६श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णम् वेदान्तः १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः । सम्पूर्णः ( न्यायः ) ... ... ... ... ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमांसा ) ... २

(१४) न्यायसुधा ( तन्त्रवार्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमांसा ) १६

अन्यो विविदिषात्याग आपातज्ञानरूपकः ॥ ४९ ॥
ज्ञानद्वयं विवक्षित्वा विदित्वेत्यस्य कीर्तनात् ॥
त्यागद्वयं लक्ष्यतेऽत्र व्यत्ययेनान्वयं विना ॥ ५० ॥
न ज्ञानिवद्विविदिषोस्त्यागः स्वाभाविकस्ततः ॥
भिक्षाचर्यं चरन्तीति साधनत्वेन तद्विधिः ॥ ५१ ॥
त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ॥
इत्यादिश्रुतिषु स्पष्टं साधनत्वमुदीरितम् ॥ ५२ ॥
फलसाधनभेदेन वाक्यभेदो भवेदिति ॥
मा शङ्क्यतामपूर्वार्थलाभेनादूषणत्वतः ॥ ५३ ॥
कश्चिद्यज्ञोपवीतादित्यागं नेच्छत्यसद्धि तत् ॥
यज्ञं यज्ञोपवीतं च त्यक्त्वेति स्पष्टमीरणात् ॥ ५४ ॥
यज्ञोपवीतं भूः स्वाहेत्यप्सु त्यक्त्वा निरेषणः ॥

---

*फलेत्यादिना ॥ ४९ ॥ ५० ॥ वाक्यस्य विविदिषासंन्यासपरत्वपक्षे चरन्तीति पदस्यार्थविशेषमाह *नेति । वाक्यस्य विद्वत्संन्यासपरत्वे विदुषि सर्वत्यागस्य स्वतःसिद्धत्वाच्चरन्तीत्यनुवादो युज्यते, विविदिषोस्तु विधिं विना त्यागस्याप्राप्तेस्तत्सिद्ध्यर्थं चरन्तीत्यत्र लेट्परिग्रहः कर्त्तव्य इति भावः ॥ ५१ ॥ ननु त्यागस्य ज्ञानहेतुत्वे सिद्धे विधिकल्पनं तदेवासिद्धमिति, नेत्याह *त्याग इति ॥ ५२॥ उभयपरत्वे वाक्यभेद इत्याशङ्क्यैकार्थत्वाभावेनैकवाक्यत्वासम्भवे इष्ट एव स इत्याह *फलेति ॥ ५३ ॥ यज्ञोपवीतादित्यागस्याप्रमाणत्वात्परमहंससंन्यास एव नास्तीति कस्यचिन्मन्दमतेर्मतमनूद्य निरस्यते *कश्चिदिति । त्यक्त्वा गूढश्चरेन्मुनिः' इति श्लोकशेषः ॥ ५४॥ श्रुत्यन्तरमपि प्रमाणयति *यज्ञोप-

यतिरात्मानमन्विच्छेदिति जाबालगीः श्रुता ॥ ५५ ॥
यस्तु त्यक्तुं न शक्नोति रागादिप्रबलत्वतः ॥
गार्हस्थ्यादौ स्थितो रागं पाचयत्वेष कर्मभिः ॥५६॥
कर्मानधिकृता अन्धबधिराद्या यथारुचि ॥
आश्रमात्मकसंन्यासं गृह्णन्तूत्तमजन्मने ॥ ५७ ॥
अव्रती वा व्रती वेति जाबालोपनिषद्वचः ॥
ब्रूते व्रतादिशून्यानामपि संन्यासमाश्रमम् ॥ ५८ ॥
संन्यास एवं त्रिविधो विद्वद्विविदिषाऽऽश्रमैः ॥
कृतकृत्यस्तु संन्यस्य स्वात्ममात्ररतिर्भवेत् ॥ ५९ ॥
त्यक्त्वा विविदिषुः पुत्रवित्तलोकैषणा अथ ॥
अनुतिष्ठति विद्यार्थं श्रवणादीन्यहर्निशम् ॥ ६० ॥
आहुर्हिरण्यगर्भादिध्यानलोकैषणात्मकात् ॥
न व्युत्थानं पुमर्थत्वादिति श्रद्धाजडं किल ॥ ६१ ॥

---

वीतमिति ॥५५॥ 'यावज्जीवमग्निहोत्रं जुहुयात्'इत्यादिवचनस्य तर्हि का गतिरित्याशङ्क्य तस्याविरक्तविषयत्वमाह *यस्त्विति॥५६॥ एवं विदुषां विविदिषूणां च संन्यासमुक्त्वाऽग्निहोत्राद्यनधिकारिणामपि तमाह *कर्मेति ॥ यथारुचि कुटीचकादिष्वन्यतममित्यर्थः। उत्तमजन्मने ब्रह्मलोकादिप्राप्तये ॥५७॥ तेषां त्रिदण्डधारणाद्याश्रमरूपसंन्यासाधिकारोऽस्तीत्यत्र मानमाह *अव्रतीति ॥५८॥ संन्यासत्रैविध्यमुपसंहरति *संन्यास इति । तत्र विद्वद्विविदिषासंन्यासयोः परमहंसत्वेनैकत्वात्कथं त्रैविध्योक्तिरित्याशङ्क्य तयोरवान्तरवैलक्षण्यमाह *कृतकृत्य इत्यादिना ॥५९॥६०॥ या ह्येवेत्यादिवाक्यमवतारयितुं भूमिकामारचयति *आहुरिति ॥ हिरण्यगर्भोपासनात्मकलोकैषणा न त्याज्या पुमर्थत्वादिति यद्

समाना हीतराभ्यां सा नात्मलोकाप्तिहेतवः ॥
इति मत्वैकतां तासामेषणानामवोचत ॥ ६२ ॥
श्रुतिः–या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ॥
वा०–कर्मण्येवाधिकारस्ते मा फलेष्विति शास्त्रतः
एषणात्वात्फलं त्याज्यं न तु कर्मादिसाधनम् ॥ ६३ ॥
इति भ्रमं व्युदसितुं प्राब्रवीत् साध्यसाधने ॥
उभे अप्येषणे एव भवतस्त्यागयोर्द्वयोः ॥ ६४ ॥
अविशुद्धधियः कर्मण्यधिकारो, विशुद्धधीः ॥
सत्यां विविदिषोत्पत्तौ तदर्थं कर्म सन्त्यजेत् ॥६५ ॥
श्रुतिः–तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः ॥

---

आहुस्तद्वचः श्रद्धामात्रप्रयुक्तमित्यर्थः ॥ ६१ ॥ कुतस्तत्राह *समानेति ॥ ६२ ॥

अक्षरार्थस्तु—या पुत्रैषणा सा वित्तैषणाऽदृष्टफलसाधनत्वसाम्यात, या वित्तैषणा कर्मसाधनभूता सा लोकैषणा, फलार्थैव सा, सर्वोऽपि जन्तुः फलार्थप्रयुक्त एव हि साधनमुपादत्तेऽतः फलेच्छान्तर्भूतैव साधनेच्छेत्येकैवैषणेत्यर्थः ॥

उभे ह्येते एषणे इत्याद्यवतार्य व्याचष्टे *कर्मणीत्यादिना ॥ ६३ ॥ ॥ ६४ ॥

फलं साधनं च एते उभे अपि हि यस्मादेषणे एव भवतस्तस्मादुभयं त्याज्यमित्यर्थः ।

फलवत्कर्मणोऽपि त्याज्यत्वे कर्मण्येवेत्याद्युक्तस्मृतिविरोध इत्याशङ्क्य तस्याविरक्तविषयत्वान्मैवमित्याह *अविशुद्धेति ॥६५॥

वार्त्ति०—यस्माद्ब्रह्मविदः पूर्वे फलसंन्यासमाप्नुयुः ॥
तस्माद्विविदिषुः कुर्यात्पाण्डित्यं फलसिद्धये ॥ ६६ ॥
पाण्डित्यबाल्यमौनानि श्रवणादीनि तैरयम् ॥
भवति ब्राह्मणस्तच्च ब्राह्मण्यं ब्रह्मरूपता ॥ ६७ ॥
पण्डेति बुद्धेर्नामैतत्सा जाता यस्य मानतः ॥
स पण्डितस्तस्य कर्म पाण्डित्यं श्रवणं तु तत् ॥ ६८ ॥
आचार्याच्चागमाच्छ्रुत्वा निःशेषं वेदनं ततः ॥
बालभावेन तिष्ठासेद्युक्त्या मननतत्परः ॥ ६९ ॥
श्रवणं शास्त्रतात्पर्यनिश्चयो, मननं पुनः ॥
अर्थासम्भावनोच्छित्यै युक्तीनामनुचिन्तनम् ॥ ७० ॥
असम्भावनया ज्ञाने दुर्बले सत्यथैषणाः ॥
उद्भवन्ति ततो ज्ञानं कुर्वीत प्रबलं सुधीः ॥ ७१ ॥
नैवात्मा बलहीनेन लभ्य इत्यपरा श्रुतिः ॥
अनाविष्करणं बाल्यं दम्भादेरिति सूत्रकृत् ॥ ७२ ॥
पाण्डित्येन विदित्वाऽथ छित्वा बाल्येन संशयम् ॥

---

तस्माद् ब्राह्मण इत्यादेर्भाष्योक्तमर्थमाह *यस्मादित्यादिना॥६६॥ ॥६७॥वाक्यतात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *पण्डेत्यादिना॥६८॥ ॥६९॥ पाण्डित्यबालशब्दयोः श्रवणमननवाचित्वमुक्तं, किं तच्छ्रवणं मननं चेति तत्राह *श्रवणमिति॥७०॥श्रवणेनात्मनि निर्णीते किं मननेनेत्याशङ्क्य तस्याप्यवश्यानुष्ठेयत्वमाह *असम्भावनयेति ॥ ७१ ॥ तत्र "नायमात्मा बलहीनेन लभ्यः" इति मुण्डकश्रुतिमपि प्रमाणयति *नेति ॥ एवं बाल्यशब्दस्यैतद्भाष्योक्तमर्थमुक्त्वा "अनाविष्कुर्वन्नन्वयात्"इत्यधिकरणोक्तार्थमाह *अनाविष्करणमिति ॥ ७२ ॥ बाल्यं च पाण्डित्यं च नि·

मुनिर्ध्यानसमाधिभ्यां भवेद्धीवृत्तिशान्तये ॥ ७३ ॥
प्रशान्तवृत्तिके चित्ते परमानन्ददीपके ॥
कृतकृत्यो ब्रह्मभावं गतो ब्राह्मण उच्यते ॥ ७४ ॥
भाष्याभिप्रायतस्त्वेतत्पाण्डित्याद्युपवर्णितम् ॥
अथोच्यते वार्त्तिकोक्तं पाण्डित्यादिचतुष्टयम् ॥७५॥
पदार्थाधिगतिः पूर्वं ततस्तदभिसङ्गतिः ॥
विरुद्धार्थनुतिः पश्चात्ततो वाक्यार्थबोधनम् ॥ ७६ ॥
ब्राह्मणो बुद्धवाक्यार्थः साक्षादित्यादिलक्षणः ॥
ब्राह्मण्यं गौणमन्यस्य ब्रह्मबोधार्थजन्मनः ॥ ७७ ॥
श्रुतिः-स ब्राह्मणः केन स्यात् ॥

---

विद्याथ मुनिरित्यस्यार्थमाह *पाण्डित्येनेति ॥ ७३ ॥ अथ ब्राह्मण इत्यस्यार्थमाह *प्रशान्तेति ॥ ७४ ॥ ७५ ॥

अमौनं श्रवणमननं, मौनं निदिध्यासनं च निर्विद्य निष्पाद्य अथ साक्षात्कारानन्तरं ब्राह्मणो भवतीति श्रुत्यर्थः ॥

वार्त्तिककारमते पाण्डित्यमित्यादिना त्वमर्थशोधनं विधीयत इत्याह *पदार्थेति । अनन्तरं बाल्येनेत्यादिना तत्पदार्थशोधनं विधीयत इत्याह *तत इति । अथ मुनिरित्यत्र मुनिशब्देन तत्त्वमर्थयोर्विरुद्धपारोक्ष्यनद्वयत्वादिनिवृत्तिरुच्यत इत्याह *विरुद्धेति । एवं शोधितपदार्थद्वयस्य विरुद्धांशपरित्यागेन लक्षणया वाक्यादखण्डधीरुदेतीत्याह *तत इति ॥ ७६ ॥ अनन्तरं यत्साक्षादित्युक्तलक्षणया ब्रह्मभूतो विद्वान् अथ ब्राह्मण इत्यनेनोच्यत इत्याह *ब्राह्मण इति ॥ नच भाष्यवार्त्तिकयोः परस्परविरोधः, उपास्यदेवतासाक्षात्कारपर्यन्तमुपासितं कृतवतः केवलविचाराज्ज्ञानोदयः, इतरस्य ध्यानादिति व्यवस्थायाः वक्त-

वार्ति०–प्रश्नः स ब्राह्मणः केनेत्याक्षेपो वाऽत्र पृच्छ्यते॥
ब्राह्मण्यसाधनं यद्वा लक्षणं ब्रह्मवेदिनः ॥ ७८ ॥
एषणात्यागपाण्डित्याद्युपायात्साधनान्तरम् ॥
पृष्टं तस्योत्तरं प्राह येन स्यादितिवाक्यतः ॥ ७९ ॥
विराड्ढिरण्यगर्भादिप्रासौ सत्यामुपासनात् ॥
ब्राह्मण्यं लभ्यते यद्वा महता तपसा वरात् ॥ ८० ॥
प्रयासो बहुलस्तत्र फलं त्वेतावदेव हि ॥
इत्यभिप्रेत्य येन स्यात्तेनेदृगिति भण्यते ॥ ८१ ॥
आक्षेपपक्षे केन स्यान्न केनापीति योजना ॥

---

व्यत्वादिति । ननु ब्राह्मणत्वादिजातिविषयो ब्राह्मणशब्दः कथं विदुषि प्रयुज्यते ? तत्राह *ब्राह्मण्यमिति ॥ विप्रजन्मनो ब्रह्मधीयोग्यत्वात्तत्र ब्राह्मणशब्दो गौणः, विदुषि मुख्य इत्यर्थः ॥ ७७ ॥ स ब्राह्मणः केन स्यादित्यत्र किंशब्दस्य सम्भावितमर्थद्वयमाह *प्रश्न इति । प्रश्नपक्षेऽप्यर्थद्वयमाह *अत्रेति ॥ ७८ ॥ ननु श्रवणादेर्ब्राह्मण्यं प्रति साधनत्वस्य सिद्धत्वात्तत्साधनप्रश्नोऽनुपपन्नस्तत्राह *एषणेति ॥ श्रवणादिकं सिद्धवत्कृत्य साधनान्तरमस्ति वेति पृष्टमित्यर्थः । प्रत्युक्तिमवतार्य व्याचष्टे *तस्येत्यादिना । अयमर्थः–यद्यपि तीव्रतपःप्रसादितभगवत्प्रसादः, क्रममुक्तिफलकसूत्राद्युपासनं च साधनान्तरमस्ति तथापि येन येन साधनेन ब्राह्मणो भवेत्तेन सर्वेणापीदृश एव ब्राह्मणः स्यात् । श्रवणादिलभ्याद् ब्राह्मण्यादधिकं ब्राह्मण्यं दुष्करसाधनान्तरेणापि न लभ्यतेऽतोऽतिदुर्लभमिदमेव सम्पादनीयमिति ॥ ७९ ॥ ८० ॥ ८१ ॥ केनेत्येतत्साधनप्रश्नपरत्वेन व्याख्याय, आक्षेपपरत्वेन व्याचष्टे *आक्षेपेति ॥ ब्राह्मण्यस्य श्रव-

न कर्मणा न प्रजयेत्यन्यसाधननिह्नवे: ॥ ८२ ॥
श्रुतिः—येन स्यात्तेनेदृश एवातोऽन्यदार्त्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥
इत्युपनिषदि पञ्चमं ब्राह्मणं समाप्तम् ॥
वा०—शङ्क्यमानेन येन स्यात्तेनेदृङ् न ततोऽधिकः ॥
सन्त्यज्य निश्चितं कस्माच्छङ्क्यते साधनान्तरम् ॥८३॥
लक्षणप्रश्नपक्षे तु येनेदृक्तेन लक्ष्यताम् ॥
इत्युत्तरं वचो योऽयं तस्यार्थः प्रविविच्यते ॥ ८४ ॥
गीतायां कुत्रचित्प्रोक्तं स्थितप्रज्ञस्य लक्षणम् ॥
अन्यत्र विष्णुभक्तस्य गुणातीतस्य च क्वचित् ॥८५॥
येन चिह्नेन तत्राऽयमीदृगेव निरेषणः ॥
उपलक्षयितुं शक्यस्तदेवास्तत्वस्य लक्षणम् ॥ ८६ ॥

---

णादिव्यतिरिक्तसाधनान्तरं नास्तीत्याक्षेपे हेतुमाह *नेति ॥८२॥ येनेत्यादेरर्थमाह *शङ्क्यमानेनेति । साधनान्तरस्य ब्राह्मण्यसाधनत्वेन शङ्क्यमानस्याप्येतत्फलादधिकफलाभावात्सर्वसम्मतं श्रवणाद्येवानुष्ठेयमित्यर्थः ॥ ८३ ॥ केनेत्यस्य विद्वल्लक्षणप्रश्नपरत्वे प्रत्युक्तितात्पर्यमाह *येनेति । वाक्यस्यान्वयमुक्त्वा प्रतिज्ञापूर्वकमक्षरार्थमाह *तस्यार्थ इत्यादिना । केन चिह्नेन परमहंसो ब्राह्मण इति ज्ञातुं शक्यः स्यादिति प्रश्ने कृते, गीतायां द्वितीयाध्याये स्थितप्रज्ञस्य यल्लक्षणमुक्तं, द्वादशाध्याये विष्णुभक्तस्य, चतुर्दशाध्याये गुणातीतस्य, तेषां मध्ये येन लक्षणंन ईदृशः स्याद् विद्वत्परमहंस इति ज्ञातुं शक्यः स्यात्तेनैव ज्ञातव्यः । अध्यायत्रयोक्तलक्षणानां मध्येऽन्यतमलक्षणयुक्तो ब्राह्मण इति ज्ञातव्य इत्यर्थः ॥८४॥८५॥८६॥ केनेत्यस्य विद्वल्लक्षणाक्षेपा-

आक्षिप्यते यदा लक्ष्म तदाऽभिप्राय उच्यते ॥
नियतं लक्षणं किञ्चिन्न ह्यस्ति ब्रह्मवेदिनः ॥ ८७ ॥
रागी कश्चिद्विरक्तोऽन्यः क्रुद्धोऽन्यः शान्तिमान्परः ॥
प्रारब्धभोगनानात्वात्कथं लक्ष्म नियम्यते ॥ ८८ ॥
देहेन्द्रियमनोबुद्धिधर्मानेषोऽत्यवर्त्तत ॥
प्रत्यगात्मैकसम्बोधात्तद्धर्मैर्लक्ष्यते कथम् ॥ ८९ ॥
सर्वसंसारभावोऽस्य न यथा लक्षणं तथा ॥
सर्वाभावोऽपि नैव स्यात्सुषुप्ते व्यभिचारतः ॥ ९० ॥
शोभते श्रद्दधानानां लक्ष्मैतन्न विवेकिनाम् ॥
वेद्यानुरोधतो यस्माद्युज्यते लक्ष्म तद्विदः ॥ ९१ ॥
भावाभावोभयध्वंसि ब्रह्म वेद्यं, ततः श्रुतिः ॥
येनेदृगेव तेनेति लक्षणं तद्विदोऽब्रवीत् ॥ ९२ ॥

---

स्वत्वे आक्षेप्तुरभिप्रायं प्रतिज्ञापूर्वकं स्पष्टयति *आक्षिप्यत इत्यादिना ॥८७॥८८॥ किं मुक्तस्य लक्षणं भावधर्मो वा संसाराभावो वा? नाद्य इत्याह *देहेति ॥ देहादेस्तद्धर्माच्च तत्त्वज्ञानेनातीतो मुक्तः, नास्य बुद्ध्यादिधर्मः शमादिर्लक्षणं वैयधिकरण्यादित्यर्थः ॥ ८९ ॥ द्वितीयं प्रत्याह *नवेति ॥ ९० ॥ ननु ज्ञानात्पूर्वं यत्साधनममानित्वादि तत्सर्वमूर्ध्वं ज्ञानिलक्षणमिति सम्प्रदायविदः, न तदन्यथयितुं युक्तमत आह *शोभत इति। साम्प्रदायिकाः श्रद्धालवः सन्तो विदुषो यल्लक्षणमाचक्षते तत्सर्वं व्यवहारावस्थस्यैव,न तदतीतस्येत्यर्थः। तर्हि व्यवहारातीतस्य किं लक्षणमित्याशङ्क्य ब्राह्मणलक्षणमेव तल्लक्षणमित्याह *वेद्येति॥९१॥ वेद्यस्वरूपं दर्शयन् येन स्यादित्यादेरर्थमाह* भावेति ॥ ९२ ॥

येनेदृशः स्याद् येन बोधेन परमहंसो भावाभावोभयविलक्ष-

ब्रह्म यादृक्तादृगेव भवेद्विद्वान्निबोधतः ॥
बोधोऽतो लक्षणं तस्य बोधश्च स्वात्मसाक्षिकः ॥९३॥
अतोऽन्यदार्त्तमित्येष व्यतिरेकस्त्रिधोच्यते ॥
प्रतीचो ब्रह्मतंद्दोक्ता ततोऽन्यद्यद्विनाशि तत् ॥९४॥
निरेषणत्वं विद्याया हेतुरार्त्ता इहैषणाः ॥
विदुषो लक्षणं बोध आर्तं तल्लक्षणान्तरम् ॥ ९५ ॥

इतिवार्त्तिकसारे तृतीयाध्याये पञ्चमं ब्राह्मणं समाप्तम् ॥

षष्ठेऽस्मिन्ब्राह्मणे ब्रह्मकार्यं सर्वं विविच्यते ॥
सर्वान्तरत्वं निर्णेयं ब्रह्मणः सर्वनिर्णयात् ॥ १ ॥

---

णो वेदान्तेद्यं यत्परमात्मा स्यात्तेनैव बोधेन लक्षितो भवतीति श्रुत्यक्षरार्थः ॥

उक्तमेव स्पष्टयति *ब्रह्मेति । बोधवत्त्वं वा कथं ज्ञातुं शक्यत इत्यत आह *बोधश्चेति ॥ ९३ ॥ अतोऽन्यदित्यादेरर्थमाह* अत इति । अस्मिन्ब्राह्मणे ब्रह्मात्मैक्यं, तद्बोधसाधनं, बुद्धलक्षणं चेति त्रयस्यापि प्रकृतत्वादतःशब्देन त्रयमपि परामृश्य तद्व्यतिरिक्तस्य हेयत्वमुच्यतइत्यर्थः । तदेव दर्शयति *प्रतीच इत्यादिना ॥ ९४ ॥ ९५ ॥

इति वार्तिकसारटीकायां पञ्चमं ब्राह्मणं समाप्तम् ॥

ब्रह्मणः सर्वान्तरत्वमुक्तं तन्निर्णयश्च सर्वनिर्णयाधीन इति सर्वस्य ब्रह्मकार्यस्य निर्णयाय गार्गीब्राह्मणमिति सङ्गतिमाह *षष्ठ इति ॥ १ ॥ गार्गिप्रश्नस्य व्याप्तिमूलत्वं दर्शयन् अथ हैन-

श्रुतिः–अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदं सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति ॥

वा०–यद्यत्कार्यं कारणेन व्याप्तमन्तर्बहिश्च यत् ॥
इति तर्केण पप्रच्छ कारणस्य परम्पराम् ॥ २ ॥
पार्थिवं कठिनं सर्वमोतप्रोतं द्रवे जले ॥
दधिपिण्डद्रवक्षीरे जलं तत्र तथा स्थितम् ॥ ३ ॥

---

मित्यादि व्याचष्टे* यद्यदिति ॥ २ ॥

गार्गी नामतः वचक्नोर्दुहिता वाचक्नवीति श्रुत्यर्थः ॥
यदिदमित्यादेरर्थमाह *पार्थिवमिति ॥ ३ ॥ ओतप्रोत-

दीर्घतन्तुवदोतत्वं तिर्यक्तन्तोरिवेतरत् ॥
यद्वाऽन्तर्व्याप्तिरोतत्वं प्रोतत्वं तु बहिः स्थितम् ॥ ४ ॥
जलस्य कारणं तेजस्तेजसो वायुराश्रयः ॥
श्रुत्यन्तरादिदं ज्ञेयं, वायोस्तु वियदाश्रयः ॥ ५ ॥
भूम्यादिवियदन्तानां भूतानामुत्तरोत्तरम् ॥
सूक्ष्मताव्याप्तिते दृष्टे ताभ्यां कारणतोच्यताम् ॥ ६ ॥
पञ्चभूतेभ्य उत्पन्ना अस्मद्देहादयोऽखिलाः ॥
ब्रह्माण्डान्ता इमे देहा भोग्यत्वाल्लोकसंज्ञकाः ॥ ७ ॥
यथैकस्मादिक्षुरसादुत्तरोत्तरपाकतः ॥
गुडादीनि बहूनि स्युर्भूतेभ्योऽण्डादयस्तथा ॥ ८ ॥
नरगन्धर्वमार्तण्डचन्द्रनक्षत्रदेवताः ॥

---

शब्दयोरर्थमाह* दीर्घेति । सर्वं कार्यं स्वकारणेन व्याप्तं दृश्यते, पार्थिवं धातुजातं चाद्भिर्व्याप्तम्, अन्यथा सक्तुमुष्टिवद्विशीर्येत। ता आपः केनान्तर्बहिर्व्याप्ता इति प्रश्नार्थः ॥ ४ ॥ अत्र तेजसि गार्गीति वाक्यं तैत्तिरीयकश्रुतिपर्यालोचनयाऽध्याहार्यमित्याह *जलस्येति ॥ ५ ॥ पञ्चभूतानाम् उत्तरोत्तरहेतुहेतुमद्भावे युक्तिमप्याह* भूम्यादीति । श्रुतौ अन्तरिक्षलोकेष्विसत्रान्तरिक्षलोकशब्देनाकाशमात्रं ग्राह्यम् ॥६॥ कस्मिन्नु खल्वन्तरिक्षलोका इत्यादौ लोकशब्दैर्विवक्षितमर्थमाह *पञ्चेति ॥ ७ ॥ गन्धर्वादिशब्दानामत्र विवक्षितार्थं वक्तुं पञ्चभूतस्यानेकावस्थाः सन्तीति सदृष्टान्तमाह *यथेति ॥ ८ ॥ अवस्थाविशेषानेव प्रकटयन्वाक्यार्थमाह *नरेत्यादिना ॥ ९ ॥

अयमर्थः । भूम्यादिवियत्पर्यन्तस्योत्तरोत्तरहेतुत्वं श्रुतियुक्तिभ्यामुपपादितम्, तस्य भूतपञ्चकस्य या मनुष्यशरीरारम्भ-

इन्द्रो विराट् तदण्डश्चेत्येता भूतदशाः स्थिताः ॥९॥
तत्तद्देहारम्भदशास्तत्तन्नाम्ना समीरिताः ॥
स्थूलसूक्ष्मदशास्वासु कार्यकारणताक्रमात् ॥ १० ॥
पञ्चीकृतानां भूतानां सूक्ष्मताऽण्डे समाप्यते ॥
श्रुतिः—स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥
इत्युपनिषदि षष्ठं ब्राह्मणं समाप्तम् ॥
वा०—एतावदेव तर्केण गम्यं न तु ततः परम् ॥ ११ ॥
अण्डारम्भकभूतानामपञ्चीकृतभूतजम् ॥
सूत्रं कारणमित्येतदागमेनैव गम्यते ॥ १२ ॥
अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ॥

---

कावस्था सा स्थूलतमा, इयमेवावस्था कस्मिन्नु खल्वन्तरिक्षलोक इत्यत्रान्तरिक्षलोकशब्देन लक्ष्यते । सा च स्वकारणीभूतायां गन्धर्वलोकशब्दितगन्धर्वशरीरारम्भकपञ्चभूतदशायां वर्त्तते, सा चादित्यशरीरारम्भकभूतावस्थायाम, एवं चन्द्रादिष्वपि योज्यम् । इन्द्रशरीरारम्भकभूतदशा प्रजापतिलोकशब्दितचतुर्मुखशरीरारम्भकभूतदशायाम् सा च ब्रह्मलोकशब्दितब्रह्माण्डारम्भिकायां पञ्चीकृतपञ्चमहाभूतस्यातिसूक्ष्मावस्था तस्यां वर्त्तत इति ॥ १० ॥ मातिप्राक्षीरित्यादेरर्थमाह *एतावदिति ॥ ११ ॥ १२ ॥

अक्षरार्थस्तु—हे गार्गि मातिप्राक्षीः, अण्डारम्भकपञ्चभूतकारणस्यापञ्चीकृतपञ्चभूततत्कार्यात्मकसूत्रस्यागमैकगम्यत्वादनुमानेन तन्मा प्राक्षीरित्यर्थः । पृच्छन्त्याश्च ते मूर्द्धा मा व्यपप्तद् विस्पष्टं मापतेत । माङ्योगेनाड्लोपेऽपि तदभावश्छान्दसः । अनतिप्रश्न्यामिति ।

सूत्रान्तर्याम्यच्चराणि तार्किका नानुमन्वते ॥ १३ ॥
तर्काभासो भवेत्तेषु हेतुदृष्टान्तवर्जनात् ॥
अन्यथाप्रतिपत्त्याऽतो मूर्द्धपातं मुनिर्जगौ ॥ १४ ॥

इति वार्त्तिकसारे तृतीयाध्यायस्य षष्ठं ब्राह्मणं समाप्तम् ॥ ६ ॥

सप्तमब्राह्मणे तर्कं सन्त्यज्यागममार्गतः ॥
ब्रह्माण्डकारणं सूत्रमन्तर्यामी च वर्ण्यते ॥ १ ॥
सूत्रान्तर्यामिणौ जानन्गन्धर्वस्योपदेशतः ॥
तर्कान्नेति विवक्षित्वा कथां भुज्युवदुक्तवान् ॥ २ ॥

---

सूत्रदेवताया आगमैकगम्यत्वात्तेन प्राप्तुं योग्यः तमतीत्यानुमानेन प्रश्नोऽतिप्रश्नः स यस्या देवतायाः साऽतिप्रश्न्या नातिप्रश्न्याऽनतिप्रश्न्या ताम् । केवलागमगम्यां देवतामतिपृच्छसि अतो गार्गि मातिप्राक्षीः मर्त्तुं चेन्नेच्छसीति भावः । सूत्रस्य तर्कागोचरत्वे स्मृतिं प्रमाणयति *अचिन्त्या इति । तत्र वादिसम्मतिमप्याह *सूत्रेति ॥ १३ ॥ सूत्रादिषु वादिभिरनुमानाप्रयोगे हेतुमाह *तर्केति । तस्य तर्कागोचरत्वे सिद्धे मा ते मूर्द्धेत्यादिमुनिवचनमुपपन्नमित्याह *अन्यथेति ॥१४॥

इति वार्तिकसारटीकायां षष्ठं ब्राह्मणं समाप्तम् ॥ ६ ॥

---

ब्रह्मणः सर्वान्तरत्वनिर्णयायानुमानगम्यं सर्वकार्यं निर्णीतम् । आगमगम्यं निर्णेतुमनन्तरब्राह्मणमिति सङ्गतिमाह *सप्तमेति ॥ १ ॥ अस्योपदेशमात्रगम्यत्वे आख्यायिकाप्रणयनमपि लिङ्गमित्याह* सूत्रेति ॥ २ ॥

श्रुतिः-अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत्कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳसर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति ॥

---

अथ हैनमुद्दालको नामतः अरुणस्यापत्यमारुणिः पप्रच्छ। मद्रेषु देशेष्ववसाम उषितवन्तः। पतञ्चलो नामतः, कपिगोत्रः काप्यस्तस्य गृहेषु यज्ञं यज्ञशास्त्रमधीयानाः। तस्यासीदित्यादि पूर्ववत्। वेत्थेति। हे काप्य तत्सूत्रं वेत्थ अनुजानीषे, किं? येन सूत्रेणायं च लोक इदं च जन्म, परश्च लोकः प्रतिपत्तव्यं जन्म, सर्वाणि च भूतानि ब्रह्मादिस्तम्बपर्यन्तानि सन्दृब्धानि संग्रथितानि स्रगिव सूत्रेण विष्टब्धानि भवन्ति,तत्किं वेत्थेति पूर्वेण सम्बन्धः। एवं पृष्टः स काप्यः नाहं तत्सूत्रं वेद भगवन्निति संपूजयन्नुवाच। सोऽब्रवीत्पुनर्गन्धर्वः किं वेत्थ तमन्तर्यामिणम्। अन्तर्यामी विशेष्यते य इमं च लोकं परं च लोकं सर्वाणि च भूतानि अन्तरोऽभ्यन्तरः सन् यमयति, दारुयन्त्रमिव भ्रामयति स्वं स्वमुचितव्यापारं कारयतीत्यर्थः।

वा० सूत्रबद्धं दारुयंत्रं पुरुषो नर्तयेद्यथा ॥
अन्तर्यामी जगत्तद्वत्सूत्रबद्धं नियच्छति ॥ ३ ॥
सूत्रान्तर्यामिणौ सर्वं जगत्यनुगतावतः ॥
तौ विद्वानखिलं वेत्तीत्यतो ज्ञानस्यता तयोः ॥ ४ ॥

श्रुतिः-स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति

---

अत्र सोऽब्रवीदित्यादिना सूत्रतदन्तर्गतान्तर्यामिणोर्विज्ञानं स्तूयते । इममेवार्थं श्लोकाभ्यां संगृह्णाति *सूत्रबद्धमित्यादिना ॥ ३ ॥ स्तुतिप्रयोजनमाह* अत इति ॥ ४ ॥

श्रुतौ-ब्रह्मवित परमार्थवित् तन्नियम्यभूरादिलोकज्ञश्चाग्न्यादिदेवांश्च वेत्ति, सर्वप्रमाणभूतान्वेदानपि जानाति, भूतानि ब्रह्मादीनि, आत्मानं कर्तृत्वादिविशिष्टं, सर्वं च जगत्तेनैवान्तर्यामिणा नियम्यमानं वेत्तीत्येवमब्रवीत् गन्धर्वः । अहं च तत्सूत्रान्तर्यामिद्वयं जाने हे याज्ञवल्क्य, त्वं तदुभयमविद्वांश्चेदब्रह्मवित्सन् यदिह ब्रह्मगवीर्ब्रह्मविदां स्वभूता गाः उदजसे उन्नयसि अन्यायेन, अतो मच्छापदग्धस्य ते मूर्द्धा विस्पष्टं पतिष्यतीत्येवमुक्तो मुनिराह—वेद वा जानाम्येवाहं गौतम, गौतमेति गोत्रतः । एवमुक्तः प्रत्याह गौतमः यो वै कश्चित्प्राकृत इदं त्वयोक्तं ब्रूयात्कथं वेद वेदेत्यात्मानं श्लाघयंस्तस्य किं तेन गर्जितेन, कार्येण तद्दर्शय यथा वे-

यो वा इदं कश्चिद् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥

वार्त्ति०--समष्टिव्यष्टिरूपेण भुज्युं प्रति य ईरितः ॥
स एव वायुः सूत्रात्मा तेन सर्वं जगद्धृतम् ॥ ५ ॥
ब्रह्मादिस्तंबपर्यंतं प्राणिकर्म पुरा कृतम् ॥

---

त्थ तथा ब्रूहीति ॥ १ ॥

सहेत्यादिप्रत्युक्तौ वायुर्वा इत्यादि व्याचष्टे *समष्टीति । भुज्युब्राह्मणे समष्टिव्यष्टिलिङ्गात्मा यो हिरण्यगर्भः स एव क्रियाशक्तिप्रधानः सन्वायुरित्युच्यत इत्युक्तम्, स एवात्र सूत्रशब्देनापि कथ्यत इत्यर्थः । वायुना वै तदित्यादेरर्थमाह *तेन सर्वमिति ॥ ५ ॥ कथं तस्य विधारकत्वमित्याशङ्क्य लिङ्गात्मकस्य तस्य सर्वविधारकत्वमनुभवसिद्धमिति वक्तुं लिङ्गस्वरूपमाह *ब्रह्मेत्यादिना । ब्रह्मणा सूत्रेण यजमानावस्थायां यत्कर्म कृतं, यानि च कर्माणि जन्मान्तरसृष्टिसाधनानि प्राणिभिः कृतानि, तत्सर्वं सूत्रात्मना परिणतं यजमानदेहान्ते फलदानार्थमभिव्यक्तमिति यावत् । तच्च प्रलये मूलकारणे तदात्मना स्थित्वा पुनरभिव्यक्तं भवति । एवंविधसूत्रात्मक एवायं सर्ववासनाश्रयः समष्टिव्यष्ट्यात्मकलिङ्गदेहः । यत लिङ्गं पञ्च महाभूतानि दश बाह्येन्द्रियाणि, पञ्चवृत्तिप्राण एकः, चतुर्विधान्तःकरणमेकमिति

वाय्वात्मना परिणतं वर्त्तते कारणात्मनि ॥ ६ ॥
मूर्तामूर्त्तब्राह्मणोक्तवासना एतमाश्रिताः ॥
तदात्मकमिदं लिङ्गं यत्सप्तदशमुच्यते ॥ ७ ॥
विष्टब्धो वायुना देह इत्यतन्मरणे सति ॥
अवायोर्वपुषो कर्मायोग्यत्वादवसीयताम् ॥ ८ ॥
अपञ्चीकृतभूतानां कार्यं सूत्रमुदीरितम् ॥
अण्डारम्भकभूतानि प्रोतान्योतानि चात्र हि ॥ ९ ॥
सूत्रादप्यान्तरं तत्त्वमन्तर्याम्याख्यमुच्यते ॥
कार्यकारणभावोऽयं यस्मिन्नुक्ते समाप्यते ॥ १० ॥
भूमिष्ठोऽभ्यन्तरो भूमेर्भूम्यज्ञातश्च भूवपुः ॥
नियच्छति भुवं योऽन्तः स आत्माऽन्यस्य तेऽपि मे॥११॥
श्रुतिः-यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ३ ॥

---

सप्तदशविधत्वेनोच्यते तद् इदं सूत्रात्मकमेवेत्यर्थः ॥६॥७॥ तस्य लिङ्गात्मकत्वेऽपि कथं विधारकत्वमित्याशङ्क्यानुभवसिद्धं तदिति दर्शयन् स्तस्माद्वै इत्यादेरर्थमाह *विष्टब्ध इति ॥ ८ ॥

यस्माद्वाय्वात्मकलिङ्गेन सर्वं विधृतं हे गौतम, तस्मादेव पुरुषं प्रेतमुद्दिश्याहुः व्यस्रंसिषत विस्रस्तानि अस्य पुरुषस्यांगानीति प्राणात्मकवायौ गते देहस्य कर्मायोग्यत्वदर्शनादतो वायुनेत्यादिना निगमयति श्रुतिः ॥

वृत्तं कीर्तयंस्तत्फलोक्तिपूर्वकं तेनान्तर्यामिप्रश्नस्य सङ्गतिमाह *अपञ्चीकृतेत्यादिना । भूतानां तत्कार्येन्द्रियादेश्च स्वरूपं सूत्रमित्युक्तमित्यर्थः ॥ ९ ॥ १० ॥ यः पृथिव्यामित्यादेरर्थमाह* भूमिष्ठ इति ॥ ११ ॥ पृथिव्यामिति प-

वा०–लोकं धत्ते स्वयं भूमिः स्वान्तर्यामी स्वयं ततः
इति स्वभाववादोऽयं भूमिष्ठत्वेन वार्यते ॥ १२ ॥
अन्तरत्वेन भूमिष्ठपर्वतादिर्निवर्त्तते ॥
भूदेवतानिवृत्तिः स्याद्यं न जानाति भूरिति ॥ १३ ॥
नान्तर्यामी विदेहत्वे साधनानामसम्भवात् ॥
देहिता तु न दृष्टेति न दोषोभूवपुष्मतः ॥ १४ ॥
भूदेवताया यो देहो देहोऽन्तर्यामिणोऽपि सः ॥
देवस्य कर्मणेशस्य मायया चार्जितो यतः ॥ १५ ॥

---

थमिविशेषणस्य प्रयोजनमाह *लोकमिति ॥ भूः स्वयं स्वभावादेव लोकं च धृत्वा स्वात्मानं च नियच्छतीति शङ्कापनुत्त्यर्थमित्यर्थः ॥ १२ ॥ पृथिव्यां तिष्ठन्नन्तर्यामीत्युक्ते गिरिनगरादिसर्वोऽपि तथेति सर्वस्यांतर्यामित्वप्राप्तौ पृथिव्यांतर इति विशेषणमित्याह *अन्तरत्वेनेति ॥ उक्तविशेषणद्वयस्य पृथिवीदेवतायामपि सत्त्वात्तद्व्यावृत्त्यर्थं पृथिवी न वेदेति विशेषणमित्याह *भूदेवेति । सा ह्यहमस्मि पृथिवीत्यात्मानं जानातीति तद्व्यावृत्तिरनेन क्रियत इत्यर्थः ॥ १३ ॥ यस्य पृथिवी शरीरमित्यस्य व्यावर्त्त्याशङ्कामाह* नेति ॥ अन्तर्यामिणः शरीरमस्ति नवा, अन्त्ये देहादिमत एव तक्षादेर्वास्यादिनियन्तृत्वादिदृष्टेर्नास्य नियन्तृता । आद्ये 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतिविरोध इति भावः । उक्तशङ्कानिवर्त्तकत्वेनोत्तरवाक्यं व्याचष्टे *न दोष इत्यादिना । पृथिवीशरीरेण सशरीरः सन्नीश्वरः पृथिवीं नियच्छति । यथा भूदेवतायाः स्वकर्मारब्धेन शरीरेणासाधारणः सम्बन्धः, एवमीशस्यापि जगन्मात्रस्य तदविद्यार्जितत्वान्न नियन्तृत्वानुपपत्तिरिति भावः ॥१४ ॥ १५ ॥

न चैकदेहयोगेऽपि यन्तृयन्तव्यसङ्करः ॥
बहिष्ठां देवतां भूमिमन्तस्थेशो नियच्छति ॥ १६ ॥
कार्योपाधिर्बहिष्ठः स्यात्कारणोपाधिरान्तरः ॥
उपाधिमात्रतो भेदो वस्तुतस्तु न भिद्यते ॥ १७ ॥
अतस्ते मेऽखिलस्यापि सोऽन्तर्याम्यात्मतां गतः ॥
अमृतत्वान्न जीवत्वमात्मत्वेऽप्यस्य शङ्क्यते ॥ १८ ॥
सार्वात्म्यं वक्तुमस्यैव बहूपाधिषु वर्णितः ॥
सर्वात्मशक्तियुक्तो यः सोऽन्तर्यामीति गम्यताम् ॥१९॥

श्रु०—योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥४॥ योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्माऽन्तर्याम्य-

---

ननु पृथिवीशरीरेणैवेशस्य शरीरवत्त्वे तस्य नियम्यत्वं नियन्तृत्वं च स्यादिति नेत्याह *न चेति । कार्यकारणतादात्म्यापन्नां भूदेवतां तत्तादात्म्याभिमानरहितो मायोपहितः परमेश्वरो नियच्छतीत्यर्थः ॥ १६ ॥ भेदाङ्गीकृतावद्वैतहानिमाशङ्क्याह *उपाधीति । एतेन यः पृथिवीमित्यादेरर्थ उक्तः ॥ १७ ॥ एष इत्यादेरर्थमाह *अत इति ॥ भेदस्यौपाधिकत्वादित्यर्थः । त इति प्रतिवादिवाचकशब्दः स्वस्यान्येषां चोपलक्षणमित्याह *ते मेऽखिलस्यापीति ॥ ईशस्य प्रत्यगभिन्नत्वे संसारित्वमाशङ्क्यामृतपदसूचितं परिहारमाह *अमृतत्वादिति । एकत्वेऽपि बिम्बप्रतिबिम्बवत्कल्पितभेदसत्त्वेन बन्धमुक्तव्यवस्थोपपत्तेर्नेश्वरस्य संसारितेति भावः ॥ १८ ॥ योऽप्सु तिष्ठन्नित्याद्यनेकोदाहरणतात्पर्यमाह *सार्वात्म्यमिति ॥ १९ ॥

मृतः ॥ ५ ॥ योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यम-न्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्त-रो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः॥७॥यो दिवि तिष्ठन् दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः॥८॥ य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आ-त्माऽन्तर्याम्यमृतः ॥९॥ यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रता-रके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारको न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यम-यत्येष त आत्माऽन्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद अस्याकाशः श-रीरं य आकाशमन्तरो यमयत्येष त आत्माऽन्तर्याम्य-मृतः ॥ १२ ॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १३ ॥ यस्तेजसि तिष्ठꣳस्ते जसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्ते-जोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्य-धिदैवतमथाधिभूतम् ॥ १४ ॥ यः सर्वेषु भूतेषु ति-ष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि

भूतान्यन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत इत्य-
धिभूतमथाध्यात्मम् ॥ १५ ॥ यः प्राणे तिष्ठन् प्राणाद-
न्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राण-
मन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ १६ ॥ यो
वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक्
शरीरं यो वाचमन्तरो यमयत्येष त आत्माऽन्तर्या-
म्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरो यं
चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यम-
यत्येष त आत्माऽन्तर्याम्यमृतः ॥ १८ ॥ यः श्रोत्रे ति-
ष्ठञ्छ्रोत्रादन्तरो यँ श्रोत्रं न वेद यस्य श्रोत्रँ शा-
रीरं यः श्रोत्रमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृ-
तः ॥ १९ ॥ यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो
न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष
त आत्माऽन्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठँस्त्व-
चोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्व-
चमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः ॥ २१ ॥
यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद
यस्य विज्ञानँशरीरं यो विज्ञानमन्तरो यमयत्येष
त आत्माऽन्तर्याम्यमृतः ॥ २२ ॥ यो रेतसि तिष्ठन्
रेतसोऽन्तरो यँ रेतो न वेद यस्य रेतः शरीरं
यो रेतोऽन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः

वा०–प्रत्यग्ध्वान्तं चिदाभासं स्वकार्यनियमात्मकम् ॥

---

केचिन्निरुपाधिकमेव परमन्तर्यामिणमाहुः, तान् प्रत्याह* प्रत्य-
गिति ॥ चिदाभासाक्रान्तं प्रत्यगज्ञानं स्वकीयविवर्तनियमनरूपमिष्टं,

तदुपाधिर्नियन्तैष परः प्रोक्तो न तु स्वतः ॥ २० ॥
सर्वज्ञः सर्वशक्तिश्च सर्वभुक्सर्वगो ध्रुवः ॥
जगज्जनिस्थितिध्वंसहेतुरेष महेश्वरः ॥ २१ ॥
नारायणाभिधो मंत्र एतस्यैवाभिधायकः ॥
पञ्चाक्षरेण मन्त्रेण शिव इत्येष गीयते ॥ २२ ॥
हिरण्यगर्भं हैरण्यगर्भीया एनमूचिरे ॥
व्यासस्तत्तत्पुराणेषु तत्तद्रूपतयोचिवान् ॥ २३ ॥

श्रुतिः–अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त ऽन्तर्याम्यमृतोऽतोऽन्यदार्त्तं ततो होद्दालक आरु- आत्मा णिरुपरराम ॥ २३ ॥

इत्युपनिषदि सप्तमं ब्राह्मणं समाप्तम् ॥

---

तदुपहितश्च परमात्मा नियन्तेत्युच्यते, नतु स्वतो नियन्तृत्वं निर्व्यापारत्वादित्यर्थः ॥ २० ॥ निरुपाधिकस्यैव सर्वज्ञत्वा- दिवदन्तर्यामित्वं किं न स्यात् इत्याशङ्क्य दृष्टान्तासिद्धिमाह *सर्वज्ञ इति । सर्वज्ञत्वादौ हेतुः *जगदिति ॥ २१ ॥ ब्रह्मविष्णुरुद्राः सृष्ट्यादिहेतुत्वेन पुराणेषु श्रूयन्ते कथमन्तर्या- मिणस्तद्धेतुत्वमित्याशङ्क्यायमेव चतुर्भुजमूर्त्याद्युपहितो विष्ण्वा- दिशब्दैरभिधीयत इत्याह* नारायणेत्यादिना । मन्त्रेणेति उपास्य इति शेषः ॥ २२ ॥ २३ ॥

यस्तेजसीत्यत्र तेजःशब्दस्तेजःसामान्यपरः । यो रेतसीत्यत्र रेतःशब्दः प्रजननवचनः ॥

वार्ति०–भूम्यादिदेवताः कस्मान्न स्वान्तर्यामिणं विदुः ॥
अदृष्टोऽश्रुत इत्याह कारणं तदवेदने ॥ २४ ॥
दृष्टिश्रुतिमातिज्ञातिविषयत्वं चिदात्मनः ॥
उषस्तब्राह्मणे पूर्वं युक्त्या सम्यङ् निवारितम् ॥ २५ ॥
मागोचरातिवर्त्तित्वान्मातृमानादिसाक्षिणः ॥
द्रष्टुरन्यस्य चाभावान्न तं पश्यन्ति देवताः ॥ २६ ॥
अदृष्टत्वाश्रुतत्वादि प्रत्यग्ध्वान्तेऽपि सम्भवेत् ॥
तन्निवृत्त्यै श्रुतिर्द्रष्टा श्रोता मन्तेत्यभाषत ॥ २७ ॥
द्रष्टृत्वश्रोतृताद्यस्य दृष्टिश्रुत्यादिसाक्षिना ॥
अलुप्तचित्स्वभावत्वान्न विकारो मनागपि ॥ २८ ॥
लोकसिद्धा नियम्यस्य जीवस्य द्रष्टृता तथा ॥

---

अदृष्टो द्रष्टेत्याद्यवतारयति*भूम्यादीति ॥२४॥ तस्य दृष्ट्याद्यविषयत्वं वा कथमित्याशङ्क्योक्तमर्थं स्मारयति *दृष्टीति । पृथिव्यादिक्षेत्रज्ञानां महाभागत्वेऽप्यन्तर्यामिणो दृष्ट्याद्यगोचरस्वभावत्वात्ते तं न पश्यन्तीत्यर्थः ॥ २५ ॥ अत्रैव हेत्वन्तरमाह *मागोचरेति ॥ शब्दादिहीनत्वात्प्रमात्रादिसाधकस्वप्रकाशसाक्षिण एकत्वेन स्वसाधकचैतन्यान्तराभावाच्च न ग्राह्यतेत्यर्थः॥२६॥ नन्वुक्तशङ्काया अदृष्टोऽश्रुत इत्यादिनैव निराससम्भवात्किं द्रष्टृत्वादिकथनेनेति तत्राह* अदृष्टत्वेति । दृष्ट्याद्यविषयत्वं साक्षिमात्रभास्येऽज्ञानेऽपि सम्भवात्तस्यान्तर्यामित्वशङ्कानिवृत्त्यर्थं श्रुतिर्द्रष्टेत्याद्यभाषतेत्यर्थः ॥ २७ ॥ नन्वात्मनो द्रष्टृत्वे सविकारत्वमत आह *द्रष्टृत्वेति ॥ २८ ॥ नान्योऽतोऽस्तीत्याद्यवतारयति* लोकेत्यादिना ॥ एकस्मिञ्छरीरे द्रष्टृद्वयाभावान्नान्तर्यामिणो द्रष्टृत्वमिति या शङ्का तामुच्छेत्तुमुत्तरवाक्यमित्यर्थः

अन्तर्याम्यपि चेद् द्रष्टा देहे भासेत तद्द्वयम् ॥ २९ ॥
इतिशङ्कानिवृत्त्यर्थं नान्योऽतोऽस्तीति भण्यते ॥
लोके जीवतया मूढैरन्तर्याम्येव भाव्यते ॥ ३० ॥
साधारणो यथा सूर्यो मां प्रत्येवैति पामरैः ॥
असाधारणरूपेण भाव्यते जीवता तथा ॥ ३१ ॥
बुद्धिस्थः पर एवात्मा जीवात्मेति निगद्यते ॥
बुध्यागमापायसाक्षी नियन्तेत्युच्यते परः ॥ ३२ ॥
सूत्रान्तर्यामिणौ शास्त्रगम्यत्वेन प्रतिष्ठितौ ॥
अप्रतिष्ठिततर्केण गम्यमानमितोऽपरम् ॥ ३३ ॥

इति वार्तिकसारे तृतीयाध्याये सप्तमं ब्राह्मणं समाप्तम् ॥

---

॥ २९ ॥ द्रष्टृव्यतिरिक्तान्तर्यामिणोऽसत्त्वे कथं तद्भेदधीस्तत्राह* लोक इति ॥३०॥ अद्वयश्चिद्धातुः स्वाज्ञानजबुध्याद्यवच्छिन्नो बहुधाऽऽरोपितो मूढैरित्येतद् दृष्टान्तेन साधयति *साधारण इति । यथा लोके सवितुः सर्वसाधारण्येऽपि मां प्रत्येवायमभिमुखस्तिष्ठतीति स्वासाधारण्येन तमारोपयन्ति द्रष्टारः,तथा मूढाः स्वाविद्योत्थबुध्यादिभिरात्मानं बहुधा कल्पयन्तीत्यर्थः ॥ ३१ ॥ अद्वितीयः पर एवात्माऽविद्याद्युपाधिनाऽनेकधा भातीत्युक्तमुपसंहरति *बुद्धिस्थ इति ॥ ३२ ॥ ब्राह्मणार्थमुपसंहरन्नतोऽन्यदित्यादेरर्थमाह* सूत्रेति ॥ ३३ ॥

इति वार्तिकसारटीकायां सप्तमं ब्राह्मणं समाप्तम् ॥ ७ ॥

वा०-अष्टमब्राह्मणे ब्रह्मतत्त्वं सम्यङ् निरूप्यते ॥
सूत्रमन्तर्यामिता च यत्रोतप्रोततां व्रजत् ॥ १ ॥
पूर्वत्र गौतमोऽपृच्छत्सूत्रान्तर्यामिवस्तुनी ॥
ओतप्रोतात्मतां गार्गी तयोरेवात्र पृच्छति ॥ २ ॥
श्रुतिः-अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो ह-

---

अक्षरब्राह्मणतात्पर्यं वदन्सङ्गतिमाह *अष्टमेति ॥ १ ॥ अ-स्यागतार्थतामाह* पूर्वत्रेति । सूत्रादिस्वरूपमेव प्राङ् निर्णीतं, न तस्य व्याप्यव्यापकभावः । अत्र तु सूत्रस्य व्यापकमाकाशं तस्य च व्यापकमक्षरं निर्णीयत इत्यर्थभेदसिद्धिः ।

श्रुत्यक्षरार्थस्तु-अथ ह वाचक्नव्युवाच पूर्वं याज्ञवल्क्येन निषिद्धा मूर्द्धपातभयादुपरता सती पुनः प्रष्टुं ब्राह्मणानुज्ञां प्रार्थयते । हे ब्राह्मणा भगवन्तः पूजावन्तः हन्त यद्यनुमतिर्भवतामस्ति तर्हीमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि तौ प्रश्नौ चेन्मम वक्ष्यति युष्माकं मध्ये जातु कदाचिदपीमं ब्रह्मोद्यं ब्रह्मवदनं प्रति जेता कश्चिदपि नैव भवेदित्येवमुक्ताः ब्राह्मणाः अनुज्ञां प्रददुः पृच्छ गार्गीति । सा लब्धानुज्ञा याज्ञवल्क्यमाह अहं वै त्वा याज्ञवल्क्य यथा लोके काश्यः काशिषु भवः प्रसिद्धशौर्यः, वैदेहो वा विदेहानां राजा उग्रपुत्रः शूरान्वय इत्यर्थः । उज्ज्यमवतारितज्याकं धनुः पुनरधिज्यमारोपितज्याकं कृत्वा द्वौ बाणवन्तौ बाणशब्देन शराग्रयो वंशखण्डो लक्ष्यते, तद्वन्तौ शरौ सपत्नातिव्याधिनौ शत्रूणामतिपीडाकरौ हस्ते कृत्वोपोत्तिष्ठेत्समीपतः आत्मानं दर्शयेद् एवमेवाहं त्वां शरस्थानीयाभ्यां द्वाभ्यां प्रश्नाभ्याम उपोदस्थामुपस्थितवत्यस्मि, त्वं ब्रह्मविच्चेत् तौ मे ब्रूहीति । आहेतरः पृच्छ गार्गीति ॥ १ ॥

न्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति १
सा होवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥३॥
स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥

वा०–अण्डोर्ध्वाधोमध्यदेशान्कालं च व्याप्य तिष्ठति ॥
सूत्रमित्याहुराचार्या ओतं प्रोतं च कुत्रचित् ॥ ३ ॥
अण्डारम्भकभूतानां न पृष्टा सूत्रओतता ॥

---

स होवाचेत्यादेरर्थमाह* अण्डेति । यद्वस्तु उर्ध्वमुपरि दिवोऽण्डकपालाच्चाधः पृथिव्या अण्डकपालात् यच्चान्तरा मध्ये द्यावापृथिव्योरण्डकपालयोरिमे च द्यावापृथिवी यद् भूतं चातीतं भवच्च वर्त्तमानं भविष्यच्च लिङ्गगम्यं सर्वं द्वैतजातं यस्मिन्नेकं भवति तत्सूत्रसंज्ञकं वदन्ति । तच्च सूत्रं पृथिवीधातुरिवाप्सु कुत्र ओतश्च प्रोतश्चेत्यर्थः ॥ ३ ॥ ननु गार्गिब्राह्मणे ब्रह्मलोकशब्दिताण्डारम्भकभूतपर्यंतस्यैवोतप्रोतत्वोक्तेस्तस्य कुत्र ओतत्वादत्यपृष्ट्वा कथं सूत्रस्य ओतत्वादि पृच्छ्यत इति तत्राह* अण्डे-

सूत्रेण विधृतं सर्वमिति पूर्वत्र निर्णयात् ॥ ४ ॥
तार्किकत्वनिवृत्त्यर्थमाचार्योक्तिमुदाहरत् ॥
निःशेषदेशकालोक्त्या सूत्रसर्वात्मतोदिता ॥ ५ ॥
व्यक्तं सर्वं सूत्ररूपमव्यक्तव्योमसंज्ञिके ॥
ओतं प्रोतं च विद्धीति प्राह पृष्टमनूद्य सः ॥ ६ ॥
देशकालौ च सूत्रेण स्यूतौ देशात्मकं ततः ॥
वियन्नाकाशमत्रेति सूचनायानुवादगीः ॥ ७ ॥
आकाशो वै नाम नामरूपयोर्निर्वहेज्ज्ञानिम् ॥
इत्याह कारणं ब्रह्म श्रुतिराकाशशब्दतः ॥ ८ ॥
आसमन्तात्काशतेऽयमित्याकाशत्वमात्मनः ॥
जगत्कारणता तस्य सर्ववेदान्तसम्मता ॥ ९ ॥

---

ति । सूत्रलक्षणकथनेनार्थात्तदपि ज्ञातमित्यर्थः ॥ ४ ॥ आचक्षत इति परोक्तिरस्यागमैकसमधिगम्यत्वसूचनार्थेत्याह* तार्किकत्वेति । प्रश्नार्थमनुवदन् प्रत्युक्तिं व्याचष्टे *निःशेषेत्यादिना ॥ ५ ॥ ६ ॥ ननु पृष्टस्यानुवादः किमर्थस्तत्राह* देशेति । अस्मिन्वाक्ये आकाशशब्दोऽव्याकृतवचनो न वियद्वाचकः, वियतोऽपि जगदेकदेशत्वेन जगदात्मकसूत्रेऽन्तर्भूतत्वादिति सूचनाय पुनरनुवादरूपेण सूत्रस्य सर्वात्मत्वोक्तिरित्यर्थः ॥ ७ ॥ भूताकाशे रूढस्याकाशशब्दस्य कथं जगत्कारणवाचित्वं तत्राह *आकाश इति । नामरूपयोरुत्पत्तिं यस्तु नियमयेत्स आकाशो नामेति श्रुत्यन्तरे दृष्टत्वात्प्रयोगप्राचुर्येनाकाशशब्दो ब्रह्मण्यपि संभवतीति भावः ॥ ८ ॥ योगवृत्त्याऽपि तत्र तत्सम्भवमाह *आसमन्तादिति ॥ ९ ॥ आकाशशब्दितस्य जगत्कारणवाचित्वे तस्यैव सर्वान्तरत्वात्कस्मिन्नु खल्वाकाश इत्यादि पुनः प्रश्ना-

मायाप्रयुक्तमेवेदं कारणत्वं न वास्तवम् ॥
अपूर्वानपराद्युक्तेः कुतो वास्तवहेतुता ॥ १० ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥
इति मायाप्रयुक्तं तत्कारणत्वं श्रुतिर्जगौ ॥ ११ ॥
व्यावृत्तिर्विधिरूपाभ्यां तमोवद्भावरूपिणी ॥
मायाऽनुभूयमानेयं प्रत्याख्यातुं न शक्यते ॥ १२ ॥
व्यावृत्तः शुक्लपीतादेरन्धकारोऽनुभूयते ॥
तथा विधिमुखेनापि द्विरेफोदरवत्तमः ॥ १३ ॥
स्वप्नाज्जागरणाच्चैवं व्यावृत्ता सुषुप्तिरीक्ष्यते ॥
मूढोऽस्मीति विभात्येष मोहो विधिमुखादपि ॥ १४ ॥
अहङ्कारजनेः पूर्वं मोहश्चिन्मात्रवर्त्यभूत् ॥
तदुत्पत्तावहङ्कारविशेषणमिवेक्ष्यते ॥ १५ ॥
प्रत्यक्त्वं मोहयुक्तं पूर्वं व्यक्तं जगज्जनेः ॥
अव्याकृताख्यमभवत्सूत्रं तत्र समाश्रितम् ॥ १६ ॥
एषोऽन्तर्याम्येष योनिरिति श्रुतिसमीक्षणे ॥

---

नुपपत्तिरित्याशङ्क्याह *मायेति । तत्र हेतुमाह* अपूर्वेत्यादिना ॥ १० ॥ ॥ ११ ॥ नन्वात्मनि मायैव नोपपद्यते स्वप्रकाशत्वात्कुतस्तत्कारणत्वस्य मायिकतेति तत्राह *व्यावृत्तीति ॥ १२ ॥ व्यावृत्तिविधिरूपाभ्यामनुभवं दृष्टान्तेन स्पष्टयति *व्यावृत्त इति ॥ १३ ॥ दार्ष्टान्तिके तमाह* स्वप्नादिति । सुषुप्तिरविद्या ॥ १४ ॥ नन्वाश्रयानिरूपणान्मोहोऽनुपपन्नः, स किमात्माश्रयोऽहङ्काराश्रयो वा? नाद्यः 'अहमज्ञः' इति प्रतीतिविरोधात् । नान्त्यः, तत्कार्यस्य तदाश्रयत्वायोगादिति तत्राह*अहङ्कारेति । प्रथमप्रश्नार्थमुपसंहरति *प्रत्यगिति ॥ १६ ॥ केचित्तु-अव्याकृतान्तर्यामिणोर्भेदं

नोक्तान्तर्यामिणः कल्प्यमन्यत्तत्त्वान्तरं बुधैः ॥१७॥

श्रुतिः–सा होवाच नमस्तेऽस्तु याज्ञवल्क्य
यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति॥५॥
सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथि-
व्या यदन्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च
भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥६॥
स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यद-
न्तरा द्यावापृथिवी इमे यद् भूतं च भवच्च भविष्य-
च्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति ॥

वार्त्ति०–बोद्धुं बोधयितुं चैतदत्यन्तं दुःशकं त्विति ॥
विस्मिता प्रणनामासौ तमव्याकृतवादिनम् ॥ १८ ॥
भूयोऽपि पृष्टमप्राक्षीत्प्रधानादिषु शङ्कया ॥
प्रधानादीञ्जगद्धेतून्वादिनः स्थापयन्ति हि ॥ १९ ॥
सावधारणमाकाश एवेत्यन्यनिवृत्तये ॥
आहोत्तरं मूर्द्धपातं सूचयंस्तर्कनिर्णये ॥ २० ॥

---

कल्पयन्ति तान्प्रत्याह* एष इति ॥ १७ ॥ सा होवाच नमस्ते-ऽस्त्वित्यादेस्तात्पर्यमाह *बोद्धुमिति ॥ १८ ॥

यो मे मम एतं प्रश्नं व्यवोचः विशेषेणापाकृतवानसि तस्मै तुभ्यं नमोऽस्तु ! अपरस्मै द्वितीयाय प्रश्नाय धारयस्व दृढीकुरु आत्मानमिति श्रुत्यक्षरार्थः ॥ ५ ॥

सा होवाच यदूर्ध्वमित्यादौ पृष्टस्य पुनर्वचने हेतुमाह *भूयो-ऽपीति ॥ १९ ॥ प्रत्युक्तितात्पर्यमाह* सावधारणमिति ॥ नन्वा-काश एवेत्यवधारणेनापि कथं प्रधानादिव्यावृत्तिः? तत्राह *मू-र्द्धेति । तार्किककल्पितप्रधानादेः सूत्राश्रयत्वोक्तौ मूर्द्धपातप्रस-क्तेरुक्तत्वादागमगम्यं ब्रह्मैवाकाशशब्देनोक्तमित्येवकारेण सू-

यद्वा तन्तुष्विव पटः सूत्रं वस्तुषु संश्रितम् ॥
इत्याशङ्क्य पुनः प्रश्न एवकारो वस्तुत्वनुत् ॥ २१ ॥
श्रुतिः–कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥७॥
वा०–कस्मिन् खल्वयमाकाश ओतश्च प्रोत ईर्यताम् ॥
अनोतत्वे स्वतन्त्रत्वात्प्रधानत्वं प्रसज्ज्यते ॥ २२ ॥
सूक्ष्मत्वाद् दुर्वचं सूत्रं व्योम सूक्ष्मतरं ततः ॥
व्योमाश्रयः सूक्ष्मतमो न वाग्गोचरमेत्यतः ॥ २३ ॥
वेत्ति चेन्निग्रहस्थानमवाच्यस्योक्तितो भवेत् ॥
अनुक्तौ वादिताहानिरिति गार्ग्या विवक्षितम् ॥२४॥
उक्तदोषद्वयास्पृष्टं प्रत्युत्तरमभाषत ॥
एतद्वा अक्षरं गार्गि प्राहुस्तद्ब्राह्मणा इति ॥ २५ ॥

श्रुतिः–स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रो-

---

चितमिति भावः ॥ २० ॥ नन्वनुमानगम्यप्रधानादेराकाशशब्दवाच्यत्वशङ्काऽप्यनुपपन्ना उक्तदोषादेवेत्यरुचेः पक्षान्तरमाह *यद्वेति । कार्यमात्रस्यानेकाश्रयत्वदृष्टेः सूत्रस्यापि कार्यत्वादव्याकृतातिरिक्तमाश्रयान्तरं सम्भवति, तच्च किम् ? इति भूयः प्रश्नः कृतः । आकाश एवेत्येवकारेण वियदादिसर्वप्रपञ्चस्याप्यव्याकृतमात्रजन्यत्वात्तन्मात्राश्रितत्वमित्याशङ्कामपाकृतवानिति भावः ॥ २१ ॥ कस्मिन्नु खल्वाकाश इत्यादेरर्थमाह *कस्मिन्निति । एवंपृच्छन्त्या गार्ग्यास्तात्पर्यमाह* अनोतत्व इत्यादिना ॥ २२ ॥ २३ ॥२४॥ प्रतिवचनमवतारयति* उक्तेति । दोषद्वयास्पृष्टत्वं चानुपदमेव व्यक्तीकरिष्यति ॥ २५ ॥ एतद्वै तदक्षरमित्यत्र एतत्पदमुपस्तप्रश्नोक्तत्वम्पदलक्ष्यसाक्षिपरमित्याह

स्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन ॥ ८ ॥

वा०—एतच्छब्देन तस्याह प्रत्यक्साक्षिकतामसौ ॥
प्रत्यक्तया तदैकात्म्यं स्वयमेव प्रतीयताम् ॥ २६ ॥
न व्यावृत्तं विशेषेभ्यो नानुवृत्तं च गोत्ववत् ॥
अव्यावृत्ताननुगतं चैतन्यं केन वीक्ष्यताम् ॥ २७ ॥
यस्मात्प्रसिद्धं नास्त्यन्यत्प्रसिद्धं यत्न कस्य चित् ॥
स्वप्रभत्वादसङ्गत्वाद्वैशब्दस्तत्प्रसिद्धये ॥ २८ ॥
साक्षादित्यादिना पूर्वं योऽशनायादिना तथा ॥
यत्नादभिहितः प्रत्यक् तच्छब्देन स गृह्यते ॥ २९ ॥
क्षराद्विरुद्धधर्मत्वादक्षरं ब्रह्म भण्यते ॥
कार्यकारणरूपं तु नश्वरं क्षरमुच्यते ॥ ३० ॥
ध्वस्तात्माज्ञानतत्कार्याः प्रत्यग्याथात्म्यबोधतः ॥
त्यक्तसर्वेषणा अत्र ब्राह्मणा इति कीर्तिताः ॥ ३१ ॥
शास्त्रैकगम्यतासिध्यै वदन्तीत्यभिधीयते ॥

---

*एतदिति । तस्यैतच्छब्दनिर्देशयोग्यतामाह*प्रत्यक्तयेति॥२६॥ ॥२७॥ वस्तुत्वादैकात्म्यमपि घटवदस्वप्रकाशमित्याशङ्क्य वैषम्यमाह* यस्मादिति ॥ स्वेतरस्याप्रसिद्धत्वेऽपि स्वस्य प्रसिद्धत्वाल्लौकिकत्वमाशङ्क्याह *प्रसिद्धमिति ॥ कार्यकारणनिर्मुक्तमद्वयं स्वप्रकाशमसङ्गं वस्तु वैशब्दार्थः ॥२८॥ कहोलप्रश्नोक्तस्तत्पदार्थोऽत्र तच्छब्दार्थ इत्याह* साक्षादिति ॥ यत्नात्—तज्ज्ञानोपायोपन्यासादिति यावत् ॥२९॥ अक्षरं ब्राह्मणा वदन्तीति पदत्रयं क्रमेण व्याचष्टे*क्षरादिसादिना ॥ ३० ॥ ३१ ॥ अत्र वदन्तीति परोक्त्याऽवाच्यं वदतो विप्रतिपत्तिर्नाम निग्रहस्थानम्, अवदतो वादित्वहानिरिति गार्ग्या विवक्षितं दोषद्वयं परिहृतमित्याह* ब्राह्मणा-

ब्राह्मणास्तद्वदन्तीति स्वापराधनिषेधगीः ॥ ३२ ॥
नावाच्यं वच्म्यहं किंतु वदन्ति गुरवोऽखिलाः ॥
इति वच्मि यतस्तेन वादिताऽपि न हीयते ॥ ३३ ॥
गुरवोऽपि कथं प्राहुरवाच्यमिति चेच्छृणु ॥
स्थूलादीनां निषेधेन लक्षयन्त्यक्षरं बुधाः ॥ ३४ ॥
अभावशेषो नाशङ्क्यो निषेधावधिशेषणात् ॥
नाभावनिष्ठो लोकेऽपि निषेधः किमुताक्षरे ॥ ३५ ॥
नञर्थः पर्युदासो वा स्थूलादेरन्यताऽक्षरे ॥
विवक्षिता न च द्वैतं स्थूलादेः कल्पितत्वतः ॥ ३६ ॥
ननूत्सर्गविशेषौ स्तो यत्र तत्र निषेधधीः ॥
दातव्यं दधि विप्रेभ्यो न चैत्रायेत्युदाहृतेः ॥ ३७ ॥
बाढमज्ञानमात्मा च द्वयं सामान्यमुच्यते ॥

---

इत्यादिना ॥ ३२ ॥ ३३ ॥ अस्थूलादिवाक्यमवतार्य व्याचष्टे*गुरव इति । अस्थूलादिपदानि अभाववाचकानि तद्धामकसाक्षिणं लक्षयन्तीत्यर्थः ॥ ३४ ॥ ननु तेषां वाच्यार्थमात्रपर्यवसायित्वं किं न स्यात्तत्राह* अभावेति ॥ निरवधिकनिषेधायोगादित्यर्थः । किञ्च 'अस्थूलो घटः' इत्यादिलौकिकवाक्यमपि नाभावमात्रनिष्ठं किं सर्वजगदाधारत्वेन प्रस्तुताक्षरबोधिवाक्यमित्याह*नेति॥३५॥ प्रसक्तप्रतिषेधो नञर्थ इत्युक्त्वा पर्युदासस्तदर्थ इति पक्षान्तरमाह *नञर्थ इति ॥ ब्रह्मणः स्थूलादिभिन्नत्वविवक्षायामद्वैतहानिस्तत्राह *नचेति ॥ ३६ ॥ प्रसक्तप्रतिषेधो नञर्थ इतिपक्षमाक्षिपति *नन्विति। यथा 'ब्राह्मणेभ्यो दधि दीयतां, तक्रं कौण्डिन्याय' इत्यत्र ब्राह्मणसामान्ये दातव्यत्वेन प्राप्तं दधि तद्विशेषे निषिध्यते, तद्वदद्वैते विषयभेदाभावान्नात्र स्थूलादेर्निषेध इत्यर्थः ॥ ३७ ॥ वस्तुतो अद्वयत्वेऽपि तत्र सामान्यविशेषव्यवस्था युक्तेति परिहरति

विशेषः शुद्ध आत्माऽतो निषेधोऽत्र प्रवर्त्तताम् ॥३८॥
निषेधः कल्पितस्यापि स्थूलादेरिह युज्यते ॥
अध्यस्तव्योमनैल्यादिनिषेधस्योपलम्भनात् ॥ ३९ ॥
यदि वाऽक्षरयाथात्म्यं स्थूलादेरिह भण्यते ॥
स्रग्याथात्म्यमहेर्यद्वन्न तु किञ्चिन्निषिध्यते ॥ ४० ॥
स्थूलादिहेतोर्दाहो वा ध्वान्तस्य प्रत्यगात्मनि ॥
अस्थूलादिसमुत्थात्मयाथात्म्यज्ञानवह्निना ॥ ४१ ॥
नन्वोतप्रोतवाक्येन व्यक्तमव्याकृते जगत् ॥
विलापितं, पुनः कस्मात्स्थूलादिः प्रतिषिध्यते ॥४२॥
समस्तव्यस्ततां कश्चिद्वक्त्योतप्रोतवाक्यतः ॥
ब्रह्मणस्तद्व्युदासाय स्थूलादि प्रतिषिध्यते ॥ ४३ ॥
व्यक्तावस्थाऽथवैतेषां निषिद्धा कारणात्मनि ॥

---

*वाढमिति ॥ ३८ ॥ शुद्धब्रह्मणि वस्तुतो ऽप्रसक्तस्यापि निषेधः सम्भवतीति सदृष्टान्तमाह* निषेध इति ॥ यथा ऽज्ञाते व्योमतत्त्वे प्राप्तं नैल्यादि ज्ञाते तस्मिन्निषिध्यते तद्वदप्रसक्तेऽपीत्यर्थः ॥३९॥ प्रसक्तप्रतिषेधानुरोधेनास्थूलादिवाक्यस्यार्थमुक्त्वा पर्युदासमनुसृत्यार्थान्तरमाह* यदि वेति ॥ तदेव दृष्टान्तेनाह* स्रगिति ॥ स्थूलादिजगतोऽद्वयत्वावेदनपरं वाक्यं न निषेधपरमित्यर्थः ॥ ४० ॥ प्रतीचि स्थूलादिहेत्वबोधस्य वाक्योत्थबोधेन बाधपरं वाक्यमित्याद्यं कल्पमाश्रित्यार्थान्तरमाह *स्थूलादीति ॥ ४१ ॥ स्थूलादिवाक्यस्य गतार्थत्वं शङ्कते* नन्विति ॥ ४२ ॥ द्वयूथ्यमतनिरासपरत्वेनार्थवत्त्वमाह*समस्तेति ॥ ४३ ॥ प्रकारान्तरेणागतार्थत्वमाह *व्यक्तेति ॥ यदूर्ध्वमित्यादिना स्थूलादीनां व्यक्तावस्था कारणे निरस्ता । तेषामेव शक्त्यवस्थायाः कार्यकारणविलक्षणेऽक्षरे निरासार्थमस्थूलादिवाक्यमित्यर्थः ॥४४॥

शक्यवस्थानिषेधस्तु क्रियतेऽत्राक्षरात्मनि ॥ ४४ ॥
एवं च सति तत्पूर्णं ब्रह्म कृत्स्नं भविष्यति ॥
नोचेदकृत्स्नमेव स्याच्छक्त्यवस्थाऽनपह्नवात् ॥ ४५ ॥
नवा निषेधः स्थूलादेस्तस्य प्रागेव सिद्धितः ॥
तन्निषेधानुवादेन प्रतीचि ब्रह्म बोध्यते ॥ ४६ ॥
स्थूलादिमेयमामातृनिषेधे स्वप्रभं फलम् ॥
विद्धि सर्वान्तरं ब्रह्म साक्षादित्यादिलक्षणम् ॥ ४७ ॥
नेतिनेतीतिवद् व्याख्या सर्वाऽपीह समीक्ष्यताम् ॥
सर्वेषामपि चोद्यानामेवंसति न सम्भवः ॥ ४८ ॥

---

शक्त्यवस्थानिषेधे किं फलं? तदाह* एवमिति ॥ ४५ ॥ तत्त्व-मादिवाक्यवद्विधिमुखेन बोधकमस्थूलादिवाक्यं न निषेधपर-मित्यर्थान्तरमाह *नवेति ॥ ओतप्रोतवाक्येन स्थूलादिनिषेध-स्य सिद्धत्वात्स्थूलसूक्ष्मयोरभेदाच्चेति हेत्वर्थः । किं परं तर्हि वा-क्यं तदाह* तन्निषेधेति ॥४६॥ स्थूलादिनिषेधमनूद्य तत्साक्षिणि त्वमर्थे ब्रह्मत्वबोधप्रकारमभिनयति *स्थूलादीति । स्थूलादि-र्हि मातृमानमेयात्मत्वेन त्रिधा स्थितस्तन्निषेधे तदवधिभूतं यत्स्व-प्रकाशं स्फुरणमस्ति तदेवोक्तविशेषणं ब्रह्म विद्धीति योजना ॥ ४७ ॥ कथं नञवति वाक्ये विधिमुखेन बोधकत्वं? तत्राह *नेति नेतीति । विधिमुखेन बोधकत्वे वाक्यस्याभाव-निष्ठत्वमक्षरस्य सद्वयत्वमित्यादिचोद्यमनवकाशमिति लाभं दर्श-यति *सर्वेषामिति ॥ ४८ ॥

अस्थूलमित्यादिश्रुतेरक्षरार्थस्तु-अस्थूलं स्थूलादन्यद् । एवं तर्ह्यणु? अनणु, तथाऽह्रस्वमदीर्घम्, एवं चतुर्भिः परिणामैर्द्रव्य-धर्मप्रतिषेधः, न द्रव्यं तदक्षरमित्यर्थः । अस्तु तर्ह्याग्नेयो लोहितो गुणः, ततो ऽप्यन्यद् अलोहितम् । भवतु तर्ह्यपां स्नेहनमस्नेहम्

यत्किञ्चिद्वस्तु लोकेऽस्मिन्वाचो गोचरतां गतम् ॥
प्रमाणस्य च तत्सर्वमक्षरे प्रतिषिध्यते ॥ ४९ ॥
मागोचरे निषिद्धे च मानहीनं तदक्षरम् ॥
कथमस्तीति चेत् कोऽर्थः कथंशब्दस्य कथ्यताम् ॥५०॥
आक्षिप्यते ऽक्षरे सत्ता मानं वा तत्र पृच्छयते ॥
प्रमाणाभावमात्रेण सत्ता ऽऽक्षेप्तुं न शक्यते ॥५१॥
मानस्याभिव्यञ्जकत्वादव्यक्तं स्यादमानकम् ॥
नैतावता वस्तुसत्ता नास्तीति ग्राहकं विना ॥ ५२ ॥

---

एवमच्छायं छायाविलक्षणम् । अतमः अन्धकारादन्यद् । भवतु वायुः, अवायुः । भवेत्तर्ह्याकाशम्, अनाकाशम् । भवतु तर्हि जतुवत्सङ्गात्मकम्, असङ्गम् । अस्तु तर्हि रसः, अरसम् । तथाऽगन्धम् । तथाऽचक्षुष्कम् । 'पश्यत्यचक्षुः' इति मन्त्रवर्णात् । तथा ऽश्रोत्रं 'स शृणोत्यकर्णः' इति श्रुतेः । भवतु तर्हि वाग्, अवाक् । तथाऽमनस्तथाऽतेजः । अतेजस्कमप्राणमित्याध्यात्मिको वायुः प्रतिषिध्यते । मुखं तर्हि द्वारं, तदमुखम् । तथाऽमात्रं मानमेयान्वयरहितम् । अस्तु तर्हि छिद्रवदन्तरम्, अनन्तरम् । भवेत्तर्हि बहिस्तस्माद्बाह्यम् । अस्तु तर्हि भक्षयितृ, न तदश्नाति किञ्चन । भवेत्तर्हि भक्ष्यं कस्यचित्, न तदश्नाति कश्चन ॥ ८ ॥

एतत्सर्वमभिप्रेत्यानुक्तविशेषान्तरं किञ्चिदस्त्विति शङ्कां वारयति *यत्किञ्चिदिति । उक्तविशेषनिषेधोऽनुक्तविशेषनिषेधोपलक्षणमिति भावः ॥ ४९ ॥

अक्षरस्य मानाविषयत्वे शून्यत्वापत्तिं शङ्कते *मागोचरेति । उक्तचोद्यं परिहर्तुं शङ्कितुराशयं पृच्छति* कोऽर्थ इति ॥ ५० ॥ किंशब्दसूचितं विकल्पं दर्शयति *आक्षिप्यत इति ॥ आद्यं

नास्यास्तित्वे यथा मानमेकत्वादक्षरात्मनः ॥
तथा तन्नास्तितायां च, नातोऽसत्ताऽक्षरात्मनः ॥५३॥
नासत्त्ववत्तस्य सत्त्वं मानहीनं न भासते ॥
स्वतोऽवभासरूपत्वादन्याभासानपेक्षणात् ॥ ५४ ॥
यथा कुम्भः प्रकाशाय भानयोगमपेक्षते ॥
तथा भानं प्रकाशाय नान्यत्किञ्चिदपेक्षते ॥ ५५ ॥
प्रमाणप्रश्नपक्षेऽपि मानं तद्भानसिद्धये ॥
अज्ञानहानयेवोत विवादविनिवृत्तये ॥ ५६ ॥
दत्तमुत्तरमाद्यस्य स्वप्रकाशत्ववर्णनात् ॥
अज्ञानहानिर्बोधात्स्यादस्मादक्षरवाक्यजात् ॥ ५७ ॥
नाक्षरास्तित्वबोधश्चेत् वाक्यात्स्यात्किं फलं भवेत् ॥

---

प्रत्याह* प्रमाणेति ॥ ५१ ॥ उक्तमेव व्यनक्ति *मानस्येति ॥ नहि दीपाभावे तदभिव्यङ्ग्यघटादि तमसाऽऽवृतं तदभावग्राहकमानं विना नास्तीति सुवचमिति भावः ॥ ५२ ॥ तर्ह्यक्षराभावो मानेन निश्चीयते तत्राह *नेति ॥ एकत्वान्निर्विशेषत्वादिति यावत ॥ ५३ ॥ नन्वक्षरतदभावयोर्मानागोचरत्वेऽभाववत्तत्सत्त्वमपि न भासेतेति नेत्याह *नेति ॥५४॥ अक्षरास्तित्वं स्वतःसिद्धं तदभावस्तु नैवमित्यत्र दृष्टान्तमित्याह *यथेति ॥ ५५ ॥ एवमक्षरस्य सत्ताऽऽक्षिप्यत इति पक्षं निरस्य तत्र प्रमाणं पृच्छयते इतिपक्षमनूद्य विकल्पयति *प्रमाणेति ॥ ५६ ॥ आद्यं प्रत्याह *दत्तमिति ॥ द्वितीयेऽज्ञाननिवर्त्तकं मानमस्थूलादिवाक्यमेवेत्युत्तरमाह *अज्ञानेति ॥ ५७ ॥ अस्य वाक्यस्य स्थूलाद्यभाववोधित्वात्कथमक्षराकारधीजनकत्वमित्याशङ्क्याह *नेति ॥ तथाच वाक्यस्य फलवत्त्वाय लक्षणयाऽक्षरबोधित्वमुक्तमङ्गीकार्यमिति भावः ॥ नचाक्षरस्य वाक्यजन्यधीविषयत्वे मानागोचर-

स्थूलाद्यनेकधर्माणां निषेधस्य प्रयासतः ॥ ५८ ॥
विवादोऽप्यक्षरे किं स्यान्निरुपाधौ चिदात्मनि ॥
अन्तर्यामिणि सोपाधावोतप्रोतेऽथवा वद ॥ ५९ ॥
चित्स्वरूपे विवादश्चेज्जगदान्ध्यं प्रसज्ज्यते ॥
अन्तर्यामिण्यतो वादिविवादः परिशिष्यते ॥ ६० ॥
प्रशासनेन लिङ्गेन स विवादोऽपनुद्यते ॥
अन्तर्यामिण्यभ्युपेते सुशकं बोद्धुमक्षरम् ॥ ६१ ॥
ईशितव्यार्थसम्बन्धादन्तर्याम्येतदक्षरम् ॥
चैतन्याभासमोहाख्यवर्त्मनैव न तु स्वतः ॥ ६२ ॥

श्रुतिः—एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याच-न्द्रमसौ विधृतौ तिष्ठतः ।

---

त्वमुक्तं विरुध्येतेति वाच्यम् । अक्षरस्य स्वप्रकाशत्वेन मा-नप्रकाश्यविलक्षणत्वमात्रस्य तत्रोक्तत्वादिति ॥ ५८ ॥ तृतीयं कल्पं द्वेधा विकल्पयति *विवाद इति ॥ ५९ ॥ आद्यं प्रत्याह* चिदिति ॥ द्वितीयं परिशिनष्टि *अन्तर्यामिणी-ति ॥ ६० ॥ कथं तर्हि विवादनिराकरणमित्याशंक्योत्तरवा-क्यमादत्ते* प्रशासनेनेति ॥ नन्वक्षरं प्रक्रम्यान्तर्यामिण्यनुमानो-क्तिरयुक्ता तत्राह *अन्तर्यामिणीति ॥ ६१ ॥ कथम् अन्तर्यामि-ज्ञानादक्षरधीरित्याशङ्क्य तयोर्वास्तवाभेदमाह* ईशितव्येति ॥ त-थाचान्तर्यामिण्यनुमानसिद्धतटस्थलक्षणद्वाराऽक्षरस्वरूपलक्षणं सि-ध्यतीति भावः ॥ ६२ ॥

एतस्य वा इत्यादेरक्षरार्थस्तु—एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्यश्च चन्द्रमाश्च सूर्याचन्द्रमसौ सर्वप्राणिप्रकाशोपका-रत्वाल्लौकिकप्रदीपवल्लोकप्रयोजनविज्ञानवता स्वतंत्रेण निर्मितौ

एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः ।
एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति ।
एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्पन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु ।
एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥९॥

---

विधृतौ च सन्तौ तच्छासने आज्ञायां तिष्ठतः, नियतदेशकालनिमित्तोदयास्तमयवृद्धिक्षयाभ्यां वर्त्तेते । द्यौश्च पृथिवी च द्यावापृथिव्यौ सावयवत्वात्स्फुटनस्वभावे, गुरुत्वात्पतनस्वभावे अपि न स्फुटिते न पतिते, ततोऽक्षरेण विधृते तच्छासने तिष्ठतः । 'येन द्यौरुग्रा पृथिवी दृढा'इति मन्त्रवर्णात् ॥ निमेषादयः कालावयवाः विधृतास्तिष्ठन्ति, ते हि सर्वस्य जनिमतः कलयितारः । यथा लोके प्रभुणा निर्मितो गणक आयं व्ययं चाप्रमत्तो गणयति, तथा प्रभुस्थानीय ईश्वर एषां कालावयवानां प्रशास्ता इत्यर्थः ॥ प्राच्यः प्रागञ्चना गंगाद्याः श्वेतेभ्यो हिमवदादिभ्यः पर्वतेभ्यः स्पन्दन्ते, प्रतीच्यः सिन्ध्वाद्याः, अन्याश्च यां यां दिशमनु प्रवृत्तास्तां तां दिशं न व्यभिचरन्तीत्यर्थः ॥

दर्वीशब्दो दर्वीहोमवचनः । यो न कस्य चित् प्रकृतित्वेन विकृतित्वेन वा वर्तते स दर्वीहोमः, तमन्वायत्ता अनुगता इत्यर्थः ॥ ९ ॥

वा० एतस्य वा अक्षरस्य शासने इत्यदो जगत् ॥
स्याद्व्यवस्थितमर्यादं सूर्यचन्द्रादिलक्षणम् ॥ ६३ ॥
विवादगोचरापन्ना यत्नपूर्वा जगत्स्थितिः ॥
व्यवस्थितत्वाल्लोकस्य राजपूर्वा स्थितिर्यथा ॥ ६४ ॥
सूर्यचन्द्रौ द्युभूलोकौ कालो नद्यो यथायथम् ॥
नियमेन प्रवर्त्तन्ते सा प्रवृत्तिर्व्यवस्थितिः ॥ ६५ ॥
धने दानेन नष्टेऽपि तत्फलप्रद ईश्वरः ॥
यतोऽस्ति तेन दातारं तं प्रशंसन्ति वैदिकाः ॥ ६६ ॥
नापूर्वं फलदं तस्मिन्मानाभावात्, फलं पुनः ॥
ईशादप्युपपन्नत्वान्नैवापूर्वस्य कल्पकम् ॥ ६७ ॥
सेव्याद्राज्ञः फलप्राप्तिर्दृश्यते न त्वपूर्वतः ॥
दानादिक्रियया सेव्यादीशात्तद्वत्फलं भवेत् ॥ ६८ ॥
देवता यागकर्तारं पितरः श्राद्धकारिणम् ॥

---

श्रुत्यक्षराणि व्याचष्टे *एतस्येति ॥ इदं जगदक्षरस्य शासने स्थित्वा वक्ष्यमाणप्रकारेण व्यवस्थितमर्यादं स्यादित्यर्थः ॥ ६३ ॥ उक्तमर्थमनुमानारूढं करोति *विवादेति ॥ ६४ ॥ 'सूर्यचन्द्रादिलक्षणम्'इत्युक्तम् । तत्रादिशब्देन विवक्षितमर्थं दर्शयन् "व्यवस्थितमर्यादम्"इत्युक्तं व्यनक्ति *सूर्येति ॥ ६५ ॥ ददतो मनुष्याः प्रशंसंतीत्यस्यार्थमाह *धन इति ॥ नष्टधनादीनां फलदानासामर्थ्यात्प्रशंसादृष्टेश्च फलदात्रेश्वरेण भाव्यमित्यर्थः ॥ ६६ ॥ अपूर्वस्यैव फलदातृत्वमिति केचित्, तान्प्रत्याह* नेति ॥ फलान्यथाऽनुपपत्तिरेव मानमिति तत्राह *फलमिति ॥ ६७ ॥ विनिगमकाभावमाशङ्क्याह* सेव्यादिति ॥ विमतं विशिष्टज्ञानवद्दातृकं कर्मफलत्वात्सेवाफलवदित्यर्थः ॥ ६८ ॥ यजमानं देवा इत्यादेरर्थमाह *देवतेति ॥

नाप्नुयुर्हव्यकव्यार्थं यदि नाभूत्प्रशासिता ॥ ६९ ॥
श्रुतिः—यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति ॥
वार्त्ति०-होमदानतपांस्यज्ञैर्बहुकृत्वः कृतान्यपि ॥
विनाशिफलदानीति शासनं तत्प्रशासितुः ॥ ७० ॥
अज्ञानमात्रतो बन्धो ज्ञानमात्रेण मुक्तता ॥
इत्याश्चर्याणि सर्वाणि कल्पयन्तीश्वरास्तिताम् ॥७१॥
विवादशङ्काऽपीशेऽस्मिन्न सम्भाव्येति दर्शयन् ॥
प्रशासनं लिङ्गरूपं प्रपञ्चितमनेकशः ॥ ७२ ॥
श्रुतिः-यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥
वा०—यदप्रबोधात्कार्पण्यं ब्राह्मण्यं यत्प्रबोधतः ॥
तदक्षरं प्रबोद्धव्यं यथोक्तेश्वरवर्त्मना ॥ ७३ ॥

---

देवादीनामीश्वराणामपि हव्याद्यर्थित्वेन मनुष्याधीनत्वात्स्वयहीनवृत्तिभाक्त्वं नियन्तृकल्पकमित्यर्थः ॥ ६९ ॥
यो वा इत्यादेरर्थमाह *होमेति ॥ यस्याज्ञानादसकृदनुष्ठितानि विशिष्टफलान्यपि कर्माणि नश्वरफलमेव प्रयच्छंतीत्येतदपि ईश्वराज्ञां विना न घटत इत्यर्थः ॥७०॥ ईश्वरास्तित्वे हेत्वन्तरं वदन् प्रकृतमुपसंहरति *अज्ञानेति ॥७१॥ अत्रानेकलिङ्गोदाहृतेस्तात्पर्यमाह *विवादेति ॥७२॥ यो वा इत्यादिद्वितीयपर्यायार्थमाह *यदिति । ईश्वरवर्त्मनेति शासितृत्वादितटस्थलक्षणद्वारेत्यर्थः ॥ ७३ ॥
श्रुतौ लोकाद्देहात्प्रैति स कृपणः पणक्रीतो दासादिरिव भवतीत्यर्थः ॥ १० ॥

श्रुतिः-तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतꣳश्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥ ११ ॥

वा०–अक्षरस्य प्रशास्तृत्वं स्वमोहाभासकल्पितम् ॥
न स्वाभाविकमित्येतद्वक्त्यदृष्टादिवाक्यतः ॥ ७४ ॥
मागोचरातिवर्त्तित्वाददृष्टं स्यात्तदक्षरम् ॥
अभावत्वनिषेधार्थं द्रष्ट्रक्षरमितीर्यते ॥ ७५ ॥
कूटस्थदृक्त्वं द्रष्टृत्वं न दृश्ये दृष्टिकर्तृता ॥
ओतप्रोतगिराऽशेषदृश्यवस्तुनिराकृतेः ॥ ७६ ॥
उक्तद्रष्ट्रतिरेकेण दृश्यं नास्ति यथा तथा ॥
जीवदृक्प्रतिषेधार्थं नान्यदित्याद्युदीरणम् ॥ ७७ ॥
विजातीयसजातीयवस्त्वन्तरनिषेधतः ॥
कूटस्थमेकं चैतन्यं सिद्धं वस्त्वक्षरं परम् ॥ ७८ ॥

---

तद्वा इत्यादेस्तात्पर्यमाह *अक्षरस्येति ॥ ७४ ॥ तत्रादृष्टमितिपदं व्याचष्टे *मागोचरेति ॥ अप्रमेयत्वादसत्त्वे प्राप्ते द्रष्टृपदमादत्ते* अभावत्वेति ॥ ७५ ॥ तर्हि दृष्टिकर्तृत्वात्क्रियावत्त्वं स्यात्तत्राह *कूटस्थेति ॥ दृष्टिशब्दितचैतन्यात्मत्वमेव द्रष्टृत्वं न दृश्यविषयक्रियावत्त्वमित्युक्तमित्यर्थः ॥ तत्र हेतुः *ओतेति ॥ ७६ ॥ नेत्यादिवाक्यतात्पर्यमाह *उक्तेति ॥ ७७ ॥ प्रकरणार्थमुपसंहरति* विजातीयेति ॥ ओतप्रोतवाक्येन प्रत्यगतिरिक्तं जडं निरस्तम्, नान्यदित्यादिना चाजडं, तस्मादखण्डं वस्तु श्रुतितात्पर्यगम्यं सिद्धमित्यर्थः ॥ ७८ ॥ एतस्मिन्नित्या-

एतस्मिन्नक्षरे गार्गि स्रजि क्लृप्तफणीन्द्रवत् ॥
ओतः प्रोतश्च निःशेष आकाशोऽकारणात्मनि॥७९॥
अक्षरं स्वात्मसम्मोहात्कारणत्वं निगच्छति ॥
तथा कार्यत्वमप्येतन्निरवद्यं तदेकलम् ॥ ८० ॥
सर्वस्याक्षरमात्रत्वात्कृत्स्नज्ञेयसमाप्तितः ॥
न ज्ञेयं शिष्यते किञ्चिन्नाप्यध्वस्तं तथा तमः ॥८१॥
इति वार्तिकसारे तृतीयाध्याये अष्टमं ब्राह्मणं समाप्तम्।
श्रुतिः–सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ॥ १२ ॥
इत्युपनिषदि अष्टमब्राह्मणं समाप्तम् ॥

---

दिवाक्याक्षराणि योजयति *एतस्मिन्निति ॥ निःशेषः सकार्यः ॥७९॥ नन्वकारणात्मनीति कथमक्षरस्य कार्यकारणवैलक्षण्यमुच्यते तस्य सर्वाश्रयत्वाश्रयणात्, तत्राह *अक्षरमिति ॥८०॥ निरवद्यं तदेकलमित्येतदेव स्पष्टयति *सर्वस्येति ॥ ८१ ॥

सा होवाचेति ॥ हे ब्राह्मणाः भगवन्तस्तदेव बहु मन्यध्वं यत्पूर्वं मयोक्तं अस्माद्याज्ञवल्क्यादनुज्ञां प्राप्यास्मै नमस्कारं कृत्वा मदुक्तं बहु मन्यध्वं मनसा विजयाशां मुञ्चध्वमित्यर्थः ॥ किं तत्त्वदुक्तमिति तदाह न वै युस्माकं मध्ये जातु इमं याज्ञवल्क्यं ब्रह्मोद्यं प्रति जेतेति पूर्वमेव मया प्रतिज्ञातमद्यापि ममायमेव निश्चयः ब्रह्मोद्यं प्रति, एतत्तुल्यो नास्तीति ॥ ततः स्वप्रश्ननिर्णयाद्याज्ञवल्क्यस्याप्रकंप्यत्वं प्रतिपद्य ब्राह्मणान् प्रति हितं चोक्त्वा वाचक्नव्युपरराम ॥ १२ ॥

इति वार्तिकसारटीकायां अष्टमं ब्राह्मणं समाप्तम् ।

वार्त्ति०-नवमब्राह्मणे देवनिर्णयस्तदुपासनम् ॥
अष्टधा पञ्चधा चौपनिषदश्चोच्यते क्रमात् ॥ १ ॥
सूर्यचन्द्रादयो देवाः शासितव्या उदीरिताः ॥
तेषां विस्तार आनन्त्यं सङ्कोचस्त्वेकदेवता ॥ २ ॥
त्रयश्चेत्यादिभिर्लक्ष्या बहुशब्दैरनन्तता ॥
सुषुप्तिप्रलयावस्थः कारणात्मैकदेवता ॥ ३ ॥
नानात्वैकत्वरूपाभ्यां तिष्ठति प्राणदेवता ॥
नियन्तव्यनियन्तृत्वसम्बन्धस्य प्रसिद्धये ॥ ४ ॥
ब्रह्मेशः सूत्रमण्डं च जीवो लिङ्गं वपुर्बहिः ॥
इत्यष्टावस्थातां भर्तृप्रपञ्चस्तान्विकीं जगौ ॥ ५ ॥

श्रु०-अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वै-

---

शाकल्यब्राह्मणतात्पर्यमाह *नवमेति ॥ १ ॥ वृत्तेनास्य सङ्गतिमाह* सूर्येति । नियम्यदेवताः कतीत्यपेक्षायां तासां विस्तारसङ्कोचोक्तिद्वारा प्रागुक्तमपि ब्रह्म पुनः स्पष्टयितुमेतद्ब्राह्मणमित्यर्थः ॥ २ ॥ नन्वत्र देवविस्तारोऽनन्त इति न वर्ण्यते तद्वाचिपदाश्रवणात् तत्राह *त्रयेति । संक्षेपेणैका देवतेत्युक्तं व्यनक्ति *सुषुप्तीति ॥३॥ कारणात्मा स एवात्र प्राणदेवतेत्युच्यते इतिमत्वा तस्य विकाससङ्कोचात्मनाऽवस्थानफलमाह *नियन्तव्येति ॥ ४ ॥ एकदेशिमतमनूद्य निराचष्टे* ब्रह्मेत्यादिना । अण्डमिति विराडुच्यते चशब्देन जातिर्दैवमित्युक्तमवस्थाद्वयं समुच्चीयते । बहिर्वपुः स्थूलदेहः ॥ ५ ॥

श्रुतेरयमर्थः—अथ गार्ग्यामुपरतायामेनं याज्ञवल्क्यं विदग्ध इति नामतः शकलस्यापत्यं शाकल्यः पप्रच्छ कतिसंख्या-

श्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥ स होवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिꣳशादित्यष्टौ वसव एकादश रुद्रा द्वा-

---

का देवता इति, स याज्ञवल्क्यः ह किल एतया वक्ष्यमाणया निविदा देवतासंख्यां प्रतिपेदे यावन्तो यावत्संख्याका देवा वैश्वदेवस्य निविदि श्रूयन्ते तावन्तो देवा इति ज्ञातवानित्यर्थः । ननु केयं निविन्नाम ? उच्यते । देवतासङ्ख्यावाचकानि मन्त्रपदानि कानिचिद्वैश्वदेवशस्त्रे शंस्यन्ते तानि निवित्संज्ञकानि स्युस्तान्येव दर्शयति । त्रयश्च त्रीच शता त्रयश्च त्रीणि च शतानि च त्रयश्च त्रीच सहस्रा त्रयश्च त्रीणि सहस्राणि । उपलक्षणमेतदनंतानां शाकल्योऽप्योमिति होवाच । एषा षडधिकत्रिशताधिकत्रिसहस्रलक्षणा देवतानां मध्यमा संख्या सम्यक्तया ज्ञातेत्यर्थः ॥ पुनस्तेषामेव संकोचविषयां संख्यां पृच्छति कत्येवेति ॥ त्रयस्त्रिंशत् षट् त्रयो द्वावध्यर्द्ध एक इति देवतासंकोचविषयां संख्यां पृष्ट्वा पुनः संख्येयरूपं पृच्छति कतमे त इत्यादिना ॥ १ ॥

स याज्ञवल्क्य उवाच—एषां त्रयस्त्रिंशतां देवानामे-

दशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति ॥ २ ॥

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं वसु सर्वं हितमिति तस्माद्वसव इति ॥३॥

कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥

कतम आदित्या इति द्वादश वै मासाः संवत्सर·

---

तत्त्रयश्च त्री च शतेत्यादयो महिमानो विभूतयः ॥ परमार्थतस्तु त्रयस्त्रिंशत्त्वेव देवा इति ॥ तेषामेव स्वरूपं प्रश्नपूर्वकं निर्द्धारयति *कतमे त्रयस्त्रिंशदित्यादिना ॥ २ ॥

अग्न्यादिनक्षत्रान्ता एते वसव इत्युक्त्वा तेषां वसुत्वे हेतुमाह* एतेषु हीति ॥ यस्माच्छरीरेन्द्रियाद्याकारेण तेषु तेषु अग्न्यादिषु वसुषु कर्मफलं समाहितं, तेषु च ते वसन्ति तस्माद्वसव इत्यर्थः ॥ ३ ॥

*कतमे रुद्रा इति ॥ दशेमे पुरुषे प्राणाः, पंच कर्मेंद्रियाणि, पञ्च ज्ञानेन्द्रियाणि चात्मा मन एकादशानां पूरणम् । ते प्राणा यदाऽस्माच्छरीरान्मरणशीलात्प्राणिनामिह कर्मफलोपभोगक्षये उत्क्रामन्ति अथ तदा रोदयन्ति तत्तदा यस्माद्रोदयन्ति तस्मात्ते रुद्रा इति ॥ ४ ॥

*कतम आदित्या इति ॥ द्वादश मासाः संवत्सरस्य कालस्यावयवाः वै प्रसिद्धाः, एते मासाभिमानिनीर्देवता इत्यर्थः ॥ आदित्या हि यस्माद् एते पुनः पुनः परिवर्त्तमानाः प्राणिनामा-

स्यैत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते य-दिदꣳसर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥
कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥
कमते षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चा-दित्यश्च द्यौश्चैते षडेते हीदꣳ सर्वꣳ षडिति ॥ ७ ॥
कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव

---

यूंषि कर्मफलं चाददाना गृह्णन्तो यन्ति गच्छन्ति यस्मादिदं सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥

*अशनिरिति । अशनिर्वज्रं वीर्यमिति यावत् । यो येन वीर्येण प्राणिनः पीडयति तदिन्द्रस्य कर्मेति कृत्वा इंद्र इत्युपचर्यत इत्यर्थः ॥ *कतमो यज्ञ इति पशव इति ॥ यज्ञसाधनत्वात्पशूनां यज्ञत्वोक्तिरुपचारात् ॥ ६ ॥

*कतमे षडिति । वसुत्वेन पठिता अग्न्यादयश्चन्द्रमसं नक्षत्राणि च वर्जयित्वा षड् भवन्ति । हि यस्मादुक्तं सर्वमेते एव तस्मादेते षट् भवन्ति । सर्वो वस्वादिविस्तार एतेष्वेव षट्स्वन्तर्भवतीत्यर्थः ॥ ७ ॥

*कतमे ते त्रयो देवा इति । इम एव त्रयो लोकाः पृथिवीमग्निं चैकीकृत्य एको देवः, अन्तरिक्षं वायुं चैकीकृत्य द्वितीयः, दिवमादित्यं चैकीकृत्य तृतीयः । एषु हि यस्मात्त्रिषु देवेषु सर्वे देवा अन्तर्भवन्तीति तेनैते देवास्त्रय इत्यर्थः । कतमौ द्वौ देवाविति । अन्नं च प्राणश्च विराट् सूत्रश्चेत्यर्थः । तयोरेव सर्वान्तर्भावात् ॥ *कतमोऽ-

प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यद-
स्मिन्निदꣳसर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव
इति प्राण इति स ब्रह्म तदित्याचक्षते ॥ ९ ॥

वार्त्ति०—तदसन्नेति नेतीति निष्प्रपञ्चत्वमात्मनः ॥
कथञ्चित्यतोऽवस्था भ्रान्त्या ब्रह्मणि कल्पिताः ॥६॥
अन्तर्यामितया पूर्वमव्याकृततयाऽपि च ॥
कथितं कारणं प्राणो वायुः सूत्रमुदीर्यते ॥ ७ ॥
सूत्राकारविकारोऽयं कारणादधिकस्तु सः ॥
अस्वतन्त्रतयाऽर्द्धश्च वायोरध्यर्द्धता ततः ॥ ८ ॥
ईदृगध्यर्द्धताऽन्येषु द्विसंख्यादिष्वपीक्ष्यते ॥

---

ध्यर्द्ध इति । योऽयं पवते वायुः ॥ ८ ॥

तदाहुश्चोदयन्ति यदयं योऽयं वायुरेक एव । *कथमध्यर्द्ध
इति । यदस्मिन्सर्वमध्यर्ध्नोत्, यत्रस्माद्वायौ सति इदं जगद-
धिकमृद्धिं प्राप्नोति तेनाध्यर्द्ध इति । *कतम एको देव इति
प्राण इति ॥ ९ ॥

अत्र वायुप्राणशब्दयोः पौनरुक्तिमाशङ्क्याह *अन्तर्या-
मितयेति । पूर्वब्राह्मणे प्रकृतं जगत्कारणमत्र प्राणशब्देन
विवक्षितम्, वायुशब्देन सूत्रमित्यर्थः ॥ ७ ॥ अध्यर्द्धशब्दस्य
सूत्रे प्रवृत्तौ भावितं निमित्तान्तरमाह *सूत्रेति । कार्या-
वस्थायाः कारणापेक्षया स्थूलत्वादाधिकत्वम्, अन्तर्याम्यपेक्षया
हीनत्वादर्धत्वं च विवक्षित्वा वायोरध्यर्द्धत्वमुक्तमित्यर्थः ॥ ८ ॥
कथं तर्हि श्रुत्या तत्र निमित्तान्तरमुक्तं तत्राह*ईदृगिति ।
उक्तविवक्षयाऽध्यर्द्धत्वस्यान्नादिसर्वकार्येष्वपि सम्भवादधिकस-

अतोऽधिकसमृद्ध्यैव श्रुतिरध्यर्द्धतां जगौ ॥ ९ ॥
अनन्तेष्वेषु देवेषु यो यो देव उपास्यते ।
तेन तेन स्वरूपेण प्राण एक उपास्यते ॥ १० ॥
इति दर्शयितुं देवभेदानां प्राणरूपता ॥
निर्णीता प्राणदेवोऽयं परोक्षं ब्रह्म भण्यते ॥ ११ ॥
स्वरूपमपि सद्ब्रह्म स्वाविद्याव्यवधानतः ॥
परोक्षं भाति तत्तस्मादुपास्यं चित्तशुद्धये ॥ १२ ॥
भूकामरूपव्योमाग्नि तमोरूपजलान्यथा ॥
रेत इत्यष्टधा भिन्नं ब्रह्मोपास्यमुदीर्यते ॥ १३ ॥
क्षितिदेहोऽग्निनयनो मनःसंकल्पसाधनः ॥
देवस्तिष्ठति देहेषु त्वगसृङ्मांसरूपधृक् ॥ १४ ॥
पितृजन्यास्थिमज्जादेराश्रयोऽस्य तु कारणम् ॥
मातृभुक्तान्नजं वीजं प्रथमोपास्तिरीदृशी ॥ १५ ॥

श्रुतिः—पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणम्

---

समृद्धिहेतुत्वेनैव वायोरध्यर्द्धत्वं श्रुतिरुक्तवतीत्यर्थः ॥ ९ ॥ सर्वस्य देवविस्तारस्य जगत्कारणत्वमात्रोक्तेस्तात्पर्यमाह *अनन्तेष्वित्यादिना ॥ १० ॥ स ब्रह्म त्यदित्याचक्षत इत्यस्यार्थमाह *प्राणदेवोऽयमिति ॥ त्यदित्यस्य व्याख्या *परोक्षमिति ॥ ११ ॥ कथं प्रत्यगभिन्नब्रह्मणः पारोक्ष्यं ? तत्राह *स्वरूपमिति ॥ १२ ॥ पृथिव्येवेत्याद्युत्तरश्रुत्यर्थं गृह्णाति* भूकामेति । यथा यथावदुपास्यमित्यन्वयः ॥ १३ ॥ तात्पर्यमुक्त्वाऽक्षरार्थमाह* क्षितीत्यादिना ॥ १४ ॥ १५ ॥

श्रुत्यर्थस्तु—यस्य देवस्य पृथिव्येवायतनं शरीरम्, अग्निर्लोकः

**स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति**

---

लोकयत्यनेनेति लोको नेत्रमित्यर्थः। मनोज्योतिर्मनसा ज्योतिषा संकल्पादिकार्यं करोति सोऽयं मनोज्योतिः, तं विशेषणत्रयविशिष्टं पुरुषं पृथिव्यभिमानिनं देवं यो विद्याद्विजानीयात्स एव वेदिता स्यादिति सम्बन्धः। पृथिवीदेवस्य सर्वकार्यकरणसङ्घातं प्रत्याश्रयत्वमाह *सर्वस्यात्मनः परायणमिति। सर्वो हि देहस्त्वङ्मांसरुधिरास्थिमज्जाशुक्रभेदेन षड्विधो भवति। तत्राद्यकोशत्रयं मातृजन्यम्। अहं पृथिवीत्यभिमन्यमानो देवश्च शरीरारम्भकमातृजकोशत्रयाभिमानितया तिष्ठति, तस्य पार्थिवांशप्रधानत्वात्। आत्मनः परायणमित्यत्रात्मशब्देन पितृजन्यकोशत्रयं लक्ष्यते। तथा पृथिवीदेवस्त्वगादिकोशत्रयरूपेण वर्त्तमानः पितृजं त्रितयं कार्यं लिङ्गं च प्रति परायणम्—आश्रय इत्यर्थः। एवं शाकल्येनोक्तो याज्ञवल्क्य आह—यदि तद्विज्ञानेन पांडित्यं लभ्यतेऽहं तं पुरुषं वेदैव यः सर्वस्यात्मनः परायणमात्थ वदसि। अत्र शाकल्यस्य वचनं द्रष्टव्यम्—यदि त्वं वेत्थ पुरुषं तर्हि ब्रूहीति। याज्ञवल्क्य आह—य एवायं शारीरः, शरीरं हि पांचभौतिकं तत्र पार्थिवांशे जनकत्वेन स्थितः शारीरः, मातृजांशत्रयरूपः शरीरविशेषायतन इत्यर्थः॥ स एव देवो यस्त्वया पृष्टः हे शाकल्य, किं वास्ति तत्र वक्तव्यं विशेषणान्तरं तद्वदैव पृच्छेत्यर्थः। एवं प्रक्षोभितोऽपर्पवशं गत आह—तस्य देवस्य शारीरस्य का देवतेति किं कारणमित्यर्थः॥ अस्मिन्प्रकरणे देवताशब्दस्तत्कारणवचनः। अमृतमिति होवाच। अत्रामृतं मातृभुक्तान्नरसो विवक्षितः।

होवाच ॥ १० ॥

काम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥

वार्त्ति०–कामदेहो बुद्धिनेत्रो मनोज्योतिः सुखाश्रयः॥
रतीच्छात्मा स्त्रिया दीप्यो द्वितीयोपास्तिरीदृशी॥१६॥
शुक्लादीन्यत्र रूपाणि भास्वराण्युत्तरत्र तु ॥

---

अन्नरसाद्धि लोहितद्वारा शरीरमुत्पद्यते, एतदेवाभिप्रेत्योक्तम अस्य तु कारणं मातृभुक्तान्नजं वीर्यमित्यत्र वीर्यशब्दो लोहितवचनः ॥ १० ॥

य एवायं काममय इत्यत्र य एवायं कामायतनस्त्वया पृष्टः स एवाध्यात्ममपि काममयः पुरुष इत्यर्थः । अन्यत्सर्वं पूर्ववदेव योज्यम् । अत्र सर्वविशेषणान्युपासनार्थानि द्रष्टव्यानि ॥ ११ ॥

काम एवेत्यादेरर्थमाह *कामदेह इति । अस्यैव पदस्य व्याख्या*रतीच्छात्मेति । स्त्रीसङ्गाभिलाषो रतीच्छा अस्यैवात्मा देहो यस्य देवस्य स तथोक्तः । "तस्य का देवतेति स्त्रिय इति होवाच" इत्यस्यार्थमाह *स्त्रिया दीप्य इति । स्त्रीहेतोर्हि कामस्य दीप्तिर्जायते । तत्र हेतुः *सुखाश्रय इति । सुखहेतुत्वादित्यर्थः ॥ १६ ॥

रूपाण्येवेत्यादिद्विरुक्तेरपुनरुक्तिमाह *शुक्लादीनीति ॥ य एवासावादित्य इत्यादेरर्थमाह *देव इति ॥ साधारणरूपायतनो देवो रूपविशेषाश्रयः सूर्यमण्डलविशेषायतनत्वात् तस्य सत्य-

देवो वर्णाश्रयः सूर्यस्तद्धेतौ दृशि सत्यगीः ॥ १७ ॥
अधिदैवाध्यात्मभागौ शेषेपूपासनेष्वपि ॥
व्याख्यानव्यौ यथा योगमित्युक्तोपास्तिरष्टधा ॥१८॥

श्रु०–रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥१२॥

आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः पराय-

---

शब्दितं चक्षुः कारणं "चक्षोः सूर्यो अजायत" इतिश्रुतेरिति भावः ॥ १७ ॥ उक्तन्यायमुत्तरपर्यायेष्वतिदिशति *अधिदैवमिति ॥ १८ ॥

य एवायं श्रोत्रे भवः श्रौत्रः, श्रोत्रेऽपि प्रतिश्रवणवेलायां विशेषतो भवतीति प्रातिश्रुत्कः । अत्र सर्वाणि श्रवणानि प्रतिश्रवणशब्दार्थः । तस्य का देवतेति दिश इति होवाच । 'दिशस्तत्राधिदैवतम्' इति श्रुत्यन्तरात् ॥ १३ ॥

तम एव यस्यायतनमित्यत्र तमःशब्देनान्धकारः परिगृह्यते ।

णं॰ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं॰ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं॰ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं॰ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ॥१५॥ आप एव यस्यायतनं॰ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणं॰ स वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषं॰ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य

---

अध्यात्मं छायामयोऽज्ञानमयः पुरुषस्तस्य कारणं मृत्युरीश्वरः "मृत्युनैवेदमावृतमासीत्" इति श्रुत्यन्तरात् । स चाज्ञानमयस्याध्यात्मिकपुरुषस्य कारणम् । अविवेकिप्रवृत्तेरीश्वरमात्राधीनत्वादिति भावः ॥ १४ ॥

रूपाण्येव यस्यायतनमित्यत्र प्रकाशात्मकरूपविशेषो गृह्यत इत्युक्तम् । तादृशरूपायतनस्य देवस्य विशेषायतनं प्रतिबिम्बाधार आदर्शादिः, तस्य च कारणमसुः प्राणः । प्राणवता हि निघृष्यमाणे दर्पणादौ प्रतिबिम्बाभिव्यक्तियोग्यो यो रूपविशेषो निष्पद्यते, अतः प्राणः प्रतिबिम्बस्य कारणमिति भावः ॥ १५ ॥

आप एव यस्यायतनमित्यत्र साधारणाः सर्वा आपो गृह्यन्ते, तस्य वापीकूपाद्याश्रयास्वप्सु विशेषावस्थानं, तस्य च वरुण-

का देवतेति वरुण इति होवाच ॥ १६ ॥

रेत एव यस्यायतनꣳहृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳस वै वेदिता स्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच॥१७॥

शाकल्येति होवाच याज्ञवल्क्यस्त्वाꣳ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता ३ इति ॥ १८ ॥

वा०—पञ्चधोपासनं प्रष्टुं क्षोभयामास वाक्यतः ॥
त्वामङ्गारावक्षयणं संदंशं चक्रुरित्यतः ॥ १९ ॥

---

शब्दितमुदकं कारणम् । मूत्रलोहिताद्यात्मकाद्धि जलादेष सङ्घातो भवति, सङ्घातश्च पुरुषद्वारा कूपादिजलानां हेतुरिति भावः॥१६॥

रेतःसामान्यायतनस्य देवस्य विशेषायतनं पुत्रः, तस्य च कारणं प्रजापतिशब्दितः पितेत्यर्थः ॥ १७ ॥

तूष्णीम्भूतं शाकल्यं याज्ञवल्क्यो ग्रहेणावेशयन्नुवाच शाकल्येति संबोध्य । त्वां स्विदिति वितर्के । नूनम् इमे ब्राह्मणाः अङ्गारावक्षयणम् अङ्गारा अवक्षीयन्ते यस्मिन् सन्दंशादौ तदङ्गारावक्षयणं त्वां कृतवन्त इति । "अतिनिर्मन्थनादग्निश्चन्दनादपि जायते"इति न्यायेनातिवादेन मां कोपयित्वा मय्यग्नौ शिशुवत्पतन्तं त्वामनिवारयतामेषां ब्राह्मणानां प्रायेण त्वं हन्तव्यत्वेन सम्मत इति भावः ॥ १८ ॥

शाकल्येत्यादेस्तात्पर्यमाह *पञ्चधेति ॥ १९ ॥

एवमुक्तोऽपि कालचोदितः सन्पुनश्चोदयितुं याज्ञवल्क्येति होवाच शाकल्यः । यद्यपि कुरुपञ्चालानां ब्राह्मणानत्यवादीः 'स्वयम्भीताः सन्तः त्वां अङ्गारावक्षयणं कृतवन्तः' इत्यु-

श्रु०–याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥

वार्त्ति०—साक्षात्करणपर्यन्तं किमुपासनमस्ति ते ॥
इति पप्रच्छ स क्षुब्धो दिगुपास्तिं परो जगौ ॥ २० ॥
ध्येयरूपत्वाभिमानः साक्षात्कार उपास्तिषु ॥
किंदेवोऽसीत्यतः प्रश्न आदित्योऽस्मीति चोत्तरम् २१॥

श्रु०–किंदेवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति च-

---

त्त्या ब्राह्मणानधिक्षिप्तवानसि, किं ब्रह्मवित् सन्नधिक्षिपसि, किं वाऽज्ञः सन् ? अज्ञत्वे ब्रह्मवित्पणभूता गावो नापहर्त्तुं शक्यन्ते, विद्वांश्चेत्का तर्हि फलवती विद्येति वाच्यमित्यर्थः । याज्ञवल्क्य आह–दिशो वेद दिग्विषयं विज्ञानं ममास्तीत्यर्थः ॥ तच्च विज्ञानं केवलं दिङ्मात्रस्य न भवति किं तु देवैः प्रतिष्ठाभिश्च सहिता दिशो वेदेत्याह *सदेवाः सप्रतिष्ठा इति ॥ १९ ॥

शाकल्य आह–यद् दिशो वेत्थ सदेवाः सप्रतिष्ठाः यदि साक्षात्कारपर्यन्तं विज्ञानं तवास्ति किन्देवतोऽस्यां प्राच्यां दिश्यसीत्यत्र प्रश्नप्रत्युक्त्योरर्थं संक्षेपेणाह *साक्षादिति ॥ २० ॥ प्राच्यां दिशि का देवतेति वक्तव्ये किन्देवतोऽसीति कथं मुनिविशेषणत्वेन देवता पृच्छ्यते तत्राह *ध्येयेति ॥ २१ ॥

याज्ञवल्क्यो हि साक्षात्कारपर्यन्तोपास्त्या सर्वं जगदात्मत्वेनोपगम्य 'अहमस्मि दिगात्मा' इति व्यवस्थितो दिशो वेद सदेवाः सप्रति

क्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येवमेवैतद्याज्ञवल्क्य ॥ २० ॥

स आदित्यो नेत्ररूपद्वारा बुद्धौ प्रतिष्ठितः ॥
ऊर्ध्वान्तास्वन्यादिक्ष्वेवं सर्वं बुद्धौ प्रतिष्ठितम् ॥ २२ ॥

श्रु०—किंदेवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति कस्मिन्नु

---

ष्ठा इत्युक्तत्वात् यथा याज्ञवल्क्यस्य प्रतिज्ञानं तथैव शाकल्यः पृष्टवान् 'किंदेवतस्त्वमस्यां दिश्यसीति, कया देवतया त्वं प्राचीदिग्रूपेण सम्पन्नः' इत्यर्थः ॥ इतर आह *आदित्यदेवत इति ॥ प्राच्यां दिशि ममादित्यो देवता सोऽहमादित्यदेवतः। सदेवा इत्येतदुक्तम्, सप्रतिष्ठा इति तु वक्तव्यमित्याह* स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति॥ चक्षुषो ह्यादित्यो निष्पन्नः 'चक्षोः सूर्यो अजायत' इति श्रुतेः। कार्यं हि कारणे प्रतिष्ठितं भवति। कस्मिंश्चक्षुः प्रतिष्ठितमिति रूपेष्विति। चक्षुषो रूपाधीनत्वात्तस्मात्सआदित्यं चक्षुः प्राच्या दिशा सह तत्स्थैश्च सर्वैं रूपेषु प्रतिष्ठितम्। कस्मिन् रूपाणि प्रतिष्ठितानि हृदय इति होवाच। हृदय इति बुद्धिमनसी एकीकृत्य निर्देशः। हृदयेन हि रूपाणां स्मरणम्, अतो वासनात्मना हृदये रूपाणि प्रतिष्ठितानीत्यर्थः ॥ २० ॥

इममेवार्थं संग्रहेण दर्शयन्नुक्तन्यायमन्यत्राप्यतिदिशति *स आदित्य इति ॥ २२ ॥

*यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति ॥ कथं पुनर्यज्ञस्य कार्यं यम इति चेद्, उच्यते। ऋत्विग्भिर्निष्पादिते यज्ञे

यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाᳬं ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २१ ॥

किंदेवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव

---

दक्षिणया दिशा यजमानस्तेभ्यो यज्ञं निष्क्रियते तेन यज्ञेन दक्षिणां दिशं सह यमेनाभिजयति तेन यज्ञे यमस्तत्कार्यत्वाद्दक्षिणया दिशा सह प्रतिष्ठितः ॥ कस्मिन्यज्ञः प्रतिष्ठित इति दक्षिणायामिति । दक्षिणया हि स निष्क्रियते तेन दक्षिणाकार्यं यज्ञः । कस्मिन्दक्षिणा प्रतिष्ठितेति श्रद्धायामिति । श्रद्धा नाम दित्सूनामास्तिक्यबुद्धिः । कथं तस्यां प्रतिष्ठिता दक्षिणेत्याशङ्क्याह श्रुतिः *यदा ह्येवेत्यादिना ॥ कस्मिन्नु श्रद्धा प्रतिष्ठितेति होवाच हृदयस्य हि वृत्तिश्च श्रद्धा, यस्माद् हृदयेन श्रद्धां जानाति,वृत्तिश्च वृत्तिमति प्रतिष्ठिता, तस्माद् हृदये च श्रद्धा प्रतिष्ठिता भवतीति ॥ २१ ॥

*वरुणः कस्मिन्प्रतिष्ठित इति अप्स्विति । अपां हि वरुणः कार्यं श्रद्धाया आपः'श्रद्धातो वरुणमसृजत'इति श्रुतेः। कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति। 'रेतसो ह्यापः सृष्टाः'इति श्रुतेः ॥ कस्मिन् रेतः प्रतिष्ठितमिति हृदय इति। यस्माद् हृदयस्य कार्यं रेतः। कामो हि हृदयस्य वृत्तिः,कामिनो हि हृदयाद्रेतोऽवस्कन्दति तस्मादेव प्रति-

सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २२ ॥

किंदेवतोऽस्यामुदीच्यां दिश्यसीति सोमदेवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ॥ २३ ॥

किंदेवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नु वा-

---

रूपमनुरूपं पुत्रं जातमाहुर्लौकिकाः 'अस्य पितुर्हृदयादिवायं पुत्रः सृप्तः निसृतः,सुवर्णेन कुण्डलमिव हृदयादिव निर्मितः'इति। तस्माद् हृदये ह्येव रेतः प्रतिष्ठितं भवतीति ॥ २२ ॥

सोमदेवत इत्यत्र सोम इति सोमलतां देवतां चैकीकृत्य निर्देशः। स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति। दीक्षितो हि यजमानः सोमं क्रीणाति क्रीतेन सोमेनेष्ट्वा ज्ञानवान्नुत्तरां दिशं सोमदेवताधिष्ठितां प्रतिपद्यते । कस्मिन्नु दीक्षा प्रतिष्ठितेति सत्य इति । यस्मात्सत्ये दीक्षा प्रतिष्ठिता तस्मादेव दीक्षितमाहुः—सत्यं वदेति। एवंवदतां—'कारणभ्रंशे कार्यभ्रंशो मा भूत्'इत्याशयः । अतः सत्ये ह्येव दीक्षा प्रतिष्ठितेति । कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच । तदेव साधयति श्रुतिः हृदये हीत्यादिना ॥ २३ ॥

*किंदेवतोऽस्यां ध्रुवायां दिश्यसीति। मेरोः समन्ततो वसतामव्यभिचाराद्दूर्ध्वा दिक् ध्रुवेत्युच्यते। अग्निदेवत इति। ऊर्ध्वायां हि प्रकाशभूयस्त्वम्,प्रकाशश्चाग्निः,सोऽग्निः कस्मिन्प्रतिष्ठित इति* वाची-

क्प्रतिष्ठितेति हृदय इति कस्मिन्नु हृदयं प्रतिष्ठि-
मिति ॥ २४ ॥

वार्त्ति०–प्राच्यां रूपोपसंहारो दिक्त्रये कर्म संहृतम् ।
ध्रुवायां संहृतिर्नाम्नो हृद्येवं सर्वसंहृतिः ॥ २३ ॥
निःशेषं ब्रह्मलोकान्तं संहृत्य हृदयात्मना ॥
याज्ञवल्क्ये स्थिते भूयः पप्रच्छ हृदयाश्रयम् ॥ २४ ॥
देहस्थे हृदये स्पष्टे मन्यमानोऽन्यमाश्रयम् ॥
लीनोऽहनीत्यधिक्षेप्तुं वक्त्येषो ऽहल्लिकेत्यमुम् ॥२५॥
श्रु०–अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रा-

---

ति । कस्मिन्वाक् प्रतिष्ठितेति हृदय इति होवाच याज्ञवल्क्यः॥२४॥

एवं विभागवादिन्या श्रुतेराशयमाह *प्राच्यामिति । आद्य-
पर्याये हृदये रूपप्रपञ्चोपसंहारो दर्शितः । दक्षिणायामित्यादि-
पर्यायत्रयेण तत्रैव कर्मोपसंहार उक्तः, यज्ञात्मकस्य पुत्रोत्पा-
दनात्मकस्य विद्यायुक्तस्य च कर्मणः क्रमेणोक्तत्वात् । ध्रुवाया-
मित्यस्य पर्यायेण तस्मिन्नेव नामोपसंहारः कृतः, वाचो
हृदये प्रतिष्ठितत्वोक्तेः, एवं नामरूपकर्मात्मकस्य सर्वस्य जगतः
संहृतिः हृदये प्रस्तुतश्रुत्योक्तेत्यर्थः ॥ २३ ॥ कस्मिन्नु हृदयमि-
त्यादिप्रश्नमुत्थापयति *निःशेषमिति । ब्रह्मलोकान्तं जगन्मा-
त्रमिति शेषः ॥ २४ ॥ हृदयस्याधारे पृष्टे अहल्लिकेति
नामान्तरेण शाकल्यं सम्बोधयतो मुनेराशयमाह *देहस्थ
इति । हृदयाश्रयस्य स्पष्टत्वात्तस्याश्रयान्तरं पृच्छन्तमधिक्षेप्तुमहनि
लीयते इति विगृह्य प्रेतवाचिनाऽहल्लिकशब्देन संबोधितवान् ॥
प्रेतादिर्हि रात्रौ व्यज्यतेऽहर्लीनो भवतीति भावः ॥ २५ ॥

हृदयस्य देहस्थत्वं व्युत्पादयति श्रुतिः *यत्र कस्मिन्काले

स्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसि वैनद्विमथ्नीरन्निति ॥ २५ ॥

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति ॥

वार्त्ति० प्रतिष्ठिते देहलिङ्गे तद्वै प्राणादिवायुषु ॥

---

एतद्धृदयमस्य शरीरस्यान्यत्र क्वचिद्देशान्तरे अस्मदस्मत्तो वर्त्तत इति मन्यासै मन्यसे तस्मिन्काले देहो मृतः स्यादित्यर्थः । एवं हृदयस्य देहस्थत्वं व्युत्पाद्य वनसिंहन्यायेन देहस्य हृदयाश्रितत्वमाह—यद्धि यदि एतद् हृदयमन्यत्रास्मत्तो भवेत् ॥ श्वानो वा एनच्छरीरं तदा अद्युर्भक्षयेयुः, वयांसि पक्षिणो वा एतद्विमथ्नीरन्विकर्षेरन् इत्येवं हृदयशरीरयोरन्योऽन्यप्रतिष्ठितत्वमुक्तम् ॥२५॥

तयोराश्रयं पृच्छति—कस्मिन्नु त्वं च शरीरं चात्मा तव हृदयं च प्रतिष्ठितौ स्थ इति प्राण इति । देहात्मानौ प्राणवृत्तौ प्रतिष्ठितौ स्याताम् । कस्मिन्नु प्राणः प्रतिष्ठित इति । अपान इति । साऽपि प्राणवृत्तिरपानवृत्त्या चेन्न गृह्येत प्रागेव प्रेयात् । कस्मिन्नपानः प्रतिष्ठित इति व्यान इति । साऽप्यपानवृत्तिरध एव यायात्, प्राणवृत्तिश्च प्रागेव यायात् मध्यस्थया चेद् व्यानवृत्त्या न गृह्येत । कस्मिन्नु व्यानः प्रतिष्ठित इति उदान इति सर्वास्तिस्रो वृत्तय उदाने कीलस्थानीये चेन्न बद्धाः विश्वङ्ङेव ईयुः । कस्मिन्नूदानः प्रतिष्ठित इति समान इति । समाने प्रतिष्ठिताः सर्वा ह्येता वृत्तयः । एतदुक्तं भवति शरीरहृदयवायवः अन्योऽन्यप्रतिष्ठिता वर्तन्ते इति ॥

पञ्चधोपासनं त्वेवं ममानीतं समापितम् ॥ २६ ॥
एतावदेव शाकल्यो वेत्ति मायामयं तु तत् ॥
इति मत्वा श्रुतिस्तत्वं वदत्युक्तनिषेधतः ॥ २७ ॥
विहायाख्यायिकारूपं स्वेनैव वचसा श्रुतिः ॥
स एष नेति नेतीति वक्ति तत्त्वविनिर्णयम् ॥ २८ ॥

श्रुतिः—स एष नेतिनेत्यात्माऽ गृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्जतेऽसितो न व्यथते न रिष्यत्येतान्यष्टावायतनान्यष्टौ लोका- अष्टौ देवा अष्टौ पुरुषाः ॥

वार्त्ति० समापय्यात्मविज्ञानं याज्ञवल्क्यात्मिका सती।
पश्चात्पप्रच्छ शाकल्यमब्रह्मिष्ठत्वसिद्धये ॥ २९ ॥
स एष नेति नेत्यादि सर्वो वा प्रश्न ईक्ष्यताम् ॥

---

उक्तमर्थं सङ्क्षिपन्प्रकृतमुपसंहरति *प्रतिष्ठित इति ॥ २६ ॥ स एष इत्यादिवाक्यमवतारयति *एतावदिति ॥ २७ ॥ ननु शाकल्ययाज्ञवल्क्योः संवादात्मिकेयमाख्यायिका, न चात्र शाकल्येनाक्षरं पृष्टं, तत्कथं तत्कथनार्थं याज्ञवल्क्यस्य प्रवृत्तिरत आह *विहायेति ॥ २८ ॥ स एष इत्यादिवाक्यस्य श्रौतत्वे एतान्यष्टावित्यादिवाक्यस्यासङ्गतिरित्याशंक्य वाक्यभेदान्मैवमित्याह *समापय्येति । शाकल्यस्याब्राह्मिष्ठत्वसिद्धौ ब्रह्मवित्सभायां प्रश्नानधिकाराच्तस्मिन्नपराधो दर्शित इति भावः ॥ २९ ॥ स एष इत्यादिश्रौतं वाक्यम, एतानीत्यादिप्रश्नवाक्यमित्युक्तो विभागः । इदानीमेकवाक्यत्वमाश्रित्याह *स इति । एकवाक्यत्वे हेतुः*मध्य इति । कस्मिन्नु हृदयमित्यादौ सति वाक्यभेदे तद्धेतुरितिशब्दो मध्ये दृष्टः, न च न रिष्य-

मध्ये वाक्यच्छिदोऽसत्त्वादितिशब्दस्य पूर्ववत् ॥३०॥
ऐकात्म्ये सर्वमेवेदं समासव्यासरूपतः ॥
समापनीयमित्युक्ते भूयः प्रश्नोत्तरे इमे ॥ ३१ ॥
पुमर्थेऽवसितं शास्त्रं भवत्यैकात्म्यवर्णने ॥
तदनुक्तौ तु पूर्वोक्तं सर्वं स्यात्तुषकण्डनम् ॥ ३२ ॥
नाक्षरब्राह्मणे प्रोक्ता विज्ञानानन्दरूपता ॥
तथौपनिषदत्वं च द्वयं तदुपवर्ण्यते ॥ ३३ ॥
नेतिनेतीति पूर्वत्र मूर्त्तामूर्त्तविवेचने ॥
अत्राप्यस्थूलमित्युक्तं स एष इति भण्यते ॥ ३४ ॥
अथवाऽशेषवेदान्तप्रसिद्धः स इतीरितः ॥
स्वानुभूतप्रसिद्धिस्तु प्रोक्तैष इतिशब्दतः ॥ ३५ ॥
देवविस्तारसङ्क्षेपावष्टधा पञ्चधा च यत् ॥
उपास्यमुक्तं तत्सर्वं नेतिनेतीत्यपोह्यते ॥ ३६ ॥
इतिशब्देन निर्दिष्टे द्वये तस्मिन्नपोदिते ॥

---

स्येतान्यष्टावित्यत्र मध्ये वाक्यच्छिद् इतिशब्दो दृश्यते तस्मादेकमिदं प्रश्नवाक्यमित्यर्थः ॥ ३० ॥ एवं वाक्यमवतार्य प्रश्नप्रत्युत्तयोरभिप्रायमाह *ऐकात्म्येति ॥ ३१ ॥ प्रश्नोत्तराभ्यामैकात्म्यवर्णनेन वा किं फलं तत्राह *पुमर्थ इति ॥ ३२ ॥ ऐकात्म्यमपि पूर्वब्राह्मणे कथितमेवेति पुनरुक्तिमाशङ्क्य तत्रानुक्तविशेषोऽत्र कथ्यते इत्याह *नेति ॥ ३३ ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *नेति नेतीति ॥ ३४ ॥ स एष इतिपदयोरर्थान्तरमाह *अथवेति ॥ ३५ ॥ नेतीत्यत्रेतिशब्देन प्रकृतं सर्वं द्वैतं परामृश्य नकारेण निषिध्यत इत्याह *देवेति ॥ ३६ ॥ आत्मपदार्थमाह *इतीति ॥ आत्मशब्दस्य स्वरूपवाचित्वात्कस्य

योऽवशिष्टः स आत्माऽस्य दृश्यस्यात्मवतो मतः ॥३७॥
आत्मात्मवत्त्वसम्बन्धो नान्यो दृग्दृश्ययोरिति ॥
मत्वाऽऽत्मशब्दो दृग्वस्तुन्यवाच्येऽपि प्रयुज्यते ॥३८॥
ननु ब्रह्माधिकारेऽस्मिन्कथमात्मेति वर्ण्यते ॥
नैष दोषोऽतिरेकेण नात्मनो ब्रह्मता यतः ॥ ३९ ॥
ग्राह्यत्वं शर्णिता सङ्गो बन्धो भीतिश्च हिंसनम् ॥
जाड्याज्जडस्य धर्माः स्युर्न तु सन्त्यात्मवस्तुनि ॥४०॥
कार्यधर्मानतीत्यैतांस्तद्धेत्वज्ञाननिह्नुतेः ॥
अपूर्वानपरः पूर्ण आत्मा स्वात्मन्यवस्थितः ॥ ४१ ॥
इदं यदाश्रुतेर्वाक्यं तदा तत्त्वं निरूपितम् ॥

---

स्वरूपमित्यपेक्षायामाह *अस्य दृश्यस्येति ॥ ३७ ॥ वाचामगोचरे प्रतीचि आत्मपदप्रयोगे हेतुमाह *आत्मेति । प्रयुज्यते, लक्षणयेति शेषः ॥ ३८ ॥ आत्मशब्दमाक्षिप्य परिहरति *नन्विति ॥ ३९ ॥ अगृह्य इत्यादिपदानि व्याचष्टे *ग्राह्यत्वमिति ॥

अगृह्यः, न गृह्यः । श्रुतिरेव अगृह्यत्वादौ हेतुमाह *नहि गृह्यते । यद्धि व्याकृतं रूपादिमद्वस्तु तद्ग्रहणगोचरम्, इदं तु तद्विपरीतमात्मतत्त्वम् । तथाऽशीर्यो, यद्धि मूर्त्तं शरीरादि तच्छीर्येत, अयंतु तद्विपरीतत्वादेव, असङ्गः, मूर्त्तं हि मूर्त्तान्तरेण संसृज्यतेऽतएवासितः अबद्धः अबद्धत्वादेव न व्यथते न बिभेति तथा न रिष्यति ग्रहणविमरणसंगभीतिराहितत्वाद्धिंसां नापाद्यते न विनश्यतीत्यर्थः ।

ग्राह्यत्वादीनां जडधर्मत्वे हेतुमाह *जाड्यादिति । आत्मनश्चिद्रूपत्वान्न जडधर्माणां तत्र प्रसक्तिरित्याह *नत्विति ॥ ४० ॥ उक्तमेव व्यनक्ति*कार्येति ॥ ४१ ॥

याज्ञवल्क्यस्य वाक्यत्वे पृष्टमेतदनूदितम् ॥ ४२ ॥
आत्मा निरुह्य प्रत्युह्य पुरुषान्योऽत्यवर्त्तत ॥
तमौपनिषदं ब्रूहि मूर्द्धा पततु तेऽन्यथा ॥ ४३ ॥

श्रुतिः—स यस्तान्पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तन्त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्द्धा ते विपतिष्यतीति तꣳह न मेने शाकल्यस्तस्य ह मूर्द्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥ २६ ॥

वार्त्ति०—योऽनूदितो नेतिनेति संविन्मात्रो ह्यविक्रियः॥
उक्तौ पुरुषनिर्वाहप्रतिवाहौ तु मायिकौ ॥ ४४ ॥
सृष्टिरष्टविधोपास्यरूपा निर्वाह उच्यते ॥
प्रतिवाहस्तु संहारो दिग्देवद्वारतो हृदि ॥ ४५ ॥

---

स एष इत्यादिवाक्यं पूर्वोक्तार्थद्वयानुसारेणोपसंहरति *इदमिति ॥ ४२ ॥ एतानीत्यादेरर्थमाह *आत्मेति ॥ ४३ ॥

एतान्यष्टावायतनानि पृथिव्येव यस्यायतनमित्येवमादीनि । अष्टौ लोका अग्निर्लोक इत्यादयः । अष्टौ देवा अमृतमिति होवाचेत्येवमादयः । अष्टौ पुरुषाः शारीरपुरुष इत्यादयः ।

एवं समुदायार्थमुक्त्वा स यस्तानित्यत्र स य इति पदद्वयस्यार्थमाह*य इति । अपेक्षितं पूरयति *संविन्मात्र इति । तत्र हेतुः *अविक्रिय इति । अविक्रियत्वमात्मनोऽनुपपन्नं तस्य सृष्ट्यादिकर्तृत्वोक्तेरिति तत्राह *उक्ताविति । तान् पुरुषान्निरुह्य प्रत्युह्येत्यत्र पुरुषशब्दोपलक्षितायतनादिचतुष्टयस्य यौ निर्वाहप्रतिवाहौ सृष्टिसंहारावुक्तौ तावाविद्यकावित्यर्थः ॥ ४४ ॥ निर्वाहप्रतिवाहपदयोरर्थं विशदयति *सृष्टिरिति ॥ ४५ ॥ अत्यक्रामदित्येतद्

वस्तुवृत्तेन निःशेषकार्यकारणवर्जनम् ॥
तस्यातिक्रांतिरुद्दिष्टा स चौपनिषदि श्रुतः ॥ ४६ ॥
कर्मकांडे विरोधित्वान्न चायं श्रूयते क्वचित ॥
ऐकात्म्यवस्तुविज्ञानं कर्मभिर्हि विरुध्यते ॥ ४७ ॥
अविरोधं मन्यमानाः केचिद्विज्ञानकर्मणोः ॥
कर्मछिद्रेऽपि कुर्वंति यथावस्त्वात्मबोधनम् ॥ ४८ ॥
यत्कर्तुमन्यथाकर्त्तुमकर्त्तुं चापि शक्यते ॥
कुर्वंतु स्वेच्छया तादृग्विज्ञानं तु न तादृशम् ॥ ४९ ॥
तस्मादुपनिषत्स्वेव ज्ञातः कर्मविरोधतः ॥
न कर्मकांडे, शाकल्यः कर्मित्वान्नैव वेत्ति तम् ॥ ५० ॥
ब्रह्मिष्ठा अपि गार्ग्याद्याः स्वस्वप्रश्नोत्तरे सति ॥
तुष्टा उपरतास्तेन स मुनिर्न शशाप तान् ॥ ५१ ॥
अब्राह्मिष्ठो ब्रह्मविदो द्विषन्ब्रह्मविदां धनम् ॥
शाकल्यो वाञ्छतीत्येनं शाकल्यमशपन्मुनिः ॥५२॥

---

व्याचष्टे *वस्तुवृत्तेनेति । औपनिषदपदं व्याचष्टे *स चेति । चोऽवधारणे, उपनिषद्येव श्रुत इत्यर्थः ॥ ४६ ॥ अवधारणे हेतुमाह *कर्मेति ॥ ४७ ॥ एकदेशिमतं दूषयितुमनुभाषते *अविरोधमिति । कर्मछिद्रेषु वस्त्वनुसृत्य ज्ञानमभ्यस्यंति चोदितकर्मकाले कर्म कुर्वन्तीति ज्ञानकर्मणोरविरोधं मन्यन्त इत्यर्थः ॥ ४८ ॥ तं निराकरोति *यदिति ॥ ४९ ॥ औपनिषदत्वमुपसंहरति *तस्मादिति । तं ह न मेने शाकल्य इत्येतद् व्याचष्टे *शाकल्य इति ॥ ५० ॥ वादित्वाविशेषेऽप्याश्वलादीनशप्तवतो मुनेः शाकल्यशापे हेतुमाह* ब्रह्मिष्ठा इत्यादिना ॥५१॥५२॥ तस्य ह मूर्द्धेत्यादेरर्थमाह *शापेनेति । अपि हेत्यादेरर्थमाह *तस्येति ।

शापेन दग्धशाकल्यस्तस्यास्थीन्यपि तस्कराः ॥
अपजह्रुरतः शास्त्रसंस्कारोऽप्यस्य नाभवत् ॥ ५३ ॥
शाकल्यो ब्रह्मविद्द्वेष्टा भ्रष्टो लोकद्वयाद्यतः ॥
ततो ब्रह्मविदां भक्तिः कार्या द्वेषो न कुत्रचित् ॥५४॥
य औपनिषदस्तस्य विज्ञानानन्दरूपता ॥
दातृता भोगमुक्त्योश्च वक्तव्येत्युत्तरा श्रुतिः ॥ ५५ ॥

श्रु०–अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान्वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ॥ २७ ॥

तान् हैतैः श्लोकैः पप्रच्छ ।

---

परिमोषिणः तस्काराः संस्कारार्थं शिष्यैर्नीयमानान्यप्यस्थीनि धनमिति मन्यमाना अपजह्रुरिति श्रुत्यर्थः ॥ २६ ॥

अस्थ्यपहारे को दोषस्तत्राह *अत इति ॥ ५३ ॥ किमितीयमाख्यायिका विद्याप्रकरणे सूचिता तत्राह *शाकल्येति ॥ ५४ ॥ तं ह न मेने इत्यादिस्वमुखेनोक्त्वा पुनर्याज्ञवल्क्यमुखेन प्रवृत्ताया अथ हेत्यादिश्रुतेस्तात्पर्यमाह*य इति ॥ ५५ ॥

श्रुतेरक्षरार्थस्तु—अथानन्तरं तूष्णीम्भूतेषु विप्रेषु याज्ञवल्क्यः हे भगवन्त इति सम्बोध्योवाच वः युष्माकं मध्ये यो 'याज्ञवल्क्यं पृच्छामि' इति कामयते स मामागम्य पृच्छतु, सर्वे वा यूयं मां पृच्छत । वो युष्माकं मध्ये यो'याज्ञवल्क्यो मां पृच्छतु' इति कामयते तं पृच्छामि, सर्वान्वा युष्मान्पृच्छामि । ते ह ब्राह्मणा एवमुक्ता अपि न दधृषुः न प्रगल्भाः संवृत्ताः ॥ २७ ॥ तेषु प्रतिवक्तुमप्रगल्भभूतेषु तानेतैर्वक्ष्यमाणश्लोकैः पप्रच्छ ।

महाप्रलयसम्पत्तौ जगतः पुनरुद्भवे ॥
कारणं पृच्छयते वृक्षसर्वसाधर्म्यपूर्वकम् ॥ ५६ ॥
श्रु०–यथा वृक्षो वनस्पतिस्तथैव पुरुषो ऽमृषा ॥
तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ॥
त्वच एवास्य रुधिरं प्रस्यंदि त्वच उत्पटः
तस्मात्तदातृण्णात्प्रैति रसो वृक्षादिवाहतात् ॥
मांसान्यस्य शकराणि कीनाटं स्नाववत्स्थिरम्
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥
यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥

---

एतत्सर्वमभिप्रेत्य यथेत्यादिमन्त्रतात्पर्यमाह *महाप्रलये-ति ॥ ५६ ॥

यथा लोके वृक्षो, वनस्पतिरिति विशेषणेन वृक्षस्य महत्त्वमाह । तथैव पुरुष इत्येतत्साधर्म्यम् । अमृषा सत्यम् । साधर्म्यमेव प्रकटयति–तस्य लोमानि तस्य पुरुषस्य लोमानि, वृक्षस्य पर्णानि त्वगस्य पुंसः वृक्षस्य बहिरुत्पाटिका, उत्पाटिकेति नीरसा त्वगुच्यते । त्वच एव सकाशादस्य पुरुषस्य रुधिरं प्रस्यन्दि वृक्षस्य त्वचः सकाशादुत्पटो निर्यासः, यस्मादेवं सर्वं समानं वनस्पतेः पुरुषस्य च तस्माद्रुधिरमातृण्णाद्धिंसितात्प्रैति निर्गच्छति वृक्षादिवाहताच्छिन्नाद्रस इव । मांसानि अस्य पुरुषस्य वृक्षस्य शकलानि शकराणि कीनाटं, कीनाटं नाम शकलेभ्योऽभ्यन्तरं वल्कलरूपं काष्ठसंलग्नं, पुंसः स्नावः तच्च स्थिरं दृढम्, अस्थीनि पुंसोऽन्तरतः स्नावोऽभ्यन्तरे भवन्ति, तथा कीनाटस्याभ्यन्तरतो दारूणि काष्ठानि । मज्जा मज्जोपमा कृता

वार्त्ति०–वृक्षः काण्डरुहो बीजरुहश्चेति द्विधा तयोः ॥
समः काण्डरुहेणैष रेतसो योऽभिजायते ॥ ५७ ॥
न पृच्छ्यतेऽतिस्पष्टत्वात्तदवान्तरकारणम् ॥
किंत्वस्पष्टमशेषस्य पृच्छ्यते मूलकारणम् ॥ ५८ ॥
अन्वयव्यतिरेकाभ्यां बीजाख्यान्मूलकारणात् ॥
दृष्टा वृक्षजनिस्तद्वत्कस्मान्मूलाज्जगज्जनिः ॥ ५९ ॥
श्रु०–रेतस इति मा वोचत जीवतस्तत्प्रजायते धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ॥

---

पुरुषस्य वृक्षस्य च मज्जाऽन्योन्यतुल्यैव नान्यो विशेषोऽस्तीति भावः। यद्यपि वृक्णच्छिन्नो वृक्षो रोहति मूलात्पुनर्नवतरः पुरुषस्य वृक्षेण सर्वसाधर्म्यदृष्टेरत्रापि साधर्म्यं वक्तव्यम्। अतः पृच्छामि मर्त्यो मनुष्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति मृतस्य पुरुषस्य कुतः प्ररोहणमित्यर्थः।

रेतस इति मा वोचतेत्यादेस्तात्पर्यमाह *वृक्ष इत्यादिना। काण्डरुहच्छिन्नशेषादुत्पद्यमानो वृक्षः। मूलस्थानीयाज्जनकाद्रेतोद्वारा यो जायते तस्य काण्डरुहसमत्वान्नात्रापि साधर्म्यक्षतिरित्यतिस्पष्टमिदं न पृष्टम्। तथा च महाप्रलये लीनस्य जगतो जन्मकारणस्य पृष्टत्वात्तस्य नेदमुत्तरमिति भावः ॥ ५७ ॥ ५८ ॥ माऽस्तु जगतो मूलमित्याशङ्क्य धानारुह इत्याद्यादत्ते*अन्वयेति ॥ ५९ ॥

धानारुहो बीजादुत्पद्यमानः। श्रुताविवशब्दोऽर्थशून्यः। वृक्षोऽञ्जसा साक्षात्प्रेत्य मृत्वा सति मूले पुनः सम्भवः सम्भवतीत्यर्थः। यद्यदि सह मूलेनावृहेयुस्तदा वृक्षः पुनर्न भवेत्तस्मान्नोत्पद्येतातो वृक्षदृष्टान्तेन जगतोऽप्यवश्यं यन्मूलमस्ति, तच्च किम्? इति निरूपणीयमित्यर्थः ॥

यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् ॥
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥
जात एव न जायते कोन्वेनं जनयेत्पुनः ॥
वा०–नित्यजातस्वभावत्वं न मन्तव्यं यतो मृतः ॥
पुनः पुनर्जायते स्यात्कृतनाशादिरन्यथा ॥ ६० ॥
को न्वेनं जनयेन्नित्यमित्युक्ता न विदुर्द्विजाः ॥
जित्वा तान्याज्ञवल्क्यस्तु गोसहस्रं गृहीतवात् ॥६१॥
जिगीषा तामसी धेनुजिघृक्षा वा कथं मुनेः ॥
यथा सात्त्विकवैराग्यशान्त्यादीनि तथेक्ष्यताम् ॥६२॥
न रजस्तमसी देहे विद्यमाने विनश्यतः ॥
किन्तु बोधेनाभिभूते भोगायोद्भवतः पुनः ॥ ६३ ॥
आविर्भावतिरोभावौ पर्यायाद्भोगबोधयोः ॥
यज्जीवन्मुक्तिशास्त्रं तत्सत्यैवमुपपद्यते ॥ ६४ ॥

---

जात एवेत्यस्यार्थमाह *नित्येति । सर्वस्य जगतः प्रवाहरूपेण नित्योत्पन्नस्वभावत्वेन जनिष्यमाणस्याभावान्न मूलान्वेषणमित्यर्थः। एवं स्वभाववादिमतमनूद्य न जायत इति श्रुतिभागेनोत्तरमाह *नेति । प्रतिज्ञातेऽर्थे जायते इति पदं हेतूकरोति *यत इति । स्वभाववादे दोषमाह *स्यादिति ॥ ६० ॥ प्रश्नार्थमुपसंहरति *को न्विति । याज्ञवल्क्यस्य ब्रह्मविदां श्रेष्ठत्वे फलितमाह *जित्वेति ॥६१॥ विदुषो याज्ञवल्क्यस्य विजिगीषादिकमाक्षिपति *जिगीषेति । उत्तरमाह *यथेति ॥ ६२ ॥ ननु रजस्तमसोर्विद्यया नष्टत्वात्तत्कार्यरागादिः कथं शान्त्यादिवदनुवर्तेत तत्राह *नेति ॥६३॥ उक्ते ऽर्थे जीवन्मुक्तिशास्त्रान्यथाऽनुपपत्तिं प्रमाणयति*यदिति ॥ ६४ ॥ प्रासङ्गिकं समाप्य प्रकृतं विज्ञानवाक्य-

मुनिपृष्टं जगन्मूलं मुमुक्ष्वनुजिघृक्षया ॥
आह विज्ञानमानन्दं ब्रह्मेति श्रुतिरादरात् ॥ ६५ ॥
एतावदिह निर्णीतं विजिगीषुकथामुखात् ॥
तत्त्वमित्यखिलाध्यायतात्पर्यं चोपसंहृतम् ॥ ६६ ॥
विज्ञानमिति चैतन्यं न क्रिया नापि तत्फलम् ॥
न कारकं न चाभासः क्रियादेः किंतु भासकम् ॥ ६७ ॥
एतावन्मात्रयाथात्म्यात्कार्यकारणवस्तुनः ॥
श्रुत्या तत्त्वमसीत्युक्त्या तादात्म्यं प्रतिपाद्यते ॥ ६८ ॥
निर्धूताशेषदुःखौघहेतुत्वात्सुखमेव तत् ॥
अथैष परमानन्दो यो वै भूमेति शास्त्रतः ॥ ६९ ॥
विषयेन्द्रियसम्बन्धाद्यत्तु लोके सुखायते ॥
आद्यन्तवत्त्वादायासजन्यत्वाच्च न तत्सुखम् ॥ ७० ॥
अव्यावृत्ताननुगतभास्वद्विज्ञानमात्रतः ॥

---

माहेत्ते *मुनीति ॥ ६५ ॥ तस्यैवार्थान्तरमाह *एतावदिति ॥ अस्मिन्नध्याये विजिगीषुकथामुखेन तत्त्वनिर्णयादत्र निर्णीतमेव तत्त्वमध्यायषट्कतात्पर्यविषय इत्यप्यनेन वाक्येन सूचितमित्यर्थः ॥ ६६ ॥ तत्र विज्ञानपदस्यार्थमाह *विज्ञानमिति ॥ ६७ ॥ विज्ञानस्य कार्यकारणयोरन्यतरत्वान्न कारकादिवैलक्षण्यमित्याशङ्क्य तयोस्तत्रारोपादुभयविलक्षणं तदित्याह *एतावदिति । तस्य प्रत्यगभिन्नत्वमप्याह *श्रुत्येति ॥ ६८ ॥ आनन्दशब्दार्थमाह *निर्धूतेति । आनन्दशब्दस्य वैषयिकसुखार्थत्वात्कथं प्रकृतं विज्ञानमेव सुखमित्याशङ्क्य तस्य परमानन्दत्वे मानमाह *अथेति ॥ ६९ ॥ यस्त्वानन्दो वैषयिकसुखात्मेति तत्राह *विषयेति ॥ ७० ॥ उक्तविशेषणे हेतूकृत्य विशेष्यं वक्तुं ब्रह्मादामि-

निरविद्याद्वयत्वात्तत्साक्षाद्ब्रह्मेति शब्द्यते ॥ ७१ ॥
तदेवाविद्यया शक्त्या भोगमोक्षप्रदानतः ॥
जगतो मूलमित्याह रातिरित्यादिवाक्यतः ॥ ७२ ॥
अदृष्टफलसंप्रेप्सोः सुवर्णादि प्रयच्छतः ॥
फलदानेन तद्ब्रह्म परायणमुदीरितम् ॥ ७३ ॥
श्रु०-विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ॥ २८ ॥

इत्युपनिषदि नवमं ब्राह्मणं समाप्तम् ॥

दग्धमोहान्धकारस्य प्रत्यग्बोधाग्निना मुनेः ॥
ऐकात्म्ये वर्त्तमानस्य ब्रह्मात्मत्वात्परायणम् ॥ ७४॥
यत्र वाऽन्यदिवेत्येवं यत्र त्वस्येति शास्त्रतः ॥
भेदाभेदानुरोधेन व्याचक्षीत परायणम् ॥ ७५ ॥

---

त्याह *अव्यावृत्तेति। निरविद्याद्वयत्वम्—अविद्यातत्कार्यदुःखसंस्पर्शाभावोपलक्षिताखण्डसुखैकतानता ॥ ७१ ॥ कथं तर्हि ब्रह्मणः कारणादिभाव इति शङ्कां परिहरन्नुत्तरवाक्यमवतारयति *तदिति ॥ ७२ ॥ अवतारितवाक्यस्यार्थमाह *अदृष्टेति ॥ ७३ ॥

श्रुतौ—रातिरिति षष्ठ्यर्थे प्रथमा, रातेर्धनस्य दातुः कालान्तरफलदातृत्वाद्ब्रह्म परायणं परा गतिरित्यर्थः ॥

तिष्ठमानस्य तद्विद इत्यस्यार्थमाह *दग्धेति ॥ ७४ ॥

तद्विदो ब्रह्मविदोऽत एव तस्मिन्नेव वर्त्तमानस्य तद्ब्रह्म परायणमित्यनुषङ्गः ॥ २८ ॥

कर्मिणां भेदेन परायणं ब्रह्म, विदुषस्त्वभेदेनेत्ययुक्तम्। एकस्य परायणशब्दस्यार्थभेदायोगादिति तत्राह *यत्रेति। अविद्वद्दशायां भेदो, विद्वद्दशायां तदभावश्चेति वाक्यद्वयावगतभेदाभेदानुसारेणोभयविधम्परायणत्वं वाच्यमित्यर्थः ॥ ७५ ॥

तस्मात्तमस्विनो ब्रह्म भेदेनैव परायणम् ॥
ध्वस्ताविद्यस्य चैकात्म्यात्कैवल्येन परायणम् ॥ ७६ ॥
किं दुःखाभाव आनन्द उत भावस्तदाऽपि किम् ॥
संवेद्यश्चित्स्वभावो वा ब्रह्मानन्दोऽत्र चिन्त्यते ॥७७॥
आहुर्मोक्षं निरानन्दं साङ्ख्या वैशेषिका अपि ॥
तेषामानन्दशब्दोऽयं दुःखाभावस्य लक्षकः ॥ ७८ ॥
संवेद्यानन्दमिच्छन्ति मुक्तौ नैयायिकादयः ॥
भावरूपस्ततो मुख्यो विषयानन्दवन्मतः ॥ ७९ ॥
जक्षन्क्रीडन् रतिं प्राप्तः सर्वान्कामान्सहाश्नुते ॥
इत्यादिश्रुतयः प्राहुर्विषयानन्दतुल्यताम् ॥ ८० ॥
क्रियाकारकशून्यत्वेऽप्यस्यानन्दस्य वेदनम् ॥
यतो विज्ञानमानन्दं ब्रह्मेति श्रुतिरब्रवीत् ॥ ८१ ॥
यथा सुख्यहमस्मीति स्वानन्दः स्वेन गृह्यते ॥
ब्रह्मानन्दो ब्रह्मणैव गृह्यतां का विरुद्धता ॥ ८२ ॥

---

द्विविधं परायणत्वमुपसंहरति *तस्मादिति ॥ ७६ ॥ उक्तं ब्रह्मण आनन्दात्मत्वमुपपत्त्या द्रढयितुं विचारमारभते *किमिति ॥ ७७ ॥ तत्र पूर्वपक्षमाह *आहुरिति । कथं तर्हि तेषामानन्दश्रुत्युपपत्तिस्तत्राह *तेषामिति ॥ ७८ ॥ मुख्ये सम्भवति लक्षणाया अन्याय्यत्वादयं पक्षोऽतितुच्छ इति मत्वा पक्षान्तरमाह *संवेद्येति। मुक्तौ वेद्यानन्दाङ्गीकृतेर्न तत्रानन्दश्रुतिरमुख्यार्थेत्यर्थः ॥ ७९ ॥ मोक्षे सुखं संवेद्यमित्यत्र वाक्यान्तराण्युदाहरति *जक्षन्निति ॥ ८० ॥ मुक्तौ ज्ञानसामग्र्यभावात्कथं सुखविषया धीरित्याशङ्क्य श्रुतिप्रामाण्यमाश्रित्याह *क्रियेति ॥ ८१ ॥ किञ्चानन्दस्य वेद्यतया स्वानुभवसिद्धत्वादपि न तद्वेद्यत्वविरोधः शङ्क्यः, इत्याह *यथेति ॥ ८२ ॥ आ-

नैतदेवं यतो मोक्षे देहेन्द्रियविवर्जनात् ॥
ऐकात्म्यादपि नानन्दगोचरा युज्यते मतिः ॥ ८३ ॥
देहादिनैरपेक्ष्येण मतिश्चेज्जायते तदा ॥
लौकिकव्यवहारेऽपि देहादि स्यादनर्थकम् ॥ ८४ ॥
ब्रह्म चेन्नित्यमानन्दं वेत्ति विद्यात्तदा ध्रुवम् ॥
संसार्यपि तदैकात्म्यान्मुक्तौ कोऽतिशयो भवेत्॥८५॥
ब्रह्मानन्दमथान्यः सन्मुक्तौ वेत्ति घटादिवत् ॥
सर्ववेदान्तकोपः स्यात्तदैकात्म्यविरोधतः ॥ ८६ ॥
तस्माद्विज्ञानमानन्दमिति नानन्दगोचरा ॥
मतिः किन्तु चिदानन्दघनस्वाभाव्यमुच्यते ॥ ८७ ॥

---

नन्दो वेद्यो ब्रह्मणीति चोदिते सिद्धान्तयति *नेति । मोक्षे किमानन्दविषया धीरनित्या उत नित्या? तत्राद्यं निरस्य द्वितीयं प्रत्याह *ऐकात्म्यादिति ॥ ८३ ॥ मुक्तौ ज्ञानसामग्र्यभावेऽपि जन्यज्ञानाङ्गीकारे बाधकमाह *देहेति ॥ ८४ ॥ किञ्च मुक्तौ ब्रह्मीभूतः सन् ब्रह्मानन्दं वेत्ति उत ब्रह्मभिन्नः? आद्यमनुवदति *ब्रह्मेति । भूत्वेति शेषः । अस्मिन्पक्षे संसारदशायामपि ब्रह्माभिन्नत्वाज्जीवो ब्रह्मसुखं जानीयादित्याह *विद्यादिति । न च संसारदशायां ब्रह्मसुखमावृतमिति शङ्क्यम्, तस्य ब्रह्माभिन्नत्वे स्वस्य स्वविषयत्वायोगेन वेद्यत्वं न स्याद् । भिन्नत्वे प्रज्ञानघन इत्यादिश्रुतिविरोधः स्यादिति भावः ॥ ८५ ॥ अन्त्यमनूद्य प्रत्याह *ब्रह्मेति । घटादिवद्, दृश्यत्वेन तस्यानित्यत्वं स्यादिति शेषः । तस्यैव दूषणान्तरमाह *सर्वेति ॥ ८६ ॥ परमतनिरसनमुपसंहरति *तस्मादिति ॥ ८७ ॥ जक्षन्क्रीडन्नित्यादिश्रुतेर्मोक्षे ब्रह्मानन्दो वेद्य इत्युक्तमनूद्य परिहरति *जक्षादिति । यथा

जक्षदित्यादि यत्प्रोक्तं तच्चात्र न विरुध्यते ॥
सर्वात्मकत्वाद्विदुषः सर्वतः पाणिनादिवत् ॥ ८८ ॥
योगिदेवादिदेहेषु जक्षणादि यदीक्ष्यते ॥
तेन सर्वात्मकब्रह्मविदो मुक्तिः प्रशस्यते ॥ ८९ ॥
ननु जक्षणवन्मुक्तौ सर्वात्मत्वात्परात्मनः ॥
दुःखित्वमपि सम्प्राप्तं कुम्भीपाकादिदेहिषु ॥ ९० ॥
मैवं नारकदेहेषु तादात्म्यभ्रान्त्यभावतः ॥
न दुःखं प्राप्यते नापि विद्यास्तुत्युपयोगि तत् ॥ ९१ ॥
आनन्दब्रह्मविज्ञानपदार्थैकत्वहेतुतः ॥
नीलोत्पलादिवन्नात्र संसर्गो ब्रह्मणीष्यते ॥ ९२ ॥
न जडं ज्ञानरूपत्वादानन्दत्वान्न निःसुखम् ॥

---

'सर्वतः पाणिपादं तद्' इत्यादिना सर्वात्मतोच्यते, तथाऽत्रापि विदुषः सर्वात्मतया विवक्षितत्वादानन्दाद्येषत्वमविरुद्धमित्यर्थः ॥ ८८ ॥ विदुषः सार्वात्म्येऽपि कथं जक्षणादिश्रुतिर्निर्वहेत्तत्राह *योगीति ॥ ८९ ॥ विदुषः सार्वात्म्येन योग्यादिषु प्राप्तजक्षणाद्यनुवादे स्यादतिप्रसक्तिरिति शङ्कित्वा परिहरति *नन्वित्या-दिना ॥९०॥९१॥ विज्ञानवादिवाक्यीयब्रह्मानन्दस्याखण्डत्वेनाद्वेयत्वमुक्तम् । केचित्–वाक्यार्थः संसर्गो वा विशिष्टो वेति वदन्तो विज्ञानादिवाक्यं नाखण्डार्थं मृष्यन्ते तान्प्रत्याह *आनन्देति । एतानि पदानि एकस्मिन्नेव बुभुत्सिते ब्रह्मप्रातिपदिकार्थे लक्षणया पर्यवस्यन्ति, अन्यथा क्व बुभुत्सितबोधिनो वाक्यस्य प्रामाण्यं स्यादिति भावः । संसर्गग्रहणं विशिष्टोपलक्षणार्थम्॥९२॥ विज्ञानादिवाक्यस्याखण्डार्थपरत्वे तस्य एकेनैव पदेन सिद्धेः पदान्तरं व्यर्थमित्याशङ्क्य विज्ञानादिपदानां लक्ष्यार्थैक्येऽपि

नान्तवद्ब्रह्मरूपं तदिति योज्यं पदत्रयम् ॥ ९३ ॥
विषयानन्दवज्ज्ञातो वेद्यं किंतु स्वयम्प्रभम् ॥
तादृगानन्दरूपत्वं सुप्तावप्यवसीयताम् ॥ ९४ ॥
तादृग्ब्रह्मात्मबोधेन कृतार्थत्वमतिस्तु या ॥
सा धीवृत्तिस्वरूपत्वाद्वेद्या विषयतुष्टिवत् ॥ ९५ ॥
आरभ्य मानुषानन्दमुत्तरोत्तरवृद्धितः ॥
श्रुता हैरण्यगर्भान्ता ब्रह्मानन्दस्य विन्दवः ॥ ९६ ॥
आनन्दसागरः सोऽयमनन्यानुभवात्मना ॥
सर्वदा सर्वतो भाति सर्वं वस्तु तदात्मकम् ॥ ९७ ॥
शतानि पञ्च श्लोकानां द्वाविंशतिरितीरिता ॥
संख्या वार्त्तिकसारेऽस्मिन्पञ्चमाध्यायसङ्ग्रहे ॥ ९८ ॥

इति वार्त्तिकसारे तृतीयाध्यायः समाप्तः ।

---

व्यावर्त्यभेदादर्थवत्त्वोपपत्तिरित्यभिप्रेत्याह *नेति ॥ ९३ ॥ वाक्यार्थस्याखण्डैकरसत्वे फलितमाह *विषयेति । ब्रह्मानन्दस्यावेद्यत्वे हेत्वन्तरमाह *तादृगिति । प्रमात्राद्युपरमेऽपि स्वापे सुखस्फुरणादपि प्रतीचः सुखात्मत्वसिद्धिरित्यर्थः ॥ ९४ ॥ विदुषाम् 'अहं धन्योऽस्मि' इति सुखस्यानुभूयमानत्वात्कथमवेद्यतेति तत्राह *तादृग्ब्रह्मेति । सुखरूपत्वं तादृक्शब्दार्थः ॥ ९५ ॥ एवं ब्रह्मानन्दस्यावेद्यत्वं प्रसाध्य तारतम्येन श्रूयमाणसर्वानन्दहेतुत्वेन तस्य निरतिशयत्वमप्याह *आरभ्येति ॥९६॥ आत्मनो निरतिशयानन्दचिदेकतानन्दत्वमुक्तमुपसंहरंश्छिष्यविश्वासाय स्वानुभवं प्रकटयति *आनन्देति ॥ ९७ ॥ अध्यायश्लोकसङ्ख्यां गणयति *शतानीति ॥ ९८ ॥

इति वार्त्तिकसारटीकायां तृतीयाध्याये नवमं ब्राह्मणं समाप्तम् ।

कथितः पञ्चमे जल्पः षष्ठे वाद उदीर्यते ॥
वादिनामपि शिष्याणां बुद्ध्यारोहो द्विधोक्तितः ॥१॥
षड् ब्राह्मणानि तेष्वाद्ये उपास्तिः क्रममुक्तये ॥
द्वितीये जाग्रदाद्युक्त्या प्रत्यगात्मविनिर्णयः ॥ २ ॥
तृतीये परलोकस्य मोक्षस्यापि निदर्शनम् ॥
दार्ष्टान्तिकं चतुर्थे तु पञ्चमे बोधसाधनम् ॥ ३ ॥
षष्ठे वंश इति प्रोक्ता ब्राह्मणार्था अथोच्यते ॥
प्रथमब्राह्मणे प्रोक्तं चतुष्पात्वेन चिन्तनम् ॥ ४ ॥

श्रुतिः–जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज तꣳ होवाच याज्ञवल्क्य किमर्थमचा-

---

अवस्थात्रयनिर्मुक्तमसङ्गमजमव्ययम् ॥
आत्मानमद्वयं राममानन्दघनमाश्रये ॥ १ ॥

वृत्तवर्त्तिष्यमाणयोः सङ्गतिमाह *कथित इति । परपराजयमात्मविजयं च न्यायतो लब्धवतां वादिनामपि तत्त्वनिर्धारणे बुद्धिस्वास्थ्यं भवतीत्यध्याययोरुत्थाप्योत्थापकरूपः सम्बन्ध इति भावः ॥ १ ॥ अस्मिन्नध्याये ब्राह्मणसङ्ख्यां दर्शयंस्तदर्थानपि संगृह्णाति *षडित्यादिना ॥ २ ॥ ३ ॥ प्रथमब्राह्मणतात्पर्यमुक्तं स्पष्टं विभजन् इत्याह *अथोच्यत इति ॥४॥

अक्षरार्थस्तु—अत्राचार्यवता श्रद्धादिसम्पन्नेन विद्या लब्धव्येत्याचारप्रदर्शनायाख्यायिका प्रणीयते ।

जनको ह वैदेह आसाञ्चक्रे आसनं कृतवान्दर्शनकामेभ्य आस्थायिकां दत्तवानित्यर्थः। अथ ह तस्मिन्नवसरे याज्ञवल्क्य आवव्राज आगतवान् । तमागतं यथावत्संपूज्य राजोवाच । किमर्थमचारीरागतोऽसि, किंपुनरपि पशूनिच्छन्नाहोस्विदण्वन्तान् सूक्ष्मवस्तु-

री: पशूनिच्छन्नप्रन्तानीत्युभयमेव सम्राडिति होवाच ॥ १ ॥

यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किंꣳस्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य। वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति हो-

---

निर्णयफलाभ्यश्नान्मत्तः श्रुत्वा तेषामुत्तरं वक्तुं वा त्वदागमनमित्यर्थः । एवं पृष्ट उभयमेव सम्राडिति होवाच–प्रश्नप्रतिवचनं, पशुग्रहणम्, उभयमप्यभिलषितमित्यर्थः ॥ १ ॥

स्वयमेव प्रश्नमुत्थापयति। यत्ते तुभ्यं कश्चिदब्रवीदाचार्यः । अनेकाचार्यसेवी भवान्तच्छृणवामेति।आह राजा अब्रवीन्मे कश्चिदाचार्यः जित्वा नामतः शिलिनोऽपत्यं शैलिनिः।वाग्वै ब्रह्म,वाग्देवतैव ब्रह्मेति ।याज्ञवल्क्य आह–यथा मातृमान्–यस्य पुत्रस्य सम्यगनुशासनकर्त्री माता विद्यते स मातृमान्, तत ऊर्ध्वं यस्य पिताऽनुशास्ता स पितृमान्। उपयनादूर्ध्वमासमावर्त्तनाद्यस्याचार्योऽनुशास्ता स आचार्यवान्, एवं शुद्धित्रयहेतुसंयुक्त एवाचार्यः परमाप्तः। स यथा ब्रूयाच्छिष्याय तथाऽसौ शैलिनिरुक्तवान्वागेव ब्रह्मेति । अवदतो हि किं स्यादिति नहि मूकस्येहामुत्रार्थं किंचित्स्यात् । एवमनुमोदने कृते ब्रह्मविद्ययाऽऽत्मानं कृतकृत्यं मन्वानं राजानं प्रत्याह अब्रवीदिति। ते तुभ्यं तस्य ब्रह्मण आयतनं शरीरं प्रतिष्ठामाधारम् अब्रवीदुक्तवान्किमित्यर्थः । आह राजा

**वाच वाचा वै सम्राड् बन्धुः प्रज्ञायते ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳहुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राड् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भू-**

---

न मे ऽब्रवीद् इति। मुनिराह—यद्येवम् एकपाद्वा एतत्—एकः पादो यस्य तदेकपाद् ब्रह्म, त्रिभिः पादैः शून्यमुपास्यमानमपि न फलाय भवतीत्यर्थः । आह राजा-यद्येवं त्वं विद्वान् स वै नोऽस्मभ्यं ब्रूहि प्रतिष्ठायायतनं चेत्यर्थः । मुनिराह—वागेवायतनं वाग्देवस्य ब्रह्मणो वागेव करणम् आयतनं शरीरम्, आकाशोऽव्याकृताख्यः प्रतिष्ठा, प्रज्ञेत्येनदुपासीतेति । प्रज्ञेतीयमुपनिषद्ब्रह्मणश्चतुर्थः पादः । प्रज्ञा किं ब्रह्मणः स्वरूपभूता उत आयतनादिवद्भिन्नेति पृच्छति राजा–का प्रज्ञेति। ब्रह्मस्वरूपत्वेन प्रज्ञा चिन्तनीयेति मत्वा वागेव सम्राडिति होवाच। प्रज्ञात्वं कथमित्याशङ्क्य तदुपपादयति—वाचा वै सम्राड् बन्धुः प्रज्ञायते 'अस्माकमयं बन्धुः'इत्युक्ते प्रज्ञायते हि बंधुः । तथा ऋग्वेदादि व्याख्यातमधस्तात् । इष्टं यागादिनिमित्तं धर्मजातम् । हुतं होमनिमित्तम् । अशितमन्नदाननिमित्तम् । पायितं पानदाननिमित्तम् । अयं लोकः इदं जन्म, परश्च लोकः प्रतिपत्तव्यं जन्म। सर्वाणि च भूतानि वाचा वै सम्राट् ज्ञायन्ते अतो वाग्वै सम्राट् परमं ब्रह्म । नैनं यथोक्तब्रह्मवेदिनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति उपहारसमर्पणादिभिरिह पूजयन्तीत्यर्थः । भावनापरिपाकवशादिह देवो

तान्याभिक्षरन्ति देवो भूत्वा देवानप्येति य एवंविद्वा-
नेतदुपास्ते हस्त्यृषभꣳसहस्रं ददामीति होवाच जनको
वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत ना-
ननुशिष्य हरेतेति ॥ २ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उ-
दङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमा-
न्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्रा-
णो वै ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते
तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्रा-
डिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः
प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य
प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् का-
मायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र

---

भूत्वा पुनः शरीरे पतिते देवानप्येति अपिगच्छति य एवं वि-
द्वानेतदुपास्ते । एवमनुशिष्टो राजा विद्यानिष्क्रयार्थमुवाच ।
हस्तितुल्यऋषभो हस्त्यृषभो यस्मिन् गोसहस्रे तद्धस्त्यृषभं सहस्रं
ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः
अननुशिष्य कृतार्थमकृत्वा शिष्याद्धनं न हरेतेति मम पिता
अमन्यत ममाप्ययमेवाभिप्रायः ॥ २ ॥

यदेवेत्यादि पूर्ववत् । उदङ्को नामतः शुल्बस्यापत्यं शौल्बायनः
प्राणो वै ब्रह्मेत्यत्र प्राणशब्दो वायुदेवतावचनः । प्राण एवायतनमि-
त्यत्र प्राणशब्दः पञ्चवृत्तिप्राणविषयः । प्राणस्य प्रियत्वमुपपादय-
ति–प्राणस्य वै सम्राट् कामायार्थाय अयाज्यं पतितादिकं याजय-
ति, अप्रतिगृह्यस्य म्लेच्छादेः प्रतिगृह्णात्यपि । तत्र तस्यां दिशि ।

वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राड् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति। देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳसहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता

---

वधनिमित्तमाशङ्कं वधाशङ्का, यां दिशमेति तस्कराद्याकीर्णां तस्यां दिशि वधशङ्का भवतीत्यर्थः । एतत्सर्वं प्राणस्य प्रियत्वे हेतुरित्याह * प्राणस्येति ॥ ३ ॥

बर्कुरिति नामतः वृष्णस्यापत्यं वार्ष्णः। चक्षुषि आदित्यो देवता। चक्षुषः कथं सत्यत्वं तत्राह। चक्षुषा वै सम्राट् पश्यन्तमाहुः

मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यश्रृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्रꣳश्रोत्रं वै सम्राट् परमं ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ५ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे स-

---

'अद्राक्षीस्त्वं हस्तिनम्' इति । स चेद् 'अद्राक्षम्'इत्याह तत्सत्यं भवति, श्रोत्रेण श्रुतं कदाचिदनृतमपि स्यादिति भावः ॥ ४ ॥

गर्दभीविपीत इति नामतः, भारद्वाज इति गोत्रतः । श्रोत्रे दिग्देवता । दिश आनन्त्यं यस्मात्तस्माद्वै सम्राट् प्राचीमुदीचीं वा यां काञ्चन दिशं गच्छति नैवास्या अन्तं गच्छति अतो अनन्ता दिशः । तथापि श्रोत्रे किमायातं तदाह—दिशो वै सम्राट् श्रोत्रं तस्माद्दिशोऽनन्त्यमेव श्रोत्रानन्त्यम् ॥ ५ ॥

सत्यकामो नामतः जबालाया अपत्यं जाबालः ।

त्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान्पि-
तृमानाचार्यवान्ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै
ब्रह्मेत्यमनसो हि किꣳस्यादित्यब्रवीत्तु ते तस्या-
यतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति
स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः
प्रतिष्ठाऽऽनन्द इत्येनदुपासीत का आनन्दता या-
ज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै स-
म्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते
स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं म-
नो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा
देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभꣳ स-
हस्रं ददामीति होवाच जनको वैदेहः स होवाच
याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति॥६॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे वि-
दग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृ-
मान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्
हृदयं वै ब्रह्मेत्यहृदयस्य हि किꣳस्यादित्यब्रवीत्तु
ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एत-
त्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवाय-
तनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थि-

---

मनसि चन्द्रो देवता । यस्मान्मन एवानन्दः तस्मान्मनसा
कामुकः स्त्रियमभिहार्यते प्रार्थयते तस्यां प्रतिरूपोऽनुरूपः पुत्रो
जायते स आनन्दः आनन्दहेतुः पुत्रः । स एनं मनसा निर्वर्त्तते
तन्मन आनन्दहेतुः ॥ ६ ॥

सर्वभूतानां हृदयायतनत्वं शाकल्यब्राह्मणे उपपादितम-

ततो याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राड् सर्वेषां भूतानामायतनं हृदयं वै सम्राड् सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राड् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राड् परमं ब्रह्म नैनं हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवंविद्वानेतदुपास्ते हस्त्यृषभं सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

इत्युपनिषदि प्रथमं ब्राह्मणम् ॥ १ ॥

वा०–वागाद्या देवतास्तासामाधारस्तत्तदिन्द्रियम् ॥
अव्याकृतं च नामेति पादाश्चत्वार ईरिताः ॥ ५ ॥
चतुष्पाद्ब्रह्म सर्वात्मरूपमस्तीति चिन्तनात् ॥
प्राणिभिः पूज्यते सर्वैरिह वागाद्यनुग्रहात् ॥ ६ ॥

---

नुसन्धेयम् । हृदये च प्रजापतिर्देवता ॥ ७ ॥

अत्र ब्रह्मणश्चतुष्पात्त्वेनोपासनं विभजत इत्युक्तम् । तदेव विभजते *वागाद्या इति । अत्र वाग्वै ब्रह्मेत्यादिनोक्ता अग्न्यादिदेवताः प्रथमः पादः । वागेवायतनमित्यग्न्यादिशरीरत्वेनोक्तवागादिकरणानि द्वितीयः पादः । आकाशः प्रतिष्ठेति तदाधारत्वेनोक्ताव्याकृतं तृतीयः पादः । प्रज्ञेत्यादिभिरुक्तप्रज्ञादिरस्य नामानि चतुर्थः पादः । तथा चाग्न्यादिदेवतासु ब्रह्मदृष्ट्या कार्यकारणात्मकं सर्वं जगदुपास्यत्वेनास्मिन्प्रकरणे विवक्षितं न त्वेकदेशावच्छिन्नोपास्तिः । देवानप्येतीति बहुवचनादेकैकोपास्तेरनेकदेवताऽऽप्त्ययोगादिति भावः ॥५॥ उपास्तिप्रकारमभिनयंस्तत्फलमाह *चतुष्पादित्यादिना ॥ ६ ॥ अत्र देवो भूत्वेत्या-

परत्राप्नोति देवत्वं भावनोपचयादयम् ॥
अतो विलक्षणं ब्रह्मविद्यायास्तदुपासनम् ॥ ७ ॥
प्रागपि ब्रह्मविद्याया ब्रह्मैवाभूद्यथा तथा ॥
देवोपासनतः पूर्वं नाभूद्देव उपासकः ॥ ८ ॥
किन्त्वविच्छिन्नतद्ध्यानाद्देवोऽस्मीत्यभिमन्यते ॥
तद्भावनाभावितः सन्मृतौ देवत्वमाप्नुयात् ॥ ९ ॥
असमाप्तेः पुमर्थस्य न मुख्यमनुशासनम् ॥
तद्दत्तां याज्ञवल्कयोऽतो नाग्रहीद्गुरुदक्षिणाम् ॥ १० ॥
यस्मिञ्ज्ञातेऽखिलं ज्ञातं कृतं कृत्यं च कामितम् ॥
प्राप्तं, त्याज्यं च संत्यक्तं मुख्यं तदनुशासनम् ॥ ११ ॥

इति वार्तिकसारे चतुर्थाध्याये प्रथमब्राह्मणं समाप्तम् ॥ १ ॥

द्वितीयब्राह्मणे जाग्रत्स्वप्नसुप्तिसुखान्निजम् ॥
आत्मानं शास्त्यतो राजा यथाविध्युपसन्नवान् ॥ १ ॥

---

दिश्रुतिरुपासनफलसङ्कीर्तनद्वारोपास्तिज्ञानयोर्वैलक्षण्यद्योतनपरे-त्याह *अत इति । भावनावशाद्देवत्वप्राप्तिकथनमतःशब्दार्थः ॥ ७ ॥ वैलक्षण्यमेव स्फुटयति *प्रागित्यादिना ॥ ८ ॥ ९ ॥ ननु याज्ञवल्क्येनास्या एवोपास्तेरनुशासनान्नानुशिष्येत्या-द्युक्तिरयुक्ता तत्राह *असमाप्तेरिति ॥ १० ॥ किं तर्हि मुख्यम-नुशासनं तदाह *यस्मिन्निति ॥ ११ ॥

इति वार्त्तिकसारे चतुर्थाध्याये टीकायां प्रथमब्राह्मणं समाप्तम् ॥ १ ॥

अनन्तरब्राह्मणतात्पर्यमाह *द्वितीयेति । निजमात्मानं प्रत्यगभिन्नपरमात्मानमित्यर्थः । समुदायतात्पर्यमुक्त्वा जनको हेत्यादेरर्थमाह *अत इति । आत्मज्ञानार्थमित्यर्थः ॥ १ ॥

श्रुतिः—जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृंदारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क गमिष्यसीति ॥

वार्त्ति०–उक्तोपासनतः प्राप्यो देवभावः पुरोदितः ॥
देवत्वान्मुच्यमानेन प्राप्तं पृच्छत्यसौ मुनिः ॥ २ ॥
उपासनानि सर्वाणि परविद्याधिकारतः ॥
क्रममुक्तिफलानीति प्रश्नेनानेन गम्यते ॥ ३ ॥

---

श्रुतौ–कूर्चादासनविशेषाद् उत्थायोप समीपमवसर्पन् पादयोर्निपतन्नित्यर्थः। अनु मा शाधि मामनुशाधीत्यर्थः। इतिशब्दो वाक्यसमाप्त्यर्थः। स याज्ञवल्क्य उवाच यथा वै लोके महान्तं दीर्घमध्वानमेष्यन् गमिष्यन् रथं वा स्थलेन गमिष्यन्नावं वा जलेन गमिष्यन् समाददीतैवमेवैताभिरुपनिषद्भिः प्रज्ञत्येतादित्यादिपूर्वोक्ताभिर्युक्तं ब्रह्मोपासीनः समाहितात्मा संयुक्तात्माऽसि। एवं वृन्दारकः पूज्यश्चाढ्यश्च न दरिद्रः, अधीतवेदश्च उक्ताश्चोपनिषदस्तवाचार्यैः स त्वमुक्तोपनिषत्कः, एवं सर्वविभूतिसम्पन्नोऽपि सन्नितो विमुच्यमानः एभिर्नौस्थानीयाभिः सहितः क गमिष्यसि किंवस्तु प्राप्स्यसीत्येतत्।

ननु देवानप्येतीति देवभावस्य फलत्वोक्तेः क गमिष्यसीति प्रश्नानुपपत्तिरित्याशङ्क्य प्रश्नस्य विषयभेदं दर्शयति *उक्तेति ॥ २ ॥ अनुपपत्तिं निरस्य प्रश्नस्य तात्पर्यमाह *उपासनानीति। अत्राधिकारशब्दः प्रकरणवचनः ॥ ३ ॥

ब्रह्मतत्त्वविदोऽप्यस्य राज्ञो गतिमजानतः ॥
तां वक्तुं प्रश्न इत्याहुः केचित्, तत्तु न युज्यते ॥४॥
यत्साक्षादित्युपक्रम्य य आत्मेत्युपसंहृतेः ॥
ब्रह्मणः स्वात्मरूपत्वाद्ब्रह्मणि स्यात्कथं गतिः ॥ ५ ॥
गतिगन्तव्यगंत्रादेरोतप्रोतात्मवर्त्मना ॥
ब्रह्मात्मनि समाप्तत्वाद्गतिः का परमात्मनि ॥ ६ ॥
ब्रह्मैव सन्नवाप्नोति ब्रह्मेत्यादिश्रुतेरयम् ॥
अविद्यामात्रविध्वस्तावनाप्तवदवाप्यते ॥ ७ ॥
गन्तव्यं तु न जानामीत्यविद्यां स्वात्मनि स्थिताम् ॥
प्रकटीकुर्वतो राज्ञ इत्थं तत्त्वमुपादिशत् ॥ ८ ॥

श्रुतिः–नाहं तद्भगवन्वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा

---

इत इत्यादेरर्थं स्वपक्षे दर्शयित्वा भर्तृप्रपञ्चोक्तं तमनूद्य दूषयति *ब्रह्मेति ॥ ४ ॥ अयुक्तिमेवाह*यदिति । ब्रह्मात्मनोरैक्यस्य श्रुतत्वात्तत्र गत्यनुपपत्तेर्गतिविषयप्रश्नोऽनुपपन्न इत्यर्थः ॥ ५ ॥ कथं गत्यनुपपत्तिस्तदभावे वा कथं परमाप्तिस्तत्राह *गतीत्यादिना ॥ ६ ॥ ७ ॥ नाहं तदित्यादेरर्थमाह *गन्तव्यमिति ॥ ८ ॥

नाहं तत् भगवन्वेदेति राज्ञा स्वाज्ञाने प्रकटितेऽथ यदि न जानीषे तर्हि यत्र गमिष्यसि तत् ते तुभ्यं वक्ष्यामीति प्रतिज्ञाय ब्रवीतु भगवानिति राज्ञा पुनः प्रार्थितः सन्निन्धो हेत्यादिना विश्वतैजसप्राज्ञानुवादेन तुर्यं तत्त्वमुपदिदेशेत्यर्थः ॥ १ ॥

एवं ब्राह्मणशेषस्य समुदायतात्पर्यमुक्त्वा इन्धपदस्यार्थमाह

एतमिन्धॅं सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्ष-
प्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

इन्ध्यतेऽहर्निशं यस्मादिन्धनामा ततः पुमान् ॥
वीर्यवद्दक्षिणं चक्षुः श्रौतो वाऽतिशयोऽत्र हि ॥९॥
परोक्षनामव्याजेन परमैश्वर्यवाचिनम् ॥
इन्द्रशब्दं प्रयुञ्जान इन्धस्याहेश्वरात्मताम् ॥ १० ॥

श्रुतिः—अथैतद्वामेऽक्षणि पुरुषरूपमेषाऽस्य पत्नी
विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशो-
ऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डोऽथैनयो-

---

*इन्ध्यत इति ॥ इंध्यते दीप्यते स्थूलार्थभोक्तृत्वेन, विश्वस्य सदा जागरणे स्फूर्त्तेरिन्धनामत्वमुपपन्नमिति भावः ॥ दक्षिणेऽक्षिन्निति विशेषे निमित्तमाह *वीर्यवदिति ॥ विश्वस्य पुनः स्वामिनो भोक्तृत्वं लौकिकवत्क्वचिदभिव्यक्तस्य वक्तव्यं, दक्षिणे चक्षुषि तदृव्यक्तिः श्रुत्यनुभवसिद्धा, तेन तद्भोक्तृत्वसिद्धये विशेषोक्तिरिति भावः ॥ ९ ॥

तं वा एतमित्यादेरयमर्थः—तं वा एतं दक्षिणाक्षिण्य-भिव्यक्तं विश्वमिन्धनामानं सन्तमिन्द्र इत्याचक्षते परोक्षेण, यस्मात्परोक्षप्रिया इव हि देवाः प्रत्यक्षनामग्रहणं द्विषन्ति ॥ २ ॥

ननु देवानां परोक्षप्रियत्वेऽपि शब्दान्तरं विहायेश्वरवाचीन्द्र-शब्दप्रयोगे को हेतुस्तत्राह *परोक्षेति ॥ १० ॥

अथैतदित्यादेरयमर्थः—प्रासङ्गिकध्यानारंभार्थोऽथशब्दः। पुरुषरूपशब्दश्चैतन्यवचनः। एतत्प्रसिद्धं वामाक्षिनिष्ठं यच्चैतन्यमेषाऽस्य विश्वस्य वस्तुत ईश्वरात्मत्वादिंद्रशब्दाभिहितस्य पत्नी । अत्र विराट्शब्दो भोग्यपरः, भोक्तुर्विश्वस्य भोग्या पत्नीत्यर्थः

रेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिव ॥

वार्त्ति०—दक्षिणाक्षिणि चैतन्यं पुरुषो, वामचक्षुषि ॥
चैतन्यं स्त्रीतिभेदोऽयं कल्प्यते सुखबुद्धये ॥ ११ ॥
एकस्यैव हि देवस्य विभागः स्थानभेदतः ॥
अग्नीषोमात्मना श्रुत्या ध्यानार्थं त्विह भण्यते ॥१२॥
उक्ता जाग्रदवस्थैवमिन्द्रस्य व्यवहारकृत् ॥
दम्पत्योः सङ्गमः स्वप्नो हार्दाकाशेऽथ वर्ण्यते ॥ १३ ॥
सम्भूय स्तुतिरत्रेति संस्तावो हृदये सुषिः ॥

---

ननु विश्वस्येश्वरात्मत्वमुक्त्वा तस्य पुनर्भोग्यस्त्रीनिरूपणं किमर्थं तत्राह* दक्षिणेति । ब्रह्माभेदयोग्यत्वंपदलक्ष्यचैतन्यस्य दम्पतीत्वेन सुखाववोधार्थं दक्षिणनेत्रोपलक्षितचैतन्यं पुरुषः, वामनेत्रोपलक्षितं स्त्रीति केवलं श्रुत्या भेदः कल्पित इत्यर्थः॥११॥ उपासनार्थं वा चैतन्यभेदकल्पनमित्याह *एकस्येति ॥ स्थानं चक्षुर्द्वयम् । स्थानभेदादौपाधिकभेदे प्रसिद्धिं वक्तुं हिशब्दः । भोक्तारमग्न्यात्मना, भोग्यं सोमात्मना ध्यातुमित्यर्थः ॥ ध्यानफलं चोक्तमधस्तात् ॥ १२ ॥ इंध इत्यादिवाक्यतात्पर्यमुपसंहरंस्तयोरेष इत्याद्यवतारयति* उक्तेति । मिथुनत्वेन निरूपितस्य विश्वस्यावस्थांतरे तैजससंज्ञस्य हृदयाकाशे स्वप्नावस्था वर्ण्यत इत्यर्थः ॥ १३ ॥ अक्षराणि योजयति *सम्भूयेति ॥

य एषोऽन्तर्हृदय आकाशः स एष तयोर्दम्पत्योः संस्तावः । अत्र संभूय तौ संस्तवमन्योऽन्यस्तुतिं कुर्वाते मिथः संगतिं गच्छत इति यावत् । अत्र हृदयाकाशे ताभ्यां स्तुतिः क्रियत इति हृदयसुषिः संस्ताव इत्युच्यते इति योजना ।

अणिष्ठान्नरसो रक्तपिण्डो यः सोऽन्नमेतयोः ॥ १४ ॥
हृद्यन्तः शतनाडीनां पुञ्जं प्रावरणं विदुः ॥

श्रुतिः–अथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्त्येव ताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छरीरादात्मनः ॥ ३ ॥

वा॰ स्वप्नाज्जागरणप्राप्त्यै मार्गो नाड्यूर्ध्वगामिनी॥१५॥

---

अथैनयोरित्यादेरर्थमाह *अणिष्ठेति ॥ १४ ॥

दम्पत्योः स्तुतिहेत्वाद्युक्तिमारंभार्थः श्रुतावथशब्दः । योऽणिष्ठोऽन्नरसः स लोहितपिंडः सूक्ष्मासु नाडीष्वनुप्रविष्टोऽतर्हृदये मिथुनीभूतयोरेतदन्नं भवति, स्थितिसाधनं भवतीत्यर्थः ।

अथैनयोरेतत्प्रावरणमित्यादेरर्थमाह *हृद्यन्तरिति ॥ अंतर्हृदये छिद्रबहुमत्त्वान्नाडीशतं छिद्रस्य जालकं गवाक्षमिव प्रतीयमानं नाडीपुञ्जं यदस्ति, तदेनयोर्दंपत्योरेतदावरणं प्रसिद्धपरिधानस्थानीयमित्यर्थः ।

अथैनयोरेषेत्यादिश्रुतेरयमर्थः–एनयोरेषा सृतिर्मार्गः, संचरत्यनयेति सञ्चरणी भवति । का सा सृतिस्तत्राह–यैषा हृदयात् हृदयदेशादूर्ध्वाऽभिमुखा नाड्युच्चरति । नाडीनां परिमाणमाह— यथा लोके केशः सहस्रधा भिन्नोऽत्यन्तसूक्ष्मो भवत्येवमतिसूक्ष्मा अस्य देहस्य सम्बन्धिन्य एता हिता इत्येवमाख्याता नाड्यस्ताश्चांतर्हृदये हृदयमांसपिंडे प्रतिष्ठिता भवंति, एताभिरत्यंतसूक्ष्मनाडीभिरेतदन्नमास्रवच्चाप्नुवदास्रवति व्याप्नोति ॥

ननूर्ध्वगतिन्या नाड्या मार्गत्वोक्तिरयुक्ता प्राप्तव्यदेशाभा-

यस्मादन्नरसः केशसहस्रांशेन सम्मितैः ॥
नाडीभेदैः स्वप्नदृशं याति सूक्ष्मतरस्ततः ॥ १६ ॥
स्थूलो रसः पुरीषात्मा बहिर्यात्यतिसूक्ष्मकः ॥
शरीरमिन्धमात्मानं तर्पयेत्सप्तधातुभिः ॥ १७ ॥
रसः सूक्ष्मतरो लिङ्गं पोषयन् लिङ्गधारिणः ॥
आत्मनो वासनाभोगकारी स्वप्ने च चिन्तने ॥ १८ ॥
स्वचिदाभाससंव्याप्तिः पुंभोगः सुखदुःखयोः ॥
सोऽप्यस्य देवतातन्त्रो देवताश्चान्नसंश्रयाः ॥ १९ ॥
प्रविविक्ततराहार इवैवेत्युपमानया ॥

---

तत्राह *स्वप्नादिति॥१५॥ 'तस्मादेष प्रविविक्ताहारतरः' इत्यत्र तैजसस्थितिहेतोरन्नरसस्य सूक्ष्मतरत्वमुक्तमुपपादयति *यस्मादिति ॥ १६ ॥ सूक्ष्मतरान्नरसस्य तैजसस्थितिहेतुत्वं स्थूलसूक्ष्मांशयोर्विनियोगपूर्वकं दर्शयति *स्थूलइत्यादिना ॥ १७ ॥ उक्तान्नरसस्य लिङ्गपोषकत्वेऽपि तैजसस्य किमायातं तत्राह* लिङ्गधारिण इति॥ लिङ्गपोषणद्वारा तदुपहितस्य स्वप्नमनोरथयोः वासनाप्रापितभोगहेतुत्वात्सूक्ष्मतरान्नरसस्तैजसाऽऽहारो भवतीत्यर्थः ॥ १८ ॥ नन्वविक्रियस्यात्मनः कथं भोगस्तत्राह *स्वेति ॥ अन्तःकरणधर्मसुखादिवृत्तिषु चैतन्यव्याप्तिरेव पुरुषस्य भोग इत्यर्थः ॥ कथं तर्ह्यात्मनि भोक्तृत्वधीस्तत्राह* सोऽपीति ॥ अपिरवधारणे । अस्यात्मनः स्वसम्बन्धितया प्रतीयमानो भोगः देवतातंत्र एव । देवताः इन्द्रियाणि, तत्तन्त्रलिङ्गतादात्म्यभ्रमादात्मनि भोक्तृत्वधीरिति भावः ॥ इंद्रियाणां तर्हि किं कारणमित्याशङ्क्योक्तं स्मारयति *देवता इति ॥ १९ ॥ प्रविविक्ताहारतर इवैवेत्यत्रेवशब्दस्य विवक्षितमर्थमाह* प्रविविक्तेति ॥

लिङ्गाहारादण्वणीयान्प्राज्ञाहारो विवक्षितः ॥ २० ॥

श्रुतिः–तस्य प्राची दिक्प्राञ्चः प्राणा दक्षिणा दिग्द
क्षिणे प्राणाः प्रतीची दिक्प्रत्यञ्चः प्राणा उदीची दि
गुदञ्चः प्राणा उर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिग
वाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः ॥

वा०–स्वप्नावस्था समाप्ताऽथ तस्य प्राचीति वाक्यतः ।
सुषुप्तिरुच्यते तत्र युक्ता सर्वदिगात्मता ॥ २१ ॥
आश्रयैः करणैर्हीनो ग्रस्ताध्यात्माधिदैवतः ॥
सुषुप्तावेक एवास्ते प्रज्ञानघनविग्रहः ॥ २२ ॥

---

इवेवेत्यनया श्रुत्योपमोच्यते ॥ यथा प्रविविक्ताहारो विश्वः विश्वाहारस्यापि स्थूलपुरीषाद्यंशापेक्षया सूक्ष्मत्वात् । तद्वद्यमपि तैजसो न प्रविविक्ताहार एव किन्तु प्रविविक्ताहारतरः । यथा च प्राज्ञ प्रविविक्ताहारतर एव न तथा लिङ्गात्मा किन्तु प्रविविक्ताहारतर इव भवतीति लिङ्गाहारस्य प्राज्ञाहारतुल्यत्ववाचिना इवशब्देन प्राज्ञाहारस्य सूक्ष्मतमत्वं विवक्षितमित्यर्थः ॥ २० ॥

'अस्माच्छरीरादात्मनः'इति श्रुतौ शरीरात्मपदाभ्यां स्थूला भिमानी विश्व उच्यते । अस्मात्तैजसः प्रविविक्ताहारतर इति पूर्वेण सम्बन्धः ॥ ३ ॥

उक्तमर्थमुपसंहरन्नुत्तरवाक्यमवतारयति *स्वप्नेति । ननु तस्य प्राची दिक्प्राञ्चः प्राणा इत्यादिना तैजसस्यैव सुषुप्त्यवस्थायां प्राज्ञ संज्ञस्य सर्वदिगात्मत्वं सर्वप्राणात्मत्वं च कथमुच्यते तस्य परिच्छिन्न त्वादिति तत्राह *तत्र युक्तेति । प्राज्ञः सप्तम्यर्थः । सर्वदिगात्मते त्युपलक्षणं सर्वप्राणात्मतेत्यपि द्रष्टव्यम् ॥ २१ ॥ युक्तेत्युक्तमु पपादयति *आश्रयैरिति । प्राज्ञस्य देहद्वयाभिमानाभावादीश्व राभेदविवक्षया सर्वात्मतोच्यत इति भावः ॥ २२ ॥ आत्मनो

इन्धतैजससौषुप्तैर्विराट्सूत्रेश्वरा अपि ॥
विवक्षिता अथैतेषां तत्त्वमात्मोपदिश्यते ॥ २३ ॥

श्रुतिः—स एष नेति नेत्यात्मा ऽगृह्यो नहि गृह्यते ऽशीर्यो नहि शीर्यते ऽसङ्गो नहि सज्यते ऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहोऽभयं त्वा गच्छताद्याज्ञवल्क्य यो नो भगवन्नभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ॥ ४ ॥

इत्युपनिषदि द्वितीयब्राह्मणं समाप्तम् ॥ २ ॥

वार्त्ति० विराडिन्धादिभिर्भेदैरभिन्नो योऽवभासते ॥
स एष नेति नेत्यात्मा न कार्यं नापि कारणम् ॥२४॥
तेनैव ज्ञात्मनाऽशेषं तद्ध्वांतं ध्वांतजं तथा ॥
जग्ध्वा नेत्यात्मना विद्वान्पूर्णदृष्ट्याऽवशिष्यते ॥२५॥
गन्तव्यमुपदिश्यैवं प्राप्तोऽस्यभयमित्यृषिः ॥
ऊचे बोधस्ततः प्राप्तः प्राप्स्यसीत्यन्यथा वदेत् ॥२६॥

---

निष्प्रपञ्चत्वप्रतिपादकं स एष इत्यादिवाक्यमवतारयितुं भूमिकामारचयति *इन्धेति । वाक्यमवतारयति *अथेति । अवस्थात्रयनिरूपणानन्तरमित्यर्थः ॥ २३ ॥ वाक्यार्थं स्पष्टयति *विराडिति ॥ २४ ॥ प्रतीचि सर्वप्रपञ्चनिषेधे फलितमाह *तेनेति ।

अयमर्थः—विश्वं विश्वशब्दोपलक्षितं विराजं च तैजसहिरण्यगर्भयोः प्रविलाप्य तन्मात्रत्वेन भावयित्वा,तावपि प्राज्ञेश्वरमात्रत्वेनानुसंधाय, तावपि प्रत्यक्त्वमात्रतयाऽनुसन्दध्यात्ततः स एष नेतिनेत्यादिवाक्योत्थबोधाभिव्यक्तनिजबोधेनैवाज्ञानतत्कार्यनाशयोरुक्तानन्दात्मनाऽवशिष्टो भवति ॥ २५ ॥

उक्तार्थमनुवदन्नभयं वा इत्यादेरर्थमाह *गन्तव्यमिति॥२६॥

भयहेतुरविद्यैव सा च दुःस्थितिसिद्धिका ॥
ततो विद्योदयादस्या ध्वस्तिरात्यन्तिकी भवेत् ॥२७॥
बोधमार्ग इह प्रोक्त ऐकात्म्यप्राप्तिसिद्धये ॥
न त्वर्चिरादिवत्तस्य प्राप्तये गतिकल्पना ॥ २८ ॥
ज्ञानेन सदृशीमन्यामपश्यन् गुरुदक्षिणाम् ॥
अभयं त्वेति वचसा दक्षिणामाशिषं ददौ ॥ २९ ॥
वेत्ति ब्रह्म मुनिः शब्दान्नतु साक्षाच्चकार तत् ॥
साक्षात्कृतय एषाऽशीरित्येवं केचिदूचिरे ॥ ३० ॥
साक्षात्कृतब्रह्मतत्त्वो जीवन्मुक्तो मुनिः स्थितः ॥
आशीर्विदेहमोक्षायेत्याहुरन्ये द्वयं न तत् ॥ ३१ ॥
शाब्दविज्ञानमात्रेण नाचार्यत्वेन युज्यते ॥
श्रोत्रियं ब्रह्मनिष्ठं च गुरुं यायादिति श्रुतेः ॥ ३२ ॥
जीवन्मुक्तस्य पतिते देहे मुक्तिः सुनिश्चिता ॥
तत्राप्याशीरतो मा भूद्दक्षिणार्थैव सा ततः ॥ ३३ ॥

---

एवं वचनभङ्ग्या राज्ञो बोधप्राप्तिमुक्त्वा न्यायतोऽपि तामाह *भयेति । दुःस्थितिसिद्धिका अनिर्वचनीयेत्यर्थः । तस्या अनिर्वचनीयत्वे फलितमाह *तत इति॥२७॥ विद्याद्युक्तिफलमुपसंहरति *बोधेति । मुख्यमार्गं व्यावर्त्तयति *नत्विति ॥२८॥ अभयं त्वा गच्छतादित्यादिराज्ञोक्तेस्तात्पर्यमाह *ज्ञानेनेति ॥ २९ ॥ अस्यैव वाक्यस्यैकदेशीयोक्तार्थमनुवदति *वेत्तीत्यादिना । मतद्वयमप्यनुपपन्नमित्याह *न तदिति ॥ ३० ॥ ३१ ॥ आद्येऽनुपपत्तिमाह *शाब्देति ॥ ३२ ॥ द्वितीयेऽपि पक्षे तामाह *जीवन्मुक्तस्येति । अतः स्वोक्तार्थ एव परिशिष्यत इत्याह *दक्षिणेति ॥ ३३ ॥

उत्तमा दक्षिणैषाऽऽशीर्मध्यमा तु नमस्क्रिया ॥
स्वभूमिवपुषोर्दानं वित्तशाठ्यनिवृत्तये ॥ ३४ ॥
दक्षिणा त्रिविधाऽप्येषा व्यावहारिकदृष्टितः ॥
वस्तुदृष्ट्या तु नैवास्ति दक्षिणा न प्रतिग्रहः ॥ ३५ ॥
अहं ममेत्यविद्याधीः सहेतुर्नाशिता यदा ॥
पूर्णात्मनि तदा दृष्टे कः कस्मै किं च दित्सति ॥ ३६ ॥

इति वार्त्तिकसारे चतुर्थाध्याये द्वितीयब्राह्मणंसमाप्तम्॥२॥

वार्त्ति० तृतीयब्राह्मणे स्वप्नसुषुप्त्योरतिविस्तृतिः ॥
क्रियते तौ हि दृष्टान्तौ परलोकविमोक्षयोः ॥ १ ॥
देहादिव्यतिरिक्तत्वं स्वप्रभत्वमसङ्गता ॥
स्वप्नप्रसङ्गतस्त्वेतत्त्रयमत्र प्रपञ्च्यते ॥ २ ॥

---

आशिष एव दक्षिणार्थत्वेन, नमस्तेऽस्त्वित्यादिना नमस्क्रिया, राज्यदानं दास्यत्वेन स्वशरीरसमर्पणं च किमर्थमत आह *उत्तमेति ॥ ३४ ॥ ३५ ॥ इमे विदेहा इत्यादिना राजा गुरुदक्षिणां दातुमिच्छति, कथं नेत्युच्यत इत्याशङ्क्योक्तं प्रपञ्चयति *अहमिति । अतो व्यवहारदृष्टिमवष्टभ्य इमे विदेहा इत्यादि राज्ञो वचनमिति शेषः ॥ ३६ ॥

इति वार्त्तिकसारे टीकायां द्वितीयब्राह्मणं समाप्तम् ॥ २ ॥

कूर्चब्राह्मणे सङ्क्षेपेणोक्तयोः स्वप्नसुषुप्त्योर्विस्तारोऽनन्तरब्राह्मणेन क्रियत इति पूर्वेणास्य सङ्गतिमाह *तृतीयेति । ननु 'तृतीये परलोकस्य मोक्षस्यापि निदर्शने' इत्यत्रास्य ब्राह्मणस्य परलोकमोक्षदृष्टान्तवर्णनपरत्वमुक्तम्, इदानीमन्यदेवोच्यतेऽतः पूर्वापरविरोधस्तत्राह *तौ हीति । अवधारणार्थो निपातः ॥१॥

एवं प्राधान्येन प्रतिपाद्यमर्थमुक्त्वा प्रासङ्गिकार्थान्विभजते *देहेत्यादिना ॥ २ ॥ ३ ॥

अद्वैतत्वं दृष्ट्यलोप आनंदैकस्वभावता ॥
इदं त्रयं सुषुप्तस्य प्रसङ्गेनोपपाद्यते ॥ ३ ॥
श्रुतिः–जनकं ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इति, अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ सह कामप्रश्नमेव वव्रे त१ँहास्मै ददौ त१ँह सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥
वार्त्ति० एतेन संवदिष्येऽहमित्यागच्छन्मुनिर्यतः ॥
अग्निहोत्रोक्तिलस्तुष्टः कामप्रश्नं वरं ददौ ॥ ४ ॥
नाप्राक्षीत्तत्र राजाऽसौ वरे दत्तेऽपि तत्कुतः ॥

---

श्रुत्यर्थस्तु–जनकं वैदेहं याज्ञवल्क्यो जगाम स च गच्छन्नेवैवं संकल्पितवान्समेनेन वदिष्य इति । सम्–एनेनेति छेदः । एनेन अनेन राज्ञा संवदिष्ये संवादं करिष्य इति(१)।एवं सङ्कल्प्य राजानं गतवानिसत्र हेतुं वक्तुमाख्यायिकामाह श्रुतिः-अथ ह पुरा किल यद्यस्माज्जनकश्च याज्ञवल्क्यश्चाग्निहोत्रे निमित्ते समूदाते संवादं कृतवंतौ । तत्र जनकस्याग्निहोत्रविषयं विज्ञानातिशयमुपलभ्य परितुष्टो मुनिस्तस्मै ह किल वरं ददौ । स च राज्ञा कामप्रश्नमेव वरं वव्रे तं च वरमस्मै मुनिर्ददौ तस्मात्संवदिष्य इति सङ्कल्प्य गतवानिति पूर्वेण सम्बन्धः ॥ १ ॥

इममेवार्थं संग्रहेण दर्शयति *एतेनेति ॥ ४ ॥ नन्वग्निहोत्रप्रकरणे कामप्रश्नवरो दत्तश्चेत्किमिति तत्रैव राज्ञाऽऽत्मयाथात्म्यं न पृष्टमिति शंकते *नेति ॥ तत्र अग्निहोत्रप्रकरणे । तद्–आत्मयाथा-

---

(१) चतुर्थश्लोकानुरोधात् 'समेनेन'इति समस्तः श्रुतेः पाठो वार्तिककृदभिप्रेत इति भाति। टीकाकर्तुरपि तथैव श्रुतिव्याख्यानात् ।

विद्याया निरपेक्षत्वात्कर्मभिश्च विरोधतः ॥ ५ ॥
स्वोत्पत्तावेव विद्येयं सर्वकर्माण्यपेक्षते ॥
प्रत्यगात्मतमोध्वस्तौ नासौ कर्माण्यपेक्षते ॥ ६ ॥
स्वरूपमात्रलाभेन यतोऽविद्यां निहन्त्यतः ॥
अभ्यासादिप्रयोगं च नैवाकाङ्क्षति दीपवत् ॥ ७ ॥
लब्धात्मकं यथा दात्रं प्रयुक्तं पुरुषेण सत् ॥
करोति लवनं तद्वन्न दीपस्तु प्रयुज्यते ॥ ८ ॥
विद्या लब्धात्मिकाऽविद्यां घ्नन्ति कर्माण्यशेषतः ॥
निहन्तीत्यतिविस्पष्टो विरोधः कर्मविद्ययोः ॥ ९ ॥
वरदानेन संवादमिच्छन्तं तमशङ्कया ॥
आदौ राजेष्टमप्राक्षीत्प्रत्यग्ज्योतिर्बुभुत्सया ॥ १० ॥

श्रुतिः—याज्ञवल्क्य किंज्योतिरेवायं पुरुष इत्यादित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥

---

त्स्यम् । उत्तरमाह *विद्याया इति ॥ ५ ॥ ननु विद्यायाः कर्मानपेक्षत्वे सर्वापेक्षाधिकरणन्यायविरोधस्तत्राह *स्वोत्पत्ताविति ॥ ६ ॥ अन्यानपेक्षत्वे हेतुः *स्वरूपेति । ननु विद्याया अन्यानपेक्षत्वमसिद्धम्, अभ्याससापेक्षत्वादिति, नेत्याह* अभ्यासेति॥७॥ दृष्टान्तासिद्धिमाशंक्य दीपस्यान्यानपेक्षत्वं व्यतिरेकेण स्पष्टयति *लब्धेति ॥ ८ ॥ विद्याकर्मणोर्विरोधमाह *विद्येति ॥ ९ ॥ तं हेत्यादेस्तात्पर्यमाह *वरेति । *प्रत्यगिति । प्रत्यग्ज्योतिर्बलादेव देहस्य कर्म तत्फलं चेत्येवं सम्भाव्य राजा तत्तत्त्वजिज्ञासया युक्त्यन्तरं संवादार्थं पृष्टवानित्यर्थः ॥ १० ॥ किंज्योतिरेवायं पुरु-

वा० देहेन्द्रियादिसङ्घातः पुमान्किंज्योतिरुच्यताम् ॥
उपवेशनगत्यादि न युक्तं ज्योतिषा विना ॥ ११ ॥
किं सङ्घातगतं ज्योतिः किं सङ्घातिरेकि तत् ॥
अतिरिक्तत्वमादत्त आदित्यादेरुदाहृतिः ॥ १२ ॥
पूर्वब्राह्मण एवास्य कृतमात्मानुशासनम् ॥
मननायोच्यते युक्तिरादित्यादिनिदर्शनात् ॥ १३ ॥
यथा सङ्घातिरिक्तेन रव्यादिज्योतिषा जनः ॥
करोत्यासनगत्यादि तथा स्वप्ने चिदात्मना ॥ १४ ॥
रव्यादिकं बहिर्ज्योतिश्चिदात्मज्योतिरान्तरम् ॥
सङ्घस्तु मध्ये निर्ज्योतिर्ज्योतिषोर्वर्तते द्वयोः ॥ १५

---

प इत्यत्र पुरुषशब्दस्यार्थं वदन्वाक्यं योजयति *देहेति । कार्यकरणसंघातस्य पुंसो ज्योतिरपेक्षां दर्शयन्किंज्योतिःपदं व्याचष्टे *उपवेशनेति । ज्योतिषा विना व्यवहारायोगात्केन ज्योतिषाऽयं पुमान्व्यवहरतीत्यर्थः ॥११॥ आदित्यज्योतिरित्यादिप्रत्युक्तितात्पर्यमाह *अतिरिक्तत्वमिति ॥१२॥ पूर्वं बोधोत्पत्तेरुक्तत्वात्पुनरुपदेशवैयर्थ्यं शङ्कित्वा परिहरति *पूर्वेति । उत्पन्नस्य ज्ञानस्यासम्भावनादिनिवृत्तिद्वारा दार्ढ्यार्थं पुनरुपदेश इति भावः । तदुक्तं भाष्यकारैः "अभयं वै जनकेत्याद्यागमोक्तदार्ढ्याय तर्कतः प्रपञ्चः कृतः" इति ॥ १३ ॥ आदित्यादिनिदर्शनेन वा कथं संघातातिरिक्तात्मनिश्चयस्तत्राह *यथेति ॥ १४ ॥ ननु रव्यादिज्योतिषैव सर्वव्यवहारादलमात्मज्योतिषा तत्राह *रवीति । बाह्यज्योतिषामुपरमेऽपि स्वप्नव्यवहारदृष्टेः, संघातस्य च जडत्वाद्बाह्याभ्यंतरज्योतिर्द्वयं विनाऽवस्थाद्वयव्यवहारो न घटत इति भावः ॥ १५ ॥ स्वप्नव्यवहारान्यथानुपपत्त्यैवात्मज्योतिःसि-

रवेः सङ्घातिरिक्तत्वं प्रसिद्धत्वान्निदर्शनम् ॥
अतोऽनुवादो रव्यादेर्न त्वत्र प्रतिपाद्यता ॥ १६ ॥

श्रुतिः—अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ३ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥

---

द्धौ किं रव्यादिनिदर्शनप्रदर्शनेनेत्यात्मनो ज्योतिष्ट्वेऽपि तस्य देहातिरिक्तत्वस्यास्फुटत्वात्तत्साधनाय रव्यादिदृष्टान्तकथनमित्याह *रवेरिति । प्रसिद्धमिति शेषः । निदर्शनं, रव्यादीति शेषः । कथं तस्य प्रसिद्धस्य प्रतिपादनं क्रियते तत्राह

आस्ते पर्येति कुरुते वाणिज्यादीन् निवर्तते ॥
इत्यनेकोक्तितोऽत्यन्तज्योतिःसापेक्षतोच्यते ॥ १७ ॥
आदित्येनैव न त्वेतद्देहादिगततेजसा ॥
इत्येवकारो यो ज्योतिश्चन्द्रादेर्न निराकृतिः ॥ १८ ॥
व्याप्तेरव्यभिचाराय बहुचन्द्राद्युदाहृतिः ॥
रवीन्द्वग्नित्रयं तारामण्यादेरुपलक्षणम् ॥ १९ ॥

---

*अत इति ॥ १६ ॥

आदित्येनैवायमित्यादेरर्थमाह *आस्ते इति ।

आस्ते उपविशति । पल्ययते पर्येति गच्छति । गत्वा कर्म वाणिज्यादि कुरुते । विपल्येति विपर्येति निवर्त्तत इत्यर्थः ।

आसनाद्यनेकक्रियोक्तिः किमर्था तत्राह *इतीति ॥ १७ ॥ आदित्येनैवेत्यवधारणमनुपपन्नं चन्द्रादेरपि व्यवहारहेतुत्वादित्याशङ्क्यैवकारव्यावर्त्यमाह *आदित्येनेति ॥१८॥ एकेनैवोदाहरणेन विवक्षितसिद्धेः किं चन्द्राद्यनेकोदाहरणेन तत्राह *व्याप्तेरिति । मण्यादिज्योतिषामपि प्रवर्त्तकानां सत्त्वे किमित्यादित्यादित्रयमेवोच्यते तत्राह *रवीति ॥ १९ ॥ चतुर्थपर्याये वागेवास्य ज्योतिरित्यत्र वाक्ये दशेन्द्रियपरत्वं वारयति *शब्द इति ।

वाचो ज्योतिष्ट्वमसिद्धमित्याशङ्क्य श्रुतिरेव साधयति *तस्माद्वा इति । यस्माद्वाचो ज्योतिष्ट्वं तस्माद्यत्र निबिडान्धकारसमये स्वोऽपि पाणिर्विस्पष्टं न ज्ञायतेऽथ तस्मिन्काले यत्र वागुच्चरति श्वा वा भषति गर्दभो वा रौति, तत्र शब्दः उपैव न्येति शब्ददीपितश्रोत्रद्वारा मनसा सङ्गतो भवतीत्यर्थः । तेन वाह्यचेष्टां प्रतिपद्यते पुरुषोऽतो व्यवहारहेतुत्वाद्वाचोऽपि ज्योतिष्ट्वमुपपन्नमिति भावः ॥ ५ ॥

शब्दो वागिति संप्रोक्तः स गन्धाद्युपलक्षणम् ॥
गन्धादीनपि विज्ञाय प्रवृत्तिर्वस्तुनीक्ष्यते ॥ २० ॥
अस्त्येवास्तमिते सूर्ये ज्योतिरित्येवकारतः ॥
तदयोगं व्यवच्छिन्दन् किंज्योतिरिति पृष्टवान् ॥२१॥
अस्तित्वेऽपि न देहादिगतं तत्किन्तु चन्द्रमाः ॥
इत्यन्ययोगव्यावृत्तिश्चन्द्र एवेत्युदीरिता ॥ २२ ॥
रविसोमाग्निशब्दादिज्योतींष्युक्तानि जागरे ॥
निदर्शनतया ज्योतिस्तैः स्वप्नेऽप्यनुमीयताम् ॥ २३ ॥
स्वप्ने देहव्यवहृतिर्भिन्नज्योतिःपुरःसरा ॥
व्यवहारत्वतो जाग्रद्व्यवहारो यथा तथा ॥ २४ ॥

---

शब्दो ज्योतिरित्येतद्गन्धादेरुपलक्षणमित्याह *गन्धादीति । तत्र हेतुः *गन्धादीनिति ॥ २० ॥ ननु द्वितीयपर्याये प्रश्नवाक्ये किंज्योतिरेवेत्येवकारोऽनुपपन्नः व्यवच्छेद्याभावात्तत्राह *अस्त्येवेति । सूर्यास्तमयानन्तरमपि व्यवहारदृष्टेस्तत्साधनं किञ्चिज्ज्योतिरस्त्येवेति ज्योतिःसद्भावमात्रप्रदर्शनार्थम् एवकारो नान्यव्यवच्छेदार्थ इत्यर्थः ॥ २१ ॥ प्रश्नगतैवकारस्यायोगव्यवच्छेदार्थकथनेन प्रत्युक्तिगतस्यापि तदर्थत्वशङ्का स्यात्तच्चानुपपन्नं, ज्योतिःसद्भावमात्रस्य राज्ञैव निश्चितत्वादित्याशङ्क्य तस्य पूर्वपर्यायवदात्मज्योतिर्व्यवच्छेदार्थकत्वमाह *अस्तित्व इति ॥ २२ ॥ उपसंहरति *रवीति । निदर्शनतयोक्तानीति सम्बन्धः । स्वप्नपदं सुप्तेरप्युपलक्षणम् । तैः निदर्शनैः ॥ २३ ॥ अनुमानप्रयोगमाह *स्वप्नेत्यादिना ॥ २४ ॥ अनेनानुमानेनात्मज्योतिषः सुषुप्तव्यवहारहेतुत्वे सिद्धे पुनः प्रश्नानु-

सुप्तौ च पुनरुत्थानव्यवहारस्य कारणम् ॥
अस्ति ज्योतिरिति ज्ञात्वा तद्विशेषं स पृष्टवान्॥२५
स्वप्रकाशस्वरूपत्वात्तद्विशेषो ह्यतिस्फुटः ॥
तथाऽप्यविद्यया छन्नः सोऽस्पष्ट इव वर्त्तते ॥ २६ ॥
यत्प्रसादादविद्यादि सिध्यतीव दिवानिशम् ॥
तमप्यपह्नुतेऽविद्या नाज्ञानस्यास्ति दुष्करम् ॥२७॥
योऽविद्यात्माभिसम्बन्धः कल्पितोऽसौ न वास्तवः॥
अतो ऽविद्यावृतत्वेऽपि न लोपोऽस्य मनागपि ॥२८॥
निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा ॥
आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥ २९
स्वतो बुद्धं स्वतः शुद्धं स्वतो मुक्तं निरात्मिका ॥
अविचारितसंसिद्धिरविद्या लिङ्गते कथम् ॥ ३० ॥
एतादृश्या अविद्याया विचारेण निवृत्तये ॥
आत्मैव ज्योतिरस्येति प्राह स्वप्नादिभासकम् ॥३१॥

---

पपत्तिरत आह *तद्विशेषमिति । अनुमानस्य विशिष्टविषयत-या निष्कृष्टविशेषबुभुत्सया प्रश्नोपपत्तिरिति भावः ॥ २५ ॥ आत्मनः स्वप्रकाशत्वेन स्वतःस्फुरणान्न तस्मिन् प्रश्नो युक्त इति शङ्कित्वा परिहरति *स्वेति ॥ २६ ॥ नन्वविद्याया आच्छादकत्वमनुपपन्नम्, तस्या एव स्वसाधके प्रतीच्यसिद्धेरित्याशङ्क्याह *यदिति ॥ २७ ॥ तस्य दुष्करं नास्ति चेत्प्रतीचि स्वसंबन्धमपि वास्तवं प्रापयेत्तत्राह *य इति ॥२८॥ अविद्यात्मनोर्वास्तवसंबन्धे पूर्वोक्तां युक्तिं स्मारयति *निःसंगस्येति द्वाभ्याम् । विचित्रभ्रांति-जननसमर्थाऽप्यविद्या न वास्तवसंबन्धहेतुरिति भावः ॥२९॥३०॥ आत्मज्योतिषि प्रश्नमुक्त्वा प्रत्युक्तिमादत्ते *एतादृश्या इति॥३१॥

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षमराजविरचितवृत्तिसमेता (वेदान्तः) २
(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । ( मीमांसा ) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृता मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । ( वेदान्तः ) ३
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीकर्काचार्यविरचितभाष्यसहितम् । १३
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं सम्पूर्णम् ( वेदान्तः ) ३
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीतिप्रसिद्धया समेतम् । ( वेदान्तः ) १४
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १
(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् ८
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीब्रजनाथभट्टकृता ( वेदान्तः ) ... २
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमानगादाधर्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुमाञ्जलेश्च क्रोडपत्राणि ... ३
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहितः । हरिभद्रसूरिकृतः । ... ... १
(२८) शुद्धाद्वैतमार्तण्डः प्रकाशव्याख्यासहितः । प्रमेयरत्नार्णवश्च ... ... १
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृतदीधित्या जागदीशी टीका । १३
(३०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः परिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपकश्च ११
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः आह्निकप्रकाशः ६
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलितः ... ... ४
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... २
(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... २
(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् । १
(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित–योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २
(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृत ब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासंवलितम् । ४
(३८) विश्वप्रकाशः । कोशः । विद्वद्वरश्रीमहेश्वरसूरिविरचितः । ... ... २
(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचिताटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्योः–प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३
(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः । ४
(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्म्मकृता अध्यात्मसुधातरङ्गिण्याख्यटीकयासहिता ३
(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । २

(४३) याज्ञवल्कस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता। ४

(४५) शास्त्रदीपिका। श्रीपार्थसारथिमिश्र प्रणिता। रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपादः। ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता। श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाह्वटीकाद्वयसंवलिता। ११

(४७) व्याकरणसिद्धान्तसुधानिधीः। पर्वतीय विश्वेश्वरसूरिविरचितः। ८

(४८) विरमित्रोदयः। लक्षणप्रकाशः। महामहोपाध्यायश्रीमित्रमिश्रविरचितः। ७

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः। महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकयासमलंकृतः। ८

(५०) विरमित्रोदयः। राजनीतिप्रकाशः। महा-महोपाध्यायश्रीमित्रमिश्रविरचितः। ५

(५१) पूर्वमीमांसा अधिकरणकौमुदी। श्रीमन्म-हामहोपाध्याय पं० रामकृष्णभट्टाचार्य-विरचिता परिशिष्टाधिकरणनिरूपणपूर्व-कं टिप्पण्या परिष्कृत १

(५२) प्रसस्तपादभाष्यटीकासंग्रहः। तत्र क-णादरहस्यम्। श्रीशंकरमिश्रविरचितम्

(५३) क्रमदीपिका। श्रीमन्महामहोपाध्याय काश्मीरिककेशवभट्टविरचिता। विद्या-विनोदश्रीगोविन्दभट्टाचार्यकृतविवरणोपेत

(५४) वीरमित्रोदयः। तीर्थप्रकाशः। महा-महोपाध्याय श्रीमित्रमिश्रविरचितः।

(५५) सांख्यसंग्रहः। तत्र सांख्यतत्त्वविवेचनम् श्रीषिमानन्द ( क्षेमेन्द्र ) विरचितम् सांख्यतत्त्वयाथार्थ्यदीपनम् भावागणेश-विरचितम्। समाससूत्रव्याख्या सर्वो-पकारिणी च। १

(५६) न्यायपरिशुद्धिः। श्रीमद्वेङ्कटनाथ श्रीवे-दान्ताचार्यप्रसादिता। श्रीनिवासाचार्यविर-चित न्यायसारसमाख्यया टीकयायुता। २

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NO. 271.

# बृहदारण्यकवार्त्तिकसार ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया

टीकाया समलङ्कृतः ।

पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या

वझे इत्युपनामकेन भाऊशास्त्रिणा

संशोधितः ।

---

BRIHADARANYAKAVARTIKASARA

BY VIDYARANYA SWAMI,

WITH A COMMENTARY CALLED LAGHUSANGRAHA BY

MAHESHWAR TIRTH.

EDITED BY

BHAU SHASTRI VAJHE.

FASCICULUS IX–९.

---

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.

PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:

AGENTS: OTTO HARRASSOWITZ, LEIPZIG:

PROBSTHAIN & CO., BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press, Benares.*

1919

*Price Rupee one.*

॥ श्रीः ॥

—*—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥
स्तबकः—२७१

भास्यं स्वप्नसुषुप्त्यादि यस्मिन्भाने प्रकल्पितम् ॥
तद्भानं तत्स्वरूपत्वादात्मशब्देन भण्यते ॥ ३२ ॥
आत्माविद्यां तदुत्थं वा प्रत्यग्धीरवगाहते ॥
प्रत्यग्बुद्ध्यवगाह्योऽत आत्माऽहं भामि केवलः ॥ ३३ ॥
आत्मैवेत्येवकारेण स्वप्नदृश्येष्वनात्मसु ॥
ज्योतिष्ट्वशङ्का व्यावर्त्या वासनामयवस्तुषु ॥ ३४ ॥
अस्येति वासनाऽऽरोपो दृश्यो देहादिरुच्यते ॥
भास्यभासकसम्बन्धः षष्ठ्योक्तो वासनाऽऽत्मनोः ३५॥
ज्योतिष्ट्वं भासकत्वं स्याच्चिदाभासमुखेन तत् ॥
उपपन्नमसङ्गस्य भान्वादिवदनुग्रहात् ॥ ३६ ॥

---

आत्मशब्दार्थमाह* भास्येति । अवस्थात्रयकल्पनाधिष्ठानं तद्भासकं स्वप्रकाशरूपमात्मशब्देनेह विवक्षितमित्यर्थः ॥ ३२ ॥ तस्य स्वप्रकाशत्वं साधयति* आत्माविद्यामिति। अनात्मत्वं दृश्यत्वव्यापकम् आत्मनः सकाशाद् व्यावर्त्तमानं स्वव्याप्यं दृश्यत्वमपि व्यावर्त्तयतीत्याशयः । प्रत्यग्बुद्ध्याऽवगाह्यः प्रत्यक्चैतन्यात्मना भासमान इति यावत् । उक्तमात्मनः स्वप्रकाशत्वमुपसंहरन्स्वानुभवं प्रकटयति *अत इति ॥ ३३ ॥ आत्मैवास्य ज्योतिरित्यत्रात्मशब्दार्थमुक्त्वाऽवशिष्टपदानि क्रमेण व्याचष्टे *आत्मैवेत्यादिना ॥ वासनामयेषु स्वप्नगजादिष्वपि स्वसत्तायां प्रकाशाव्यभिचारात्स्वप्रकाशत्वशंका स्यात्, सा निवर्त्यत एवकारेणेत्यर्थः । ज्योतिःशब्देन भासकत्वोक्तिरयुक्ता, रूपादिमतो विषयसम्बन्धस्यैव भान्वादेर्भासकत्वदृष्टेः, आत्मनस्तद्विलक्षणत्वेन तदयोगादिति तत्राह *उपपन्नमिति । असङ्गस्यापीति शेषः ॥ ३४ ॥ ३५ ॥ ३६ ॥ उक्तमेव व्यनक्ति* भान्वादय इति ।

भान्वादयः प्रभाद्वारा चक्षुराद्यनुगृह्णते ॥
तथैवात्माऽनुगृह्णीते चिदाभासेन शेमुषीम् ॥ ३७ ॥
अविद्यान्वयवद्बुद्धेश्चिदाभासान्वयः सदा ॥
अस्ति तद्व्यतिरेकेण बुद्धेः परिणतिर्वृथा ॥ ३८ ॥
चिदाभासविहीनस्य क्षीरस्य परिणामतः ॥
न किञ्चिद्भासते वस्तु साभासा धीस्ततः सदा ॥३९॥
साभासपरिणामेन दुःख्यस्मीत्यपि धीर्भवेत ॥
तथा साभासमज्ञानं न वेद्मीत्यनुभूयते ॥ ४० ॥
अन्यथाऽऽत्मनि कौटस्थ्याद् बुद्धौ चैतन्यवर्जनात् ॥
सर्वोऽपि व्यवहारः स्यादन्धकारप्रनृत्यवत् ॥ ४१ ॥
चिदाभासानुग्रहोऽत्र ज्योतिष्ट्वं भानुवन्मतम् ॥
नतु रव्यादिवच्चक्षुर्ग्राह्यभास्वररूपता ॥ ४२ ॥

---

शेमुषीं बुद्धिम् । तथाचानुग्राहकत्वसामान्यादात्मनोऽपि ज्योतिष्ट्वं युक्तमिति भावः ॥ ३७ ॥ आत्मन उक्तानुग्राहकत्वसिध्यर्थं बुद्धौ चिदाभासानुवृत्तिं दृष्टांतेन साधयति* अविद्येत्यादिना । अविद्यायामाभासानुवृत्तिर्व्यवधायकाभावात्सिध्यति । तथाऽऽभासरहितद्रव्यपरिणामस्य भासकत्वादृष्टेर्विषयप्रकाशनार्थं बुद्ध्यादौ साभासायां चिदाभासाव्यभिचारो वक्तव्य इत्यर्थः ॥ ३८ ॥ ३९ ॥ माऽस्तु तर्हि विषयभासकत्वमित्याशङ्क्यानुभवविरोधात् मैवमित्याह *साभासेति ॥ ४० ॥ ननु बुद्ध्यादावाभासव्याप्त्यभावेऽपि केवलबुद्धिवृत्त्याऽऽत्मचैतन्येन वा उक्तानुभवः स्यादित्याह *अन्यथेति ॥ ४१ ॥ ज्योतिःशब्दार्थमुपसंहरति* चिदाभासेति ॥ ४२ ॥ आत्मनो ज्योतिष्ट्वे चक्षुर्ग्राह्यत्वमपि स्यात् । विमतं चक्षुर्ग्राह्यं ज्योतिष्ट्वाद् आदित्यादिवदित्याशङ्क्य मेयत्वोपाधिना दूषयति

आदित्यादिरनात्मार्थः सिध्यत्यक्षादिमानतः ॥
मात्रादिसिद्धिदस्यास्य स्वतःसिद्धेन मेयता ॥ ४३ ॥
नाप्रमेयत्वमात्रेण शशशृङ्गादितुल्यता ॥
अनन्यानुभवेनास्य विशदं स्फुरणं यतः ॥ ४४ ॥
स्यात्स्वप्नव्यवहारोऽयमात्मना ज्योतिषा दृशा ॥
देहादिव्यतिरिक्तत्वमेवं सिद्धं चिदात्मनः ॥ ४५ ॥
अत्र लोकायतो वक्ति देहाभिन्नत्वमात्मनः ॥
अहं मनुष्य इत्येवं प्रत्यक्षेण तथेक्षणात् ॥ ४६ ॥
चैतन्यं क्षितितोयाग्निमरुद्योगेन जायते ॥
सर्पादेरिव कार्ष्ण्यादिर्देहधर्मस्तताश्रितिः ॥ ४७ ॥
चैतन्यं देहधर्मश्चेन्मृतावविकलस्य तत् ॥
कस्मान्नेति न मन्तव्यं वायुना विकलत्वतः ॥ ४८ ॥
यः स्वप्नदेहमद्राक्षं सोऽहं पश्याम्यदो वपुः ॥

---

*आदित्यादिरिति। उपाधेः साधनव्यापकत्वमाह* मात्रादीति। मात्रादिसिद्धिहेतुत्वेन पूर्वसिद्धस्यात्मनो न मानाधीनसिद्धिकतेत्यर्थः ॥ ४३ ॥ आत्मनोऽप्रमेयत्वे शशशृङ्गवदसत्त्वापत्तिरिति नेत्याह *नेति ॥ ४४ ॥ आत्मैवेत्यादिवाक्यार्थमुपसंहरन्फलितमाह* स्यादिति ॥ ४५ ॥ श्रुत्युक्तमात्मनो देहातिरिक्तत्वमुपपत्त्याऽपि दृढीकर्त्तुं पूर्वपक्षमाह *अत्र लोकायत इत्यादिना ॥ ४६ ॥ चैतन्यवत एवात्मत्वाद्देहस्य च तदभावात्कथमात्मत्वं तत्राह *चैतन्यमिति। भूतचतुष्टयसङ्घस्यैव देहत्वात्ततो जायमाना चितिर्देहधर्म एवेति तस्यैवात्मतेत्यर्थः ॥ ४७ ॥ कृष्णसर्पवच्चैतन्यदेहयोर्धर्मधर्मित्वेऽतिप्रसङ्गं शङ्कते* चैतन्यमिति। मृतिकाले वायोरभावादविकलत्वमसिद्धमिति परिहरति *नेति ॥ ४८ ॥ आ-

इत्येषा प्रत्यभिज्ञाऽन्यमात्मानं गमयेद्यदि ॥ ४९ ॥
तन्न, स्वप्ने यतोऽभिज्ञा भ्रांता न प्रमितिस्ततः ॥
दूरापेता प्रत्यभिज्ञा नात्माऽतो भिद्यते तनोः ॥ ५० ॥
आत्मज्योतिः श्रुतौ यत्तु वर्णितं तच्च भौतिकम् ॥
देहाद्यनुग्राहकत्वादादित्यादिप्रकाशवत् ॥ ५१ ॥
चाक्षुषत्वप्रसङ्गोऽस्य नान्तःस्थातीन्द्रियत्वतः ॥
अन्तःस्थातीन्द्रियं यत्तचक्षुरादि न चाक्षुषम् ॥ ५२ ॥
तस्मात्प्रत्यक्षमानेन देहे चिद्धर्मकेऽञ्जसा ॥
गृह्यमाणे ततो भिन्नमात्मज्योतिर्न कल्प्यताम् ॥ ५३ ॥
अत्रोच्यते सर्वतीर्थदृशां स्वेष्टस्य वस्तुनः ॥
सिद्धिर्यदभ्युपगमात्तत्सिद्धिर्वार्यते कुतः ॥ ५४ ॥
अहं मनुष्य इत्यस्य प्रत्यक्षस्य न मानता ॥

---

त्मनो देहान्यत्वे मानं शङ्कित्वा परिहरति* य इत्यादिना । *सोऽहमिति । जागरण इति शेषः ॥ ४९ ॥ *दूरेति॥ अभिज्ञाविषयविषयत्वात्प्रत्यभिज्ञायाः स्वप्नेऽभिज्ञाविषयस्य सर्वस्य बाधितत्वेन मृषात्वाच्चेत्यर्थः ॥ ५० ॥ रव्यादिनिदर्शनेन देहातिरिक्तज्योतिषः श्रुत्या साधितत्वात्कथं तस्य देहधर्मत्वमित्याशङ्क्य तस्य भौतिकत्वेन भूतचतुष्टयात्मकदेहधर्मत्वं साधयति *आत्मेति । अनुग्राहकत्वं व्यञ्जकत्वम् । विमतं भौतिकं देहादिव्यञ्जकत्वाद् रव्यादिप्रकाशवदित्यर्थः ॥ ५१ ॥ भौतिकत्वे चक्षुर्ग्राह्यत्वमपि स्यादिति तत्राह *चाक्षुषत्वेति ॥ ५२ ॥ पूर्वपक्षमुपसंहरति* तस्मादिति ॥ ५३ ॥ सर्वैर्वादिभिः स्वाभिलषितं किञ्चिदिच्छद्भिः स्वप्रकाशो निर्विकारश्चिद्धातुरभ्युपगन्तव्य इति सिद्धान्तयति* अत्रेति ॥ ५४ ॥ यदुक्तं देहस्यात्मत्वेऽध्यक्षमेव मानमिति तद्दूषयति *अह-

अज्ञातज्ञापकत्वाख्यमानलक्षणवर्जनात् ॥ ५५ ॥
देहात्मत्वमविज्ञातं तद्बोधाच्चेत्प्रमाणता ॥
तदविज्ञातता केन सिध्यतीति निरूप्यताम् ॥ ५६ ॥
जडत्वान्न स्वतःसिद्धिर्नापि मानाद्विरोधतः ॥
निहन्त्यज्ञाततां मानं ज्ञातताजनकत्वतः ॥ ५७ ॥
मानादज्ञातता चेत्स्यात्तन्निवृत्तिः कुतो भवेत् ॥
न दाहज्वरनुत्त्यर्थमग्निना स्याद्भिषक्क्रिया ॥ ५८ ॥
मा भूदज्ञाततासिद्धिरिति चेत्कस्य मेयता ॥
प्रमितभ्रान्तशून्यानां युज्यते न प्रमेयता ॥ ५९ ॥
अज्ञातोऽर्थः प्रमेयोऽतो वक्तव्यं तस्य साधकम् ॥
स्वप्रकाशात्मनोऽन्यः को यथोक्तां धुरमुद्वहेत् ॥ ६० ॥
प्रत्यक्षमेकं मानं चेत्सा प्रत्यक्षस्य मानता ॥

---

मिति ॥ ५५ ॥ मानलक्षणाभावो ऽसिद्ध इति शंकते* देहेति ॥ देहात्मताया अज्ञातत्वे तस्य केनचित्सिद्धिरभ्युपेयते न वा ? आद्ये नित्योऽनुभवोऽङ्गीकर्त्तव्यः, तं विनाऽज्ञातत्वासिद्धिरित्यभिप्रेत्याह *तदिति ॥ ५६ ॥ विरोधमेव व्यनक्ति *निहन्तीति ॥ ५७ ॥ अज्ञातत्वस्य प्रामाणिकत्वे दोषान्तरमाह *मानादिति ॥ ५८ ॥ अज्ञातत्वसाधकमेव मानं तन्निवर्त्तकमपि स्यादिति, नेत्याह *माभूदिति । *प्रमितेति । प्रमाविषयस्यैव मेयत्वात्प्रमितिगोचरधियः स्मृतिवदप्रमात्वान्न प्रमितादेर्मेयत्वमित्यर्थः ॥५९॥ तेषाममेयत्वे फलितमाह *अज्ञात इति । अस्तु; ततः किं ? तत्राह *वक्तव्यमिति । अथापि कथं तवेष्टसिद्धिस्तत्राह *स्वेति । अज्ञातताया अनादित्वेन नित्यानुभवं विना तदसिद्धेरुक्तत्वादित्यर्थः ॥ ६० ॥ एवमज्ञातेऽर्थे प्रत्यक्षप्रामाण्यम्, अज्ञातत्वं नित्यनुभवायत्तं यस्मादतः तत्प्रामाण्यमिच्छता त्वयाऽपि

यस्य प्रसादतः सिद्धा स आत्मेत्यभ्युपेयताम् ॥६१॥
प्रमाणं मेयविषयं तत्फलं मातृसंश्रयम् ॥
इति यत्साक्षिकं सिध्येत्स आत्मेत्यभ्युपेयताम् ॥६२॥
शब्दादींस्तदभावं च संशयानृतनिश्चयात् ॥
विविच्य योऽनुगृह्णाति स आत्मेत्यभ्युपेयताम् ॥६३॥
देहेन्द्रियमनोबुद्धिसुखादीन्यो घटादिवत् ॥
वेत्त्येनमन्तरात्मानं स्वप्रकाशं विनिश्चिनु ॥ ६४ ॥
द्रष्टृदर्शनदृश्यानि यः स्वप्ने प्रसमीक्षते ॥
तदभावं सुषुप्ते च स आत्मेत्यभ्युपेयताम् ॥ ६५ ॥
सर्वेषां वादिनां स्वस्वमतमेतत्प्रसादतः ॥
सिध्यतीति विवादोऽस्मिन्कर्तुं शक्यो न केनचित्॥६६॥
सत्येवं यत्तु चैतन्यं देहधर्मतयोदितम् ॥
चिदाभासः स विज्ञेय आस्तामेव यथा तथा ॥ ६७॥

---

कूटस्थो नित्यानुभवोऽभ्युपेय इत्याह *प्रत्यक्षमिति ॥ ६१ ॥ तत्रैव हेत्वन्तरमाह *प्रमाणमिति । मानस्य मेयगोचरत्वं मानफलस्य मातृनिष्ठत्वं च साक्षिमात्राधीनसिद्धिकं, मानादिगोचरमानाभ्युपगमेऽनवस्थापातादिति भावः ॥ ६२ ॥ किंच जाग्रदादिष्वसंकीर्णव्यवहारहेतुत्वेनापि नित्यानुभवोऽङ्गीकर्त्तव्य इत्याह *शब्दादीनित्यादिना ॥ ६३ ॥ ६४ ॥ ६५ ॥नित्यानुभवसाधनमुपसंहरति* सर्वेषामिति ॥ ६६ ॥ एवं कूटस्थचैतन्ये सिद्धे चैतन्यं देहधर्म इति परभ्रान्तिरपि चिदाभासविषयत्वेन सालम्बना भवतीत्याह *सत्येवमिति ॥ ननु तस्यापि देहधर्मत्वमसिद्धं, तत्राह *आस्तामिति । तस्य तद्धर्मत्वेऽपि देहेनान्योऽन्यतादात्म्याध्यासात्तद्धर्मत्वभ्रमः सम्भवतीति भावः ॥ ६७ ॥ यदुक्तं भूत-

भूतेभ्यश्च चिदुत्पत्तिं न प्रत्यक्षप्रमाणिका ॥
स्वप्ने ऽभिज्ञाऽपि न भ्रांता ज्ञेयवद्बाधवर्जनात् ॥ ६८ ॥
स्वप्नदृष्टगजादीनां बाधो जागरणे यथा ॥
तद्दर्शनं तथा ऽबाध्यं प्रत्यभिज्ञा ततः प्रमा ॥ ६९ ॥
आदित्यादिसमत्वेन नच प्रत्यक्षमानिनः ॥
ज्योतिः साधयितुं युक्तमनुमानाद्विषस्तव ॥ ७० ॥
अन्तःस्थातीन्द्रियं तेऽस्ति न प्रत्यक्षैकमानिनः ॥
अतश्चाक्षुषतापत्तिरात्मज्योतिषि भौतिके ॥ ७१ ॥
ग्राहकग्रहणग्राह्यभावाभावविभागवत् ॥
स्वार्थमन्यानपेक्षं सच्चैतन्यं नाक्षमानकम् ॥ ७२ ॥

---

विकारश्चैतन्यमिति तन्न, त्वदभिमतप्रमाणस्य तदसाधकत्वादित्याह *भूतेभ्य इति ॥ यत्रोक्तं स्वप्नधीविषयस्य सर्वस्य मृषात्वात्तद्विषयप्रत्यभिज्ञाऽपि भ्रांतिरिति तद्दूषयति *स्वप्न इति ॥६८ ॥ उक्तमेव व्यनक्ति *स्वप्नदृष्टेति ॥ स्वप्ने विषयस्य चिदचिदात्मकत्वाद्बोधेन जडांशस्य बाधितत्वेऽपि चिदंशस्य साक्षिणो बाधाभावात्साक्षिविषयप्रत्यभिज्ञाऽपि प्रमैवेत्यर्थः ॥ ६९ ॥ यद्यप्युक्तमात्मज्योतिर्भौतिकं व्यञ्जकत्वाद्दीपप्रकाशवदिति तत्राह *आदित्येति । प्रत्यक्षमेव मानमस्येति प्रत्यक्षमानी लोकायतिकः । तस्यानुमानद्विषतो मते आदित्यादितुल्यमात्मज्योतिरिति साधयितुमशक्यम् अनुमानानुत्थानादित्यर्थः ॥ ७० ॥ यच्चोक्तमात्मज्योतिषो भौतिकत्वेऽपि न चाक्षुषत्वापत्तिः, चक्षुराद्यतीन्द्रियेषु व्यभिचारादिति तत्राह *अन्तःस्थेति ॥ ७१ ॥ अस्तु तर्हि चाक्षुषत्वमपीत्याशङ्क्यानुभवविरोधान्मैवमित्याह *ग्राहकेति ॥ मात्रादित्रयभावाभावसाक्षिणः स्वप्रकाशकेवलचैतन्यस्याक्षगम्यत्वादृष्टेरिति भावः ॥ ७२ ॥ देहात्मवादिनिराकृ-

अतोऽक्षगम्यदेहस्य न चैतन्यात्मतोचिता ॥
नाध्यात्मत्वे चक्षुरादेः प्रत्यभिज्ञोपपद्यते ॥ ७३ ॥
यमद्राक्षं पुरा कुम्भं तत्त्वचाऽद्य स्पृशाम्यहम् ॥
इत्येतत्प्रभिज्ञाने न भिन्नद्रष्टृकं भवेत् ॥ ७४ ॥
प्रत्यभिज्ञानकृत्तर्हि मन आत्मेति चेन्मतम् ॥
नैव, तस्यापि मनसो विषयत्वेन दर्शनात् ॥ ७५ ॥
शब्दादिखचितं साक्षात्स्मृतिस्वप्नगतं मनः ॥
कुम्भवद्वीक्ष्यते यस्मान्नात आत्मा मनोऽपि नः ॥ ७६ ॥
देहादिव्यतिरिक्तोऽतः प्रमात्रादिविलक्षणः ॥
आत्मैव ज्योतिरित्यत्र विस्पष्टं सुविचारितः ॥ ७७ ॥
आत्मैवास्येति देहादेः स्वरूपत्वेन चित्स्थिता ॥

---

रणमुपसंहरति *अत इति ॥ काणोऽहमित्याद्यनुभवादिन्द्रियाण्यात्मेति केचित, तन्मतं निरस्यति *नेति ॥ ७३ ॥ प्रत्यभिज्ञामभिनयति *यमिति ॥ इन्द्रियस्यात्मत्वे द्रष्टृभेदप्रसङ्गेनोक्तप्रत्यभिज्ञा न स्यादिति भावः ॥ ७४ ॥ अस्तु तर्हि मनस आत्मत्वम्, उक्तदोषाभावादिति शङ्कते *प्रत्यभिज्ञेति । मनो नात्मा दृश्यत्वादिति दूषयति *नेति ॥ ७५ ॥ दृश्यत्वं स्फोरयति *शब्दादीति ॥ ७६ ॥ एवमुपपत्त्याऽऽत्मनो देहाद्यतिरिक्तत्वे सिद्धे आत्मैवास्येत्यादिवाक्यार्थः पूर्वोक्तो निरवद्य इत्युपसंहरति *देहेति ॥ ७७ ॥ कतम आत्मेति वाक्यमवतारयति *आत्मैवेत्यादिना । आत्मैवास्य ज्योतिरित्युक्त्याऽस्य देहस्यात्मा स्वरूपं ज्योतिरिति ज्योतिषो देहस्वरूपत्वमुक्तं भवति । आत्मशब्दस्य स्वरूपवाचकत्वाद्भान्वादिनिदर्शनाच्च पुंव्यापारसाधनं ज्योतिः सङ्घाताद्भिन्नमित्युक्तम् । अत्र विरोधादात्मनि

च्चितो देहादिभेदोऽपि भान्वादिवदुदीरितः ॥ ७८ ॥
श्रुतिः-कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥

पूर्वोत्तरविरुद्धार्थं मत्वा पप्रच्छ भूपतिः ॥
बह्वोऽर्थाः समीक्ष्यन्ते आत्माऽत्र कतमो वद ॥७९॥
पिण्डस्तावदिहैकार्थो द्वितीयो लिङ्गसंज्ञितः ॥
च्चिद्बिम्बतावधिश्चान्यश्चतुर्थो नेति नेति यः ॥ ८० ॥
देहादिभेदमाश्रित्य योऽयमित्युत्तरं जगौ ॥
अधिष्ठानारोप्यभाव आत्माऽस्येति विवक्षितः ॥८१॥
विचारदृष्ट्याऽधिष्ठानमेवात्माऽध्यस्तवस्तुनः ॥
तथापि जाड्यचैतन्यभेदोऽप्यस्ति हि लोकतः ॥८२॥
एवं सत्यविरोधः स्याद्भेदाभेदार्थवाक्ययोः ॥

---

सन्दिहानः सन् निर्दिधारयिषया पृच्छति राजेत्यर्थः ॥ ७८ ॥ अवतारितवाक्यं व्याचष्टे *बह्व इत्यादिना । आत्मशब्दस्य लोकेऽनेकार्थत्वात्प्रकृते ज्योतिष्ट्वेन विवक्षित आत्मा कतम इत्यर्थः ॥ ७९ ॥ चिद्बिम्बतावधिरित्यन्तर्यामी साक्षी चोच्यते ॥ ८० ॥ प्रत्युक्तिमवतार्य व्याचष्टे *देहादीति ॥ देहाद्यतिरिक्तज्योतिष आत्मत्वे आत्मैवास्य ज्योतिरित्यत्र देहस्वरूपत्वं कथमुक्तं, तत्राह* अधिष्ठानेत्यादिना । कल्पितस्याधिष्ठानव्यतिरेकेण वस्तुतोऽभावाद्देहादिकल्पनाधिष्ठानं नित्यचैतन्यमेव सङ्घातस्य स्वरूपमिति तत्त्वदृष्ट्योक्तम्, लोकसिद्धव्यावहारिकभेदमाश्रित्यादित्यनिदर्शनेन तदेव देहादिभिन्नमिति न पूर्वोत्तरविरोध इति भावः ॥ ८१ ॥ ८२ ॥ विरोधनिराकरणमुपसंहरति *एवमिति । एवं

योऽयमित्युत्तरे शब्दद्वयमेवं विचार्यताम् ॥ ८३ ॥
यः पृष्टः स पराग्वृत्तिप्रमामेयातिलङ्घितः ॥
प्रत्यङ्मुखेन मानेन त्वयमित्युपदिश्यते ॥ ८४ ॥
पराञ्चीति च मन्त्रोक्तिः साक्षादात्मेति च श्रुतिः ॥
पराङ्मानप्रमेयत्वमात्मनोऽपि न्यवारयत् ॥ ८५ ॥
कुम्भाकारेण कुम्भार्थो यथा प्रत्यक्ष ईक्ष्यते ॥
धीज्ञानेन तथा प्रत्यगात्माकारेण गृह्यते ॥ ८६ ॥
अयमित्यभिधायोग्यो लोके देहोऽपि वीक्ष्यते ॥
विज्ञानमय इत्युक्त्या स्थूलदेहो निवर्त्यते ॥ ८७ ॥
विज्ञायतेऽनेन सर्वमिति विज्ञानशब्दतः ॥
धीरुक्ता, तन्मयत्वं तु तत्प्राचुर्यं विवक्षितम् ॥ ८८ ॥
व्याचिख्युर्मयटं केचिद्विकारार्थे न तच्छुभम् ॥
अनिर्मोक्षो विकारत्वे प्रायार्थस्तूपपद्यते ॥ ८९ ॥

---

तात्पर्यमुक्त्वा योऽयमिति पदद्वयं व्याख्यातुमुपक्रमते* योऽयमिति ॥ ८३ ॥ विवेचनप्रकारमाह *य इति ॥ पराग्विषयिणी प्रमा पराग्वृत्तिप्रमा तस्या मेयत्वमतिलङ्घ्य स्थितो यः, यश्च वाक्योपदेशजन्यप्रत्यगाकारबुद्धिवृत्त्याऽयमिति गृह्यते सः, त्वया पृष्ट आत्मेत्यर्थः ॥ ८४ ॥ पराग्वृत्तिप्रमामेयातिलङ्घित इति यदुक्तं तत्साधयति *पराञ्चीति ॥ ८५ ॥ प्रत्यङ्मुखेनेत्याद्युक्तमुपपादयति* कुम्भेति ॥ ८६ ॥ योऽयमिति पदयोरर्थमुक्त्वा पदान्तरमवतारयति *अयमिति ॥ अयमित्युक्ते तदभिधेययोग्यत्वेन देहस्यापि तदर्थत्वप्रसङ्गात्तन्निवृत्त्यर्थं विज्ञानमयविशेषणमित्यर्थः ॥ ८७ ॥ विज्ञानमय इत्यत्र विज्ञानपदार्थं वदन्मयटोऽपि विवक्षितार्थमाह *विज्ञायत इति ॥ ८८ विज्ञानं ब्रह्म तद्विकारो जीवो विज्ञानमय इति भर्तृप्रपञ्चः, तन्मतमनूद्य निराह *व्याचिख्युरिति ॥ ८९ ॥ उपपद्यत इत्युक्तं व्यनक्ति* बुद्धीति । अत्र-

बुद्धिविज्ञानसंपृक्तश्चन्द्रसंपृक्तराहुवत् ॥
प्रमीयते ततः प्रत्यग्विज्ञानमय उच्यते ॥ ९० ॥
द्रष्टृत्वाद्यभिसम्बन्धो ऽकारकस्यापि सर्वदा ॥
धीविज्ञानकृतो ऽतोऽपि विज्ञानमय उच्यते ॥ ९१ ॥
सर्वार्थकारणं बुद्धिर्द्वारमात्रं ततोऽपरम् ॥
इन्द्रियं तन्मयस्तस्माच्चिदाभासैकवर्त्मना ॥ ९२ ॥
प्राणा बुद्ध्यविनाभूता इति प्राणमयोऽप्यतः ॥
प्राणात्मवादः सम्प्राप्तः प्राणेष्विति निवार्यते ॥ ९३ ॥
दशेन्द्रियाणि मरुतः पञ्च च प्राणशब्दिताः ॥
प्राणेषु योऽर्थोऽनुगतः स आत्मेत्यवधार्यताम् ॥ ९४ ॥
धीरेवात्मेत्यपाकर्तुं हृदीति श्रुतिरभ्यधात् ॥

---

त्यक्षस्यापि राहोश्चन्द्रादिसम्बन्धाद्यथा प्रत्यक्षत्वम् एवं वस्तुतोऽसङ्गस्याप्यात्मनः काल्पनिकबुद्धिसम्बन्धादेव सविकल्पकप्रतीतिरिति तस्य तन्मयत्वमुपपन्नमित्यर्थः ॥ ९० ॥ तस्य तन्मयत्वे हेत्वन्तरमाह *द्रष्टृत्वादीति ॥ ९१ ॥ ननु आत्मा बुद्धिवच्चक्षुरादिनाऽपि संपृक्तो द्रष्टृत्वादि लभते, तथा च चक्षुरादि हित्वा किमित्यसौ विज्ञानेन विशेष्यते तत्राह *सर्वेति ॥ ९२ ॥ विज्ञानमयपदं व्याख्याय प्राणेष्वित्यस्य व्यावर्त्यमाह *प्राणा इति ॥ विज्ञानमय इत्यनेनैव प्राणमय इत्यप्युक्तं भवति, तदविनाभूतत्वादिन्द्रियाणाम् । तथा च तेषु पूर्वोक्तस्य मयडर्थस्यासम्भवात्स्वार्थे मयडिति वक्तव्यमिति प्राणात्मवादप्रसक्तिरिति भावः ॥ ९३ ॥ प्राणेष्वित्यत्र प्राणशब्दप्रवृत्त्यर्थं व्याकुर्वन्नपेक्षितं पूरयति *दशेति ॥ ९४ ॥ विज्ञानात्मवादनिरासार्थं हृदीतिपदमित्याह* धीरिति । सप्तम्यर्थपदमपेक्षितं पूरयति *स्वार्थमिति ॥ स्वप्रकाशमित्यर्थः । पच्छन्दो व्यो-

स्वार्थं बुद्धौ यदाभाति स आत्मा बुद्धिनित्यदृक् ॥९५॥
हृदीत्याधारनिर्देशाद्धीस्थवृत्तिष्विहात्मता ॥
प्रसक्ता तन्निवृत्त्यर्थमन्तरित्युपदिश्यते ॥ ९६ ॥
परागर्थानुसारिण्यो यतो धीवृत्तयस्ततः ॥
प्रत्यक्त्ववाचकेनान्तःशब्देनैता निवर्त्तिताः ॥ ९७ ॥
जाड्यमात्मन इच्छन्ति कणभुङ्मतजीविनः ॥
तेषां विप्रतिषेधार्थं ज्योतिरित्यभिधीयते ॥ ९८ ॥
जडं बुद्ध्याद्युपादानं तमस्तस्यावभासकम् ॥
सकृद्विभातं चिन्मात्रं ज्योतिरात्मेति भण्यते ॥९९॥
अचेतनोऽपि बुद्ध्यादिश्चेतनावानिवेक्ष्यते ॥
यस्य सन्निधितस्तस्य चिज्ज्योतिष्ट्वमतिस्फुटम् ॥१००॥
आत्मच्छायं पयोऽशेषं यथा मरकतो मणिः ॥
परीक्षणाय प्रक्षिप्तः कुर्यादात्मा तथैव हि ॥ १०१ ॥

---

तिर्वचनः ॥ ९५ ॥ अन्तरिति विशेषणस्य फलमाह *हृदीति ॥ ९६ ॥ एवमपि कथं वृत्तीनामात्मत्वनिवृत्तिस्तत्राह *परागिति ॥ ९७ ॥ ज्योतिःशब्दस्यार्थमाह* जाड्यमिति ॥ ९८ ॥ बुद्ध्यादेर्जडत्वात्तदुपादानस्यात्मनो जडत्वमेवोचितं न ज्योतिष्ट्वमित्याशङ्क्यात्मनो बुद्ध्याद्युपादानत्वमसिद्धमित्याह *जडमिति । कणभुगादेरात्मत्वेनाभिमतं बुद्ध्याद्युपादानं यज्जडं वस्तु तदज्ञानमेव न तस्य ज्योतिष्ट्वमुच्यत इति भावः । कस्य तर्ह्यात्मनो ज्योतिष्ट्वं तत्राह *तस्येति ॥ सकृद्विभातं स्वप्रकाशम् । उक्तज्योतिष एवात्मत्वे विद्वत्प्रसिद्धिं प्रमाणयति* भण्यत इति ॥ ९९ ॥ इतश्चात्मा चैतन्यज्योतिरित्याह* अचेतन इति ॥ १०० ॥ जडस्य चित्सन्निधानाच्चेतनवद्भानं संभवतीत्यत्र दृष्टान्तमाह *आत्मेति ॥ १०१ ॥ ननु देहादेः साक्षाच्चित्सम्बन्धाभावात्कथं चेतनवद्भानं

ज्योतिरात्मचितिच्छायं प्रथमं कुरुते तमः ॥
तमोयोगेन धीस्तद्वद्धीयोगादिन्द्रियं तथा ॥ १०२ ॥
अक्षयोगात्तथा देह एवमेते चिदात्मवत् ॥
भासन्ते तेष्वतः पुंसां प्रत्यगात्मत्वविभ्रमः ॥ १०३ ॥
तमेव भान्तमात्मानमनुभात्यखिलं जगत् ॥
इति श्रुत्यन्तरे स्पष्टमुक्तं ज्योतिष्ट्वमात्मनः ॥ १०४ ॥
आत्मन्येवं प्रबुद्धेऽस्मिञ्ज्योतिषि ध्वान्तनाशतः ॥
सर्वस्यैवात्मयाथात्म्यादात्मा पुरुष उच्यते ॥ १०५ ॥
आत्माऽज्ञानसमुच्छित्तौ तज्जस्य नहि वस्तुनः ॥
प्रत्यग्रूपात्पृथग्रूपं सम्भाव्यं केन चित्कचित् ॥ १०६ ॥
पूर्णत्वात्पुरुषः सोऽयं ज्योतिरात्मेह भाष्यते ॥
पूर्णस्य लोकसंचारो बुद्ध्युपाधिस्वकारणात् ॥ १०७ ॥
यः पूर्णः स समानः सन्बुद्ध्या लोकावुभावपि ॥

---

तत्राह *ज्योतिरित्यादिना ॥१०२॥ चेतनवज्ञानादेवा ज्ञानादिष्वात्मत्वभ्रमो वादिनां जायते इत्याह *तेष्विति ॥ १०३ ॥ आत्मनो ज्योतिष्ट्वे श्रुतिमप्याह *तमिति ॥ १०४ ॥ ज्योतिःशब्दं व्याख्याय पुरुषशब्दार्थमाह *आत्मनीति । एवम् उक्तश्रुतिन्यायाभ्यामिति यावत् । आत्मयाथात्म्याद्धेतोः, पूर्णत्वादिति शेषः ॥१०५॥ ज्ञानादज्ञानध्वंसेऽपि जगतोऽध्वस्तेर्न पूर्णत्वेन पुरुषत्वं । तत्राह *आत्मेति । सर्पाद्युपादाननाशे सर्पादिनाशदृष्टेरिति भावः ॥ १०६ ॥ पुरुषपदार्थं निगमयति* पूर्णत्वादिति ॥ आत्मनः पूर्णत्वे कथं संसार इत्याशङ्क्योत्तरवाक्यमादत्ते *पूर्णस्येति ॥ अविद्याकल्पितबुद्ध्याद्युपाधिकः संसार इत्यर्थः ॥१०७॥ तात्पर्यमुक्त्वाऽक्षराणि योजयति* य इति ॥ समानशब्दस्यापेक्षितं पूरयति *बु-

सम्प्राप्तप्रतिपत्तव्यावनुसञ्चरति क्रमात् ॥ १०८ ॥
किं पुनः स्यात्समानत्वमात्मबुद्ध्योस्तदुच्यते ॥
विवेकानुपलम्भेन तादात्म्यं रज्जुसर्पवत् ॥ १०९ ॥
सम एव धिया लोकौ सञ्चरत्येष न स्वतः ॥
अतः संसारमिथ्यात्वं ध्यायतीवेति वर्ण्यते ॥ ११० ॥
ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च ॥
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि ॥ १११ ॥
आलोके व्यञ्जके यद्वदभिव्यङ्ग्यघटाकृतिः ॥
आरोप्यते तथा बौद्धः संसारो बुद्धिसाक्षिणि ॥११२॥
स समान इति प्रोक्तं बुद्ध्यैक्यं वास्तवं ततः ॥
ध्यायत्येव चलत्येवेत्याहुः केचिदिदं त्वसत् ॥ ११३ ॥
बुद्ध्यभेदस्य नैव स्याद्धीस्थध्यानादिसाक्षिता ॥
निःसाक्षिकं तु ध्यानादिर्नरशृङ्गसमं भवेत् ॥ ११४ ॥
नौस्थो नावो गतिं क्वापि वीक्षते न तटस्थवत् ॥
तथैवं बुद्ध्यभिन्नस्य न स्याद्धीवृत्तिसाक्षिता ॥ ११५ ॥

---

द्ध्येति ॥ उभौ लोकावित्युक्तं व्यनक्ति *संप्राप्तेति ॥ १०८ ॥ आत्मधियोरतिविलक्षणत्वात्कथं सामान्यमित्याक्षिप्य समाधत्ते *किमिति । सधीः स्वप्नो भूत्वेति माध्यंदिनश्रुतौ बुद्ध्यात्मनोस्तादात्म्यं स्पष्टमुक्तमिति भावः ॥ १०९ ॥ उक्तमर्थं हेतु कुर्वन्नुत्तरवाक्यमवतारयति* सम इति ॥ ११० ॥ पदानि विभजते *ध्यायंत्यामिति ॥ लेलायतीत्यस्य व्याख्या चलतीति ॥ १११ ॥ उक्तमर्थं दृष्टांतेन स्पष्टयति* आलोक इति ॥ ११२ ॥ अस्य वाक्यस्य भर्तृप्रपञ्चोक्तमर्थमनूद्य दूषयति *स समान इत्यादिना ॥ ११३ ॥ ॥ ११४ ॥ बुद्धितादात्म्यापन्नस्यापि बुद्धिवृत्तिसाक्षित्वमाशङ्क्य दृष्टांतेन प्रत्याचष्टे* नौस्थ इति ॥ ११५ ॥ किञ्च यथा नौस्थस्ती-

नौगतिं च तरुस्थैर्यमविविच्य विमुह्यति ॥
स्थिता नौस्तरवो यांतीत्येवमत्रापि योज्यताम् ॥११६॥
धीविकारस्ततः कल्प्यो बुद्धिसाक्षिण्यशङ्किते ॥
साक्षिसाक्ष्यत्वमिथ्याधीस्तत्त्वज्ञानान्निवर्तते ॥११७॥
ध्यानादीनामवस्तुत्वे स हि स्वप्न इति श्रुतिः ॥
हेतुमाह स आत्माऽयं स्वप्नो भवति धीवशात् ॥११८॥
बुद्धेर्जागरणं यद्वज्जागर्मीत्यभिमन्यते ॥
बुद्धिस्वप्ने तथा स्वप्नरूपत्वमभिमन्यते ॥ ११९ ॥
जाग्रद्भोगमिमं लोकं स्वप्नो भूत्वा निवर्तते ॥
वासनाराशिसाक्षित्वं स्वाप्नं भोगं तथाऽऽप्नुयात्१२०॥
अविद्याकामकर्माख्यमृत्यो रूपाण्यतीत्य सः ॥
जाग्रद्देहेंद्रियादीनि तिष्ठति ज्योतिरात्मना ॥ १२१ ॥

---

रजेषु तरुषु गतिं पश्यन्न नावि गतिं पश्यति एवं बुद्धिस्थस्यात्मनो न बुद्धिगतसंसारोपलब्धिः, अपि तु घटादिष्वेव तदुपलब्धिः स्यादित्याह *नौगतिमिति ॥ ११६ ॥ तस्माद्ध्यानादिर्बुद्धिधर्मो बुद्धिसाक्षिणि कल्पित एवेत्युपसंहरति *धीविकार इति ॥ अशंकिते निर्विकार इति यावत् । तस्य कल्पितत्वे फलितमाह *साक्षीति ॥११७॥ स हीत्याद्यवतार्य व्याचष्टे* ध्यानेति ॥ हि यस्मादात्मा बुद्ध्यैक्याध्यासेन स्वप्नो भवति तस्मान्न तस्य वस्तुतो ध्यानादिरित्यर्थः ॥ ११८ ॥ कथमात्मनः स्वप्नत्वमित्याशङ्क्य दृष्टांतेनाह *बुद्धेरितिं ॥ आत्मा स्वाविद्यया यां यामवस्थामभिमन्यते तत्तन्नामा भवतीति भावः ॥ ११९ ॥ इमं लोकमित्यादि व्याचष्टे* जाग्रदिति ॥ जाग्रद्भोगमतिक्रान्तस्य सुषुप्तवद्भोगाभावमाशङ्क्याह *वासनेति ॥१२०॥ मृत्यो रूपाणीत्येतद्व्याचष्टे* अविद्येति । अविद्यादिकं मृत्युरस्य रूपाणि देहादीन्यतिक्रामतीत्यनुषङ्गः ॥ १२१ ॥ प्रकृत-

तस्मात्स्वाभाविको नैव क्रियाध्यानादिलक्षणः ॥
लोकद्वयानुसंचारः किन्त्वौपाधिक इष्यताम् ॥ १२२ ॥
योऽयमित्यादिना बुद्धिव्यतिरिक्ततया श्रुतम् ॥
आत्मानं नानुमन्यन्ते बौद्धा बुद्ध्यात्मवादिनः ॥ १२३ ॥
धीरेव ग्राहकाकारा ग्राह्याकारा च भासते ॥
नातो धीव्यतिरेकेण कश्चित्साक्ष्युपलभ्यते ॥ १२४ ॥
घटतज्ज्ञानवद् बुद्धिसाक्षिणौ भास्यभासकौ ॥
भिन्नाविति न मन्तव्यं दृष्टान्तस्याप्रसिद्धितः ॥ १२५ ॥
अभिन्न एव बुद्ध्याऽऽत्मा विपर्यासितबुद्धिभिः ॥
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥ १२६ ॥
विज्ञानवादिनो मा भूद् दृष्टान्तो बाह्यवादिनः ॥
अस्तीति चेत्तन्मतेऽपि न घटोऽन्येन गृह्यते ॥ १२७ ॥
क्षणभङ्गी घटोऽन्येन नैव संयोक्तुमर्हति ॥
अवभासात्मकः कुम्भस्तेन बाह्यार्थवादिनः ॥ १२८ ॥
एवं तर्हि विभेदः को बाह्यविज्ञानवादिनोः ॥

---

वाक्यार्थमुपसंहरति *तस्मादिति ॥ १२२ ॥ विज्ञानवादिनिराकरणेनाप्युक्तमर्थं दृढीकर्तुं तन्निराकरणाय प्रसङ्गं सम्पादयति* यो ऽयमिति ॥ १२३ ॥ तेषामाशयमाह *धीरिति ॥ १२४ ॥ यद् दृश्यं तत्स्वातिरिक्तद्रष्टृकं यथा घटः दृश्या चेयं धीरित्यनुमानमाशङ्क्य प्रत्याह* घटेति ॥ १२५ ॥ वस्तुतो ग्राह्यग्राहकभेदो नास्तीत्यत्र सम्मतिमाह *अभिन्न इति ॥ १२६ ॥ विज्ञानमात्रवादिमते ग्राह्यादिभेदाभावेऽपि सौत्रान्तिकमते भेदमाशङ्क्य तन्मतेऽपि भेदाभावस्तुल्य एवेत्याह *विज्ञानेति ॥ १२७ ॥ घटादेः स्वातिरिक्ताग्राह्यत्वमुपपादयति* क्षणेति ॥ १२८ ॥ *ज्ञानज्ञेयेति ॥ विज्ञानवादिमते ज्ञानमेव ग्राह्यग्राहकरूपेण भासते, बाह्यार्थवादिमते तु

ज्ञानज्ञेयपृथक्त्वेन तदैक्येन च तद्भिदा ॥ १२९ ॥
बाह्यार्थोऽस्त्वथवा मा भूत्साक्षी तु न धियः पृथक् ॥
सर्वशून्यत्ववादे तु सुतरां नास्ति साक्ष्यसौ ॥१३०॥
अत्रोच्यते न कुम्भादेरवभासात्मतोचिता ॥
दीपस्येवावभासस्य पृथक्त्वं व्यञ्जकत्वतः ॥ १३१ ॥
न प्रदीपात्मकः कुम्भो नावभासात्मकस्तथा ॥
कुम्भावभासकं बुद्धिविज्ञानं दीपवत्पृथक् ॥ १३२ ॥
व्यंग्यव्यञ्जकता कुम्भदीपयोर्भासिता धिया ॥
यथा धीदीपसम्बन्धः साक्षिणाऽपेक्ष्यतां तथा ॥१३३॥
ननु प्रकाशतमसोः क्रमात्कुम्भोऽनुगच्छति ॥

---

ग्राहकज्ञानाभेदेन नीलपीतादेर्ग्राह्यस्य सिद्धिस्तस्मिन्नेव ज्ञानेऽध्यासादिति भावः ॥१२९॥ साक्षिणं निराकरणमुपसंहरति *बाह्येति ॥ मुख्यवैनाशिकमते साक्षिणः प्रसर एव नास्तीत्याह *सर्वेति ॥१३०॥ तत्र बाह्यार्थवादिमतं तावन्निराकरोति *अत्रेति ॥ भासकं भास्यभिन्नं व्यञ्जकत्वाद् दीपवदित्यनुमानविरोधान्न कुम्भादेरवभासात्मकत्वकल्पनमुचितमित्यर्थः ॥१३१॥ उक्तमेवार्थं स्पष्टयति *नेति ॥ यथा कुम्भो न दीपात्मकः एवं नावभासात्मकोऽपि, अतः कुम्भभासकदीपवत्तद्भासकं ज्ञानं कुम्भाद्भिन्नमेवेत्यर्थः ॥१३२॥ कुम्भधियोर्भेदेऽपि कथं त्वदभिमतसाक्षिसिद्धिस्तत्राह *व्यंग्येति ॥ कुम्भदीपयोर्भास्यभासकसम्बन्धो यथा बुद्धिवृत्त्या विना न सिध्यति एवं बुद्धिवृत्तिदीपसम्बन्धोऽप्यतिरिक्तसाक्षिणमन्तरा न सिध्यतीत्यर्थः ॥ १३३ ॥ धीदीपयोर्दीपकुम्भयोश्च भेदमंगीकृत्य धीसाक्षिणोर्भेदमाक्षिपति*नन्वित्यादिना ॥ भास्यभासकभेदस्तयोरन्यतरसत्त्वव्याप्तः, यथा दीपाभावेऽपि तमसि कुम्भावस्थानं, यथा वा दीपज्ञानोत्पत्तेः पूर्वमज्ञातत्वेन दीपास्थितिस्तद्वत् धीसाक्षिणोः

दीपोऽननुगतस्तेन भेदः कुम्भप्रदीपयोः ॥ १३४ ॥
ज्ञातताऽज्ञातते तद्वत्कुम्भे दीपो ऽनुगच्छति ॥
ज्ञातत्वमेव धीस्तेन भेदो धीदीपयोरपि ॥ १३५ ॥
धीसाक्षिणोर्विभेदे तु नोपायः क्वचिदीक्ष्यते ॥
न साक्ष्यस्ति विना बुद्ध्या न बुद्धिः साक्षिणा विना १३६
मैवं संशयमिथ्यात्वजन्मनाशादिभेदिनी ॥
बुद्धिः, साक्षी तु न तथा भेदो ऽतो बुद्धिसाक्षिणोः॥१३७॥
घटस्य व्यञ्जको दीपो दीपस्य व्यञ्जकं मनः ॥
मनसो व्यञ्जकः साक्षीत्यनवस्था प्रसज्यते ॥ १३८ ॥
मैवं न कोऽप्यतिशयः साक्षिण्यन्यकृतस्ततः ॥
न व्यञ्जकान्तरापेक्षा नानवस्था ततो भवेत् ॥ १३९ ॥
न साक्षिणोऽक्रियत्वेन करणं बुद्धिभासने ॥

---

अन्यतराभावेऽप्यन्यतरसत्त्वाद्दृष्टेर्व्यापकानुपलम्भात्तद्व्याप्तभेदो ऽपि न सम्भवतीत्यर्थः ॥ १३४ ॥ १३५ ॥ १३६ ॥ सुप्तौ बुद्धिवृत्तिं विनाऽपि अज्ञानसाधकसाक्षिणोऽवस्थानादत्र व्यापकानुपलब्धिरसिद्धेति परिहरति *मैवमिति ॥ धीसाक्षिणोर्भेदे हेत्वन्तरमाह* संशयेति ॥ १३७ ॥ बुद्धेरतिरिक्तसाक्षिगम्यत्वनियमेन तद्भासकत्वेन साक्ष्यन्तरस्य वक्तव्यत्वादतिप्रसङ्गं शंकते *घटस्येति ॥ १३८ ॥ साक्षिणः स्वप्रकाशत्वेन भासकान्तरानपेक्षणान्नानवस्थेति परिहरति* मैवमिति ॥ किञ्च ज्ञातताद्यतिशयजनकस्यैव व्यञ्जकत्वादतिरिक्तसाक्षिकल्पनायामपि न तस्य व्यञ्जकत्वमिति न साक्षिणः स्वव्यञ्जकसाक्ष्यन्तरापेक्षेत्याह* न कोऽपीति ॥ १३९ ॥ साक्षिणोऽन्यानपेक्षस्य बुद्ध्यादिभासकत्वमयुक्तं, विषयभासकबुद्ध्यादेः करणादिसापेक्षत्वदृष्टेरित्याशङ्क्य; बुद्ध्यादेर्विकारित्वेन तदपेक्षायामपि कूटस्थ-

अपेक्षितं, ततः साक्षी सुगतैर्मा निवार्यताम् ॥१४०॥
क्षणिकत्वं च विज्ञानशून्यवादौ च बालकैः ॥
वादिभिश्चावहास्यन्ते नातोऽत्र प्रयतामहे ॥ १४१ ॥
अनुभूत्या विरुध्यन्ते क्षणिकत्वादयो यथा ॥
न तथाऽनुभवात्मैष विरुद्धः केनचित् क्वचित् ॥१४२॥
यो विज्ञानमयोऽक्षेषु हृद्यन्तः पूर्णचिद्धनः ॥
स संसरति धीयोगाद्भ्रान्त्येत्यभ्युपगम्यताम् ॥ १४३ ॥

श्रुतिः–स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥

वार्त्ति०–जाग्रद्देहादिकं मृत्यो रूपं स्वप्ने निवर्त्तताम् ॥
न जन्मान्तर इत्येवमाशङ्क्योक्तं स वा इति ॥ १४४ ॥

---

नित्यचैतन्यस्य न करणाद्यपेक्षेत्याह *नेति ॥ नित्यसाक्षिणमुपसंहरति *तत इति ॥ १४० ॥ ननु पराभिमतं क्षणिकत्वं, विज्ञानवादं शून्यवादं चानिराकृत्य कथं स्वमतोपसंहारः क्रियते तत्राह *क्षणिकत्वमिति ॥१४१॥ ज्ञानस्यानित्यत्वानुभवात् त्वन्मते वा कथं नित्यानुभवसिद्धिस्तत्राह *अनुभूत्येति । *न तथेति । ज्ञानमुत्पन्नमित्यादिधियो वृत्तिविषयत्वादिति भावः ॥१४२॥ प्रकृतवाक्यार्थस्य निरवद्यतामाह *य इति ॥ १४३ ॥ स वा अयं पुरुष इत्याद्यवतारयति* जाग्रदिति ॥ स्वप्नावस्थायां मृत्युरूपशब्दितजाग्रद्देहाद्यतिक्रमोक्तावपि जन्मान्तरे तदतिक्रमस्यानुक्तत्वादात्मनो देहाद्यतिरिक्तत्वं स्फुटतरं न सिद्ध्यति, अतः परलोकसंचारोक्त्याऽपि तदतिरेकस्तस्योच्यतेऽनन्तरवाक्येनेत्यर्थः ॥ १४४ ॥ वाक्यार्थमाह *युज्यते इति ॥ जन्मान्तरे पाप्मशब्दितपूर्वशरीराद्य-

युज्यते जायमानः सन्दुःखैरात्मैष ऐहिकैः ॥
मृतो वियुज्यते, भावि जन्म स्वप्नसमं ततः ॥ १४५ ॥
जन्मात्र नासतः सत्त्वं किन्तु देहेन संयुतिः ॥
प्रादुर्भावो जनेरर्थः सत एव स युज्यते ॥ १४६ ॥
मृतिः प्राणवियोगः स्यान्न तु नाशः सतो मतः ॥
मृङ् प्राणत्याग इत्युक्तं स्वयं नष्टः कथं त्यजेत् ॥ १४७॥
इमं लोकं परं चायं जाग्रत्स्वप्नप्रवाहवत् ॥
सदा भजति तेनास्य सिद्धा देहादिभिन्नता ॥ १४८ ॥

श्रुतिः-तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च ॥

वार्त्ति०-लोकायतः परं लोकं नेच्छत्यन्ये तु मन्वते ॥
त्रीन्लोकान्स्वप्नसंयुक्तान् ततस्तस्येति वक्त्यसौ ॥ १४९॥

---

ननुवृत्तौ फलितमाह *भावीति ॥ तथाच स्वप्ने जाग्रद्देहव्यतिरेकवज्जन्मान्तरेऽपि पूर्वदेहव्यतिरेकः सिध्यतीत्यर्थः ॥ १४५ ॥ जायमानः शरीरमभिसम्पद्यमान इत्यत्र पौनरुक्त्यमाशङ्क्याह* जन्मेति । देहयोगमात्रस्य जन्मत्वे जायमान इत्यस्यामुख्यार्थत्वं स्यात्, नेत्याह *प्रादुर्भाव इति ॥ 'जनिः प्रादुर्भावे' इति स्मृतेरिति भावः ॥ १४६ ॥ स उत्क्रामन् म्रियमाण इत्यत्रापि व्याख्यानव्याख्येयरूपत्वान्न पुनरुक्तिरित्याह* मृतिरिति ॥ म्रियमाण इत्यत्र मृतिपदस्यात्मनाशवाचकत्वे व्याकरणविरोधमाह *मृङिति ॥ १४७ ॥ उक्तं वाक्यार्थं संक्षिपन्फलितमाह* इममिति ॥ १४८ ॥ तस्य वेत्यादिवाक्यं परमतनिराकरणपरत्वेनावतारयति* लोकायत इति ॥ १४९ ॥ कथमनेन वाक्येन मतद्वयनिरा-

अयोगं परलोकस्य वारत्येवकारतः ॥
सन्ध्यत्वेन तृतीयत्वं स्वप्नलोकस्य वार्यते ॥ १५० ॥
भोगभावात्तृतीयत्वमुच्यते चेत्तथोच्यताम् ॥
वस्तुतो न तृतीयत्वं धर्माधर्मप्रसङ्गतः ॥ १५१ ॥
देशयोरुभयोः सन्धिर्नहि देशान्तरं यथा ॥
लोकयोरुभयोः सन्धिस्तथा लोकान्तरं नहि ॥१५२॥
इमं लोकमिव स्वप्ने परलोकं स पश्यति ॥
अतः प्रत्यक्षतोऽस्तित्वं परलोकस्य गम्यताम् ॥१५३॥
अतीतजन्मवृत्तान्तं बाल्ये प्रायेण पश्यति ॥

---

कृतिस्तत्राह *अयोगमिति ॥ द्वे एव स्थाने इत्यत्र एवकारो व्यत्यासेन योज्य इति भावः ॥ इहलोकपरलोकयोः सन्धौ भवं सन्ध्यमिति स्वप्नस्थानस्य संधित्वोक्त्या तृतीयलोकत्वं वारितमित्यर्थः ॥ १५० ॥ किञ्च स्वप्नस्थानस्य लोकत्वमौपचारिकं स्वाभाविकं वा? तत्राद्यमङ्गीकृत्य द्वितीयं प्रत्याह*भोगेति॥ *धर्मेति। स्वप्नकृतधर्मादेरस्मिन् लोके जाग्रदनुष्ठितधर्मादिवत्स्वर्गादिहेतुत्वप्रसङ्ग इत्यर्थः ॥ १५१ ॥ स्वप्नस्थानस्य सन्ध्यत्वोक्त्या तृतीयलोकत्वं वारितमित्युक्तं व्यनक्ति *देशयोरिति ॥ १५२ ॥ तस्मिन्सन्ध्य इत्यादेरर्थमाह* इममिति ॥ अनेन वाक्येनापि लोकायतमतं निरस्तमित्याह *अत इति ॥ १५३ ॥ कथं स्वप्नप्रत्यक्षं परलोकं गोचरयतीत्याशङ्क्याह *अतीतेति ॥ बाल्यावस्थायामैहिकामुत्रादिविषयस्वप्नस्यासम्भवाज्जन्मान्तरव्यापारमेव प्रायेण पश्यति। पुनस्त्वैहिकवासनाप्राबल्यात् प्रायेण ऐहिकव्यापार एव स्वप्ने स्फुरति। धर्मोत्कर्षवशादन्तिमे वयसि कश्चिद्भाविजन्म पश्यति । इत्थं चास्मिन् लोकेऽसम्भावितार्थस्य स्वप्ने दर्शनं परलो-

ऐहिकं यौवनेऽन्ते तु तपस्वी भावि वीक्षते ॥ १५४ ॥

श्रुतिः-अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दाँश्च पश्यति ॥

वा०-आक्रम्य यादृग्देहादि भाविजन्मनि वीक्षते ॥
स्वप्नेऽपि तादृगाक्रम्य सुखदुःखानि पश्यति ॥१५५॥

श्रुतिः-स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय ॥

वा०-बहुजन्मसु सञ्चाराद्देहादिव्यतिरिक्तताम् ॥
निरूप्याथ स्वप्रभत्वं स यत्रेति निरूप्यते ॥१५६॥
स यदा वासनामस्य जाग्रल्लोकस्य सर्वशः ॥
आदाय शेते, विज्ञेया तस्य स्वप्रभता तदा ॥१५७॥
स यत्र प्रस्वापित्यत्र स्वयञ्ज्योतिः पुमानिति ॥
योऽयमस्येत्यादिना तु स्वापशब्दार्थ उच्यते ॥१५८॥

---

कसरत्रे मातमिति भावः ॥ १५४ ॥ अथ यथाक्रमोऽयमित्या-देरर्थमाह* आक्रम्येति ॥ १५५ ॥

इयमत्र श्रुतियोजना-स्वप्नस्थाने तिष्ठन्नुभौ लोकौ पश्यतीत्युक्तम् । तत्र किमाश्रित्य पश्यतीति चोद्यार्थोऽथशब्दः। तस्योत्तरं-यथाक्रमइत्यादि । आक्रमत्यनेनेत्याक्रमो विद्याकर्मादि, यथाक्रमः सन् यादृग्विद्याकर्मादियुक्तः सन् परलोकस्थाने भोक्ता भवति तं तादृशमाक्रमं कर्मादिकमाक्रम्य आश्रित्य । पाप्मपदेन तज्जन्यं दुःखं लक्ष्यते । उभयान् पाप्मनः आनन्दांश्च कर्मफलानि पश्यतीति॥

पूर्ववाक्यतात्पर्यं संक्षिपन्स यत्र प्रस्वपितीत्याद्यवतारयति *बहिति ॥१५६॥ वाक्यार्थमाह *स इति ॥१५७॥ तात्पर्यमुक्त्वाऽक्षराणि योजयति* स यत्रेति ॥ यत्र-यस्मिन्काले प्रस्वपिति । अत्र-स्वापावस्थायां स्वयञ्ज्योतिरयं पुरुष इति सम्बन्धः ॥ १५८ ॥

न सुषुप्तिरिह स्वापः किन्तु स्वप्नो विवक्षितः ॥
स जाग्रद्वासनाजन्यप्रपञ्चप्रतिभात्मकः ॥ १५९ ॥
जाग्रल्लोकस्तु सर्वावानशेषमवतीत्यतः ॥
अवितृत्वं च सप्तान्नब्राह्मणात्प्राक् प्रपञ्चितम् ॥१६०॥
यद्वाऽध्यात्मादिभेदोऽयं सर्वोऽत्रास्तीति सर्ववान् ॥
तस्य सर्वावतोऽशेषवासना स्वप्नसृष्टिकृत् ॥ १६१ ॥
आदाय वासनां स्थूले देहे हित्वाऽभिमन्तृताम् ॥
सूक्ष्मेऽभिमानं निर्माय पश्यन्नेषोऽवतिष्ठते ॥ १६२ ॥
हननं च विनिर्माणं जीवकर्मवशादिति ॥
विवक्षुः स्वयमित्याह दैवं कर्मानुसार्यतः ॥ १६३ ॥
श्रुतिः-स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं
पुरुषः स्वयञ्ज्योतिर्भवति ॥ ९ ॥

---

स्वापशब्दार्थमाह *नेति ॥ वक्ष्यमाणोपयोगित्वेन स्वप्नस्वरूप-माह* स इति ॥ १५९ ॥ सर्वावत इत्यनेन सर्वमवतीति व्युत्पत्त्या सङ्घातविशिष्टः सर्वावानित्युच्यते, स एव लोक्यत इति लोकश्चेत्याह *जाग्रदिति ॥ कथं तस्य सर्ववितृत्वमित्याशङ्क्याहष्टद्वारा सर्वः सर्वस्य हेतुरिति सप्तान्नब्राह्मणोक्तं स्मारयति* अवितृत्व-मिति ॥ १६० ॥ सर्वावत इत्यस्यार्थान्तरमाह* यद्वेति ॥ अत्रेति कर्त्रात्मनिर्देशः ॥१६१॥ मात्रामुपादायेत्यस्यार्थमाह* आदायेति । आत्मनः स्वप्नसृष्टिहेतुः या वासना तामादाय दृष्टवस्तुवासनावा-सितः सन्निति यावत् । स्वयं विहत्येत्यस्यार्थमाह* स्थूल इति ॥ स्वयं निर्मायेत्यस्यार्थमाह* सूक्ष्म इति ॥ प्रस्वपिति इत्यस्यार्थमाह *पश्यन्निति ॥ १६२ विहत्य निर्मायेत्युभयत्र स्व-यमिति विशेषणमयुक्तं, सर्वस्यापि दैवाधीनत्वात्तत्राह* हनन-मिति ॥१६३॥ स्वेन भासा स्वेन ज्योतिषेत्यत्र पुनरुक्तिमाशङ्क्य

वा०-स्वेन भासेतिशब्दाभ्यां स्वकीया वासनोच्यते॥
स्वरूपभूता चित्त्वेन ज्योतिषेति विवक्षिता ॥ १६४ ॥
इत्थम्भावे तृतीया स्याद्वासनाज्योतिषोस्ततः ॥
भास्यभासकरूपेण स्थितिः स्वप्न इतीर्यते ॥ १६५ ॥
अत्रान्यज्योतिषोऽभावात्स्वयञ्ज्योतिः पुमान्भवेत् ॥
न ज्योतिष्ट्वं वासनाया भास्यत्वेन परीक्षणात् ॥१६६॥
आत्मबुद्धिमनश्चक्षुरालोकविषयैर्युते ॥
न जागरे स्वयञ्ज्योतिर्विवेक्तुं शक्यते नृभिः॥१६७॥
न सुषुप्तेऽपि तच्छक्यं भास्याभिव्यक्त्यभावतः ॥
श्रुतिः-न तत्र रथा न रथयोगा न पन्थानो भव-न्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान्मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान्पुष्करिणीः स्रवन्तीः सृजते स हि कर्त्ता ॥ १० ॥
वा०-स्वप्ने तु भास्यमस्त्येकं ततो ज्योतिर्विविच्यते १६८॥

---

व्याचष्टे *स्वेनेत्यादिना । कूटस्थप्रत्यग्ज्योतिरात्मना स्वकीयवासनाराशिसाक्षित्वेन तिष्ठतीत्यर्थः ॥१६४॥१६५॥ अत्रायमित्यादेरर्थमाह * अत्रेति ॥ अन्यज्योतिषोऽभावादित्युक्तं व्यनक्ति *नेति । स्वप्ने चित्तद्वासनाव्यतिरिक्तस्य भासकत्वप्रसक्तेर्मनसस्तद्वासनानां च भास्यत्वेनोपक्षयात्तत्साधकात्मैव स्वयञ्ज्योतिरित्यर्थः ॥१६६॥ अवस्थान्तरं विहाय स्वप्नावस्थायामेवात्मनः स्वयञ्ज्योतिष्ट्वकथने को हेतुस्तत्राह *आत्मेत्यादिना ॥ भास्यमस्तीति वासनामयं द्वैतमित्यर्थः ॥ १६७॥१६८॥ न तत्रेत्याद्यवतारयति *स्वप्न इति । स्वप्नावस्थायामप्यात्मनो ज्योतिष्ट्वं दुर्विवेचं, तत्रापि प्रमात्रादि

स्वप्नजागरवद् दृष्टा मातृमानादयस्ततः ॥
दुर्विवेचत्वमाशङ्क्य न तत्रेति निषिध्यते ॥ १६९ ॥
रथाश्वादीनि वस्तूनि जाग्रत्कर्मक्षये सति ॥
लीयन्ते वासनास्तेषां तिष्ठन्ति स्वप्नसिद्धये ॥ १७० ॥
सूक्ष्मकर्मोद्भवे ताभिर्वासनाभिरयं पुमान् ॥
निर्मिमीते रथाश्वादीनेतैः स्वप्ने रिरंसया ॥ १७१ ॥
रथाद्यभावमुक्त्वादावथ तत्सृष्टिकीर्तनात् ॥
असतः सत्त्वभावेन तन्मिथ्यात्वं स्फुटीकृतम् ॥ १७२ ॥
लोकसिद्धमुपादानं निमित्तं वा न विद्यते ॥
स्वप्ने, तेन रथादीनां मिथ्यात्वं युज्यतेतराम् ॥ १७३ ॥
असङ्गस्यापि सम्भाव्यमविद्याकामकर्मभिः ॥
स्रष्टृत्वमित्यभिप्रेत्य स हि कर्तेत्यथोच्यते ॥ १७४ ॥

---

सर्वप्रपञ्चस्यानुभूयमानत्वादिति शङ्कायां तन्निराकरणायोत्तरा श्रुतिः प्रवृत्तेत्यर्थः ॥ १६९ ॥

श्रुत्यर्थस्तु—तत्र स्वप्ने। रथे युज्यन्त इति रथयोगा अश्वादयः। अथ अपि, आनन्दाः सुखसामान्यानि, मुदो हर्षाः पुत्रादिनिमित्ताः, प्रमुदास्त एव प्रकर्षेणोपेताः, वेशन्ताः पल्वलाः, पुष्करिण्यः तटाकाः, स्रवन्त्यो नद्यः, स्वप्ने प्रतीयमानस्य वासनामयत्वेन व्यावहारिकप्रपञ्चस्याभावादात्मज्योतिः सुविवेचमिति भावः ॥१७०॥

वाक्यार्थमाह *रथेतिद्वाभ्याम् ॥१७०॥१७१॥ ननु स्वप्नप्रपञ्चोऽपि न मृषा, तत्राह* रथाद्यभावमिति ॥ १७२ ॥ न्यायतोऽपि तस्य मिथ्यात्वमाह *लोकेति ॥ १७३ ॥ असङ्गस्यात्मनः स हि कर्तेत्यत्र सृष्टिकर्तृत्वोक्तिरयुक्ता तत्राह *असङ्गस्येति ॥ १७४ ॥ तदेते श्लोका इत्यादेस्तात्पर्यमाह* ब्राह्मणेति ।

श्रुतिः-तदेते श्लोका भवन्ति ।
स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति ॥
शुक्रमादाय पुनरेति स्थानꣳ हिरणमयः पुरुष एक-
हꣳसः ॥ ११ ॥

वार्त्ति०-ब्राह्मणोक्तार्थदार्ढ्यार्थं श्रुतिर्मन्त्रानुदाहरत् ॥
स्वयञ्ज्योतिष्ट्वदेहादिभिन्नत्वे तेष्वपि स्फुटे ॥ १७५ ॥
स्वप्नवृत्त्या निहत्यैनं जाग्रद्देहमलुप्तचित् ॥
आदाय वासनां तज्जान्भावान्पश्यति सुप्तिमान् ॥ १७६ ॥
पुनर्जागरितस्थानमेति ज्योतिर्मयः पुमान् ॥
हन्ति याति क्रमेणैक इत्येको हंस उच्यते ॥ १७७ ॥

---

तव तत्रोक्तेऽर्थे इमे श्लोका मंत्रा भवंतीति श्रुत्यर्थः ।

मंत्रोदाहरणफलमाह* स्वयमिति । यदात्मनः स्वयञ्ज्योतिष्ट्वं देहादिभिन्नत्वं चोक्तं तदुभयं मंत्रे स्फुटीभवतीत्यर्थः ॥ १७५ ॥ मंत्रपदानि व्याचष्टे *स्वप्नवृत्त्येति ॥

शारीरमित्यत्र स्वार्थे वृद्धिः । तदभिप्रहत्य निहत्य निश्चेष्टामापाद्येति यावत् । सुप्तान्स्वप्नदशायामुद्भूतान्वासनामयप्रपञ्चानभिचाकशीति पश्यतीत्यर्थः ॥

शुक्रमादायेत्यस्याभिचाकशीत्यनेनान्वयमाह *आदाय वासनामिति ॥ १७६ ॥

शुक्रं ज्योतिष्मदर्थप्रकाशहेतुत्वाद्रागादींद्रियवासनाः शुक्रशब्देनोच्यन्त इति भावः ॥

पुनरेति स्थानमित्यादेरर्थमाह *पुनरिति । हिरण्मयपदव्याख्या ज्योतिर्मय इति ॥ एकहꣳस इत्यस्यार्थमाह *हन्तीति ॥ हंतिरत्र गत्यर्थः । 'हन हिंसागत्योः'इति स्मृतेः । एक एवा व-

श्रुतिः-प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृत-श्चरित्वा ॥ स ईयते ऽमृतो यत्रकामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥

वार्त्ति०-प्राणेन मरणाद्रक्षन्देहं देहाभिमानतः ॥
बहिर्भूतः स्वप्ननाड्यां यथेच्छं विहरत्ययम् ॥ १७८ ॥

श्रुतिः-स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि ॥
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥

वार्त्ति०-उच्चावचं देवतिर्यग्भावं प्राप्य वधूसुखम् ॥
स भक्ष्यं पश्यतीवैष यद्वा व्याघ्रादिजं भयम् ॥१७९॥

स्थावरं क्रमेण पातीत्येकहंस इत्युच्यत इत्यर्थः ॥ १७७ ॥
प्राणेनेत्येतस्यार्थमाह* प्राणेनेति ॥ १७८ ॥

पञ्चवृत्तिप्राणेनावरमनेकाशुचिसंघातत्वादतिनिकृष्टं कुलायं देहं मरणात्पालयन् बहिः कुलायाद्देहाद्बहिश्चरित्वा । यद्यपि देहस्थ एव स्वप्नं पश्यति तथापि तदभिमानाद्बहिर्भूतस्तदानीमिति बहिश्चरित्वेत्युक्तम् । अमृतः स्वयममरणधर्मा स ईयते सञ्चरति । यत्रकामं यथाकामं स्वप्ननाड्यां विहरतीत्यर्थः ॥ १२ ॥

स्वप्नांत इत्यादेरर्थमाह *उच्चावचमिति ॥ १७९ ॥

स्वप्नान्ते स्वप्नस्थाने उच्चं देवादिभावम् अवरं तिर्यगादिभावम् ईयमानः प्राप्नुवन्देवो द्योतनवान् बहूनि रूपाणि वासनात्मकानि कुरुते । उतापि स्त्रीभिः सह मोदमान इव जक्षदिव हसन्निव वयस्यैः, बिभेत्येभ्य इति भयानि व्याघ्रादयस्तान्पश्यन्निव विहरतीति पूर्वेण सम्बन्धः ॥ १३ ॥

श्रुतिः–आराममस्य पश्यन्ति न तं पश्यति कश्चनेति तन्नायतं बोधयेदित्याहुः ॥

वा०–आराममेव मायोत्थं स्वप्ननिर्माणलक्षणम् ॥
पश्यन्ति जन्तवस्तस्य न तं पश्यति कश्चन ॥ १८० ॥
प्रत्यक्षगोचरं देवं लोकं चातिप्रमादिनम् ॥
दृष्ट्वा श्रुतिः शिरस्ताडमनुक्रोशाति दुःखिता ॥ १८१ ॥
स्वप्ने परीक्षते द्रष्टा देहाद्भिन्नः स्वयम्प्रभः ॥
सुविवेचस्तथाऽप्येवं परीक्षन्ते न पामराः ॥ १८२ ॥
चिकित्सकप्रसिद्ध्याऽपि सुप्तो देहाद्विभिद्यते ॥
द्रुतं न बोधयेत्सुप्तमिति प्राहुश्चिकित्सकाः ॥ १८३ ॥
त्वरयाऽऽगतिरक्षाणां नाडीषु व्यत्ययाद्यदि ॥
अचिकित्स्यस्तदा रोग इति याथं वदन्ति ते ॥ १८४ ॥
सुप्तानुपेक्षते देहं पुनर्व्याप्नोति जागरे ॥

---

आराममित्यादेरर्थमाह *आराममिति ॥ वासनामयं ग्रामनगरस्त्रियाद्याक्रीडनमेव पश्यतीत्यर्थः ॥ १८० ॥ न तमित्यादेस्तात्पर्यमाह *प्रत्यक्षेति । अतिप्रमादित्वम् अनात्मप्रावणत्वम् ॥ १८१ ॥ कथं तस्य प्रत्यक्षगोचरत्वमविद्यावृतत्वादित्याशङ्क्यानुक्रोशं विवृणोति*स्वप्न इति ॥ १८२ ॥ तन्नायतमित्यादेस्तात्पर्यमाह *चिकित्सकेति ॥ आयतपदव्याख्या–द्रुतमिति ॥ १८३ ॥ गाढसुप्तस्य द्रुतबोधने को दोष इत्याशङ्क्य दुर्भिषज्यमित्यादि व्याचष्टे* त्वरयेति ॥ यमिन्द्रियद्वारा देशं यस्माद्द्वारदेशादपसृतः तमिन्द्रियदेशमेव आत्मा पुनर्न प्रतिपद्यते । त्वरया बोधने नाडीव्यत्यासेनेन्द्रियं प्रविष्टं चेत्तत्र बाधिर्यादिरोगप्राप्तौ दुर्भिषज्यं दुश्चिकित्स्योऽयं रोगो भवतीत्यर्थः ॥ १८४ ॥ प्रकृतत्रा-

इति चेच्चोक्तितो भाति सिद्धाऽन्तो देहतो भिदा॥१८५॥

श्रुतिः—दुर्भिषज्य९ं ह्यस्मै भवति यमेष न प्रतिपद्यते- ऽथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयञ्ज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥

वा०—देहान्यत्वस्वप्रभत्वे ह्यसोढ्वा स्वप्नमप्यमुम् ॥
अपह्नुवानाश्चार्वाकास्तस्याहुर्जागरात्मताम् ॥१८६॥
तदसत्स्वप्नपार्थक्यं प्रसिद्धं लोकशास्त्रयोः ॥
अत्रायं पुरुषस्तेन स्वप्रभः स्वतनोः पृथक् ॥ १८७ ॥
उक्तमर्थद्वयं मुक्तेरङ्गमेवास्य दक्षिणाम् ॥

---

वयतात्पर्यं संक्षिपन्फलितमाह *सुप्ताविति ॥ १८५ ॥ अथो- खल्वित्याद्यवतारयति *देहेति ॥ ॥ १८६ ॥

अपि खल्वन्य आहुर्जागरितदेश एवास्यात्मन एष स्वप्नः न स्थानांतरमतो जाग्रद्दशायामिव तत्राप्यात्मनो देहान्यत्वं स्वप्रभत्वं च दुर्विवेचमिसर्थः ॥ स्वप्नस्यापि जागरितदेशत्वे हेतुं चाचक्षते । यानि ह्येव जाग्रत्पश्यति हि यस्माद्यानि गजादीनि जाग्रज्जागरितदेशे पश्यति तान्येव सुप्तोऽपि पश्यति । स्वप्नस्यान्यत्वे जागरितादपूर्वमेव पश्येदतो जाग्रदेव स्वप्न इति भावः

तन्मतं दूषयति* तदसदिति। श्रुतेर्बाह्यरेव परिहृत्तात्रेत्यादि व्याचष्टे *अत्रेति ॥ तेनेति लोकशास्त्रप्रसिद्धिविरोधेन चार्वाकमतस्य तुच्छत्वादित्यर्थः ॥ १८७ ॥ सोऽहमित्यादेरर्थमाह *उक्तमिति । देहान्यत्वस्वप्रभत्वयोर्वाक्यार्थज्ञानांगभूतयोः उपदि-

गोसहस्रं गृहाणात ऊर्ध्वं ब्रूहि विमुक्तये ॥ १८८ ॥

श्रुतिः-स वा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापञ्च पुनः प्रतिन्यायं प्रतियोन्या द्रवति बुद्धान्तायैव स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥१६॥

स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्या द्रवति स्वप्नान्तायैव ॥ १७ ॥

वार्त्ति०-मृत्योरूपाणि देहादीन्यत्येतीति पुरोदितम् ।
न मुक्तिस्तावता कामकर्ममृत्योरनत्ययात् ॥ १८९ ॥
मोदत्रासौ कर्मकार्यौ दृष्टौ स्वप्नेऽपि चात्मनः ॥
इत्याशङ्क्य स वा एष इति कर्म विविच्यते ॥ १९० ॥

---

दत्वात्तदर्थं दक्षिणां दत्वा वाक्यार्थनिश्चयाय पुनः पृच्छतीत्यर्थः ॥ १८८ ॥ वृत्तमनूद्यानन्तरवाक्यमवतारयति *मृत्योरिति ॥ १८९ ॥ स्वप्ने कामकार्माख्यमृत्योरत्ययाभावे हेतुमाह *मोदेति ॥ कामकर्मादेरात्मधर्मत्वेऽग्न्यौष्ण्यवन्नित्ययोगेनानिर्मोक्षप्रसङ्गात्तस्यात्मस्वभावत्वं नेति दर्शयितुं स वा इत्यादिवाक्येनात्मनः सकाशात्कर्मादिकं विविच्यत इत्यर्थः ॥ १९० ॥ तत्र सम्प्रसादश-

कालुष्यं जागरे जीवे स्वप्ने स्वल्पा प्रसन्नता ॥
सम्यक्प्रसीदत्यत्रेति सम्प्रसादः सुषुप्तकम् ॥ १९१ ॥
अद्वैतत्वात्सम्प्रसादे रमणाद्युच्यते कथम् ॥
अरत्वेति पदच्छेदे स यत्तत्रेत्यसङ्गतम् ॥ १९२ ॥
बहुधोत्तरमत्रोक्तमानन्दभुगिति श्रुतेः ॥
भोगो रत्यादिरथ वा सुप्त्यनैक्यादिहोत्तरम् ॥१९३॥
जाग्रत्स्वप्नसुषुप्तीनामेकैकस्मिन् त्रिधा सति ॥
जाग्रत्सुषुप्तिः स्वप्नसुप्तिः सुप्तिसुप्तिश्च लभ्यते ॥१९४॥
प्रमितिर्जागरे जाग्रद्भ्रमः स्वप्नोऽथ मूढता ॥
पानादिजन्या सुप्तिः स्यादेवं जागरणं त्रिधा ॥१९५॥

---

च्दस्य सुषुप्तिवाचकत्वं निर्वचनेनाह *कालुष्यमिति ॥ १९१ ॥ सुप्तौ पुत्रादिद्वितीयवस्त्वभावाद्रत्वा चरित्वेति रमणाद्युक्तिरयुक्तेति शङ्कते *अद्वैतत्वादिति ॥ तत्रैकदेश्युक्तं परिहारं वाक्यशेषविरोधेन दूषयति *अरत्वेति ॥ १९२ ॥ तर्ह्युक्तशङ्कायाः कः परिहार इत्याशङ्क्य तत्र त्रिविधपरिहारोऽस्तीत्याह *बहुधेति ॥ अत्र सुप्तस्यापि स्वरूपानन्दानुभवलक्षणभोगश्रुतेः रमणाद्युपपत्तिरित्येकं परिहारमाह* आनन्दभुगिति ॥ अस्मिन्पक्षे चरित्वेत्यादिनामनाअस्यमाशङ्क्य परिहारान्तरमाह* अथवेति ॥ १९३ ॥ सुप्त्यवस्थाया एकत्वात्कथं तदनेकत्वं तत्राह *जाग्रदिति । जाग्रदादीनां मध्ये एकैकस्मिन्नपि जागरादित्रैविध्ये कल्पिते सति सुप्त्यनैक्यं सम्भवतीत्यर्थः ॥ तदेवोदाहरति *जाग्रत्सुप्तिरिति ॥१९४॥ एकैकस्मिन्त्रैविध्यकल्पनाप्रकारमाह *प्रमितिरिति चतुर्भिः । *स्पष्टस्मृतिरिति ॥ स्वप्नोपलब्धेषु गजादिषु उत्थानानंतरं यत्स्पष्टं स्मर्यते तद्विषयोपलब्धिः । स्वप्नजाग्रद्यदस्पष्टं स्मर्यते तद्धि स्वप्नः,

स्पष्टस्मृतिरथास्पष्टस्मृतिरस्मृतिरित्यमी ॥
स्वप्नभेदाः स्वप्नमध्ये जाग्रत्स्वप्नसुषुप्तयः ॥ १९६ ॥
आहारादिविभेदेन सात्त्विकी राजसी तथा ॥
तामसीति त्रिधा सुप्तिः सा परा दृश्यते त्रिधा॥१९७॥
सुखमस्वाप्समत्राद्य दुःखमस्वाप्समद्य तु ॥
गाढमूढोऽहमस्वाप्समित्युक्तिः सार्वलौकिकी ॥ १९८॥
एवं सुप्ते बहुविधे रत्यादि क्वापि सम्भवेत् ॥
यद्वा सुप्तेः पुरा स्वप्ने रमणादिनि योजयेत् ॥१९९॥
स्वप्ने रत्वा चरित्वाऽथ विश्रान्तः सम्प्रसादके ॥
पुनरायात्यसौ नाडीं स्वप्नार्थमिति योजना ॥ २०० ॥
दृष्ट्वैवेत्येवशब्देन न कृत्वेति विवक्षितम् ॥
न कर्म कुरुते स्वप्ने कारकाणामसम्भवात् ॥२०१॥
अगम्यागमनं स्वप्ने न प्रायश्चित्तमर्हति ॥
स्कन्नस्य रेतसः स्वस्थात्प्रायश्चित्तं तदुद्भवम् ॥ २०२ ॥

---

यत्र स्मर्यते तद्धि स्वप्नसुषुप्तिरित्यर्थः ॥१९५॥१९६॥१९७॥१९८॥ प्रत्येकं वैविध्यसिद्धौ फलितमाह *एवमिति । क्वापीति जाग्रत्सुप्तौ स्वप्नसुप्तौ वेत्यर्थः ॥ समाध्यन्तरमाह *यद्वेति ॥ स्वप्ने एव चेद्रत्यादिकं विवक्षितं तर्हि संप्रसादपदस्य कुत्रान्वय इत्याशङ्क्याध्याहारेण वाक्यं योजयति *स्वप्न इति ॥ स एष प्रकृतः स्वयंज्योतिरात्मा स्वप्ने रत्यादिकमनुभूयानंतरं सुप्तिं प्राप्य तत्र विश्रान्तः सन् पुनः स्वप्नार्थमागच्छतीत्यर्थः ॥२००॥ एवकारस्य प्रयोजनमाह *दृष्ट्वेति ॥ *न कर्मेति ॥ तत्र प्रतीयमानाऽपि क्रिया मृषेति भावः ॥२०१॥ तत्रोपपत्तिमाह *अगम्येति ॥ कथं तर्हि स्वप्ने रेतस्खलनादिनिमित्तं प्रायश्चित्तं श्रूयते तत्राह *स्कन्नस्येति ॥ स्वप्नकालीनरेतो जागरेऽपि प्रतिपन्नं निमित्तीकृत्य प्रायश्चित्तमि-

मोदत्रासौ दर्शनार्हौ पुण्यपापागिरोदितौ ॥
स्वप्ने कर्मफलं भुङ्क्ते स्वचिदाभासवर्त्मना ॥ २०३ ॥
रमणं चरणं मोदत्रास इत्यादिरूपतः ॥
विजृम्भते वासनैव साक्षी पश्यति केवलः ॥२०४॥
जागरात्स्वप्नमाप्नोति स्वप्नात्सुप्तिमिति क्रमात् ॥
वैपरीत्यं प्रतिन्यायः प्रतिमार्ग इतीर्यते ॥ २०५ ॥
प्रतियोनि यथास्थानं स्वप्ननाड्यादि भण्यते ॥
प्रतिमार्गमवाप्याथ स्वप्नावस्थानमाव्रजेत् ॥ २०६ ॥
स्वप्नायैव न मोक्षाय सुषुप्तेः पुनरागमः ॥
तथापि वस्तुस्वाभाव्यान्न दृष्टेनानुगम्यते ॥ २०७ ॥
सम्प्रसादे ततः पूर्वं स्वप्ने वा यत्स ऐक्षत ॥
तेनानन्वागतः किन्तु स्वयमेव समागतः ॥ २०८ ॥
अनन्वागमने हेतुरसङ्गत्वं हिशब्दतः ॥

---

सर्थः ॥२०२॥ पुण्यपापयोरध्यक्षायोग्यत्वाद् दृष्ट्वेत्यनुपपन्नं तत्राह *मोदेति । उदितौ लक्षणयेति शेषः ॥ असङ्गस्यात्मनो मोदादिलक्षणभोगोऽनुपपन्नोऽत आह* स्वप्न इति ॥ असङ्गस्यापि बुद्धिस्थचिदाभासद्वाराऽऽरोपितं भोक्तृत्वमविरुद्धमिति भावः ॥ २०३ ॥ वस्तुतस्तदभावं दर्शयति *रमणमिति॥२०४॥ पुनः प्रतिन्यायमित्यस्यार्थमाह* जागरादिति ॥ अत्र प्रतिशब्दो वैपरीत्यवचनः । निशब्दो निश्चयवचनः । आयशब्दो मार्गपरः । तथा च जाग्रत्स्वप्नसुषुप्तिक्रमेण प्राप्तस्य तद्वैपरीत्येन स्वप्नं जागरितं वा प्राप्तुं निश्चयेन पुनरागमनमार्गः पुनः प्रतिन्यायमित्यनेनोच्यते इत्यर्थः॥२०५॥ प्रतियोनीत्यस्यार्थमाह* प्रतियोनीति ॥ पदार्थमुक्त्वा वाक्यार्थमाह *प्रतिमार्गमिति॥२०६॥ स्वप्नायैवेत्यवैवकारव्यावर्त्यमाह* नेति ॥ स यदीत्यादेस्तात्पर्यमाह *तथेति ॥ २०७ ॥ अक्षराणि व्या-

सूच्यते बाधकस्तर्कः प्रसिद्धिर्वाऽत्र लौकिकी ॥२०९॥
यदि स्थानान्तरं प्राप्तमन्वियात्स्वप्नजा क्रिया ॥
शास्त्रारम्भस्तदा व्यर्थः स्वप्ने को नापराध्यति ॥२१०॥
लोकप्रसिद्धिर्विस्पष्टा जाग्रत्यननुवर्त्तने ॥
स्वप्नलब्धगजादीनामनन्वागतता ततः ॥ २११ ॥
यद्वाऽनन्वागतत्वेन विवेकः कर्मणः कृतः ॥
असङ्गत्वेन कामस्य कामो न ह्यात्मनो गुणः ॥२१२॥
आत्मनश्चेदयं कामो गुणश्चेनन्यवत्तदा ॥
दृश्यत्वं तस्य नैव स्यात्तस्माद् दृश्यधियो गुणः॥२१३॥
पुष्पगन्धः पुटस्थोऽपि पुष्पस्यैव यथा तथा ॥
आत्मनिष्ठतया वादिवर्णितोऽपि धियो गुणः ॥२१४॥
कर्मकामविवेकोऽयमुक्तो युक्त्याऽभ्युपेत्य तम् ॥

---

चेष्ट *संप्रसाद इत्यादिना ॥ २०८ ॥ २०९ ॥ हिशब्दसूचितं बाधकतर्कं विवृणोति *यदीति ॥ शास्त्रवैयर्थ्ये हेतुः *स्वप्न इति। स्वप्नदशायां पापस्य दुष्परिहरत्वात्तेनापि संश्लेषे बुद्धिशुद्धिरेव नोत्पद्यतेति शास्त्राधिकारी न सिध्यतीति भावः ॥२१०॥ प्रसिद्धिर्वाऽत्र लौकिकीत्युक्तं विशदयति *लोकेति ॥२११॥ अनन्वागतवाक्यस्यासङ्गवाक्यस्य च स्वाभिमतार्थमुक्त्वा भर्तृप्रपञ्चोक्तमर्थमत्यादेयत्वेन दर्शयति *यद्वेति ॥ अनन्वागतवाक्यस्य कर्मविवेकार्थत्वेऽप्यसङ्गवाक्यस्य कामविवेकार्थत्वमयुक्तं, कामस्यात्मधर्मत्वादिति नेत्याह *काम इति ॥ २१२ ॥ तस्यात्मस्वभावत्वे बाधकं वदन् बुद्धिधर्मत्वमाह* आत्मन इति ॥ २१३ ॥ एवं कामादेरनात्मधर्मत्वे सिद्धे आत्मनिष्ठतया भानादेव तस्यात्मधर्मत्वमिति वैशेषिकाद्युक्तमयुक्तमिति सदृष्टान्तमाह *पुष्पेति ॥ २१४ ॥ उ-

दत्वा तु दक्षिणां भूयः पप्रच्छ श्रुत्यपेक्षया ॥ २१५ ॥
स ईयते यत्र कामं यथाकामं प्रवर्त्तते ॥
इति श्रुतिद्वयं स्वप्ने विस्पष्टं काममब्रवीत् ॥ २१६ ॥
सति कामे कर्मसत्त्वमनिवार्यं ततो द्वयात् ॥
विमोक्षायैव मे ब्रूहि मा शङ्कामवशेषय ॥ २१७ ॥
स्वप्नकामस्य वस्तुत्वं श्रुतिभ्यां चेद्विवक्षितम् ॥
प्रबोधेऽप्यनुवर्त्तेत तच्च नास्ति ततो मृषा ॥ २१८ ॥
उतेव स्यान्महाराज उतेव स्त्रीभिरुच्यते ॥
श्रुतिवाक्ये इवेत्युक्त्या स्वप्नमिथ्यात्वमाहतुः ॥२१९॥
जाग्रत्प्रत्यक्षमाश्रित्य जागरे मृत्युसत्यताम् ॥

---

क्तमर्थमुपसंहरन्सोऽहमित्यादेरर्थमाह *कर्मेति । *श्रुत्यपेक्षयेति ॥ आत्मनः कामकर्मव्यतिरिक्तत्वे श्रुतिविरोधशङ्का ऽपरिहार्येति तदिच्छया पुनः पृच्छतीत्यर्थः ॥ २१५ ॥ उक्तमेवार्थं स्पष्टयति *स इति द्वाभ्याम् ॥ चतुर्थोक्तं स्वे शरीरे यथाकामं परिवर्तत इति वाक्यमेवार्थतः पठति *प्रवर्त्तत इति ॥ द्वयात्कामात्कर्मणश्चेत्यर्थः॥२१६॥ ॥२१७॥ प्रश्नतात्पर्यमुक्त्वा स वा इत्याद्युत्तरखण्डोक्तप्रतिवचनतात्पर्यमाह* स्वप्नकामस्येति ॥ कामस्य सत्यत्वे तद्दृष्टांतेन काम्यमानस्त्र्यादेरपि सत्यत्वप्रसङ्गः । तथा च जागरणे तस्यानुवृत्तिः स्यात, न चानुवर्त्तते, तस्मात्स्वप्ने काम्यमानस्त्र्यादिवत्तत्कामोऽपि मिथ्येति न तस्य सत्यत्वमुक्तश्रुतिभ्यां विवक्षितमित्यर्थः ॥२१८॥ स्वप्नस्य मिथ्यात्वे हेत्वन्तरमाह *उतेति । कामस्य मिथ्यात्वे सिद्धे न तस्यात्मत्वभावनेत्यात्मनस्तद्भिन्नत्वं सिद्धमिति भावः ॥२१९॥ स वा एष एतस्मिन्स्वप्ने रत्वेत्यादेस्तात्पर्यमुक्त्वा इत ऊर्ध्वमित्यादि पुनः प्रश्नस्य तात्पर्यमाह* जाग्रदिति ॥

आशङ्क्य पुनरप्राक्षीद् दृष्ट्वेति तदुत्तरम् ॥ २२० ॥
मूढप्रत्यक्षतः कर्त्ता विद्वत्प्रत्यक्षतोऽक्रियः ॥
विवेकिनामनुभवादात्मज्योतिर्विवेचितम् ॥ २२१ ॥
जाग्रद्बन्धस्य वस्तुत्वे आत्मा स्वप्नागतो भवेत् ॥
आयाति च ततोऽसङ्गः सिद्धोऽवस्थात्रये पुमान्॥२२२॥
असकृत्स्वप्नबुद्धान्तसंचारेऽपि न सङ्गवान् ॥
इत्यर्थेऽस्मिन्महामत्स्यो दृष्टान्तत्वेन वर्ण्यते ॥ २२३ ॥

श्रुतिः–तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तञ्च ॥ १८ ॥

वा०—महामत्स्यः प्रवाहस्य पारवश्यं न गच्छति ॥

---

जागरणेऽहं कर्त्तेत्यबाधितानुभवसिद्धस्य कर्तृत्वादेः कथमसत्त्वमिति शङ्कया पुनः पप्रच्छेत्यर्थः ॥ प्रत्युक्तितात्पर्यमाह *दृष्ट्वेति ॥ स वा एष एतस्मिन्बुद्धान्त इत्याद्युत्तरखण्डिकायां दृष्ट्वेत्येवंप्रकारेण बुद्धान्तशब्दितजागरणेऽप्यात्मनः पुण्यपापसाक्षित्वमेव न वस्तुतः कर्तृत्वमिति श्रुत्यैवोत्तरं दत्तमित्यर्थः ॥ २२० ॥ ननु श्रुतिर्वा कथमनुभवविरुद्धमाहेत्यत आह *मूढेति ॥ कर्तृत्वानुभवस्य मोहमूलत्वेन भ्रमत्वं दर्शयितुं विद्वत्प्रत्यक्षसिद्धं वस्तुतः कर्तृत्वादिरहितं साक्षिरूपं श्रुत्या विवेचितमित्यर्थः ॥२२१॥ न्यायतोऽपि तस्याकर्तृत्वं साधयति *जाग्रदिति । अहं मनुष्य इत्यादिस्थूलशरीरतादात्म्याभिमानलक्षणबन्धस्य कर्तृत्वादेश्च सत्यत्वे तस्य निवृत्त्ययोगात्स्वप्नाद्यवस्थाद्वयं न स्याद् दृश्यते चावस्थाद्वयम् अतो न बन्धस्य सत्यतेत्यर्थः ॥ जाग्रद्बन्धस्याप्यवस्तुत्वे फलितमाह* तत इति ॥२२२॥ तद्यथेत्याद्यवतार्य व्याचष्टे *असकृदित्यादिना ॥२२३॥

नापि कूलद्वये सङ्गमेवमात्मनि योज्यताम् ॥ २२४ ॥
न कर्मवश आत्माऽयं कर्माध्यक्षत्ववशात्ततः ॥
अतो न तत्फलेनापि सज्यते स्वप्नजाग्रतोः ॥ २२५ ॥
इत्थं स्वप्नप्रसङ्गेन देहादिव्यतिरिक्तता ॥
स्वप्रभत्वमसङ्गत्वं चेत्येतेऽर्थाः प्रपञ्चिताः ॥ २२६ ॥
केचिदत्र महामत्स्यदृष्टान्तेन निवर्त्तिता ॥
लोकायतस्य शङ्केति प्राहुः; शङ्का तु वर्ण्यते ॥२२७॥
चैतन्यं भौतिकं भूतव्यतिरेकानिरूपणात् ॥
कामकर्मविवेकोऽतः कस्येत्याशङ्क्य वर्ण्यते ॥ २२८ ॥
क्रमेण सञ्चरन्कूले मत्स्यस्ताभ्यां पृथग्यथा ॥
स्वप्नबुद्धान्तभूम्योश्च तथाऽऽत्मा सञ्चरन्क्रमात्॥२२९॥
चिदात्मा भौतिकः स्याच्चेद् भूतानामविशेषतः ॥

---

२२४॥ आत्मनि योज्यतामित्युक्तं योजनाप्रकारमेवाह* नेति ॥२२५॥ स वा अयम् इत्यारभ्य मत्स्यवाक्यपर्यंतसंदर्भेण वर्णितमर्थं बुद्धिसौकर्याय संगृह्णाति *इत्थमिति॥२२६॥ मत्स्यवाक्यस्य भर्तृप्रपञ्चोक्तमर्थमाह *केचिदित्यादिना। चैतन्यस्य भूतचतुष्टयात्मकदेहधर्मत्वेन भौतिकत्वाद्देहातिरिक्तचिदात्मनि मानाभावात्तस्यासङ्गत्वादिनिरूपणमयुक्तमिति चार्वाकवराकशङ्का मत्स्यवाक्येन निवर्त्यत इत्यर्थः ॥२२७॥२२८॥ वाक्यार्थमाह* क्रमेणेति ॥ यथा कूलाभ्यां भिन्नो मत्स्यस्तथात्माऽवस्थाद्वयात्पृथग्भूतः, तथाचेन्द्रियैरर्थोपलब्धिलक्षणजागरणात् तद्वासनाजन्यज्ञानलक्षणात्स्वप्नाच्च भेदे आत्मनो भौतिकज्ञानभिन्नत्वं सिध्यतीत्यर्थः ॥ २२९ ॥ आत्मज्योतिषो भौतिकत्वे बाधकमाह* चिदात्मेति ॥ भौतिकज्योतिरारम्भकभूतमात्राणामवस्थाद्वयेऽप्यविशेषाज्जाग्रति स्वप्ने

युगपत्प्राप्नुयाज्जाग्रत्स्वप्नयोर्दर्शनं द्वयोः ॥ २३० ॥
अभौतिकत्वेऽप्यात्माऽयं व्यापित्वाद्युगपत्कुतः ॥
द्वयं न पश्येदिति चेद्देवतास्तन्नियामकाः ॥ २३१ ॥
अक्षाधिष्ठातृदेवानां क्रमेण स्वप्नजाग्रतोः ॥
प्रयत्नस्तद्वशादात्मा क्रमेण द्वयमीक्षते ॥ २३२ ॥
अथोच्यते न सन्त्येव स्वप्नेऽक्षाण्युपसंहृतेः ॥
कुतस्तद्देवतायत्नो व्यवहारस्तु वासना ॥ २३३ ॥
एवं तर्हि क्रमे हेतुः कर्मैव स्वप्नजाग्रतोः ॥
ज्ञानस्य तच्च दृष्टत्वान्न ह्युपालम्भमर्हति ॥ २३४ ॥
व्याख्यैषाऽप्यविरुद्धत्वान्मत्स्यवाक्यस्य युज्यते ॥

---

चाक्रमेणावस्थाद्वयज्ञानं प्राप्नुयादित्यर्थः ॥२३०॥ स्वप्नजागरयो-र्ज्ञानायौगपद्याद्देहातिरिक्तो द्रष्टेत्युक्तम्, इदानीं देहात्मवादे दर्शि-तप्रसङ्गस्यातिरिक्तात्मवादेऽपि साम्यं शङ्कते *अभौतिकत्वमिति ॥ आत्मनो जाग्रत्स्वप्नदेहद्वयव्यापित्वेन युगपज्ज्ञातृत्वसम्भवादिति भावः ॥ अत्र कैश्चिदुक्तं परिहारमाह* देवता इति ॥ २३१ ॥ तन्मतमुपपादयति *अक्षेति ॥ २३२ ॥ आदित्यादिदेवताना-मवस्थाद्वये ज्ञानक्रमनियामकत्वमिति पक्षं दूषयति *अथेति ॥ स्वप्ने देवताधिष्ठितानीन्द्रियाण्येव न सन्ति, तेषामुपरमात्, अतः कथं तद्विषयदेवतायत्नो ज्ञानव्यवस्थाहेतुः स्यादित्यर्थः ॥ देवतायत्ना-भावे कथं स्वप्नव्यवहार इत्याशङ्क्य जाग्रद्वासनावशादित्याह *व्य-वहार इति ॥२३३॥ अत्र भर्तृप्रपञ्चोक्तं परिहारमाह *एवमिति ॥ ननु कर्मापि किमिति जाग्रत्स्वप्नदेहयोर्युगपज्ज्ञानं न जनयति तत्राह *तच्चेति ॥ दृष्टानुरोधित्वात्कल्पनाया इति भावः ॥२३४॥ मत्स्य-वाक्यस्य परोक्तमर्थमङ्गीकृत्य श्येनवाक्यस्य तदुक्तसम्बन्धमनु-

श्येनवाक्यस्य सम्बन्धं वक्ति भर्तृप्रपञ्चकः ॥ २३५ ॥
पुण्यपापात्मकं कर्म बुद्धिस्थं तस्य वासना ॥
आत्माश्रिता, तद्विवेको गतग्रन्थेन वर्णितः ॥२३६॥
अविद्या सुषुप्तेऽस्थानीयाऽऽत्मनि तिष्ठति ॥
श्येनादिग्रन्थसंदर्भस्तद्विवेकाय वर्ण्यते ॥ २३७ ॥
नैवमात्मन्यविद्या वा वासना वा न वास्तवी ॥
सम्भाव्येति पुरा प्रोक्तं मूर्त्तामूर्त्तप्रसङ्गतः ॥ २३८ ॥
सम्बन्धस्तूच्यते स्वात्मस्वभावोऽनवशेषतः ॥
पुञ्जीकृत्योदितो न प्राक् श्येनवाक्ये तु वर्ण्यते॥२३९॥
अथवा परलोकस्य दृष्टान्तः स्वप्न ईरितः ॥
सुषुप्तिर्मोक्षदृष्टान्तस्तदर्थो ग्रन्थ उत्तरः ॥ २४० ॥
तद्वा अस्यैतदित्यत्र आप्तकामस्वभावताम् ॥
वक्तुं सुप्तावदुःखत्वं वक्ति श्येननिदर्शनात् ॥२४१॥
श्रुतिः–तद्यथाऽस्मिन्नाकाशे श्येनो वा सुपर्णो वा वि-

---

भावयति *श्येनेत्यादिना॥२३५॥२३६॥२३७॥वासनाऽविद्ययो-रात्मसम्बन्धो वास्तवः काल्पनिको वा, तत्र चरमङ्गीकृत्याद्यं दूषयति *नैवमिति॥२३८॥ इदानीं स्वाभिमतसम्बन्धमाह *सम्बन्ध इति ॥ अधस्तनवाक्येषु तत्र तत्र नित्यशुद्धत्वादिकमात्मस्वरूपं प्रतिपादितमप्येकस्मिन्वाक्ये पिंडीकृत्य नोक्तमिति तद्वर्णनाय श्येनवाक्यमित्यर्थः ॥२३९॥ अस्यैव सम्बन्धान्तरमाह *अथवेति॥२४०॥ एवमनेकधा सम्बन्धमुक्त्वा वाक्यमवतारयति *तद्वा इति ॥ तद्वा अस्यैतदाप्तकाममित्यत्रात्मनः सुप्तावाप्तकामत्वं वक्ष्यति । तच्च निर्दुःखस्यैव सम्भवतीति श्येनवाक्यदृष्टान्तेन तत्प्रदर्श्यत इत्यर्थः ॥ २४१ ॥

परिपत्य श्रान्तः संहृत्य पक्षौ सल्लयायैव ध्रियत एव-मेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥

वा०-नीडे विश्राम्यति श्येनस्तथा सुप्तौ स्वकर्मणः ॥
क्षये जाग्रत्स्वप्नदुःखं त्यक्त्वा विश्राम्यति स्वयम् ॥२४२॥
कामं कामयते नेति जाग्रद्भोगो निषिध्यते ॥
तद्वान्तरभेदानां बहुत्वात्कंचनेति गीः ॥ २४३ ॥
त्रय आवसथास्तस्य त्रयः स्वप्ना इति श्रुतेः ॥
एकैकस्यामवस्थायामवस्थात्रयमिष्यताम् ॥ २४४ ॥
बुध्यादिषु विलीनेषु लीने चित्प्रतिबिम्बके ॥
जाग्रत्स्वप्नभिदा सर्वा लीयते तत्सुषुप्तकम् ॥ २४५ ॥
आत्मस्वभावो निःशेषः पुंजीकृत्येह लक्ष्यते ॥

---

अस्मिन्भूताकाशे श्येनो वा सुपर्णो वा मन्दवेगो महाकायः श्येनः, वेगवानल्पविग्रहः सुपर्ण इति तयोर्भेदः। विपरिपत्य विहृत्य अतः श्रान्तः सन्पक्षौ संहृत्य संगमय्य, सम्यग्लीयतेऽस्मिन्निति सल्लयो नीडस्तं प्राप्तुं ध्रीयते स्वयमेवात्मना धार्यते। एवमेवायं पुरुष एतस्मा अंताय स्वप्नजागरितयोरवसानमज्ञातं ब्रह्म अन्तःश-ब्दार्थस्तस्मै धावतीति श्रुत्यक्षरार्थः ॥ १९ ॥

वाक्यार्थमाह *नीड इति ॥२४२॥ यत्र सुप्त इत्यादि व्या-चष्टे* काममिति ॥ न कञ्चन स्वप्नमित्यत्र कंचनेति विशेषण-वैयर्थ्यमाशङ्क्याह* तदिति ॥ २४३ ॥ तत्र सप्रमाणं वदन्स्वप्न-भेदान्दर्शितान्स्मारयति *त्रय इति ॥ २४४ ॥ नन्वेवं सुप्तेरप्यने-कत्वादस्मिन्वाक्ये कीदृशं सुषुप्तं? तत्राह* बुध्यादिष्विति ॥२४५॥ एवंविधसुप्तिप्रतिपादनफलमाह *आत्मेति। इह सुप्त्यवस्थायाम्।

सुप्तौ मुक्ताविवाद्वैतस्वप्रभानन्दलक्षणः ॥ २४६ ॥
अविद्या तु स्थिताऽप्यत्र द्वैतदुःखाद्यनुद्भवात् ॥
स्वभावं न तिरोधत्ते स्वप्रभानन्दमद्वयम् ॥ २४७ ॥
श्रुतिः-ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिंगलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनंतीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यते ॥
वा०-द्वैतदुःखादिरूपं यत्स्वात्मनः स्वप्नजाग्रतोः ॥
तदविद्योत्थमित्येतत्ता वा अस्येति वर्ण्यते ॥ २४८ ॥
स्थूलदेहस्य नाडीषु रसपूर्णासु सञ्चरन् ॥

---

आत्मस्वभावमशेषं प्रदर्शयितुं श्येनवाक्यमिति पक्षमुपपाद्य मोक्षदृष्टान्तः सुप्तिरिति प्रदर्शनायेदं वाक्यमित्युक्तं पक्षद्वयमुपपादयति* सुप्ताविति ॥ अत्रात्मेत्यनुषज्यते ॥ २४६ ॥ सुषुप्तेऽविद्याया अनुवृत्तेः कथं तस्य मुक्तिदृष्टान्तत्वमित्याशङ्क्याह *अविद्येति ॥ तत्राविद्यायाः सत्त्वेऽपि निर्दुःखस्वरूपमात्ररूपावस्थानमुभयत्र तुल्यमिति विवक्षितांशसाम्यात्तस्य दृष्टान्तत्वमविरुद्धमिति भावः ॥ २४७ ॥ उत्तरवाक्यतात्पर्यमाह *द्वैतेति ॥ नाडीनामतिसौक्ष्म्यकथनेन तासु रथादेरुचितदेशाभावेन स्वप्नमिथ्यात्वे सिद्धे तद्दृष्टान्तेन जाग्रत्यपि द्वैतमिथ्यात्वं सिध्यतीत्यर्थः ॥ २४८ ॥

अस्य स्थूलशरीरस्य हितासंज्ञका नाड्यः अतिसूक्ष्माः शुक्लादिरसैः पूर्णा इति श्रुत्यर्थः ॥ तदुक्तं-भुक्तस्यान्नस्य परिणामविशेषो वातबाहुल्येन नीलो भवति, पित्ताधिक्ये पिङ्गलः, श्लेष्माधिक्ये शुक्लः, पित्ताल्पत्वे हरितः, साम्ये च धातूनां लोहित इति वातादीनां

लिङ्गदेहपरिच्छिन्नो भुङ्क्ते भोग्यानि जाग्रति॥२४९॥
अथ वासनया स्वप्ने घ्नन्तीवैनं स्वशास्त्रवः ॥
जयंतीव न तं घ्नन्ति न जयंति च वस्तुतः ॥ २५० ॥
भुक्ते कर्मफले लेशो बुद्धिस्थो वासनोच्यते ॥
अविद्योत्कर्षतो भाति जयघातादिवासना ॥ २५१॥
श्रुतिः—अथ यत्र देव इव राजेवाहमेवेदं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥
वा०—अज्ञाने क्षीयमाणेऽथ जाग्रद्देवादिवासना ॥

---

मिथः संयोगवैषम्यात्तत्साम्याच्च विचित्राश्चान्नरसा भवन्तीति ॥

अथेत्यादेरर्थं वक्तुमुक्तनाडीषु जागरणे जीवस्थितिप्रकारमाह *स्थूलेति ॥ २४९ ॥ जीवस्य जाग्रत्स्थितिमुक्त्वा स्वाप्नीयस्थितिं वदन्नथ यत्रेत्यादि व्याचष्टे *अथेति ॥ जिनन्तीत्यस्य व्याख्या जयन्तीति । इवशब्दसूचितमर्थमाह *न तमिति ॥ २५० ॥ वासनयेत्युक्तं वासनास्वरूपं किमित्यपेक्षायामाह *भुक्त इति ॥ भुक्तं यज्जाग्रत्कर्मफलं तस्य लेशो वासना, सा च स्वप्नभोगदकर्मसहिताविद्यया व्यक्ता सती जयादिरूपेण भातीत्यर्थः ॥ २५१ ॥

हस्तीव विच्छाययति विद्रावयतीव गर्तं जीर्णकूपादिकं तत्र पतन्तमिवात्मानमुपलक्षयतीत्यर्थः । किंबहुना यदेव जागरणे भयं भयहेतु व्याघ्रादि पश्यति तदेवात्र स्वप्नेऽप्यविद्यया तद्भूतया वासनया मन्यते न पुनस्तत्त्वतोऽस्तीति भावः ॥

अथ यत्र देव इवेत्यादेरर्थमाह *अज्ञान इति ॥ अज्ञानशब्देन तत्कार्यदुर्वासना लक्ष्यते, तदपकर्षानन्तर्यमथशब्दार्थः । जागरे देवादिविषयाविद्यावासना स्पष्टा भवति, सा यत्र स्वप्ने देवोऽस्मीत्यादिमतिं करोति उत्पादयति इति यावत् । सा

मतिं देवोऽस्मि राजाऽस्मीत्येतां स्वप्ने करोति हि॥२५२॥
विद्यायाः परमोत्कर्षे जाग्रत्साक्ष्यात्मवासना ॥
सर्वोऽस्मीति मतिं स्वप्ने करोत्यद्वैतभासिनीम् ॥२५३॥
सर्वात्मभावः परमो लोको बाधविवर्जनात् ॥
बाध्यन्ते देवराजाद्या इवशब्दस्ततः श्रुतः ॥ २५४ ॥
अपघातादिधर्द्देवराजादेरपि बाधनम् ॥
लोकप्रसिद्धं कुत्रापि सार्वात्म्यं तु न बाध्यते ॥२५५॥
वेदान्तमानसिद्धत्वाज्जागरे तत्र बाध्यते ॥
स्वप्नेऽपि बाध्यते नैतद्यथावस्त्ववभासनात् ॥२५६॥
इदंशब्दोदितं बाधज्ञात्सर्वं मदात्मनि ॥
कल्पितं श्रूयते तस्मादहमेवेदमित्यदः ॥ २५७ ॥
यः सर्पो रज्जुरेवैषा यथावस्तुनिरूपणे ॥
तथेदं जगदात्मैव जगन्नैवात्मनः पृथक् ॥ २५८ ॥
अतः सर्वोऽस्मीति मतिर्नैव स्वप्नेऽपि विभ्रमः ॥
तत्त्वावेदकमानेन जाता धीर्विभ्रमः कथम् ॥ २५९ ॥

---

व इवशब्दान्निषेधेति हिशब्दार्थः ॥ २५२ ॥ अहमेवेदमित्या-देरर्थमाह *विद्याया इति ॥ २५३ ॥ सोऽस्य परमो लोको इत्येतद् व्याचष्टे *सर्वेति ॥ २५४ ॥ उक्तमेव व्यनक्ति *अपेति *कुत्रापीति, जागरे स्वप्ने वा॥२५५॥ तदेव विशदयति *वेदान्ते-ति ॥ २५६ ॥ नन्वहंशब्दस्य कथमदमेवेदमिति इदमा सामाना-धिकरण्यं, जडाजडयोरेकत्वायोगात्तत्राह *इदमिति । अदः, इदं सामानाधिकरण्यमुपपन्नमिति शेषः ॥ २५७ ॥ तदेव दृष्टान्तेन स्पष्टयति *य इति ॥ २५८ ॥ सार्वात्म्यबुद्धेरबाधितत्वमुक्तमुप-संहरति *अत इति ॥ २५९ ॥ उक्तं सार्वात्म्यमनूद्य तत्रानुभवं

परमो लोक इत्युक्ता सर्वभावस्य वस्तुता ॥
सुषुप्तौ तत्तु सार्वात्म्यं सर्वैरप्यनुभूयते ॥ २६० ॥
नन्वद्वैतमपि द्वैतं सुप्तसुप्त्योरिहात्मनि ॥
क्रमाद्भात्यत्र किं रूपं तस्येत्याशङ्क्य वर्ण्यते ॥ २६१ ॥
यत्सार्वात्म्यं पुरा प्रोक्तं तदेवाद्वैतमात्मनः ॥
रूपमागमतः स्वानुभूतेश्च पुरुषार्थतः ॥ २६२ ॥

श्रुतिः—तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम् ॥

वा०—शास्त्रप्रसिद्धं तच्छन्दः प्राह प्रत्यक्षतां पुनः ॥
एतच्छन्दः पुमर्थत्वमतिच्छन्दादिनोच्यते ॥ २६३ ॥
शिवमद्वैतमित्यादिशास्त्रमुद्घुष्यते बहु ॥
समाधिसुप्त्योरद्वैतं स्वयमेवानुभूयते ॥ २६४ ॥
छन्दः कामः कर्म पापं भयं स्यात्कर्मणः फलम् ॥

---

प्रमाणयति *परम इति ॥ २६० ॥ उत्तरवाक्यं शङ्कोत्तरत्वेनावतारयति *नन्विति ॥ सार्वात्म्यवदसार्वात्म्यस्याप्यनुभवसिद्धत्वात्किमत्र तत्त्वमित्याशङ्कायामुत्तरवाक्यं प्रवृत्तमित्यर्थः ॥ २६१ ॥ वाक्यतात्पर्यमाह *यदिति । अद्वैतस्यागमसिद्धत्वात्सुप्तावनुभवसिद्धत्वात्परमपुरुषार्थत्वाच्च तदेवात्मनस्तत्त्वं, द्वैतधियः स्वप्नधीवद् भ्रमत्वेनाप्युपपत्तेरिति भावः ॥ २६२ ॥ श्रुत्यक्षराणि व्याकुर्वन्नुक्तमर्थं विशदयति *शास्त्रेति ॥ २६३ ॥ तदेतच्छब्दाभ्यां शास्त्रानुभवसिद्धमद्वैतस्वरूपमित्युक्तं, किं तच्छास्त्रं को वाऽनुभवस्तत्राह *शिवमिति ॥ २६४ ॥ अतिछन्दादिना

अनर्थरूपं त्रितयमद्वैते वीक्ष्यते नहि ॥ २६५ ॥
त्रितयानर्थनिर्मुक्तं नानर्थान्तरयोगि च ॥
इति द्वैतं श्रुतावस्थां वैशब्देन निवर्त्यते ॥ २६६ ॥
कामाद्यनर्थनिर्मुक्तमद्वैतं रूपमात्मनः ॥
तेनानर्थेन संयुक्तं द्वैतमात्मनि कल्पितम् ॥ २६७ ॥
द्वैताप्रतीतौ नानर्थः किं त्वानन्दो महानिति ॥
अत्र लौकिकदृष्टान्तः प्रोच्यते सर्वसंमतः ॥ २६८ ॥
स्त्रिया वियुक्तस्तद्भेदे पश्यन्कामेन पीड्यते ॥
आलिङ्गितस्तयैकत्वं प्राप्यानन्देन तृप्यति ॥ २६९ ॥
चित्तानुरागसिद्ध्यर्थं प्रिययेति विशेषणम् ॥
दुष्टायां सत्यपि स्त्रीत्वे चेतो नैवानुरज्यते ॥ २७० ॥
क्षेत्रारामादिकं बाह्यं गृहकृत्यं तथाऽऽन्तरम् ॥
आलिङ्गितः सुखाविष्टो न वेत्ति द्वयमप्यसौ ॥२७१॥

---

पुमर्थत्वमित्युक्तं स्पष्टयति *छन्द इति ॥ अतिछन्दा इति श्रुतौ दैर्घ्यं छान्दसम् ॥ अतिक्रान्तः छन्दः कामो यस्मात्तदतिच्छन्दः कामवर्जितमिति यावत् । अपहतपाप्मेत्यत्र पाप्मशब्देन पुण्यमपि लक्ष्यते,धर्माधर्मविवर्जितमित्यर्थः ॥ अभयमित्यत्र भयशब्देन कर्मफलं लक्ष्यते, तद्रहितं चात्मस्वरूपमिति यावत् । वीक्ष्यते नहीति हिशब्देन विद्वत्प्रसिद्धिं सूचयति ॥ २६५ ॥ तद्वा एतदित्यत्र वैशब्दार्थमाह *त्रितयेति ॥ २६६ ॥ उक्तहेतुभिरद्वैतस्यात्मस्वरूपत्वे सिद्धे द्वैतधियः स्वप्नधीवत्कल्पितविषयत्वं सिध्यतीत्याह *कामेति ॥ २६७ ॥ स्त्रीवाक्यमवतारयति *द्वैतेति ॥ २६८ ॥ संपरिष्वक्त इत्युक्तेः प्रयोजनमाह* स्त्रियेति ॥२६९॥ प्रिययेति विशेषणफलमाह *चित्तेति ॥ २७० ॥ न बाह्यं किञ्चन वेद नान्तरमित्येतद्व्याचष्टे *क्षेत्रेति॥२७१॥ कथं बाह्याद्यवेदनस्यानन्दहेतुत्वं

अवेदनेन तद्धानिः सुप्त्योश्चिन्तां परित्यजेत् ॥
अप्राप्य चित्तविक्षेपं मज्जत्यानन्दसागरे ॥ २७२ ॥
एवं सुप्तौ समाधौ वा ऽऽलिङ्गितः परमात्मना ॥
न बाह्यं जागरं नान्तः स्वप्नं च द्वैतमीक्षते ॥ २७३ ॥
आनुकूल्यप्रातिकूल्ये द्वैतादर्शनतो नहि ॥
ततः कामभयाभावादात्मानन्दे निमज्जति ॥ २७४ ॥
श्रुतिः—तद्वा अस्यै तदाप्तकाममात्मकाममकामꣳ रूपꣳशोकान्तरम् ॥ २१ ॥
वा० तद्वा अस्येति वाक्येन कामाभावः प्रपञ्च्यते ॥
आत्मरूपं यदद्वैतमाप्तकामं तदीक्ष्यताम् ॥ २७५ ॥
सुषुप्सुश्च समाधित्सुर्वाद्यं कामयते नहि ॥
अपि स्वात्मानमेवात्मा प्राप्त एवाखिलैः सदा॥२७६॥
पूर्वोक्तश्येनदृष्टान्तात्सुषुप्सोः काम आत्मनि ॥
कामाभावे कुतो धावेत् श्येनवत्सहसाऽऽत्मनि॥२७७॥

तत्राह *अवेदनेनेति ॥२७२॥ दृष्टांतं व्याख्याय दार्ष्टांतिकं व्याचष्टे *एवमिति ॥२७३॥ द्वैताप्रतीतौ फलमाह* आनुकूल्येति ॥ ततोऽपि किं तत्राह *तत इति ॥२७४॥ उत्तरवाक्यमवतारयति *तद्वा इति ॥ तत्राप्तकामपदं व्याचष्टे *आत्मेति॥२७५॥अद्वैतात्मस्वरूपस्य कथमाप्तकामतेत्याशङ्क्य काम्यमानत्वान्नित्याप्तत्वाच्चेति मत्वा हेतुद्वयमुपपादयति* सुषुप्सुरिति ॥ उक्तार्थस्य सर्वसंमतत्वद्योती हिशब्दः । काम्यमानत्वमुक्त्वा नित्याप्तत्वमाह* आत्मा प्राप्त इति ॥ २७६ ॥ काम्यमानत्वहेतुरसिद्ध इत्याशङ्क्यात्मकाममित्येतद् व्याकुर्वन्नसिद्धिमुद्धरति *पूर्वोक्तेति। तथाचात्मा सुषुप्सुना काम्यमानः, आत्मनि कामस्यानुभवाद्, अन्यथा सुप्त्यर्थिनस्तत्र श्येनवद्वेगेन प्रवृत्तिर्न स्यादित्यर्थः ॥ २७७॥ उक्तमर्थं हेतु कुर्वन्न-

समाधित्सोरात्ममात्रकामना सर्वसंमता ॥
काम्यात्मप्राप्तितोऽकामरूपमद्वैतमात्मनः ॥ २७८ ॥
काम्यभोजनतस्तृप्तस्तदा भोज्यं न वाञ्छति ॥
एवं काम्यात्मनि प्राप्ते किमन्यत्काम्यते पुनः ॥२७९॥
आत्मकाममकामं यत्तच्छोकरहितं तदा ॥
शोकान्तरं पृथक् शोकादिति निःशोकतोच्यते॥२८०॥
ननु देहाभिमानश्च धर्माधर्मौ च शोकदाः ॥
यथा जागरणे तद्वत्सुषुप्तौ च प्रसज्यते ॥ २८१ ॥
नैवं पिताऽहमित्यादिदेहत्वभ्रान्तिलोपनात् ॥
पितृत्वयुक्ते देहेऽभिमानः सुप्तस्य नास्ति हि ॥२८२॥
देहाभिमाने सत्येव शोकरागादि सम्भवेत् ॥
नान्यथा परदेहस्थदुःखस्यात्मन्यवेक्षणात् ॥ २८३ ॥
पुत्ररागोऽपि नास्त्यत्र पितृत्वस्यानवेक्षणात् ॥

---

काममित्यस्यार्थमाह *काम्येति ॥ २७८ ॥ तदेव दृष्टांतेन स्पष्टय-ति* काम्यभोजनेति ॥ २७९ ॥ रूपं शोकान्तरमित्येतद् व्याचष्टे *आत्मेति ॥ शोकांतरमित्यनेन कथं शोकराहित्यमुच्यते तस्य तत्राशक्तत्वादित्याशङ्क्याह* शोकेति ॥ अन्तरशब्दः पृथग्वचनः। तथाचात्मा सुप्तौ शोकात्पृथग्भूत इत्युक्ते शोकसम्बन्धाभावाच्छो-कराहित्यं सिध्यतीत्यर्थः ॥२८०॥ अत्र पितृत्राद्यवतारयितुं व्या-पत्यशंकामाह* नन्विति । सुप्तावपि शोकनिमित्तदेहाभिमानादेः सत्त्वेन शोकस्य सम्भावितत्वाच्छोकराहित्योक्तिरयुक्तेत्यर्थः॥२८१॥ देहतादात्म्याभिमानस्य देहोऽहमिति भ्रांतिमूलत्वात्सुषुप्तस्य च भ्र-माभावादभिमान एव नास्ति कुतः शोकादिरिति श्रुतितात्पर्यं दर्श-यन्परिहरति* नैवमिति ॥२८२॥ अभिमानाभावेऽपि शोकादिक-मस्तु इत्याशङ्क्य नेत्युदाहरणमाह *देहेति ॥२८३॥ अभिमाना-

सुप्तः पिताऽहमस्येति न कश्चिदभिमन्यते ॥ २८४ ॥
पुत्रोऽपि मत्पितेत्येवं सुषुप्तो नाभिमन्यते ॥
श्रुतिः ॥ अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः ॥
वा०-स्वस्वत्वकीयताऽभावात्पिता स्यादपिता तथा२८५
देहतद्धर्मराहित्यं सुप्तौ सर्वेष्वपि स्फुटम् ॥
इत्यभिप्रेत्य मात्रादिबहूदाहृतिरीरिता ॥ २८६ ॥
पुत्रकर्मोपास्तिसाध्यास्त्रयो लोकाः पुरा श्रुताः ॥
इन्द्रादिदेवा यष्टव्या अध्येतव्या ऋगादयः ॥२८७॥
साधने यजने पाठे शोकोऽस्तीति न शङ्क्यताम् ॥
यतो लोकादयो लीनाः सुषुप्तौ परमात्मनि ॥२८८॥
देहतद्धर्मलोकादिरूपं जागणे जगत् ॥
भोगाय कर्मणाऽऽरब्धं क्षीणे कर्मणि लीयते॥२८९॥
श्रुतिः—अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चांडालोऽचांडालः पौल्कसोऽपौल्कसः श्रमणो ऽश्रमणस्तापसोऽतापसो ऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥
वा०—स्तेनभ्रूणघ्नचाण्डालपुल्कसाः पापिनो यतिः ॥

---

भावादेव रागाद्यनर्थोऽपि तदा नास्तीत्याह* पुत्रेति ॥ अभिमानाभावमेवाह *सुप्त इति ॥ २८४ ॥ उक्तमर्थं संक्षिपन्नक्षराणि व्याचष्टे* स्वत्वेति ॥ २८५ ॥ अत्रानेकोदाहरणस्य तात्पर्यमाह* देहेति ॥ २८६ ॥ लोका अलोका इत्यादिवाक्यत्रयं व्याचष्टे *पुत्रेतिद्वाभ्याम् ॥ २८७ ॥ २८८ ॥ सुप्तौ तेषां लये हेतुमाह*देहतद्धर्मेति ॥ २८९ ॥ अत्र स्तेनोऽस्तेनो

वानप्रस्थश्च पुण्यात्मा सुप्तिः सर्वेष्वसौ समा ॥२९०॥
तदा हृद्याभिमानस्तु क्षीणस्तत्कर्मसंक्षयात् ॥
पुण्येन पाप्मनाऽनन्वागतं रूपं परात्मनः ॥ २९१ ॥
हृदयाख्यं मनस्तस्य पुण्यपापे ततोऽखिलाः ॥
शोका मनोगताः, शोकान्सर्वानात्माऽतिवर्तते ॥२९२॥
शोका बुद्ध्यात्मतादात्म्यभ्रमादात्मनि कल्पिताः ॥
बुद्धेर्लये तु तन्निष्ठशोकानां युज्यते लयः ॥ २९३ ॥
सर्वेषामनुभूत्याऽपि प्रसिद्धः शोकसंक्षयः ॥
तां प्रसिद्धिं हिशब्देन विशदीकुरुते श्रुतिः ॥ २९४ ॥
ननु शोकादिवत्सुप्तौ चैतन्यमपि लुप्यते ॥
सुप्तो न पश्यतीत्येवमाहुः सर्वेऽपि लौकिकाः ॥२९५॥
आत्मन्यदृष्टवशतो ज्ञानमिच्छादिवद्भवेत् ॥

---

भवतीत्यादेरर्थमाह* स्तेनेति ॥ चाण्डालः पौल्कस इति स्वार्थे वृद्धिः ॥ २९० ॥ श्रमणः परिव्राजको वनस्थः । कथं सर्वेषु सुप्तेः साम्यं तत्राह* तदेति ॥ सुप्तिदशायां चाण्डाला-द्यभिमानाभावात्तत्प्रयुक्तदुःखं नास्तीति दुःखाद्यभावसाम्यात्स-र्वेषां सुप्तिः समेत्यर्थः ॥ अनन्वागतं पुण्येनेत्यादेरर्थमाह *पुण्येने-ति ॥ अनन्वागतमसम्बद्धम् ॥२९१॥ अतस्तत्र हि तदा तीर्णो हीत्यादि । तद्व्याचष्टे *हृदयेत्यादिना ॥ सुप्तौ मनसि लीने तत्सम्बन्धि-पुण्यापुण्यतत्फलानामपि लीनत्वात्तद्विषयात्मनोऽभिमानाभा-वात्तदानीमात्मनः कर्मतत्फलासम्बन्धित्वं युक्तमित्यर्थः ॥ २९२ ॥ २९३ ॥ तीर्णो हीत्यत्र हिशब्दसूचितमर्थमाह* सर्वेषामिति ॥२९४॥ यद्वै तन्नेत्यादेः पातनिकामाह *नन्विति ॥२९५॥ सुप्तौ चैतन्यं ना-स्तीत्यत्र लोकप्रसिद्धिमुक्त्वा वादिसंमतिमप्याह* आत्मनीति ॥

इत्याहुस्तार्किकाः सुप्तौ न ज्ञानं कर्मसङ्क्षयात् ॥२९६॥
श्रुतिः—यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति ॥
वा०-यद्वै तन्नेत्यादिवाक्यैरस्योत्तरमुदीर्यते ॥
न चिल्लोपः किन्तु बुद्धेर्लोप इत्येतदुत्तरम् ॥ २९७ ॥
तच्छब्दः सुप्तिमाचष्टे वैशब्दोऽवधृतौ भवेत् ॥
तत्र सुप्तौ पुमान्नैव पश्यतीति जना जगुः ॥ २९८ ॥
अदर्शनं सर्वथेति यदाहुरविवेकिनः ॥
तद्विवेच्यं तथा चात्मा पश्यन्नेव न पश्यति ॥ २९९ ॥
श्रुतिः—न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशि-
त्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् २३
वा०—पश्यन्नेव कथं सुप्त इति चेदभिधीयते ॥
द्रष्टुर्न लुप्यते दृष्टिर्यस्मात्पश्यन्नतः स्थितः ॥ ३०० ॥
को द्रष्टा का च सा दृष्टिर्या न लुप्तेति तच्छृणु ॥

---

ज्ञानस्यादृष्टापत्तत्वे फलितमाह *सुप्तौ नेति ॥ २९६ ॥ २९७ ॥ एवं पातनिकामुक्त्वा वाक्यं तत्र पातयन् वाक्यतात्पर्यमाह* तच्छब्द इति ॥ यद्वै तदित्यत्र तच्छब्देन सुप्तिकाल उच्यते, वैशब्दोऽवधारणार्थ इत्यर्थः ॥ लोकसिद्धार्थानुवादको यच्छब्द इति मत्वाऽपेक्षितं पूरयन्वाक्यं योजयति *तत्रेति ॥ २९८ ॥ उक्तमेवार्थं व्यक्तीकुर्वन्पश्यन्नित्यादिमत्युक्तिं व्याचष्टे *अदर्शनमिति ॥ २९९ ॥ नहीत्यादिवाक्यमाकांक्षापूर्वकमादत्ते* पश्यन्निति ॥ द्रष्टुर्बुद्ध्युपाधिकचैतन्यस्य भासिका या दृष्टिः शुद्धाचिदात्मकसाक्षी स यस्मात्सुप्तावपि पश्यन्नेव स्थितस्तस्मात्साक्ष्यात्मकदृष्टिर्न लुप्यत इत्यर्थः ॥ ३०० ॥ उक्तमर्थमाकाङ्क्षापूर्वकं विशदयितुमुपक्रमते *क इति ॥ तत्र द्रष्टृपदं व्याचष्टे* दर्शनस्येति ॥

दर्शनस्य क्रिया कर्त्ता द्रष्टा स्याद्बुद्ध्युपाधिकः॥२०१॥
चक्षुर्द्वारा धियो वृत्तिर्निर्गता रूपभासिनी ॥
दर्शनस्य क्रिया, तस्याः कर्ताऽऽत्मा बुद्धिसंयुतः ॥२०२॥
प्रज्ञया चक्षुरारुह्य चक्षुषा रूपमीक्षते ॥
इत्येषा प्रक्रिया स्पष्टं श्रुता कौषीतकीश्रुतौ ॥२०३॥
पश्यामीत्यभिमानो यश्चक्षुरारोहणं हि तत् ॥
अभिमानश्च नायं मे किन्त्वसौ बुद्ध्युपाधिके ॥२०४॥
तस्य द्रष्टुर्भासिका या चिदेषा दृष्टिरुच्यते ॥
तदेतत्साक्षिचैतन्यमित्याहुर्वेदवादिनः ॥ २०५ ॥
साक्षी चेता केवलश्चेत्यादिवाक्यमधीयते ॥
किञ्चानुव्यवसायोऽयमित्याहुस्तार्किका अपि ॥२०६॥
व्यवसायो बुद्धिवृत्तिर्दृश्यमात्रावभासिका ॥
द्रष्टृदर्शनदृश्यानि भान्त्यनुव्यवसायतः ॥ २०७ ॥
जिघ्राणीममहं गन्धमिति यो वेत्ति तद्वयम् ॥

---

अत्र दर्शनशब्दः कर्मव्युत्पत्त्या रूपादिवचनः, करणव्युत्पत्त्या नेत्रवचनो वा, तत्सम्बन्धिनी या क्रिया अन्तःकरणवृत्तिस्तस्याः कर्ता द्रष्टृशब्देनोच्यते, स चांतःकरणावच्छिन्न एवेत्यर्थः ॥२०१॥ उक्तमेव व्यनक्ति *चक्षुरिति ॥ २०२ ॥ बुद्ध्युपाधिक एव द्रष्टेत्यत्र मानमाह* प्रज्ञेति ॥ २०३ ॥ उदाहृतश्रुतेरर्थमाह *पश्यामीति ॥ चक्षुषा पश्यामीत्यभिमान एवोक्तश्रुतेरर्थोऽस्तु, तथापि कथमवच्छिन्नस्यैव द्रष्टृत्वं तत्राह* अभिमान इति ॥२०४॥ एवं द्रष्टृपदं व्याख्याय दृष्टिपदं व्याचष्टे *तस्येति॥२०५॥ दृष्टिशब्दितचितः साक्षित्वे मानमाह* साक्षीति॥ द्रष्टृभासकचैतन्यसद्भावे वादिसंमतिमप्याह* किंचेत्यादिना ॥ २०६ ॥ २०७ ॥ नन्वेव-

स आप्नोति अयस्यास्य छन्दोगाः साक्षिणं जगुः॥३०८॥
ननु साक्षिण्यसङ्गेऽस्मिन् दृष्टिशब्दो न युज्यते ॥
दृशिधातोः क्रियैवार्थस्तद्भावः प्रत्ययस्य च ॥ ३०९ ॥
बाढं चाक्षुषधीवृत्तिं दृष्टिशब्दः क्रियां ब्रुवन् ॥
भास्यभासकसम्बन्धाल्लक्षयेद् दृशिसाक्षिणम्॥३१०॥
अक्रियाकर्तुरप्यस्ति भासकत्वं चिदात्मनः ॥
अर्दाप्तिकर्ताऽप्यादित्यो जगद्दीपयते यथा ॥ ३११ ॥
दीपकर्त्वोपचारोऽस्मिन्भवेत्सन्निधिमात्रतः ॥
इति भासकत्वं च चिदात्मन्युपचर्यताम् ॥ ३१२ ॥
श्रुतिः—यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

यद्वै तन्न रसयते रसयन्वै तन्न रसयते नहि रस-

---

मपि द्रष्टृदर्शनदृश्यभासकत्वेनन्यत्र सिद्धं ननु तस्य साक्षित्वं, तस्य परैरनभ्युपगमादित्याशङ्क्याह *जिघ्राणीति ॥३०८॥ क्रियावाचिदृष्टिशब्दस्य कथं लक्षणया साक्षिवाचकत्वमयुक्तम् । उक्तश्रुतेरप्यन्यार्थतेति मत्वा शङ्कते* नन्विति । असङ्गे हेतुसङ्गरहिते निर्विकार इति यावत् । तद्भावः क्रियास्वरूपं दृष्टिरत्र दृशिधातोरित्युक्तप्रत्ययस्य च क्रियामात्रवाचित्वादित्यर्थः ॥ ३०९ ॥ दृष्टिशब्दस्य क्रियार्थत्वमङ्गीकृत्य परिहरति *बाढमिति ॥३१०॥ साक्षिणो भासनक्रियाकर्तृत्वाभावे भासकत्वमेवानुपपन्नमित्याशङ्क्य दृष्टान्तेन सहाह* अक्रियेत्यादिना ॥ ३११ ॥ ३१२ ॥ वक्तव्यावशिष्टमन्यत्रातिदिशति *लक्ष्येव इति ॥ यथा चक्षुर्जन्यवृत्तिवाचकेन दृष्टिशब्देन तद्भासकसाक्षी लक्ष्यते, तद्वत्घ्रातुर्घ्राते-

यितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

॥ यद्वै तन्न वदति वदन्वै तन्न वदति नहि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति नहि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

यद्वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

वा०—लक्ष्यश्चाक्षुषधीवृत्तिद्वाराऽऽत्मा दृष्टिशब्दतः ॥
तथैवमन्यधीवृत्तिद्वारा घ्रात्यादिशब्दतः ॥ ३१३ ॥
दृष्टिघ्रात्यादिभिः शब्दैर्लक्षितश्च चिदात्मकः ॥

---

रित्यादौ घ्राणादिजन्यधीवृत्तिवाचकेन घ्रात्यादिशब्देनापि तद्भासकसाक्षी कथ्यत इत्यर्थः ॥३१३॥ दृष्टिपदं व्याख्याय विपरिलोपो न विद्यत इत्येतद्व्याचष्टे *दृष्टीति । तस्य लोपे पापकृमाह

न लुप्यतेऽन्यथा स्वापो न सिध्येत्स्मृत्यसम्भवात् ३१४
असन्दिहानाः सर्वेऽपि स्मरन्त्यस्वाप्समित्यसौ ॥
स्मृतिर्न संभवेत्सुप्तौ चिदात्मानुभवं विना ॥ ३१५ ॥
न बुद्धिवृत्त्यनुभवः सुप्तौ बुद्धेर्विलोपनात् ॥
तदलोपे कुतः सुप्तिरैक्यं स्यात्स्वप्नजाग्रतोः ॥ ३१६ ॥
दृष्टिवाचकशब्देन दृष्टिसाक्ष्युपलक्षणात् ॥
विशब्देनात्र चैतन्यलोपशङ्का निवर्त्तिता ॥ ३१७ ॥
नो चेत्सुप्तिं प्रकाश्योर्ध्वं लुप्येतेत्यपि शङ्क्यते ॥
चिदलोपं साधयितुमविनाशित्वहेतुगीः ॥ ३१८ ॥
अविनाशी चिदात्माऽयं नाशहेतोरसम्भवात् ॥
तन्नाशकमदृष्टं स्यान्नात्मनोऽकर्मजत्वतः ॥ ३१९ ॥
दाहच्छेदादिहेतूनां दृष्टानामप्यसम्भवः ॥

---

*अन्यथेति ॥ ३१४ ॥ उक्तमेव प्रकटयति *असन्दिहाना इति ॥ ३१५ ॥ आगंतुकज्ञानेन सुप्तिसिद्धिमाशङ्क्य निराह* नेति ॥ मा भूत्तर्हि सुप्तिसिद्धिस्तत्राह *ऐक्यमिति ॥ तथा च प्रसिद्धिविरोधोऽनुसन्धानविरोधोऽपीति भावः ॥ ३१६ ॥ विपरिलोप इत्यत्राद्योपसर्गेण विवक्षितार्थमाह* दृष्टीति ॥ ३१७ ॥ सुप्तिस्मृत्यन्यथानुपपत्त्या तस्यानित्यत्वनिराकरणात्कथं तल्लोपशंकेत्याशङ्क्याह* नो चेदिति । नहीत्यादिवाक्यं सपरिकरं व्याख्यायाविनाशित्वादिति व्याचष्टे* चिदिति ॥ ३१८ ॥ दृष्टिर्न लुप्यतेऽविनाशित्वादित्यत्र साध्याविशेषमाशङ्क्य साध्यहेतू विभजते *अविनाशीति ॥ हेत्वसिद्धिमाशङ्क्यादृष्टं दृष्टं वाऽऽत्मनाशकं ? तत्राद्यं प्रत्याह* तन्नाशकमिति ॥ ३१९ ॥ अन्त्यं प्रत्याह *दाहेति । आत्मनो नाशादिकं नेत्यत्र भगवद्वाक्यमपि प्रमा-

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥३२०॥
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ॥
अनाशिनोऽप्रमेयस्येत्येवं कृष्णेन भाषितम् ॥ ३२१ ॥
नन्वनाशि चिदात्माऽयं पश्यन्नास्ते यदा तदा ॥
न पश्यतीति लोकाश्च तार्किकाः कथमूचिरे ॥३२२॥
अन्युत्पन्नाश्चितिं प्राहुस्त्रिपुट्यास्तत्र लोपनात् ॥
चितोऽन्यद्यज्जडं तत्तु द्रष्ट्रादि त्रितयं नहि ॥ ३२३ ॥
बुद्धितद्वृत्तिविषया द्रष्टृदर्शनदृश्यकाः ॥
प्रसिद्धा जागरे तस्मात्तद्व्युत्पत्तिर्नृणां स्फुटा ॥३२४॥
बुद्धिर्जडाऽपि चिच्छायावशतो द्रष्टृतां व्रजेत् ॥
पश्यतीत्येष शब्दोऽतस्तस्मिन्नेव प्रयुज्यते ॥ ३२५ ॥

---

णयति* अच्छेद्य इत्यादिना ॥३२०॥३२१॥ चिदात्मनः सुप्तावलुप्तत्वे तत्र चिल्लोपप्रसिद्धेः का गतिरिति शङ्कते *नन्विति ॥ ३२२ ॥ तत्र लोकप्रसिद्धिं तावदन्यथयति *अन्युत्पन्ना इति ॥ चितिं लुप्तामिति शेषः । सुप्तिः सप्तम्यर्थः । सुप्तौ चैतन्यातिरिक्तत्रिपुटीशब्दितानां मातृमानमेयानामभावः सर्वानुभवसिद्ध इत्याह *चितोऽन्यदिति ॥ ३२३ ॥ इदानीं त्रिपुटीस्वरूपं स्पष्टयंस्तल्लोपादेव सुप्तौ चिल्लोपभ्रमं सम्भावयति *बुद्धीति ॥ ३२४ ॥ बुद्धेः कथं द्रष्टृत्वं तस्य चेतनधर्मत्वादत आह* बुद्धिरिति। चैतन्यतादात्म्याध्यासात् बुद्धेरपि द्रष्टृत्वे फलितमाह *पश्यतीति । तथा च सुप्तौ बुद्धिनाशान्न पश्यतीति प्रसिद्धिरुपपद्यत इति भावः ॥ ३२५ ॥ बुद्धिनाशेऽपि सुप्तौ साक्षिणः सत्त्वान्न पश्यतीति प्रथाऽनुपपन्नेति शङ्कते* नन्विति

ननु मा भूत्पश्यतीति सुषुप्तौ द्रष्टृगोचरः ।
साक्षिणि द्रष्टृताऽप्यात्मा पश्यतीति प्रयुज्यताम् ॥ ३२६ ॥
नैवं द्वितीयं द्रष्टव्यं साक्षिणोऽत्र न विद्यते ।
कथं सकर्मको धातुः कर्माभावे प्रयुज्यताम् ॥ ३२७ ॥
जागरे तु चितोऽन्यद्यज्जडं त्रेधा विभज्यते ।
तदनुव्यवसायस्य विषयं कर्मकारकम् ॥ ३२८ ॥
तत्कर्मकारकं सुप्तौ द्वितीयं नैव विद्यते ।
अतो न पश्यतीत्येवमाहुर्लौकिकतार्किकाः ॥ ३२९ ॥
यो बुद्ध्युपाधिको द्रष्टा सुप्तत्वात्स न पश्यति ।
चिदात्माऽपि द्वितीयस्याभावादत्र न पश्यति ॥ ३३० ॥
चिल्लोपाभावतः साक्षी पश्यन्नेवेत्युदीर्यते ।
अकर्तर्यपि कर्तृत्वारोपेणैतदुदीरणम् ॥ ३३१ ॥
भर्तृप्रपञ्चस्त्वाहाऽस्ति वस्तुनः कर्तृताऽऽत्मनि ।
दाहशक्तिर्यथा वह्नेः कर्तृशक्तिस्तथा चिति ॥ ३३२ ॥
नित्या ज्ञानगुणा दृष्टिरस्त्यतोऽस्य चिदात्मनः ।
न पश्यति तथा पश्यन्नेवेत्यपि समञ्जसम् ॥ ३३३ ॥

---

॥ ३२६ ॥ ननु तद् द्वितीयमस्तीत्याद्युत्तरवाक्यमादाय परिहरति *नैवमिति ॥ ननु प्रकाश्याभावेऽपि दीपः प्रकाशत इतिवत् द्रष्टव्याभावेऽपि पश्यतीति प्रयोगोऽस्तु, तत्राह* कथमिति ॥३२७॥ सुप्तो न पश्यतीत्यत्र वादिप्रसिद्धिमप्युपपादयति* जागर इत्यादिना ॥ ३२८ ॥ ३२९ ॥ उक्तमर्थं पुनः संगृह्य दर्शयति *य इति ॥ ३३० ॥ सुप्तौ विशेषज्ञानाभावे पश्यतीति शास्त्रतः प्रयोगः कथमित्याशङ्क्याचारादित्याह *चिल्लोपेति ॥ ३३१ ॥ पश्यन्वै तन्न पश्यतीत्यत्र परोक्तमर्थं दर्शयितुं तदुक्तिमनुवदति* भर्तृप्रपञ्च इत्यादिना ॥३३२॥३३३॥ नन्वात्मनः स्वभावतः कर्तृशक्तियुक्त-

न पश्यतीति तस्योक्तिर्द्वितीयाभावतो भवेत् ॥
ज्वलन्नपि यथा वन्हिर्दाह्याभावान्न दाहकः ॥ ३३४ ॥
नैतद्युक्तं तत्त्ववादिबहुश्रुतिविरोधतः ॥
केवलो निर्गुणोऽसङ्गो नेतिनेत्यादिका श्रुतिः ॥३३५॥
अवाङ्मनसगम्यं यन्निर्गुणं ब्रह्म वर्ण्यते ॥
तदेव ह्यात्मनस्तत्त्वमन्यन्मायाविजृम्भितम् ॥ ३३६ ॥
द्रष्टुरित्यादिशब्दानामर्थः पूर्वमुदीरितः ॥
तस्मात्सुप्तौ चिदद्वैतं यत्तद्रूपं परात्मनः ॥ ३३७ ॥
एतद् द्रढयितुं प्रोक्ताः पर्याया बहवः श्रुतौ ॥
यद्वै न जिघ्रतीत्यादौ योजना दृष्टिवाक्यवत् ॥३३८॥
अन्धादेर्दृष्ट्यभावेऽपि गन्धादिज्ञानमस्ति हि ॥
मा भूत्तथेत्यभिप्रेत्य प्रोक्तं सर्वाक्षलोपनम् ॥ ३३९ ॥
मतिर्विज्ञातिरित्येते चित्तस्यैव क्रिये उभे ॥
संशयो निश्चयश्चेति तयोर्भेदोऽवगम्यते ॥ ३४० ॥

---

त्वान्नित्यज्ञानवत्त्वाच्च पश्यन्निति प्रयोगसम्भवेऽपि न पश्यतीति कथमुच्यते, तत्राह *नेति । तत्रैव दृष्टान्तमाह* ज्वलन्निति ॥ ३३४ ॥ नेयं कल्पना श्रुतिविरुद्धत्वाच्छोभत इति दूषयति *नेति ॥ श्रुतिविरोधमेव प्रकटयति* केवल इति ॥ श्रुतिरित्यत्रानया श्रुत्येति शेषः ॥ ३३५ ॥ ब्रह्मण एकरूपत्वेऽपि जीवस्य किमायातं तत्राह *तदिति ॥ ३३६ ॥ द्रष्टृत्वादिधर्मरहितत्वे फलितमाह *तस्मादिति ॥ ३३७ ॥ यद्वै तन्न जिघ्रतीत्याद्यनेकपर्यायकथनतात्पर्यमाह *एतदिति ॥ ३३८ ॥ अनेकपर्यायोक्तेस्तात्पर्यान्तरमाह *अन्धादेरिति ॥३३९॥ अत्र मन्तुर्मतेर्विज्ञातुर्विज्ञातेरिति पर्यायद्वयकथनस्य पौनरुक्त्यमाशङ्क्य परिहरति *मतिरिति ॥३४०॥ तयोरेवार्थान्तरमाह *इदमिति ॥ अत्र

इदंबुद्धिरहंबुद्धिरिति वा तद्विदेष्यताम् ॥
अनात्मविषयेदन्धीरहंधीरात्मगोचरा ॥ ३४१ ॥
धीवृत्तित्वेऽपि दृष्ट्यादिर्जन्यते बहिरिन्द्रियैः ॥
वस्तुस्मृतिरहंधीश्च न जन्ये चक्षुरादिभिः ॥ ३४२ ॥
सर्वेन्द्रियव्यवहृतेर्लोपादद्वैतता चितः ॥
सुषुप्तावनुभूतेति स्वात्मरूपं तदीर्यते ॥ ३४३ ॥

श्रुतिः—यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥

वा०—ननु सर्वजनैर्द्वैतं जागरे स्पष्टमीक्ष्यते ॥
सद्वैत एव किं न स्यादात्मेत्याशङ्क्य वर्ण्यते ॥ ३४४ ॥
यत्रैव जागरे स्वस्मादन्यत्किञ्चिदिति भ्रमः ॥
तत्रैवान्यः स्वयं द्रष्टा दृश्यमन्यदपेक्ष्यते ॥ ३४५ ॥
द्वैतभ्रमस्य सिध्यर्थमिवशब्दः प्रयुज्यते ॥
स्वप्नभ्रान्तेर्वर्णनार्थमिवशब्दोक्तिदर्शनात् ॥ ३४६ ॥

---

मतिशब्देनानात्मविषयस्मृतिरुच्यते, विज्ञातिशब्देनाइमाकारान्तःकरणवृत्तिरिति भेदः ॥ ३४१ ॥ अनयोर्वृत्त्योर्दृष्टिघ्रात्यादिवृत्तिभ्यो वैलक्षण्यं चास्मिन्पक्षे सिध्यतीति विशेषमाह *धीवृत्तीति ॥३४२॥ प्रकृतवाक्यतात्पर्यमुपसंहरति *सर्वेति ॥३४३॥ शङ्कापूर्वकं यत्र वा अन्यदिवेत्याद्यवतारयति *नन्विति॥३४४॥ अक्षराणि व्याचष्टे *यत्रेति ॥ ३४५ ॥ अन्यदिवेत्यत्र इवशब्दार्थमाह *द्वैतेति ॥ इवशब्दप्रयोगमात्रेण कथं द्वैतमिथ्यात्वं तत्राह *स्वप्नेति ॥ ३४६ ॥ इवार्थमभिनयति *आरुक्षु-

आरुरुक्षुमिव शैलाग्रमद्राक्षमिव काननम् ॥
इत्यादिवचसा स्वप्नं वर्णयन्ति हि लौकिकाः ॥३४७॥
बाध्यते जाग्रति स्वप्नः स्वप्ने जाग्रच्च बाध्यते ॥
चिदद्वैतं तु न क्वापि बाध्यते वास्तवं ततः ॥ ३४८ ॥
चितो न बाधकं द्वैतं चित्प्रसादेन भासनात् ॥
अबाध्यत्वाद्वास्तवत्वं चिदद्वैतस्य सुस्थितम् ॥ ३४९ ॥
श्रुतिः-सलिल एको द्रष्टाऽद्वैतो भवति ॥
वा०-यद्वै तदित्युपक्रम्य व्याख्यातं वस्तु विस्तरात् ॥
सलिलादिगिरा तस्य क्रियते ह्युपसंहृतिः ॥ ३५० ॥
आत्मा सलिलवच्छुद्धः कार्यकारणहानतः ॥
स्वतोऽवबोधमात्रत्वात्कुतोऽविद्यादिसङ्गतिः ॥३५१॥
अन्तरेणापि सम्बन्धं कार्यकारणवस्तुनः ॥

---

मिति । उत्तेव महाराज इत्यादिश्रुतिप्रसिद्धिसूचनार्थो हि-शब्दः ॥ ३४७ ॥ किञ्च बाधितत्वाच्च न द्वैतस्य सत्यतेत्याह *बाध्यते इति । सुप्तशब्दो मुक्तेरुपलक्षणम् ॥ ३४८ ॥ न केवलं बाधानुपलम्भादद्वैतस्याबाध्यत्वं, किन्तु बाधहेत्वनिरूपणाच्चे-त्याह *चित इति। द्वैतोत्पत्तिविनाशसाक्षित्वेन कालत्रयेऽपि स्व-तश्चैतन्यस्य न द्वैतेन बाधसम्भव इत्यर्थः। बाधाभावे फलितमाह *अबाध्यत्वादिति ॥ ३४९ ॥ सलिलादिवाक्यं तात्पर्योक्तिपूर्व-कमादत्ते *यदिति ॥३५०॥ तत्र सलिलशब्दस्य विवक्षितमर्थ-माह *आत्मेति ॥ अविद्याद्वारा जगद्धेतुत्वादात्मनः कथं तत्स-म्बन्धाभावस्तत्राह *स्वत इति ॥ वास्तवसम्बन्धाभावेन शुद्ध-त्वोक्तिर्युक्तेति भावः ॥ ३५१ ॥ एकशब्दमाशङ्कोत्तरत्वेनो-

स्वतोऽनेकात्मकं तत्स्यादित्याशङ्क्यैकतोच्यते ॥३५२॥
न कपित्थादिवत्तत्त्वं स्वतोऽनेकस्वभावकम् ॥
अखण्डैकरसे तस्मिन् कुतः स्यात्स्वगता भिदा॥३५३॥
सजातीयनिषेधो वा ह्येकशब्देन भण्यते ॥
सलिलोक्त्या विजातीयसम्बन्धो विनिवारितः॥३५४॥
एकशब्दो न संख्यार्थः संख्येयासम्भवादिह ॥
अद्वितीयत्वमेवार्थो द्वितीयार्थनिषेधतः ॥ ३५५ ॥
सदेवेत्यादिना चास्य तथा सत्यविरुद्धता ॥
प्रत्यङ्मात्रावसायित्वं प्रत्यग्दृष्टेः प्रसिध्यति ॥ ३५६ ॥
अकारकस्वभावत्वमद्रष्टेत्यभिधीयते ॥
यत्र हि द्वैतमित्युक्तेर्यत्र त्वस्येति चेरणात् ॥ ३५७ ॥
स्वतः पूर्णात्मकं ज्योतिर्यद्द्रष्टेति चोच्यते ॥

---

त्थापयति *अन्तरेणेति ॥३५२॥ तस्यार्थमाह *नेति ॥३५३॥ एकशब्दस्यार्थान्तरमाह *सजातीयेति । एकशब्दस्यात्मभेदमात्रनिरासार्थत्वे कथमनात्मभेदनिषेधसिद्धिस्तत्राह *सलिलेति ॥ ३५४ ॥ एकपदस्य संख्यावाचिनो गुणगुणीसम्बन्धपरत्वान्न विवक्षितार्थतेत्याशङ्क्याह *एकेति । इहेत्यात्मोक्तिः। नहि तस्मिन्नेकत्वगुणः, निर्गुणत्वश्रुतेरित्यर्थः ॥ संख्यावाचित्वासम्भवे सिद्धमाह *अद्वितीयेति॥३५५॥ एकशब्दस्य वृद्धव्यवहारे संख्यावाचित्वसिद्धेर्नाद्वितीयार्थतेत्याशङ्क्य श्रुत्यन्तराविरोधान्मैवमित्याह *सदिति । तथा सति एकपदस्याद्वितीयार्थत्वे सतीति यावत् ॥३५६॥ एको द्रष्टेत्यत्राद्रष्टेति पदच्छेदं कृत्वा तस्यार्थमाह *अकारकेति ॥ द्रष्टेतिपदच्छेदपक्षे तस्यार्थमाह *यत्रेति यत्पूर्णात्मकं ज्योतिः तदेव द्रष्टृशब्देन लक्षणयोच्यत इत्यर्थः

अविद्याकार्यराहित्यादद्वैतोऽयं भवेत्स्वतः ॥ ३५८ ॥
द्विधेतं द्वितमित्याहुस्तद्भावो द्वैतमुच्यते ॥
तन्निषेधेन चाद्वैतं प्रत्यग्वस्त्वभिधीयते ॥ ३५९ ॥
प्रत्यग्दृष्ट्यव्यवहितेः प्रत्यक्षादात्मवस्तुनः ॥
एष इत्यात्मनिर्देशो यत्साक्षादिति च श्रुतेः ॥३६०॥

श्रुतिः—एष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा संपत् ॥

वा०—अव्यावृत्तानुगतं निःसामान्यविशेषवत् ॥
ब्रह्मेति मुख्यवृत्त्येह वस्तु श्रुत्याऽभिधीयते ॥ ३६१ ॥
तथा लोकयतेर्धातोर्दर्शनार्थत्वहेतुनः ॥
प्रकृतत्वात्तथा दृष्टेर्लोकनं लोक उच्यते ॥ ३६२ ॥

---

॥३५७॥ अद्वैतो भवतीत्यत्राद्वैतशब्दार्थमाह *अविद्येति॥३५८॥ ननु नञर्थत्रैविध्यादन्यतमानिर्द्धारणादृते कथमद्वैतं निर्धार्यते इत्याशङ्क्य द्वैतशब्दस्यावयवशोऽर्थं वदन्तदभावोऽद्वैतमित्याह *द्विधेति॥ अद्वैतस्य विरहात्मकाभावावसानत्वं व्यावर्त्तयति *प्रत्यगिति॥३५९॥ एष ब्रह्मलोक इत्यादिवाक्यस्थमेषशब्दं व्याचष्टे *प्रत्यग्दृष्टीति । आत्मन एषशब्दार्हत्वे प्रत्यक्षत्वं हेतुः, तत्र चाव्यवहितत्वमित्युक्त्वा तस्य प्रत्यक्षत्वे श्रुतिमप्याह *यदिति ॥ ३६० ॥ ब्रह्मशब्दार्थमाह *अव्यावृत्तेति ॥ तत्र हेतुः निःसामान्येति । कमलासनादिवाचकब्रह्मशब्दादस्य विशेषमाह *मुख्येति । इहेति ब्रह्मलोकशब्दनिर्देशः । अव्यावृत्तानुगतं वस्तु ब्रह्मेति श्रुत्योच्यते इत्यर्थः ॥३६१॥ लोकशब्दस्य भोगभूमिविषयत्वं प्रकरणादिना व्यावर्त्तयन् विवक्षितमाह *तथेति ॥३६२॥ अवयवार्थमुक्त्वा ब्रह्मलोकशब्दस्य समासमाह *कर्म-

कर्मधारय एवातः समासोऽत्रोपपद्यते ॥
नतु षष्ठीसमासोऽत्र विभागस्याप्रसिद्धितः ॥ ३६३ ॥
ब्रह्मणो लोक इत्युक्ते भाति ब्रह्मचितोर्भिदा ॥
प्रज्ञानघन इत्यादिवाक्यैस्तत्र विरुध्यते ॥ ३६४ ॥
ब्रह्मैव लोक इत्युक्ते प्रज्ञानघनता स्फुटा ॥
एतच्छब्दब्रह्मलोकशब्दावैकात्म्यभासकौ ॥ ३६५ ॥
न प्रत्यग्व्यतिरेकेण ब्रह्मत्वमुपपद्यते ॥
ब्रह्मणो व्यतिरेकेण प्रत्यक्त्वं न चितस्तथा ॥ ३६६ ॥
अनयोरैक्यसंमोहात्परोक्षद्वयकल्पने ॥
संसारोऽयमतो मोहसमुच्छित्तौ विमुक्तता ॥ ३६७ ॥
अतोऽशेषमहानर्थहेतोर्मोहस्य हानये ॥
एष इत्यादिवाक्योक्तिः सम्यग्दर्शनजन्मना ॥ ३६८ ॥
इतिशब्दो यथोक्तार्थपरामर्शं करोति हि ॥
ऐतिह्यार्थस्तथाहेति संम्राडित्यभिमन्त्रणम् ॥ ३६९ ॥

---

ति ॥ ३६३ ॥ षष्ठीसमासासम्भवमेव प्रपञ्चयति *ब्रह्मण इति ॥ तत्र तथा सतीत्यर्थः ॥ ३६४ ॥ कर्मधारये गुणमाह *ब्रह्मेति । समासं व्यवस्थाप्य एष ब्रह्मलोक इतिपदयोस्तत्त्वमसीत्यादिवदखण्डार्थतामाह *एतदिति ॥ ३६५ ॥ तयोरैक्यात्मभासकत्वे युक्तिमाह *नेति ॥ ३६६ ॥ ब्रह्मात्मनोरैक्यमस्ति चेत्कथं संसारप्रतीतिः, तत्प्रतीतौ वा कथं ब्रह्मणो नित्यमुक्तता तत्राह *अनयोरिति ॥ ३६७ ॥ वाक्यतात्पर्यमुपसंहरति *अत इति ॥ मोहध्वस्तौ मुक्तिरतःशब्दार्थः ॥ ३६८ ॥ संम्राडित्यादेरवयवार्थमाह *इतिशब्द इति । तस्योक्तार्थपरामर्शसामर्थ्यद्योती हिशब्दः । अभिमन्त्रणं सम्बोधनम्॥३६९॥एनः

इत्युक्तेन प्रकारेण मुमुक्षुं जनकं मुनिः ॥
अन्वशात्सकलानर्थहेत्वविद्यापनुत्तये ॥ ३७० ॥
व्युत्थायाख्यायिकातो नः श्रुतिरेवदमब्रवीत् ॥
अस्माकमादरस्तेन स्यादस्मिन्हगात्मनि ॥ ३७१ ॥
पुनराख्यानरूपेण मुनिर्भूत्वा दृगात्मनः ॥
परमानन्दरूपत्वं प्रतिपादयति श्रुतिः ॥ ३७२ ॥
विज्ञानपुरुषस्यास्य योक्ता ब्रह्मात्मता पुरा ॥
नैष्ठिकी गतिरेषाऽत्र गत्यन्तरसमाप्तितः ॥ ३७३ ॥
इतोऽन्यगतयः सर्वाः क्षयिसाधनसंश्रयात् ॥
क्षयिण्योऽतो हि परमा गतिरेषैव नापरा ॥ ३७४ ॥
अविद्यामात्रहेतुत्वात्कामकर्मादिसाधनाः ॥
गतयोऽपरमाः सर्वा मायास्थप्रगती यथा ॥ ३७५ ॥

---

मित्यादेरितिशब्दार्थानुवादपूर्वकमर्थमाह *इत्युक्तेनेति ॥३७०॥ आख्यायिकायामिदं वाक्यमसङ्गतमित्याशङ्क्य एष इत्यादि न मुनेर्वाक्यं किन्तु श्रुतेरेवेत्याह *व्युत्थायेति । व्युत्थानफलमाह *अस्माकमिति ॥ केवलश्रुत्युक्तेऽर्थे ऽधिकविश्वासो भवतीति ॥ ३७१ ॥ एषेत्याद्युत्तरसन्दर्भतात्पर्यमाह *पुनरिति ॥ ३७२ ॥ एषाऽस्य परमा गतिरित्यस्यार्थमाह *विज्ञानेति ॥ बुद्ध्युपाधिकस्य पूर्ववाक्ये ब्रह्मतोक्ता, एषैवास्य नैष्ठिकी गतिः, गत्यन्तराणामत्रैव समाप्तेरित्यर्थः ॥ ३७३ ॥ परमत्वं साधयति *इत इति ॥ गतिसाम्यादस्यापि क्षयिष्णुत्वमाशङ्क्य ज्ञानस्य विषयतोऽक्षयत्वात्तदधीनफलमक्षयमिति विवक्षन्नाह *अतो हीति ॥ हि यतः ॥ ३७४ ॥ गत्यन्तराणामपरमत्वं दृष्टान्तेनाह *अविद्येति ॥ मुक्तिरेव परमा गतिर्न कर्मफलमिति समुदायार्थः ॥ ३७५ ॥ एषाऽस्य परमा सम्पदित्यस्यार्थमाह

संपच्च परमैवैव मोहोत्थाश्चान्यसंपदः ॥
उत्कर्षातिशयः संपद्विभूतिश्चेति भण्यते ॥ ३७६ ॥
श्रुतिः—एषोऽस्य परमो लोक एषोऽस्य परम आनन्द
एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति॥३२॥
वा०—एषोऽस्य परमो लोको लोकास्त्वन्ये क्षयिष्णवः ॥
क्षयिष्णुसाधनोपेता न त्वेषोऽसाधनाश्रयात् ॥३७७॥
ब्रह्मैव सन्स्वतो यस्माद्ब्रह्माप्येत्यवबोधतः ॥
तदविद्याविरोधेन मुक्तिर्नातोऽन्यसाधनात् ॥ ३७८॥
लोकशब्दस्य मुख्यार्थ आत्मैवेह यतस्ततः ॥
कर्मादिहेतुसाध्येषु गौणी लोकार्थता भवेत् ॥ ३७९ ॥
न कर्मणा कनीयस्ता वृद्धिर्वा नान्तरात्मनः ॥
इति बाहुमिवोद्धृत्य वेदान्तैर्घोषणा कृता ॥३८० ॥

---

*सम्पच्चेति ॥ अवधारणे हेतुमाह *मोहेति ॥ का पुनः सम्पन्नाम परमगतेरर्थान्तरं, तथाच पूर्वेण गतार्थता तत्राह *उत्कर्षेति ॥ उत्कृष्टोऽवष्टम्भः परमा गतिरतो न पौनरुक्त्यमिति चार्थः ॥ ३७६ ॥ एषोऽस्य परो लोक इत्यस्यार्थमाह *एष इति ॥ ३७७ ॥ मोक्षस्यासाधनाश्रयत्वमसिद्धं कर्मज्ञानापेक्षत्वादित्याशङ्क्याह *ब्रह्मेति ॥ प्रतिबन्धध्वस्तौ ज्ञानस्योपयोगेऽपि न कर्म साक्षान्मोक्षे उपकरोतीति भावः ॥ ३७८ ॥ मोक्षस्य ब्रह्मलोकशब्दितस्य लोकत्वसाम्यात्फलत्वं स्वर्गादिवदित्याशङ्क्याह *लोकेति ॥ रूढिव्युत्पत्तिभ्यामात्मन एव लोकशब्दार्थत्वात्स्वर्गादिषु तच्छब्दो गौणः, अन्यायश्चानेकार्थत्वमिति न्यायादिति भावः ॥ ३७९ ॥ ननु लोकस्य कर्मसाध्यत्वे प्रसिद्धेरात्मैव लोकश्चेत् कर्मसाध्यः स भविष्यति, नेत्याह *नेति ।

आनन्दः परमो ह्येषः सुखोत्कर्षसमाश्रितः ॥
सर्वानन्दातिशायित्वात्तथा चैतत्प्रवक्ष्यते ॥ ३८१ ॥
विषयस्पर्शजानन्दाः साधनानुविधानतः ॥
आद्यन्तवत्त्वस्वाभाव्याद् दुःखयोनय एव ते ॥३८२॥
कूटस्थात्मस्वभावत्वात्सर्वसाधननिस्पृहः ॥
सर्वानन्दातिवर्त्तित्वादानन्दः परमो मतः ॥ ३८३ ॥
आनन्दः परमोऽस्यैष इत्युक्तार्थप्रसिद्धये ॥
एतस्यैवेति वचसामथार्थो हेतुरुच्यते ॥ ३८४ ॥
एतस्यैव यथोक्तस्य सर्वानन्दातिवर्त्तिनः ॥
उपजीवन्ति भूतानि ब्रह्मानन्दस्य विप्लुषः ॥३८५॥
एष एवंविधो यस्मादानन्दः परमः स्मृतः ॥
आनन्दानतिशेतेऽन्यान् सर्वानस्यैव कृत्स्नतः॥३८६॥

---

॥३८०॥ एषोऽस्य परम आनन्द इत्यस्यार्थमाह *आनन्द इति ॥ आत्मानन्दस्य परमत्वे हेतुः *सुखेति । तत्रापि हेतुः सर्वेति । तदेव कथं तदाह *तथा चेति ॥ स यो मनुष्याणामित्यादिप्रकरणे आत्मनः सर्वानन्दातिशायित्वं वक्ष्यत इत्यर्थः ॥३८१॥ विषयानन्दानामपि हिरण्यगर्भादीनां परमत्वात्कथं परम इत्यात्मानन्द एव विशेष्यते तत्राह *विषयेति ॥ ३८२ ॥ तर्हि तद्वदात्मसुखस्यापि सुखत्वाविशेषान्न परमत्वं तत्राह *कूटस्थेति ॥ ३८३ ॥ आत्मसुखमेवोत्कृष्टमितरान्निकृष्टमित्यत्राबाधितहेतूक्त्यर्थमुत्तरवाक्यमित्याह *आनंद इति ॥ ३८४ ॥ वाक्यं योजयति *एतस्येति । यथोक्तस्येत्यस्य व्याख्या—सर्वानन्देति ॥ ३८५ ॥ हेत्वर्थमनूद्य साध्यार्थं निगमयति *एष इति ॥ परमत्वं व्याकरोति *आनन्दानिति ॥ तत्र हेतुः *अस्येति ॥ ३८६ ॥ आनन्दस्य

कृत्स्नोऽपि चैष आनन्दस्तदविद्यैकहेतुतः ॥
बुद्ध्याद्युपाध्यवच्छेदान्मात्रेति व्यपदिश्यते ॥ ३८७ ॥
श्रुतिः—स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दः ॥

वा०-तन्मात्रावर्त्मनैवैनं बुबोधयिषते मुनिः ॥
लवणाब्धिर्यथा नद्यां बुध्यते लवणोदकात् ॥३८८॥
यावद्यावत्समीपस्था लवणाब्धेर्महानदी ॥
भासते लवणाधिक्यं तावत्तावन्नदीजले ॥ ३८९ ॥
एवं च दूरग्रामस्थः स्वादयन् लवणं जले ॥
नदीतीरे क्रमाद्गच्छेल्लवणाब्धिं स पश्यति ॥ ३९० ॥
तथैव मानुषानन्दमारभ्योत्तरवृद्धितः ॥
बुध्वा हैरण्यगर्भान्तं परानन्दं प्रबुध्यते ॥ ३९१ ॥
मनुष्यमध्ये यः कोऽपि संसिद्धोऽवयवैर्दृढः ॥
कृत्स्नसाधनसंपत्त्या समृद्धोऽपि भवेदसौ ॥ ३९२ ॥

---

कृत्स्नत्वे कथं मात्रेति व्यपदेशस्तत्राह *कृत्स्नोऽपीति ॥ पूर्णस्यानन्दस्य अविद्योत्थबुध्यादिसम्बन्धान्मात्रेति व्यपदेशार्हतेत्यर्थः ॥ ३८७ ॥ स यो मनुष्याणामित्यादेस्तात्पर्यमाह *तन्मात्रेति ॥ ३८८ ॥ नद्यां लवणोदकदर्शनाल्लवणाब्धिर्बुध्यत इत्युक्तं व्यनक्ति *यावदित्यादिना ॥३८९॥३९०॥ एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिकमाह *तथेति ॥ ३९१ ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *मनुष्येति ॥ समृद्धशब्दस्य राद्धशब्देनापुनरुक्तमर्थमाह *कृत्स्नेति ॥ ३९२ ॥ पदद्वयार्थं पिण्डीकृत्य निगमयति *बाह्यैरिति ॥ सर्वेषामधिपतिरित्येतद्व्याचष्टे

बाह्यैराध्यात्मिकैरेवं साधनैरन्वितः पुमान् ॥
सर्वेषामधिपो भूत्वा कार्त्स्न्येन विहन्यते ॥ ३९३ ॥
मानुष्यकेण भोगेन संपन्नानां नृणामिह ॥
संपन्नोऽतिशयेनातः संपन्नतम उच्यते ॥ ३९४ ॥
सर्वैर्मानुष्यकैर्भोगैः संपन्ना न तु दैविकैः ॥
आनन्द एष परमो मनुष्याणामिहोच्यते ॥ ३९५ ॥

श्रुतिः—अथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः ॥

---

*सर्वेषामिति ॥ ३९३ ॥ सर्वैरित्यादेरर्थमाह *मानुष्यकेणेति ॥ ३९४ ॥ मानुष्यकैरिति विशेषणतात्पर्यमाह *सर्वैरिति ॥ स मनुष्याणामित्यादेरर्थमाह *आनन्देति ॥ पूर्वोक्तसकलविशेषणविशिष्टोऽनतिशयमनुष्यभोगभोगी युधिष्ठिरादिर्मनुष्याणां परम आनन्दः, वस्तुतः आनन्दानन्दिभेदाभावादिति भावः ॥ ३९५ ॥ अथ ये शतं मनुष्याणामानन्दा इत्यादेरर्थमाह *शतकृत्व इति । तत्तदानन्दप्रदर्शनानन्तर्यं तत्र तत्राथ-

वा०-शतकृत्वो मनुष्याणामानन्दो गणितस्तु यः
पितॄणामेक आनन्दः सोऽयं तुल्यप्रमाणतः ॥ ३९६ ॥
तारतम्यादुपायानां शुद्धिस्तरतमा धियः ॥
शुद्धेस्तरतमत्वेन सुखं तरतमं भवेत् ॥ ३९७ ॥
यावद्यावन्मलोऽप्येति बुद्धेर्धर्मादिसंचयात् ॥
तावत्तावद्धियः स्वाच्छयात्तावत्तावत्सुखोन्नतिः ३९८
यावद्यावद्घनीभूतो मलः पापादिसङ्गतेः ॥
तावत्तावद्धियोऽस्वाच्छयाद् दुःखोद्भूतिस्तथा तथा ३९९
पितृलोको जितो यैः स्यात्पितृयज्ञादिकर्मभिः ॥
जितलोकास्त उच्यन्ते पितरो दिव्यभोगिनः ॥४००॥
य एष दक्षिणः पन्थाः पितृलोकः स उच्यते ॥
मनुष्यानन्दतः सोऽयं गणितः स्याच्छताधिकः ॥४०१॥
उत्तरेष्वपि वाक्येषु यथोक्तमुपपादयेत् ॥

---

शब्दार्थः। प्रमाणं परिमाणम्। मनुष्यानन्दः शतगुणीकृतपरिमाणः पितॄणामेकानन्दो भवतीत्यर्थः ॥ ३९६ ॥ सर्वं सुखमात्मेष्यते चेत्कथं तारतम्यवत्स्यादात्मनोऽनतिशयत्वात्तत्राह *तारतम्यादिति ॥ व्यञ्जकबुद्धिशुद्धिवैषम्यात्तस्मिन्वैषम्यधीरित्यर्थः ॥३९७॥ केषामुपायानां तारतम्याच्छुद्धि तारतम्यं तत्राह *यावदिति ॥ शुद्धितारतम्यादानन्दे तारतम्यधीरित्येतन्निगमयति *तावदिति॥३९८॥ उपायतारतम्याधीनशुद्धितारतम्यकृतं सुखतारम्यमित्येतद्व्यतिरेकमुखेनाह *यावदिति ॥ ३९९ ॥ स एकः पितॄणामित्येतद्व्याख्याय जितलोकानामित्यस्यार्थमाह *पितृलोक इति ॥ ४०० ॥ कोऽयं पितृलोकस्तत्राह *य इति ॥ ४०१ ॥ अथ ये शतमित्यादिवाक्येषूक्तन्यायमतिदिशति *उत्तरेष्विति ॥ सर्वपर्यायेषु

शताधिकोऽयमानन्दः पूर्वस्मादुत्तरक्रमात् ॥ ४०२ ॥
पितरोऽग्निष्वात्तमुख्या गन्धर्वा देवगायकाः ॥
ज्योतिष्टोमादिना स्वर्गं प्राप्ताः स्युः कर्मदेवताः॥४०३॥
सृष्टेराजननादादौ देवत्वं गे प्रपेदिरे ॥
आजानदेवास्तेऽत्र स्युः पूर्वेभ्यः सूक्ष्ममूर्त्तयः ॥४०४॥
नानाद्वन्द्वोपघातार्थं हेतूनां बहुलत्वतः ॥
पूर्वानंदेभ्य एतेषामानंदोऽभ्यधिको मतः ॥ ४०५ ॥
सूक्ष्मभूतारब्धतया सूक्ष्मत्वं न त्विहाल्पता ॥
शीतोष्णादि न देहेऽस्ति सूक्ष्मे स्थूलशरीरवत्॥४०६॥
श्रोत्रियो वेदशास्त्रज्ञो निष्पापो ब्रह्मवित्वतः ॥
भोग्यदोषान्विविच्यास्ते नातः कामेन हन्यते ॥४०७॥
आजानदेवानन्देन समं स्याच्छ्रोत्रिये सुखम् ॥

---

सिद्धमर्थं संकलयति *शतेति ॥ ४०२ ॥ तत्र पर्यायचतुष्टयप्रति-पादितान्पितृगन्धर्वकर्मदेवाजानदेवान् विभजते *पितर इत्या-दिना ॥ ४०३ ॥ तेषां सुखतारतम्ये हेतुमाह *पूर्वेभ्य इति ॥ पूर्वपूर्वेभ्य इत्यर्थः ॥४०४॥ तेषामुत्तरोत्तरानन्दाधिक्ये हेत्वन्तरमाह *नानेति ॥ ४०५ ॥ सूक्ष्ममूर्त्तय इत्युक्तं विवृणोति *सूक्ष्मेति । सूक्ष्मभूतारब्धत्वं च गार्गिब्राह्मणोक्तमत्रानुसन्धेयम । सूक्ष्मत्वेऽपि कथं दुःखाभावः शरीरत्वाविशेषात्तत्राह *शीतेति ॥ ४०६ ॥ यश्च श्रोत्रिय इत्यादि व्याचष्टे *श्रोत्रिय इति ॥ अवृजिनपद-व्याख्या निष्पाप इति । तत्र हेतुः *ब्रह्मेति ॥ अनादिभवपरंप-रार्जितसर्वपापानां ब्रह्मसाक्षात्कारं विना निःशेषं निवृत्त्ययोगा-दिति भावः ॥ तस्याकामहतत्वमुपपादयति *भोग्येति ॥ ४०७ ॥ अपेक्षितं पूरयति *आजानेति ॥ स एकः प्रजापतिलोक आ-

प्रजापतिर्विराट् ब्रह्मा सूत्रात्मेत्यनयोर्भिदा ॥४०८॥
सर्वत्र योजनायैव श्रोत्रियः पुनरुच्यते ॥
सार्वभौमादिसूत्रान्तानन्दा ब्रह्मविदि स्थिताः ॥४०९॥
सुखं तृप्तिरकामत्वमित्येकार्था इमा गिरः ॥
सर्वकामविहीनेऽतः सुखं सर्वं व्यवस्थितम् ॥ ४१० ॥
पूर्वं कामहतत्वेन सार्वभौमादयोऽखिलाः ॥
दुःखिनोऽथ पदं प्राप्य निष्कामाः सुखिनोऽभवन् ४११॥
पुंभेदात्कालभेदाद्वा तत्तत्साधनतो भवेत् ॥
कामात्तत्तत्पदप्राप्तिर्नैकस्मिन्नेकदा क्वचित् ॥ ४१२ ॥

---

नन्दः स एको ब्रह्मलोक आनन्द इत्यनयोरेकार्थत्वमाशङ्क्य स्थूलसूक्ष्मशरीरोपाधिभेदेन तयोर्भेदमाह *प्रजापतिरिति॥४०८॥ यश्च श्रोत्रिय इति पुनरुक्तिः किमर्थेत्याशङ्क्य सर्वपर्यायेष्वनुषंगार्थमित्याह *सर्वत्रेति ॥ पर्यायत्रयोक्तिरितरपर्यायाणामप्युपलक्षणमित्यत्र हेतुमाह *सार्वभौमेति ॥ ४०९ ॥ विषयसुखस्यापि श्रोत्रियानुभूतब्रह्मानन्देऽन्तर्भावः कथं तत्राह *सुखमिति ॥ एकार्थाः समानियता इति यावत् ॥ अस्तु प्रकृते किमायातं तत्राह *सर्वेति ॥ सर्वतो विरक्तस्यैव ब्रह्मविद्यायामधिकारात्तस्य श्रवणादिजन्यज्ञानाभिव्यक्तेऽनतिशयसुखे सर्वविषयसुखान्तर्भावः सम्भवतीति भावः ॥ ४१० ॥ कामाभावसमन्वितं सुखमुदाहरणेनाह *पूर्वमिति ॥ ४११ ॥ ननु तत्तत्पदप्राप्त्या तेषामपि कामनिवृत्तौ कथं तत्सुखस्य सातिशयत्वं तत्राह *पुंभेदादिति । तत्तत्पदकामनयाऽनुष्ठिततत्तत्साधनैस्तत्तत्पदप्राप्तावप्युत्कृष्टपदेप्सायाः सत्त्वेन तेषां सर्वकामनिवृत्त्यभावान्न तत्सुखस्य निरतिशयत्वमिति भावः ॥ ४१२ ॥ उक्तमर्थं

श्रोत्रिये कामराहित्यात्सर्वानन्दाः सह स्थिताः ॥
सोऽश्नुते सकलान्कामान्स हेति प्राह तित्तिरिः ४१३
श्रुतिः—अथैष एव परम आनन्द एष ब्रह्मलोकः स-
म्राडिति होवाच याज्ञवल्क्यः ॥
वा०—सूत्रात्परमनंतत्वाद्गणितं विनिवर्त्तते ॥
यतो वाचो निवर्त्तन्ते इति श्रुत्यन्तरं जगौ ॥ ४१४ ॥
श्रोत्रियेणानुभूतो यो ब्रह्मानन्दोऽस्य विप्रुषः ॥
सार्वभौमादिब्रह्मान्ताः प्राणिनोऽनुभवन्त्यमी॥४१५॥
तस्माद्ध्येष परम आनन्द इति वक्त्यसौ ॥
ब्रूते च भगवान्व्यासः सर्ववेदार्थतत्त्ववित् ॥ ४१६ ॥
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥४१७॥
यतो यतो निवर्तेत ततस्ततो विमुच्यते ॥
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ ४१८ ॥

---

सप्रमाणमुपसंहरति *श्रोत्रिय इति ॥ ४१३ ॥ अथैष परम आनन्द इत्यत्र परमत्वं साधयन् वाक्यमवतारयति *सूत्रादित्यादिना । यस्मादात्मानन्दे गणनायोगः, यस्माच्च तत्र सर्वाणि विषयसुखान्यन्तर्भवन्ति तस्मात्स परम इत्यर्थः ॥४१४॥४१५॥ सर्वकामरहिते विदुषि सर्वं विषयसुखमन्तर्भवतीत्यत्राभियुक्तसम्मतिमाह *ब्रूत इति ॥ ४१६ ॥ ४१७ ॥ तदीयमेव वाक्यान्तरं पठति *यत इति ॥ ४१८ ॥ एष इत्यादिवाक्यतात्पर्यमाह *सलिलादीति । ब्रह्मलोकान्तवाक्येन—ब्रह्मलोकपदम् अन्ते मध्ये यस्यास्ति तेनेति यावत् ॥ सलिल एको द्रष्टेत्युपक्रम्य मात्रामुपजीवन्तीत्यन्तेन कार्यकारणनिर्मुक्तोऽनतिशयानन्दो यः प्रत्य-

सलिलादिगिरा योऽर्थः प्रत्यज्ञापि पुराऽखिलः ॥
ब्रह्मलोकांतवाक्येन तस्येयमुपसंहृतिः ॥ ४१९ ॥
श्रुतिः-सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमो-
क्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयांचकार
मेधावी राजा सर्वेभ्यो मां तेभ्य उदरौत्सीदिति ॥३३॥
वा०-वक्तव्यार्थे समाप्तेऽपि राजा पप्रच्छ पूर्ववत् ॥
भीतो मुनिर्भये हेतुर्मेधावीत्यादिनोक्तवान् ॥ ४२० ॥
सर्वेभ्यो निर्णयेभ्यो मामरौत्सीन्न तु मुंचति ॥
अयमेव भये हेतुर्नोत्तरानवबोधनम् ॥ ४२१ ॥
स्वप्नः सुप्तिश्च दृष्टान्तौ परलोकविमोक्षयोः ॥
तावेव मुनिना प्रोक्तौ शिष्टं दार्ष्टांतिकद्वयम् ॥४२२॥

---

गात्मा परिपूर्णः प्रतिज्ञातः स पुनः स यो मनुष्याणामित्यार-
भ्याथैष एवेत्येतदन्तेन प्रतिपादितः । तस्येदानीमेष इत्यादि-
वाक्येनोपसंहारः कृत इत्यर्थः ॥ ४१९ ॥ सोऽहमित्यादेरर्थमाह
*वक्तव्येति ॥ वक्तव्यार्थे सम्यग्ज्ञाने यथोक्तरीत्या निर्द्धारि-
तेऽपि निर्द्धारणात्प्रागिव राजा विद्यानिष्क्रयार्पणपूर्वकं पप्र-
च्छेत्यर्थः ॥ अत्र हेत्यादेरर्थमाह *भीत इति ॥ श्रुतावत्रेति प्र-
कृतवाक्योक्तिः। मेधावीत्याद्यवतारयति *भये हेतुरिति ॥४२०॥
वाक्यं योजयन्तात्पर्यमाह *सर्वेभ्य इति ॥ अरौत्सीदवरोधं
कृतवान् ॥ अत ऊर्ध्वमिति पुनः प्रश्नेन शीघ्रमेव मदीयं ज्ञानसर्व-
स्वमादित्सतीति भीतवान् नतु प्रत्युत्तराज्ञानादित्यर्थः ॥ तथाच
योग्येऽपि पात्रे मुक्तिफलं ज्ञानं सहसा नोपदेष्टव्यमिति भावः
॥४२१॥ ननु वक्तव्यार्थस्य सर्वस्य निर्णीतत्वाद्राज्ञः प्रश्न एवानु-
पपन्नस्तत्राह *स्वप्न इति । द्वयं शिष्टं, वक्तव्यमिति शेषः ॥४२२॥

स्वप्नाज्जागरणं यद्वद्देहाल्लोकांतरं तथा ॥
इत्यभिप्रेत्य मुनिना स्वप्नाद्बोधोऽभिधीयते ॥ ४२३ ॥
श्रुतिः–स वा एष एतस्मिन्स्वप्नांते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतिन्योन्या द्रवति बुद्धान्तायैव ॥ ३४ ॥

तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायꣳ शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥

वा०–शकटं बहुभिर्द्रव्यैर्योजितं गुरुभारतः ॥
कुर्वञ्छब्दान्बहून्याति चेतनेन प्रचोदितम् ॥ ४२४ ॥
शरीरस्थोऽपि लिङ्गात्मा स्वन्वारूढश्चिदात्मना ॥
शब्दान् कुर्वन्हिक्किकादीन् प्रैत्यूर्ध्वश्वासपूर्वकम् ४१५

---

प्रश्नोपपत्तिमुक्त्वा स वा इत्यादिप्रत्युक्तितात्पर्यमाह *स्वप्नादिति ॥ अस्माल्लोकात्परलोकाप्तिं दर्शयितुं दृष्टान्तत्वेन स्वप्नाज्जागरापत्तिः स वा इत्यादिना दर्शितेत्यर्थः ॥ ४२३ ॥ तद्यथा न इत्यादि व्याचष्टे *शकटमिति । अनइत्यस्य व्याख्या–शकटमिति । सुसमाहितमित्यस्य व्याख्याबहुभिरिति । उत्सर्जदित्यस्य व्याख्या–कुर्वदित्यादि । तत्र हेतुः *गुरुभारत इति । यायादित्यत्रार्थसिद्धमर्थमाह *चेतनेनेति ॥ ४२४ ॥ स्वप्नाज्जागरप्राप्तिवद्देहाद्देहान्तरप्राप्तौ दृष्टान्तत्वेनोक्तं तद्यथेत्यादि व्याख्याय एवमेवायमित्यादिदार्ष्टान्तिकवाक्यं व्याचष्टे *शरीरस्थ इति । चिदात्मना परेणानु चिदाभासव्याप्त्यनन्तरं तद्द्वारा आरूढः तदधिष्ठित इत्यर्थः ॥ यत्रैतदूर्ध्वोच्छ्वासीभवतीत्यत्र यस्मिन्काले ऊर्ध्वोच्छ्वासित्वमस्य भवतीत्यर्थः ॥ ४२५ ॥

उपाध्यारोहमन्वात्मा रूढवत्प्रतिभासते ॥
भानोरिवोदपात्रादावारोहो नात्मनः स्वतः ॥ ४२६ ॥
मर्मसूत्कृष्यमाणेषु वायुनोदानरूपिणा ॥
मुमूर्षोरत्र यद्दुःखं स्मर्यतां तन्मुमुक्षुभिः ॥ ४२७ ॥
श्रुतिः–स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाऽऽम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्या द्रवति प्राणायैव ॥ ३६ ॥
वा०–रोगेण जरया वाऽयं देहः कार्श्यं यदाऽऽप्नुयात् ॥
तदाऽऽम्रादिफलं वृन्तादिवाङ्गेभ्यः प्रमुच्यते ॥४२८॥
आश्रयाश्रयिसम्बन्धहेतुरन्नरसो भवेत् ॥
स्थूलसूक्ष्माख्यवपुषोरन्नं दामेत्युदीरणात् ॥ ४२९ ॥

किमित्याभासद्वारा तस्य बुद्धिव्याप्तिः स्वत एव किं न स्यात्तत्राह *उपाधीति ॥ यथोदपात्रादेरुपाधिविशेषस्य भानुना प्रतिबिम्बद्वारा व्याप्तिस्तथा प्राज्ञस्यात्मनश्चिदाभासद्वारैव बुद्धौ व्याप्तिर्न स्वतोऽसंगत्वादित्यर्थः ॥४२६॥ किमिति प्रत्यक्षसिद्धमर्थं श्रुतिरनुवदतीत्याशंक्य वैराग्यार्थमित्याह *मर्मस्विति ॥ ४२७ ॥ स यत्रायमित्यादेरर्थमाह *रोगेणेति ॥ ४२८ ॥

यत्र यस्मिन्कालेऽयं देहो जरयाऽणिमानमणुत्वं न्येति गच्छति उपतपतीत्युपतापः ज्वरादिरोगस्तेन वाऽणिमानं कार्श्यं निगच्छति इति श्रुत्यक्षरार्थः ॥ ३६ ॥

फलं वृन्तादिवेत्युक्तं दृष्टांतं दार्ष्टांतिकेऽप्युपपादयति *आश्रयेति । अन्नरसो देहस्थितिहेतुरित्यत्र शिशुब्राह्मणोक्तं स्मारयति *स्थूलेति ॥ ४२९ ॥ अन्नरसस्य देहद्वयसम्बन्धहेतुत्वे तन्नाशादपि

रसबन्धनशैथिल्ये जरारोगादिहेतुतः ॥
गोलकेभ्यश्चक्षुराद्या मुक्ता वृन्तात्फलं यथा ॥ ४३० ॥
अपक्वमप्याम्रफलं दण्डघातात्पतेत्तथा ॥
दृढकायोऽपि पुरुषो म्रियते शस्त्रघाततः ॥ ४३१ ॥
पक्वमौदुम्बरं बंधशैथिल्येन भवेद्यथा ॥
जरया प्राप्तशैथिल्यं म्रियते स्वयमेव हि ॥ ४३२ ॥
पतेद्वायूपघातेन यथाऽश्वत्थात्फलं तथा ॥
दैवेनाशनिपातेन म्रियते पुरुषः क्वचित् ॥ ४३३ ॥
निर्गत्य हृदयस्थानान्नाडीमार्गेण जागरम् ॥
प्राप्तोऽत्र वैपरीत्येन नाडीमार्गाद्धृदि व्रजेत् ॥४३४॥
जाग्रत्स्वप्नादिसिद्ध्यर्थं गमनागमने पुरा ॥
इदानीं त्वन्यदेहेऽसौ प्राणं धारयितुं व्रजेत् ॥ ४३५ ॥
श्रुतिः—तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्ते ऽयमायात्ययमागच्छतीति ॥

---

तद्वियोगः संभवतीत्याह *रसबंधनशैथिल्य इति ॥ ४३० ॥ तद्यथाऽम्रं वेत्याद्यनेकोदाहरणेन विवक्षितार्थमाह *अपक्वमिति त्रिभिः पिप्पलमित्यस्य व्याख्याऽश्वत्थफलमिति ॥४३१॥४३२॥४३३॥ पुनः प्रतिन्यायमित्यादेरर्थं स्मारयति *निर्गत्येति॥४३४॥प्राणायैवेत्यस्यार्थमाह *जाग्रदिति ॥ यथा जीवदवस्थायां जाग्रद्भोगप्रदकर्मोपरमे स्वप्नं सुप्तिं वा प्राप्तुं नाडीमार्गेण पुनश्च हृदयमागच्छति, एवमेतच्छरीरारंभककर्मक्षये देहांतरे प्राणान्धारयितुं तानुपसंहृत्य नाडीमार्गेण हृदयं गच्छतीत्यर्थः ॥ ४३५ ॥ तद्यथा राजानमित्यादिवाक्यव्याख्यामाशंकामाह *नन्विति ॥ प्राणधारण-

वा०—ननूपादित्सिते देहे भोगाय प्राणधारणम् ॥
भोग्यसंपादने नास्ति शक्तिरस्येति चेच्छृणु ॥४३६॥
तत्कर्मोपार्जितैरन्यैर्भोग्यं संपादयेत्पुरा ॥
इत्येतद्विशदीकर्त्तुं राजदृष्टान्त उच्यते ॥ ४३७ ॥
राज्ञ आगमनात्पूर्वं भृत्या राजप्रचोदिताः ॥
कृत्वाऽन्नपानस्थानानि प्रतीक्षन्ते नृपं तदा ॥ ४३८ ॥
योजनेऽयं समायाति क्रोशाद् द्वारेऽपि चागतः ॥
इत्थं परस्परं प्राहुरुग्राद्या राजमन्त्रिणः ॥ ४३९ ॥
उग्रशब्देन कथ्यन्ते याष्टिका भटभर्त्सकाः ॥
प्रत्येनसः शिक्षकाः स्युश्चौर्यादौ तत्तदेनसि ॥ ४४० ॥
सूता रथप्रेरकाः स्युर्ग्रामण्यो ग्रामचिन्तकाः ॥
राज्ञा जीवितदानेन उग्रादय उपार्जिताः ॥ ४४१ ॥
श्रुतिः-एवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥

---

मित्यत्र कथं भोग्यस्यैवाभावादिति शेषः । तत्र हेतुः *भोग्येति ॥ नास्ति शक्तिः स्थूलदेहविरहादिति भावः ॥ ४३६ ॥ उत्तरवाक्यमुत्तरत्वेनादत्ते *तदिति ॥ ४३७ ॥ दृष्टांतवाक्यं व्याचष्टे *राज्ञ इति ॥ ४३८ ॥ अयमायातीत्यादिद्विरुक्तिप्रयोजनमाह *योजन इति । योजनांतरिते देशे समायाति इदानीं क्रोशांतरिते आगच्छति इत्यादिप्राहुस्तदनुकरोति श्रुतिरिति भावः ॥ ४३९ ॥ उग्रादिशब्दान्विभजते । उग्रेत्यादिना ॥ चौर्यादितत्तत्पापे कृते तच्छिक्षकाः प्रत्येनस इत्यर्थः ॥ ४४० ॥ उग्रादीनां राजप्रतीक्षणे हेतुमाह *राज्ञेति ॥ ४४१ ॥ एवं हेत्यादिदार्ष्टांतिकवाक्यं व्याचष्टे * मुमूर्षुणेति ॥ एवंविदमित्यस्य व्याख्या *एनमिति ॥ प्रस्तुत-

वा०–मुमूर्षुणा भाविदेहबन्धवः कर्मणाऽर्जिताः ॥
एवं पुत्रादिभावाय प्रतीक्षन्तेऽखिलाः सदा ॥४४२॥
ऋतावस्मिन् समायाति ब्रह्म पुत्रादिरूपतः ॥
ऋतावनन्तरे वाऽयमायास्यत्येव सर्वथा ॥ ४४३ ॥
क्षीरं पातुमियं धेनुरियं दोलाऽस्य लालने ॥
इति संपाद्य तद्भोग्यमासते राजभृत्यवत् ॥ ४४४ ॥
अनेन जीवेनेत्यादिप्रवेशस्य विवक्षया ॥
ब्रह्मैव पुत्ररूपेण समायातीत्यभिज्ञगीः ॥ ४४५ ॥
नन्विन्द्रियाणि प्रेतस्य लीयन्ते वपुषा सह ॥
इत्याहुस्तार्किका ब्रह्म निरुपाधि कथं व्रजेत् ॥४४६॥
श्रुति०–तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

इत्युपनिषदि तृतीयं ब्राह्मणं समाप्तम् ।

---

कर्मफलवेत्तारं जीवमिति यावत् ॥ ४४२ ॥ प्रतीक्षंते इत्युक्तमभिनयति *ऋतावित्यादिना ॥४४३॥४४४॥ पुत्रो मे भविष्यतीत्येवं मन्यंते जना नतु ब्रह्म पुत्रेणायातीति तत्कथमुच्यते श्रुत्या इदं ब्रह्म यातीति तत्राह *अनेनेति ॥ वस्तुतो जीवस्य ब्रह्मत्वाद्विवेकिप्रसिद्धिमादाय श्रुतिरेवमुक्तवतीत्यर्थः ॥ ४४५ ॥ उत्तरकंडिकाव्यावर्त्याशंकामाह *नन्विति ॥ ४४६ ॥ शंकोत्तरत्वेन कंडिकामवतारयति *प्राणेति ॥ ४४७ ॥ अक्षराणि योजयति *राजानमिति ॥ ४४८ ॥

इति वार्त्तिकसारटीकायां तृतीयं ब्राह्मणं समाप्तम् ॥

वा०-प्राणोपाधिक एवात्मा गच्छतीति विवक्षया ॥
प्राणानामात्मसामीप्यगतिं वक्ति मृतौ श्रुतिः ॥४४७॥
राजानमायियासन्तमाभिमुख्येन सेवितुम् ॥
आयान्त्युग्रादयस्तद्वत्प्राणानामात्मसङ्गतिः ॥४४८॥
इति वार्त्तिकसारे तृतीयं ब्राह्मणं समाप्तम् ॥
वा०-तृतीयब्राह्मणे प्रोक्ता देहे स्वप्नादिसंसृतिः ।
देहांतरेषु संसारो मुक्तिश्चाथ प्रवक्ष्यते ॥ १ ॥
श्रुतिः-स यत्रायमात्माऽबल्यं न्येत्यसंमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ॥
वा०-स मुमूर्षुर्यदा देहे दौर्बल्यं प्राप्य मूढताम् ॥
प्राप्नोतीव तदा तं वागाद्या आयान्ति देहिनम् ॥२॥
बोधमात्रैकयथात्म्यान्नायं संमोहभाग्यतः ॥
संमूढबुद्धिसाक्षित्वात्संमूढ इव भात्यतः ॥ ३ ॥
उत्क्रांतिकाले प्राणानां गोलकादार्थ्यहेतुका ॥
स्वगोचरेष्वसक्रिया संमोहो ऽस्याविहात्मनः ॥ ४ ॥

---

वृत्तमनूद्य अबल्यब्राह्मणार्थं संगृह्णाति *तृतीयेति ॥ १ ॥ स यत्रेत्यादि व्याचष्टे * स इति ॥ २ ॥

सोऽयं प्रकृतसंसारी यत्र यदा ऽबल्यं दौर्बल्यं नि एत्य प्राप्य संमोहं मूढतां नि एति प्राप्नोतीव अथ तस्मिन्काले एनं जीवं वागादयः सर्वे प्राणा अभितः समायांतीत्यर्थः ॥ २ ॥

संमोहमिवेत्यत्रेवशब्दसूचितमर्थमाह *बोधेति ॥ ३ ॥ अत्र संमोहशब्देन विवक्षितमाह *उत्क्रांतीति ॥ ४ ॥ अथैनमेते प्राणा अभिसमायंतीति पुनरुक्तेर्वैयर्थ्यं परिहरन्स एता

राजदृष्टांततः प्रोक्तां प्राणानामात्मसंगतिम् ॥
अनूद्य तत्प्रकारोऽत्र विस्तरेणाभिधीयते ॥ ५ ॥
तेजोमात्राश्चक्षुराद्याः प्रसृता मत्स्यजालवत् ॥
जागरेऽथ मुमूर्षुस्ताः समादाय हृदि व्रजेत् ॥ ६ ॥
आनखाग्रात्कृत्स्नदेहे व्याप्तवान्बुध्युपाधिकः ॥
हृत्पद्मे तस्य संकोचो हृदये गतिरुच्यते ॥ ७ ॥
तेजोमात्रा गोलकेभ्यस्तदा संकुचिता हृदि ॥
यथा कूर्मस्य संकोचो मत्स्यजालस्य वा यथा ॥ ८ ॥
कर्मप्रयुक्तसंकोचे कर्तृत्वमुपचर्यते ॥
स्वप्नादिगतिकर्तृत्वमात्मन्युक्तं यथा तथा ॥ ९ ॥
मीयंते विषया याभिर्मात्रास्ताश्चक्षुरादयः ॥

---

इत्याद्यादत्ते *राजेति ॥ तत्प्रकारवर्णनार्थत्वादनुवादस्य न वैयर्थ्यमिति भावः ॥ ५ ॥ वाक्यस्थपदानि व्याचष्टे *तेज इति ॥ अन्ववक्रामतीत्यस्य व्याख्या—व्रजेदिति ॥ ६ ॥ जीवस्य हृदयप्रदेशे सर्वदा स्थितस्य मरणावस्थायां कथमागंतुकी गतिरुच्यते तत्राह *आनखाग्रादिति ॥ ७ ॥ निरवयवस्यात्मनः संकोचो वा कथमित्याशंक्योपाधिसंकोचादेव तत्संकोचोक्तिरित्याह *तेज इति ॥ तदा मरणावस्थायां जागरे प्रसृतानां चक्षुरादीनां पुनः संकोचे निदर्शनद्वयमाह *यथेत्यादिना ॥ ८ ॥ एतद्देहारंभककर्मक्षयादेव बुध्यादेः संकोचसंभवात्कथं तत्रात्मनः समभ्याददान इति कर्तृत्वोक्तिरित्याशंक्य पूर्ववदुपचारादेवेत्याह *कर्मेति ॥९॥ तेजोमात्राशब्दस्य चक्षुरादिवाचकत्वमुक्तं व्युत्पादयति * मीयंत इति ॥ मात्राशब्दस्यैव चक्षुराद्यर्थत्वे किमर्थं तर्हि तेजःशब्दइत्याशङ्क्य तेजःशब्दितसत्त्वकार्यत्वं तेषां प्रदर्शयितव्यमिति मत्वा

तेजः सत्त्वगुणस्तस्य कार्यास्ता भासकत्वतः ॥१०॥
गुणोऽप्ययं भौतिकः स्यादात्मभूतातिरेकतः ॥
वेदांते वस्त्वसद्भावात्सांख्यानां तु गुणाः पृथक् ॥११॥
भूतेषु निर्मलो योंऽशस्तेजस्त्वं तस्य दीपवत् ॥
अक्षाणि भौतिकान्येव भौतिकार्थप्रकाशनात् ॥ १२ ॥
अक्षाणामात्मशक्तित्वात्तेजश्चैतन्यमित्यसत् ॥
अविकारात्मनोऽक्षत्वरूपेणोत्पत्त्यसम्भवात् ॥ १३ ॥
पित्ताख्यं तेज उद्दिष्टं तदंशाश्चक्षुरादयः ॥
इत्याहुरायुर्वेदज्ञा भौतिकत्वं तथापि च ॥ १४ ॥

---

तत्कार्यत्वं मात्राणां साधयति * तेज इति ॥ १० ॥ इंद्रियाणां सत्त्वगुणकार्यत्वे सांख्यमतापत्तिरत आह *गुण इति ॥ तस्य वस्तुतो गुणत्वं नास्तीति दर्शयितुमपीत्युक्तम् ॥ आत्मतत्सृष्टभूतभौतिकव्यतिरेकेण नित्यस्य सत्त्वगुणस्यानङ्गीकारात्सांख्यैश्च तदङ्गीकृतेर्न मतसांकर्यमिति भावः ॥ ११ ॥ किं तर्हि तेजःशब्देनात्र विवक्षितं तत्राह * भूतेष्विति ॥ सांख्याभिमतसत्त्वगुणस्याद्वयश्रुतिविरुद्धत्वात्त्रिगुणात्मिकाविद्याकार्येषु भूतेषु सात्त्विकांशोऽत्र तेजःशब्देन विवक्षित इत्यर्थः ॥ तेजःशब्दार्थमुक्त्वेंद्रियाणां तत्कार्यत्वेऽनुमानमाह *दीपवदिति ॥ १२ ॥ केचित्तु सविषयाणां करणानामात्मविकारत्वान्न भौतिकत्वमित्याहुः—तन्मतमनुवदति *अक्षाणामिति ॥ तेजःशब्देन चिदात्मोच्यते, मात्राशब्दिताक्षाणि तच्छक्तयस्तद्विकारा इत्यर्थः ॥ नेन्द्रियाणामात्मविकारत्वं तस्य निर्विकारत्वश्रुतिविरोधादिति *इत्यसदिति ॥ ॥ १३ ॥ तेजोमात्रा इत्यस्यार्थांतरमाह *पित्ताख्यमिति ॥ तत्र प्रमाणमाह * इतीति ॥ १४ ॥ अक्षाणां भौतिकत्वे श्रुतिमप्याह

मनोऽन्नमयमित्यादौ भौतिकत्वं स्फुटं श्रुतम् ॥
प्रत्यक्षागोचरत्वं तु सूक्ष्मत्वात्परमाणुवत् ॥ १५ ॥
ता एतास्तेजसो मात्राः समस्ता अभिमुख्यतः ॥
स्वीकुर्वन्नेव तद्द्वारा हृत्सद्मात्माऽनुसर्पति ॥ १६ ॥
एवशब्दानुशब्दाभ्यां स्वातन्त्र्यगतिवारणम् ॥
लिङ्गोपाधिं विना नास्ति सर्वगस्य स्वतो गतिः ॥१७॥
लिङ्गव्याप्तिर्द्विधा देहे सामान्याच्च विशेषतः ॥
उल्काऽग्निक्षुरदृष्टान्तादुभयं लीयते मृतौ ॥ १८ ॥
सुप्तौ तिष्ठति सामान्यं विशेषस्यैव संहृतिः ॥
सामस्त्यवाची संशब्दस्तद्वैलक्षण्यसिद्धये ॥ १९ ॥
श्रुतिः–स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्त्तते ऽथारूपज्ञो भवति ॥ १ ॥
वा०–अनुगृह्णाति यः पूर्वं चाक्षुषः पुरुषो रविः ॥
भोगार्थमधुना सोऽयं भोगाभावादुपेक्षते ॥ २० ॥
इन्द्रियस्योपसंहारादादित्यस्याप्युपेक्षया ॥

---

*मन इति ॥ नन्वक्षाणां भौतिकत्वे घटादिवदैन्द्रियत्वं स्यात्तत्राह *प्रत्यक्षेति ॥ १५ ॥ वाक्यार्थमुपसंहरति *ता इति ॥ ॥ १६ ॥ हृदयमेवान्ववक्रामतीत्यत्र निपातयोरर्थमाह * एवेति ॥ हृदयमन्वेवावक्रामति उपाधिगमनानन्तरमेवात्मा तत्र गच्छति नतु स्वतंत्रतयेत्यर्थः ॥ १७ ॥ समभ्याददान इत्यत्र समित्युपसर्गस्य सामस्त्यमर्थः इति वक्तुमव्याकृतकांडिकोक्तमर्थं स्मारयति *लिंगेति ॥ ततः किं तत्राह *उभयमिति ॥ १८ ॥ तथापि सामस्त्यशब्देन किं व्यावर्त्यते तत्राह *सुप्ताविति ॥ १९ ॥ स यत्रैष

आत्मा द्रष्टुमसामर्थ्यादरूपज्ञो भवेत्तदा ॥ २१ ॥
अस्मिन्नर्थे सर्वलोकप्रसिद्धिरभिधीयते ॥
एकीभावादयं नैव पश्यतीति जगुर्जनाः ॥ २२ ॥
श्रुतिः-एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुते इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुः ।
वा०-चक्षुर्बुद्धावैक्यमेति रवौ रव्यंश एकताम् ॥
इन्द्रियान्तरतद्देवेष्वयं न्यायोऽत्र योज्यताम् ॥ २३ ॥
श्रुतिः-तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नोऽवाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामंतꣳ सर्वे प्राणा अनूत्क्रामंति ॥
वा०-कृत्स्नप्राणोपसंहारसंयुक्तस्य मुमूर्षतः ॥

---

इत्यादेरर्थमाह *अनुगृह्णातीत्यादिना ॥ २० ॥ २१ ॥
चाक्षुषश्चक्षुषोऽनुग्राहको रविरत्र मरणकाले पराङ् पर्यावर्त्तते उपेक्षते । अथ तस्मिन्काले रूपधीसामग्र्यभावादात्मा अरूपज्ञो भवतीत्यर्थः ॥ १ ॥

एकीभवतीत्याद्यवतारयति *अस्मिन्निति ॥ पुरुषे मुमूर्षति सति देवताकरणच्युतिरेवारूपज्ञत्वेहतुरित्यस्मिन्नर्थ इत्यर्थः ॥ २२ ॥ एकीभवतीत्यस्यार्थमाह *चक्षुरिति ॥ उक्तन्यायं पर्यायान्तरेष्वतिदिशति *इन्द्रियेति ॥ २३ ॥ तस्य हेत्यादेरर्थमाह *कृत्स्नेति ॥ अथ करणोपसंहारानन्तरं हृदयस्य

नाड्यग्रं हृदयस्याथ प्रकर्षेण प्रकाशते ॥ २४ ॥
भाविदेहात्मता याऽस्य प्रत्यक्चैतन्यबिम्बना ॥
वासनैवात्मनः सैषा प्रद्योतवचसोच्यते ॥ २५ ॥
य एष कर्मजो बुद्धेः प्रकाशो जायते मृतौ ॥
स्वकर्मनिर्मितं लोकं तेनात्माऽयं प्रपश्यति ॥ २६ ॥
स्वप्नवत्प्राप्ततद्भावः पश्चाद्देहाद्विनिःसरेत् ॥
गम्यलोकानुसारेण द्वारं स्याच्चक्षुरादिकम् ॥ २७ ॥
चक्षुर्द्वारं सूर्यलोके ब्रह्मलोके शिरस्तथा ॥
लोकान्तरेष्वन्यनाड्या कर्म तत्र नियामकम् ॥ २८ ॥
लिङ्गं तु सर्वतो गच्छन्न क्वचित्प्रतिहन्यते ॥
अतिसूक्ष्मस्वभावत्वात्सूक्ष्मसूची पटे यथा ॥ २९ ॥

---

नाड्यग्रं हृदयसम्बन्धीनाडीमुखमित्यर्थः ॥ २४ ॥ कोऽयं प्रकाशो नाम तत्राह *भावीति ॥ मरणकाले चैतन्यप्रकाश्या अयमहमस्मीति भाविदेहाकारा या वासना अस्य मुमूर्षोर्विज्ञायते, सैषा वासनैव प्रद्योतनशब्देनोच्यत इत्यर्थः ॥ २५ ॥ तादृशप्रकाशस्य फलमाह *य इति ॥ २६ ॥ तेनेत्यादेरर्थमाह *स्वप्नवदिति ॥ यथा स्वप्नेऽसत्यपि व्याघ्रोऽहमिति मन्यते, एवं मुमूर्षुः प्राप्तव्यदेहे अहमिति तादात्म्याभिमानं कुर्वन् पूर्वोक्तप्रकाशेन दर्शितमार्गः स्वशरीरान्निर्गच्छतीत्यर्थः ॥ केन द्वारेणेत्याकाङ्क्षायां चक्षुष्टो वेत्यादत्ते *गम्येति ॥ २७ ॥ उक्तविकल्पस्य व्यवस्थामाह *चक्षुरिति ॥ द्वारभेदेन गमने तत्तल्लोकप्रापकं कर्मैव हेतुरित्याह *कर्मेति ॥ २८ ॥ ननु लिङ्गोपहितस्य देहाद्देहान्तरगमनमनुपपन्नं बहुविधपदार्थप्रतिहतस्य लिङ्गस्य गत्यनुपपत्तेस्तत्राह *लिङ्गमिति ॥ २९ ॥ त-

तमुत्क्रामन्तमात्मानमनु प्राणस्य निर्गमः ॥
निर्गच्छन्तं प्राणमनु प्राणास्ते चक्षुरादयः ॥ ३० ॥
नन्वात्मप्राणवागादेरन्योऽन्यव्यतिमिश्रणात् ॥
क्रमो नात्रेति चेन्मैवं क्रमस्यात्रानपेक्षणात् ॥ ३१ ॥
विवक्षितं प्रयोक्तृत्वमत्रोच्चिक्रमिषाऽऽत्मनः ॥
प्रयोजकः प्राणगतेः प्राणः सोऽन्यप्रयोजकः ॥ ३२ ॥
श्रुतिः–सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥
वा०–देहान्निर्जिगमिषुः प्राणसहितो निर्गतः पुनः ॥
सविज्ञानो भवेत्पूर्वं हृदि प्रद्योतनं यथा ॥ ३३ ॥
पुरा नाडीविशेषेण निर्गन्तुं ज्ञानमीरितम् ॥
गन्तुं लोकविशेषेऽथ पुनर्विज्ञानमीर्यते ॥ ३४ ॥
निर्गत्य नगरद्वाराविशेषाद् बुद्धिपूर्वकम् ॥

---

मित्यादेरर्थमाह *तमिति ॥ प्राणस्य मुख्यस्येति शेषः ॥ ३० ॥ उक्तक्रममाक्षिप्य समाधत्ते *नन्वित्यादिना ॥ ३१ ॥ क्रमस्याविवक्षितत्वे किं तर्ह्यत्र विवक्षितं तत्राह *विवक्षितमिति ॥ तदेव स्पष्टयति *अत्रेति ॥ अस्मिन्लोके आत्मनो या उत्क्रान्तीच्छा सा मुख्यप्राणस्योत्क्रान्तिं प्रयोजयति, स च प्राणो अन्येषां वागादीनामुत्क्रान्तिप्रयोजक इत्यर्थः ॥ ३२ ॥ सविज्ञानो भवतीत्येतद् व्याचष्टे *देहादिति ॥ ३३ ॥ हृदि प्रद्योतनेनैव गमनस्य प्रकाशितत्वात्पुनर्विज्ञानोत्पत्तिकथनं वृथेत्याशङ्क्य तयोः फलभेदमाह *पुरेति ॥ ३४ ॥ उक्तमर्थं दृष्टान्तेन स्पष्टयति *निर्गत्येति ॥ सविज्ञानमेवान्ववक्रामतीति श्रुतेः सविज्ञानं विज्ञानोद्भासितं गन्तव्यलोकं गच्छतीत्य-

ततो गतव्यदेशस्य विशेषश्चिन्त्यते यथा ॥ ३५ ॥
ज्ञानद्वयं कर्मजन्यं पुंसः स्वातन्त्र्यमत्र न ॥
अन्यथा मरणे सर्वो ज्ञात्वाऽऽत्मानं कृती भवेत्॥३६॥
यत एवमतः पुंभिः स्वातन्त्र्यार्थं प्रयत्नतः ॥
योगादिसाधनात्त्यागात्कर्त्तव्यः पुण्यसञ्चयः ॥ ३७ ॥
हेतुर्जाग्रद्वासनाऽस्य स्वप्नारम्भे यथा तथा ॥
जन्मान्तरारम्भहेतुः किं स्यादिति तदुच्यते ॥ ३८ ॥
विद्या सम्पादिता तेन पुरा कर्म च यत्कृतम् ॥
या वासना च तत्सर्वं जन्मभोग्यादिकारणम् ॥३९॥
सम्यक्संशयमिथ्याख्यज्ञानत्रयमुदीर्यते ॥
विद्येति ब्रह्मविद्या तु न ग्राह्या जन्मघातिनी ॥ ४० ॥

---

र्थः ॥ ३५ ॥ विज्ञानप्रकाशितो लोको गन्तव्यश्चेत्पुण्यलोकप्रकाशकं ज्ञानमुत्पाद्य तत्र गन्तुं शक्यत्वात्किं धर्मानुष्ठानक्लेशेनात आह *ज्ञानद्वयमिति । विपक्षे दण्डमाह *अन्यथेति ॥ ३६ ॥ उत्क्रान्तिप्रकरणाभिप्रायमाह *यत इति ॥ यस्मान्मृतिकाले कर्मणा नीयमानस्य स्वातंत्र्याभावात्किञ्चित्संम्पादयितुमशक्यं तस्मात्तत्काले स्वातन्त्र्यसिध्यर्थं स्वस्थावस्थायामप्रमत्तैः सर्वकर्माणि संन्यस्य यमनियमाद्यनुष्ठानपूर्वकं चित्तवृत्तिनिरोधलक्षणयोगाभ्यासेनात्मविचारेण चादरादनन्तपुण्योपचयः कार्य इत्यर्थः ॥ ३७ ॥ तं विद्येत्याद्यवतारयति *हेतुरिति ॥ ३८ ॥ वाक्यतात्पर्यमाह *विद्येति ॥ ३९ ॥ तत्र विद्यापदेन विवक्षितमाह *सम्यगिति ॥ ननु विद्याशब्देन ब्रह्मविद्याऽपि गृह्यतामिति नेत्याह *ब्रह्मेति ॥ अत्र विद्येति बन्धहेतुर्गृह्यते कर्मादिसाहचर्यात, ब्रह्मधीस्तु तद्ध्वंसित्वान्नेह

मनोवाक्कायसाध्यं यच्छास्त्रता यदि वाऽन्यतः ॥
दृष्टादृष्टार्थरूपं तत्सर्वं कर्मेह गृह्यते ॥ ४१ ॥
कर्मणः क्रियमाणस्य संस्कारो यो हृदि स्थितः ॥
तत्फलस्य च भुक्तस्य पूर्वप्रज्ञेति सोच्यते ॥ ४२ ॥
षण्मासशेषप्रोद्भूता भावना याऽस्य देहिनः ॥
मरिष्यतोऽन्यदेहार्था पूर्वप्रज्ञेति तां विदुः ॥ ४३ ॥
पूर्वप्रज्ञा तदुद्भूतविद्यायाः कर्मणस्तथा ॥
ताभ्यां च भावनोद्भूतिरित्यन्योऽन्यस्य हेतुता ॥४४॥
कर्मणो भुज्यमानस्य परिशेषो हि भावना ॥
मूलं च जायमानस्य प्रधानं तेन भावना ॥ ४५ ॥

---

विद्याशब्दमर्हतीत्यर्थः ॥ ४० ॥ अस्मिन्वाक्ये कर्मशब्दार्थमाह *मन इति ॥ ४१ ॥ पूर्वप्रज्ञाशब्दार्थमाह *कर्मण इति ॥ अतःकरणाश्रिता कर्मतत्फलसंस्कारसंज्ञिता पूर्वप्रज्ञेत्यर्थः ॥ ४२ ॥ तस्या एवार्थान्तरमाह *षण्मासेति ॥ मरणात्प्रागेव षण्मासादारभ्यास्य भाविदेहेऽहमस्मीति या वासना तत्सूचनार्था कदाचित्कदाचिदुदेति सा पूर्वप्रज्ञेत्यर्थः ॥ ४३ ॥ पूर्वप्रज्ञाशब्दस्य विद्याकर्मशब्देन समासमकृत्वा पृथक्कथने को हेतुस्तत्राह *पूर्वेति ॥ पूर्वप्रज्ञायाः विद्याकर्मणोश्चान्योऽन्यहेतुहेतुमद्भावात्कार्यकारणकोट्योर्युक्तं द्वैराश्यमिति भावः॥४४॥तस्याः प्रधानत्वाच्च ज्ञानकर्मभ्यां पृथगुक्तिर्युक्तेति मत्वा प्राधान्यं साधयति*कर्मण इति ॥ हि यस्मात्सर्वोऽपि जन्तुर्वासनावशेषमेव कर्मफलं भुंक्ते न तु निःशेषं, यस्माच्च सा कर्मोत्पत्तावपि मूलमतस्तस्याः प्राधान्यमित्यर्थः ॥४५॥ किंच विद्यादीनां त्रयाणां कार्यपर्यालोचनयाऽपि भावनाया एव प्राधान्यमित्याह*देहमिति ॥ देहगतरूपपरिमाणा-

**देहं विद्या परिच्छिंद्याद्दीदृशो देह इत्यथ ॥**
**विकर्तृ कर्म, वोढ्री तु पूर्वप्रज्ञेह पूर्वयोः ॥ ४६ ॥**
**समर्था सैव ते यस्माद्वोढुं ज्ञानकर्मणी ॥**
**नरस्यातः प्रधानत्वात्ताभ्यां सा गृह्यते पृथक् ॥४७॥**
**ननु जीवगतौ वादिविवादो बहुधेष्यते ॥**
**वृक्षाद्वृक्षान्तरं पक्षी यात्येवमिति केचन ॥ ४८ ॥**
**आतिवाहिकदेहेन याति नावा जले यथा ॥**
**प्रभाया इव सङ्कोचविकासावात्मनो गतिः ॥ ४९ ॥**
**सर्वगस्य मनोमात्रं गच्छेद्देहान्तरं प्रति ॥**

---

दिकं विद्याफलम्, अथ-तद्वत्, कर्म विकर्तृ विकारस्यावयवो-पचयस्य हेतुः, वासना तु पूर्वयोर्विद्याकर्मणोर्वोढ्री निर्वाहिका । तथा च तदुत्पत्तिहेतुत्वाच्च तस्यास्तयोर्निर्वाहकत्वेन प्राधान्यं सिध्यतीत्यर्थः ॥ ४६ ॥ वासनाप्राधान्यमुपसंहरन्फलितमाह *समर्थेति ॥ ४७ ॥

एवं पूर्वप्रज्ञाशब्दितया भुक्तफलशेषात्मकवासनया सह विद्याकर्मणी अपूर्वात्मना मृतं नरमन्वारभेते अनुगच्छत इ-त्युक्तम्, इदानीं तृणजलूकावाक्यमवतारयितुं भूमिकामाह *न-न्विति ॥ वादिविवादमेव प्रकटयन्नादौ दिगम्बरमतमाह*वृक्षा-दिति ॥ ४८ ॥ देवतावादिमतमाह *आतिवाहिकेति ॥ देवता येन देहेन विशिष्टं जीवं परलोकं नयति सोऽयमातिवाहिको देह-स्तेनेति यावत् । तत्र दृष्टांतमाह *नावेति ॥

दिगम्बरैकदेशिमतमाह *प्रभाया इति ॥ ४९ ॥

वैशेषिकादिमतमाह *सर्वगस्येति ॥

वृत्त्युद्भवः सर्वगाणामक्षाणां वपुरन्तरे ॥ ५० ॥
इति पञ्च मतानि स्युः श्रुतिस्तु स्वमतं जगौ ॥
श्रुतिः–तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्य-माक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मा-नमुपसꣳहरति ॥ ३ ॥
वा०–जीवस्तृणजलूकेव देहाद्देहान्तरं व्रजेत् ॥ ५१ ॥
जलूका हि तृणाग्रस्था स्वमुखेन तृणान्तरम् ॥
अवलम्ब्य वपुः शिष्टं तत्सर्वत्रोपसंहरेत् ॥ ५२ ॥
लिङ्गोपाधिक आत्माऽपि क्रियाशक्त्युपसंहृतेः ॥
पातयित्वा वपुर्ज्ञानशक्तिं संहरते तथा ॥ ५३ ॥
देहस्थ एव धीवृत्त्या भावयन्वपुरन्तरम् ॥
लिङ्गोपाधिकमात्मानं प्रापयेदन्यदेहकम् ॥ ५४ ॥
ननु देहान्तरारम्भ उपादानं किमात्मनः ॥
एतद्देहारम्भकं यत्तदेवोतान्यदीर्यताम् ॥ ५५ ॥

---

सांख्यमतमाह*वृत्तीति ॥ ५० ॥ सर्वपक्षमुपसंहरति *इतीति । उत्तरवाक्यमादाय सिद्धांतयति*श्रुतिरिति ॥ वाक्यार्थं संक्षिपति *जीवइति ॥ ५१ ॥ दृष्टांतवाक्यं व्याचष्टे*जलूकेति ॥ अन्यमाक्रममित्यस्य व्याख्या–तृणांतरमिति ॥५२॥ दार्ष्टांतिकवाक्यं विभजते *लिङ्गेति ॥ निहत्येत्यस्य व्याख्या–पातयित्वेति । अविद्याङ्गमयित्वेत्येतद् व्याचष्टे *ज्ञानशक्तिमिति ॥ ५३ ॥ अन्यमाक्रममित्यादेरर्थमाह *देहस्थ इति ॥ ५४ ॥ पेशस्कारीवाक्यमवतारयितुं तद्व्यावर्त्यामाशङ्कामाह *नन्विति ॥ किंशब्द-सूचितं विकल्पमाह *एतदिति ॥ ५५ ॥ उत्तरवाक्यमुत्तर-

श्रुतिः–तद्यथा पेशस्कारी पेशसो मात्रामुपादायाऽन्यन्नवतरं कल्याणतरꣳरूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

वा०–सुवर्णकारः स्वर्णांशमादायान्यन्नवं नवम् ॥
तेनैव कुरुते भूय उपमृद्नाति गलतः ॥ ५६ ॥
पूर्वभूषणमालिन्ये भङ्गे चाऽप्यतिनूतनम् ॥
अतिरम्यं च कुरुते तथैवेहापि गम्यताम् ॥ ५७ ॥
देहारम्भकभूतानि यानि पूर्वाणि वेष्टितः ॥
तैर्लिङ्गोपाधिको यातीत्येवं सूत्रकृदब्रवीत् ॥ ५८ ॥
पञ्चीकृतास्तु भूतांशाः स्थूलदेहस्य हेतवः ॥
अल्पत्वेनापि सूक्ष्मास्तैर्लिङ्गं तिष्ठति वेष्टितम् ॥ ५९ ॥

---

त्वेनादत्ते *सुवर्णकार इति ॥ पेशस्कारी पेशसो मात्रामित्यनयोर्व्याख्या–सुवर्णकारः स्वर्णांशमिति ॥ ५६ ॥ क्रियमाणदेहस्य नवत्वेऽपि कथं नवतरत्वं कल्याणतरत्वं चेत्याशङ्क्य दृष्टान्तेनोपपादयति *पूर्वेति ॥ यथाशब्दपर्यायो वा शब्दः ॥ ५७ ॥ मालिन्ये नष्टेऽपि स्वर्णांशस्य सत्त्वान्नातरभूषणकरणमुपपद्यते । प्रकृते त्वेतद्देहारम्भकभूतांशानां नाशात्कथमेतेषां देहान्तरारम्भकत्वमित्याशङ्क्य हेत्वसिद्धिमाह *देहेति । उक्तार्थे तदन्तरप्रतिपत्ताविति सूत्रं प्रमाणयति *एवमिति ॥ ५८ ॥ नन्वपञ्चीकृतानि लिङ्गं परिवेष्ट्य गच्छन्ति पञ्चीकृतानि वा ? नाद्यः तेषां स्थूलदेहानारम्भकत्वात्, नान्त्यः मृतावुपलब्धिप्रसङ्गात्तत्राह *पञ्चीकृता इति ॥ तुरवधारणे ॥ ५९ ॥ एतद्देहस्यापि लिङ्ग-

निर्मितस्तैरयं देहः पोषितः पितृवीर्यतः ॥
मृतौ कंचुकवत्त्याज्यो बाह्यांशो वीर्यनिर्मितः ॥ ६० ॥
सारस्त्वान्तरभूतांशो लिङ्गेन सह गच्छति ॥
निष्पाद्यन्ते भाविदेहास्तेनांशेन पुनः पुनः ॥ ६१ ॥
स्वर्णे विशोधिते तस्य मालिन्यमपनीयते ॥
भूषणं निर्मलांशेन क्रियते हि नवं नवम् ॥ ६२ ॥
पित्र्यगान्धर्ववैराजसूत्राद्या मानुषादयः ॥
उत्तमाधमदेहाः स्युस्तत्तत्कर्मानुसारतः ॥ ६३ ॥
अधिष्ठानारोप्यभागौ तेषु देहेषु यौ स्थितौ ॥
तावुभौ विशदीकर्तुं स वा इत्यादिका श्रुतिः ॥ ६४ ॥
श्रुतिः—स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः ॥
वा०—स इत्यनेन संसारी प्रकृतत्वादिहोच्यते ॥
वैशब्दोऽवधृतौ भेदवारकोऽस्य चिता सह ॥ ६५ ॥
स्वप्रकाशोऽपरोक्षोऽर्थः कथ्यते ऽत्रायमित्यतः ॥

---

वेष्टितसूक्ष्मभूतारब्धत्वे कथमस्योपचयः कथं वा मरणानन्तरमत्राविकलमनुभूयमानत्वं तत्राह *निर्मित इत्यादिना ॥६०॥६१॥ उक्तेऽर्थे पूर्वदृष्टान्तं स्मारयति *स्वर्ण इति ॥ ६२ ॥ पित्र्यं वेत्यादि व्याचष्टे *पित्र्येति । पित्र्यादिशरीरग्रहणस्यैच्छिकत्वं वारयति *तत्तदिति ॥ ६३ ॥ स वा अयमित्याद्यादत्ते *अधिष्ठानेति ॥ ६४ ॥ तत्र तावदधिष्ठानस्वरूपं विशदीकुर्वन्नक्षराणि व्याचष्टे *स इति ॥ अवधारणार्थेन वैशब्देन संसारिणो जडत्वं व्यावर्त्यत इत्याह *वैशब्द इति ॥ ६५ ॥ स वा अयमित्यत्रायंशब्दार्थमाह *स्वेति । आत्मशब्दार्थमाह

देहादयः स्वस्वरूपा येनाभावात्मशब्दभाक् ॥ ६६ ॥
अधिष्ठानस्रजा सर्पदण्डाद्याः स्युः स्वरूपिणः ॥
स्रगभावे तु सर्पाद्या निःस्वरूपाः खपुष्पवत् ॥६७॥
यः संसारि पुरा प्रोक्तः स एवायं स्वतः स्फुरन् ॥
साक्षिचैतन्यरूपत्वादधिष्ठानमनात्मनः ॥ ६८ ॥
अव्यावृत्ताननुगतं वस्तु ब्रह्मगिरोच्यते ॥
ब्रह्मात्मनोस्तु तादात्म्यं सामानाधिकरण्यतः ॥ ६९ ॥
प्रत्यक्त्वं ब्रह्मणस्तत्त्वं ब्रह्मत्वं चात्मनस्तथा ॥
पारोक्ष्यद्वैतहानेन ह्यात्मा ब्रह्मेति बोध्यते ॥ ७० ॥
इति प्रोक्तं वस्तुतत्त्वं तत्रारोपः प्रपञ्च्यते ॥
उक्ततत्त्वापरिज्ञानाद् बुध्युपाधिः प्रजायते ॥ ७१ ॥
तेनोपहित आत्माऽयं विज्ञाताऽस्मीति भावनात् ॥
विज्ञानमयतामेति स्रक्सर्पमयतामिव ॥ ७२ ॥
विज्ञानं ज्ञातृतोपाधिर्मनः संकल्पसाधनम् ॥

---

*देहेति ॥ देहद्वयकल्पनाधिष्ठानं तत्सत्तामदवस्त्वात्मशब्दितमित्यर्थः ॥ ६६ ॥ कल्पितस्याधिष्ठानस्वरूपेणैव स्वरूपत्वमन्वयव्यतिरेकाभ्यां साधयति *अधिष्ठानेति ॥ ६७ ॥ स वा अयमात्मेति पदचतुष्टयार्थं निगमयति *य इति ॥ ६८ ॥ ब्रह्मशब्दार्थमाह *अव्यावृत्तेति ॥ ६९ ॥ कथं तयोस्तादात्म्यं पारोक्ष्यसद्वयत्वाभ्यां विरोधात्तत्राह *प्रत्यक्त्वमिति । विरुद्धभागत्यागादैक्यं सोऽयमित्यत्र प्रसिद्धमिति हिशब्दार्थः ॥ ७० ॥ वृत्तमनूद्यानन्तरवाक्यमादत्ते *इतीति ॥ तत्रात्मनो विज्ञानमयत्वमुपपादयति *उक्तेत्यादिना ॥७१॥७२॥ विज्ञानमयो मनोमय इत्यनयोः पौनरुक्त्यमाशङ्क्य विज्ञानमनसोरर्थभेदमाह *विज्ञान-

इत्येवमादयोऽनेके क्लेशाः स्युर्भावनामयाः ॥
ते सर्वमयशब्देन संक्षेपात्समुदीरिताः ॥ ८३ ॥
तद्यादित्यादिना सर्वशब्दस्यार्थ उदीर्यते ॥
प्रत्यक्षवस्तुन्यध्यासे सतीदंमयता भवेत् ॥ ८४ ॥
परोक्षवस्तुन्यध्यासाददोमय इतीर्यते ॥
आरोपोक्तिसमाप्त्यर्थमितिशब्दः प्रयुज्यते ॥ ८५ ॥
इदंमयत्वं विस्पष्टमैहिकत्वादुपेक्ष्यते ॥
अदोमयत्वं व्याचष्टे यथाकारीतिवाक्यतः ॥ ८६ ॥
यथा करोतीह लोके चरत्यपि यथा तथा ॥
परलोके भवत्येष कर्माचारप्रचोदितः ॥ ८७ ॥
करणं नित्यकर्म स्यात्काम्यं तु चरणं भवेत् ॥
करणं कर्मशक्तिर्वा चरणं प्रत्ययात्मकम् ॥ ८८ ॥
पुण्यकारी भवेत्साधुः पितृदेवादिजन्मभाक् ॥

---

सक्रोधोऽक्रोधः पुण्यवानपुण्योऽस्मीत्यध्यासादात्मा तत्तन्मय इत्यर्थः ॥ ८२ ॥ सर्वमय इत्यस्य तात्पर्यमाह *इतीति ॥ ८३ ॥ सर्वशब्दस्य व्याख्या तद्यदेतादिति पदत्रयमित्याह *तद्यदिति ॥ प्रत्यक्षादिप्रमाणगम्यं वस्तु सर्वशब्दार्थमिति भावः ॥ इदंमयोऽदोमय इत्यनयोरर्थमाह *प्रत्यक्षेति ॥ अहं सुखीत्यादि प्रत्यक्षाध्यासः, धार्मिकोऽहमित्यादि परोक्षाध्यास इत्यर्थः ॥ ८४ ॥ इतीत्यस्यार्थमाह *आरोपेति ॥८५॥ यथेत्याद्यवतारयति *इदमिति ॥ ८६ ॥ अक्षराणि योजयति *यथेति ॥ ८७ ॥ कर्माचारयोर्भेदं व्यनक्ति *करणमिति । सर्वकरणव्यापारशक्तिः करणं, करोतेस्तदर्थत्वात् । सर्वप्रकारज्ञानयोग्यता चरणम्, चरतेर्गत्यर्थत्वात् इत्यर्थान्तरमाह *करणमिति ॥ ८८ ॥ साधुकारीत्यादि

पापकारी स्थावरः स्यात्कामक्रोधादिचोदितः ॥ ८९ ॥
ताच्छील्यप्रत्ययात्कर्माभ्यास एव फलप्रदः ॥
इति चेन्न सकृत्कर्म कृत्वाऽपि फलमाप्नुयात् ॥ ९० ॥
पुण्य इत्यादिवाक्येन तदेतदभिधीयते ॥
कर्मशास्त्रस्य तात्पर्यमित्थं सम्यक् प्रपञ्चितम् ॥९१ ॥
सकृत्कृतौ फलप्राप्तिर्यदाऽभ्यासस्तदा वृथा ॥
इति चेत्फलभूयस्त्वासिद्धयेऽभ्यास इष्यताम् ॥ ९२ ॥
वासना कर्म विद्या च त्रयं जन्मप्रयोजकम् ॥
उक्तं, तत्र प्रधानत्वं कर्मणः श्रूयते पुनः ॥ ९३ ॥
उत्तमाधमदेहाख्यवैषम्यं कर्मणा भवेत् ॥
देहे विद्यावासनाभ्यां भवेद्भोगस्य कौशलम् ॥ ९४ ॥
कर्मसाध्येव कर्त्तव्यमिच्छताऽभ्युदयं चिरम् ॥

---

व्याचष्टे *पुण्येति ॥८९॥ पुण्यः पुण्येनेत्यादिव्यावर्त्यां शङ्कामाह *ताच्छील्येति। यथाकारीत्यादौ ताच्छील्यप्रत्ययोपादानादभ्यस्तकर्मण एव फलहेतुत्वं न सकृत्कृतस्येत्यर्थः ॥ उत्तरवाक्याभिप्रेतं परिहारमाह *नेति॥९०॥उक्तमर्थं श्रुत्या दृढं करोति *पुण्य इति॥ यथाकारीत्यादिवाक्यार्थं निगमयति *कर्मेति ॥९१॥ सकृत्कृतस्य कर्मणः फलहेतुत्वमुक्तमाक्षिप्य समाधत्ते *सकृदिति ॥ ९२ ॥ तं विद्याकर्मणी समन्वारभेते इत्यत्रैव-कर्मणो जन्महेतुत्वोक्तेः पुनः कथनं व्यर्थं तत्राह *वासनेति ॥ यद्यपि वासनादित्रयं जन्महेतुरुक्तं तथापि तत्र कर्मणः प्राधान्यं वक्तुं पुनः कथनमित्यर्थः ॥९३॥ तत्प्राधान्यमुपपादयति *उत्तमेति । किं तर्हि इतरयोः फलं तत्राह *देह इति ॥ ९४ ॥ कर्मणः प्राधान्योक्तेस्तात्पर्यमाह

पापं तु सर्वदा हेयं दुःखेभ्यस्त्रस्यता भृशम् ॥ ९५ ॥
पूर्वकाण्डपरा इत्थं कर्मप्राधान्यमूचिरे ॥
अथ वेदान्तशास्त्रज्ञाः प्राहुः कामप्रधानताम् ॥ ९६ ॥
श्रुतिः–अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते तदभिसम्पद्यते ॥ ४ ॥
वा०–पुमानादौ काममय एव भूत्वाऽथ कर्मकृत् ॥
यतोऽयं कर्मणो हेतुः कर्मोऽतोऽस्य प्रधानता ॥ ९७ ॥
अकामस्य क्रिया काचिद् दृश्यते नेह कस्यचित् ॥
यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ ९८ ॥
इत्येतद्विशदीकर्तुं स यथेत्युत्तरा श्रुतिः ॥
कामः क्रतुः कर्म जन्मेत्येषामेष क्रमो भवेत् ॥ ९९ ॥
पुंसो या विषयापेक्षा स काम इति भण्यते ॥
स एव वर्धमानः सन् क्रतुत्वं प्रतिपद्यते ॥ १०० ॥
रुचेरतिशयः काम्ये विषये क्रतुरीर्यते ॥
पाक्षिकं कर्म कामे स्यात्करोत्येव क्रतौ सति ॥१०१॥
पुण्यपापात्मकं कर्म ह्यपूर्वादृष्टशब्दितम् ॥

---

*कर्मेति ॥ ९५ ॥ वृत्तमनूद्याथो खल्वित्याद्यादत्ते*पूर्वेति ॥९६॥ काममय एवेत्यादि व्याकुर्वन्कामप्राधान्यमाह*पुमानिति ॥९७॥ कामस्य प्रधानत्वे मनुवचनमाह *अकामस्येति ॥ ९८ ॥ स यथेत्यादत्ते* इतीति । वक्ष्यमाणप्रकारेण एतत्कामप्राधान्यं वाक्यतात्पर्यमाह *काम इति ॥९९॥ कामक्रतुकर्मजन्मानि क्रमेण भवंतीत्युक्तं तत्र कामक्रत्वोरभेदमाशङ्क्याह*पुंस इति ॥१००॥ वर्धमान इत्युक्तं व्यनक्ति *रुचेरिति । फलतोऽपि तयोर्भेदमाह

उत्तमाधमजन्मास्य फलं प्रोक्तं पुराऽपि च ॥ १०२ ॥
लोकेऽपि यादृशः कामस्तादृग्भिश्चयवांस्तथा ॥
कर्म कृत्वा फलं गच्छेत्तच्छुभाशुभयोः समम् ॥१०३॥

श्रुतिः-तदेष श्लोको भवति

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ॥
तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नु-
कामयमानः ॥

वा०-कामप्राधान्यदार्ढ्यार्थं मन्त्रस्योदाहृतिः श्रुता ॥
लिंग्यते गम्यते सर्वं मनसाऽतोऽस्य लिङ्गता ॥१०४॥
तन्मनो नितरां सक्तमुत्तमे वाऽधमे फले ॥
सक्तः सन्कर्मणा सार्धं तदेव फलमाप्नुयात् ॥१०५॥
इह जन्मनि यत्किञ्चिच्छुभं कुर्यादुताशुभम् ॥
तदीयफलसंपूर्त्तिः स्वर्गे वाऽन्यत्र वाऽऽप्नुयात्॥१०६॥

---

*पाक्षिकमिति ॥ १०१ ॥ कर्मशब्दार्थमाह *पुण्येति ॥ १०२ ॥ पदार्थमुक्त्वा स यथेत्यारभ्य तदभिसंपद्यते इत्यंतं वाक्यं योजयति*लोक इति॥१०३॥तदेष इत्यादेस्तात्पर्यमाह*कामेति ॥

तत् तत्र उक्तेऽर्थे एष वक्ष्यमाणश्लोको भवतीति श्रुत्यर्थः ॥

लिङ्गशब्दव्युत्पादनपूर्वकं मन्त्रस्य पूर्वार्धं व्याचष्टे *लिंग्यत इत्यादिना॥ १०४ ॥ १०५ ॥

अस्यात्मनः सर्वधीसाधनं मनः यत्र फले निषिक्तं नितरां सक्तमुद्भूताभिलाषं तत्र तदुपहिते आत्मापि सक्तः सन् यत्कर्म करोति तेन कर्मणा सह परलोकं प्राप्य तदेव फलमाप्नोतीत्यर्थः ॥ उत्तरभागं व्याचष्टे *इहेति ॥ १०६ ॥

अथागच्छति तल्लोकाल्लोकेऽस्मिन् कर्मसिद्धये ॥
इत्थं कामाद् बंभ्रमीति संसारे गमनागमैः ॥ १०७ ॥
खेदानुकम्पयोरेष नुशब्दोऽत्र प्रयुज्यते ॥
कष्टेयं कामितैतस्य कामी माभूत्कदाऽप्ययम् ॥१०८॥
नन्वकष्टः शुभे कामः काम एवाशुभे तु न ॥
इति चेन्न यतः कामो दृश्यते राजसे सुखे ॥ १०९ ॥
विषयेन्द्रियसंयोगाद्यत्तदग्रे ऽमृतोपमम् ॥
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ११० ॥
तत्सुखं कामयन्ते हि प्रायेण बहवो जनाः ॥
अन्यथा जारचोरादेः प्रवृत्तिः क्वापि नो भवेत्॥१११॥
अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ॥
अनिच्छन्नपि वार्ष्णेयेत्यपृच्छत्सम्यगर्जुनः ॥ ११२ ॥

---

अयं संसारी इह यत्किञ्च कर्म करोति परलोके तस्य कर्मणोऽन्तं प्राप्य तत्कर्मफलं भुक्त्वेति यावत् ॥ अथ फलभोगानंतरं तस्माल्लोकादस्मै लोकाय देहाय पुनरेति । अयं हि लोकः कर्मप्रधानस्तेनोच्यते। कर्मण इति, पुनः कर्मकरणायेत्यर्थः।

इतिनुशब्दार्थमाह*इत्थमिति। बंभ्रमीति ॥ अतिशयेन भ्रमतीत्यर्थः ॥१०७॥ खेदानुकंपे अभिनयति*कष्टेति ॥१०८॥ कामस्य कथं कष्टत्वं शुभविषयस्य तस्यादेयत्वादशुभविषये कामस्यैवानुदयादिति शङ्कते *नन्विति । अशुभविषयेऽपि कामदृष्टेस्तस्य कष्टत्वोक्तिर्युक्तेति मत्वा परिहरति*नेति ॥१०९॥ राजससुखस्याशुभत्वं वक्तुं तल्लक्षणं गीतावाक्येन दर्शयति*विषयेति ॥११०॥ एवंविधे सुखे कामनैव नोदेतीत्याशंक्यानुभवविरोधान्मैवमित्याह*तदिति ॥१११॥ अशुभविषयेऽपि कामोऽस्तीत्यत्र गीतामपिप्रमाणयति*अथेति ॥ ११२ ॥ ११३ ॥ नन्वेवमपि कामविशेषस्य कष्टता

काम एष क्रोध एष रजोगुणसमुद्भवः ॥
इति प्रवर्तकौ कामक्रोधौ कृष्णस्तदोक्तवान् ॥ ११३ ॥
तर्ह्यस्तु सात्त्विकानन्दे काम इत्यपि मोच्यताम् ॥
सुखस्य सात्त्विकस्यापि साधने क्लेशसत्त्वतः ॥११४॥
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥
तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥११५॥
प्रभूतानन्दयुक्तानां स्वर्गादीनां प्रसाधने ॥
ज्योतिष्टोमादिके दुःखं सर्वैरप्यनुभूयते ॥ ११६ ॥
सर्वथाऽनर्थकृत्कामः संसारे किं बहूक्तितः ॥
इत्यभिप्रेत्य कामेऽस्मिन्नत्यन्तं खिद्यते श्रुतिः ॥११७॥
यः पुरा स्वप्नदृष्टान्तात्परलोको विवक्षितः ॥
इतिन्वित्युपसंहारं तदुक्तेः कृतवान्मुनिः ॥ ११८ ॥
मुक्तिः सुषुप्तिदृष्टान्तान्मुनिना या विवक्षिता ॥

---

वाच्या न काममात्रस्य इत्याशंक्य परिहरति *तर्हीति ॥ *मोच्यतामिति । न च वक्तव्यमित्यर्थः ॥११४॥ सात्त्विकसुखस्यापि साधनक्लेशसद्भावं दर्शयितुं गीतोक्तं लक्षणमाह *यदिति । अग्रे विषमिवेत्युक्त्या साधनक्लेशः स्पष्टीकृत इति भावः ॥ ११५ ॥ अपि च सर्वानुभवसिद्धत्वात्साधनक्लेशस्य नात्र प्रमाणं मृग्यमित्याह *प्रभूतेति ॥ ११६ ॥ नुशब्दार्थमुपसंहरति*सर्वथेति ॥ ११७ ॥ एवं नुशब्दार्थमुक्त्वा इति नु कामयमान इति वाक्यं परलोकास्तित्वोपसंहारपरत्वेन योजयति*य इति ॥ ११८ ॥ अथेत्याद्यवतारयति*मुक्तिरिति ॥ अतिच्छंदादिवाक्येन सुप्तस्थानं प्राप्तस्य यत्कामादिहीनं रूपं मुक्तिस्वरूपविवक्षया दृष्टांतत्वेन वर्णितं

मुनिरारभते वक्तुं तामथेत्यादिवाक्यतः ॥ ११९ ॥
श्रुतिः—अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥ ६ ॥
वा०—पूर्वोक्तकामिवैषम्यमथशब्देन सूच्यते ॥
कामी संसरतीत्युक्तं कामाभावे विमुच्यते ॥ १२० ॥
अतोऽकामयमानः स्यात्कामहेतुनिराकृतेः ॥
कामहेतुश्च संकल्पो व्यासेनैवमुदीरणात् ॥ १२१ ॥
संकल्पहेतुः कामो वै यज्ञाः संकल्पसम्भवाः ॥
काम ! जानामि ते मूलं संकल्पात्किल जायसे ॥१२२॥
असम्यक्त्वेऽपि भोगेषु सम्यक्त्वस्य प्रकल्पनम् ॥
संकल्पस्तेन भोग्या मे भूयासुरिति वाञ्छति ॥१२३॥
यन्मध्ये यच्च पर्यन्ते यदापाते मनोरमम् ॥
सर्वमेवापवित्रं तद्विनाशामेध्यदूषितम् ॥ १२४ ॥

---

तस्य दार्ष्टान्तिकं मोक्षं वक्तुमुत्तरा श्रुतिः प्रवृत्तेत्यर्थः ॥ ११९ ॥ अथाकामयमान इत्यत्राथशब्दसूचितार्थमाह *पूर्वेति ॥ वैषम्यमेव स्फुटयति*कामीति ॥ १२० ॥ उक्तमर्थं हेतूकुर्वन्नकामयमान इत्यत्रापेक्षितं पूरयति*अत इति । विषयसौंदर्यलभ्यस्य कामस्य दुस्त्यजत्वात्कथं तत्त्यागो विधीयते तत्राह*कामहेत्विति ॥ कामस्य स्वतो दुस्त्यजत्वेऽपि हेतुनिराकरणद्वारा त्यक्तुं शक्यता इति भावः ॥ १२१ ॥ व्यासोक्तमेव पठति*संकल्पेति ॥१२२॥ अत्र संकल्पशब्देन विवक्षितं वदन् तस्य कामहेतुत्वमुपपादयति *असम्यक्त्वेति ॥ १२३ ॥ ननु भोग्यानामसम्यक्त्वमेव कुतस्तत्राह *यदीति ॥१२४॥ भोग्यस्यासम्यक्त्वे कथं सर्वेषां तत्र सम्यक्त्वा-

१ अस्यां चौखम्बा–संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु
एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन स्तबके एक एव ग्रन्थो मुद्र्यते ।
२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था
एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।
३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्यो विद्वांस
शोधनादिकार्यकारिणो भवन्ति ।
४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आ
५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १
६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ...


(१) संस्काररत्नमाला । गोपीनाथभट्टकृता २
(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् १२
(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५
(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् (वेदान्तः) २
(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः ... १
(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... २
(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा २
(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानं । सम्पूर्णम् । (वेदान्तः) ६
(९) स्याद्वादमञ्जरी मल्लिषेणानिर्मिता सम्पूर्णा । ... २
(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । १
(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४
(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः (न्यायः) ... ... ... ५
(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् २
(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । (मीमांसा) ... ... ... १६
(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्तः) ... ... २
(१६) मीमांसाबालप्रकाशः । जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २
(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३
(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदा
सप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्त
(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीक
विरचितभाष्यसहितम् ... ...
(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं
(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्द
चितया खण्डनफक्किकाविभजनाख्यया
विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः)
(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ...
(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतर
च सहितम् ... ... ...
(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ।
(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्त
विरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमान
र्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्ति
मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुम
क्रोडपत्राणि ... ... ...
(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचि
न्तजाह्नवीयुतम् ... ... ...
(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवै
जैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया स
हरिभद्रसूरिकृतः ... ... ...
(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्न
(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृत
जागदीशी टीका ... ... ...
(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविर
रिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपक
(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्र
आह्निकप्रकाशः ... ... ...
(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलि
(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृ

*August* *1920.*

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKṚIT WORKS.

NO. 272.

# बृहदारण्यकवार्तिकसारः ।

श्रीमद्विद्यारण्यस्वामिविरचितः ।

महेश्वरतीर्थकृतया लघुसङ्ग्रहाख्यया टीकाया समलङ्कृतः ।
श्रीमच्छुद्धानन्दमुनिवरशिष्य श्रीउत्तमश्लोकयतिविरचित
वेदान्तसूत्र लघुवार्तिकसहित,
पर्वतीयश्रीमन्नित्यानन्दपण्डितप्रदर्शितरीत्या वझे इत्युपनामकेन
भाऊशास्त्रिणा संशोधितः ।

---

BRIHADARANYAKAVARTIKASARA
BY VIDYARANYA SWAMI,
WITH A COMMENTARY CALLED LAGHUSANGRAHA BY
MAHESHWAR TIRTH.
and Vedanta Sutra Lagbu Vartika
by Sri Uttama Sloka Yati,
A pupil of Sri Mat Suddhanand Muni.
EDITED BY
BHAU SHASTRI VAJHE.
FASCICULUS X–१०.

*PUBLISHED & SOLD BY THE SECRETARY'*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHARAMA MUKUNDAJI, BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG:
PROBSTHAIN & CO., BOOKSELLERS, LONDON.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

---

1919
*Price Rupee one.*

॥ श्रीः ॥

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा—संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः—२७२

अतोऽसमीचि सम्यक्त्वभ्रान्तिः स्यादप्रबोधतः ॥
यावन्न सम्यग्ज्ञानेन प्रत्यगात्माऽवबुध्यते ॥ १२५ ॥
प्रतीचि बुद्धे सम्यक्त्वं भोग्येषु विनिवर्त्तते ॥
अथाकामयमानोऽयं भवतीति विवक्षितम् ॥ १२६ ॥
परमानन्दरूपत्वादस्ति सम्यक्त्वमात्मनि ॥
अबोधात्सुखमप्राप्तमिति मत्वा विमुह्यति ॥ १२७ ॥
प्रतिकूलस्य भोग्यस्य यथा स्याद् दुःखहेतुता ॥
तथाऽनुकूलं हेतुः स्यात्सुखस्येत्यस्य विभ्रमः ॥१२८॥
मा भूद्दुःखं ममेत्येवं यथा कामयतेऽनिशम् ॥
सुखं मे स्यादिति तथा नरः कामयतेऽन्धधीः ॥१२९॥
परमानन्दरूपत्वमात्मनश्चेद् विबुध्यते ॥

---

नुभवस्तत्राह*अत इति । यस्मात्सर्वं भोग्यजातं नश्वरत्वादमंगलं तस्मात्तत्र समीचीनत्वभ्रांतिरात्माज्ञानाद्भवेन्न तावता तस्य सम्यक्त्वमिति भावः ॥ १२५ ॥ एवं कामस्य मूलमभिधाय मूलनिवृत्त्या तन्निवृत्तिमाह*प्रतीचीति । अथेत्यादिवाक्यस्यावृत्त्याऽर्थांतरपरत्वमाह*अथेति ॥ सम्यग्ज्ञानेनाज्ञाननिवृत्तिद्वारा भोग्यसम्यक्त्वभ्रमनाशानंतरमयं पुमानकामयमानो भवतीत्यर्थः ॥ १२६ ॥ आत्मविषयसम्यग्ज्ञानाद्भोग्येषु सम्यक्त्वभ्रमो निवर्त्तते इत्युक्तं तत्रात्मधियः कथं सम्यक्त्वमित्याशंक्य स्वगोचरस्य सम्यक्त्वात्तद्धियोऽपि सम्यक्त्वमिति मत्वाऽऽत्मनः सम्यक्त्वं साधयति *परमेति ॥ आत्मनः सुखरूपत्वे तस्य नित्यसिद्धत्वात्सुखं मे स्यादिति कामना न स्यात्तत्राह *अबोधादिति ॥ १२७ ॥ मोहमेव प्रपंचयति*प्रतिकूलस्येत्यादिना ॥१२८॥१२९॥आत्मनः सुखरूपत्वे फलितमाह*परमेति ॥ प्रकृतवाक्यार्थमुपसंहरति*त-

कुतः कामयते भोग्यं ततो बोधादकामता ॥ १३० ॥
बोधलभ्यमकामत्वमथाकामेत्यसूत्रयत् ।
योऽकाम इत्यादिनैतत् सूत्रं विव्रियते स्फुटम् ॥१३१॥
योऽकामस्तस्य न प्राणा उत्क्रामन्तीति योजना ॥
संसृतिः कामिनो यद्वदकामो मुच्यते तथा ॥ १३२ ॥
दृष्टानुश्रविका बाह्याः कामा यस्य न सन्त्यसौ ॥
अकामस्तादृशत्वं तु निष्कामत्वेन सिध्यति ॥१३३॥
विभ्रमापादिताः कामाः प्रत्यक्तत्त्वाविवेकिनः ॥
यस्माद्विनिर्गताः सोऽयं निष्काम इति भण्यते ॥१३४॥
आप्तकामत्वतः सिध्येद्बुद्धेः कामाविनिर्गमः ॥

---

तइति ॥ १३० ॥ अनेन वाक्येन योऽकामइत्याद्युत्तरवाक्यानां पौनरुक्त्यमाशंक्य परिहरति*बोधेति ॥ १३१ ॥ तत्र योऽकाम इत्यस्य साकांक्षतया व्यवहितेन संबंधमाह*य इति । अकामस्यानुत्क्रांतौ को हेतुस्तत्राह*संसृतिरिति ॥ कामाभावे कर्माद्यभावेन मुक्त्यवश्यंभावान्मुक्तस्य च वक्ष्यमाणविधया उत्क्रांत्ययोगादिति भावः ॥ १३२ ॥ अकामशब्दार्थमाह*दृष्टेति ॥ तत्र निष्कामत्वं हेतूकरोति*तादृशत्वमिति ॥ १३३ ॥ निष्कामशब्देन विवक्षितमाह *विभ्रमेति ॥ निर्गताः कामा यस्मादिति व्युत्पत्त्या बुद्धितादात्म्याध्यासादात्मनि प्रतीयमानसर्वकामानां वासनया सह नाशो निष्कामशब्देन विवक्षित इति भावः ॥१३४॥ निष्कामत्वेऽप्याप्तकामत्वं हेतूकरोति*आत्मकामत्वत इति ॥ अत्र कामशब्दः कर्मव्युत्पत्त्याऽऽत्मवचनः। आप्तः कामः आत्मा येन, तस्य भावस्तत्त्वं तस्मादित्यर्थः॥ आत्मप्राप्तिः कामनिवृत्तिहेतु-

अप्राप्तौ काम्यमानस्य कामः क्वापि न निःसरेत् १३५
मिष्टान्नभोजनं मुक्त्वा बुभुक्षा न निवर्त्तते ॥
अतः काम्यप्राप्तिरेव निष्कामत्वस्य कारणम् ॥१३६॥
ननु दोषस्य दृष्ट्याऽपि भवेत्कामविनिर्गमः ॥
श्वाभिरास्वादितं भोज्यं पश्यन्भोक्तुं न वाञ्छति१३७
मैवं, फले साधने च पुंसः कामो द्विधा भवेत् ॥
तत्र साधनदोषेण फलकामो न नश्यति ॥ १३८ ॥
अन्यथा भोज्यदोषेण क्षुन्निवृत्तिः प्रसज्यते ॥
नत्वेवमस्त्यन्यभोज्यं सम्पाद्यापि बुभुक्षते ॥ १३९ ॥
फलं सर्वत्र चानन्दो नत्वसौ क्वापि दुष्यति ॥
तस्मादानन्दकामोऽयमानन्दाप्त्यैव नश्यति ॥१४०॥
एवं सत्याप्तकामत्वं निष्कामत्वस्य साधनम् ॥
काम्याप्तौ त्वात्मकामत्वमेव हेतुर्न चेतरत् ॥ १४१ ॥
सत्यामप्यात्मवाञ्छायां यागभार्यादिना विना ॥

---

त्वं व्यतिरेकेणाह*अप्राप्ताविति॥ १३५ ॥ उक्तं निगमयति*अत इति ॥ ३६ ॥ काम्यप्राप्तिरेवेत्यवधारणमनुपपन्नमिति शंकते*नन्विति ॥ तत्रानुभवं प्रमाणयति*श्वभिरिति ॥ १३७ ॥ कामनाभेदं दर्शयन् तत्र फलकामनानिवृत्तेरात्मप्राप्त्यैकसाध्यत्वान्नावधारणानुपपत्तिरिति परिहरति*मैवमिति ॥१३८॥ प्रसंजनमिष्टमेवेत्याशंक्यानुभवविरोधान्मैवमित्याह*नत्विति॥१३९। *फलमिति॥ फलस्य स्वतो निर्दुष्टत्वादिति भावः ॥ १४० ॥ आत्मप्राप्तिं विना तत्कामनाऽनिवृत्तौ फलितमाह*एवमिति ॥ सर्वकामाप्तावप्यात्मकामत्वं हेतुकरोति*काम्येति ॥ १४१ ॥ नन्वात्मकामनैव काम्याप्तौ हेतुरित्यवधारणमनुपपन्नम्, यागादेरपि काम्यस्वर्गाद्या-

स्वर्गपुत्रादिकामाप्तिर्नेति चेच्छ्रूयतामिदम् ॥१४२॥
किमेकं साधनं सर्वकामानां प्रापकं भवेत् ॥
उतैकस्यैव नाद्योऽत्र युज्यते तददर्शनात् ॥ १४३ ॥
द्वितीये सर्वकामाप्तेरात्मवाञ्छैव कारणम् ॥
सर्वाणि साधनान्येको न संपादयितुं क्षमः ॥ १४४ ॥
यदुक्तमात्मवाञ्छाऽपि न पुत्राद्याप्तिसाधनम् ॥
इत्यत्र कोऽयमात्मा स्यात्सोपाधिर्वाऽनुपाधिकः १४५
सोपाधिकात्माऽऽभासः स्यान्नतु मुख्यः श्रुतीरितः ॥
निरुपाधिः परानन्द आत्मेति श्रुतिसंमतः ॥ १४६ ॥
आनन्दाः सर्वभूतानां तस्मिन्नन्तर्भवन्ति हि ॥
पुत्रादिजन्या आनन्दा अपि तस्मिन्नवास्थिताः ॥१४७॥
तथाविधात्मकामो य आप्तकामो भवेदयम् ॥

---

प्तिहेतुत्वाद्, यागाद्यभावे आत्मेच्छामात्रेण स्वर्गाद्याप्त्यदृष्टेश्चेति शंकते*स्वर्गेति ॥ १४२ ॥ अत्रात्मेच्छायाः सर्वकाम्यप्राप्तिहेतुत्वं विवक्षितम्, आत्मप्राप्तिश्च न साधनांतरसाध्येत्यभिप्रेत्य साधनांतरं विकल्पयति*किमिति । आद्यमनुभवविरोधेन प्रत्याह*नेति ॥ १४३ ॥ द्वितीयेऽस्मदिष्टसिद्धिरित्याह*द्वितीयइति ॥ नन्वेवमप्यवधारणानुपपत्तिरात्मेच्छां विनाऽपि सर्वकाम्यस्य तत्तत्साधनसाध्यत्वसंभवात्तत्राह*सर्वाणीति ॥१४४॥ पूर्वपक्षोक्तदूषणं परिहर्तुमनुवदति*यदिति ॥ आत्मेच्छायाः सर्वानंदप्राप्तिहेतुत्वं वक्तुं विमर्शपूर्वकमात्मस्वरूपं निर्धारयति*अत्र कोऽयमित्यादिना ॥१४५॥१४६॥ तथापि प्रकृते किमायातं तत्राह*आनन्दा इति । एतस्यैवानंदस्येत्यादिश्रुतिप्रसिद्धिद्योतको हिशब्दः ॥ १४७ ॥ निरतिशयानंदात्मकात्मेच्छायास्तत्प्राप्तिहेतुत्वं तत्प्राप्तेश्च कामनिवृत्तिहेतुत्वमुक्त-

आत्मनः प्राप्तरूपत्वात्कोऽन्यः कामोऽस्य शिष्यते १४८॥
प्राप्तत्वादेव कामोऽपि नात्मनीति मतं यदि ॥
नैवमप्राप्तवत्सोऽयमनभिज्ञेन काम्यते ॥ १४९ ॥
कण्ठचामीकरं प्राप्तमप्यज्ञातं तु काम्यते ॥
प्राप्तोऽप्यात्माऽनभिज्ञेन काम्यतां ह्रीयतेऽत्र किम् १५०
यद्यत्यंतमविज्ञातो न काम्यस्तर्हि शास्त्रतः ॥
सामान्यतोऽवबुद्धः सन्काम्यतामनुभूतये ॥ १५१ ॥
स कामः क्रतुमुत्पाद्य कारयेच्छ्रवणादिकम् ॥
फलं त्वनुभवस्तत्र कामात्स्वर्गो यथा तथा ॥१५२॥
य ईदृगात्मकामोऽयं प्राप्तकामो भवेत्ततः ॥
निष्कामत्वादकामः सन्संसारात्प्रविमुच्यते ॥१५३॥
संसारानर्थबीजस्य प्रध्वंसादात्मबोधतः ॥
कामकाम्याद्यसद्भावात्पूर्ण आत्माऽवतिष्ठते ॥ १५४॥

---

मुपसंहरति*तथेति ॥१४८॥ आत्मनो नित्यप्राप्तत्वे कथं तत्कामना ? अप्राप्तविषयविषयत्वात्कामस्येति शंकते*प्राप्तत्वादिति ॥ प्राप्तेऽपि कामो न विरुध्यत इति समाधत्ते *नैवमिति ॥१४९॥ तदेव दृष्टांतेनाह*कंठेति ॥ आत्मनोऽज्ञातत्वे सुतरां तत्र कामना नेति शंकते*यदीति । अत्यंताज्ञानिनस्तदसंभवेऽप्यापातज्ञानिनः सा संभवतीति परिहरति*तर्हीति ॥ १५१ ॥ उत्पन्नस्यापि कामस्य कथमनुभवहेतुत्वम्, अनुभवस्य प्रमाणजन्यत्वादित्याशंक्य परंपरया तस्य हेतुत्वमाह *स इति ॥१५२॥ योऽकाम इत्यादिवाक्यार्थं हेतुहेतुमद्भावेनोक्तमुपसंहरति *य इति ॥ १५३ ॥ कोऽयं संसारमोक्षस्तत्राह *संसारेति ॥ ज्ञानादज्ञानतज्जध्वंसेऽपूर्णताहेत्वभावात्पूर्णरूपेणावस्थानं मुक्तिरित्यर्थः ॥ १५४ ॥ योऽकाम इत्या-

योऽकामस्तस्य न प्राणा इति मोक्षं वदन्मुनिः ॥
जिघृक्षत्याशयं तं शास्त्राचार्यात्मनिश्चयात् ॥१५५॥
उत्पन्नतत्त्वज्ञानस्य प्राणा अज्ञानबाधनात् ॥
नोत्क्रामंति न तिष्ठंति नच नश्यंत्यहेतवः ॥ १५६ ॥
रज्जुसर्पो यथा लोके रज्जुतत्त्वावबोधने ॥
न गच्छति न चाप्यास्ते नच नश्यत्यमी तथा ॥१५७॥
इत्यभिप्रेत्य वाक्यं तु केचिदेतदधीयते ॥
अत्रैव समवेत्यादि तद्वाक्यार्थ उदीर्यते ॥ १५८ ॥
अविद्यातज्जनिर्मुक्तं वस्त्वत्रैवेति भाष्यते ॥
सामित्यैकात्म्यमात्रेण प्राणानां स्थितिरुच्यते ॥१५९॥
अवनीयन्त इत्युक्त्या नाशादिभ्योऽन्यतो गतिः ॥
प्रत्यङ्मात्रैकनिष्ठत्वान्न भावाभावयोः स्थितिः ॥१६०॥

---

दिनाऽकामस्य पुंसः प्राणोत्क्रमणं निषिध्य निश्चयेन मोक्षं वदतो मुनेराशयमाह *य इति ॥ उक्तेऽर्थे सन्दिहानान्प्रति विश्वासार्थं तत्परत्वं गृहीतुमिच्छतीति भावः ॥ १५५ ॥ ननु विदुषः प्राणोत्क्रान्त्यभावे देहेऽप्यनवस्थानादृष्टेस्तत्रैव तेषां ध्वंसो वाच्यः । तथाऽप्यात्मातिरिक्ताभावाभ्युपगमेऽद्वैतहानिरत आह*उत्पन्नेति । अहेतवः–अज्ञाननाशादेव स्थितिगतिनाशहेतुशून्या इत्यर्थः॥१५६। उक्तमर्थं दृष्टान्तेन स्पष्टयति *रज्ज्विति ॥१५७॥ इममेवार्थम् अत्रैव समवनीयन्ते इति माध्यंदिनश्रुत्युपारूढं करोति *इतीति । केचित्–माध्यन्दिनशाखिनः ॥१५८॥ प्रतिज्ञातार्थं विभजते *अविद्येति ॥ १५९ ॥ उपसर्गार्थमुक्त्वा क्रियापदार्थमाह *अवनीयन्त इति ॥ भावाभावव्यतिरेकेण प्राणानामात्ममात्रतया स्थितिरवनयनमित्येतदुपपादयति *प्रत्यगिति ॥ १६० ॥

बंधस्य कल्पितत्वेन तन्मुक्तिरपि कल्पिता ॥
इत्यभिप्रायमाचष्टे ब्रह्मैवेत्यादिवाक्यतः ॥ १६१ ॥
ब्रह्मैव सन्वस्तुतोऽयमब्रह्म स्यादविद्यया ॥
अविद्यायां निवृत्तायां ब्रह्माप्नोतीव विद्यया ॥१६२॥
नान्यदज्ञानतोऽस्तित्वं द्वितीयस्यात्मनो यथा ॥
निवृत्तिस्तद्वदेवास्य नावगत्यात्मनोऽपरा ॥ १६३ ॥
निरस्ताशेषसंभेदं दृष्टिमात्रं निरंजनम् ॥
यो जानाति स आत्मज्ञस्ततोऽन्ये मूढचेतसः ॥१६४॥
न तस्य जीवतः कश्चिद्विशेषोऽस्ति मृतस्य वा ॥
यतः सर्वविशेषाणामविद्यैवात्र कारणम् ॥ १६५ ॥
विद्यामात्रकृता ब्रह्मप्राप्तिर्मुक्तिःश्रुतीरिता ॥

---

माध्यंदिनश्रुतिं व्याख्याय ब्रह्मैव सन्नित्याद्यवतार्य व्याचष्टे *बंधस्येत्यादिना ॥१६१॥१६२॥ अविद्यानिवृत्तेरात्मनोऽन्यत्वमाशङ्क्यासकृदुक्तं स्मारयति *नेति। यथाऽऽत्मातिरेकेण द्वितीयवस्तुनः सद्भावोऽज्ञानान्न भिद्यते एवं तन्निवृत्तिरपि आत्मनो न भिद्यते इत्यर्थः ॥ १६३ ॥ ब्रह्मैव सन्नित्यादिवाक्यादात्मन एव ब्रह्मत्वांगीकृतौ तस्याहंधीगम्यत्वात्सर्वेऽपि ब्रह्मविद एवेति शास्त्रवैयर्थ्यमाशङ्क्याह *निरस्तेति ॥ एवंविधब्रह्मधीः शास्त्रैकलभ्येति न तद्वैयर्थ्यम । अहंधियः आरोपिताहंकारादिविशिष्टब्रह्मविषयत्वेऽपि शुद्धब्रह्मविषयत्वाभावादिति भावः ॥ १६४ ॥ जीवतो न मुक्तिः किन्तु मरणानन्तरमेवेति केचित् तान्प्रत्याह *नेति ॥ सा चाविद्या जीवत एव विदुषोऽपनीता ऽतो मृतस्य मोक्षवादिनो भ्रान्ता इति शेषः ॥ १६५ ॥

इतोऽन्यथा तु ये मोक्षं वदंत्येते निरागमाः ॥ १६६ ॥
विमुक्तिः कर्मकार्या चेदनित्यत्वं प्रसज्यते ॥
अग्न्यौष्ण्यवत्स्वभावश्चेत्तत्र कर्म निरर्थकम्॥ १६७ ॥
अभिव्यक्तिर्विमुक्तिश्चेदभिव्यंग्यं किमत्र ते ॥
अद्वैतश्रुतिबाधः स्याद् द्वैतं चेदभ्युपेयते ॥ १६८ ॥
निगडध्वंसवन्नापि पुंसो मोक्ष इहात्मनि ॥
बंधस्य वास्तवस्येह विद्यया ध्वस्त्यसंभवात् ॥ १६९ ॥
येतु व्याचक्षते मोक्षं नित्यानंदानुभूतये ॥

---

जीवदवस्थायामितरत्र च विदुषो विशेषाभावे कथं ब्रह्माप्येतीत्युच्यते इत्याशङ्क्याविद्यातज्जव्यवधानाभावाभिप्रायेणाप्येतिशब्द औपचारिक इत्युक्तमेव स्मारयति *विद्येति । परस्मादन्यो जीवो ज्ञानकर्मभ्यां ब्रह्माप्येतीति मुख्य एव किं न स्यादित्याशङ्क्य ब्रह्मैव सन् इत्युपक्रमविरोधान्नैवमित्याह *इत इति ॥ १६६ किञ्च त्वदभिमता मुक्तिः किमात्मभिन्ना उत तत्स्वरूपा तत्राद्यं निराह *विमुक्तिरिति ॥ चरमं प्रत्याह *अग्नीति ॥ १६७ ॥ स्वाभाविकमेवात्मनो ब्रह्मत्वं दीपेनेव घटः कर्मणा व्यज्यत इत्याशङ्क्य अभिव्यक्तिरात्मभिन्ना न वा, तत्राद्यमद्वैतश्रुतिविरोधेन दूषयति *अभिव्यक्तिरिति ॥ द्वितीये कर्मवैयर्थ्यमिति भावः ॥ १६८ ॥ अन्येतु न ब्रह्मभावो मोक्षः, येनोक्तदोषः स्यात्किन्तु बन्धध्वंसः, स च ज्ञानकर्मसाध्यः इत्याहुः तान्प्रत्याह *निगडेति । बन्धस्य वास्तवत्वे सत्यस्य ज्ञानान्निवृत्त्यदृष्टेर्विद्यावैयर्थ्यम् । तस्यावास्तवत्वे रज्जुसर्पवत् ज्ञानादेव तन्निवृत्तिसम्भवात्कर्मवैयर्थ्यमिति न समुच्चयसिद्धिरिति भावः ॥ १६९ ॥ वैषयिकसुखज्ञानातिरिक्तयोः ज्ञानसुखयोः परस्परं विषयविष-

ज्ञानाभिव्यक्तिरित्येवं तदप्यत्र न युज्यते ॥ १७० ॥
चिदात्मनो य आनन्दः स्वरूपं चेत्तदा स्वतः ॥
व्यक्त एव पुनस्तस्याभिव्यक्तिः कीदृशी भवेत् ॥१७१॥
अस्वरूपत्वपक्षे तु जन्यानंदो विनश्यति ॥
तस्मादात्माऽऽनन्द एव सर्वदा भासते स्वयम् ॥१७२॥
नन्विदानीं यथा तद्वन्मुक्तौ चेदविशेषतः ॥
नातियत्नो भवेन्नृणां शास्त्रवैयर्थ्यमेवच ॥ १७३ ॥
नैवमात्मन्यविद्याया हानिः कार्या यतस्ततः ॥
तदर्थं यत्नसाफल्यं शास्त्रारंभोऽपि चार्थवान् ॥ १७४ ॥
मुक्तामुक्तस्वरूपोऽयं न विशेषोऽस्ति वस्तुनि ॥

---

यीभूतयोरभिव्यक्तिर्मुक्तिः समुच्चयजन्येति केचित्, तन्मतमनूद्य निराह *ये त्विति ॥ १७० ॥ कथमयोगमित्याशङ्क्य किं ज्ञानानन्दयोरात्मस्वरूपत्वम् उत तद्भिन्नत्वम्। तत्राद्यं निरस्यति *चिदिति ॥ १७१ ॥ चरमेऽपि अभिव्यक्तं सुखं नित्यमनित्यं वा ? तत्रान्त्यं प्रत्याह *अस्वरूपेति ॥ आद्ये आत्मातिरिक्तनित्यवस्त्वभ्युपगमेऽद्वैतश्रुतिबाधप्रसङ्गादस्मन्मतमेव परिशिष्यत इत्याह *तस्मादिति ॥ १७२ ॥ आत्मस्वरूपमेव मुक्तिरित्युक्तममृष्यमाणः शङ्कते *नन्विति। लौकिकं यत्नमतीत्य शास्त्रीयः शमादिः अतियत्नः। शास्त्रं मोक्षविषयम् ॥ १७३ ॥ शास्त्रीयमोक्षस्य निर्विशेषत्वेऽपि स्वाविद्यातज्जध्वंसित्वेन शास्त्रादिकमर्थवदिति परिहरति *नैवमिति ॥ यथाहुः "अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य" इति ॥ १७४ ॥ अथामुक्तस्यात्मनो मुक्तिविशेषार्थं शास्त्रयत्नौ किं न स्यातां तत्राह *मुक्तेति। ततो वस्तुतो विशेषाभावे

तदविद्यैव निःशेषविशेषाणां प्रसूतिकृत् ॥ १७५ ॥
अशेषानर्थहेतुं तामविद्यां शास्त्रजा मतिः ॥
सर्वथा हन्ति तेन स्यात्साफल्यं यत्नशास्त्रयोः ॥ १७६ ॥
अविद्याध्वस्तिमापेक्ष्य सम्यग्धीजन्ममात्रतः ॥
आत्मा ब्रह्मैव सन्साक्षाद्ब्रह्माप्येतीति सुस्थितम्॥१७७॥
इति वेदांतसिद्धांतसर्वस्वं ब्राह्मणोदितम् ॥
अस्यैवार्थस्य दार्ढ्यार्थं मंत्रोदाहरणं भवेत् ॥१७८॥
श्रुतिः—तदेष श्लोको भवति ॥
यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः ॥
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥
वा०—कामिनः सर्वसंसारः पुरा मंत्रेण वर्णितः ॥
अकामस्य विमोक्षोऽत्र तथा मंत्रेण वर्ण्यते ॥ १७९ ॥
पुंसो हृदि श्रिताः कामा मुच्यंते निखिला यदा ॥
तदानीममृतो भूत्वा ब्रह्मात्रैव समश्नुते ॥ १८० ॥
सुषुप्तौ कामनाशेऽपि शिष्यते कामवासना ॥
तद्वन्मा भूदिति प्राह मुक्तौ सर्वविशेषणम् ॥ १८१॥
कामास्तु मनसो धर्मा नात्मनीति विवक्षया ॥

---

हेतुमाह*तदविद्येति ॥ १७५ ॥ शास्त्रयत्नयोरर्थवत्त्वं निगमयति *अशेषेति ॥ १७६ ॥ एवं सति ब्रह्मैव सन्नित्यादिवाक्यं निरवद्यमित्याह *अविद्येति ॥ १७७ ॥ ब्राह्मणार्थमनूद्य तदपीत्याद्युत्तरवाक्यमादत्ते *इतीति ॥ १७८ ॥ यदा सर्वे इत्यादिमन्त्रतात्पर्यमाह *कामिन इति ॥ यथेति शेषः ॥ १७९ ॥ मन्त्राक्षराणि व्याचष्टे *पुंस इति ॥ १८० ॥ यदा सर्वे इत्यत्र सर्वशब्दार्थमाह *सुषुप्ताविति ॥१८१॥ हृदि श्रिता इति विशेषणतात्पर्यमाह

हृदि श्रिता इति प्राह स्वात्मन्येते प्रकल्पिताः ॥१८२॥
अविद्यायाः समुच्छित्तौ तद्धेतूनामशेषतः ॥
कामानामपि नाशः स्याद्देहात्मिग्रहरूपिणाम् ॥१८३॥
काम एव हि संसारहेतुत्वेन पुरा श्रुतः ॥
अतः कामस्य नाशेऽमावमृतो भवति ध्रुवम् ॥१८४॥
अस्मिन्नेव वपुष्येष बोधाद्ब्रह्मत्वमश्नुते ॥
ब्रह्मणो मरणाभावादमृतत्वं व्यवस्थितम् ॥ १८५ ॥
भर्तृप्रपञ्चस्त्वाहात्र मन्त्रव्याख्यानमन्यथा ॥
हृन्निष्ठा आत्मनिष्ठाश्चेत्येवं कामा द्विधा मताः ॥१८६॥
हृदि श्रिताः प्रमुच्यंते नतु प्रज्ञात्मनि श्रिताः

---

*कामा इति ॥ १८२ ॥ कामानां हृदयाश्रयत्वेऽपि कथं विद्यया तन्निवृत्तिस्तस्या अविद्यामात्रानिवर्त्तकत्वात्तत्राह *अविद्याया इति ॥ १८३ ॥ अविद्याध्वस्तौ तत्कार्यान्तःकरणध्वस्तेः तदाश्रितकामानां सविषयाणां ध्वंसेऽपि कार्यान्तरं स्थास्यति, तत्कुतो मुक्तिः, तत्राह *काम इति ॥ पुरा, काममय एवायं पुरुष इत्यादाविति शेषः ॥ कामहेतुकत्वाद्धर्मादेर्विद्यया ध्वस्तौ कर्मापि नश्यति । तथा च प्रतिबन्धभावात्कामनाशानन्तरमेव मुक्तिर्भवतीत्यर्थः ॥ १८४ ॥ अमृतो भवत्यत्र ब्रह्म समश्नुत इत्यनयोः पौनरुक्त्यं परिहरति *अस्मिन्निति ॥ १८५ ॥ निःशेषकामध्वस्तौ विदुषो मुक्तिरित्येवमर्थपरतया मन्त्रः स्वमते व्याख्यातः, इदानीमेकदेशिव्याख्यानं दूषयितुमनुभाषते *भर्तृप्रपञ्च इति ॥ १८६ ॥ आत्मनिष्ठास्तदभिन्नाः कामाः सन्तीत्यत्र श्रुतिमाह *मर्त्येत्यादिना ॥

सत्यकामः सत्यसंकल्प इत्यन्यत्र संश्रवात् ॥ १८७॥
आत्मकामपदेनापि सोऽयमर्थः पुरा श्रुतः ॥
आत्मैव कामा यस्येति विग्रहादात्मनिष्ठता ॥१८८॥
सर्वकामः सर्वगंध इति श्रुत्यंतरं भवेत् ॥
तस्मादनश्वरैः कामैरात्मरूपैः समन्वितम् ॥ १८९ ॥
हृन्निष्ठकामा इत्याद्या प्रसिद्धास्ताद्विमोचने ॥
अमृतो रागहीनः सन्भवेद्विद्याधिकारभाक् ॥ १९० ॥
तथा कर्मसमूहेन छित्वा संसारमात्मनः ॥
संसारबीजराहित्यादत्र ब्रह्म समश्नुते ॥ १९१ ॥
पुरा हृन्निष्ठकामेभ्यः प्रोद्भूता वासनाऽऽत्मनि ॥
महारजनमुख्यैः सा दृष्टांतैः प्रतिपादिता ॥ १९२ ॥
सा बीजं जन्मनस्तस्या उच्छेदो ज्ञानकर्मभिः ॥
मन्त्रव्याख्यानमेत्तु न्यायागमबहिष्कृतम् ॥ १९३ ॥
अस्थूलं नेतिनेतीति यत्तत्त्वमसकृच्छ्रुतम् ॥
कुतस्तस्य सकामत्वं श्रुत्या तस्माद्बहिष्कृतम् ॥ १९४॥

---

॥ १८७ ॥ १८८ ॥ १८९ ॥ एवमात्मनि नित्यकामं प्रसाध्य मन्त्रस्य पूर्वार्द्धतात्पर्यमाह *हृन्निष्ठेति ॥ तृतीयपादं व्याचष्टे *तादिति ॥ अमृतपदव्याख्या–रागहीन इति ॥ १९० ॥ चतुर्थपादाभिप्रायमाह*तथेति ॥ १९१ ॥ किं तत्संसारबीजं तत्राह *पुरेति ॥ मूर्त्तामूर्त्तब्राह्मणे बुद्धिस्थाः कामा आत्मनि पुष्पपुटन्यायेन वासनामुत्पादयन्ति, ताश्च वासना यथा महारजनमित्यादिश्रुतिभिः प्रतिपाद्यंत इत्युक्तम् । ता यदा विद्याकर्मभ्यामुच्छिद्यन्ते तदा परिशुद्ध आत्मा ब्रह्म भवतीत्यर्थः ॥१९२॥ तदेतद् दूषयति *मन्त्रेत्यादिना ॥१९३॥१९४॥ श्रुतिविरोधमुपपाद्य न्यायविरोधम-

काणादजैमिनीयैर्ये त्विच्छाद्या आत्मनो गुणाः ॥
उक्ता ब्रह्मात्मनो नैते किंतु लिङ्गात्मनो हि ते ॥१९५॥
अचिदात्मनि ते प्राहुर्लिङ्गस्याप्यचिदात्मताम् ॥
हृदि स्थिता इति प्राह श्रुतिश्चैतद्विवक्षया ॥ १९६ ॥
यदुक्तं सत्यकामत्वं तत्सोपाधिक आत्मनि ॥
उपास्यत्वेन कथनान्न मुख्यब्रह्मताऽस्य हि ॥ १९७ ॥
व्यावहारिकसत्यत्वमेवोपास्त्यै विवक्षितम् ॥
सर्वकामत्वमप्येवमतो निष्कामताऽऽत्मनः १९८ ॥
नन्वात्मा यदि निष्कामः किमर्थं हृद्विशेषणम् ॥
प्रतिज्ञातार्थसिध्यर्थं हेतूक्तिरिति बुध्यताम् ॥ १९९ ॥

---

ष्याह *काणादेति ॥ १९५ ॥ कणभुगाद्यैर्ब्रह्मात्मधर्मत्वानङ्गीकृतावपि कामादेर्लिङ्गधर्मत्वानङ्गीकारात्कथं तदुक्तन्यायविरोधस्तत्राह *अचिदिति ॥ अहमनुभवे प्रकाशकमानजडधर्माः कामादय इति तैरभ्युपगमाल्लिङ्गस्य च तादृक्त्वादर्थाल्लिङ्गधर्मत्वं तैरप्युक्तमिति भावः । न्यायागमविरोधादेव चिदात्मनि कामा नेति मन्त्रस्यापि तात्पर्यं वक्तुमुचितमित्याह *हृदीति ॥ १९६ ॥ यदुक्तं कामानामात्मधर्मत्वं श्रुतिसिद्धमिति तन्निरस्यति * यदिति ॥ १९७ ॥ असत्यत्वे तस्योपास्यत्वं वा कथं तत्राह*व्यावहारिकेति ॥ १९८ ॥ कामानामात्माश्रयत्वे श्रुत्यभावेऽपि तदर्थापत्त्या तत्सिद्धिं शङ्कते *नन्विति ॥ यथाऽयं सव्येन पश्यतीत्युक्ते दक्षिणेन न पश्यतीत्यर्थाद्गम्यते, तथा हृदि श्रिताः कामा निवर्त्तन्त इति विशेषणादात्माश्रिता नित्यास्ते संतीति श्रुतार्थापत्तिगम्यं तदित्यर्थः ॥ विशेषणमन्यथाऽपि घटत इति दूषयति *प्रतिज्ञातेति ॥१९९॥ प्रतिज्ञाहेतू विशदयति*मुख्यंत इति ॥

मुच्यंत आत्मनः कामा हृन्निष्ठास्ते यतस्ततः ॥
अविद्ययाऽऽरोपिताश्चेद्बाध्यंते विद्यया हि ते ॥२००॥
निवार्यन्ते न चेत्कामा यथोक्ताः प्रत्यगात्मनः ॥
सोऽयं काममयत्वेन संसारित्वान्न मुच्यते ॥ २०१ ॥
आत्मनिष्ठास्तु ये कामा न ते संसारहेतवः ॥
इति चेन्निष्फलाः कामाः कल्प्यंते कुत आत्मनि॥२०२॥
कामादीनामनर्थानां प्रतीचि शतशः श्रुतौ ॥
निषेधकानि वाक्यानि संति निष्कामता ततः ॥२०३॥
कामकाम्यादिभेदेषु आगमापायिवस्तुषु ॥
यः साक्षी नागमापायी स आत्मा श्रुतिसंमतः ॥२०४॥

---

ब्रह्मज्ञानादात्मनि सर्वकामा निवर्त्तन्ते इति प्रतिज्ञायामविद्योत्थ-हृन्निष्ठा यस्मादमी अतोऽविद्ययाऽऽत्मन्यारोपितास्तन्निवृत्तौ निव-र्त्तंते इति प्रतिज्ञातार्थं साधयितुं हृदीति विशेषणमर्थवदित्यर्थः । अविद्यस्य विद्याबाध्यत्वप्रसिद्धिद्योतको हिशब्दः ॥ २०० ॥ किञ्चात्मनिष्ठाः कामाः संसारहेतवो न वा । आद्ये तदनिवारणे दोषमाह *निवार्यन्ते इति ॥ कामसत्त्वे कर्मावश्यंभावान्न मुक्ति-सम्भव इति भावः ॥ २०१ ॥ द्वितीयमनूद्य प्रत्याह *आत्मे-ति ॥ २०२ ॥ न केवलं वैफल्यादात्मनि कामासम्बन्धः किन्तु मानविरोधाच्चेत्याह *कामादीनामिति ॥ अस्थूलादिवाक्यैश्चि-न्मात्रव्यतिरिक्तसर्वधर्मनिषेधादात्मनि कामासम्बन्धे फलितमाह *निष्कामेति ॥ २०३ ॥ अहमिच्छामीत्याद्यनुभवस्य तर्हि का गतिरित्याशङ्क्य सोपाधिकस्य कामादिसम्बन्धित्वेऽपि निरुपा-धिकस्य न तत्सम्बन्ध इत्यभिप्रेत्य तत्स्वरूपमाह *कामेति ॥ २०४ ॥ यदुक्तं हृन्निष्ठेभ्यः कामेभ्यः पुष्पपुटिकान्यायेन समु-

कामा आत्मनि माभूवन्हृद्यश्रिष्ठास्तु स्थिता इति ॥
यदुक्तं तदसद्यस्माद्वास्य आत्मा न केनचित् ॥२०५॥
वास्येऽर्थे वासनाः सर्वाः सजातीये च नास्ततः ॥
निःसंगे भिन्नजातीये कुतः स्युः प्रत्यगात्मनि ॥२०६॥
आत्माश्रयत्वं कामानां न युक्त्या नापि शास्त्रतः ॥
भर्तृप्रपञ्चव्याख्यानमपव्याख्येत्युपेक्ष्यताम् ॥ २०७ ॥
ननु ब्रह्माश्नुतेऽत्रेति जीवतो मुक्तिरीरिता ॥
जीवंश्चेत्को विशेषोऽस्य बंधमुक्त्याविर्तार्यताम् ॥२०८॥
श्रुतिः-तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेद ँशरीर ँशेते ॥
वा०-अभिमानः पूर्वमासीद्देहादावधुना तथा ॥
नास्तीत्यत्रापि विस्पष्टः सर्पदृष्टांत उच्यते ॥ २०९ ॥
अहिनिर्ल्वयनी सर्पनिर्मोको जीववर्जितः ॥

---

दुभूताः कामवासनाः संसारबीजभूता आत्मनि तिष्ठंतीति तदनूद्य निराचष्टे *कामा इति ॥ २०५ ॥ अवास्यत्वेऽप्यात्मनो वासनाश्रयत्वमाशङ्क्य विरोधान्नैवमित्याह *वास्येऽर्थे इति ॥ वासनाश्रययोग्य इत्यर्थः ॥ अस्तु तर्ह्यात्मनो वास्यत्वं तत्राह *सजातीयेति । कामाद्याश्रयेण हृदयेनात्मनोऽपि यत्किञ्चित्साजात्यं स्यादिति नेत्याह *निःसङ्ग इति ॥ २०६ ॥ परमतनिराकरणमुपसंहरति *आत्मेति ॥ २०७ ॥ तद्यथेत्याद्यवतारयितुं वृत्तानुवादपूर्वकमाकाङ्क्षामुद्भावयति *नन्विति ॥ २०८ ॥ तदुत्तरत्वेनोत्तरवाक्यमादत्ते *अभिमान इति ॥ २०९ ॥ तत्र दृष्टान्तभागं व्याचष्टे *अहिनिर्ल्वयनीति । अस्य व्याख्या

वल्मीके पतितस्तिष्ठत्तं सर्पो नाभिमन्यते ॥ २१० ॥
एवं स्थूलं च सूक्ष्मं च शरीरं साक्षितः पृथक् ॥
भांतं तादात्म्यविभ्रांतिरहितं व्यवतिष्ठते ॥ २११ ॥

श्रुतिः–अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ७

वा०–यस्माद्वपुः पृथग्भूतं तस्मात्साक्ष्यशरीरकः ॥
संबंधे सशरीरत्वं स च बोधेन बाधितः ॥ २१२ ॥
स्रगज्ञानमनादाय न हि योगः स्रजो यथा ॥
प्रतीचो देहसंबंधो नात्माज्ञानमृते तथा ॥ २१३ ॥
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ॥
नेतिनेति स्वरूपत्वादशरीरो भवत्ययम् ॥ २१४ ॥
स्वतोऽदिग्देशकालादेः प्रत्यक्चिन्मात्रवस्तुनः ॥

---

सर्पनिर्मोक इति । सर्पत्वागित्यर्थः ॥ २१० ॥ एवमेवेत्या-दिदार्ष्टान्तिकभागं व्याचष्टे *एवमिति ॥ २११ ॥ अथायमशरीर इत्यत्राथशब्दस्य हेत्वर्थतां वदन्वाक्यं योजयति *यस्मादिति ॥ ननु शरीरे वर्तमानस्य कथमशरीरत्वं तत्राह *सम्बन्ध इति ॥ यथा गृहे वर्तमानस्यापि तत्र ममत्वाभिमानहीनस्य न गृहीत्वव्य-पदेशः, एवमज्ञदृष्ट्या देहनिष्ठस्यापि तत्संबंधहेतोरज्ञानस्यापनी-तत्वादशरीरत्वव्यपदेशो युक्त इति भावः ॥ २१२ ॥ अज्ञानं न देहसम्बन्धहेतुः स्वाभाविकत्वादात्मनः तत्संगतेरित्याशङ्क्यात्मनो-ऽसङ्गत्वश्रुतेर्मैवमिति मत्वाऽऽह *स्रगिति ॥ २१३ ॥ देहसम्ब-न्धस्याविद्यत्वे फलितमाह *प्रत्यगिति ॥ २१४ ॥ तस्याविद्य-त्वमुपपादयति *स्वत इति ॥ *अदिग्देशकालादेरिति । दिग्देश-कालादिसम्बन्धशून्यस्येत्यर्थः ॥ अन्यथाऽसङ्गत्वश्रुतिव्याकोपः

देशादिमच्छरीरेण न संबंधस्तमो विना ॥ २१५ ॥
कल्पितेनाभिसंबंधो न त्वकल्पितवस्तुनः ॥
अज्ञानकाले ऽप्यस्तीह किमुताज्ञाननिह्नुतौ ॥२१६॥
स्थूलदेहं परित्यज्य लिंगदेहयुतो यदि ॥
मृतस्तदा स्यान्न त्वेवममृतो ऽसावतो भवेत् ॥२१७॥
प्रकृष्टचेष्टाहेतुत्वात्साक्ष्युक्तः प्राणशब्दितः ॥
को ह्येवान्यादिति प्रोक्तं चेष्टाहेतुत्वमात्मनः ॥२१८ ॥
साक्षिणो ब्रह्मरूपत्वं ब्रह्मैवेत्यभिधीयते ॥
संसर्गशंकानुत्यर्थमेवकारः प्रयुज्यते ॥ २१९ ॥
संयोगः समवायो वा नैव ब्रह्मात्मनोरिह ॥
अखंडैकरसत्वं तु भवतीति विवक्षितम् ॥ २२० ॥
तदेव विशदीकर्तुं तेज एवेत्युदीर्यते ॥
चैतन्यं तेज इत्युक्तं तच्चैकमुभयोरपि ॥ २२१ ॥

---

स्यादिति भावः ॥२१५॥ विदुषो देहयोगो नेत्युक्तं कैमुतिकन्यायेन साधयति *कल्पितेनेति ॥ २१६ ॥ एवं विदुषोऽशरीरत्वं प्रसाध्यामृतपदं व्याचष्टे *स्थूलेति ॥ तथाचाशरीरामृतपदाभ्यां विदुषः स्थूलसूक्ष्मदेहद्वयसम्बन्धः क्रमेण निषिध्यत इति भावः ॥२१७॥ प्राणशब्दार्थमाह *प्रकृष्टेति ॥ हेत्वासिद्धिमाशङ्क्याह *क इति ॥ २१८ ॥ ब्रह्मैवेतिपदयोरर्थमाह *साक्षिण इति ॥२१९॥ एवकारार्थमेव विवृणोति *संयोग इति ॥२२०॥ एवकारेणैव ब्रह्मणोऽखण्डैकरसत्वं विवक्षितं चेदेतावतैवालं किं तेज एवेति वाक्यशेषेण तत्राह *तदिति ॥ तत्र तेजःशब्दार्थमाह *चैतन्यमिति ॥ २२१ ॥ उभयोर्जीवपरयोस्तेज एवे-

अविद्यादिनिवृत्तिश्च चैतन्यव्यतिरेकतः ॥
नास्तीत्येवमभिप्राय एवकारेण सूच्यते ॥ २२२ ॥
कृतं चिकीर्षितं सर्वं बुद्धं यच्च बुभुत्सितम् ॥
आप्तं बोधात्तथाऽऽप्तव्यं वर्जनीयं च वर्जितम् ॥२२३॥
कामप्रश्नः समाप्तोऽतो निराकांक्षो ऽभवन्नृपः ॥
सोऽहं सहस्रमित्याह स्वाभिप्रायं प्रबोधयन् ॥२२४॥
पुमर्थस्य समाप्तत्वाद्विमोक्षायेति नोक्तवान् ॥
शुश्रूषाया असंपूर्तेः सर्वस्वं च न दत्तवान् ॥ २२५॥
तत्त्वविद्यारसाकृष्टः श्रोतुं वांच्छति संग्रहात् ॥
साधनान्यपि विद्यायाः श्रोतुमिच्छति भूपतिः ॥२२६॥

---

त्यवधारणप्रयोजनमाह *अविद्येति ॥ २२२ ॥ संसारिणः सकाशाज्जीवन्मुक्तस्य महद्वैलक्षण्यमुपपाद्याथेत्यादिश्रुतितात्पर्यमुपसंहरति *कृतमिति ॥ २२३ ॥ सोऽहमित्यादेस्तात्पर्यमाह *कामेति ॥ कामप्रश्नो मोक्षार्थो मुनिना राज्ञे वरो दत्तः, तत्समाप्तिपरामर्शोऽतःशब्दार्थः । स्वाभिप्रायम्—स्वस्य कृतकृत्यताम् ॥ २२४ ॥ तत्र लिङ्गमाह *पुमर्थस्येति ॥ अकृतकृत्यत्वे पूर्ववद्विमोक्षाय ब्रूहीति पृच्छेदित्यर्थः ॥ कृतकृत्यश्चेत्तर्हि सर्वस्वदानं कार्यं न सहस्रदानम् । सा हि गुरोरतिप्रीतिकरेति तत्राह *शुश्रूषाया इति ॥ २२५ ॥ श्रुतात्मतत्त्वस्य श्रोतव्यान्तराभावात्कथमन्यत्र श्रवणेच्छाऽवशेषः तत्राह *तत्त्वेति ॥ ज्ञातस्यैव तत्त्वस्य पुनः श्रवणे प्रीतिर्भवतीति तदर्थं श्लोकैः संगृह्य श्रोतुमिच्छतीत्यर्थः ॥ सर्वस्वानिवेदने निमित्तान्तरमाह *साधनानीति ॥ संन्यासादीनि इति शेषः ॥ २२६ ॥ ननु मुक्तस्य तदपेक्षा

मुक्तस्य च मुमुक्षोश्च सर्वत्यागो ह्यपेक्षितः ॥
फलत्वसाधनत्वाभ्यां तस्य द्वैरूप्यसंभवात् ॥२२७॥
प्रागात्मज्ञानसंभूतेः संन्यासो ज्ञानसाधनम् ॥
उत्पन्नात्मधियः पश्चात्फलरूपेण तिष्ठति ॥ २२८ ॥
श्रुतिः–तदेते श्लोका भवंति ॥
अणुः पंथा विततः पुराणो मांस्पृष्टोऽनुवित्तो मयैव तेन धीरा अपियंति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥ ८ ॥
वा०–एतत्सर्वं विवक्षुः सन्मुनिः संग्रहरूपिणः ॥
श्लोकानुदाहरत्तत्र ज्ञानमार्गमिमं जगौ ॥ २२९ ॥
पंथा स्थूलादिनिःशेषविकल्पादिक्रमादणुः ॥
अनंतात्मैकमेयत्वाद्बोधोऽयं विततो भवेत् ॥ २३० ॥

---

अयुक्ता कृतकृत्यत्वात्। मुमुक्षुः खलु साधनमपेक्षते तत्राह *मुक्तस्येति । फले लब्धे कथं साधनापेक्षेत्याशङ्क्य विद्वत्संन्यासः साधनात्मकसंन्यासादन्य एवेति मत्वा तस्य द्विरूपतामाह *फलत्वेति ॥ २२७ ॥ द्वैरूप्यं स्पष्टयति *प्रागिति । तथा च मुक्तेनाप्यशेषक्लेशोपशमात्मकः फलरूपसंन्यासोऽपेक्षित इति भावः ॥ २२८ ॥ सर्वस्वदानप्राप्तावपि राज्ञः सहस्रदाने निमित्तमुक्त्वा तामित्यादेस्तात्पर्यमाह *एतदिति ॥ संघट्टनात्पर्यमुक्त्वाऽणुरित्यादिप्रथमश्लोकमादत्ते *तत्रेति ॥ २२९ ॥ श्लोकाक्षराणि विभजते *पन्था इत्यादिना ॥ पन्था इत्यनेन मोक्षमार्गो ब्रह्मबोध उच्यते, तस्याणुत्वं विततत्वं च विषयकृतं पुराणत्वं हेतूकृतमित्यर्थः ।

श्रुतौ मांस्पृष्ट इत्यत्र ह्रस्वश्छांदसः मांस्पृष्ट इत्यर्थः २३०

अनुत्पन्नागमोत्थत्वात्पुराणश्चेति कथ्यते ॥
ब्रह्मणः स्वस्वरूपत्वान्माऽस्पृष्ट इति भाषते ॥२३१॥
शास्त्राचार्योक्तितः पश्चादनुवित्तो मयैव सः ॥
ज्ञातव्याद्ब्रह्मणो नाऽन्यो ज्ञाताऽस्तीत्यवधारणम् २३२
तेनानेन पथा धीराः प्रत्यग्ध्वांतच्छिदा सदा ॥
ब्रह्मापियंति विद्वांस प्राप्तमेव तमोह्नुतेः ॥ २३३ ॥
आत्मैव ब्रह्मणोऽप्यात्मा ब्रह्मैव स्यात्स्वतस्ततः ॥
तद्याथात्म्यापरिज्ञानात्तद्विपर्ययधीरयम् ॥ २३४ ॥
निःशेषमिथ्याविज्ञानहेत्वविद्याविनाशकृत् ॥
नान्योऽस्ति ब्रह्मणो ज्ञानात्प्राप्तमेवाप्यंते ततः॥२३५॥
परमानन्द एवात्र स्वर्गशब्देन भण्यते ॥

---

ननु माऽस्पृष्ट इत्यप्याश्लिष्टं ब्रह्मज्ञानं हि ब्रह्म स्पृशति न प्रत्यञ्चमिति तत्राह *ब्रह्मण इति ॥ २३१ ॥ तथापि कथमनुवित्तो मयैवेत्युच्यते, नहि लब्धस्यैव वेदनमर्थवत्तत्राह *शास्त्रेति। कुतोऽवध्रियते, ब्रह्मवेदनस्य ब्रह्मणापि लब्धत्वात्, तत्राह *ज्ञातव्यादिति ॥ ब्रह्म ज्ञेयं ब्रह्म विज्ञाता तयोरभेदादवधारणमित्यर्थः ॥ २३२ ॥ तेन धीरा इत्यादेरर्थमाह *तेनेति। ब्रह्मप्राप्तेरागंतुकत्वं परिहरति *प्राप्तमिति ॥ २३३ ॥ प्राप्तस्यैवाज्ञानध्वस्त्या न प्राप्तिः ब्रह्मात्मनोर्भेददृष्टेस्तत्राह *आत्मेति ॥ तत्त्वमादिश्रुत्या तयोरैक्ये सिद्धे भेदधीर्भ्रम इत्यर्थः ॥ २३४ ॥ नन्वेवमपि तेन धीरा अपियन्तीति ज्ञानस्यैव कथं तत्प्राप्तिहेतुत्वमुक्तं तत्राह *निःशेषेति ॥ लोके ज्ञानाज्ञानयोरेव विरोधदृष्टेरिति भावः। जीवपरयोस्तमोमात्रव्यवधाने फलितमाह *प्राप्तमिति ॥ २३५ ॥ स्वर्गं लोकमित्यत्र स्वर्गशब्दार्थमाह *प-

मोक्षप्रकरणान्नित्यं क्रियार्थोऽतो न गृह्यते ॥ २३६ ॥
स्वप्रकाशतया लोकशब्देनापि स उच्यते ॥
ब्रह्मस्वभावमानंदं तद्विदो यांति तादृशम् ॥ २३७ ॥
इत उक्तात्मसंबोधान्मोहोच्छित्तेरनंतरम् ॥
स्वत एव यतो मुक्तो मुच्यतेऽतस्तमोह्नुतौ ॥२३८॥
मुक्तौ तमोऽतिरेकेण नांतरायोऽन्य इष्यते ॥
यतोऽतो ज्ञानविध्वस्तौ मुक्तः सन्नेव मुच्यते ॥२३९॥
देहपातव्यपेक्षाऽतो न स्यादूर्ध्वश्रुतेरिह ॥
ज्ञानेनाज्ञाननाशाख्ये मोक्षेऽन्यत्किमपेक्ष्यते ॥२४०॥

---

रमेति । स्वर्गशब्दस्य क्रियाजन्यसुखविशेषवाचित्वात्स्वरूपसुखस्यापि तदभिधेयत्वेऽनित्यत्वं स्यादत आह *मोक्षेति ॥ ननु लोकशब्दसन्निधानात्स्वर्गशब्देन यागादिफलभूतभोगभूमिरेव गृह्यतामिति नेत्याह *क्रियार्थेति । मोक्षप्रकरणपरामर्शार्थोऽतःशब्दः ॥ २३६ ॥ का तर्हि लोकशब्दस्य गतिस्तत्राह *स्वेति ॥ स इति नित्यानंदः परामृश्यते । पदद्वयस्यार्थमुपसंहरति *ब्रह्मेति । तादृशं प्रकाशात्मकम् ॥ २३७ ॥ इत इत्यादेरर्थमाह*इत इति ॥ ऊर्ध्वमित्यस्य व्याख्या मोहोच्छित्तेरनंतरमिति ॥ २३८ ॥ वस्तुतो मुक्त एव सन् ज्ञानान्मुच्यत इत्युक्तमेवोपपादयति*मुक्ताविति ॥२३९॥ ननु न ज्ञानसमानकालीना मुक्तिः, किंतु देहपातानंतरमिति ऊर्ध्वश्रुत्या निश्चीयते तत्राह*देहेति ॥ यस्माद्ब्रह्मैव सन्नित्याद्यनन्यथासिद्धश्रुत्या मुक्तस्यैव ज्ञानान्मुक्तिर्निश्चिता, तस्मादूर्ध्वश्रुतिरस्मदुक्तरीत्या मोहोच्छित्त्यानंतर्यपरेति भावः । मुक्तेर्देहपातानपेक्षत्वेऽपि ज्ञानातिरिक्तसाधनांतरापेक्षामाशंक्याह *ज्ञानेनेति ॥ न ह्युत्पन्नः आलोकस्तमोनिवृत्तावन्यदपेक्षत इति

श्लोकेनाद्येन यः पंथा प्रोक्तस्तस्मान्मतांतरम् ॥
उपन्यस्याथ सिद्धांतं प्राह श्लोकांतरेण सः ॥२४१॥
मोक्षमार्गे यथोक्तेऽस्मिन्नविद्योपप्लुताशयाः ॥
दर्शनानि विचित्राणि कल्पयंति यथारुचि ॥ २४२ ॥
श्रुतिः–तस्मिञ्छुक्लमुत नीलमाहुः पिंगलꣳ हरितं लोहितं च ॥
वा०–शुक्लं ब्रह्मातिसंशुद्धमिति केचित्प्रचक्षते ॥
शरदि व्योमवन्नीलमित्याहुरपरे जनाः ॥ २४३ ॥
पिङ्गलं तत्परं ब्रह्म ज्वालेवेत्यपरे जगुः ॥
वैडूर्यवत्तु हरितं केचिदाहुर्विपश्चितः ॥ २४४ ॥
अपरे लोहितं प्राहुर्जपाकुसुमसन्निभम् ॥
नाडीरूपाणि वीक्ष्यात्मरूपाणीति भ्रमो ह्ययम्॥२४५॥
एकमेवैकरूपं यत्तत्त्वं ज्ञातं निरंजनम् ॥

---

भावः ॥२४०॥ द्वितीयश्लोकमवतारयति*श्लोकेनेति ॥ उक्तज्ञानमार्गे द्वितीयश्लोकपूर्वार्द्धेन वादिविप्रतिपत्तीरुपन्यस्यानंतरमुत्तरार्द्धेन सिद्धांतं मुनिराहेत्यर्थः ॥२४१॥ तत्र पूर्वार्द्धस्य तात्पर्यमाह *मोक्षेति ॥ विचित्रानेकदृष्टिकल्पनाहेतुमाह *अविद्येति । तत्रेव हेत्वंतरमाह *यथेति ॥२४२ ॥ कल्प्यमानदर्शनान्येव दर्शयति *शुक्लमित्यादिना ॥ २४३ ॥ २४४॥ एवमनुभूयते चेद्ब्रह्म तर्हि नानारूपत्वं वाऽस्तु तत्राह *नाडीति ॥२४५॥ उक्तप्रत्ययानां वस्त्वनुसारित्वात्प्रमात्वमाशंक्याह *एकमिति ॥ दाडिमादिवदेकस्यैवानेकरसत्वं निरसितुं विशिनष्टि *एकरूपमिति ॥ तस्यैव मेयत्वार्थमाह *ज्ञानमिति । वस्तुतस्तत्त्वज्ञानादियोगोऽपि नास्तीत्याह *निरंजनमिति ॥ वस्त्वनुसारित्वाभावे प्रत्ययानां

जात्यन्धजाग्रदृष्ट्येव कोटिशः कल्प्यते मृषा॥२४६॥
अस्थूलं नेतिनेतीति सर्वमात्रादिनिह्नुते ॥
कुतोऽकारणकार्येऽस्मिन्छुक्लादेः सम्भवः परे ॥२४७॥
श्रुतिः–एष पन्था ब्रह्मणा ह्यनुवित्तस्तेनैति ब्रह्म-
वित्पुण्यकृत्तैजसश्च ॥ ९ ॥
वा०–यस्तु वेदोदितोपायक्षपिताशेषकल्मषः ॥
ब्रह्मणैवानुवित्तोऽयं तेन पन्था गुरूक्तितः ॥ २४८ ॥
विद्याधिकारी नैवान्यो ब्रह्मणस्तेन वार्णितः ॥
ब्रह्मशब्देन यद्वेत्थं भूतार्थब्रह्मणेतिगीः ॥ २४९ ॥
बोधमार्गो ब्रह्मरूपो ब्रह्मैकविषयत्वतः ॥
गुरूक्तिमनु सोऽप्यत्र लभ्यते नान्यथा क्वचित्॥२५०॥

---

भ्रमत्वं फलतीत्याह *जात्यन्धेति ॥ २४६ ॥ वस्त्वनुसारित्वाभा-
वमुपपादयति*अस्थूलेति ॥२४७॥ कल्पितमोक्षमार्गाणां साज्य-
त्वं प्रदर्श्य एष पंथा इत्यादिसिद्धान्तं प्रथमपादस्यार्थमाह *य-
स्त्विति ॥ वैदिकयज्ञादिनिरस्तसमस्तपापो यः शुद्धधीस्तेन ब्रह्मणा
गुरूपदेशादनु अयं मोक्षमार्गो वित्तो लब्ध इत्यर्थः॥२४८॥ब्रह्मणा
ऽनुवित्त इत्यत्र मुमुक्षोर्जीवस्य कथं ब्रह्मशब्दवाच्यत्वं तत्राह
*विद्येति ॥ जीवब्रह्मणोरभेदविवक्षया जीवे ब्रह्मशब्दःप्रयुक्त
इत्यर्थः ॥ ब्रह्मणेत्यस्यार्थान्तरमाह *यद्वेति ॥ २४९ ॥ ब्रह्मणेति
तृतीयायाः इत्थंभावार्थत्वे वाक्ययोजनाप्रकारमाह *बोधेति ॥
बोधात्मकमार्गस्यांतःकरणवृत्तेः कथं ब्रह्मरूपत्वं तत्राह *ब्रह्मैके-
ति ॥ अनुवित्त इत्यस्यार्थस्तु पूर्ववदेवेत्याह *गुरूक्तिमिति २५०
एष इत्यादि व्याख्याय तेनेत्यादि व्याचष्टे *ब्रह्मेति ॥
आदौ पुण्यकृद् भूत्वा पश्चात्तैजसः सन्ननंतरं ब्रह्मविद् भूत्वा

ब्रह्मविन्मुक्तिमाप्नोति तेन बोधात्मना पथा ॥
पुण्यकृत्तैजसश्चादौ भूत्वाऽथ ब्रह्मविद्भवेत् ॥ २५१ ॥
तेजःशब्देन संशुद्धा बुद्धिरेवाभिधीयते ॥
पुण्ये कृते बुद्धिशुद्धौ विद्या स्यात्स्मर्यते तथा ॥२५२॥
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥
यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ २५३ ॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ॥
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ २५४ ॥
योगी वा तैजसोऽत्र स्यात्प्रत्यग्दृष्टौ समर्थतः ॥
विषयाकृष्टधीर्यस्मान्न क्षमः प्रत्यगीक्षणे ॥ २५५ ॥

---

तेन ब्रह्मबोधात्मकमार्गेण मुक्तिमेतीति श्रुत्यक्षरार्थः ॥

यथा ब्रह्मधीर्मुक्तिहेतुस्तथा पुण्यमपि शुद्धिद्वारा ब्रह्मधीहेतुरिति भावः ॥२५१॥ अत्र तैजसशब्देन विवक्षितमाह *तेज इति । तत्र भवस्तैजस इति शेषः । शुद्धधीः पुमानिह तैजसशब्देन विवक्षित इत्यर्थः ॥ ननु पुण्यकृतो धीशुद्धिः शुद्धधियो विद्या स्यादित्यत्र किं मानं तत्राह *स्मर्यत इति ॥२५२॥ धीशुद्धेर्विद्याहेतुत्वे स्मृतिमाह *ज्ञानमिति ॥ २५३ ॥ पुण्यस्य धीशुद्धिहेतुत्वे तामाह *गार्भैरिति ॥ २५४॥ पुण्यकृत्त्वेनैव शुद्धित्वसिद्धेस्तैजसत्वमकिंचित्करमित्याशंक्यार्थान्तरमाह *योगी वेति ॥ समाहितधियो योगिनस्तैजसत्वे हेतुमाह *प्रत्यगिति ॥ ऐकाग्र्यबुद्धेः कथमात्मदृष्टौ सामर्थ्यं तत्राह *विषयेति ॥ प्रत्यग्याथात्म्यधीरसमाहितधियो नोदेति, कश्चिद्धीरः प्रत्यगात्मानमैक्षदिति श्रुतेः । अतो धीसमाधानं याथात्म्यज्ञानहेतुः, निदिध्यासनविधानादित्यर्थः ॥२५५॥ पुण्यकृत्त्वादेर्ब्रह्मवित्त्वे हेतुत्वमुक्त्वा पक्षांतरमाह *प्रसिद्धेति ॥

प्रसिद्धमहिमानौ वा पुण्यकृद्योगिनाविह ॥
ब्रह्मवित्स्तूयते ताभ्यां ब्रह्मविद्याप्रवृत्तये ॥ २५६ ॥
योगस्य कर्मणस्तत्त्वविद्यायाश्च समुच्चयः ॥
अतोऽत्रेति वदन्त्यन्ये तदयुक्तं विरोधतः ॥ २५७ ॥
अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ॥
शान्ताः सन्न्यासिनो यान्ति तस्मै मोक्षात्मने नमः२५८
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ॥
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥२५९॥
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ॥
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ २६० ॥
नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च ॥

---

स्तुतिफलमाह *ब्रह्मेति ॥ यो ब्रह्मवित्तेन गच्छति स एव पुण्यकृद्योगी चेति ब्रह्मविदः स्तुतिः ॥ सा च मुमुक्षूणां श्रवणादिप्रवृत्तावुपकरोति इत्यर्थः ॥२५६॥ केचित्तु समुच्चयानुष्ठायिनामत्र ब्रह्मप्राप्तिर्विवक्षितेत्याहुस्तन्मतमनूद्य प्रत्याह *योगस्येति । ज्ञानकर्मणोः विरोधस्य सम्बन्धग्रन्थेऽभिहितत्वादिति भावः ॥ २५७ ॥ किञ्च क्रमसमुच्चयः समसमुच्चयो वा, तत्राद्यमङ्गीकृत्य द्वितीयं दूषयति *अपुण्येत्यादिना ॥ २५८ ॥ २५९ ॥ ब्रह्मविदोऽपि स्तुतिनमस्कारादिदृष्टेस्तेन समुच्चयो ज्ञानस्येति तत्राह *निराशिषमिति । काम्याननुष्ठानमनारम्भः, अक्षीणत्वं निषिद्धानाचरणं, क्षीणकर्मत्वं नित्यादिराहित्यम् ॥ २६० ॥ ज्ञानकर्मासमुच्चये वाक्यान्तरमाह *नेति ॥ एकता सर्वोदासीनता, समता शत्रुमित्रादिबुद्धिव्यतिरेकेण स-

शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ २६१ ॥

अर्थस्य मूलं निकृतिः क्षमा च कामस्य रूपं च वयो वपुश्च ॥

धर्मस्य यागादि दया दमश्च मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ २६२ ॥

इत्येवं स्मृतिशास्त्राणि सर्वत्यागपुरःसरम् ॥

ज्ञानजन्माभिदधति तथा श्रुतिवचांस्यपि ॥ २६३ ॥

यत्पुण्यं बुद्धिशुद्ध्यर्थं योगो यश्चात्मबोधकृत् ॥

श्लोके द्वितीये तौ प्रोक्तौ तृतीये त्वन्यथोच्यते ॥२६४॥

यत्काम्यं कर्म योगश्च योऽणिमादिप्रदो द्वयम् ॥

तत्संसारस्यैव हेतुर्न मुक्तावुपयुज्यते ॥ २६५ ॥

---

र्वत्र स्वस्मिन्निव दृष्टिः, दण्डानिधानम् अहिंसापरत्वम् ॥ २६१ ॥ चतुर्विधपुमर्थे साधनभेदोपदेशाच्च न समुच्चय इत्याह *अर्थस्येति ॥ सर्वात्मना क्रियाभ्य उपरमो न मोक्षस्य मूलं, श्रवणाद्यनुष्ठानस्य तन्मूलत्वोपगमादित्याशङ्क्यात्र क्रियाशब्देनाग्निहोत्रादिलक्षणबाह्यक्रिया विवक्षितेति ॥ २६२ ॥ यथोक्तस्मृतीनां तात्पर्यमाह *इतीति ॥ तासां प्रामाण्यार्थं श्रुतिमूलत्वमाह *तथेति । न कर्मणेत्यादीनीत्यर्थः ॥ २६३ ॥ वृत्तमनूद्यानन्तरम् इत्याद्यवतारयति *यदिति । फलाभिसन्धि विनाऽनुष्ठितधर्मो धीशुद्धिहेतुः, अणिमादिप्रेप्सां विनाऽनुष्ठितोऽष्टांगयोग ऐकाग्र्यद्वाराऽऽत्मज्ञानहेतुरिति द्वितीयश्लोके वर्णिताविद्यर्थः ॥ २६४ ॥ अन्यथोक्तिमेवाह *यत्काम्यमिति ॥ २६५ ॥ एवं तात्पर्यमभिधाय श्लोकस्य पूर्वार्द्धे

श्रुतिः-अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥
ततो भूय इव ते तमो य उ विद्यायाꣳरताः ॥ १० ॥
वार्त्ति०-जन्मान्तरप्रदं कर्म स्यादविद्या भ्रमात्मिका ॥
एतामुपासते मूढास्तमोऽधं प्रविशंति ते ॥ २६६ ॥
देहभ्रान्तिस्तमोऽन्धत्वं देहभ्रान्तिपरंपरा ॥
काम्यकर्मरतो जन्तुस्तामाप्नोति परंपराम् ॥ २६७ ॥
ये त्वासक्ता योगशिल्पविद्यायां ते पुरोदितात् ॥
अधिकं तम आविश्य मुच्यन्ते न कदाचन ॥ २६८ ॥
युज्यते मुक्त्यभावोऽयं तत्र बोधविवर्जनात् ॥
तेन दुःखं महच्चेति चतुर्थश्लोक ईर्यते ॥ २६९ ॥
श्रुतिः-आनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः
ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसोऽबुधो जनाः ॥११॥
वा०-ये त्वानन्दाभिधा लोकास्तीव्रदुःखेन संयुताः ॥
तांस्ते मृत्वाऽभिगच्छन्ति ब्रह्मबोधेन वर्जिताः॥२७०॥
अविद्वांसो ह्यशास्त्रज्ञा अबुधोऽनुभवेन च ॥

---

व्याकरोति *जन्मेति ॥ काम्यकर्मणोऽविद्यापदवेदनीयत्वे हेतुमाह *भ्रमात्मिकेति ॥ २६६ ॥ अन्धन्तम इत्यत्र तमःशब्दार्थमाह *देहेति ॥ अन्धशब्दार्थमाह *अन्धत्वमिति ॥ निर्गलितार्थमाह *काम्येति ॥ २६७ ॥ पूर्वार्द्धं विभज्योत्तरार्द्धं विभजते *ये त्विति ॥ २६८ ॥ योगानुष्ठायिनां कथं मुक्त्यभाव इत्याशङ्क्य चतुर्थश्लोकमादत्ते *युज्यत इति ॥ मुक्त्यभावे दोषमाह *तेनेति ॥ २६९ ॥ श्लोकाक्षराणि व्याचष्टे *ये त्विति ॥ २७० ॥ अविद्वांसोऽबुध इत्यनयोः पौनरुक्त्यमाशङ्क्याह *अविद्वांस इति ॥ अबुधदित्यस्य बहुवचन-

वर्जिता दुःखबाहुल्यं जन्ममृत्युजरादिकम् ॥ २७१ ॥
ब्रह्मावबोधयुक्तानां निःशेषो दुःखसंक्षयः ॥
श्लोकेन पंचमेनात्र विस्पष्टमभिधीयते ॥ २७२ ॥
श्रुतिः–आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥
किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत् ॥ १२ ॥
वार्त्ति०–पुरुषः परिपूर्णोऽयमस्मीति ह्यापरोक्ष्यतः ॥
य आत्मानं विजानाति शरीरानु ज्वरोऽस्य कः २७३
न वेत्ति चेत्स्वमात्मानं देहात्मत्वभ्रमादसौ ॥
भोक्तुस्तस्यैव भोगाय भोगमिच्छन्ननुज्वरेत् ॥२७४॥
यस्य सार्वात्म्यबोधेन बाधः स्याद्भोक्तृभोग्ययोः ॥
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ २७५ ॥
निःसङ्गस्याभिसम्बन्धो देहेनास्य न कश्चन ॥
नातो देहादिदुःखेन दुःखित्वं प्रत्यगात्मनः ॥२७६॥
न दुःखक्षय एवास्य किन्तु विश्वस्य कर्तृता ॥

---

मबुध इति ॥ जरादिकमभिगच्छतीत्यनुषङ्गः ॥ २७१ ॥ आत्मानमित्याद्यवतारयति *ब्रह्मेति ॥ २७२ ॥ श्लोकाक्षराणि व्याकुर्वन् ज्ञानप्रकारमभिनयति *पुरुष इति ॥ २७३ ॥ आत्मधियो ज्वरनिवृत्तिहेतुत्वमुपपादयितुं तदज्ञानस्य ज्वरहेतुत्वमाह *नेति ॥ स्वस्य भोक्तृत्वभ्रमाद्भोग्यजातमिच्छन्भोग्यनाशे ज्वरन् तद्देहमनु ज्वरेत् तप्येतेत्यर्थः ॥ २७४ ॥ ज्ञानस्य तन्निवृत्तिहेतुत्वमुपपादयति *यस्येति ॥ भोक्तुर्ब्रह्मरूपत्वे भोग्यस्य तुच्छत्वे च ज्ञाने किं भोग्यं कस्य भोक्तुः कामायेच्छन् शरीरोपाधिकृतदुःखमनु दुःखी स्यादित्यर्थः ॥ २७५ ॥ देहतापेनात्मनस्तापाभावमुक्तमेव स्पष्टयति *निःसङ्गस्येति ॥ २७६ ॥

सर्वलोकात्मता चेति षष्ठे श्लोके उदीर्यते ॥ २७७ ॥
श्रुतिः—यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्संदेह्ये गहने प्रविष्टः।
स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ॥ १३ ॥
वा०—सम्यग्दिह्यत इत्येतद्वपुः सन्देह उच्यते ॥
सम्भूयोपचितः पञ्चभूतैरेष यतस्ततः ॥ २७८ ॥
आध्यात्मिकादिभिः क्लेशैर्युक्तत्वाद्गहनो मतः ॥
तत्र प्रविष्ट आत्माऽयं गुरूक्तिमुपलभ्यते ॥ २७९ ॥
योऽनु लब्धः पुनः सोऽनुभूत्वा च प्रतिबुध्यते ॥
स विश्वकृद्भवेदीशो जीवत्वभ्रान्तिवारणात् ॥२८०॥
स हि कर्तेति वाक्येन कृतकृत्यत्वमुच्यते ॥
निःशेषपुरुषार्थाप्तेर्न कार्यं शिष्यते परम् ॥ २८१ ॥

---

यस्येत्याद्यनन्तरश्लोकमवतारयति *नेति ॥ २७७ ॥ तत्र संदेह्यशब्दार्थमाह *सम्यगिति। संदिह्यत उपचीयत इति सन्देहो देहः ह्यकारप्रयोगश्छांदसः ॥ यस्मादेष देहः पञ्चभूतैरुपचितः तस्मात्सम्यक् दिह्यत इति व्युत्पत्त्या सन्देह इति वपुरुच्यत इति योजना ॥ २७८ ॥ गहन इत्यस्यार्थमाह *आध्यात्मिकेति ॥ श्लोकस्य पूर्वार्द्धं व्याचष्टे *तत्रेत्यादिना ॥ गहनेऽस्मिन्देहे प्रविष्टः परमात्मा यस्याधिकारिणोऽनुवित्तो गुरूपदेशादनु पश्चाल्लब्धः प्रतिबुद्धः साक्षात्कृतश्च स विश्वकृदित्युत्तरार्द्धेन सम्बन्धः ॥ २७९ ॥ तस्येशत्वं साधयति *जीवत्वेति ॥ विश्वकृच्छब्देन स्वातंत्र्यं विवक्षितमित्यर्थः ॥ २८० ॥ सहि सर्वस्य कर्तेत्यस्यार्द्धमाह *स हि कर्तेति ॥२८१॥ स विश्व-

यद्वाऽन्यदृष्ट्या सर्वस्य जननात्सर्वकृद्भवेत् ॥
अज्ञानिनो ब्रह्मभूतमेनं मन्यंत ईश्वरम् ॥ २८२ ॥
लोकः सर्वोऽपि तस्यैष कार्य इत्येव तन्मतिः ॥
वस्तुदृष्ट्या तु सोऽप्येष लोको नतु ततः पृथक्॥२८३॥
शास्त्राधिकारयुक्तेऽस्मिन्देहे विद्यात्परं पदम् ॥
अन्यथाऽनर्थ इत्येतत्सप्तमं श्लोक उच्यते ॥ २८४ ॥
श्रुतिः—इहैव संतोऽथ विद्मस्तद्वयं न चेद्वेदि र्महती विनष्टिः ॥
ये तद्विदुरमृतास्ते भवंत्यथेतरे दुःखमेवापियंति ॥१४॥
वा०—यदेह देहे तिष्ठामस्तदा विद्मो वयं परम् ॥

---

कृदित्यादेरर्थान्तरमाह *यद्वेति । स्वदृष्ट्या वस्तुतो विश्वाभावेऽप्यज्ञजनकल्पितं विश्वकृत्त्वं मुक्तस्यास्तीत्यर्थः । विदुषो विश्वकृत्त्वं डित्थादिवन्न नाममात्रमिति दर्शयितुं तत्र हेतुमाह श्रुतिः *स हीति ॥ २८२ ॥ तत्रापि । हिशब्दसूचितामज्ञजनप्रसिद्धिं दर्शयति *लोक इति ॥ तन्मतिस्तेषामज्ञानिनां बुद्धिः । तस्य लोक इत्यादेरर्थमाह *तस्येति ॥ येन लोकेन मुक्तस्य सर्वजनकत्वं कल्प्यते स सर्वोऽपि लोको मुक्तदृष्ट्या ऽऽलोक एव । अत्र लोकशब्दः परमात्मपरः । वस्तुतः स्वव्यतिरिक्तं किञ्चिन्नास्तीत्यर्थः ॥ २८३ ॥ इहैवेत्यादेस्तात्पर्यमाह *शास्त्रेति ॥ २८४ ॥ श्लोकाक्षराणि व्याचष्ट *यदेति ॥ अथशब्दव्याख्या तदेति ॥ तदित्यस्य व्याख्या परमिति ॥

न चेद्वेदिरित्यत्र वेदो वेदनं यस्य नास्ति सोऽवेदिरित्यर्थः ॥ इह चेत्परं न विद्मस्तदा वयमवेदिः । एकवचनं तु विद्म इत्युपक्रांतस्य बहुत्वस्याविवक्षितत्वसूचनाय । अहं

न चेद्विद्मस्तदाऽस्माकं विनष्टिर्महती भवेत् ॥ २८५ ॥
ये तद्विदुस्तेऽमृताः स्युरितरे दुःखमाप्नुयुः ।
दुःखमेव हि संसारः सुखं त्वल्पं च नेष्यते ॥ २८६ ॥
गर्भप्रवेशादिरूपा जुगुप्सा नात्मवेदिनः ॥
इत्येषोऽर्थोऽष्टमश्लोके विस्पष्टमभिधीयते ॥ २८७ ॥
श्रु०-यदैतमनुपश्यत्यात्मानं देवमंजसा ॥
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥
वा०-यदैतं दीप्तमात्मानमीश्वरं भूतभव्ययोः ॥
श्रुत्या साक्षात्करोत्येष न तदा विजुगुप्सते ॥ २८८ ॥
श्रुतिः-यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्त्तते ॥
तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥
वा०-निःशेषविक्रियाहेतुकालातिक्रमहेतुतः ॥
देवैरुपास्य इत्येतन्नवमे श्लोक उच्यते ॥ २८९ ॥
कालो यस्माद्ब्रह्मणोऽर्वागविद्याकल्पितत्वतः ॥

---

यदि न वेदिस्तर्ह्यवेदिः स्यां, तथा सति विनष्टिरित्यर्थः ॥ तेनास्माकं विनष्टिरिति योजना ॥२८५॥ श्लोकस्य पूर्वार्द्धं व्याख्ययाथोत्तरार्द्धं व्याकुर्वन्विनष्टिं प्रतिपादयति *य इति ॥२८६॥ यदैतमादत्ते *गर्भेति ॥ २८७ ॥ तदक्षराणि विभजते *यदैमिति ॥ देवमित्यस्यार्थो दीप्तमिति । अंजसेत्यस्यार्थः साक्षादिति ॥ २८८ ॥ यस्मादित्यादेस्तात्पर्यमाह *निःशेषेति ॥ उपास्यः परमात्मेति शेषः ॥ २८९ ॥ अक्षरार्थमाह *कालइति द्वाभ्याम् ॥ संवत्सरशब्दः कालसामान्योपलक्षणमिति मत्वा काल इत्युक्तम् । श्रुतावहोभिरिति स्वावयवैरहोरात्रैरित्यर्थः । यस्मादि-

तद्ब्रह्मोपासते देवाः स्वाभीष्टफलसिद्धये ॥ २९० ॥
ज्योतिषामपि तज्ज्योतिरादित्याद्यवभासनात् ॥
आयुर्जीवनहेतुत्वादमृतं मृतिवर्जनात् ॥ २९१ ॥
चेतनाचेतनाधार आत्माऽस्य ब्रह्मनोचिता ॥
इति स्फुटतरं श्लोके दशमे समुदीर्यते ॥ २९२ ॥
श्रु०—यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ॥
तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम् ॥१७॥
वा०—आत्मा पञ्चजनाख्यानां पंचानामाश्रयस्तथा ॥
आकाशस्य तमात्मानं वेद्मि ब्रह्म तथा श्रुतेः ॥२९३॥
गंधर्वाः पितरो देवा रक्षोभिश्च सहासुराः ॥
ज्ञेयाः पंचजनास्तैश्च चेतनं लक्ष्यतेऽखिलम् ॥ २९४ ॥
लक्ष्यते च तथाऽऽकाशशब्देन निखिलं जडम् ॥
जडाजडाधार आत्मा तस्मिन्सर्वस्य कल्पनात् ॥२९५॥
जडाजडे सात्मके हि नो चेच्छून्यत्वमापतेत् ॥

---

तस्य विशेषणमाह *ब्रह्मण इति ॥२९०॥२९१॥ यस्मिन्नित्याद्य-वतारयति *चेतनेति ॥ २९२ ॥ अक्षराणि योजयति *आत्मेति ॥ २९३ ॥ अत्र पंचजनशब्देन विवक्षितमाह *गंधर्वा इति ॥ पंचजनशब्दितगंधर्वादिपंचकाभिधायकैः शब्दैः सर्वं चेतनजातं लक्ष्यत इत्यर्थः ॥ २९४ ॥ आकाशपदेन विवक्षितमाह *लक्ष्यत इति ॥ पूर्वार्धस्य निर्गलितार्थमाह *जडेति ॥२९५॥ आत्मनः सर्व-कल्पनाधिष्ठानत्वं साधयति*जडाजड इति ॥ स्वतःसत्ताशून्यस्य सद्रूपात्मतादात्म्याभावेऽसत्त्वमेव स्यादित्यर्थः ॥ उत्तरार्द्धं व्याख्या-ति *एतमिति ॥ मन्य इत्यस्य व्याख्या वेद्मीति ॥ उक्तात्मानमेव

एतमाधारमात्मानममृतं ब्रह्म वेद्म्यहम् ॥ २९६ ॥
तदा विद्वान्ब्रह्म भूत्वा ब्रह्मत्वादमृतोऽभवम् ॥
मरणं ब्रह्मणः क्वापि नैव संभावितं श्रुतौ ॥ २९७ ॥
प्राणादिसंघ आत्मा स्यादेतस्य ब्रह्मता कथम् ॥
इत्याशंक्योत्तरं श्लोके ह्येकादशउदीर्यते ॥ २९८ ॥
श्रुतिः—प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ॥ ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥
वाः—प्राणादिसंघो नैवात्मा किन्तु संघोपलक्षितः ॥
इत्यभिज्ञा ब्रह्मतां तु निश्चिन्वंत्यात्मनो दृढम् ॥२९९॥
आत्मन्यारोपिताः संति चक्षुःप्राणादिशक्तयः ॥
नामैकमेव संबंधाच्छक्तेराधारशक्तयोः ॥ ३०० ॥
प्राणशक्तेराश्रयत्वादात्मा प्राण उदीरितः ॥

---

ब्रह्मत्वेनैव वेद्मीत्यर्थः ॥ वेद्मीत्यादि मंत्रदृशो वचनम् ॥ २९६ ॥ विद्वानमृतम् इत्यत्राशिष्टं पदद्वयमनुषंगेण योजयति *तदेति॥२९७॥ प्राणस्येत्याद्युत्तरं श्लोकं शंकोत्तरत्वेनावतारयति *प्राणादीति ॥ २९८॥ श्लोकतात्पर्यं संगृह्णाति *प्राणादीति ॥ अभिज्ञा आत्मानात्मविवेककुशलाः ॥ २९९ ॥ तात्पर्यमुक्त्वा प्राणस्य प्राणमित्यादि पदशो व्याख्यातुं प्राणादीनामात्मनश्च प्राणादिपदाभिधेयत्वं साधयति *आत्मनीति । चक्षुरादिकार्यानुपपत्तिकल्प्यास्तज्जननशक्तयः आत्मनि संतु, ततः किं तत्राह *नामेति ॥ शक्त्याधारस्यात्मनः शक्तस्य शक्तिकार्यप्राणस्य च प्राणशक्तिसंबधत्वाविशेषात्प्राणनामत्वमित्यर्थः ॥ ३०० ॥ उक्तमेव

तथा शक्त्योत्पादितत्वाद्वायुश्च प्राणनामकः ॥ ३०१ ॥
न्यायः सर्वत्र योज्योऽसौ चक्षुरादिषु नामसु ॥
अतस्तैर्नामभिः सर्वैरेक आत्माऽभिधीयते ॥ ३०२ ॥
प्रसिद्धचक्षुःप्राणादेर्य आत्मा मूलकारणम् ॥
प्राणादिनामकं तं ये विदुस्ते ब्रह्मवेदिनः ॥ ३०३ ॥
आदिहीनत्वतो ब्रह्म पुराणमिति गीयते ॥
अग्र्यं श्रेष्ठं भवेदेतन्नीचजीवत्ववर्जनात् ॥ ३०४ ॥
तस्यास्य दर्शनोपायः कः स्यादित्यभिचोदितः ॥
श्लोकेन द्वादशेनाह मनसैवेति निर्णयम् ॥ ३०५ ॥
श्रु०-मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किंचन ॥
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१९॥
वा०-आत्मानात्मपदार्थेषु विज्ञानोत्पत्तिसाधनम् ॥

---

व्यनक्ति *प्राणेति ॥ वायुराध्यात्मिक इति शेषः ॥ ३०१ ॥ उक्तन्यायमन्यत्राप्यतिदिशति *न्याय इति ॥ चक्षुरादिशक्त्याश्रयत्वादात्मा चक्षुरादिशब्दवाच्यः,तच्छक्तिजन्यत्वात्, रूपाद्युपलब्धिकारणानि चक्षुरादिशब्दवाच्यानीत्यर्थः ॥ एवमात्मनः प्राणादिनामकत्वे फलितमाह *अत इति ॥ ३०२ ॥ एवमक्षराणि विभज्य वाक्यं योजयति *प्रसिद्धेति ॥ ब्रह्म निचिक्युः इत्यस्य व्याख्या ब्रह्मवेदिन इति ॥ निचिक्युर्निश्चयेन चिक्युर्ज्ञातवंत इत्यर्थः ॥ ३०३ ॥ ब्रह्म पुराणमित्यत्र ब्रह्मणः पुराणत्वमग्र्यत्वं चोपपादयति *आदीति ॥ ३०४ ॥ आकांक्षापूर्वकमनंतरश्लोकमादत्ते *तस्यास्येति ॥ प्राणादिहेतुत्वेन वर्णितस्य प्रसक्तत्वस्य दर्शनोपायः को भवेदित्यर्थः ॥ ३०५ ॥ कथमात्मज्ञाने मनसः साधनत्वमित्याशंक्य तस्य सर्वधीसाधारणकारणत्वस्य सर्वै

मनः साधारणं दृष्टं सर्वज्ञानैकहेतुतः ॥ ३०६ ॥
प्रत्यक्चिदाकृतिस्तस्य नित्या व्योमाकृतिर्घटे ॥
यथा तथाऽन्यनैराश्यादात्मत्वात्सन्निधेः सदा ॥३०७॥
धर्माधर्माद्यपेक्षत्वादन्यत्वाद् व्यवधानतः ॥
शद्बाद्याकारता तस्य कादाचित्की न सर्वदा ॥३०८॥
सिद्धेऽप्यस्य चिदाकारे ब्रह्माकारः पुनर्गुरोः ॥
शास्त्राच्चेति श्रुतिर्ब्रूते ह्यनुद्रष्टव्यमित्यसौ ॥ ३०९ ॥
श्रोत्राद्यपेक्षा शब्दादौ नात्मनीति विवक्षया ॥
मनसैवेति वक्त्येषा बाह्येंद्रियनिवृत्तये ॥ ३१० ॥

---

रिष्टत्वान्न मया साधनीयं तदित्याह *आत्मेति । दृष्टमिति सर्वैरंगीकृतमित्यर्थः । तत्र हेतुः *सर्वेति ॥ सर्वत्र ज्ञानहेतूनां मध्ये मनसोऽन्यतमत्वेन हेतुत्वादिति यावत् ॥ अतो न पूर्वार्द्धेन पौनरुक्त्यम् ॥ ३०६ ॥ किंच बुद्धिवृत्तेर्यावित्मत्त्वमात्माकारतायाः स्वाभाविकत्वान्न मनस आत्मज्ञानासाधनत्वशंकेत्याह *प्रत्यगिति ॥ घटस्य यावत्सत्त्वं व्योमसंबंधवद् बुद्धेश्चिदाकारः स्वतः सिद्ध इत्यत्र हेतुत्रयमाह *अन्येति । अन्यनैराश्यं धर्मादिनिरपेक्षत्वम् ॥ ३०७ ॥ ननु मनसः किमित्यात्माकृतिः स्वतः-सिद्धेति विशेष्यतेऽनात्माकृतेरपि तथात्वादित्याशंक्य नेति वैलक्षण्यमाह *धर्मेति ॥ ३०८ ॥ बुद्धेरात्माकारतायाः स्वतःसिद्धत्वे गुरुशास्त्रवैयर्थ्यमाशंक्याह *सिद्ध इति । ब्रह्माकारः स्यादिति शेषः ॥ उक्तमर्थं प्रकृतश्रुत्युपारूढं करोति *इतीति मनसैवेत्यत्रैवकारव्यावर्त्यमाह *श्रोत्रेति । मनसः शब्दस्पर्शादिधीहेतुत्वेऽपि बाह्येंद्रियसहितस्यैव तद्धीजनकत्वम् । आत्मधीजनने तु न तदपेक्षेत्यर्थः ॥ ३१० ॥ द्वितीय-

नेह नानेति हेतूक्तिर्द्वैतं शब्दादिकं नहि ॥
ब्रह्मात्मनि ततो बाह्यमिंद्रियं नोपयुज्यते ॥ ३११ ॥
माभूच्छब्दादिकं द्रष्टृद्रष्टव्यात्मभिदाऽस्ति हि ॥
द्रष्टव्यं ब्रह्म जीवेनेत्येतन्मतमपोह्यते ॥ ३१२ ॥
यः पश्यति ब्रह्म भिन्नमिव स्वस्मादसौ पुमान् ॥
बहुयोनिषु जातः सन्मृत्योर्मृत्युमवाप्नुयात् ॥३१३॥
भ्रांतो जीवेशयोर्भेदः कल्पितोऽसौ न वास्तवः ॥
इत्येतत्प्रतिपत्त्यर्थमिवशब्दः प्रयुज्यते ॥ ३१४ ॥
अत्यंतभेदाभावेऽपि भेदाभेदौ तयोरिति ॥
मतं वारयितुं श्लोकस्त्रयोदश इहोच्यते ॥ ३१५ ॥
श्रु०–एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ॥
विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥ २० ॥
वा०–एकेनैव प्रकारेण भास्वच्चिन्मात्ररूपिणा ॥

---

पादं व्याचष्टे *नेहेति । तस्य हेतुत्वमुपपादयति *द्वैतमिति ॥ तस्मादिह ब्रह्मात्मनि द्वैतं किंचन नास्ति तस्मान्नात्मग्रहणे मनसो द्वैतग्राहकबाह्येंद्रियापेक्षेत्यर्थः ॥ ३११ ॥ उत्तरार्द्धतात्पर्य-माह *मा भूदिति ॥ द्रष्टुर्जीवात्मनो द्रष्टव्यस्य परमात्मनश्च भेदो वक्तव्यः, अभेदे तदयोगादिति केचित्, तन्मतमुत्तरार्द्धेन निरस्यत इत्यर्थः ॥ ३१२ ॥ तदक्षराणि व्याचष्टे * य इति ॥ ३१३ ॥ नानेवेत्यत्रेवशब्दसूचितमर्थमाह *भ्रांतइति ॥ एवं च कल्पित-भेदेनापि ब्रह्मणो जीवेन द्रष्टव्यत्वोपपत्तेर्न तदर्थं वास्तवशब्दः कल्प्य इति भावः ॥ ३१४ ॥ एकधेत्याद्यवतारयति *अत्यंतेति ॥३१५॥ श्लोकस्य प्रथमपादं व्याचष्टे *एकेनेति ॥ अनुशब्दा-र्थः पूर्ववत् । एकधैवेत्यत्रावधारणव्यावर्त्यमाह *अन्वेति । अत्र

अनुद्रष्टव्यमत्रैषा समस्तव्यस्तता नहि ॥ ३१६ ॥
ब्रह्मात्मनोर्लक्षणैक्याद्भेदलेशोऽपि नेष्यते ॥
ध्रुवं तद्ब्रह्मणो रूपमात्माऽप्येष ध्रुवस्तथा ॥ ३१७ ॥
ध्रुवत्वं निर्विकारत्वं तच्चात्मब्रह्मणोः समम् ॥
प्रत्यग्बोधत्वमात्मत्वं ब्रह्मत्वं सर्वहेतुना ॥ ३१८ ॥
व्यवहारस्तु मोहोत्थो न तावन्मात्रहेतुकः ॥
वस्त्वेकमेव तेनैतदेकधैवावगम्यताम् ॥ ३१९ ॥
अप्रमेयं ब्रह्म तस्मान्मातृमेयभिदाऽपि न ॥
प्रमेयं स्फुरणाधारो ब्रह्म तु स्फूर्तिरेव हि ॥ ३२० ॥
ब्रह्मैतदप्रमेयं चेत्कथं द्रष्टव्यता भवेत् ॥

---

ब्रह्मात्मनि । एषा परपरिकल्पिता ॥ ३१६ ॥ उपपत्तितोऽपि तयोर्भेदाभावं साधयति *ब्रह्मेति ॥ लक्षणैक्यमेव कुत इत्याशंक्य ध्रुवपदार्थं वदन्लक्षणैक्यं साधयति *ध्रुवमिति ॥ नित्यमित्यर्थः ॥ ३१७ ॥ ध्रुवपदस्य कूटस्थवाचकत्वमाशंक्य तथापि तयोः सालक्षण्यसिद्धिरित्याह *ध्रुवत्वमिति । तयोरेकलक्षणत्वे अहंप्रत्ययवेद्य आत्मा जगत्कारणं ब्रह्मेति विलक्षणव्यवहारः कथमिति तत्राह *प्रत्यगिति । हेतुतेत्यत्र इतीति शेषः । *न तावदिति । परमार्थजन्यो न भवतीत्यर्थः ॥ ३१८ ॥ जीवेशयोर्विलक्षणव्यवहारस्य कल्पितत्वे फलितमाह *वस्त्विति ॥ एकधेत्यादेरर्थमुपसंहरति *तेनेति ॥ ३१९ ॥ अप्रमयमिति पदं व्याचष्टे *अप्रमेयमिति ॥ ब्रह्मणोऽप्रमेयत्वे फलितमाह *तस्मादिति ॥ तस्याप्रमेयत्वं कथमिति तत्राह *प्रमेयमिति ॥ ३२० ॥ पूर्वापरविरोधं शंकते

वृत्तिव्याप्यत्वमात्रेण द्रष्टव्यं सन्निगच्छति ॥३२१॥
व्याप्यो वृत्तिफलाभ्यां यः प्रमेयः स घटो भवेत् ।
ब्रह्मामेयं फलाभावाद् द्रष्टव्यं वृत्तिसत्त्वतः ॥ ३२२ ॥
प्रत्यगज्ञानहेतूत्थो यत्रानात्मा प्रसिध्यति ॥
ज्ञातृज्ञेयप्रभेदः स्यात्तत्र प्रत्यगनात्मनोः ॥ ३२३ ॥
ऐकात्म्ये कः प्रमाता स्यात्प्रमाणं चात्र किं भवेत् ॥
आगमोऽप्यनपेक्ष्यैव भेदमात्मावबोधकः ॥ ३२४ ॥
आपीतकरणग्रामः पुमान्यद्वत्सुषुप्तिगः ॥
शब्दान्निद्रामपास्याथ यथा वस्त्ववबुध्यते ॥ ३२५ ॥
अगृहीत्वैव संबंधमभिधानाभिधेययोः ।

---

*ब्रह्मेति । परिहरति *वृत्तीति ॥३२१॥ द्रष्टव्यत्वे मेयत्वं स्यादित्याशंक्य तथापि मेयलक्षणाभावादमेयमिति पूर्वोक्तमेव स्फुटयति *व्याप्य इति ॥ अभिव्यक्तचैतन्यविषयत्वं फलव्याप्यत्वं तदभावान्न ब्रह्म मेयमित्यर्थः ॥३२२॥ द्रष्टव्यत्वे ब्रह्मणो द्रष्टुः सकाशाद्भेदः स्यादित्याशंक्याविद्यावस्थायां भेदो विद्यावस्थायां वा, तत्राद्यमंगीकरोति *प्रत्यगिति ॥ यत्राविद्यादशायामात्माज्ञानजन्योऽनात्मा ज्ञायते ॥ तत्रात्मानात्मनोः ज्ञातृज्ञेयभावेन भेदप्रतिभासः स्यादित्यर्थः ॥ ३२३ ॥ द्वितीयं प्रत्याह *ऐकात्म्य इति ॥ किं प्रमाणमित्याक्षेपोऽनुपपन्नः, आगमस्य तद्बोधित्वाङ्गीकारेरित्याशङ्क्य आगमस्य तद्बोधित्वेऽपि न तस्य मात्रादिभेदापेक्षेत्याह *आगम इति ॥ ३२४ ॥ आगमस्य निर्विशेषब्रह्मणा सह संगतिग्रहायोगात्संगतिग्रहहेतुजात्यादिभेदमनपेक्ष्य कथं तद्बोधकत्वमित्याशंक्याज्ञातसंगतेरपि शब्दस्य बोधकत्वे दृष्टांतमाह *आपीतेति ॥ ३२५ ॥ दृष्टान्ते वि-

हित्वा निद्रां प्रबुद्ध्यंते यथेहापि तथाऽऽत्मनि ॥३२६॥
शब्दशक्तेरचिंत्यत्वाद्दात्मत्वाद्बोधरूपतः ॥
हित्वा निद्रामिवाविद्यामागमाद्बुध्यते पुमान् ३२७
धर्माधर्मौ रजो ज्ञेयौ रजोवत्तन्मलत्वतः ॥
तदकर्तृत्वतो ब्रह्म विरजोऽकरणत्वतः ॥ ३२८ ॥
असम्यग्ज्ञातयाथात्म्यो जनिमत्प्रकृतित्वतः ॥
आत्मैवाकाशशब्देन श्रुत्येह प्रतिपाद्यते ॥ ३२९ ॥
जनिमत्कारणादात्मा यो ऽस्थूलादिविशेषणः ॥
आकाशात्स परो ज्ञेयस्तस्यापूर्वादिरूपतः ॥ ३३० ॥
यस्मादेवमतो ऽजोऽसावकार्यकरणत्वतः ॥

---

वाक्षितमंशमनूद्य दार्ष्टांतिकमाह *अगृहीत्वेति ॥ ३२६ ॥ दार्ष्टान्तिकं स्पष्टयति *शब्देति ॥ शबले गृहीतसंगतिकाः शब्दा लक्षणया निर्विशेषं वस्तु बोधयंतीति पूर्वोक्तमनुसंधेयम् ॥३२७॥ श्लोकस्य पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याख्यातुं विरजःशब्दार्थमाह *धर्मेति ॥ तयो रजस्त्वे हेतुः *रजोवदिति । ब्रह्मणो विरजस्त्वं सहेतुकमाह *तदकर्तृत्वत इति । ब्रह्मणो धर्माद्यकर्तृत्वे हेतुः—अकरणत्वत इति ॥३२८॥आकाशशब्दं व्याकरोति *असम्यगिति ॥ जगत्कारणत्वेन प्रसिद्धोऽज्ञानोपहितस्वरूप आत्माऽस्मिन्मन्त्रे आकाश इति श्रुत्या प्रतिपाद्यते इत्यर्थः ॥ ३२९ ॥ परशब्दार्थमाह *जनिमदिति ॥ जगत्कारणादाकाशादव्याकृतादिति यावत् ॥ अस्थूलादिविशेषणस्यात्मनोऽन्यत्वे हेतुमाह *तस्येति ॥ ३३० ॥ अजर इत्यस्यार्थमाह *यस्मादिति ॥ उपजीव्यतयोक्तमेव हेतुं स्पष्टयति *अकार्येति ॥ अजविशेषणस्यार्थिकमर्थमाह *अज-

अजत्वादेव निःशेषविकाराणामपाक्रिया ॥ ३३१ ॥
अव्यावृत्ताननुगतेर्महानात्मेति भण्यते ।
कौटस्थ्याच्च ध्रुवो नाशविकारादिविवर्जितः ॥ ३३२ ॥
श्रुतिः-तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायान्बहूञ्छब्दान्वाचो विग्लापनँ हि तदिति२१
वा०-बोधादूर्ध्वं च कर्त्तव्यमस्तीत्याशंक्य वार्यते ।
चतुर्दशेन श्लोकेन संग्रहोऽत्र समाप्यते ॥ ३३३ ॥
प्रत्यक्तया श्रुतेर्वाक्यात्तमेवोक्तविशेषणम् ।
अन्वयव्यतिरेकाभ्यां विद्यादात्मानमादितः ॥ ३३४ ॥
बुभुत्सोच्छेदिनीं प्रज्ञां सर्वाज्ञाननिरासिनीम् ।
सर्वज्ञेयसमाप्त्यर्थं कुर्याद्वाक्यार्थबोधतः ॥ ३३५ ॥
किं ब्रह्मेति बुभुत्साया निवृत्तौ तु समाप्यते ।

---

त्वादिति ॥ ३३१ ॥ आत्मा महानित्यनयोरर्थमाह *अव्यावृत्तेति ॥ ध्रुव इत्यस्यार्थमाह *कौटस्थ्यादिति ॥ कूटस्थत्वं साधयति *नाशेति ॥ ३३२ ॥ तमेवेत्यादिश्लोकं शङ्कानिवारकत्वेनावतारयति *बोधादिति । इतिशब्दसूचितार्थमाह *सङ्ग्रह इति ॥ ३३३ ॥ तत्राद्यपादं व्याचष्टे *प्रत्यक्तयेति ॥ उक्तविशेषणं विरजस्त्वादिविशेषणवन्तमिति यावत् । अन्वयादिना तन्मूलश्रुत्या च प्रथमं पदार्थद्वयं शोधयेदित्यर्थः ॥ ३३४ ॥ प्रज्ञां कुर्वीतेत्यस्यार्थमाह *बुभुत्सेति ॥ अज्ञाननिवर्त्तनद्वारा सर्वाकांक्षाध्वंसिनीं सर्वपुरुषार्थहेतुं प्रज्ञां तत्त्वमादिवाक्यवशादेवापादयेदित्यर्थः ॥ ३३५ ॥ उक्तमर्थमनूद्य तमेव हेतुं कुर्वन्नुत्तरार्धतात्पर्यमाह *किमिति ॥ ततः ज्ञेयसमाप्तेः ॥

ज्ञातव्योऽर्थस्ततः शब्दचिन्तां सर्वां परित्यजेत् ॥३३६॥
भर्तृप्रपंचस्त्वाहात्र शास्त्रादात्मानमादितः ।
विज्ञाय भावनां ज्ञानसंतानैः पुनराचरेत् ॥ ३३७ ॥
परं तत्त्वं प्रविश्यैवं मनस्यद्वैततां गते ॥
विज्ञानं केवलं शुद्धं स्वात्मन्येवावतिष्ठते ॥ ३३८ ॥
द्वैताभिधायकाञ्छब्दान् ध्यानकाले न चिंतयेत् ।
वाचं ते ग्लापयंत्येतामेकतत्त्वाभिधायिनीम् ॥ ३३९ ॥
नैवं किमत्र विज्ञानं भावना वाऽभिधीयते ।
नाद्योऽस्य वस्तुतंत्रत्वात्कर्तृतंत्रत्ववर्जनात् ॥ ३४० ॥
न द्वितीयो ज्ञानमात्रात्कृतकृत्यः पुमान्भवेत् ।
निःशेषपुरुषार्थाप्तेः कृत्स्नदुःखौघनिह्नुतेः ॥ ३४१ ॥
अन्ये त्वाहुर्महावाक्यात्संसृष्टं ब्रह्म बुध्यते ।

---

३३६ ॥ तमेवेत्यादिवाक्यस्य परोक्तमर्थं दूषयितुं तन्मतमनुवदति *भर्तृप्रपञ्च इति ॥ ३३७ ॥ निरन्तरभावनायाः फलमाह *परमिति । एवमद्वितीयभावनया मनस्तन्मात्रतया तत्र लीनं भवति । तस्मिंश्च लीने जीवस्य रूपं स्वस्वरूपभूते निरतिशयानन्दे परमात्मनि तन्मात्रत्वेन तिष्ठतीत्यर्थः ॥ ३३८ ॥ श्लोकस्य पूर्वार्द्धं व्याख्यायोत्तरार्द्धं व्याचष्टे *द्वैतेति ॥ तच्चिन्तने दोषमाह *वाचमिति ॥ अतो द्वैतवाचकशब्दान्निरस्याद्वैताभिधायिनीं वाचं सकृदुच्चार्य तदर्थे मनो धारयेदित्यर्थः ॥ ३३९ ॥ विकल्पासहत्वान्नेदं मतं शोभत इति दूषयति *नैवमित्यादिना ॥३४०॥३४१॥ एवं भर्तृप्रपञ्चमतं निरस्यास्यैवं वाक्यस्य मण्डनादिभिरुक्तमर्थं दूषयितुं तद्व्याख्यामुत्थापयति *अन्य इति ॥ वाक्यात्प्रथमतः संसृष्टं परोक्षं च ब्रह्म विज्ञाया-

विज्ञायोर्ध्वमसंसृष्टे प्रज्ञां ब्रह्मणि साधयेत् ॥ ३४२ ॥
स्वभावतोऽखिलं वाक्यं संसर्गात्मकमेव हि ।
बोधयेद्वस्तु तत्रापि पारोक्ष्येणैव नान्यथा ॥ ३४३ ॥
साक्षाद्द्रष्टुमसंसृष्टमन्यत्रापि विधीयते ।
निदिध्यासनवाक्येन साधनं ध्यानलक्षणम् ॥३४४॥
मैवं प्रथमतो वाक्यात्संसृष्टं यदि बोध्यते ।
तदा ब्रह्म तथैव स्यात्प्रमाणप्रमितत्वतः ॥ ३४५ ॥
नेतिनेतीत्यसंसृष्टं यदि ब्रह्म प्रमीयते ।
तर्हि संसृष्टवाद्येतदप्रमाणं भवेद्वचः ॥ ३४६ ॥
तादृशेनावबुद्धस्य ध्यानात्प्रज्ञा कथं भवेत् ।

---

संसर्गिब्रह्मसाक्षात्काराय प्रज्ञां ब्रह्मभावनां कुर्यादित्यर्थः ॥३४२॥ नन्वखण्डं ब्रह्म कथं संसर्गित्वेन शब्दो बोधयेत्तत्राह *स्वभावत इति ॥ ब्रह्माखण्डापरोक्षरूपमपि शब्दस्वाभाव्याद्विपरीततया प्रतीयते, स्वभावस्यानतिलंघनीयत्वादित्यर्थः ॥ ३४३ ॥ न केवलमिहैवाखण्डब्रह्मसाक्षात्कारमुद्दिश्य ज्ञानं विधीयते किन्तु द्रष्टव्यवाक्येऽपीत्याह *साक्षादिति ॥ ३४४ ॥ एकीयमतं दूषयति *मैवमिति ॥ तत्त्वमादिवाक्यात्संसृष्टं ब्रह्म ज्ञातं चेत्तद्बाधकमानान्तराभावान्न ब्रह्मणोऽखण्डत्वं सिध्यतीत्यर्थः ॥ ३४५ ॥ बाधकमानाभावोऽसिद्धः, निषेधवाक्यस्यैव तद्बाधकत्वादिति शङ्कते *नेति । तर्हि बाधितार्थविषयत्वात्तत्त्वमादिवाक्यमप्रमाणं स्यादित्याह *तर्हीति ॥ ३४६ ॥ अस्तु को दोषः, अभ्यासजन्यज्ञानस्य प्रमात्वेनाखण्डापरोक्षब्रह्मसिद्धेस्तत्राह *तादृशेनेति ॥ शाब्दज्ञानमप्रमानं चेन्न तदभ्यासात्सम्यग्धीरुद्भवतीत्युक्तं भवति-

नहि मिथ्याधियोऽभ्यासात्सम्यग्ज्ञानसमुद्भवः ॥३४७॥
तथा सत्यप्रयत्नेन मुक्तिः स्यात्सर्वदेहिनाम् ।
संसारमिथ्याविज्ञानमभ्यस्यंत्येव सर्वदा ॥ ३४८ ॥
नच वाक्यस्य पारोक्ष्यबोधित्वनियमो यतः ।
दशमस्त्वमसीत्यादावापरोक्ष्येण बुध्यते ॥ ३४९ ॥
विज्ञायेत्यादिवाक्यस्य व्याख्यानं चेदपेक्षसे ॥
मानान्तराविरोधेन व्याकुर्मो बहुधा शृणु ॥ ३५० ॥
वाक्यमाहात्म्यसंभूतं यद्विज्ञानमुच्यते ॥
मेयमाहात्म्यसम्भूता प्रज्ञेनीह विवक्षिता ॥ ३५१ ॥
स्वर्गादौ शब्दसामर्थ्याद् बुद्धेः स्याद्विषयाकृतिः ॥
घटादौ मेयसान्निध्याद्विषयाकारता धियः ॥ ३५२ ॥

---

रेकेण द्रढयति *नहीति ॥ ३४७ ॥ विपक्षे दोषमाह *तथेति ॥ अतस्तत्त्वमादिवाक्यादखण्डार्थधीरेवोदेतीति. न तदर्थमभ्यासविधानमिति भावः ॥ ३४८ ॥ यदुक्तं स्वभावतः शब्दस्य परोक्षार्थबोधित्वात्तत्साक्षात्काराय तदभ्यासविधानमिति तदपि प्रत्याह *नचेति ॥ ३४९ ॥ कथं तर्हि वाक्यं व्याख्येयमित्याशंक्य तस्यानेकार्थान्वक्तुं प्रतिजानीते *विज्ञायेति ॥ ३५० ॥ मानांतराविरुद्धं व्याख्यानमनुवर्त्तयन् पदद्वयार्थमाह *वाक्येति ॥ ३५१ ॥ किं तद्वाक्यमेययोर्माहात्म्यजन्यत्वं तदाह *स्वर्गादाविति । व्यवहिते विषये शब्दजन्यधियस्तदाकारत्वं शब्दमाहात्म्यप्रयुक्तं,विषयासत्त्वेऽपि शब्दात्तदाकारज्ञानोत्पत्तिदृष्टेः । तत्र ज्ञानस्य तदाकारत्वं च तद्व्यवहारजननयोग्यमात्रमेव । अव्यवहिते तु विषये ज्ञानस्य तदाकारत्वं तत्तादात्म्यापत्तिः । तत्तादात्म्यं च विषयं विना न संभवतीति विषयमाहात्म्यप्रयुक्तं तदिति भावः ॥३५२॥

दशमादौ द्वयोः सत्त्वात्स्याच्छब्देनापरोक्षधीः ॥
शब्दजत्वापरोक्षत्वे ह्येकज्ञानेऽपि तिष्ठतः ॥ ३५३ ॥
महावाक्यजबुद्धेश्च यौ स्वभावौ यथोदितौ ॥
प्रज्ञाविज्ञानशब्दाभ्यां तावुभाविह वर्णितौ ॥ ३५४ ॥
शाब्दविज्ञानमात्रेण प्रज्ञामैकात्म्यलक्षणाम् ॥
ब्रह्मास्मीति प्रकुर्वीत बुभुत्सोच्छेदिनीं दृढाम् ॥३५५॥
मातृमानादिभेदोत्थं वाक्यमद्वैतबोधने ॥
प्रवर्त्तते तदद्वैतं बुद्धं सद्भेदघातकम् ॥ ३५६ ॥

---

अस्तु ततः किमित्याशंक्य तत्त्वमादिवाक्यजन्यज्ञाने विज्ञानशब्दितशाब्दत्वं प्रज्ञाशब्दितापरोक्षत्वं चास्तीति वक्तुमेकस्य ज्ञानस्योभयाकारत्वमुदाहरति *दशमेति । दशमस्त्वमसीत्यादिवाक्यजन्यज्ञाने शाब्दत्वापरोक्षत्वयोः सत्त्वादध्यक्षज्ञानमपि शब्दजं स्यादित्यर्थः । हेत्वसिद्धिमाशंक्यानुभवविरोधान्मैवमित्याह *शब्दजत्वेति । तयोरेकधीनिष्ठत्वस्य सर्वानुभवसिद्धत्वद्योती हिशब्दः ॥ ३५३ ॥ दृष्टान्तोक्तमर्थं दार्ष्टान्तिके दर्शयन्नुक्ताकारद्वयम् अत्र वाक्ये विज्ञानप्रज्ञाशब्दाभ्यामुक्तमित्याह*महावाक्येति ॥३५४॥ पदार्थमुक्त्वा वाक्यार्थमाह *शाब्देति । शब्दोत्थप्रयोजकधिया विचारपूर्वकमखण्डापरोक्षज्ञानम् अहं ब्रह्मेत्येवंरूपम् असम्भावनादिहीनमखिलाकांक्षानिवर्त्तकमापादयेच्छब्दात् । आपाततो ब्रह्म ज्ञात्वा तदेव ज्ञानं विचारेण अविद्यानिवृत्तिक्षमं कुर्यादित्यर्थः । ननु शाब्दज्ञानस्योत्तरक्षण एव विनष्टत्वात्कथं तस्य विचारानन्तरमविद्यानिवर्त्तकत्वमिति चेन्न । तत्सजातीयज्ञानस्यैवाविद्यानिवर्त्तकत्वेन विवक्षितत्वात् । तयोरेकत्वव्यवहारस्तु साधनविषययोरैक्यान्न व्यक्तिभेदाभिप्रायेणेति ध्येयम् ॥ ३५५ ॥ विचारानंतर

वाक्योत्थबुद्धिवृत्त्याऽत्र ब्रह्मण्यज्ञानसंक्षयः ॥
ज्ञातेन ब्रह्मणा नश्येत् द्वैतमज्ञानजं तथा ॥ ३५७ ॥
विज्ञानाविद्ययोर्यद्वद्विरोधः सहजो भवेत् ॥
अद्वैतद्वैतयोस्तद्वद्विरोधो बाधनं ततः ॥ ३५८ ॥
एकस्मिन्नपि बोधेऽत्र यथोक्तफलभेदतः ॥
अंशभेदमपेक्ष्योक्ता विज्ञानप्रज्ञयोर्भिदा ॥ ३५९ ॥
शास्त्राचार्यमतिर्याऽत्र विज्ञायेत्यभिधीयते ॥
प्रज्ञेत्यनेन शब्देन ह्यात्मप्रत्यय उच्यते ॥ ३६० ॥
शास्त्राचार्यव्यपेक्षत्वात्परतन्त्रैव तन्मतिः ॥

वा कथं वाक्यज्ञानादैकात्म्यसिद्धिः, मातुर्विषयविषयिणीं प्रमामुत्पादयतो वाक्यस्य मात्रादिभेदसापेक्षत्वादिति शंकित्वा परिहरति *मात्रेति। भेदोत्थं भेदापेक्षमिति यावत्। यद्यपि वाक्यं भेदापेक्षमेव तत्त्वबोधमुत्पादयति, तथापि वाक्यज्ञानाभिव्यक्तचैतन्यस्य सर्वभेदनिवर्त्तकत्वादात्म्यैक्यसिद्धिरित्यर्थः ॥ ३५६ ॥ उक्तमेवार्थं दृष्टांतेन स्पष्टयति *वाक्येत्यादिना। अज्ञानसंक्षयो यथेति शेषः ॥३५७॥३५८॥ उपसंहरति *एकस्मिन्निति। यथोक्तफलभेदत इति। विचारप्रवृत्तिः शाब्दधीफलं, तमोनिवृत्तिरध्यक्षधीफलमित्युक्तफलभेदादित्यर्थः ॥ ३५९ ॥ वाक्यार्थान्तरमाह *शास्त्रेति। श्रवणमननादिज्ञानं विज्ञायेत्युच्यते, वाक्यार्थज्ञानं प्रज्ञा, तेन श्रवणादि कृत्वा वाक्यार्थज्ञानं कुर्यादिति वाक्यार्थ इत्यर्थः। श्रवणादेर्वाक्यार्थहेतुत्वाद्द्योती हिशब्दः ॥ ३६० ॥ शास्त्राचार्यमतेरात्मप्रत्ययस्य चावान्तरभेदमाह *शास्त्रेति। तदधीना श्रवणादिरूपा मतिस्तदपेक्षत्वात्परतंत्रा व्यवह्रियते,प्रत्यग्विषयाया स्तु बुद्धेर्वाक्यार्थज्ञानाख्यायाः सत्यां तदधीनश्रवणादिसामग्र्या-

अनन्यापेक्षया ज्ञेया प्रत्यग्बुद्धौ स्वतन्त्रता ॥ ३६१ ॥
यदि वोक्तात्मयाथात्म्यबोधेनैवाद्वयात्मिकाम् ॥
ब्रह्मप्रज्ञां प्रकुर्वीत विशेषणसमाश्रयात् ॥ ३६२ ॥
प्रज्ञा वा परमात्मेह प्रज्ञानमिति वाक्यतः ॥
विज्ञायेहेममात्मानं प्रज्ञां कुर्वीत बोधतः ॥ ३६३ ॥
सर्वथाऽप्यात्मतत्त्वस्य ब्रह्मत्वे वाक्यबोधिते ॥
बोधका अपि ते शब्दास्त्याज्याः कार्यान्तरं किमु ३६४
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ॥
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ ३६५ ॥
शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ॥

---

न्यापेक्षाराहित्यात्स्वतन्त्रेत्यर्थः ॥ ३६१ ॥ वाक्यस्य पुनर-प्यर्थान्तरमाह *यदीति । आत्मनो ब्रह्मत्वं विज्ञायेत्युच्यते, ब्रह्म-णश्च प्रत्यक्त्वं प्रज्ञेत्याख्यायते, तस्मादात्मनो ब्रह्मत्वं विज्ञाय ते-नैवात्मरूपेण ब्रह्मानुसन्दधीतेत्यर्थः । कथं प्रतीचो ब्रह्मत्वं ब्र-ह्मणो वा प्रत्यक्त्वं गमकाभावात्तत्राह *विशेषणेति । तमेव धीर इत्यत्रावधारणसामर्थ्यात्प्रत्यक्त्वं ब्रह्मणो गम्यते । अज आत्मा महानित्यत्र महानितिविशेषणात्प्रतीचोऽपि ब्रह्मत्वसिद्धिरित्य-र्थः ॥ ३६२ ॥ व्याख्यान्तरमाह*प्रज्ञा वेति । पदार्थमुक्त्वा वा-क्यार्थं योजयति *विज्ञायेति । इह देहादौ स्थितं त्वमर्थं ततो निष्कृष्य ज्ञात्वा पुनस्तं ब्रह्मरूपमनुसन्दध्यादित्यर्थः ॥ ३६३ ॥ एवं पूर्वार्द्धस्य बहुधाऽर्थमुक्त्वा नानुध्यायादित्यादिना सूचितां विदुषः कृतकृत्यतामाह*सर्वथेति ॥ ३६४ ॥ बोधकशब्दाना-मपि त्याज्यत्वे स्मृतिमुदाहरति*ग्रन्थमिति द्वाभ्याम् ॥ ३६५ ॥

परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ ३६६ ॥
मनोवाचोर्ग्लानिरेव शब्दोच्चारणचिन्तयोः ॥
हिशब्दस्तत्प्रसिध्यर्थो मौनादिः स्मर्यते ततः ॥३६७॥
मौनं योगासनं योगस्तितिक्षैकान्तशीलता ॥
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनः ॥ ३६८ ॥
ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥
नैवास्ति किञ्चित्कर्त्तव्यमस्ति चेन्न स तत्त्ववित् ३६९
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ ३७० ॥
इतिशब्दः समाप्त्यर्थः श्लोकास्तेन समापिताः ॥
तत्त्वोपदेशः संपूर्णो विस्तरात्संग्रहेण च ॥ ३७१ ॥
मन्त्रब्राह्मणसङ्घेन यत्तत्त्वं प्राङ्निरूपितम् ॥
तद्विद्यासाधनं सर्वं मुनिरेष विवक्षति ॥ ३७२ ॥
तत्रादौ वेद्यतत्त्वस्यानुवादेन पुनः स्फुटम् ॥

---

॥ ३६६ ॥ वाचो विग्लापनमित्यत्र कथं ध्यानस्य वाग्लानिहेतुत्वमुच्यत इत्याशङ्क्यानुध्यानं शब्दोच्चारणस्याप्युपलक्षणमित्याह *मन इति। विग्लापनं हीत्यत्र हिशब्दसूचितमर्थमाह *हिशब्द इति। शब्दोच्चारणादि विदुषा न कार्यमित्यत्र स्मृतिमनुकूलयति *मौनादिरिति ॥३६७॥ तामेव स्मृतिं पठति *मौनमिति ॥३६८॥ न विदुषः कर्त्तव्यमस्तीत्यत्रापि मानान्तरं संवादयति *ज्ञानेत्यादिना ॥३६९॥ ॥३७०॥ विग्लापनं हि तदित्यत्रेतिशब्दार्थमाह *इतीति। परमप्रकृतमुपसंहरति *तत्त्वेति ॥३७१॥ उत्तरकाण्डकातात्पर्यमाह *मन्त्रेति ॥ ३७२ ॥ समुदायतात्पर्यमु-

निरूप्यते स्वरूपं तत्स वा इत्यादिवाक्यतः ॥ ३७३ ॥
श्रुतिः–स वा एष महानज आत्मा ॥
वा०–किं ज्योतिरित्येवमादौ ब्राह्मणे बहुधेरितः ॥
आत्मोच्यते स इत्युक्त्या मन्त्रस्य व्यवधानतः ॥३७४॥
अणुरित्यादिभिर्मन्त्रैरासन्नैः प्रतिपादितः ॥
आत्मोक्त एष इत्युक्त्या वैशब्दोऽभेदवाचकः ॥३७५॥
मंत्रब्राह्मणभेदेन वस्तुभेदो न शंक्यताम् ॥
स एवैषोऽवगंतव्यो यस्मादात्मोच्यते द्वयोः ॥३७६॥
यद्वा शास्त्रानुभूतिभ्यां सिद्धयोर्ब्रह्मजीवयोः ॥
तदेतच्छब्दनिर्देशो वैशब्देन तदेकता ॥ ३७७ ॥
बुध्युपाधिपरिच्छेदो महच्छब्देन वार्यते ॥
देहोपाधिकृतं जन्म वार्यते ह्यजशब्दतः ॥ ३७८ ॥

---

वक्त्वा स वा इत्याद्यवतारयति *तत्रेति ॥ ३७३ ॥ अक्षराणि व्याचष्टे *किमिति । किंज्योतिरेवायं पुरुष इत्यारभ्य अणुः पन्था इत्यादिमन्त्रात्पूर्वतनग्रन्थेन उक्तस्यात्मनः तच्छब्दपरामर्शार्हत्वे युक्तिमाह *मन्त्रस्येति । तच्छब्दस्य व्यवहितपरामर्शत्वानियमादिति भावः ॥३७४॥ स वा एष इत्यत्र स इत्यस्यार्थमुक्त्वाऽवशिष्टपदयोरर्थमाह *अणुरिति । मन्त्रप्रतिपाद्यस्यात्मन एतच्छब्दपरामर्शार्हत्वे हेतुः *आसन्नैरिति ॥ ३७५ ॥ मन्त्रब्राह्मणयोरद्वितीयब्रह्मण एव प्रतिपादितत्वेन भेदप्रसक्तेरभावात्कथं वैशब्दस्याभेदवाचकत्वं तत्राह *मन्त्रेति । पदार्थमुक्त्वा वाक्यं योजयति*स इति ॥ ३७६ ॥ स वा एष इत्यस्यैवार्थान्तरमाह *यद्वेति ॥३७७॥ महानज इतिपदयोरर्थमाह *बुद्धीति ॥३७८॥ योऽयमित्यादेरर्थमाह *वैशब्देति । चतुर्थाध्याये गार्ग्यस्याजात-

श्रुति०–योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय
आकाशस्तस्मिञ्छेते सर्वस्य वशी

वा०–वैशब्दसूचितं जीवब्रह्मैक्यं प्रतिपादितम् ॥
अजातशत्रुणा योऽर्थः स्मर्यते योऽयमित्यतः ॥३७९॥
ब्रह्मत्वादेव जीवस्य भ्रान्तजीवत्ववारणात् ॥
वशित्वाद्याः ब्रह्मधर्माः शिष्यन्तेऽतोऽयमीश्वरः ३८०
जीवत्ववद्वशित्वाद्या यद्यपि भ्रान्तिकल्पिताः ॥
तथाऽप्येते समीचीनाः स्वप्ने मूत्रात्ययो यथा ॥३८१॥
अत एव हि जिज्ञासुं प्ररोचयितुमीरितैः ॥
वशित्वाद्यैः प्रेर्यतेऽसौ यज्ञादौ ज्ञानसाधने ॥ ३८२ ॥
ननु कल्पितधर्माणां स्यान्नो वा ज्ञानबाध्यता ॥
आद्ये त्वीश्वरधर्माणां नाशः स्याज्जीवधर्मवत् ॥३८३॥
द्वितीये जीवधर्माणामप्यनाशोऽन्यधर्मवत् ॥

---

शत्रुणा प्रोक्तं ब्रह्मात्मैक्यं तेनैव वाक्येन स्मर्यते इत्यर्थः ॥३७९॥
सर्वस्य वशीत्यादेरर्थमाह *ब्रह्मत्वादिति । जीवस्य वशित्वादि-धर्मावशेषे फलितमाह *अत इति । वशित्वादिधर्मवत्त्वादेव मुक्तो जीव ईश्वर इत्यर्थः ॥ ३८० ॥ वशित्वादेरपि कल्पितत्वेन तद्वत्ताया अपुमर्थत्वात्कथं तेन मुक्तः स्तूयते इति शंकित्वा परिहरति*जीवत्ववदिति । *मूत्रात्यय इति ॥ स्वप्ने अशुद्धे पादप्रक्षेपवत्तल्लंघनस्याप्यसत्त्वे ऽपि लंघनं यथा प्रीतिहेतुरेवं वशित्वादयः कल्पिता अपि तथेत्यर्थः ॥३८१॥ वशित्वादेः पुमर्थत्वे फलितमाह*अत एवेति ॥३८२॥ ब्रह्मधीसाधनयज्ञादौ प्रवृत्त्यर्थं मुक्तो जीवो सर्वस्य वशीत्यादिना स्तूयते इत्युक्तमयुक्तं, विकल्पासहत्वादिति शङ्कते *नन्विति । आद्यं प्रत्याह*आद्य इति ॥ ३८३ ॥

अतो जन्मादिसत्तायां वशित्वाद्यस्तिता कुतः ३८४
नैवं यतो महान्भेदो विद्यते नाशबाधयोः ॥
रज्जुसर्पो ज्ञानबाध्यो न नाशो भग्नकुंभवत् ॥३८५॥
ततः कालत्रयासत्त्वबोधो बाध इतीर्यते ॥
स्वत एव कदाचिच्चेदसत्ता नाश एव हि ॥ ३८६ ॥
जीवधर्माश्चेशधर्माः सन्तीत्येवं न मे मतम् ॥
असतामेव तेषां तु भानं मायिकमिष्यते ॥ ३८७ ॥
कादाचित्की सतोऽसत्तेत्येष नाशो न तेष्वतः ॥
कालत्रयासत्त्वबोधरूपो बाधस्तु सम्भवेत् ॥ ३८८ ॥
बाधिता अपि भासंते सामग्र्याः सम्भवे सति ॥

---

कल्पितधर्मा न ज्ञानेन बाध्यन्त इति द्वितीयकल्पे दोषमाह* द्वितीय इति । जीवधर्मानिवृत्तौ दोषमाह* अत इति । परवशतया जन्मादिप्रापकजीवत्वादौ सति कुतो वशित्वादिप्राप्तिरित्यर्थः ॥ ३८४ ॥ ज्ञानबाधितस्यापि वशित्वादेरनुवृत्तिरविरुद्धेति परिहरति*नैवमिति । अविरोधं प्रकटयितुं नाशबाधयोर्भेदमाह *यत इति ॥ ३८५ ॥ यस्मान्न नष्टे बाधितत्वधीर्बाधितेऽपि न नष्टत्वबुद्धिस्तस्मादेव तयोर्लक्षणभेदोऽभ्यंगीक्रियते वादिभिरित्याह *तत इति । तयोर्लक्षणभेदस्य सर्वसम्मतत्वद्योती हिशब्दः ॥ ३८६ ॥ एवं नाशबाधयोर्भेदं प्रदर्श्य ईशधर्माणां नाशो नेति वक्तुं सिद्धान्ते सर्वस्यापि द्वैतस्य सद्विलक्षण्यमाह *जीवेति । कथं तर्हि असद्विषयज्ञानस्य सत्त्वमित्याशङ्क्य तद्धीरपि सद्विलक्षणैवेत्याह *असतामिति ॥ ३८७ ॥ सर्वप्रपञ्चस्यासत्त्वे फलितमाह *कादाचित्कीति ॥ ३८८ ॥ कथं तर्हि बाधितस्य प्रतीतिस्तत्राह *बाधिता इति । बाधितानुवृत्तौ का वा

आरब्धशेषः सामग्री तन्निवृत्तौ न भासनम् ॥३८९॥
निवृत्तत्वाज्जीवधर्मा भासन्ते नैव कस्यचित् ॥
अनिवृत्ता ईशधर्मा अकर्मोपादितत्वतः ॥ ३९० ॥
भांति ते त्वीश्वरस्यापि बुद्धानां च स्वबुद्धितः ॥
ईश्वरस्य ततो धर्माः संतु नत्विह विस्मयः ॥ ३९१ ॥
कर्माधीना जीवधर्मा बहुधा क्लेशयन्ति हि ॥
ईशधर्मास्तु नो किञ्चित्क्लेशयन्ति कदाचन ३९२ ॥
तिष्ठत्स्वपीशधर्मेषु धर्माणां मायिकत्वतः ॥
ईशो निर्धर्मको बोध्यो विमुक्त्यर्थं बुभुत्सुभिः ॥३९३॥
तस्मादत्र वशित्वादीन् श्रुतिर्बोधयत्यमून् ॥

---

सामग्रीत्याशङ्क्य किं जीवधर्माणां भाने हेतुं पृच्छसि उत ईशधर्माणां? तत्राद्यमाह *आरब्धेति । जीवधर्मा बोधेन बाधिता अपि प्रारब्धकर्मप्रतिबद्धा न निवर्तन्ते । नहि कर्तृत्वाद्यप्रतीतौ जीवस्य भोगः सम्भवतीत्यतस्ते यावत्तावत् भासन्ते, कर्मक्षये सति तत्स्थापितजीवधर्माणां निवृत्तत्वादेव न कस्यापि ते भान्तीत्यर्थः ॥ ३८९ ॥ ईशधर्मेषु तद्वैलक्षण्यमाह *अनिवृत्ता इति ॥ ३९० ॥ मुक्तस्येश्वराभेदेन वशित्वादिधर्मसद्भावमुक्तमुपसंहरति *ईश्वरस्येति ॥ ३९१ ॥ नन्वनादित्वाविशेषाज्जीवधर्माणामेव कर्माधीनस्थितिकत्वं नेशधर्माणामित्यत्र किं नियामकं तत्राह *कर्मेति । तेषां बहुदुःखहेतुत्वस्य सर्वानुभवसिद्धत्वद्योती हिशब्दः ॥ ३९२ ॥ कथं तर्हि नेतिनेतीत्यादिना निर्विशेषं ब्रह्म बोद्धव्यमित्युक्तं तत्राह *तिष्ठत्स्विति ॥ ३९३ ॥ वशित्वादेरपि श्रुतिप्रतिपाद्यत्वात्कथं मायिकत्वम् इत्याशङ्क्याह *तस्मादिति । यस्मादैदंपर्येण प्रवृत्तैरस्थूलादिवाक्यैर्निर्विशेषं ब्रह्म बो-

किन्तु शाखाग्रवद्वस्तुलक्षकत्वेन वक्ष्यसौ ॥ ३९४ ॥
उपासनेषु ते धर्मा ध्येयत्वेन विवक्षिताः ॥
यथोपासनमेत्येष फलमित्यभिधानतः ॥ ३९५ ॥
वशी सर्वस्येतिवाक्ये स्वातन्त्र्यं चान्यतन्त्रता ॥
उच्यते लोकदृष्टान्तो द्विविधो दृश्यते यतः ॥३९६ ॥
सर्वमेतज्जगत्स्वात्मवशे तस्यात्र वर्त्तते ॥
मन्त्रवादिवशे यद्वत्सकलं भूतभौतिकम् ॥ ३९७ ॥
अयं वा सकलैर्जीवैर्हृदि स्वस्य वशीकृतः ॥
अपत्यैर्जननी यद्वत् स्वेषु स्निग्धा वशीकृता ॥३९८॥
श्रुतिः–सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष

---

ध्येयत्वेनोपदिष्टं, तस्मादत्र श्रुतिर्न वशित्वादीन् ज्ञेयत्वेन बोधयति किन्तु शाखाग्रचन्द्र इतिवत्तटस्थतया निर्विशेषं ब्रह्म लक्षयतीत्यर्थः ॥ ३९४ ॥ ब्रह्मधर्माणां ज्ञेयत्वाभावे कथं छान्दोग्ये अनुविद्य एतांश्च सत्यान्कामानिति तद्धर्माणामपि ज्ञेयत्वोक्तिस्तत्राह *उपासनेष्विति । अनुविद्येसत्र सत्यकामादयो ध्येयत्वेनोपदिष्टा न ज्ञेयत्वेन, अन्यथा निर्विशेषश्रुतिविरोधादिति भावः । तद्ध्यानं वा किमर्थं तत्राह *यथेति । सत्यकामत्वादीनामनुपासने तदर्थिनां तत्प्राप्तिरत्र न स्यादिति तदर्थं तद्ध्यानोपदेश इत्यर्थः ॥ ३९५ ॥ एवं तात्पर्यमुक्त्वा वशीतिपदस्यार्थमाह *वशीति । स्वतन्त्रत्वं परतंत्रत्वं वा सर्वस्य वशीत्यनेनोच्यते इत्यत्र हेतुमाह* लोकेति ॥३९६॥ लोकदृष्टान्तमेव स्पष्टयति *सर्वमित्यादिना ॥३९७॥३९८॥ सर्वस्येशान इत्यस्यार्थमाह *सर्वमि-

भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय ॥

वा०-सर्वमीष्टे जगत्सोऽयं स्वगृहं हि गृही यथा ॥
अधिष्ठाय जगत्सर्वं पाति चैष यथा रविः ॥ ३९९ ॥
कर्मणा सुकृतेनैष नाधिकः स्यात्कथंचन ॥
सुकृतीह यथा लोके भूयान्स्याद्यशआदिना॥ ४०० ॥
कर्मणा पातकेनायं कनीयान्न भवेत्क्वचित् ॥
लघुर्भवति पापेन यथा पापरतो जनः ॥ ४०१ ॥
न कर्मपरतंत्रोऽयं कर्माध्यक्षत्वसंश्रयात् ॥
तस्मादीशत्वाधिपत्ये इत्युक्तार्थोपसंहृतिः ॥ ४०२ ॥
साधारणं च प्रत्येकमिति स्यात्पालनं द्विधा ॥
साधारणं रविः पाति जननी तु विशेषतः ॥ ४०३ ॥
द्वेधाऽपीशः पालकः स्यात्सेतुवद्धारकोऽप्यसौ ॥
मृद्दार्वादिमयः सेतुर्दृश्यते जलधारकः ॥ ४०४ ॥

---

ति । सर्वस्याधिपतिरित्यस्यार्थमाह *अधिष्ठायेति ॥ ३९९ ॥ स न साधुना भूयानित्यादेरर्थमाह *कर्मणा सुकृतेनेत्यादिना॥ ४०० ॥ ४०१॥ तस्य तत्प्रयुक्तभूयस्त्वे कनीयस्त्वाभावे हेतुमाह *न कर्मेति । एष सर्वेश्वर एष भूताधिपतिरित्यनयोः पुनरुक्तिं परिहरति *तस्मादिति । कर्माध्यक्षत्वादेवास्य सर्वेशत्वं सार्वाधिपत्यं चेत्युक्तस्यैवोपसंहारार्थं पदद्वयमित्यर्थः ॥ ४०२ ॥ अधिपतिरित्यनेन पालकत्वोक्तेरेष भूतपाल इत्यस्य पौनरुक्त्यमित्याशंक्याह *साधारणमित्यादिना । उभयथापि पालकत्वकथनार्थं भूतपालशब्द इति न पुनरुक्तिरित्यर्थः ॥ ४०३ ॥ एष सेतुरित्यादेरर्थमाह *सेतुवदिति ॥ ४०४ ॥ एषां लोकानामसम्भेदायेत्य-

एषां भूरादिलोकानामसांकर्यार्थमीश्वरः ॥
सर्वं संभिन्नमर्यादं निर्गच्छति यथायथम् ॥ ४०५ ॥
यद्ययं न भवेल्लोके मर्यादानां विधारकः ॥
महाभूतान्यमून्यत्र को नामान्यो निवारयेत् ॥ ४०६ ॥
आशीविषादिकांस्तद्वत्तामसानतिकोपिनः ॥
निवारयति को नाम सर्वदा प्राणिहिंसने ॥ ४०७ ॥
अम्भोनिधीनगाधोदान्कल्लोलशतमालिनः ॥
निवारयेच्च को नाम जगदाप्लवने सति ॥ ४०८ ॥
इत्यादिकं समग्रस्य लोकस्यास्य विधारणम् ॥
क्रियते येन स ज्ञेयः सेतुरात्मा महेश्वरः ॥ ४०९ ॥
श्रुतिः—तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन ॥
वा०—इत्थं वेद्यस्य तत्त्वस्य रूपं स्पष्टं निरूपितम् ॥
अथोच्यते ज्ञानहेतुर्वेदानुवचनादिकम् ॥ ४१० ॥
बहिरंगं कर्मजातं संन्यासस्यांतरंगता ॥
प्रत्यासन्नतराः शांतिदांत्याद्या इत्यसौ क्रमः ॥४११॥
अधीतवेदस्य जपो यज्ञो दर्शादिकस्तथा ॥

---

स्यार्थमाह *एषामिति । असांकर्यमेव प्रपञ्चयति *सर्वमित्यादिना ॥४०५॥४०६॥४०७॥४०८॥ एष सेतुरित्यादिना वाक्यार्थमुपसंहरति *इत्यादिकमिति ॥४०९॥ वृत्तमनूद्य तमित्यादत्ते *इत्थमिति ॥४१०॥ प्रथमं यज्ञादिसाधननिरूपणे हेतुमाह *बहिरिति ॥४११॥ वेदानुवचनादिशब्दानामर्थमाह *अधीतेति । जपो वेदानुवचनं नामेति शेषः । धनादीनां परस्वत्वापादनमिति

दानं धान्यधनादीनां तपः कृच्छ्रादिरूपकम् ॥ ४१२ ॥
अनाशकं निजाहारसंत्यागो मरणावधिः ॥
एतैर्वेदितुमिच्छन्ति ब्राह्मणाः शास्त्रकोविदाः ॥४१३॥
इच्छेतिरुचिरत्र स्यात्सा चोक्तैः कर्मभिर्भवेत् ॥
पापेन प्रतिबद्धाऽसौ पुण्यैस्तां जनयेद्रुचिम् ॥४१४॥
निश्शेषदुःखनाशस्य स्वानंदप्रापणस्य च ॥
हेतुर्वेदनमित्येवं जानन्सोऽपि न रोचते ॥ ४१५ ॥
अरुच्या पापमूहित्वा तच्च पुण्यैर्विनाशयेत् ॥
उत्पन्नायां रुचौ पुण्यं यज्ञदानादि संत्यजेत् ॥ ४१६ ॥
पुरा यज्ञाद्यनुष्ठानात्प्रतिबंधस्य सम्भवतः ॥

---

शेषः ॥ ४१२ ॥ अनाशकेनेति छेदं कृत्वा तस्यार्थमाह *अनाशकमिति । संकल्पपूर्वकमनशनेन मृतस्य जन्मान्तरे विविदिषोत्पद्यत इति भावः । विविदिषन्ति ब्राह्मणा इत्यनयोरर्थमाह *एतैरिति ॥ ४१३ ॥ नन्विच्छायाः विषयसौन्दर्यलभ्यायाः कथं कर्मसाध्यत्वं तत्राह *इच्छेति । इच्छामात्रस्य विषयसौन्दर्यजन्यत्वेऽपि रुचिशब्दितप्रवृत्तिपर्यन्तेच्छा पुण्यसाध्येत्यर्थः । रुचिरपि विषयसौन्दर्यादेव किमिति नोत्पद्यते तत्राह *पापेनेति । यथा पित्तोपहतरसनस्य सत्यामपीच्छायां क्षीरपाने न रुचिरेवं मलिनान्तःकरणस्य सत्यामपि वेदनेच्छायां न तत्र रुचिर्भवति अतो यज्ञादिभिः पापनिवृत्तिद्वारा ज्ञाने रुचिं जनयेदित्यर्थः ॥ ४१४ ॥ उक्तमेव स्फुटयति* निःशेषेत्यादिना ॥ ४१५ ॥ यज्ञादिकरणस्यावधिमाह* उत्पन्नायामिति ॥ ४१६ ॥ यज्ञादौ त्यक्तेऽपि ज्ञानमुत्पद्यते चेदादावेव त्याज्यं किं तदनुष्ठानक्लेशेन । न च रुच्युत्पत्त्यर्थं तदिति शंक्यं, रुचिं विनापि वाक्यश्रव-

अद्वैतबुद्धिर्नोदेति जगत्सत्यत्वविभ्रमात् ॥ ४१७ ॥
महापापवतां नृणां ज्ञानयज्ञो न रोचते ॥
प्रत्युत ज्ञानयज्ञस्तु प्रद्वेष्यो भासते स्वतः ॥ ४१८ ॥
भोगसारत्वविभ्रांत्या ज्ञाने भोगोघघातिनि ॥
प्रद्वेषोऽशुद्धचित्तस्य महापापवतो भवेत् ॥ ४१९ ॥
शुद्धचित्तस्य यज्ञाद्यैर्विवेकः शुद्धिसंभवः ॥
वैराग्यं ब्रह्मलोकादौ व्यनक्त्यथ सुनिर्मलम् ॥ ४२० ॥
ब्रह्मादिस्तंबपर्यन्ते संसारेऽस्मिन्नसारताम् ॥
बुध्वा भोगान्निवृत्तः सन्प्रत्यक्प्रवणतां व्रजेत् ॥४२१॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ।
कुर्वन्दोषविहीनं तं निजात्मानं बुभुत्सते ॥ ४२२ ॥
महापापस्य नाशः स्यात्कर्मभिस्त्वसकृत्कृतैः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४२३ ॥
प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥ ४२४ ॥
सामर्थ्यमीदृक् चेदस्ति कर्मणां तर्हि किं तव ।

---

णमात्रेण ज्ञानोत्पत्तिसम्भवात्तत्राह* पुरेति । स्वाध्यायकाले श्रुतमपि वाक्यमशुद्धबुद्धेर्जरद्गवादिवाक्यवद्बाधितार्थत्वेन प्रतिभातीत्यर्थः ॥४१७॥ उक्तेऽर्थे स्मृतिमुदाहरति* महापापेति ॥४१८॥ ॥४१९॥एवमशुद्धबुद्धेः श्रवणादौ प्रवृत्त्यभावमुपपाद्य यज्ञादिभिः शुद्धचित्तस्य जिज्ञासाक्रममाह* शुद्धेत्यादिना॥४२० ॥ ४२१ ॥ ॥ ४२२ ॥ नन्वनुष्ठितयज्ञादेरपि पुंसो नास्मिन् जन्मनि शुद्धिर्दृश्यते तत्राह *महापापस्येति ॥ ४२३ ॥ यज्ञादेर्विविदिषाहेतुत्वमुक्तमुपसंहरति* प्रत्यगिति ॥४२४॥ आक्षेपपूर्वकमेतमेवेत्यादि-

ज्ञानेनेति न वक्तव्यं मुनित्वार्थमपेक्षणात् ॥ ४२५ ॥
श्रुतिः—एतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति ॥
वा०–बुभुत्सतेऽयमात्मानं सर्वैर्यज्ञादिकर्मभिः ।
एतमेव विदित्वाऽसौ मुनिर्भवति नान्यथा ॥४२६॥
सदा मननशीलो यो जीवन्मुक्तो मुनिः स हि ॥
स्थितप्रज्ञादिभिः शब्दैर्मोक्षशास्त्रेषु वर्ण्यते ॥ ४२७ ॥
ज्ञानाभावे मुनिः कः स्यात्सत्स्वप्यन्येषु कर्मसु ॥
गृहिणोऽतो विमुक्त्यर्थं स्मर्यते ज्ञाननिष्ठता ॥ ४२८ ॥
न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ॥
श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते ॥४२९॥
पारिव्राज्यस्य वैयर्थ्यमेवं तर्हीति मोच्यताम् ॥
आत्मानं लोकमिच्छन्तः प्रव्रजंति यतः स्वतः ॥ ४३० ॥
लोक्यते दृश्यते योऽर्थः स लोक इति वर्णनात् ॥

---

वाक्यमवतारयति* सामर्थ्यमिति ॥ ४२५ ॥ वृत्तमनूद्या-क्षराणि व्याचष्टे* बुभुत्सत इति ॥ ४२६ ॥ मुनिशब्दार्थमाह* सदेति । स हि, स एवेत्यर्थः ॥ ४२७ ॥ मुनित्वमपि कर्मफलमेवास्तु कर्मणां विचित्रशक्तित्वादिति नेत्याह* ज्ञानेति । मुनित्वं ज्ञानैकसाध्यमित्यत्र हेतुमाह* गृहिण इति । कर्मिणामपि गृहीणां मुक्तये पृथग्ज्ञाननिष्ठाविधानान्मुनिशब्दितजीवन्मुक्तिर्न कर्मसाध्येत्यर्थः ॥ ४२८ ॥ गृहीणां ज्ञाननिष्ठाविधायकस्मृतिमुदाहरति* न्यायेति ॥ ४२९ ॥ गृहस्थस्यापि चेल्लभ्यते मुक्तिर्हन्त तर्हि किं स्त्रीपुत्रादित्यागलक्षणेन दुष्करेण संन्यासेनेत्याशंक्य तदुत्तरत्वेनोत्तरवाक्यमादत्ते* पारिव्राज्यस्येति ॥ ४३० ॥ लो-

आत्मदर्शनहेतुः स्यात्पारिव्राज्यं विशेषतः ॥ ४३१ ॥
अरुचिप्रतिबन्धस्य कर्मभिः प्रक्षये सति ॥
गृहस्थो वा परिव्राड् वा शास्त्रेणात्मानमीक्षते ॥४३२॥
जनकोषस्तगार्ग्यादेर्न स्याद्वेदनमन्यथा ॥
सुलभं तु परिव्राजो बहुविघ्नपवर्जनात् ॥ ४३३ ॥
सोढ्वाऽपि कर्मविक्षेपं ज्ञाननिष्ठो भवेद्यदि ॥
विमुच्यते गृहस्थोऽपि प्रव्रजंत्यन्यथा पुनः ॥ ४३४ ॥
अतो विदित्वेतिवाक्यं सामान्यविषयं भवेत् ॥
प्रव्रजन्तीति वाक्यं तु विशेषेण प्रवर्त्तते ॥ ४३५ ॥
सकृद्बोधो वेदनं स्यान्मुनित्वं ज्ञानशीलता ॥

---

कामिच्छन्त इत्युक्त्या संन्यासस्य लोकहेतुत्वं श्रूयते न ज्ञानहेतुत्वं तत्राह* लोकयत इति ॥ ४३१ ॥ उक्तमर्थं संगृह्याह* अरुचीति ॥ ४३२ ॥ संन्यासस्य ज्ञानहेतुत्वश्रवणादेव गृहीणां ज्ञानमेव नास्तीत्याशंक्य जनकादीनां तत्त्ववित्त्वप्रतिपादकश्रुतिविरोधान्मैवमित्याह *जनकेति । कथं तर्हि संन्यासस्याविशेषतो ज्ञानहेतुत्वमुक्तमित्याशंक्य दण्डधारणाद्याश्रमरूपसंन्यासस्य दृष्टद्वारैव हेतुत्वमित्याह* सुलभमिति ॥ ४३३ ॥ विक्षेपाभावं दृष्टफलमनिच्छतां तु न संन्यासापेक्षेत्याह* सोढ्वेति । अन्यथा विक्षेपासहने ॥ ४३४ ॥ एतमेवेत्यादिवाक्यद्वयार्थं निगमयति* अत इति ॥ ४३५ ॥ विदित्वा मुनिर्भवतीत्यत्र वेदनमुनित्वयोरेकार्थत्वान्न तयोः साध्यसाधनभाव इत्याशंक्य ताभ्यां विवक्षितमाह* सकृदिति । फलभेदादपि तयोर्भेदमाह* अज्ञानेति । अत्राज्ञानशब्देन जगत्सत्यत्वविभ्रमापादकाज्ञानांशो विवक्षितः, नत्वखण्डानन्दावरकाज्ञानम् । अन्यथा गृहस्थस्यापि ज्ञाननिष्ठाविधान-

अज्ञानहानिर्बोधात्स्याज्जीवन्मुक्तिर्मुनित्वतः ॥ ४३६ ॥

श्रुतिः–एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा ॥

वार्ति०–जीवन्मुक्तिरभीष्टा चेद्विद्वत्संन्यासमाचरेत् ॥
एतद्ध स्मेतिवाक्येन तदेतदभिधीयते ॥ ४३७ ॥
अपत्यैः किं करिष्यामः सर्वदा दुःखहेतुभिः ॥
परमानन्द आत्माऽयमस्माभिर्वीक्ष्यतेऽनिशम् ॥४३८॥
इति मत्वा तत्त्वविदो व्युत्थायाथैषणात्रयात् ॥
भिक्षया देहनिर्वाहं कुर्वन्तः सुखमासते ॥ ४३९ ॥
परिव्राड्भिर्बुद्ध आत्मा कीदृगित्यभिशङ्किते ॥
स एष नेतिनेतीति श्रुतिराहोत्सुका सती ॥ ४४० ॥
ननु भिक्षादिना देहपोषणादौ समे सति ॥
आत्मतत्त्वविदः कोऽतिशयो मूढादितीर्यताम् ॥४४१॥

---

विरोधादिति ध्येयम् ॥४३६॥ उत्तरवाक्यस्य पातनिकामाह* जीवदिति । तदेतदिति । तत्पारिव्राज्यम् एतज्जीवन्मुक्तिसाधनमित्येतद्धस्मेत्याद्यर्थवादेनोच्यत इत्यर्थः ॥४३७॥ एतेन श्रुतिगततदेतत्पदे व्याख्याते अवशिष्टपदानि व्याचष्टे* अपत्यैरिति द्वाभ्याम् । पुत्रैषणादिशब्दानामर्थः कहोलब्राह्मणोक्तोऽनुसन्धेयः ॥ ४३८ ॥ ॥ ४३९ ॥ स एष इत्यादिवाक्यमाकांक्षापूर्वकमवतारयति *परिव्राड्भिरिति ॥४४०॥ एवमु हेत्याद्युत्तरश्रुतिव्यावर्त्यां शङ्कामाह* नन्विति ॥ ४४१ ॥ श्रुतिवाक्यमादाय परिहरति* सर्वे-

सर्वेषामपि मूढानां चिंते स्तः पुण्यपापयोः ॥
निमित्तमेते आत्मज्ञे चिंते द्वे प्राप्नुतो नहि ॥ ४४२ ॥
अतो मोहाद्धनं लब्धुमाकांक्षं दुष्प्रतिग्रहम् ॥
अतः कामात्स्वर्गमाप्तुमकार्षं दानमुत्तमम् ॥ ४४३ ॥
इति चिन्ते पुण्यपापविषये पुरुषं सदा ॥
प्राप्नुतः, प्राप्य तच्चिन्ते तापं जनयतः खलु ॥४४४॥
करणात्तापयेत्पापं कर्तारि स्वफलेन च ॥
सुकृतं करणात्तद्वत्स्वफलस्य क्षयादिना ॥ ४४५ ॥
यदा न प्राप्नुतश्चिन्ते उभे तत्त्वविदं तदा ॥
न तापयत इत्येवं किमु वक्तव्यमस्ति हि ॥ ४४६ ॥

षामिति ॥ ४४२ ॥ अतः पापमित्यादि व्याकुर्वन्मूढानां पुण्यपापयोर्निमित्तं द्वे चिन्ते भवत इत्युक्तमुपपादयति* अतो मोहादिति ॥ ४४३ ॥ न केवलं मूढस्य चिंतामात्रं तत्प्रयुक्तदुःखं च भवतीत्याह* प्राप्येति ॥ ४४४ ॥ कृतस्य कर्मणस्तापहेतुत्वमाह* करणादिति । पापं हि करणादनन्तरमेव कर्तारमनुतापेन तापयत्यनन्तरं नरकादिदानेन । पुण्यं तु करणसमये शरीरक्लेशादिना पश्चात्स्वर्गफलप्रयुक्तगर्वादिना फलनाशेन च तापयतीत्यर्थः ॥ ४४५ ॥ एवं मूढस्य सफलां चिंतामुपपाद्य विदुषश्चिंताभावमुक्तमुपसंहरन्वक्ष्यमाणश्रुत्यभिप्रेतं तापाभावं कैमुतिकन्यायेन दर्शयति* यदेति ॥ ४४६ ॥ उभे उ हेत्यादि व्याचष्टे* उभे उ हेति ।

इयमत्र श्रुत्यक्षरयोजना । एव विद्वानेते उभे पुण्यपापे तरत्येव अतिक्रामत्येव, उ ह किल आत्मानं कर्तृत्वेन नाभिमन्यत इति यावत् । यस्मादेवं तस्मादतः पापमकरवम् अतः कल्याणमकरवम्

श्रुतिः–उभे ह्येते एषणे एव भवतः। स एष नेति ने-
त्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यते ऽसङ्गो
नहि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते
न तरत इत्यतः पापमकरवमित्यतः कल्याणमकर-
वमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२१॥

उभे उ हेतिहेतूक्तिस्तच्चिन्ताया असम्भवे ॥
पुण्येन भूयान्पापेन कनीयान्वा भवेन्न यः ॥ ४४७ ॥
सोऽहमात्मेति विज्ञाते कर्मणोऽवसरः कुतः ॥
कृते देहादिभिस्ते द्वे अकृते वा द्विधाऽपि च ॥ ४४८ ॥
एनं तत्त्वविदं ते द्वे नैव तापयतः क्वचित् ॥
स्वयं न कुरुते तस्मात्तत्प्राप्तिश्च न विद्यते ॥ ४४९ ॥
नाप्राप्तयोस्तापकत्वं विद्यते परकीययोः ॥

---

इत्येते चिते एनं विद्वांसं न तरतः न स्पृशत एवेति ॥ २२ ॥

एतदेवोपपादयति* पुण्येनेति । पुण्यादिभिरुत्कर्षादि-
रहितं ब्रह्मत्वेनात्मानमनुभवतो देहादिकं च परदेहवत्पृथक्त्वेन
पश्यतः कर्मण एवाभावात्कुतस्तन्निमित्तचिन्तेति भावः ॥४४७॥
नैनमित्यादि व्याचष्टे* कृत इति । एवं विद्वांसं कृते वाऽकृते
वा ते द्वे पुण्यपापे मूढमिव न तापयत इत्यर्थः ॥ ४४८ ॥ क-
र्मणोऽवसरः कुत इति विदुषः कर्माभावमुक्तं प्रपञ्चयति* स्व-
यमिति । यस्मादिति शेषः ॥४४९॥ विदुषः कर्तृत्वाभिमानराहित्येन
कर्माश्लेषे फलितमाह* नेति । अज्ञस्य तद्वैलक्षण्यमुक्तं स्मारयन्नकृ-
तयोरपि पुण्यपापयोस्तापहेतुत्वं श्रुतिसूचितं प्रतिज्ञापूर्व-

मूढस्य तूभयोः कर्त्तुस्तापः पूर्वमुदाहृतः ॥ ४५० ॥
अकर्त्तुरपि यत्ताप इहोदाह्रियते स्फुटम् ॥
गर्वेण महता पापमकर्त्तारं प्रतापयेत् ॥ ४५१ ॥
पुण्यं च फलराहित्यादकर्तुस्तापदं भवेत् ॥
देहादिरक्षासाम्येऽपि कर्मतापस्य वर्जनम् ॥ ४५२ ॥
मूढाद्विशेषोऽभिज्ञस्य तावता कृतकृत्यता ।
ब्राह्मणे विस्तृतो योऽर्थो मन्त्रे संक्षिप्यते स हि ॥४५३॥
एष इत्यादिको मन्त्रस्तदर्थस्तूपवर्ण्यते ।

श्रुति–तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतः ॥

वा०–अद्वैतपरमानन्दमहिमाऽऽत्मविदोऽस्ति यः ॥४५४॥

---

कमुपपादयति* मूढस्येत्यादिना ॥ ४५० ॥ ४५१ ॥ भिक्षादिना देहपोषणसाम्यान्न मूढबुद्धयोर्विशेष इति चोद्यं परिहृत्य एतमित्यादिवाक्यतात्पर्यं निगमयति* देहेति ॥ ४५२ ॥ पुनरुक्तिं परिहरन्नेष इत्याद्यवतार्य तदक्षराणि व्याख्यातुं प्रतिजानीते* ब्राह्मण इति ॥४५३॥ मन्त्रस्य पूर्वार्द्धं व्याचष्टे* अद्वैतेति । ब्राह्मणपदव्याख्या आत्मविद इति । न वर्द्धत इत्यादौ हेतुः कर्मजयोरिति । कर्मसाध्ययोरित्यर्थः । तस्यैव स्यात्पदविदित्यस्यार्थमाह *आत्मन इति । यस्मादात्मविद एव महिमा ऽस्ति तस्मादात्मनो यत्पदं तत्त्वं तद्विद्भवेत, तज्ज्ञानसाधनमनुतिष्ठेदित्यर्थः । मंत्रशेषं व्याचष्टे* एनमिति । पापशब्दः पुण्यस्याप्युप-

एष नित्यः कर्मजयोर्ह्रानिवृद्ध्योरभावतः ॥
आत्मनो यत्पदं तत्त्वं तदभिज्ञः पुमान्भवेत् ॥
एनं विदित्वा पापेन कर्मणा नैव लिप्यते ॥ ४९५ ॥
बहिरङ्गं पुरा प्रोक्तं वेदानुवचनादिकम् ॥
तत्संन्यासोऽन्तरंगत्वात्तत ऊर्ध्वमुदीरितः ॥ ४९६ ॥
अन्तरङ्गतरा ये ते शान्तिदान्त्यादयोऽखिलाः ॥
वक्तव्या इत्यभिप्रेत्य श्रुतिस्तत्र प्रवर्त्तते ॥ ४९७ ॥
शान्तिः क्रोधपरित्यागो दान्तिर्बाह्याक्षनिग्रहः ।
शान्तो मुनिर्बलीवर्दो दान्त इत्युक्तिदर्शनात् ॥४९८॥
शमादिगुणसिध्यर्थं मोक्षशास्त्रेष्वनेकधा ।
विवेको वर्णितस्तच्च सदा शास्त्रं विचिन्तयेत् ॥४९९॥
अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते ।

---

लक्षणम् ॥४९४॥४९५॥ तस्मादित्यादिवाक्यं वृत्तानुवादपूर्वकमवतारयति* बहिरङ्गमित्यादिना । तदिति गतम् । तस्माद्वेदानुवचनादेरिति यावत् । तस्मादेवंविदितिश्रुतौ ज्ञानिनः कर्मलेपाभावः पञ्चम्यर्थः । एवंवित् यथोक्तफलं विद्वानित्यर्थः ॥४९६॥४९७॥ शान्तो दान्त इत्यत्र शान्तिदान्तिपदयोरर्थमाह* शान्तिरिति । तत्र वृद्धप्रयोगं प्रमाणयति* शान्त इति ॥ ४९८ ॥ उक्तशान्त्यादिसिद्धेरुपायमाह* शमादीति ॥

न शब्दशास्त्राभिरतस्य मोक्षो न चापि लोकग्रहणे रतस्य ॥
न भोजनाच्छादनगर्वितस्य न चापि रम्यावसथप्रियस्य ॥
आरण्यनित्यस्य जितेन्द्रियस्य सर्वेन्द्रियप्रीतिविवर्जितस्य ।
अध्यात्मचिन्तागतमानसस्य ध्रुवा ह्यनावृत्तिरपेक्षकस्य ॥
इत्यादिशास्त्राद्विवेकं संपादयेदित्यर्थः ॥४९९॥ तत्र तावत्क्रोध-

धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ ४६० ॥
न पाणिपादचपलो न नेत्रचपलो यतिः ।
नच वाक्चपलश्चैवमिति शिष्टस्य लक्षणम् ॥ ४६१ ॥
पुमर्थः कर्मणा नेति धीरेषोपरतिर्भवेत् ।
न कर्मणा न प्रजयेत्यादिशास्त्रमधीयते ॥ ४६२ ॥
श्रुतिः-तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति ॥
वा०-अवश्यभोज्यं प्रारब्धं प्राप्तद्वंद्वसहिष्णुता ॥
तितिक्षा, नहि तद्द्वंद्ववर्जनोपाय ईक्ष्यते ॥ ४६३ ॥
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ॥
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥४६४॥
समाहितत्वमैकाग्र्यं मनसः श्रवणादिषु ।
दृश्यते त्वग्र्यया बुध्येत्यस्यैतत्काठके वचः ॥४६५॥
श्रद्धावित्तत्वमप्येकं प्रोक्तं माध्यन्दिनैरिह ।

---

निवृत्तेरुपायं विवेकमाह* अपकारिणीति ॥४६०॥ शान्तेरुपायमुक्त्वा दान्तिसिद्धये उपायमाह* नेति ॥४६१॥ उपरतिशब्दार्थमाह *पुमर्थ इति । आत्यन्तिक इति । शेषः। तत्र मानमाह* नेतीति॥४६२॥ तितिक्षाशब्दार्थमाह* अवश्येति । तस्य प्रतीकारानिवर्त्यत्वभ्रमं वारयति* नहीति । तदुक्तम्—

अवश्यंभाविभावानां प्रतीकारो भवेद्यदि ॥
तदा दुःखैन लिप्येयुर्नलरामयुधिष्ठिरा इति ॥ ४६३ ॥

द्वंद्वस्य सोढव्यत्वे गीतावाक्यं प्रमाणयति* मात्रेति ॥ ४६४ ॥ समाहित इत्यस्यार्थमाह* समाहितत्वमिति । ऐकाग्र्यस्य ज्ञानहेतुत्वे मानमाह* दृश्यत इति ॥ ४६५ ॥ शा-

विश्वासातिशयः श्रद्धा वाक्येषु गुरुशास्त्रयोः॥४६६॥
श्रद्धाभक्तिज्ञानयोगादित्याथर्वणिकं वचः।
श्रद्धावांल्लभते ज्ञानमित्याह भगवानपि ॥ ४६७॥
रुचिमान्कर्मसंन्यासी युक्तः शमदमादिभिः।
मुख्याधिकारी भूत्वाऽसावात्मन्यात्मानमीक्षते।४६८॥
देहेन्द्रियादिसाक्षित्वात्स्वानुभूत्येकमानतः।
तस्मिन्नेव परात्मानं शास्त्रसिद्धं प्रपश्यति ॥ ४६९ ॥
आधाराधेयभावोऽयमेकस्मिन्नौपचारिकः।
राहोर्मूर्द्धेतिसंबन्ध उपचाराद्यथा तथा ॥ ४७० ॥
एवकारो भेदनुत्त्यै जीवात्मपरमात्मनोः।
स्वात्मानमेव ब्रह्मेति ह्यखण्डत्वेन पश्यति ॥ ४७१ ॥
स्वात्मा यद्यपि दृष्टश्चेद् द्रष्टव्यं नावशिष्यते।

---

स्वान्तरोक्तं श्रद्धावित्तपदं व्याचष्टे* श्रद्धेति। श्रद्धैव वित्तं धनं यस्य स तथोक्तः, श्रद्धालुर्भवेदिति यावत् ॥४६६॥ तस्याः ज्ञानहेतुत्वे मानमाह*श्रद्धेति ॥४६७॥ अक्षरार्थमुक्त्वा तमेतमित्यादिवाक्यार्थं संगृह्णाति* रुचिमानिति ॥४६८॥ आत्मन्येवात्मानमित्यस्यार्थमाह* देहेति। यस्तु प्रमात्राद्युत्पत्तिविनाशसाक्षित्वेन स्वमहिम्नैव स्फुरति तस्मिन्नुपनिषदेकवेद्यं परमात्मानं पश्यति। त्वंपदलक्ष्यं चैतन्यं निरतिशयात्मत्वेन पश्यतीत्यर्थः ॥ ४६९ ॥ कथं तर्हि तयोराधाराधेयभावेन भेदनिर्देशस्तत्राह* आधारेति ॥४७०॥ आत्मन्येवेत्यत्रैवकारार्थमाह* एवकार इति। भेदाभावेनात्मनीति सप्तम्या अविवक्षितत्वे वाक्ययोजनाप्रकारमाह* स्वात्मानमिति ॥ ४७१ ॥ परमात्मनः प्रत्यगभिन्नत्वे स्वात्मतत्त्वं प-

तथाऽप्यन्यः परात्मेति भ्रान्तिनुत्यै श्रुतेर्वचः ॥ ४७२॥

श्रुति०—सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजः ॥

वा०—परमात्मा यथा नान्यस्स्वात्मनोऽस्ति जगत्तथा ॥
इति वक्ति श्रुतिः सर्वमात्मानमितिवाक्यतः ॥४७३॥
जडाजडं जगच्चच द्वयं तत्स्वात्मनाऽऽत्मवत् ॥
आत्मनश्चेत्पृथक् तत्स्यान्निरात्मकमसद्भवेत् ॥४७४ ॥
जीवेशजगतां तत्त्वमखण्डैकरसं ततः ॥
इति पश्यति यस्त्वेनं पाप्मा नाप्नोति कश्चन ॥४७५॥
पुण्यं च जन्महेतुत्वादत्र पाप्मेति वर्ण्यते ॥
कर्महानिः पूर्वमुक्ता या तस्या उपसंहृतिः ॥ ४७६ ॥
उल्लंघयेन्न पाप्मैनं स तं प्रत्युत लंघयेत् ॥
पाप्मा तापयते नैनं स तं प्रत्युत तापयेत् ॥ ४७७ ॥

---

श्यतीत्येवालं किमेवकारेणेत्यत आह* स्वात्मेति ॥ ४७२ ॥ सर्वमात्मानं पश्यतीतिवाक्यमवतार्य व्याचष्टे *परमात्मेत्यादिना । चेतनाचेतनात्मकं यज्जगत्तस्योभयस्याप्यात्मनि कल्पितत्वेन तत्सत्तातिरिक्तसत्ताभावात्सर्वस्यात्ममात्रत्वं युक्तमित्यर्थः ॥४७३॥४७४॥ सर्वस्य द्वैतस्य पृथक्सत्ताभावे फलितं वदन्नैनं पाप्मा तरतीत्यस्यार्थमाह *जीवेत्यादिना ॥ ४७५ ॥ एतमु हेत्यादिना विदुषः पुण्यपापास्पृष्टेरुक्तत्वादस्य पौनरुक्त्यमाशंक्याह *कर्मेति ॥ ४७६ ॥ सर्वमित्यादेरर्थमाह *उल्लङ्घयेदिति । नैनं पाप्मेत्यादेरर्थमाह *पाप्मेति ॥ ४७७ ॥ पाप्मा विद्वांसं न तरतीत्यादिविशेषणं व्यर्थं, यतोऽचेतनः पाप्मा कुल्यामिव चैत्रोऽ-

कर्माधीनत्वमापाद्य मूढं पाप्माऽतिलङ्घयेत् ॥
जन्मादिदुःखदानेन मूढं पाप्माऽतितापयेत् ॥ ४७८ ॥
कर्माध्यक्षस्वरूपत्वाज्ज्ञानी कर्मातिलंघयेत् ॥
ज्ञानाग्निना दहेत्कर्म स्वात्माऽविद्यासमुत्थितम् ॥४७९॥
विपापो विरजस्कोऽयं पापाविद्याविवर्जनात् ॥
श्रुतिः—अविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान्ददामि मां चापि सह दास्यायेति ॥२३॥
स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥ २४ ॥
वा०—यस्मादविचिकित्सोऽतो ब्राह्मण्यं मुख्यमस्य हि४८०
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥
सर्वसंशयविच्छेदे भवति ब्राह्मणो बुधः ॥ ४८१ ॥
अथ ब्राह्मण इत्येवं जीवन्मुक्ताभिधानतः ॥
स एव ब्राह्मणोऽत्र स्यान्न जात्या जातिबाधनात् ४८२
ब्रह्मत्वमेव ब्राह्मण्यमित्यभिप्रायमात्मनः ॥

---

ग्निरिवाश्रयं नाज्ञानमपि तरति तपति चेत्याशंक्य तरणादिशब्देन विवक्षितमाह *कर्मेति द्वाभ्याम् ॥४७८॥४७९॥ विपापो विरजो ऽसनयोर्विशेषणयोरर्थमाह *विपाप इति । अविचिकित्सो ब्राह्मण इति पदद्वयं हेतुहेतुमद्भावेन योजयति *यस्मादित्यादिना ॥४८०॥४८१॥ उक्तस्मृत्या अविचिकित्सायाः ज्ञानहेतुत्वेऽपि कथं ब्राह्मण्यहेतुत्वं तत्राह *अथेति ॥४८२॥ न केवलमुक्तश्रुत्या ब्राह्मणशब्दस्य ब्रह्मवित्परत्वं किन्तूत्तरवाक्यपर्यालोचनयाऽपी-

विशदीकर्तुमाहैष ब्रह्मलोक इतीदृशम् ॥ ४८३ ॥
यो वेदैष ब्रह्मलोको नतु मानुषविग्रहः ॥
ब्रह्मैव लोक इत्येवं पूर्वमेवोपपादितम ॥ ४८४ ॥
समाधनाया विद्यायाः संपूर्णत्वादयं नृपः ॥
स्वदेहसहितं राज्यं गुरवेऽस्मै न्यवेदयत् ॥ ४८५ ॥
आख्यायिकां परित्यज्य श्रुतिः स्वमुखतः पुनः ॥
स वा इत्यादिना वक्ति ब्रह्मोपास्ति फलार्थिनाम्४८६॥
पूजार्थं भक्तदत्तान्नमत्तीत्यन्नाद उच्यते ॥
वसुदाता च भक्तेभ्यः स एष परमेश्वरः ॥ ४८७ ॥
पूजास्वीकारदातृत्वगुणयुक्तं महेश्वरम् ॥
य उपास्ते पुमानेष यथेष्टं लभते धनम् ॥ ४८८ ॥
श्रुतिः– स वा एष महानज आत्माऽजरोऽमरोऽमृतो ऽभयो ब्रह्माभयं वै ब्रह्माभय१ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

इत्युपनिषदि चतुर्थं ब्राह्मणं समाप्तम् ।

---

त्याह *ब्रह्मत्वमिति ॥ ४८३ ॥ तात्पर्यमुक्त्वाऽक्षराणि व्याचष्टे *य इति ॥ ४८४ ॥ सोऽहमित्यादेस्तात्पर्यमाह *समाधनाया इति ॥ ४८५ ॥ उत्तरकण्डिकामवतारयति *आख्यायिकामिति ॥ ४८६ ॥ अन्नादवसुदानशब्दयोरर्थमाह *पूजार्थमिति ॥ ४८७ ॥ विंदते वसु एवं वेदेत्यस्यार्थमाह *पूजेति । विंदते वस्वित्यस्य व्याख्या लभते धनमिति ॥ ४८८ ॥ स वा इत्यादिकण्डिकान्तरं व्याचष्टे *विद्वादिति ? । स एष आत्मा ब्रह्मेति प्रथमं सम्बन्धः । फलदातुरीश्वरात फलस्वीक-

वा०-विद्वद्दृष्ट्या स एवात्मा जरामरणवर्जितः ॥
आनंदो भयहीनश्च ब्रह्मैवातो न चेतरः ॥ ४८९ ॥
द्वितीयाज्जायते भीतिर्ब्रह्म द्वैतविवर्जनात् ॥
अभयं, तत्प्रसिद्धिस्तु वैशब्देनात्र वर्ण्यते ॥ ४९० ॥
य एष ब्रह्म जानाति तद्ब्रह्मैव भवत्यसौ ॥
हिशब्दोऽशेषवेदान्तप्रसिद्धिं सूचयेदिह ॥ ४९१ ॥

इति वार्त्तिकसारे चतुर्थाध्याये चतुर्थब्राह्मणं समाप्तम् ।

मधुकाण्डे याज्ञवल्क्यकाण्डे विज्ञानमीरितम् ॥
तत्सर्वमुपसंहर्तुं मैत्रेयीब्राह्मणं भवेत् ॥ १ ॥
वक्तव्यश्च विशेषोऽत्र पूर्वोक्तादधिको नहि ॥
इति सूचयितुं शेषस्तत्पाठः पुनरुच्यते ॥ २ ॥
यद्यप्यतीतकाण्डे ऽस्ति मधुब्राह्मणमुत्तमम् ॥

---

र्त्तुर्भिन्नत्वात्कथमैक्यमित्याशंक्याज्ञदृष्ट्या पूर्वं तयोर्भेद उक्तो न वस्तुत इति मत्वाऽऽह *विद्वद्दृष्ट्येति । अजर इत्यादिपदान्यात्मनो ब्रह्मत्वे हेतुपरतया व्याकरोति *जरेति ॥ ४८९ ॥ अभयं वै ब्रह्मेत्येतद् व्याचष्टे *द्वितीयादिति ॥ ४९० ॥ अभयं हीत्यादिफलवाक्यं व्याचष्टे *य इति ॥ ४९१ ॥

इति वार्त्तिकसार टीकायां चतुर्थब्राह्मणं समाप्तम् ।

एवमक्षरब्राह्मणं सपरिकरं व्याख्याय मैत्रेयीब्राह्मणतात्पर्यमाह *मध्वेति ॥ १ ॥ अस्योपसंहारमात्रपरत्वं नातिरिक्तप्रतिपादकत्वमित्यत्र लिङ्गमाह *वक्तव्य इति ॥२॥ काण्डद्वयप्रतिपादितविज्ञानोपसंहारायेदं ब्राह्मणमित्युक्तमयुक्तं, मधुकांडस्य मधुब्राह्मणेनैवोपसंहृतत्वादिति शंकित्वा परिहरति *यद्यपीति ।

अयं भावः--मधुब्राह्मणस्यानेकार्थत्वं तावदुक्तं, तस्य हेत्व-

तथापि याज्ञवल्क्येन सम्बन्धायेदमुच्यते ॥ ३ ॥

इति वार्त्तिकसारे चतुर्थाध्यायस्य पञ्चमं ब्राह्मणं समाप्तम् ॥

उपसंहृत्य तां विद्यां काण्डवंशोऽथ वर्ण्यते ॥
स व्याख्यातः पूर्वमेव ब्रह्माप्त्यै जप्यतामिति ॥ १ ॥
नवत्यधिकसंख्याताः श्लोका नवशतानि च ॥
संति वार्त्तिकसारेऽस्मिन् षष्ठाध्यायस्य संग्रहे ॥ २ ॥

इति वार्त्तिकसारे चतुर्थाध्यायस्य षष्ठब्राह्मणं समाप्तम् ॥

श्रुतिः-अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी

---

सिद्धिनिराकरणपरत्वे इदं ब्राह्मणं काण्डद्वयार्थोपसंहारपरम् । तस्य मधुकांडार्थनिगमनपरत्वे इदं मुनिकाण्डार्थमात्रनिगमनपरमिति ॥ ३ ॥

इति वार्त्तिकसारटीकायां पञ्चमं ब्राह्मणं समाप्तम् ।

विद्योपसंहारानन्तरं वंशवर्णनवैयर्थ्यमाशंक्य चतुर्थोक्तमर्थं स्मारयति *स व्याख्यातः पूर्वमेवेति ॥ १ ॥

इति वार्त्तिकसारटीकायां षष्ठब्राह्मणं समाप्तम् ॥

मैत्रेयीब्राह्मणे पूर्वं यान्यक्षराणि अविभक्तानि तानि विभज्यन्ते। प्रतिज्ञातार्थप्रतिपादनानंतर्यमथशब्दार्थः । प्रतिज्ञातार्थं प्रतिपाद्यानेन ब्राह्मणेन स एवोपसंह्रियत इति भावः । हशब्दो वृत्तावद्योतकः । ब्रह्मवादिनी ब्रह्मवदनशीला । स्त्रीप्रज्ञेति । स्त्रियां या उचिता प्रज्ञा गृहप्रयोजनान्वेषणलक्षणा सा स्त्रीप्रज्ञा, सैव यस्याः प्रज्ञा सा स्त्रीप्रज्ञा। तर्हि तस्मिन्काले बभूवेत्यनुषङ्गः। अथ

बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥

सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताऽऽहो ३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳस्यादमृतत्वस्य तु नाशाऽस्ति वित्तेनेति ॥ ३ ॥

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे विब्रूहीति ॥ ४ ॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद् व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो

---

एवं दर्शितरीत्या भार्याद्वितये स्थिते सतीत्यर्थः । ह किल पूर्वस्माद्गार्हस्थ्यलक्षणाद् वृत्तादन्यत् पारिव्राज्यलक्षणमुपाकरिष्यन्ननुष्ठानं चिकीर्षुः सन्मैत्रेयीं ज्येष्ठां भार्यामामंत्र्य उवाच ह प्रव्रजिष्यन्पारिव्राज्यं करिष्यन्वै अरे मैत्रेयि अस्मात्स्थानाद्गार्हस्थ्यादहमस्मि भवामि । हंतेत्यादि समानार्थं पूर्वेण ॥ १ ॥ २ ॥ स होवाच प्रियैव खलु नोऽस्मभ्यं भवती भवन्ती सती प्रियमेवावृधत्, अतः वर्धितवत्यसि, अतस्तुष्टोऽहं हंत इच्छसि चेदमृतत्वसाधनं ज्ञातुं हे भवति ते तुभ्यं अमृतत्वसाधनं व्याख्यास्यामि कथयिष्यामि ॥ ५ ॥

भवत्यात्मनस्तु कामाय पतिः प्रियो भवति, न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति, न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवंति,न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति, आत्मनस्तु कामाय वित्तं प्रियं भवति, नवा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति, नवा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति, न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति, नवा अरे लोकानां कामाय लोकाः प्रिया भवंति आत्मनस्तु कामाय लोकाः प्रिया भवंति, नवा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवंति, न वा अरे वेदानां कामाय वेदाः प्रिया भवंत्यात्मनस्तु कामाय वेदाः प्रिया भवंति, नवा अरे भूतानां कामाय भूतानि प्रियाणि भवंत्यात्मनस्तु कामाय भूतानि प्रियाणि भवंति, नवा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदꣳ सर्वं विदितम् ॥ ६ ॥

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद, क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद, लोकास्तं परादुर्यो ऽन्यत्रात्मनो लोकान् वेद, देवास्तं परादुर्योऽन्यत्रात्म-

नो देवान् वेद, वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद, भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद, सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा शंखस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शंखस्य तु ग्रहणेन शंखध्मस्य वा शब्दो गृहीतः ॥ ९ ॥

स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरंत्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टꣳहुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ ११ ॥

स यथा सर्वासामपाꣳसमुद्र एकायनमेवꣳसर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳसर्वेषाꣳरसानां जिह्वैकायनमेवꣳसर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳश्रोत्र-

मेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

स यथा सैंधवघनोऽनंतरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनंतरो ऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥

सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहांतमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरे ऽयमात्मा ऽनुच्छित्तिधर्मा ॥ १४ ॥

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरꣳरसयते

---

अत्रैव मा भगवानिति ॥ भवानत्र एतस्मिन्नेव वस्तुनि प्रज्ञानघन एव न प्रेत्य संज्ञाऽस्तीति मोहांतं मोहमध्यमापीपिपत् गमितवानसि मोहितवानसीति यावत् । अतो न वै अहमिममात्मानमुक्तलक्षणं विवेकतो जानामीति ॥ स होवाच नाहं मोहं ब्रवीमीति ॥ अविनाश्ययमात्मा । नाशशब्दोऽत्र विक्रियापरः, अविक्रिय आत्मेत्यर्थः ॥ अरे मैत्रेयि अयमात्मा प्रकृतः अनुच्छित्तिधर्मा ॥ उच्छित्तिर्विनाशो धर्मोऽस्येत्युच्छित्तिधर्मा न उच्छित्तिधर्माऽनुच्छित्तिधर्मा । विक्रिया विनाशो वा नास्य विद्यत इत्यर्थः ॥ विरोधसमाधानं तु पूर्वोक्तमनुसंधेयम् ॥ १४ ॥

तदितर इतरमभिवदति तदितर इतरꣳशृणोति तदितर इतरं मनुते तदितर इतरꣳ स्पृशति तदितर इतरं विजानाति ॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कꣳरसयेत्तत्केन कमभिवदेत्तत्केन कꣳशृणुयात् तत्केन कं मन्वीत तत्केन कꣳ स्पृशेत्तत्केन कं विजानीयाद्येनेदꣳसर्वं विजानाति तं केन विजानीयात् स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसंगो नहि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥

इत्युपनिषदि षष्ठाध्यायस्य पञ्चमं ब्राह्मणं समाप्तम् ॥

अथ वꣳशः पौतिमाष्यात् पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौंडिन्यात्कौंडिन्यः शांडिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥

---

चतुर्णामपि प्रपाठकानां निर्विशेष आत्मनि निष्ठता, नान्योऽन्तराले कश्चिदपि विवक्षितोऽर्थोऽस्तीति दर्शयितुमंते उपसंहारः क्रियते–स एष नेति नेत्यादिना । यदेतन्नेति नेत्यात्मपरिज्ञानमेतदेवामृतत्वसाधनमित्येतमर्थमुपसंजिहीर्षन्नाह–एतावत् एतावन्मात्रं यदेतन्नेति नेतीत्यद्वैतात्मदर्शनम् इदमेवारे मैत्रेयि अमृतत्वसाधनमिति विज्ञेयं त्वयेति ह एवं किलामृतत्वसाधनमात्मज्ञानं प्रियायै उक्त्वा यत्पूर्वं प्रतिज्ञातं प्रव्रजिष्यन्नस्मीति तच्चकार । विजहार प्रव्राजितवानित्यर्थः ॥ १५ ॥

आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यंदिनायनान्माध्यंदिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥

घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजंघनेरौपजंघनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो मांटेर्मांटिर्गौतमो गौतमाद्गौतमाद्गौतमो वात्स्याद्वात्स्यः शांडिल्याच्छांडिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौंडिन्याद्विदर्भी कौंडिन्यो वत्सनपातो बाभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पंथाः सौभरो ऽयास्यादांगिरसादयास्य आंगिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वंसनान्मृत्युः प्राध्वंसनः प्रध्वंसनात्प्रध्वंसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

इत्युपनिषदि षष्ठाध्याये षष्ठब्राह्मणं समाप्तम् ।

श्रीगणेशाय नमः ॥

श्रीमन्महर्षिबादरायणप्रणीतवेदान्तसूत्राणां

# लघुवार्त्तिकम् ।

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ जगद्धेतुः सदादि तत् ॥ २ ॥
वेदहेतुरपि ब्रह्म ॥ ३ ॥ तद्वेदादेव मीयते ।
न प्रतीचि ब्रह्मदृष्टिं विधत्ते तत्त्वमादिगीः ॥
नाप्युपास्तिविधेः शेषं ब्रह्मात्मैक्यं प्रमापयेत् ॥ ४ ॥
ईक्षणादिश्रुतेः सृष्टिश्रुतयो न प्रधानगाः ॥ ५ ॥
सर्वान्तरत्वादानन्दमयो ब्रह्मेति वृत्तिकृत् ॥
प्रियादियोगाज्जीवः स पुच्छं ब्रह्मेव मीयते ॥ ६ ॥
रवौ हिरण्मयस्त्वीशः सर्वपाप्मोदयादिभिः ॥ ७ ॥
आकाशशब्दं ब्रह्मैवानन्तत्वादेः श्रुतत्वतः ॥ ८ ॥
प्राणशब्दमपि ब्रह्म सर्वभूतोद्गमादिभिः ॥ ९ ॥
ज्योतिःपदं त्रिपाद्ब्रह्म तदाकर्षकयच्छ्रुतेः ॥ १० ॥
प्राणवाक्येऽसुजीवेशधीत्रयं न विधीयते ॥ ११ अधिकरणानि ६॥

इति लघुवार्त्तिके प्रथमस्य प्रथमः ॥

ब्रह्मसन्निधिना वाक्यशेषाच्चेशो मनोमयः ॥ १ ॥
ब्रह्मक्षत्रादिजगतः संहर्तेशस्समृत्युनः ॥ २ ॥
ऋतं पिबन्तौ जीवेशौ चैतन्येन सहक्त्वतः ॥ ३ ॥
अक्षिस्थपुरुषस्त्वीशो यदतद्भ्यां तदुक्तितः ॥ ४ ॥
अमृतत्वज्ञातृताभ्यामन्तर्यामी परः स्मृतः ॥ ५ ॥
अदृश्यत्वादिगुणकः परः सर्वज्ञतादिभिः ॥ ६ ॥
वैश्वानरोऽपि ब्रह्मात्मपुरुषादिश्रुतेः परः ॥ ७ अधिकरणानि ॥

इति लघुवार्त्तिके प्रथमस्य द्वितीयः ॥ २ ॥

द्युभ्वाद्याधार ईशः स्यादात्मत्वादेः श्रुतत्वतः ॥ १ ॥
भूमा परः सत्यसुखसर्वात्मत्वादिभिर्भवेत् ॥ २ ॥
ईशोऽक्षरन्त्वम्बरान्तशासनज्ञातृतादिभिः ॥ ३ ॥
त्रिमात्रोऽभिध्येय ईशः प्रमात्रेक्षणकर्मतः ॥ ४ ॥
हृदम्बुजे ध्येय ईशः सत्यकामात्मतादिभिः ॥ ५ ॥
निरुपाधिः सम्प्रसादस्त्वीश एवोत्तमत्वतः ॥ ६ ॥
सूर्यादिसर्वजगतो भासकः परमेश्वरः ॥ ७ ॥
अङ्गुष्ठपुरुषस्त्वीशो भूतभव्येशितृत्वतः ॥ ८ ॥
विद्याधिकारिणो देवा विग्रहादेः श्रुतत्वतः ॥ ९ ॥
वैदिकश्रवणे शूद्रो नाधिकृद्वहुनिन्दनात् ॥ १० ॥
प्राण ईशः सर्वजगत्कम्पकत्वादितो भवेत् ॥ ११ ॥
परं ज्योतिः परं ब्रह्मादेहत्वप्रक्रियादिभिः ॥ १२ ॥
आकाश ईशो नामादेर्नियन्तृत्वादितो भवेत् ॥ १३ ॥
विज्ञानमय आत्मेशो महानज इति श्रुतेः ॥ १४ अधिकरणानि ॥

इति लघुवार्त्तिके प्रथमस्य तृतीयः ॥

प्रक्रियापरिशेषाभ्यामव्यक्तन्तु शरीरकम् ॥ १ ॥
अजेति तेजोबन्नोपरक्ताव्याकृतमुच्यते ॥ २ ॥
प्राणादयः पञ्चजना ईशस्था आत्मशब्दतः ॥ ३ ॥
सदेव कारणं तत्रासद्वीर्गौण्यन्यवारणात् ॥ ४ ॥
एतदुक्तजगत्कर्ता परः प्रकरणादिभिः ॥ ५ ॥
याज्ञवल्क्योक्त आत्मेशः सर्वात्मत्वादिभिर्भवेत् ॥ ६ ॥
जगतः प्रकृतिश्चेशः सर्वात्मत्वेक्षणादिभिः ॥ ७ ॥
शून्याणुहेतुवद्वादस्त्वनभिव्यक्तसत्परः ॥ ८ अधिकरणानि ॥

इति लघुवार्त्तिके प्रथमस्य चतुर्थः ॥

साङ्ख्यस्मृतिर्न मानं स्याद्वैदिकस्मृतिबाधनात् ॥ १ ॥
योगस्मृतिः प्रमाऽष्टाङ्गयोगे, नैव प्रधानके ॥ २ ॥
कार्यासदृगपि ब्रह्म हेतुर्लोके तथा मितेः ॥ ३ ॥
महापटादल्पदृष्टेर्महानात्मा सृजेज्जगत् ॥ ४ ॥
ईशाभिन्नं भोक्तृभोग्यं नैकमब्धितरङ्गवत् ॥ ५ ॥
जगद्ब्रह्मणोर्मृषा भेदः सन्नभेदश्रुतेर्मितेः ॥ ६ ॥
कुर्याज्जीवाहितञ्चेशस्तदभिन्नो मृषात्वदृक् ॥ ७ ॥
एकाद्वितीयो मायातः क्रमिकानेकसृड्भवेत् ॥ ८ ॥
निष्कलेशान्मृषा कार्यं न कृत्स्नान्नैकदेशतः ॥ ९ ॥
अन्यानपेक्षमायावद्देही मायया भवेत् ॥ १० ॥
प्रयोजनं विनाऽपीशो वृथाचेष्टादिवत्सृजेत् ॥ ११ ॥
प्रभुसभ्यादिवत्कर्मापेक्षस्तु विषमादिकृत् ॥ १२ ॥
मृषा कार्यन्त्वगुणतो भवेल्लोके तथामितेः ॥१३ अधिकरणानि ॥

इति लघुवार्त्तिके द्वितीयस्य प्रथमः ॥

प्रधानं त्रिगुणं नेशाप्रेरितं प्रकृतिर्भवेत् ॥ १ ॥
विशेषेशगुणाः कार्ये नान्वीयन्तेऽणुधर्मवत् ॥ २ ॥
निरंशाणौ क्रियायोगौ नेति नास्माज्जगज्जनिः ॥ ३ ॥
स्कन्धाणुक्षणिकौ हेतू न स्थिरात्मा प्रवर्त्तते ॥ ४ ॥
सहेक्षणादेर्न ज्ञाने ज्ञेयैक्यं व्यभिचारतः ॥ ५ ॥
न शून्ये स्याज्जगद्भ्रान्तिः सदधिष्ठानमन्तरा ॥ ६ ॥
नैकस्य सदसत्त्वादिः स्याद्धेतुः सन् जगन्मृषा ॥ ७ ॥
नाश्रौतेशो जगत्कर्ता सर्वमानबहिष्कृतः ॥ ८ ॥
पाञ्चरात्रान्न जीवस्य जन्म श्रुतिविरोधतः ॥९ अधिकरणानि ॥

इति लघुवार्त्तिके द्वितीयस्य द्वितीयः ॥

खमीशजं विभक्तत्वाद् भूतद्वारा तथा श्रुतेः ॥ १ ॥
वायोर्जन्मश्रुतिः स्वार्था नामृतत्वादिबोधिनी ॥ २ ॥
सतो न जन्माश्रवणान् नित्यत्वस्य श्रुतेरपि ॥ ३ ॥
तेजोजनिर्न सन्मात्राद्वाय्वापन्नात्तु तज्जनिः ॥ ४ ॥
विरोधः सूक्ष्मयोर्नेति तेजसोऽपां जनिर्भवेत् ॥ ५ ॥
भूरद्भ्यो जायते तस्यामन्नगीराधिकारतः ॥ ६ ॥
तत्तद्भूतनियन्तेशो नादेहा अभिमानिनः ॥ ७ ॥
लयक्रमो विपर्यस्तः स्वयोनौ लयदर्शनात् ॥ ८ ॥
प्राणानां भौतिकत्वोक्तेर्भूतात्पूर्वं जनिर्नहि ॥ ९ ॥
न जायते ज्ञस्तनुवत्कृतहानादिदोषतः ॥ १० ॥
मोक्ष्यभावप्रसङ्गाच्च वियद्वदपि जन्म न ॥ ११ ॥
ज्ञानात्मा च श्रुतेर्ज्ञस्य करणं वृत्तिसाधनम् ॥ १२ ॥
स विभुर्ब्रह्मणैक्योक्तेरणुतोपाधिकल्पिता ॥ १३ ॥
सोपाधिकः स कर्त्तास्याद्भोक्ता च श्रुतिशासनात् ॥ १४ ॥
स्वतो न कर्ता भोक्ता वा ब्रह्मैक्यानुपपत्तितः ॥ १५ ॥
कर्तृत्वमीशतन्त्रं स्यादेष एवेति तच्छ्रुतेः ॥ १६ ॥
नेशाभावो मृषाभेदानुवादेनेशताविधेः ॥१७ अधिकरणानि ॥

इति लघुवार्त्तिके द्वितीयस्य तृतीयः ॥

श्रुतेर्जन्मेन्द्रियाणां स्यात्सूत्रार्था स्यादपिस्मृतिः ॥ १ ॥
एकादशैव तानि स्युः कार्यस्यैकादशत्वतः ॥ २ ॥
सर्वोत्क्रमः सर्वशब्दाद्ब्रह्रत्वस्य सदा स्थितेः ।
परिच्छिन्नान्येव तानि दूरस्थादर्शनादिभिः ॥ ३ ॥
मुख्योपि जायते प्राणो जन्यवातत्वयोः श्रुतेः ॥ ४ ॥
नेन्द्रियव्यापृतिः प्राणः स्वातन्त्र्येण जनिश्रुतेः ॥ ५ ॥

प्लुषिसाम्यश्रुतेः सूक्ष्मः समष्ट्या व्यापिताश्रुतिः ॥ ६ ॥
देवताप्यक्षनुच्छ्रुत्या मितेरीशाच्च संमतिः ॥ ७ ॥
रूढेर्वलित्वाद्योगेन प्राणो नेन्द्रियमिष्यते ॥ ८ ॥

इति लघुवार्त्तिके तृतीयस्य प्रथमः ।

स्वप्नो मृषा सुप्तहेतोरभावाद्बाधनादपि ॥ १ ॥
नाडीपुरीतदीशानां सुषुप्तौ न विकल्पनम् ॥ २ ॥
उत्तिष्ठेत्सुप्त एवेहाबोधानुस्मृतिदर्शनात् ॥ ३ ॥
भिन्ने स्यातां सुप्तिमूर्छे चिह्नभेदादिदर्शनात् ॥ ४ ॥
विशेषरूपमीशस्य मायिकं श्रुतिबाधनात् ॥ ५ ॥
निषेधसावधित्वाय मूर्तामूर्तं निषिध्यते ॥ ६ ॥
सेत्वादिभ्योऽन्यदीशान्नामितं तस्यानिरूपणात् ॥ ७ ॥
द्वारीकृत्येश्वरप्रीतिं यागादेः फलहेतुता ॥८ अधिकरणानि ॥
इति लघुवार्त्तिके तृतीयस्य द्वितीयः ॥
शाखान्तरेऽप्युपास्त्यैक्यमाख्यादेरविशेषतः ॥ १ ॥
विद्यैक्यादुपसंहार्याः शाखान्तरगता गुणाः ॥ २ ॥
उद्गीथोपासनातोऽन्या स्यादुद्गातुरुपासना ॥ ३ ॥
उद्गीथावयवत्वेन विशिष्टप्रणवस्य धीः ॥ ४ ॥
एकधीयुग्गुणोन्यत्राप्येवंशब्देन गृह्यते ॥ ५ ॥
आनन्दाद्युपसंहार्यं तद्विरोधिभ्रमापनुत् ॥ ६ ॥
असुवृत्तिर्नेन्द्रियाणि कार्यभेदात्पृथक् श्रुतेः ॥ ९ ॥
नामरूपव्याकृदीशस्त्वाजीवाभेदतो भवेत् ॥१०अधिकरणानि॥

इति लघुवार्त्तिके द्वितीयस्य चतुर्थः ॥

भूतैर्वृतो व्रजेज्जीवः केवले गत्ययोगतः ॥ १ ॥
कर्मान्तरेणावरोहेद्रमणीयादिवाक्यतः ॥ २ ॥

पापश्चन्द्रमसं नर्छेत्तृतीयस्थानतोक्तितः ॥ ३ ॥
भूत्वेतिवायुसादृश्यं वदेदैक्यस्य बाधनात् ॥ ४ ॥
न दैर्घ्यं वायुसादृश्ये त्रीह्यादावेव तच्छ्रुतेः ॥ ५ ॥
कर्मोत्थुक्तजनिर्गौणी नाधर्मोहिंसनं विधेः ॥६ अधिकरणानि ॥
अर्थादयः परत्वेन न चिन्त्या वाक्यभेदतः ॥ ७ ॥
ऐतरेयात्मशब्देन प्रज्ञानं ब्रह्म गम्यते ॥ ८ ॥
सदेवेत्युक्त आत्मा स्यात्स आत्मेत्युपसंहृतेः ॥
आचन्त्यर्थाप्सु वासोधीः प्राणविद्याङ्गमिष्यते ॥ ९ ॥
शाण्डिल्यविद्या त्वेका स्यादारण्यकरहस्ययोः ॥ १० ॥
आदित्याक्षिस्थानभेदादहरादेर्व्यवस्थितिः ॥ ११ ॥
सम्भृत्यादिर्नान्यगामी धीविधिस्तत्र कल्पते ॥ १२ ॥
पुरुषो यज्ञ इत्युक्तात्तैत्तिरीयेऽन्यधीविधिः ॥ १३ ॥
लिङ्गादेः सन्निधिं हित्वा कर्मगे मन्त्रकर्मणी ॥ १४ ॥
हानावुपायनं हार्यं प्रकृष्टस्तुतिलाभतः ॥ १५ ॥
विधूनुत इति त्यागः प्रयोगान्तरसाम्यतः ॥
विद्यैव तत्पदग्राह्या लिङ्गात्पाठस्य बाधनम् ॥ १६ ॥
निर्गुणब्रह्मविदुषोलिङ्गध्वस्तेर्गतिर्नहि ॥ १७ ॥
शाण्डिल्यादिधिया मार्गो हार्यो लिङ्गाच्च वाक्यतः ॥ १८ ॥
प्रारब्धकर्मभोगान्ते मुक्ताः स्युस्त्वाधिकारिकाः ॥ १९ ॥
तत्तदात्मभ्रमोच्छित्त्यै निषेधोपग्रहो भवेत् ॥ २० ॥
ऋतं द्वाविति वाक्याभ्यामेका विद्या विधीयते ॥ २१ ॥
कहोलोपास्तिवाक्याभ्यामेका विद्या तु निर्गुणे ॥ २२ ॥
तद्योहमित्युक्तधियां व्यतिहारेण चिन्तनम् ॥ २३ ॥
स्थानभेदेऽपि सत्यैक्यादेका कल्प्यफला च धीः ॥ २४ ॥
धीभेदेऽपि च कामादेः स्तुत्यर्थमुपसंहृतिः ॥ २५ ॥

अन्यार्थभक्तसंयोगाद्भुज्यभावे तु नाहुतिः ॥ २६ ॥
अङ्गवद्वा तु धीर्नाङ्गफलायैव क्रियात्वतः ॥ २७ ॥
विद्यैक्येऽपि तु संवर्गे प्रयोगोऽन्योऽग्निहोत्रवत् ॥ २८ ॥
मनश्चिदादिविद्यैव श्रुतिवाक्यादिभिर्भवेत् ॥ २९ ॥
देहो नात्मा भौतिकत्वान्मृते चैतन्यहानतः ३० ॥
उद्गीथमात्रे वाक्येन दृष्टिः सन्निधिबाधनात् ॥ ३१ ॥
समस्तस्यैव धीर्वैश्वानरे सर्वफलान्यपि ॥ ३२ ॥
उपास्यैक्ये विधिर्भिन्नास्वोत्पत्तौ गुणभेदतः ॥ ३३ ॥
उपास्यसाक्षात्काराय विकल्पेनेशधीर्भवेत् ॥ ३४ ॥
प्रतीकधीष्वनियमः साक्षात्कारानपेक्षणात् ॥ ३५ ॥
अङ्गवद्वा समुच्चेया नकाम्यत्वादनित्यतः ॥ ३६ अधिकरणानि॥

इति लघुवार्त्तिके तृतीयस्य तृतीयः ॥

मुक्त्यार्था ब्रह्मविद्या स्यान्न कर्माङ्गं विरोधतः ॥ १ ॥
ब्रह्मसंस्थादिके वाक्ये सन्यासे विधिकल्पनम् ॥ २ ॥
यतिरेव ब्रह्मसंस्थस्त्वन्यत्र तदसम्भवात् ॥ ३ ॥
रसानां रस इत्यादिरुपास्यविषयार्पकः ॥ ४ ॥
वेदान्तगाख्यायिकानां न पारिप्लवसङ्ग्रहः ॥ ५ ॥
ब्रह्मविद्याफले मोक्षे नित्ये कर्म न साधनम् ॥ ६ ॥
तद्विद्यायामघध्वंसद्वारा साधनमिष्यते ॥ ७ ॥
सर्वान्नभक्षवादस्तु प्राणधीस्तुतिरिष्यते ॥ ८ ॥
वाक्यद्वयेन यज्ञादेर्नित्यत्वज्ञानहेतुते ॥ ९ ॥
विद्याधिकारी विधुरः पूर्वयज्ञाज्जपादपि ॥ १० ॥
न्यासच्युतकृताद्धीर्न श्रुत्या पातित्यबोधनात् ॥ ११ ॥
नैष्ठिकस्यावाकिरणे गर्दभोनैर्ऋतो भवेत् ॥ १२ ॥

प्रायश्चित्ते कृतेऽप्यत्राशुद्धेर्न व्यवहार्यता ॥ १३ ॥
तं हेतिवाक्यशेषेण चाख्ययाऽर्त्विज्यमङ्गधीः ॥ १४ ॥
तद्वाच्योत्कृष्टधीरन्यानवाप्येतिमुनौ विधिः ॥ १५ ॥
ज्ञानाङ्गतोक्तेर्धीशुद्धिर्बाल्यं न स्वेष्टचेष्टनम् ॥ १६ ॥
यज्ञादिसाध्याघध्वस्तेरनैयत्याद्धियोऽपि तत् ॥ १७ ॥
निर्विशेषात्मधीव्यङ्ग्योमोक्षस्तु न विशेषवान्॥१८ अधिकरणानि॥

लघुवार्त्तिके तृतीयस्य चतुर्थः ॥

आवृत्तिः श्रवणादेः स्यात्साक्षात्कारफलत्वतः ॥ १ ॥
गौणी न तत्त्वमित्युक्तिर्विरुद्धानां मृषात्वतः ॥ २ ॥
ब्रह्माभिन्नज्ञदृष्टिर्न प्रतीके केवलेशदृक् ॥ ३ ॥
न ब्रह्मणि मनोदृष्टिर्मनसि ब्रह्मदृग्भवेत् ॥ ४ ॥
विद्यया वीर्यवत्त्वोक्तेरङ्गेऽनङ्गदृगिष्यते ॥ ५ ॥
आसीनानामुपासा स्याद्बहुदोषविवर्जनात् ॥ ६ ॥
चित्तैकाग्र्यासम्भवान्न पुण्यदेशाद्यपेक्षणम् ॥ ७ ॥
आमृति स्यात्सगुणधीर्दृष्टेनान्तिमधीजनेः ॥ ८ ॥
ज्ञानादघक्षयः शास्त्रात्प्रायश्चित्ताद्यथा तथा ॥ ९ ॥
उभे तरति शब्देन पुण्यस्यापि धिया क्षयः ॥ १० ॥
धिया प्रारब्धनाशो न जीवन्मुक्तेः श्रुतेर्मितेः ॥ ११ ॥
नित्यकर्मोत्थापि धीस्तज्जातीयस्यापराधिका ॥ १२ ॥
धिया सगुणया नाश्यं कर्म नित्यं तु तत्फले ॥ १३ ॥
वीर्यवत्तरमित्युक्त्या विद्याहीनश्च वीर्यवत् ॥ १४ ॥
आरब्धपाकतो विद्वानन्यदेहोऽपि मुच्यते ॥१५ अधिकरणानि॥

इति लघुवार्त्तिके चतुर्थस्य प्रथमः ॥

सम्पद्यते मनसि वागिति वाग्वृत्तिगो लयः ॥ १ ॥

मनसोऽपि लयः प्राणे मनोवृत्तिलयो भवेत् ॥ २ ॥
तेजसि प्राण इत्यत्र जीवद्वारा तु तेजसि ॥ ३ ॥
उत्क्रान्तिः सगुणज्ञस्य कार्यलोकाप्तिवर्णनात् ॥ ४ ॥
पुनर्जन्मश्रुतेस्तेजः परस्यामिति वृत्तिगा ॥ ५ ॥
निर्विशेषविदो देहान्नोत्क्रान्तिः प्रतिषेधनात् ॥ ६ ॥
विद्वद्दृशा कलानां स्याल्लयः पुरुष एव हि ॥ ७ ॥
निरन्वयो लयस्तासामज्ञानविगमाद्भवेत् ॥ ८ ॥
सगुणज्ञस्य मूर्द्धन्यनाड्यैव सरणं श्रुतेः ॥ ९ ॥
निश्यौष्ण्यदृष्टेस्तत्प्रेतो रश्मीनेत्यविशेषतः ॥ १० ॥
उत्तरायणदेवं स गच्छेत्प्रेतोऽपि दक्षिणे ॥ ११ अधिकरणानि ॥

इति लघुवार्त्तिके चतुर्थस्य द्वितीयः ॥

अर्चिरादिर्मार्ग एको नानापर्वत्वसम्भवात् ॥ १ ॥
वायुरब्दोर्ध्वदेवोर्ध्वस्ततः सूर्यगतिश्रुतेः ॥ २ ॥
विद्युतो वरुणस्तस्मादिन्द्रस्तस्मात्प्रजापतिः ॥ ३ ॥
साम्पिण्डिते गत्ययोगान्नेतारो ह्यर्चिरादयः ॥ ४ ॥
यद्ब्रह्म येन ध्यातन्तं तद्ब्रह्मामानवो नयेत् ॥ ५ ॥
अमानवः पुमान्नैव प्रतीकालम्बनान्नयेत् ॥६ अधिकरणानि ॥

इति लघुवार्त्तिके चतुर्थस्य तृतीयः ॥

स्वेन रूपेण निष्पत्तिर्निर्विशेषस्वरूपतः ॥ १ ॥
ब्रह्मभेदेन निष्पत्तिर्योगानामिव नेष्यते ॥ २ ॥
स्वदृष्ट्या निर्विशेषोऽपि परदृष्ट्येश्वरो भवेत ॥ ३ ॥
सङ्कल्पमात्रात्पित्रादेरुत्थानं श्रुतितो मितेः ॥ ४ ॥
विद्वत्सङ्कल्पतः स्यातामदेहत्वसदेहते ॥ ५ ॥
देहित्वे समनस्कस्य तस्य सङ्कल्पनाद्भुजिः ॥ ६ ॥

नित्यसिद्धेश्वरात्सृष्टिप्रक्रमे विश्रुताज्जगत् ॥७ अधिकरणानि ॥

इति लघुवार्त्तिके चतुर्थस्य चतुर्थः ॥

इत्थमुद्धृत्य वेदान्तमीमांसादुग्धसागरात् ॥
शतश्लोकीसुधासारश्चन्द्रमौलौ समर्पितः ॥ १ ॥
इत्थं जैमिनिबादरायणकृते तन्त्रद्वये ये नयाः
पूर्वाचार्यवरैस्तु शब्दनिवहैः स्पष्टीकृता विस्तरम् ।
ते सङ्क्षिप्य यथामतीह सुगमैः शब्दैः प्रकाशीकृताः
श्रीमद्विश्वपतेर्विशालनयनानाथस्य तुष्ट्यै सदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छुद्धानन्द-
मुनिवरकिङ्करेणोत्तमश्लोकयतिना विरचितं
लघुवार्त्तिकं समाप्तम् ।



# जयकृष्णदास–हरिदास गुप्तः–चौखम्बासंस्कृतसीरीज आफिस बनारस सि

१ अस्यां चौखम्बा– संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु
एकः स्तबको मुद्रयित्वा प्रकाश्यते । एकस्मिन् स्तबके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमांसावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था
एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाध्यापकाः पण्डिता अन्ये च शास्त्रदृष्टयो विद्वांस

शोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः, ब्रह्मदेशीयैः, सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम्—मुद्राः ७ आ

५ अन्यैर्देयं प्रतिस्तबकं ... ... ... ... " " १

६ प्रापणव्ययः पृथग् नास्ति । ... ... ... ... ...

(१) संस्काररत्नमाला । गोपीनाथभट्टकृता २

(२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः प्रथमाध्यायमारभ्य तृतीयाध्यायद्वितीयपादचतुर्थाध्यायपर्यन्तम् ३२

(३) श्लोकवार्तिकं भट्टकुमारिलविरचितं पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् १५

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः ... १

(६) भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टविरचित तर्कपादः (मीमांसा) ... ... २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णा २

(८) ब्रह्मसूत्रभाष्यम्–बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानं । सम्पूर्णम् । (वेदान्तः) ६

(९) स्याद्वादमञ्जरीमल्लिषेणानिर्मिता सम्पूर्णा । ... २

(१०) सिद्धित्रयम्–विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृतां परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । १

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः (वेदान्तः) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) ... ... ... ५

(१३) विधिरसायनम् । श्रीमदप्पय्यदीक्षितकृतं सम्पूर्णम् २

(१४) न्यायसुधा (तन्त्रवार्तिकटीका) भट्टसोमेश्वरविरचिता । ( मीमांसा ) ... ... ... १६

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता श्रीक्षेमराजविरचितवृत्तिसमेता ( वेदान्तः ) ... ... २

(१६) मीमांसाबालप्रकाशः । जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि–मीमांसादर्शनम् । महामहोपाध्यायशालिकनाथमिश्रविरचितम् श्रीशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदा
सप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्यायश्रीक
विरचितभाष्यसहितम् ... ...

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्द
चितया खण्डनफक्किकाविभजनाख्यया
विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः)

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता ...

(२३) श्रीलक्ष्मीसहस्रम्–बालबोधिनीव्याख्ययाऽवतर
च सहितम् ... ... ...

(२४) ब्रह्मसूत्रवृत्तिः मरीचिका श्रीव्रजनाथभट्टकृता ।

(२५) क्रोडपत्रसंग्रहः । अत्र श्रीकालीशङ्करसिद्धान्त
विरचितानि अनुमानजागदीश्याः प्रत्यक्षानुमान
र्योः प्रत्यक्षानुमानमाथुर्या व्युत्पत्तिवादस्य शक्ति
मुक्तिवादस्य शब्दशक्तिप्रकाशिकायाः कुसुम
क्रोडपत्राणि ... ... ...

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचि
न्तजाह्नवीयुतम् ... ... ...

(२७) षड्दर्शनसमुच्चयः । बौद्धनैयायिककापिलजैनवै
जैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया
हरिभद्रसूरिकृतः ... ... ...

(२८) शुद्धाद्वैतमार्तण्डप्रकाशव्याख्यासहितःप्रमेयरत्न

(२९) अनुमानचिन्तामणिव्याख्यायाः शिरोमणिकृत
जागदीशी टीका ... ... ...

(३०) वीरमित्रोदयः महामहोपाध्यायश्रीमित्रमिश्रविर
रिभाषा—संस्कारप्रकाशात्मकः । सापिण्ड्यदीपक

(३१) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्र
आह्निकप्रकाशः ... ... ...

(३२) स्मृतिसारोद्धारः विद्वद्वरविश्वम्भरत्रिपाठिसंकलि

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृ

(३४) प्रस्थानरत्नाकरः । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचितः ... ... ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्यं श्रीनिम्बार्काचार्यविरचितम् ... ... ... १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित-योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् ... ... ... ... २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् ... ... ... ... ४

(३८) विश्वप्रकाशः। कोशः। विद्वद्वरश्रीमहेश्वरसूरिविरचितः २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकरण श्रीसुबोधिनीटिप्पण्योः-प्रकाशः गोस्वामि श्री पुरुषोत्तमजीमहाराज विरचितः ... ३

(४०) वीरमित्रोदयः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः पूजाप्रकाशः ... ... ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामकः । श्रीब्रह्मचारिवनमालिमिश्रविरचितः । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता ... ... ३

(४२) स्वानुभवादर्शः । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः स्वकृतटीकाविभूषितश्च ... ... ... ... २

(४३) याज्ञवल्क्यस्मृतिः। बालम्भट्टीसमाख्यव्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता ... ८

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्रप्रणीता । रामकृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता तर्कपादः ... ... ... ... ५

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता। श्रीमद्दुबलाचार्य-बालम्भट्टाभ्यां-विरचितकुञ्चिकाकलाह्वटीकाद्वयसंवलिता ... ११

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय विश्वे विरचितः ... ... ... ..

(४८) वीरमित्रोदयः । लक्षणप्रकाशः । महामहोप मित्रमिश्रविरचितः ... ... ..

(४९) बृहदारण्यकवार्त्तिकसारः श्रीमद्विद्यारण्यस्वामि महेश्वरतीर्थकृतयालघुसंग्रहाख्ययाटीकयास

(५०) वीरमित्रोदयः । राजनीतिप्रकाशः । महामहो श्रीमित्रमिश्रविरचितः... ... ..

(५१) पूर्वमीमांसाअधिकरणकौमुदी । श्रीमन्महाम पं० रामकृष्णभट्टाचार्यविरचिता नेने गोपालशास्त्रिणा परिशिष्टाधिकरणनिरूपणप ण्या परिष्कृत । ... ... ..

(५२) प्रशस्तपादभाष्यटीकासंग्रहः । तत्र कणादर श्रीशंकरमिश्रविरचितम् ... ...

(५३) क्रमदीपिका । श्रीमन्महामहोपाध्याय काश्म वभट्टविरचिता । विद्याविनोदश्रीगोविन्दभट्टाच वरणोपेता ... ... ... . ...

(५४) वीरमित्रोदयः । तीर्थप्रकाशः । महामहोपाध्या त्रमिश्रविरचितः ... ... ...

(५५) सांख्यसंग्रहः । तत्र सांख्यतत्त्वविवेचनम् श्र 'क्षेमेन्द्र' विरचितम् । सांख्यतत्त्वयाथार्थ्यदी वगणेशविरचितम् । समाससूत्रव्याख्या रिणी च ... ... ... ...

(५६) न्यायपरिशुद्धिः । श्रीमद्वेङ्कटनाथ श्रीवेदान्ता दिता । श्रीनिवासाचार्यविरचित न्यायसारस टीकया युता ... ... ...

(५७) निर्णयसिन्धु—कमलाकरभट्टविरचितः, कृष्ण व्याख्यासहितः (खण्डद्वयपूर्णश्च) ..

(५८) न्यायप्रकाश, श्रीमदापदेवविरचितः । श्रीम विरचितया "भाट्टालङ्काराख्य" व्याख्ययासहि

(५९) सांख्यतत्त्वकौमुदी—षड्दर्शनकृद्वाचस्पतिमि ता । पण्डितराड्—वंशीधरमिश्रविरचित "त कर" टीकासहिता ...

—:o:—

